पातु वः ॥ ७१ ॥ उज्झित्वा दिशमम्बरं वरतरं वासो वसानश्चिरं हित्वा वासरसं पुनः पितृवने कैलासहर्म्याश्रयः । त्यक्त्वा भस्म कृताङ्गरागनिचयः श्रीखण्डसारद्रवैर्देवः पातु हिमाद्रिजापरिणयं कृत्वा गृहस्थः शिवः ॥ ७२ ॥ क्रीडन्मन्दरकन्दरोदरवलन्मन्दारवृन्दावने क्रोधान्धान्धकटातयाशु हरणे जृम्भत्रिशूलोद्गमः । त्रैलोक्याखिलसंकटोत्कटभयोद्रेकान्धकारांशुमान्पायाद्वस्त्रिपुरप्रमाथनपटुर्देवो हि पञ्चाननः ॥ ७३ ॥ गर्जद्भीमभुजंगभीषणफणाफूत्कारभीतिप्रदः क्रीडत्प्रेतपिशाचराक्षसगणः प्रत्यक्षतः प्रान्ततः । भालस्थः प्रलयानलोद्भटशिखः संक्रान्तसर्वास्पदः शार्दूलाजिनभृद्भयानकभयो भूयाद्भवो भूतये ॥ ७४ ॥ गौरीचुम्बनचञ्चलं चलचलद्धण्टप्रभामण्डलं व्यावल्गत्फणिकुण्डलं रतिरसप्रस्विन्नगण्डस्थलम् । प्रौढप्रेमपरंपरापरिचयप्रोत्फुल्लनेत्राञ्चलं शंभोरस्तु विभूतये हि भवतामुन्मत्तगङ्गाशिरः ॥ ७५ ॥ पाणौ कङ्कणमुत्फणं फणिपतिर्नेत्रं लसत्पावकं कण्ठः कुण्ठितकालकूटविषमो वस्त्रं गजेन्द्राजिनम् । गौरीलोचनलोभनाय सुभगो वेशो वरस्यास्ति मे गण्डोल्लासविभावितः पशुपतेर्हासोद्गमः पातु वः ॥ ७६ ॥ आखुर्वाञ्छति भस्मसूत्रहरणं व्यालस्तथा मूषकं व्यालं बर्हिरयं गजारिं वृषभं गङ्गा तथा चन्द्रकम् । इत्थं दुःखमहर्निशं शृणु विभो सोढव्यमेतत्कथं शंभोर्विष्णुविवेकचारुरचया त्वां पातु इत्थं वचः ॥ ७७ ॥ [1]दिव्यं वारि कथं यतः सुरधुनी मौलौ कथं पावको दिव्यं तद्धि विलोचनं कथमहिर्दिव्यं च चाङ्गे तव । तस्माद्द्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यतामित्थं शैलभुवा विहस्य लपितः शंभुः शिवायास्तु वः ॥ ७८ ॥ तातं तत्ताततातं कथय हरकुलेऽलंकृते संप्रदाने तच्छ्रुत्वा चन्द्रमौलिर्नतवदनकजो जातलज्जो बभूव । ब्रह्मावादीत्तदानीं शृणुत हरकुलं वेदकण्ठोग्रकण्ठौ श्रीकण्ठान्नीलकण्ठः प्रहसितवदनः पातु वश्चन्द्रचूडः ॥ ७९ ॥ या[2] सृष्टिः स्रष्टुराद्या वहति विधिहुतं या[3] हविर्या[4] च होत्री ये[5] द्वे कालं विधत्तः श्रुतिविषयगुणा या[6] स्थिता व्याप्य विश्वम् । यामाहुः[7] सर्वबीजप्रकृतिरिति यया[8] प्राणिनः प्राणवन्तः प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ ८० ॥ एकैश्वर्यस्थितोऽपि प्रणतबहुफलो यः स्वयं कृत्तिवासाः कान्तासंमिश्रदेहोऽप्यविषयमनसां यः पुरस्ताद्यतीनाम् । अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः सन्मार्गालोकनाय व्यपनयतु स नस्तामसीं वृत्तिमीशः ॥ ८१ ॥ कैलासाद्रावुदस्ते परिचलति गणेषूल्लसत्कौतुकेषु क्रोडं[10] मातुः कुमारे विशति विषमुचि[11] प्रेक्षमाणे सरोषम् । पादावष्टम्भसीदद्वपुषि दशमुखे याति पातालमूलं क्रुद्धोऽप्याश्लिष्टमूर्तिर्भयघनमुमया[12] पातु हृष्टः शिवो नः ॥ ८२ ॥ क्रोधेद्धैर्दृष्टिपातैस्त्रिभिरुपशमिता वह्नयोऽमी त्रयो[13]ऽपि त्रासार्ता ऋत्विजोऽधश्चपलगणहृतोष्णीषपट्टाः पतन्ति । दक्षः

१ शपथविशेषः. २ उदकरूपा. ३ अग्निरूपा. ४ यजमानरूपा. ५ सूर्यचन्द्ररूपे. ६ आकाशरूपा. ७ पृथ्वीरूपा. ८ वायुरूपा. ९ ऊर्ध्वास्ताचले. १० भुजान्तरे. ११ सर्पे. १२ भयागारम्. १३ दक्षिणगार्हपत्याहवनीयाख्याः.

स्तौत्यस्य पत्नी विलपति कृपणं विद्रुतं चापि देवैः शंसन्नित्यात्तहासो मखमथनविधौ पातु देव्यै शिवो वः ॥ ८३ ॥ आसीने पूष्णि तूष्णीं व्यसनिनि शशिनि व्योम्नि कृष्णे सतृष्णे दैत्येन्द्रे जातनिद्रे द्रवति मघवति क्लान्तकान्तौ कृतान्ते । अब्रह्मण्यं ब्रुवाणे कमलपुटकुटीश्रोत्रिये शान्त्युपाये पायाद्वः कालकूटं झटिति कवलयँल्लीलया नीलकण्ठः ॥ ८४ ॥ केयं मूर्ध्न्यन्धकारे तिमिरमिह कुतः सुभ्रु कान्तेन्दुयुक्ते कान्ताप्यत्रास्ति काचिन्ननु भवतु मया पृष्टमेतावदेव । नाहं द्वन्द्वं करोमीत्यपनय शिरसस्तूर्णमेनामिदानीमित्थं प्रोक्तो भवान्या प्रतिवचनजितः पातु वश्चन्द्रचूडः ॥ ८५ ॥ धन्या केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या नामैवास्यास्तदेतत्परिचितमपि ते विस्मृतं कस्य हेतोः । नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दुर्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥ ८६ ॥ हर्षाद्दम्भोजजन्मप्रभृतिदिविषदां संसदि प्रीतिमत्या श्वश्र्वा मौलौ पुरारेर्दुहितृपरिणये साक्षतं चुम्ब्यमाने । तद्वक्त्रं मौलिवक्त्रे मिलितमिति भृशं वीक्ष्य चन्द्रः सहासो दृष्ट्वा तद्वृत्तमाशु स्मितसुभगमुखः पातु वः पञ्चवक्त्रः ॥ ८७ ॥ कल्पान्तक्रूरकेलिः क्रतुकदनकरः कुन्दकर्पूरकान्तिः क्रीडन्कैलासकूटे कलितकुमुदिनीकामुकः कान्तकायः । कङ्कालक्रीडनोत्कः कलितकलकलः कालकालीकलत्रः कालिन्दीकालकण्ठः कलयतु कुशलं कोऽपि कापालिको नः ॥ ८८ ॥ दृष्टः सप्रेम देव्या किमिदमिति भयात्संभ्रमाच्चासुरीभिः शान्तान्तस्तत्त्वसारैः सकरुणमृषिभिर्विष्णुना सस्मितेन । आदायास्त्रं सगर्वैरुपशमितवधूसंभ्रमैर्दैत्यवीरैः सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान् ॥ ८९ ॥ क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोऽशुकान्तं गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण । आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥ ९० ॥ कल्याणं वः क्रियासुर्मिलदटनियुगस्थास्नुगीर्वाणभोगिस्त्रैणव्यत्यस्तकल्पद्रुमनवसुमनोनागहारावलीनि । नालीकाश्लिष्टलक्ष्मीकरचलनलिनोद्गीतमाध्वीकधारातिम्यत्फालेक्षणानि त्रिपुरहरधनुर्ज्यालताकर्षणानि ॥ ९१ ॥ कल्पान्ते क्रोधनस्य त्रिपुरविजयिनः क्रीडया संचरिष्णोः कृत्वापि प्राणिजातैर्निजमुखकुहरातिथ्यमप्राप्ततृप्तेः । दिग्भित्तीः प्रेक्ष्य शून्याः प्रलयजलनिधिं प्रेक्ष्य चात्मीयमूर्तिग्रासव्यासक्तमोघश्रमजनितरुषः पान्तु वो गर्जितानि ॥ ९२ ॥ पर्यङ्कग्रन्थिबन्धद्विगुणितभुजगाश्लेषसंवीतजानोरन्तःप्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य । आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या शंभोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः ॥ ९३ ॥ वृत्ता-

१ दीनस्वरेण. २ सूर्ये. ३ ब्रह्मणे. ४ अन्धकरिपो; (पक्षे) तमसि ५ ब्रह्मा ६ धनुष्कोटि ७ स्थिरतरम् ८ विष्णुरूप शर.. ९ पुष्परस. १० वन्ह्यात्मक तृतीयलोचनम् ११ योगशास्त्रप्रसिद्धासनविशेषः १२ सधि. १३ आवृत १४ निवृत्त. १५ चक्षुरादीन्येकादशेन्द्रियाणि बुद्धिरहंकारश्चेति त्रयोदशविधम्. १६ प्रपञ्चाभाव. १७ चित्तैकाग्रता.

भिख्यां तृतीयां श्रितविविधगणां छन्दसां वर्णनीयां यातां सर्वादिमत्त्वं सुरगणकलितां भासमत्त्वं दधानाम् । युक्तं स्थानं नयन्तीं लघुमपि सकलं बिभ्रतीं मालयायान्वन्दे वार्धीभवर्णी धृतमुनियतिकां स्रग्धरां शंभुमूर्तिम् ॥ ९४ ॥ देहार्धानद्धकान्ताकचकुसुमचयो भालनेत्रानलार्चिः पीनोष्मामौलिखेलन्मुखरसुरनदीनीररम्यो जगन्ति । स्फीतोत्तंसेन्दुकान्तिर्द्विरदद्दतिदृढाच्छादनव्यक्तशीतः शंभुर्भूषास्थिकुन्दप्रकरपरिवृतः पातु सर्वर्तुमूर्तिः ॥ ९५ ॥ हेयोपादेयशून्यं मुनिगणमनसामद्वयानन्दहेतुः सेतुः संसारवारांनिधिसुखतरणे श्रीमहेशानसंज्ञम् । प्रालेयं ज्योतिरन्तः परिणतितिमिरव्यूहविच्छेददक्षं किंचिद्वाचामधीशं स्फुरतु मम हृदि त्र्यक्षरं विश्वसाक्षि ॥ ९६ ॥ शुद्धान्ते सीधुपानोन्मदमदनमदोन्मादमत्तालिकालीतालीसंताड्यमानोद्भटमुरजरवाडम्बरोल्लासिताङ्गः । नृत्यन्मग्नो विलज्जश्चलविकटतटैः स्रस्तयैर्लोचनार्धैर्दृष्टः स्त्रीभिः सहासं प्रहसनमुदितः पातु वो वामदेवः ॥ ९७ ॥ बिभ्रत्पाथःकपर्दे सुरनगरनरीमिन्दुलेखां ललाटे नेत्रान्तः कालवह्निं गरलमपि गले व्याघ्रचर्माङ्गभागे । पञ्चास्यो वै त्रिनेत्रो वृषभगतिरतिर्वामभागार्धवामः संदिश्यात्संपदं वः सह सकलगुणैरद्भुताकार ईशः ॥९८॥ जटाजूटः ॥ स धूर्जटिजटाजूटो जायतां विजयाय वः । यस्यैकपलितभ्रान्तिं करोत्यद्यापि जाह्नवी ॥ ९९ ॥ चूडापीडकपालसंकुलगलन्मन्दाकिनीवारयो विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः । पान्तु त्वामकठोरकेतकशिखासंदिग्धमुग्धेन्दवो भूतेशस्य भुजंगवल्लिवलयस्रङ्नद्धजूटा जटाः ॥ १०० ॥ गङ्गावारिभिरुक्षिताः फणिफणैरुत्पल्लवास्तच्छिखारत्नैः कोरकिताः सितांशुकलया स्मेरैकपुष्पश्रियः । आनन्दाश्रुपरिप्लुताक्षिहुतभुग्धूमैर्मिलद्दोहला नाल्पं कल्पलताः फलं ददतु वोऽभीष्टं जटा धूर्जटेः ॥ १०१ ॥ गङ्गा ॥ पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम् । हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत ॥ १०२ ॥ इयं चिद्रूपापि प्रकटजडरूपा भगवती यदीयाम्भोबिन्दुर्वितरति च शंभोरपि परम् । पुनाना धुन्वाना निखिलमपि नानाविधमघं जगत्कृत्स्नं पायादनुदिनमपायात्सुरधुनी ॥ १०३ ॥ चूडाशीतकरस्तनंधयसुधानीरन्ध्रगन्धस्पृशः क्रीडाकङ्कणपन्नगेश्वरफणापीतावशिष्टा मुहुः । अङ्कासीनगिरीन्द्रजास्तनतटीहारावलीलोलनाः संतापं शमयन्तु वो हरजटागङ्गातरंगानिलाः ॥ १०४ ॥ वायुर्वाति यदङ्गसंगमवशाच्छ्रीशंभुरूपप्रदे गौरी रुष्यति तुष्यति त्वहिपतिर्विन्ध्याटवी शोचते । चन्द्रस्त्रस्यति कुप्यते हरिरपि ब्रह्मा पर शङ्कते सा गङ्गा निखिलं कलङ्कनिचयं भङ्गं तरंगैर्नयेत् ॥ १०५ ॥ शार्ङ्गी ब्रह्मकमण्डलोरधिगतैर्यैः प्रापि तीर्थाङ्कितां यैर्मृत्युजयतामनायि गरलग्रस्तो जटाजूटगैः । येभ्योऽशिक्षत माधुरीं मृदुलजटाजूटे मठे चन्द्रमास्तानीमानि पयांसि गौतमि तव श्रेयांसि यच्छन्तु नः ॥१०६॥ यन्नाम्नः प्रथमाक्षरं विजयते भानौ द्वितीयाक्षरं नित्यं नृत्यति सत्कवीन्द्रवदने

१ केशार्दा जरसा यच्छौक्ल्य तत्. २ तिर्यङ्नद्धमाला ३ निविड.

भूत्वान्तवर्णद्वयम् । रामो रावणमाजघान समरे शंभोः शिरःशालिनी सा सर्वाक्षरमालिनी भवतु मे भाग्याय भागीरथी ॥ १०७ ॥ मुक्ताभा नृकपालशुक्तिषु जटावल्लीषु मल्लीनिभा वह्नौ लाजनिभा दृशोर्मणिनिभा भोगोत्करे भोगिनाम् । नृत्यावर्तविवर्तनेरितपयःसंमूर्च्छितोच्छालिताः खेलन्तो हरमूर्ध्नि पान्तु भवतो गङ्गापयोबिन्दवः ॥ १०८ ॥ एषा धर्मपताकिनी तटतरुच्छायावसन्नाकिनी शुष्यत्पातकिनी भगीरथतपःसाफल्यसंदायिनी । प्रेमारूढपिनाकिनी गिरिसुतासाकेकरालोकिनी पापाडम्बरडाकिनी त्रिभुवनानन्दाय मन्दाकिनी ॥ १०९ ॥ स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः । भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥ ११० ॥ शैवालश्रेणिशोभां दधति हरजटावल्लयो हन्त यस्यास्तद्धासोल्लासवेलाद्धरशफरतुलां यत्र धत्ते कलावान् । उन्मीलद्भोगिभोगावलिसुभगसिताम्भोजसंभाविताम्भा गङ्गानङ्गारिसङ्गा महति तव विधौ मङ्गलान्यातनोतु ॥ १११ ॥ दृष्टाः संकष्टदाहाः श्रवणपथगताः पुण्यपुञ्जावगाहाः स्पृष्टाः संसारपाथोनिधिपतितधरोद्धारधुर्या वराहाः । पीतास्तापोपशान्तिप्रजननपटवस्ते सुधावारिवाहाः कल्याणं कल्पयन्ता कलिकलुषहरा विष्णुपद्याः प्रवाहाः ॥ ११२ ॥ तावत्कर्णाध्वयाता जनघनकलुषा धूनने गन्धवाहा दृष्टाः किं हव्यवाहाः सकृदहदहने स्वर्गतो पुण्यवाहाः । स्पष्टाः संसारहाहारवकटुकमहाम्भोधिमग्ने वराहाः पीताः पीयूषधाराधिकतरमधुराः पान्तु गोदोदवाहाः ॥ ११३ ॥ **शशिलेखा** ॥ पूर्णनखेन्दुद्विगुणितमञ्जीरा प्रेमशृङ्खला जयति । हरशशिलेखा गौरीचरणाङ्गुलिमध्यगुल्फेषु ॥ ११४ ॥ जयति परिमुषितलक्ष्मा भयादनुपसर्पतेव हरिणेन । इह केसरिकरजाङ्कुरकुटिला हरमौलिविधुलेखा ॥ ११५ ॥ श्रीकण्ठस्य कपर्दबन्धनपरिश्रान्तोरगग्रामणीसंदष्टां मुकुटावतंसकलिका वन्दे कलामैन्दवीम् । या बिम्बप्रतिपूरणाय परितो निष्पीड्य संदंशिकायन्त्रेणेव ललाटलोचनशिखिज्वालाभिरावर्त्यते ॥ ११६ ॥ **लोचनम्** ॥ जयति ललाटकटाक्षः शशिमौलेः पक्ष्मलः प्रियाप्रणतौ । धनुषि स्मरेण निहितः सकण्टकः केतकेषुरिव ॥ ११७ ॥ अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं स्वान्ते शान्तिप्रणयिनि समुन्मीलदानन्दसान्द्रम् । प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्रव्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्धमौलेः ॥ ११८ ॥ सानन्दा गणनायके सपुलका गौरीमुखाम्भोरुहे सक्रोधा कुसुमायुधे सकरुणा पादानते वज्रिणि । सस्मेरा गिरिजासखीषु सनया शैलाधिनाथे वहन्भूमीन्द्र प्रदिशन्तु शर्म विपुलं शंभोः कटाक्षच्छटाः ॥ ११९ ॥ एकं ध्याननिमी-

१ साकूतम्. २ अनूपसदृशः कश्चिन्नद्यादेरुपान्तदेशः. ३ बलवान्. ४ कान्तिम्. ५ नश्यत्. ६ झटिति. ७ व्यक्तीभवत्. ८ अक्षीणानाम् महतामित्यर्थः. ९ सान्द्रस्निग्ध.. १० मान्द्यम्. ११ जटाजूटः. १२ कर्तरिका. १३ शान्तिमति. १४ व्याप्तम्. १५ अधोगामि.

लनान्मुकुलितं चक्षुर्द्वितीयं पुनः पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम् । अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं शंभोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ १२० ॥ पक्ष्मालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो यस्मिन्ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव । अर्चिर्निःशेषचूडाशशिगलितसुधाघोरहंकारि कोणं तार्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥ १२१ ॥ कण्ठः ॥ पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः । गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥ १२२ ॥ पातु वः शितिकण्ठस्य तमालश्यामलो गलः । संसक्तपार्वतीबाहुसुवर्णनिकषोपलः ॥ १२३ ॥ कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलिं प्रति । याः कर्णे विकचोत्पलन्ति कुचयोरंसे च कालागुरुस्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः ॥ १२४ ॥ कस्तूरीयन्ति भाले तदनु नयनयोः कज्जलीयन्ति कर्णप्रान्ते नीलोत्पलीयन्त्युरसि मरकतालंकृतीयन्ति देव्याः । रोमालीयन्ति नाभेरुपरि हरिमणीमेखलीयन्ति मध्ये कल्याणं कुर्युरेते त्रिजगति पुरजित्कण्ठभासां विलासाः ॥ १२५ ॥ **शिरोमालिका** ॥ पित्रोः पादाब्जसेवागतगिरितनयापुत्रपत्रातिभीतक्षुभ्यद्भूषाभुजंगश्वसनगुरुमरुद्दीप्तनेत्राग्नितापात् । स्विद्यन्मौलीन्दुखण्डस्रुतबहुलसुधासेकसंजातजीवा पूर्वाधीतं पठन्ती ह्यवतु विधिशिरोमालिका शूलिनो वः ॥ १२६ ॥ **गणाः** ॥ संध्याताण्डवडम्बरप्रणयिनो देवस्य चण्डीपतेर्भ्रष्टाः पाण्डुविशीर्णमुण्डचयनव्यग्रा गणाः पान्तु वः । यैरौत्सुक्यवशीकृतैर्ग्रहगणाद्ग्राहौ गृहीते जवात्सूर्याचन्द्रमसोर्मिथः स्मितवतोर्जातं करास्फालनम् ॥ १२७ ॥ **नन्दी** ॥ कण्ठालंकारघण्टाघणघणरणिताध्मातरोदःकटाहः कण्ठेकालाधिरोहोचितघनसुभगंभावुकस्निग्धपृष्ठः । साक्षाद्धर्मो वपुष्मान्धवलककुदनिर्धूतकैलासकूटः कूटस्थो वः ककुद्मान्निबिडतरतमःस्तोमतृण्यां वितृण्यात् ॥ १२८ ॥ **ताण्डवम्** ॥ देवा दिक्पतयः प्रयात परतः ख मुञ्चताम्भोमुचः पातालं व्रज मेदिनीं प्रविशत क्षोणीतलं भूधराः । ब्रह्मन्नुन्नय दूरमात्मभवनं नाथस्य नो नृत्यतः शंभोः संकटमेतदित्यवतु वः प्रोत्सारणा नन्दिनः ॥ १२९ ॥ दोर्दण्डद्वयलीलया चलगिरिभ्राम्यत्तदुच्चैरवध्वानोद्गीतजगद्भ्रमत्पदभरालोलत्फणाग्र्योरगम् । भृङ्गापिङ्गजटाटवीपरिसरोद्गङ्गोर्मिमालाचलच्चन्द्रं चारु महेश्वरस्य भवतां निःश्रेयसे ताण्डवम् ॥ १३० ॥ संध्याताण्डवडम्बरव्यसनिनो भर्गस्य चण्डभ्रमिव्यानृत्यद्भुजदण्डमण्डलभुवो झञ्झानिलाः पान्तु वः । येषामुद्धतताण्डवेन झटिति व्यूहेषु भूमीभृतामुड्डीनेषु बिडौजसा पुनरसौ दम्भोलिरालोकितः ॥ १३१ ॥ यस्यां मौलिमिलत्सु-

१ षडानन.. २ वाहनम्. मयूर इत्यर्थः. ३ पूरित ४ द्यावापृथिव्यौ. ५ शंकरः. ६ सुभग भवतीति तत् ७ परिभूत. ८ निश्चलः. निर्विकारतया चिरजीवीत्यर्थः. ९ अज्ञाननिवहः. १० तृणसमूहः. ११ खादतु १२ इन्द्रेण. १३ वज्रम्.

धांशुकलया संपूर्णविस्त्रार्पितं भालावस्थितलोचनेन सहसैवालातचक्रायितम् । आवर्तायितमाकपर्दममरस्त्रोतस्वतीधारया पातु त्रीणि जगन्ति खण्डपरशोः सा ताण्डवाङ्गभ्रमिः ॥१३२॥ पादस्याविर्भवन्तीमवनतिमवने[1] रक्षतः स्वैरपातैः संकोचेनैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम्[3] । दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीतेरित्याधारानुरोधात्[4] त्रिपुरविजयिनः पातु वो दुःखनृत्यम् ॥ १३३ ॥ मूर्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालोद्भूताम्भःक्षोदैर्[5] दम्भात्प्रसभमभिनभः क्षिप्तनक्षत्रलक्ष्म । ऊर्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यन्नभस्वत्प्रवेशभ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शाम्भवं ताण्डवं वः ॥ १३४ ॥ शर्वाणीपाणिताले[6]श्चलवलयझणत्कारिभिः श्लाघ्यमानं स्थाने[7] संभाव्यमानं पुलकितवपुषा शंभुना प्रेक्षकेण । खेलत्पिञ्छालि[8] केकाकलकलकलितं क्रौञ्चभिद्बर्हियूनो[9] हेरम्बाकाण्ड[10]बृंहितारलित[11]मनसस्[12]ताण्डवं त्वां धिनोतु ॥ १३५ ॥ पायादायासखेदक्षुभितफणिफणारत्ननिर्यत्नि[13]निर्यच्छायामायापतङ्गद्युतिमुदितवियद्वाहिनी[14]चक्रवाकम् । अभ्रान्ताभ्रान्तचूडातुहिनकरकरानीकनालीकनाल[15]च्छेदामोदानुधावद्बुधिरमिव खगे धूर्जटेस्ताण्डवं नः ॥ १३६ ॥ उच्चैरुत्तालखेलद्भुजवनपवनोद्धूतशैलौघपातस्फारोदञ्चत्पयोधिप्रकटितमुकुटस्वर्धुनीसंगमानि । जीयासुस्ताण्डवानि स्फुटविकटजटाकोटिसंघट्टिभूरिभ्राम्यन्नक्षत्रचक्रव्यवसितसुमनोवृष्टिपातानि शंभोः ॥ १३७ ॥ देवस्त्रैगुण्यभेदात्सृजति वितनुते संहरत्येष लोकानस्यैव व्यापिनीभिस्तनुभिरपि जगद्व्याप्तमष्टाभिरेव । वन्द्यो नास्येति पश्यन्निव चरणगतः पातु पुष्पाञ्जलिर्वः शंभोर्नृत्यावतारे वलयमणिफणाफूत्कृतैर्विप्रकीर्णः ॥ १३८ ॥ **अर्धनारीश्वरः** ॥

मन्दारमालाकुलितालकायै कपालमालाङ्कितशेखराय । दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय ॥ १३९ ॥ एकः स्तनस्तुङ्गतरः परस्य वार्तामिव प्रष्टुमगान्मुखाग्रम् । यस्याः प्रियार्धस्थितिमुद्वहन्त्याः सा पातु वः पर्वतराजपुत्री ॥ १४० ॥ यस्योपवीतगुण एव फणावृतैकवक्षोरुहः कुचपटीयति[16] वामभागे । तस्मै ममास्तु तमसामवसानसीम्ने चन्द्रार्धमौलिशिरसे महसे नमस्या ॥ १४१ ॥ स्वेदार्द्रवामकुचमण्डनपत्रभङ्गसंशोषिदक्षिणकराङ्गुलिभस्मरेणुः । स्त्रीपुंनपुंसकपदव्यतिलङ्घिनी वः शंभोस्तनुः सुखयतु प्रकृतिश्चतुर्थी ॥ १४२ ॥ सभोगानतिरिच्यमानविभवो यद्विप्रलम्भो रसस्तद्दिव्यं मिथुनं परस्परपरिष्व्यूतं नमस्कुर्महे । एकस्याः प्रतिबिम्बसंभृतविपर्यासे मुहुर्दर्पणे सव्याङ्गस्थितिकौतुकं शमयति स्वामी स यत्रापरः ॥ १४३ ॥ स्वच्छन्दैकरतनश्रीरुभयदलमिलन्मौलिचन्द्रः फणीन्द्रप्रा-

---

१ पृथिव्या २ यथेष्टं क्षेपणे . ३ अतिक्रान्तचतुर्दशभुवनानाम् ४ आधारस्य पृथिव्यादेरनुरोधादनुसारात्. ५ कणा.. ६ पार्वती ७ उचितम् ८ बर्हपङ्क्तय . ९ षडानन . १० अकालेभवम्. ११ गर्जितम् १२ क्षुब्धचेतस . मेघनिर्घोषभ्रान्त्येति भाव.. १३ प्रक्षेपः. १४ सुरसरित्. १५ बाण.. १६ कञ्चुकीभवति.

चीनावीत[1]वाही सुखयतु भगवानर्धनारीश्वरो वः । यस्यार्धे विश्वदाहव्यसनविसृमर[2]ज्योतिरर्धे कृपोद्यद्बाष्पं चान्योन्यवेगप्रहतिसिमसिमाकारि चक्षुस्तृतीयम् ॥ १४४ ॥

## पार्वती ।

हरकण्ठग्रहानन्दमीलिताक्षीं नमाम्युमाम् । कालकूटस्य संस्पर्शाज्जातमूर्च्छागमामिव ॥ १ ॥ पार्वतीम्[3]ओषधीमेकामपर्णां[4] मृगयामहे । शूली[5] हालाहलं पीत्वा यया मृत्युंजयो[6]ऽभवत् ॥ २ ॥ अपर्णैव लता सेव्या विद्वद्भिरिति मे मतिः । यथा वृत्तः पुराणोऽपि स्थाणुः सूतेऽमृतं फलम् ॥ ३ ॥ मृणालव्यालवलया वेणीबन्धकपर्दिनी । हरानुकारिणी पातु लीलया पार्वती जगत् ॥ ४ ॥ जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका । सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥ ५ ॥ तपस्वी कां गतोऽवस्थामिति स्मेराननाविव । गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ ॥ ६ ॥ चण्डीजङ्घाकाण्डः शिरसा चरणस्पृशि प्रिये जयति । शंकर[7]पर्यन्ताजितो वीरस्तम्भः स्मरस्येव ॥ ७ ॥ उन्नालनाभिपङ्केरुह इव येनावभाति शंभुरपि । जयति पुरुषायितायास्तदाननं शैलकन्यायाः ॥ ८ ॥ अङ्कनिलीनगजाननशङ्का[8]कुल[9]बाहुलेय[10]हृत[11]वसनौ । सस्मितहरकरकलितौ हिमगिरितनयास्तनौ जयतः ॥ ९ ॥ कण्ठो[12]चितोऽपि हुंकृति[13]मात्रनिरस्तः पदा[14]न्तिके पतितः । यस्याश्चन्द्रशिखः स्मरभल्लनिभो जयति सा चण्डी ॥ १० ॥ शिरसि धृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री । अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतुः ॥ ११ ॥ तद्वः प्रमार्ष्टु विपदः प्रणतार्तिहन्त्र्या न्यस्तं पदं महिषमूर्धनि चण्डिकायाः । वैरी यदीयनखरांशुपरीतशृङ्गः शक्रायुधाङ्कितनवाम्बुधरप्रभोऽभूत् ॥ १२ ॥ श्रुत्वा षडाननजनुर्मुदितान्तरेण पञ्चाननेन सहसा चतुराननाय । शार्दूलचर्म भुजगाभरणं सभस्म दत्तं निशम्य गिरिजाहसितं पुनातु ॥ १३ ॥ पञ्चास्यपञ्चदशनेत्रपिधानदक्षा दाक्षायणीमृदुकराः कतिनः पुनन्तु । द्वौ वल्लकीं कथमकेति च वादयन्तावष्टादशोऽपि घटयन्स्तुतमौनमुद्राम् ॥ १४ ॥ आनन्दमेदुरपुरंदरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य । पादाम्बुजं भवतु वो विजयाय मञ्जु मञ्जीरराजितमनोरममम्बिकायाः ॥ १५ ॥ ब्रह्मादयोऽपि यदपाङ्गतरंगभङ्ग्या सृष्टिस्थितिप्रलयकारणतां व्रजन्ति । लावण्यवारिनिधिवीचिपरिप्लुतायै तस्यै नमोऽस्तु सततं

१ यज्ञोपवीतम्. २ प्रसारी. ३ पर्वतसम्बन्धिनीम्; (पक्षे) पर्वतपुत्रीम्. ४ पर्णरहिताम्; (पक्षे) एतन्नाम्नीं पार्वतीम्. ५ शूलरोगवान्; (पक्षे) त्रिशूलधारी. ६ मृत्युनाशकः; (पक्षे) एतन्नाम्ना प्रसिद्धः शिवः. ७ स्वतः सुखविशेषजनकतया तुच्छविषयपराङ्मुखस्याप्येतादृश्यवस्थासंपादनादिति भावः ८ स्तनयोः कुम्भिकुम्भसाम्यादिति भावः. ९ कथं मां विहायैनमेव सगोप्य बहुकालं स्तन्यं प्रयच्छतीति धियेति भाव.. १० कार्तिकेयः. ११ गजाननिर्णयार्थमिति भावः. १२ आलिङ्गनार्होऽपि; (पक्षे) अर्धचन्द्राकारतया कण्ठलक्ष्ययोग्योऽपि. १३ न तु करतर्जनादिना; (पक्षे) बाणादिना. १४ प्रणामार्थमिति भावः; (पक्षे) वेगवशादिति भावः.

हरवल्लभायै ॥ १६ ॥ ज्याकृष्टिबद्धखटिकामुखपाणिपृष्ठप्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः । त्वां पातु मञ्जरितपल्लवकर्णपूरलोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ॥ १७ ॥ प्रचण्डचण्डमुण्डयोर्महाबलैकखण्डिनी ह्यनेकरुण्डमुण्डयुग्रणे बलैकदायिनी । क्वचित्स्वशक्तिकारिणी रमाविलासदायिनी मुदेऽस्तु कालिका सदा समस्तपापहारिणी ॥ १८ ॥ पुरारितनुंहारिणी दुरितसंघसंहारिणी भजन्मतिविवर्धिनी प्रबलदानवोन्मर्दिनी । तुपारगिरिनन्दिनी मुनिहृदन्तरालम्बिनी कुमारमुखचुम्बिनी हरनितम्बिनी पातु वः ॥ १९ ॥ सत्त्वादिस्थैरगणितगुणैर्हन्त विश्वं प्रसूय व्यक्तं धत्ते प्रहसनकरी या कुमारीति संज्ञाम् । मोहध्वान्तप्रसुरविरतिर्विश्वमूर्तिः समन्तादाद्या शक्तिः स्फुरतु मम सा दीपवद्देहगेहे ॥ २० ॥ वहन्ती सिन्दूरं प्रबलकबरीभारतिमिरत्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् । तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरीपरीवाहस्रोतःसरणिरिव सीमन्तसरणिः ॥ २१ ॥ औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः । दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥ २२ ॥ आदौ प्रेमकषायिता हरमुखव्यापारलोला शनैर्व्रीडाभारविघूर्णिता मुकुलिता भ्रूमोद्रमव्याजतः । पत्युः संमिलिता दृशा सरभसव्यावर्तनव्याकुला पार्वत्याः परिणीतिमङ्गलविधौ दृष्टिः शिवायास्तु वः ॥ २३ ॥ प्रत्यासन्न[1]विवाहमङ्गलविधौ देवार्चनव्यग्रया दृष्ट्वाग्रे परिणेतु[2]रेव लिखितां गङ्गाधरस्याकृतिम् । उन्माद[3]स्मितरोषलज्जितधिया गौर्या कथंचिच्चिराद्वृद्धस्त्रीवचनात्प्रिये विनिहितः पुष्पाञ्जलिः पातु वः ॥ २४ ॥ रामा[4]द्याचय मेदिनीं धनपते[5]र्बीजं बलाल्ला[6]ङ्गलं प्रेतेशा[7]न्माहिषं तवास्ति वृषभः फालं त्रिशूलं तव । शक्ताहं तव चान्नदानकरणे स्कन्दोऽस्ति गोरक्षणे खिन्नाहं हर भिक्षया कुरु कृषिं गौरीवचः पातु वः ॥ २५ ॥ हे हेरम्ब किमम्ब रोदिषि कथं कर्णौ लुठत्यग्निभूः किं ते स्कन्द विचेष्टितं मम पुरा संख्या कृता चक्षुषाम् । नैतत्तेऽप्युचितं गजास्य चरितं नासां मिमीतेऽम्ब मे तावेव सहसा विलोक्य हसितव्यग्रा शिवा पातु वः ॥२६॥ मातस्तातजटासु किं सुरसरित्किं शेखरे चन्द्रमाः किं भाले हुतभुग्लुठत्युरसि किं नागाधिपः किं कटौ । कृत्तिः किं जघनद्वयान्तरगतं यद्दीर्घमालम्बते श्रुत्वा पुत्रवचोऽम्बिका स्मितमुखी लज्जावती पातु वः ॥ २७ ॥ धूमव्याकुलदृष्टिरिन्दुकिरणैराह्लादिताक्षी पुनः पश्यन्तीव समुत्सुका नतमुखी भूयो ह्रिया ब्रह्मणः । सेर्ष्या पादनखेन्दुदर्पणगते गङ्गां दधाने हरे स्पर्शादुत्पुलका करग्रहविधौ गौरी शिवायास्तु वः ॥ २८ ॥ गोनासाय[10] नियोजितागदरजाः सर्पाय बद्धौपधिः कण्ठस्थाय विषाय वीर्यमहतः पाणौ मणीन्बिभ्रती । भर्तुर्भूतगणाय गोत्रजरती[11]निर्दिष्टमन्त्राक्षरा रक्षत्वद्रिसुता

१ समीपवर्ती. २ भर्तुः. ३ चित्तविभ्रम. ४ परशुरामात्. ५ कुबेरात्. ६ बलभद्रात्. ७ यमात्. ८ कर्षक. ९ स्कन्द.. १० गोनासातिरिक्तसर्पभयनिवृत्तय इत्यर्थ. गोनास सर्पजातिविशेष. ११ वृद्धा.

विवाहसमये प्रीता च भीता च वः ॥ २९ ॥ स्वेदस्यन्दितसान्द्रचन्दनचयं दोर्वल्लिबन्ध-श्रमादूर्ध्वश्वासपरिस्खलत्स्मरकथं संदष्टदन्तच्छदम् । सीत्काराञ्चितलोचनं सपुलकं भ्रान्तभ्रु नृत्यत्करं पार्वत्यां सुरतं मुदे रसवतामास्तां मृडानीपतेः ॥ ३० ॥ स्वेदस्ते कथमीदृशः प्रियतमे त्वन्नेत्रवह्नेर्विभो कस्माद्वेपितमेतदिन्दुवदने भोगीन्द्रभीतेर्भव । रोमाञ्चः कथमेष देवि भगवन्गङ्गाम्भसां सीकरैरित्थं भर्तरि भावगोपनपरा गौरी चिरं पातु वः ॥ ३१ ॥ शम्याकस्य रजः प्रमृज्य चरणे दत्तो मया यावको निर्मृज्य स्तनकुड्मले च भसितं पत्राङ्कुरो निर्मितः । स्वच्छन्दं विहरेति जल्पितगिरं साकूतमालीजनं दृष्ट्वा केवलमाघ्नती कुटिलया दाक्षायणी पातु वः ॥ ३२ ॥ वक्त्रं शीतकरोऽधरो घनरसः कामप्रदो विग्रहः श्वासो गन्धवहः सरोरुहसुहृत्पाणिः स्मिताभा शुचिः । वक्षः पीनपयोधराधिकरणं पृथ्वी नितम्बस्थलीत्यष्टौ धूर्जटिमूर्तयः स्मरभयाद्दुर्गाश्रिताः पान्तु वः ॥ ३३ ॥ पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां शंभोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने । ह्रीमत्या शिरसीहितः सपुलकस्वेदोद्गमोत्कम्पया विश्लिष्यन्कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः ॥ ३४ ॥ कैलासालयभाललोचनरुचा निर्वर्तितालक्तकव्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् । स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥ ३५ ॥ लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम् । पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितव्रीडया प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥ ३६ ॥ सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि । सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ ३७ ॥ भिक्षुः क्वास्ति बलेर्मखे पशुपतिः किं नास्त्यसौ गोकुले मुग्धे पन्नगभूषणः सखि सदा शेते च तस्योपरि । आर्ये मुञ्च विषादमाशु कमले नाहं प्रकृत्या चला चेत्थं वै गिरिजासमुद्रसुतयोः संभाषणं पातु वः ॥ ३८ ॥ हे गङ्गाधरपत्नि चक्रिवधु किं कुत्रास्त्यसौ नर्तको वृन्दारण्यभुवि क्व सर्पकुतुकी स्यात्कालियस्य ह्रदे । भिक्षुः कुत्र गतोऽस्ति यज्ञसदने क्वासौ विषादी बकीक्रीडे स्यादिति पद्मजागिरिजयोर्वाग्भङ्गयः पान्तु वः ॥३९॥ वेणीबन्धकपर्दिनी सिततनुः श्रीखण्डपांशूत्करैः केतक्येकदलेन्दुभृद्विलसता व्यालोपवी-

---

१ यावज्जीवं कृततपसः फलोन्मुखत्वं समीक्ष्येत्यर्थः. २ भूतगणादिसाहित्यमालोक्येत्यर्थः. ३ चुम्बितावित्यर्थः. ४ निमीलित. ५ सात्त्विकाविर्भावसूचकं रोमहर्षणम्. ६ स्वाभिप्राय. ७ लाक्षारस. ८ भस्म. ९ उदकम्. १० शरीरम्. यजमानरूपम्. ११ कमलाना मित्रम्. सूर्य इत्यर्थः; पाणिपक्षे सरोरुहाना सदृशा कान्तिर्यस्य १२ तेजस् १३ स्तनौ; (पक्षे) मेघाः. १४ स्थानम्. आकाश मेघानां स्थानमिति प्रसिद्धम् १५ इष्टः. १६ रक्तोत्पलम्. १७ खेदम्; (पक्षे) विषमत्तीति विषादस्तं शिवम्. १८ चञ्चला, (पक्षे) लक्ष्मीः.

तिन्यपि । प्राक्पाणिग्रहणाद्विनोदरभसा सख्याः पुरो लीलया कुर्वाणानुकृतिं हरस्य दिशतु श्रेयांसि वः पार्वती ॥ ४० ॥ यस्याङ्घ्रिद्वितयं नमन्ति विबुधाः स त्वेककः सर्ववित्तं मृत्युंजयमामनन्ति मुनयः सोऽद्यापि यातिव्रताः । इत्याकर्ण्य कथां रहस्यपि यया पार्श्वे विवाहात्पुरा भङ्क्त्वाङ्गानि विजृम्भितं गिरिभुवो मोट्टायितं पातु वः ॥ ४१ ॥ दुर्गा दानवनाशिनी हरजटाश्रेणी व्ययोल्लासिनी वीणाशङ्खकरालतोमरधरामुण्डप्रचण्डाधरा । रक्तोल्लासितरक्तबीजमथिनी भक्तिः सदानन्दिनी पायात्सा परमेश्वरी प्रतिदिनं कल्याणमुक्तिप्रदा ॥ ४२ ॥ संध्यारागवती स्वभावकुटिला गङ्गा द्विजिह्वः फणी वक्राङ्गैर्मलिनः शशी कविमुखो नन्दी च मूकी वृषः । इत्थं दुर्जनसंकटे पतिगृहे वस्तव्यमेतत्कथं गौरीत्थं नृकपालपाणिकमला चिन्तान्विता पातु वः ॥ ४३ ॥ भिक्षार्थी स क्व यातः सुतनु वलिमखे ताण्डवं क्वाद्य भद्रे मन्ये वृन्दावनान्ते क्व नु स मृगशिशुर्नैव जाने वराहम् । बाले कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः ॥ ४४ ॥ दीप्तक्षुद्वेगयोगाद्वदनलहलहल्लम्बजिह्वाग्रलीढब्रह्माण्डक्षौद्रबिन्दुप्रबलतरभवज्जाठराग्निस्फुलिङ्गाम् । काली कङ्कालशेषामतुलगलचलन्मुण्डमालाकरालां गुञ्जासंवादिनेत्रामजिननिवसनां नौमि पाशासिहस्ताम् ॥ ४५ ॥ उद्वाहारोपिताद्र्यक्षतनिजपदयोः संगतामिन्दुमौलावानम्रेयां सुधांशोर्व्यधित किल कलां तूर्णमेवान्नपूर्णाम् । सक्तानामक्षतानाममृतदृगनलोपाधितः पक्वभावान्नानार्थैरन्नपूर्णाप्रणतजनततेः पूर्णतामातनोतु ॥ ४६ ॥ जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः । भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापीसंभृताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥ ४७ ॥ विद्राणे[1] रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे जाताशङ्के[2] शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे । वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नं[3] निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा[4] भवानी ॥ ४८ ॥ वक्षःपीठे निरीक्ष्य स्फटिकमणिशिलामण्डले स्वच्छभासि स्वच्छायां[5] साभ्यसूया[6] त्वमियमिति मुहुः सत्यमाश्वासितापि । वामे मे दक्षिणेऽस्याः श्रवसि[7] कुवलयं नाहमित्यालपन्ती दत्ताश्लेषा सहासं मदनविजयिना पार्वती वः पुनातु ॥ ४९ ॥-या वाचः साधुतायास्त्रिभुवनभुवनस्याङ्गने संचरन्ती वामांसासक्तवीणाध्वनिगणाविलसन्मूर्छनानन्दपूर्णा । संतोषोल्लासिमौलिः स्फुरदमलमणिः स्वर्णताटङ्कभूषा विभ्राजत्सस्मितास्या भवतु भवमुदे भव्यता मे भवानी ॥ ५० ॥ सिंहारूढैकपादा दशभुजविलसच्चापचर्मासिचक्रप्रोद्यत्पाशाङ्कुशालीदरवरविलसत्तर्जनीबाणरम्या । घ्नन्ती शूलेन वक्षस्य-

---

१ जीर्णे २ पलायिते ३ पौरुषोपघ्नाना पराक्रमिणा निघ्न आयत्तस्तम् ४ प्रभूतप्रभावा. ५ स्वप्रतिबिम्बम्. ६ सेर्ष्या. ७ कर्णे.

सुरमहिहरिग्रस्तहस्तं तु काञ्ची पीतक्षौमार्धचन्द्रा त्रिनयनललिता सा भवान्यस्तु सिद्ध्यै ॥९१॥ रामार्चिताङ्घ्रिरभिरामाकृतिः कृतविरामा सुपर्वविपदां[1] कामार्तिहृत्सफलकामा निदेशरतकामादिनिर्जरवधूः । भामा[2] हरस्य नुतभामा[3] जपासदृशभा[4] माननीयचरिता सा मामवत्वखिलसामादृतस्तुतिरसामान्यमुक्तिसुखदा ॥ ९२ ॥ वालीयुत[5]श्रवणपालीयुगा ललितचूली[6]विराजिबकुला केलीगतानुगमरालीकुला मधुरमाली[7]भिरादृतकथा । नालीक[8]दृक्कुसुमनाली[9]कपाणिरिह कालीय[10]शासिसहजा तालीदलाभतनुमाली सदा भवतु काली शुभाय मम सा ॥९३॥

---

## षण्मुखः ।

विकसदमरनारीनेत्रनीलाब्जखण्डान्यधिवसति सदा यः संयमाधःकृतानि । न तु रुचिरकलापे वर्तते यो मयूरे वितरतु स कुमारो ब्रह्मचर्यश्रियं वः ॥ १ ॥ अर्चिष्मन्ति विदार्य वक्त्रकुहराण्यासृक्कतो वासुकेरङ्गुल्या विषकर्बुरान्गणयतः संस्पृश्य दन्ताङ्कुरान् । एकं त्रीणि च सप्त पञ्च षडिति प्रध्वस्तसंख्याक्रमा वाचः क्रौञ्चरिपोः शिशुत्वविकलाः श्रेयांसि पुष्णन्तु वः ॥ २ ॥

---

## हरिहरौ ।

जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ । कामारिं कामतातं वा कंचिद्देवं भजामहे ॥ १ ॥ अबला[11]ढ्यविग्रहश्रीरमर्त्य[12]नतिरक्षमालयो[13]पेतः । पञ्च[14]क्रमोदितमुखः पायात्परमेश्वरो[15] मुहुरनादिः[16] ॥ २ ॥ पन्नग[17]धारिकराग्रो गङ्गाया[18] लक्षितोऽङ्गदो[19]ग्रभुजः । शशिखण्डशेखर[20] उमापरिग्रहो[21] मुहुरनादिरवतु त्वाम् ॥ ३ ॥ गवीशपत्रो[22] नगजार्तिहारी[23] कुमारतातः[24] शशिखण्डमौलिः[25] । लङ्केशसंपूजितपादपद्मः[26] पायादनादिः[27] परमेश्वरो[28] नः ॥ ४ ॥ पायात्कुमारज-

---

१ दैत्यकृतदेवविपत्तीनाम्. २ स्त्री. ३ क्रोधः. असुरवधकालोत्पन्न इत्यर्थः. ४ अरुणेत्यर्थ.. ५ केशगुच्छः. ६ कर्णमूलम् ७ सखीभि' ८ अमोघदर्शनेत्यर्थः. ९ कमलम्. १० कालीय. सर्पस्तं शास्तीति स कृष्णस्तत्सहजा भगिनी यशोदोदरे दुर्गाप्रादुर्भावस्य भागवते प्रसिद्धत्वात् ११ पार्वती. अर्धाङ्गीकरणात्; (पक्षे) बलाढ्यो बलिष्ठ.. १२ देवसपूजित ; (पक्षे) मृत्युलोकसपूजितः. तस्य रक्षणात्. १३ अक्षमाला जपमाला; (पक्षे) क्षमालय पृथ्वी. १४ पञ्चानन.; (पक्षे) चक्रेण मोदित मुख यस्य सः. १५ परमेश्वरः शिवः; रमेश्वरो विष्णु.. १६ न विद्यते आदिर्यस्य स ; (पक्षे) आद्यवर्णरहित . १७ सर्पभूषणः; (पक्षे) पर्वतधारी. गोवर्धनोद्धारणात्. १८ भागीरथ्या ; (पक्षे) गाया एतन्नामकच्छन्दोविशेषस्य. १९ अङ्गदभूषणाङ्ग ; (पक्षे) गदाभूषितः. २० चन्द्रमौलि ; (पक्षे) मयूरपिच्छैर्भूषितः. २१ उमा पार्वती; मा लक्ष्मीः. २२ गवीशो वृषो वाहन यस्य; (पक्षे आद्याक्षरस्य लोपात्) वीशो गरुडो वाहनं यस्य. २३ पार्वतीदुःखनाशकः; (पक्षे) गजेन्द्रपीडाहारक.. २४ कार्तिकेयपिता: (पक्षे) मदनपिता २५ चन्द्र शिरसि यस्य, (पक्षे) मयूरपिच्छानि शिरसि यस्य. २६ रावणपूजितचरणकमल ; (पक्षे) को ब्रह्मा, ईश शिव., एताभ्या पूजितपादपद्म.. २७ न विद्यत आदिर्यस्य स.; (पक्षे) आद्याक्षरशून्य.. २८ शिव ; (पक्षे) विष्णुः.

नकाख्य उमाविलासः शङ्खप्रभ[1]श्च निधनेश[2]गवीश[3]यान[4]ः । गङ्गां च पन्नगधरश्च पिनाक[5]सक्त आद्याक्षरेण सहितो रहितो भवन्तम् ॥ ५ ॥ स्फटिकमरकतश्रीहारिणोः प्रीतियोगात्तद्वतु वपुरेकं कामकंसद्विषोर्वः । भवति गिरिसुतायाः सार्धमम्भोधिपुत्र्या सदृशमहसि कण्ठे यत्र सीमाविवादः ॥ ६ ॥ संप्राप्तं मकरध्वजेन[6] मथनं[7] त्वत्तो मदर्थे पुरा तद्युक्तं बहुमार्गगां[8] मम पुरो निर्लज्ज वोढुस्तव । तामेवानुनयस्व-भावकुटिला हे कृष्णकण्ठ[9]-ग्रहं मुञ्चेत्याह रुषा यमद्रितनया लक्ष्मीश्च पायात्स वः ॥ ७ ॥ यौ तौ शङ्खकपालभूषितकरौ मालास्थिमालाधरौ देवौ द्वारवतीश्मशाननिलयौ नागारिगोवाहनौ । द्वित्र्यक्षौ बलिदक्षयज्ञमथनौ श्रीशैलजावल्लभौ पापं वो हरतां सदा हरिहरौ श्रीवत्सगङ्गाधरौ ॥ ८ ॥ लोले ब्रूहि कपालिकामिनि पिता कस्ते पतिः पाथसां कः प्रत्येति जलादपत्यजननं प्रत्येति यः अंस्त[10]रात् । इत्थं पर्वतसिन्धुराजसुतयोराकर्ण्य वाक्चातुरी संस्मेरस्य हरेर्हरस्य च मुदो निघ्नन्तु विघ्नं तु वः ॥ ९ ॥ यस्मादासीत्कुमारः कुवलयदलवल्लीलयोषाह गङ्गां वामा[11] यस्याङ्गसङ्गा पिहितजनचयो यो गवीशध्वजोऽपि । लङ्केशाद्येकनाथो हिमकर[12]रुचिभृद्विशेषाश्रमोऽसौ वर्णस्याद्यस्य लोपादपहरतु हरिः पातकं वः स्मरारिः ॥ १० ॥

---

## त्रिमूर्तयः ।

नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने । गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ १ ॥ नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते । अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ २॥ रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे । अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥ ३ ॥ श्यामश्वेतारुणाङ्गा जलधरणिधरोत्फुल्लपङ्केरुहस्था मोमां[13]साविन्त्र्युपेता रथचरण[14]पिनाकोग्रहुंकारशस्त्राः । देवा द्वित्र्यष्टनेत्रा जगदवनसमुच्छेदनोत्पत्तिदक्षाः प्रीता वः पान्तु नित्यं हरिहरविधयस्तार्क्ष्य[15]गोहंसपत्राः ॥४॥

---

## विष्णुः ।

आदिमध्यान्तरहितं दशा[16]हीनं पुरातनम् । अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम् ॥१॥ जयति स भगवान्कृष्णः शेते यः शेषभोगशय्यायाम् । मध्येपयः पयोधेरपर इवाम्भोनिधिः

---

१ शङ्खस्य कान्तिरिव कान्तिर्यस्य स., (पक्षे) खप्रभ आकाशतुल्यः सर्वव्यापकत्वात् २ यम , (पक्षे) कुबेर. ३ गवीशो नन्दी; (पक्षे) वीशो गरुड . ४ यमकुबेरार्थे शत्रु प्रति विजिगीषोर्गमनम्; नन्दीगरुडार्थे वाहनम्. ५ पिनाक आयुधविशेष , (पक्षे) नाकः स्वर्ग ६ शिवपक्षे मदनेन; विष्णुपक्षे समुद्रेण. ७ विनाश , (पक्षे) विलोडनम् ८ नदीम् गङ्गामित्यर्थं ,. (पक्षे) वेश्याम् कसस्य कुब्जा दासीमित्यर्थ ९ कृष्णकण्ठ नीलकण्ठ ग्रहं निर्वन्ध मुञ्च; (पक्षे) कृष्ण कण्ठग्रहं मत्कण्ठग्रह मुञ्च १० पाषाणात्. पार्वत्या. पर्वतगर्भसजननत्वात् ११ स्त्री; (पक्षे) मा लक्ष्मी . १२ चन्द्र ; (पक्षे) मीन.. १३ मा लक्ष्मी ; उमा पार्वती. १४ चक्रम् १५ गरुड.. १६ वस्त्रस प्रान्तभागस्थाः सूत्रवर्तिका..

कृष्णः ॥ २ ॥ अतिविपुलं कुचयुगलं रहसि करैरामृशन्मुहुर्लक्ष्म्याः[१]। तदपहृतं निजहृदयं जयति हरिर्मृगयमाण इव ॥ ३ ॥ जयति स नाभिर्जगतां स्वनाभिरन्ध्रोद्भवज्जगद्बीजः। दामोदरो निजोदरगह्वरनिर्विघ्नजगदण्डः ॥ ४ ॥ श्रीकरपिहितं[२] चक्षुः सुखयतु वः पुण्डरीकनयनस्य। जघनमिवेक्षितुमागतम्[३]अञ्जनिभं नाभिसुषिरेण[४] ॥ ५ ॥ श्यामं श्रीकुचकुङ्कुमपिञ्जरितमुरो[५] मुरद्विषो जयति। दिनमुखनभ[६] इव कौस्तुभविभाकरो[७] यद्विभूषयति ॥ ६ ॥ प्रतिबिम्बितप्रियातनु सकौस्तुभं जयति मधुभिदो वक्षः। पुरुषायितम्[८]अभ्यस्यति लक्ष्मीर्यद्वीक्ष्य मुकुरमिव[९] ॥ ७ ॥ केलिचलाङ्गुलिलम्भित[१०]लक्ष्मीनाभिर्मुरद्विपश्चरणः। स जयति येन कृता श्रीरनुरूपा[११] पद्मनाभस्य ॥ ८ ॥ रोमावली मुरारेः श्रीवत्सनिवेशिताग्रभागा वः। उन्नालनाभिनलिन[१२]च्छायेवोत्तापम्[१३]अपहरतु ॥ ९ ॥ कमलाकुचकनकाचलजलधरमाभीरसुन्दरीमदनम्। अधिततशेषफणावलिकमलवनभृङ्गमच्युतं वन्दे ॥ १० ॥ जीयादम्बुधितनयाधररसमास्वादयन्मुरारिरयम्। अम्बुधिमथनक्लेशं कलयन्विफलं च सफलं च ॥ ११ ॥ श्रीधाम्नि दुग्धोदधिपुण्डरीके यश्चञ्चरीकद्युतिमातनोति। नीलोत्पलश्यामलदेहकान्तिः स वोऽस्तु भूत्यै भगवान्मुकुन्दः ॥ १२ ॥ वक्षःस्थली रक्षतु सा जगन्ति जगत्प्रसूतेर्गरुडध्वजस्य। श्रियोऽङ्गरागेण विभाव्यते या सौभाग्यहेम्नः कषपट्टिकेव[१५] ॥ १३ ॥ वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दबिन्दुः। तवारविन्दाक्ष पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत् ॥ १४ ॥ जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्धलक्ष्यया। दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥ १५ ॥ पद्मापयोधरतटीपरिरम्भलग्नकाश्मीरमुद्रितमुरो मधुसूदनस्य। व्यक्तानुरागमिव खेलदनङ्ग[१६]खेदस्वेदाम्बुपूरमनुपूरयतु प्रियं वः ॥ १६ ॥ श्रेयः सदा दिशतु सालसपक्ष्मपाते निद्रायिते अपि दृशौ भृशमुन्नमय्य। संवाह्यमानचरणाम्बुजजातहर्षो लक्ष्मीमुखेक्षणपरः परमेश्वरो वः ॥ १७ ॥ सकलभुवनबन्धोः कैरवेन्दोः सरोजैरनुचितमिति मत्वा यः स्वपादारविन्दम्। घटयितुमिव मायी योजयत्याननेन्दौ वटदलपुटशायी मङ्गलं वः कृषीष्टाः ॥ १८ ॥ कचकुचचुबुकाग्रे पाणिषु व्यापृतेषु प्रथमजलधिपुत्रीसंगमेऽनङ्गधाम्नि। ग्रथितनिबिडनीवीबन्धनिर्मोक्षणार्थं चतुरधिककराशः पातु वश्चक्रपाणिः ॥ १९ ॥ विरमति महाकल्पे नाभीपथैकनिकेतनस्त्रिभुवनपुरः शिल्पी यस्य प्रतिक्षणमात्मभूः। किमधिकरणा कीदृक्कस्य व्यवस्थितिरित्यसावुदरमविशद्द्रष्टुं तस्मै जगन्निधये

१ लक्ष्मी. २ रतरीतिवसनविहीनतया लज्जावशादिति भावः. ३ पिहितेऽपि चक्षुर्गोलकेऽन्यमार्गेण पुण्डरीकनयनमुत्पादयित्वा जघनविलोकनं कृतमित्यर्थः. ४ रन्ध्रम्. ५ रक्तीकृतम्. दृढालिङ्गनादिति भावः. ६ प्रातःकालीननभसः स्वतो नीलिमत्वात्. ७ कौस्तुभमणिरेव सूर्यो यस्मिन्. ८ विपरीतरतम्. ९ दर्पणम्. १० स्पृष्टः. ११ चरणरूपपद्मनाभित्वेनेति भाव. १२ रोमावल्या नालच्छायोत्प्रेक्षा. श्रीवत्से च नलिनच्छायोत्प्रेक्षा. १३ महासंतापम्. १४ भृङ्गः. १५ निकषग्रावा. १६ सुरतायासः.

नमः ॥ २० ॥ लक्ष्मीपाणिद्वयविरचितं मूलमूर्धं श्रुतीनां व्यक्तं वन्दे चरणकमलद्वन्द्वमाद्यस्य पुंसः । यत्रैकस्य व्यथितवलिना पाद्यतोयैर्वितीर्णैरार्द्रस्यैव प्रणतितरलः क्षालनं पद्मयोनिः ॥ २१ ॥ अनादृतचमूपतिप्रहितहस्तमस्वीकृतप्रणीतमणिपादुकं किमिति विस्मितान्तःपुरम् । अवाहनपरिक्रियं पतगराजमारोहतः करिप्रवरबृंहिते भगवतस्त्वरायै नमः ॥२२॥ दृक्पातः [1]कमलासनेऽस्तु भवतु ज्ञानं मनाङ्मा[2]रुते श्रीक[3]ण्ठोऽयमितः सुरानिति नतांस्तार्क्ष्येण विज्ञापितः । प्रेयस्याः क्व तदासनं क्व च रुतं कण्ठः क्व चेत्युल्लसल्लक्ष्म्यावासितमानसो विजयते सुप्तप्रबुद्धो हरिः ॥ २३ ॥ निर्मग्नेन मयाम्भसि स्मरभरादा[4]लिः समालिङ्गिता केना[5]लीकमिदं तवाद्य कथितं राधे मुधा ता[6]म्यसि । इत्युत्स्वप्नपरंपरासु [7]शयने श्रुत्वा वचः शार्ङ्गिणः सव्याजं शिथिलीकृतः कमलया कण्ठग्रहः पातु वः ॥ २४ ॥ यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः । अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥ २५ ॥ येनोत्थाप्य समूलमन्दरगिरिश्छत्रीकृतो गोकुले राहुर्येन महाबलो सुररिपुः कार्यादशेषीकृतः । कृत्वा त्रीणि पदानि येन वसुधा बद्धो बलिर्लीलया सोऽयं पातु युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ॥ २६ ॥ मुग्धे मुञ्च वि[7]षादमत्र [8]बलभित्कम्पो [9]गुरुस्त्यज्यतां स[10]द्भाव भज पु[11]ण्डरीकनयने मान्यानिमान्मानय । इत्थं शिक्षयतः स्वयंवराविधौ धन्वन्तरेर्वाक्छलादन्यत्र प्रतिषेधमात्मनि विधिं शृण्वन्हरिः पातु वः ॥ २७ ॥ नाभीपद्मवसच्चतुर्मुखमुखोद्गीतस्तवाकर्णनप्रोन्मीलत्कमनीयलोचनकलाखेलन्मुखेन्दुद्युतिः । सक्रोधं मधुकैटभौ सकरुणस्नेहं सुतामम्बुधेः सोत्प्रासप्रणयं सरोजवसतिं पश्यन्हरिः पातु वः ॥ २८ ॥ निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने । याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो नाभीपल्वलपुण्डरीकमुकुलः [12]कम्बोः सपत्नीकृतः ॥ २९ ॥ [13]भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये । लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥ ३० ॥ चत्वारः प्रथयन्तु विद्रुमलतारकाङ्गुलिश्रेणयः श्रेयः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः । भालेष्वब्जभुवो लिखन्ति युगपद्ये पुण्यवर्णावलीः कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः ॥ ३१ ॥ आकल्पं मुरजिन्मुखेन्दुमधुरोन्मीलन्मरुन्माधुरीधीरोदात्तमनोहरः सुखयतु त्वा पाञ्चजन्यध्वनिः । लीलालङ्घितमेघनादविभवो यः कुम्भकर्णव्यथादायी दानवदन्तिनां दशमुखं दि-

१ ब्रह्मणि, (पक्षे) लक्ष्म्या आसने २ वायौ; (पक्षे) लक्ष्म्या रुदने ३ शिव., (पक्षे) लक्ष्म्या कण्ठः. ४ सखी लक्ष्मीरित्यर्थः. ५ असत्यम्. ६ कुप्यसि ७ खेदम्; (पक्षे) शिवम्. ८ बल भिनत्तीति तम्, (पक्षे) इन्द्रम्. ९ बहु; (पक्षे) बृहस्पतिः. १० सुष्ठुभावम्, (पक्षे) सद्भावेन. ११ कमललोचने, (पक्षे) विष्णौ. १२ शङ्खस. १३ भक्तिप्रह्वादि विशेषणानि नेत्रपक्षे तनुपक्षे च योज्यानि.

क्चक्रमाक्रामति ॥ ३२ ॥ भ्राम्यन्मन्दरकन्दरोदरदरीव्यावृत्तिभिर्वारिधेः कल्लोलैरलमाकुलं कलयतो लक्ष्म्या मुखाम्भोरुहम्। औत्सुक्यात्तरलाः स्मराद्विकसिता भीत्या समाकुञ्चिताः क्रोधेन ज्वलिता मुदा मुकुलिताः शौरेर्दृशः पान्तु वः ॥ ३३ ॥ पर्यङ्कीकृतनागनायकफणाश्रेणीमणीनां गणे संक्रान्तप्रतिबिम्बसंवलनया बिभ्रद्वपुर्विक्रियाम्। पादाम्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः कायव्यूहमिवाचरन्नुपचिताकूतो हरिः पातु वः ॥ ३४ ॥ प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणामात्मव्यापारगुर्वी जनितजललवा जृम्भितैः साङ्गभङ्गैः। नागाङ्कं मोक्तुमिच्छोः शयनमुरु फणाचक्रवालोपधानं निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥३५॥ श्रीराजीवाक्षवक्षःस्थलनिलयरमाहस्तवास्तव्यलीलच्छीलाब्जान्निःसरन्ती मधुरमधुझरी नाभिपद्मे मुरारेः। अस्तोकं लोकमात्रा द्वियुगमुखशिशोराननेष्वर्प्यमाणं शङ्खप्रान्तेन दिव्यं पय इति विबुधैः शङ्क्यमाना पुनातु ॥ ३६ ॥ **गरुडः** ॥ सौवर्णाङ्कितपर्णमारुतहृताहिव्रातकान्ताकुचस्फूर्जन्मौक्तिकभूषणः खगपतिः पूर्णेन्दुबिम्बाननः। पद्माधीश्वरपादपद्मयुगलस्पर्शामलाङ्गानतः पायाद्वो विनतासुतो हरिकृपालेकैकपत्रीकृतः ॥ ३७ ॥ **शेषः** ॥ ब्रह्माण्डकुम्भकारं भुजगाकारं जनार्दनं नौमि। स्फारे यत्फणचक्रे धरा शरावश्रियं वहति ॥ ३८ ॥

---

## लक्ष्मीः।

जयन्ति जगतां मातुः स्तनकुङ्कुमबिन्दवः। मुकुन्दाश्लेषसंक्रान्तकौस्तुभश्रीविडम्बिनः ॥ १ ॥ पायात्पयोधिदुहितुः कपोलामलचन्द्रमाः। यत्र संक्रान्तबिम्बेन हरिणा हरिणायितम् ॥ २ ॥ देवेऽर्पितवरणस्रजि बहुमाये वहति कैटभीरूपम्। जयति सुरासुरहासिता लज्जाजिह्मेक्षणा लक्ष्मीः ॥ ३ ॥ तल्पीकृताहिरगणितगरुडो हाराभिहतविधिर्जयति। फणशतपीतश्वासो रागान्धायाः श्रियः केलिः ॥ ४ ॥ स्मेराननेन हरिणा सस्पृहमाकारवेदिनाकलितम्। जयति पुरुषायितायाः कमलायाः कैटभिध्यानम् ॥ ५ ॥ कमलासनकमलेक्षणकमलारिकिरीटकमलभृद्वाहैः। नुतपदकमला कमला करधृतकमला करोतु मे कमलम् ॥ ६ ॥ किञ्जल्कराजिरिव नीलसरोजलग्ना लेखेव काञ्चनमयी निकषोपलस्था। सौदामनी जलदमण्डलगामिनीव पायादुरःस्थलगता कमला मुरारेः ॥ ७ ॥ दन्तैः कोरकिता स्मितैर्विकासिता भ्रूविभ्रमैः पत्रिता दोर्भ्यां पल्लविता नखैः कुसुमिता लीलाभिरुद्वेलिता। उत्तुङ्गस्तनमण्डलेन फलिता भक्ताभिलाषे हिता काचित्कल्पलता सुरासुरनुता पायात्सुधाब्धेः

---

१ पश्यत. २ अदत्तपरपुत्रिकाप्रार्थकत्वेन. ३ सवङ्ग. ४ बहुशरीरताम्. ५ समृद्धकामभाव. ६ उन्मीलनम् ७ पुटविदारणम् ८ शेषशिर.स्थानामित्यर्थ. ९ शेषनागक्रोडरूपम्. १० बृहत्. ११ मण्डल. १२ ईषत्सङ्कुचिता. १३ बहु. १४ ब्रह्मण.. १५ हरिण इवाचरितम्.

सुता ॥ ८ ॥ उत्तुङ्गस्तनमण्डलोपरिलसत्प्रालम्बमुक्तामणेरन्तर्बिम्बितमिन्द्रनीलनिकरच्छायानुकारी द्युतिः । लज्जाव्याजमुपेत्य नम्रवचना स्पष्टं मुरारेर्वपुः पश्यन्ती मुदिता मुदेऽस्तु भवतां लक्ष्मीर्विवाहोत्सवे ॥ ९ ॥ आख्याते हसितं पितामह इति त्रस्तं कपालीति च व्यावृत्तं गुरुरित्ययं दहन इत्याविष्कृता भीरुता । पौलोमीपतिरित्यसूयितमथ व्रीडाविनम्रश्रिया पायाद्वः पुरुषोत्तमोऽयमिति यो न्यस्तः स पुष्पाञ्जलिः ॥ १० ॥ क्रीडाभिन्नहिरण्यशुक्तिकुहरे रक्तात्मनावस्थितान्हारं हारमुदारकुङ्कुमरसानव्याजभव्यान्नखैः । वीरश्रीकुचकुम्भसीम्नि लिखतो वीरस्य पत्रावलीस्तत्कालोचितभावबन्धमधुरं मन्दस्मितं पातु वः ॥ ११ ॥ पद्मायाः स्तनहेमसद्मनि मणिश्रेणीसमाकर्षके किंचित्कञ्चुकसंधिसंनिधिगते विदनः करे तस्करे । सद्यो जागृहि जागृहीति वलयध्वानैर्ध्रुवं गर्जिताः कामेन प्रतिबोधिता न निवर्तितकौहरिका रोमाङ्कुराः पान्तु वः ॥ १२ ॥ याद्दग्जानासि जाम्बूनदगिरिशिखरे ॥ नमस्कुर्मः कलानामित्यौत्सुक्येन पत्यौ स्मितमधुरमुखाम्भोरुहं भूषमाणे । लीलादोलायमानभ्रमद्भिर्भ्रमद्भ्रमिलद्भृङ्गसगीतसाक्षी पायादम्भोधिजाया. कुसुमशरकलानाव्यनान्दीनकारः ॥ तल्पकल्पत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः । भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ १४ ॥ समुद्रः ॥ वत्से मा गा विषादं श्वसनमुरुजवं संत्यजोर्ध्वप्रवृत्तं कम्पः को वा गुरुस्ते किमिह बलभिदा जृम्भितेनात्र याहि । प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा यस्यै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमुग्धः पयोधिः ॥ १५ ॥

## ब्रह्मा ।

तं वन्दे पद्मसद्मानमुपवीतच्छटाछलात् । गङ्गास्रोतस्त्रयेणैव यः सदैव निषेव्यते ॥ १ ॥ कृतकान्तकेलिकुतुकश्रीशीतश्वाससेकनिद्राणः । घोरितविततालिरुतो नाभिसरोजे विधिर्जयति ॥ २ ॥

## दशावताराः ।

वेदानुद्धरते जगन्निवहते भूलोकमुद्बिभ्रते दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते । पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते म्लेच्छान्मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥ १ ॥ यस्यालीयत शल्कसीम्नि जलधिः पृष्ठे जगन्मण्डलं दंष्ट्रायां धरणी नखे

१ खेदम्, (पक्षे) हरम् २ श्वासम्; (पक्षे) पवनम ३ महावेगम् ४ क जल पातीति तथा वरुण ; (पक्षे) कम्प . ५ महान्, (पक्षे) बृहस्पति ६ वल प्रसिद्ध तद्भिदा नाशकेन; (पक्षे) बलाख्यदैत्यनाशकेनेन्द्रेण. ७ श्रीकृष्णसनिधौ ८ वर्जनम् ९ भयनिवारणव्याजेन. १० लाङ्गलम् ११ धारयते. १२ त्वक्

दितिसुताधीशः पदे रोदसी । क्रोधे क्षत्रगणः शरे दशमुखः पाणौ प्रलम्बासुरो ध्याने विश्वमसावधार्मिककुलं कस्मैचिदस्मै नमः ॥ २ ॥ पाठीनः कमठः [3]किटिर्नरहरिः खर्वाकृतिर्भार्गवो रामः कंसनिषूदनो दशबलः कल्की च नारायणः । युष्माकं स विभूतयेऽस्तु भगवान्सेतुर्भवाम्भोनिधावुत्ताराय युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ॥ ३ ॥ वेदा येन समुद्धृता वसुमती पृष्ठे धृताप्युद्धृता दैत्येशो नखरैर्हतः फणिपतेर्लोके बलिः प्रापितः । क्ष्माक्षत्रा जगती दशास्यरहिता माता कृता रोहिणी हिंसा दोषवती धराप्ययवना पायात्स नारायणः ॥ ४ ॥

मत्स्यः ॥ मग्ने मेरौ पतति तपने तोयबिन्दाविवेन्दावन्तर्लीने जलधिसलिले व्याच्छेदालोके । मात्स्यं रूपं मुखपुटतटाकृष्टनिर्मुक्तवार्धि श्रीकान्तस्य स्थलजलगतं वेत्यलस्तवास्तव्यले९ ॥ वियत्पुच्छोत्तुच्छोच्छलितजलगर्भे निधिरपामपांनाथः पाथःपृथुलवर्दुःस्थोद्विर्युगमुखशिशनैधिर्मासामौर्वो[10] दिनपतिरभूदौर्वदहनश्चलत्काये यस्मिन्स जयति हरिर्मीन ॥ ३६ ॥ ... जीयासुः शकुलाकृतेर्भगवतः पुच्छच्छटाछोटनादुद्यन्तः शतचन्द्रिताम्बरत... गपातिः पृषत्सैन्धवाः । यैर्व्यावृत्य पतद्भिरौर्वशिखिनस्तेजोजटालं वपुः पानाध्मानवशाद्दरो हरिरुजां चक्रे चिरायास्पदम् ॥ ७ ॥ दिश्याद्वः शकुलाकृतिः स भगवान्नः श्रेयसीं संप... न्नैय स्फूर्जदतुच्छपुच्छशिखरप्रेङ्खोलनक्रीडनैः । क्षुभ्यद्वार्धिसमुच्छलज्जलभरैर्मन्दाकिनीसं... तैर्गङ्गासागरसंगमप्रणयिनी जाता विहायःस्थली ॥ ८ ॥ मायामीनतनोस्तनोतु भवतां पु... ण्यानि पङ्कस्थितिः पुच्छाच्छोटसमुच्छलज्जलगुरुप्राग्भाररिक्तोदधेः । पातालोवटमध्यसंकी... तया पर्याप्तकष्टस्थितेर्वेदोद्धारपरायणस्य सततं नारायणस्य प्रभोः ॥ ९ ॥ जृम्भाविस्तृ... वक्त्रपङ्कजविधेर्हृत्वा श्रुतीः सागरे लीनं त्रस्तसमस्तनक्रनिकरं शङ्खं जघानाजिरे । पुच्छो... त्क्षिप्तजलोत्करैः प्रतिदिशं संतर्प्य यो वै धरां पायाद्वः स मृणालकोमलतनुर्मीनाभिधा... हरिः ॥ १० ॥ हंहो मीनतनो हरे किमुदधे किं वेपसे शैत्यतः स्विन्नः किं वडवानलात्पु... लकितः कस्मात्स्वभावादहम् । इत्थं सागरकन्यकामुखशशिन्यालोकनेनाधिकप्रोद्यत्कामज... चिह्ननिह्नुतिपरः शौरिः शिवायास्तु वः ॥ ११ ॥ पुच्छं चेदहमुन्नयाम्यनवधिस्तुच्छो भवे... दम्बुधिः क्रीडां चेत्कलये मनागपि जले पीडा परं यादसाम् । निस्पन्दो भृशमामृशन्नि...

१ प्राणे २ मत्स्यः. ३ वराहः. ४ बुद्धः. ५ बहु. ६ उदकम् ७ विपुलः. ८ दरिद्रः. ९ सूर्य... १० वडवानलः. यदा पानीयं मीनाकृत्या भगवता स्वपुच्छेनोच्छालितं तदा सर्वमपि सामुद्रं जलं वियति गतं तत्र च रविर्वर्तत एव स वडवानलाकृत्यादृश्यत इत्यर्थः. ११ समुद्रे पानीयाभावात्समुद्रस्याकाशकल्पना. त... च वाडवाग्नेः सूर्योपमेति भाव. १२ मत्स्याकृते.. १३ इतस्ततः आलोडनम्. १४ ऊर्ध्वं गच्छन्त.. १५ तेजो... व्याप्तम्. १६ अग्निसंयोगाभाव. १७ अरुचिरोगाणाम् १८ यो निदाघज्वरादिरोगाक्रान्तो बहुपानीयं पिबति तस्य पश्चात्पानीयस्यारुचिर्जायते तथैतस्य वाडवाग्नेरपीति भाव.. १९ दोला. २० आकाशस्थली. यत सागरजलं मत्स्यपुच्छेनोच्छालितं सुरनद्या. सङ्गमवाप ततो गङ्गासागरसंगमतीर्थं नभस्यपि जज्ञ इति भावः २१ उल्लोलनम्. २२ भूरन्ध्रम् २३ संकीर्णतया २४ वेदान्. २५ रणाङ्गणे. २६ भृत्वा. २७ अपलपनम्.

भरब्रह्माण्डभाण्डक्षयक्षोभाकुञ्चितवेष एष भगवान्प्रीणातु मीनाकृतिः ॥ १२ ॥ चन्द्रादित्यो[1]रुनेत्रः [2]कमलभवभवस्फारपृष्ठप्रतिष्ठो भास्वत्कालाग्निजिह्वः पृथुलगलगुहाद्दष्टनिःशेषविश्वः । अद्रिः पुच्छोत्थिताभि[3]श्चकितसुरवधूनेत्रसं[4]मूर्च्छिताभिर्मत्स्यश्छिन्नाब्धिवेलं गगनतलमलं क्षालयन्वः पुनातु ॥ १३ ॥ यं दृष्ट्वा मीनरूपं स्फुरदनलशिखायुक्तसंरक्तनेत्रं लोलद्विस्तीर्णकर्णक्षुभितजलनिधि नीलजीमूतवर्णम् । श्वासोच्छ्वासानिलौघैः प्रचलितगगनं पीतवारिं मुरारिं दिङ्मूढोऽभूत्स शङ्खः स भवतु भवतां भूतये मीनरूपः ॥ १४ ॥ दिङ्मूढं तं सुरारिं किल शित[5]दशनैः पीड्यमानं रटन्तं हत्वा तीरे पयोधेः करतलकलितं [6]पूरयामास शङ्खम् । नादेनाक्षोभ्य विश्वं प्रमुदितविबुधं त्रस्तदैत्यं स देवैर्दत्तार्घः पद्मयोनेः प्रहसितवदनः पातु वो दत्तवेदः ॥ १५ ॥ कूर्मः ॥ निरवधि च निराश्रयं च यस्य [7]स्थितमनिवर्तितकौतुकप्रपञ्चम् । प्रथम इह भवान्स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥ १६ ॥ नमस्कुर्मः कूर्मं नमदमरकोटीर[8]निकरप्रसर्पन्माणिक्यच्छविमिलितमाञ्जिष्ठ[9]वपुषम् । [10]जरीजृम्भड्डिम्भ[11]द्युम[12]णिरमणीयांशुलहरीपरीरम्भस्फूर्जद्बलभिदुपला[13]द्रिप्रतिभटम् ॥ १७ ॥ निष्प्रत्यूहमनल्पकल्पचरितस्त्रैलोक्यरक्षागुरुः क्रीडाकूर्मकलेवरः स भगवान्दिश्यादमन्दां मुदम् । कल्पान्तोदधिमध्यमज्जनवशाद्व्यासर्पतः संलुठत्पृष्ठे यस्य बभूव सैकतकणच्छायं धरित्रीतलम् ॥ १८ ॥ पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनैर्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः । यत्संस्का[14]रकलानुवर्तनवशाद्वेलाछलेनाम्भसां यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥ १९ ॥ दृग्भ्यां यस्य विलोकनाय जगतो द्रागीषदुत्तोलितग्रीवायोपरि विस्फुरद्ग्रहगणे छत्रायितायां भुवि । हा दिग्भूः किमभूदभूतादितरात्कि चेति पर्याकुलो हन्यादेष हठादघानि कमठाधीशः कठोराणि मे ॥२०॥ यो [15]धत्ते शेषनागं त[16]दनु वसुमतीं स्वर्गपातालयुक्तां युक्तां सर्वैः समुद्रैर्हिमगिरिकनकप्रस्थमुख्यैर्नगेन्द्रैः । एतद्ब्रह्माण्डमस्यामृतघटसदृशं भाति वंशे[17] मुरारेः पायाद्वः कूर्मदेहः प्रकटितमहिमा माधवः कामरूपी ॥२१॥ वराहः ॥ हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु वः । हेमाद्रिकलसा यत्र धात्री छत्रश्रियं दधौ ॥ २२ ॥ स जयति महावराहो जलनिधिजठरे चिरं निमग्नोऽपि । येनान्त्रैरिव सह फणिगणैर्बलादुद्धृता धरणी ॥ २३ ॥ पातु वः कपटको[18]लकेशवो यस्य निश्वासितमारुतोद्धता । उच्छ्रितिप्रपतनैर[19]चीक्लृपत्के[20]लिकन्दुकतुलामिला मुहुः ॥ २४ ॥ न पङ्कैरालेपं कल-

१ गरिष्ठ. २ ब्रह्मणो जातम् ब्रह्माण्डमित्यर्थः. ३ सविस्मयं दृष्टाभिः. ४ व्याकुल.. ५ तीक्ष्णदन्तैः. ६ वादयामास. ७ अवस्थानम् ८ मुकुट.. ९ लोहितम् १० अतिशयेन विकसत्. ११ तरुणः. १२ सूर्य. १३ इन्द्ररत्नगिरि . पूर्वाचल इत्यर्थ· १४ आकुञ्चनप्रसारणादि १५ पृष्ठ इति शेष. १६ तदुपरि. १७ पृष्ठे. १८ वराह.. १९ अकरोत्. २० यथा कन्दुक क्रीडया शिशुभिरुत्क्षिप्यतेऽपक्षिप्यते च तथैव भूरपि श्वासवायुप्रेरितोर्ध्वाध:पतनैः कन्दुकतुला तुलयतीति भाव .

यति 'धरित्रीव्ययभयान्न मुस्तामादत्तेऽप्युरगनगरभ्रंशभयतः ।न धत्ते ब्रह्माण्डस्फुटनसघृणो घर्घररवं महाक्रोडः पायादिति सकलसंकोचितमुखः ॥ २५ ॥ पातु त्रीणि जगन्ति संततमकूपारात्समभ्युद्धरन्धात्रीं कोलकलेवरः स भगवान्यस्यैकदंष्ट्राङ्कुरे । कूर्मः कन्दति नालति द्विरसनः पत्रन्ति दिग्दन्तिनो मेरुः कोशति मेदिनी जलजति व्योमापि रोलम्बति ॥ २६ ॥ पातु श्रीस्तनपत्रभङ्गिमकरीमुद्राङ्कितोरःस्थलो देवो वः स जगत्पतिर्मधुवधूवक्त्राब्जचन्द्रोदयः । क्रीडाक्रोडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भूर्भाति स्म प्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृतिः ॥ २७ ॥ दृप्यद्दैत्यनितम्बिनीजनमनःसंतोषसंकोचनः कुर्याद्विश्वमनश्वरं स भगवान्क्रोडावतारो हरिः । यद्दंष्ट्राङ्कुरकोटिकोटरकुटीकोणान्तरस्थेयसी पृथ्वी भात्यवदातकेतकदलालीनेव भृङ्गाङ्गना ॥ २८ ॥ अष्टौ यस्य दिशो दलानि विपुलः कोशः सुवर्णाचलः कान्तं केसरजालमर्ककिरणा भृङ्गाः पयोदावली । नालं शेषमहोरगः प्रविततं वारांनिधेर्लीलया तद्वः पातु समुद्धरन्कुवलयं क्रोडाकृतिः केशवः ॥ २९ ॥ बिभ्राणोऽभिनवेन्दुकोटिकुटिलं दंष्ट्राङ्कुरं लीलया क्रोडाकारधरो हरिः स भगवान्भूयाद्विभूतिप्रदः । यस्योत्क्षिप्तवतः क्षमाकमलिनीमालम्बमानः क्षणं लोलद्वालमृणालनालतुलनां भेजे भुजङ्गेश्वरः ॥ ३० ॥ मुक्तैर्यास्यति कुत्रचिद्वसुमती दंष्ट्राङ्कुरस्थेयसी कुक्षौ क्षोभमवाप्स्यति त्रिभुवनं रुद्धैरमीभिः क्रमात् । इत्यस्वल्पविकल्पमीलितमतेः कण्ठे लुठन्तो मुहुः क्रोडाकारधरस्य कैटभजितः श्वासानिलाः पान्तु वः ॥ ३१ ॥ भूयादेष सतां हिताय भगवान्कोलावतारो हरिः सिन्धोः क्लेशमपास्य यस्य दशनप्रान्ते नटन्त्या भुवः । तारा हारति वारिदस्तिलकति स्वर्वाहिनी माल्यति क्रीडादर्पणति क्षमापतिरहर्देवश्च ताटङ्कति ॥ ३२ ॥ लीने श्रोत्रैकदेशे नभसि नयनयोस्तेजसि क्वापि नष्टे श्वासग्रासोपभुक्ते मरुति जलनिधौ पादरन्ध्रार्धपीते । पोत्रप्रान्तैकरोमान्तरविवरगतां मार्गतश्चक्रपाणेः क्रोडाकारस्य पृथ्वीमकलितविभवं वैभवं वः पुनातु ॥ ३३ ॥ सिन्धुष्वङ्गावगाहः खुरविवरविशत्तुच्छतोयेषु नाप्तः प्राप्ताः पातालपङ्के न लुठितरुचयः पोत्रमात्रोपयोगात् । दंष्ट्राविष्टेषु नाप्तः शिखरिषु च पुनः स्कन्धकण्डूविनोदो येनोद्धारे धरित्र्याः स जयति विभुताविघ्नितेच्छो वराहः ॥ ३४ ॥ नृसिंहः ॥ शत्रोः प्राणानिलाः पञ्च वयं दश जयोऽत्र कः । इति कोपादिवाताम्राः पान्तु वो नृहरेर्नखाः ॥ ३५ ॥ प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाच्छटः । श्वासक्षिप्तकुलक्ष्माभृत्पातु वो नरकेसरी ॥ ३६ ॥ व्याधूतकेसरसटावि-

१ यद्यहं धरित्र्या सामुद्रे पङ्के लुठिष्यामि तदेयं भूर्मद्वपुष्येव विलयं यास्यतीति विचार्य २ समुद्रात्. ३ कन्द इवाचरति ४ नालमिवाचरति. ५ पत्राणीवाचरति. ६ कोरकं इवाचरति. ७ कमल इवाचरति ८ भ्रमर इवाचरति. ९ यथा चन्द्रोदयेऽब्जानि सकोचमाप्नुवन्ति तथा हरेरुदयान्मधुवधूवक्राम्भोरुहाणि नि.श्रीकाण्यभवन्निति भाव.. १० अभ्रम् ११ निष्कुहभवनम् १२ उज्ज्वलम् १३ पृथ्वीमण्डलम्, (पक्षे) नलिनम् १४ वराहमुखाग्रे

करालवक्त्रं हस्ताग्रविस्फुरितशङ्खगदासिचक्रम् । आविष्कृतं सपदि येन नृसिंहरूपं नारायणं तमपि विश्वसृजं नमामि ॥ ३७ ॥ वपुर्दलन[1]संभ्रमा[2]त्स्वनखरं प्रविष्टे रिपौ क्व यात इति विस्मयात्प्रहितलोचनः सर्वतः । वृथेति करताडनान्निपतितं पुरो दानव निरीक्ष्य भुवि रेणुवज्जयति जातहासो हरिः ॥ ३८ ॥ चटच्चटिति चर्मणि च्छमिति चोच्छलच्छोणिते धगद्धगिति मेदसि स्फुटरवोऽस्थिनि ष्टागिति । पुनातु भवतो हरेरमरवैरिवीरोरसि क्वणत्कै[3]रजपञ्जरक्रकचघर्षजन्मानलः ॥ ३९ ॥ ससत्वरमितस्ततस्ततविहस्तहस्ताटवीनिकृत्तसुरशत्रुहृत्क्षतजासिक्तवक्षःस्थलः । स्फुरद्धरगभस्तिभिः स्थगितसंप्रसप्तद्युतिः समस्तनिगमस्तुतो नृहरिरस्तु नः स्वस्तये ॥ ४० ॥ चञ्चच्चण्डनखाग्रभेद[11]विगलद्दैत्येन्द्रवक्षःक्षरद्रक्ता[12]भ्यक्तसुपाटलोद्भटसटासंभ्रान्तभीमाननः । तिर्यक्कण्ठकठोरघोषघटनासर्वाङ्गखर्वीभवद्दिग्मातङ्गनिरीक्षितो विजयते वैकुण्ठकण्ठीरवः ॥ ४१ ॥ दंष्ट्रासंक[13]टवक्त्रकन्दरलसज्जिह्वस्य हव्याशनज्वालाभासुरभूरिकेसरसटाभाररय दैत्यद्रुहः । व्यावल्गद्बलवद्धिरण्यकशिपुक्रोडे[14]स्थलास्फालनस्फारप्रस्फुटदस्थिपञ्जरवक्रूरा नखा. पान्तु वः ॥ ४२ ॥ सोमार्धायितनिष्पिधानदशनः संध्यायितान्तर्मुखो बालार्कायितलोचनः सुरधनुर्लेखायितभ्रूलतः । अन्तर्नादनिरोधपीवरगलस्वे[15]कूपनिर्यत्तडित्तारस्फारसटावरुद्धगगनः पायान्नृसिंहः स वः ॥ ४३ ॥ विद्युच्चक्रकरालकेसरसटाभारस्य दैत्यद्रुहः शोणि[16]न्नेत्रहुताशडम्बरभृतः सिंहाकृतेः शार्ङ्गिणः । विस्फूर्जद्बलगर्जितर्जितककुम्मातङ्गदर्पोदयाः संरम्भाः सुखयन्तु वः खरनखक्षुण्णद्विषद्वक्षसः ॥ ४४ ॥ दैत्यानामधिपे नखाङ्कुरकुटीकोणप्रविष्टात्मनि स्फारीभूतकरालकेसरसटासंघातघोराकृतेः । सक्रोधं च सविस्मयं च सगुरुव्रीडं च सान्तःस्मितं क्रीडाकेसरिणो हरेर्विजयते तत्कालमालोकितम् ॥ ४५ ॥ किं[17] कि सिंहस्ततः किं[18] नरसदृशवपुर्देव चित्रं गृहीतो नैतादृक्क्वापि जीवोऽद्भुतमुपनय मे देव संप्राप्त एषः । चापं चापं न चापीत्यहहहहहहहा कर्कशत्वं नखानामित्थं दैत्येन्द्रवक्षः खरनखमुखरैर्जल्पिवान्यः स वोऽव्यात् ॥ ४६ ॥ भूयः कण्ठावधूतिव्यतिकरतरलोत्तंस[19]नक्षत्रमालाबालेन्दुक्षुद्रघण्टारणितदशदिशादन्तिचीत्कारकारी । अव्याद्वो दैत्यराजप्रथमयमपुरीयानघण्टानिनादो नादो दिग्भित्तिभेदप्रसरसरभसः कूटकण्ठीरवस्य ॥ ४७ ॥ अन्तःक्रोधोज्जि[20]हानज्वलनभवशिखाकारजिह्वावलीढप्रौढब्रह्माण्डभाण्डः पृथुभुवनगुहागर्भगम्भीरनादः । दृप्यत्पा[21][22]रीन्द्रमूर्तिर्मुरजिदवतु वः सुप्रभामण्डलीभिः कुर्वन्निर्धूमधूम[23]ध्वजनिचितमिव व्योम रोमच्छटानाम् ॥ ४८ ॥ पायान्मायामृगेन्द्रो जगदखिलमसौ यत्तनूदर्पिरर्चिज्वालाजालावलीढं बत भुवि सकल व्याकुलं किं न भूयात् । न स्या-

१ विदारणम् २ भयात् ३ नखा ४ करपत्रकम् ५ विस्तीर्णौ. ६ व्याकुलौ. ७ रुधिरम्. ८ आच्छादिता. ९ सूर्य १० वेदा ११ विदारणम् १२ सिक्ता १३ संकीर्ण.. १४ उत्सङ्गस्थलम् १५ रोमकूपाः १६ रक्तीभवन. १७ हिरण्यकशिपोस्तदनुचरस्य चोक्तिप्रत्युक्तय. १८ किं भयमित्यर्थ १९ उर्ध्व-स्थायिनी. २० उत्पद्यमान.. २१ सिंह. २२ अग्नि २३ व्याप्तम्

च्छेदाशु तस्याधिकविकटसटाकोटिभिः पाठ्यमानादिन्दोरानन्दकन्दा तदुपरि तुहिनासारसंदोहवृष्टिः ॥ ४९ ॥ **वामनः** ॥ अङ्घ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे । विधिविष्टरपद्मस्य नालदण्डो मुदेऽस्तु नः ॥ ५० ॥ खर्वग्रन्थिविमुक्तसंधि विलसद्वक्षःस्फुरत्कौस्तुभं निर्यन्नाभिसरोजकुड्मलपुटीगम्भीरसामध्वनि । पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितं पायाद्वः क्रमवर्धमानमहिमाश्चर्यं मुरारेर्वपुः ॥ ५१ ॥ हस्ते शस्त्रकिणाङ्कितोऽरुणविभार्किर्मीरितोरःस्थलो नाभिप्रेङ्खद्दलिर्विलोचनयुगप्रोद्भूतशीतातपः । बाहूर्मिश्रितवाह्निरेष तदिति व्याक्षिप्य वाक्यं कवेस्तारैरध्ययनैर्हरन्बलिमनः पायाज्जगद्वामनः ॥ ५२ ॥ स्वस्ति स्वागतमर्थ्यहं वद विभो किं दीयतां मेदिनी का मात्रा मम विक्रमत्रयपदं दत्तं जलं दीयताम् । मा देहीत्युशनाब्रवीद्धरिरयं पात्रं किमस्मात्परं चेत्येवं बलिनार्चितो मखमुखे पायात्स वो वामनः ॥ ५३ ॥ ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः क्षोणीनौकूपदण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः । ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः ॥ ५४ ॥ यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदण्डायमानादाश्च्योतन्त्याबभासे सुरसरिदमला वैजयन्तीव कान्ता । भूमिष्ठो यस्तथान्यो भुवनगृहमहास्तम्भशोभां दधानः पातामेतौ पयोजोदरललिततलौ पङ्कजाक्षस्य पादौ ॥ ५५ ॥ कस्त्वं ब्रह्मन्नपूर्वः क्व च तव वसतिर्याखिला ब्रह्मसृष्टिः कस्ते नाथो ह्यनाथः क्व च तव जनको नैव तातं स्मरामि । किं तेऽभीष्टं ददामि त्रिपदपरिमिता भूमिरल्पं किमेतत्त्रैलोक्यं भावगर्भं बलिमिदमवदद्वामनो वः स पायात् ॥ ५६ ॥ **परशुरामः** ॥ कुलाचला यस्य महीं द्विजेभ्यः प्रयच्छतः सीमदृषत्त्वमापुः । बभूवुरुत्सर्गजलं समुद्राः स रैणुकेयः श्रियमातनोतु ॥ ५७ ॥ किं दोर्भ्यां किमु कार्मुकोपनिषदा भर्गप्रसादेन किं किं वेदाधिगमेन भास्वति भृगोर्वंशे च किं जन्मना । किं वानेन ममाद्भुतेन तपसा पीडां कृतान्तोऽपि चेद्विप्राणां कुरुते किमप्यनुशयो रामस्य पुष्णातु वः ॥ ५८ ॥ नाशिष्यः किमभूद्भवः किमभवन्नापुत्रिणी रेणुका नाभूद्विश्वमकार्मुकं किमिति

१ बन्धने. २ आसनम्. ३ ब्रह्मण सामवेदध्वनिः. ४ यतो हरेर्भगवतो हृदये कौस्तुभमणिर्लोहितच्छविरस्त्यतस्तत्प्रभाभि. कर्बुरितत्व वक्ष स्थलस्यापीति भाव. ५ यतो हरेर्नाभौ कमल वर्ततेऽतस्तत्र तत्सुरभिगन्धलोलुपतया भ्रमरागमन घटत एवेति भावः. ६ लहरी. ७ शुक्रस्य. ८ ब्रह्मा. ९ गुणवृक्षः. १० नाभिक्षेप्यदारुदण्ड. ११ त्रिषु लोकेषु पादन्यासो यस्य तस्य. १२ ज्योति.शास्त्रप्रसिद्धो गगने प्रत्यक्षदृश्य उत्पातरूपो मणिकेतु. १३ गच्छन्ती. १४ पताका. १५ आरक्ततलाविति भाव. १६ यदा ब्राह्मणेभ्यो भूर्दत्ता तदा तेषा स्वस्वभूमिसीमार्थं कुलपर्वता एवासन्निति भावः. १७ यदा याचकेभ्यो दान दीयते तदा दानात्प्राग्दातृभिरुत्सर्गजल दीयते अतस्तेनैतावद्दान दत्त येन समुद्रा उत्सर्गजलतयाभूवन्निति भावः. १८ धनुर्वेदविद्याज्ञानरहस्येन. १९ यतो महतामनुग्रहस्तदा सफलः स्याद्यद्युपकार. कस्यचित्कर्तु शक्येत. पर मया तत्पीडापि निवारिता न भवत्यत. शम्भुप्रसादेन किमित्यर्थः. २० यतस्तपसासाध्यमपि ,साध्यते. परं यदि मया तत्कृत्यं नासाधि तदानेन तपसा किमिति भाव.

वः प्रीणातु रामत्रपा । विप्राणां प्रतिमन्दिरं मणिगणोन्मिश्राणि दण्डाहतो नाब्धीनां स मया यमोऽपि महिषेणाम्भांसि नोद्वाहितः ॥ ५९ ॥ पायाद्वो जमदग्निवंशतिलको वीरव्रतालंकृतो रामो नाम मुनीश्वरो नृपवधे भास्वत्कुठारायुधः । येनाशेषहताहिताङ्गरुधिरैः संतर्पिताः पूर्वजा भक्त्या चाश्वमखे समुद्रवसना भूर्हन्तकारीकृता ॥ ६० ॥ द्वारे कल्पतरुर्गृहे सुरगवी चिन्तामणीरङ्गदे पीयूषं सरसीषु विप्रवदने विद्याश्चतस्रो दश । एवं कर्तुमयं तपस्यति भृगोर्वंशावतंसो मुनिः पायाद्वोऽखिलराजकक्षयकरो भूदेवभूषामणिः ॥ ६१ ॥ नो संध्यां समुपासते यदि तदा लोकापवादाद्भयं सा चेत्स्वीक्रियते भविष्यति तदा राजन्यबीजे नतिः । इत्थं चिन्तयतश्चिरं भृगुपतेर्निश्वासकोष्णीकृतो नेत्रान्तःप्रतिबिम्बशोणसलिलः संध्याञ्जलिः पातु वः ॥ ६२ ॥ रामचन्द्रः ॥ वन्दामहे महेशानचण्डकोदण्डखण्डनम् । जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥ ६३ ॥ नमो रामपदाम्भोजरेणवो यत्र संततम् । कुर्वन्ति कुमुदप्रीतिमरण्यगृहमेधिनः ॥ ६४ ॥ स्वर्णैणाजिनशयनो योजितनयनो दशास्यदिग्भागे । मुहुरवलोकितचापः कोऽपि दुरापः स नीलिमा शरणः ॥ ६५ ॥ अधिपञ्चवटीकुटीरवर्तिस्फुटितेन्दीवरसुन्दरोरुमूर्तिः । अपि लक्ष्मणलोचनैकसख्यं भजत ब्रह्मसरोरुहायताक्षम् ॥ ६६ ॥ कनकनिकषभासा सीतयालिङ्गिताङ्गो नवकुवलयदामश्यामवर्णाभिरामः । अभिनव इव विद्युन्मण्डितो मेघखण्डः शमयतु मम तापं सर्वतो रामचन्द्रः ॥ ६७ ॥ परिणयविधौ भङ्क्त्वानङ्गद्विषो धनुरग्रतो जनकसुतया दत्तां कण्ठे स्रजं हृदि धारयन् । कुसुमधनुषा पाशेनेव प्रसह्य वशीकृतोऽवनतवदनो रामः पायात्त्रपाविनयान्वितः ॥ ६८ ॥ उत्फुल्लामलकोमलोत्पलदलश्यामाय रामामनःकामाय प्रथमाननिर्मलगुणग्रामाय रामात्मने । योगारूढमुनीन्द्रमानससरोहंसाय संसारविध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥ ६९ ॥ यो रामो न जघान वक्षसि रणे तं रावणं सायकैर्हृद्यस्य प्रतिवासरं वसति सा तस्या ह्यहं राघवः । मध्यास्ते भुवनावली परिवृता द्वीपैः समं सप्तभिः स श्रेयो विदधातु नस्त्रिभुवनत्राणैकचिन्तापरः ॥ ७० ॥ राज्यं येन पटान्तलग्नतृणकं त्यक्तं गुरोराज्ञया पाथेयं परिगृह्य कार्मुकवरं घोरं वनं प्रस्थितः । स्वाधीनः शशिमौलिचापविषये प्राप्तो न वै विक्रियां पायाद्वः स बिभीषणाग्रजनिहा रामाभिधानो हरिः ॥ ७१ ॥ कारुण्यामृतनीरमाश्रितजनश्रीचातकानन्ददं शार्ङ्गाखण्डलचापमम्बुजभवाग्नीन्द्रादिबर्हीष्टदम् । चारुस्मेरमुखोल्लसज्जनकजासौदामिनीशोभितं श्रीरामाम्बुदमाश्रयेऽखिलजगत्संसारतापापहम् ॥ ७२ ॥ कूर्मो मूलवदालवालवदपांराशिर्लतावद्दिशो मेघाः पल्लववत्प्रसूनफलवन्नक्षत्रसूर्येन्दवः । स्वामिन्व्योमतरुः क्रमे मम कियानित्युत्वे-

१ शत्रव २ ब्राह्मणेभ्यो देयत्वेन विहितेत्यर्थः. "ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम्। अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः" इत्युक्तत्वात् ३ समूह. ४ सीता. ५ विभीषणस्याग्रजन्मा रावणस्तं हन्तीति स..

ति गां[1] मारुतेः सीतान्वेषणमादिशन्दिशतु वो रामः सलज्जश्रियः ॥ ७३ ॥ एतौ द्वौ दशकण्ठकण्ठकदलीकान्तारकान्तिच्छिदौ वैदेहीकुचकुम्भकुङ्कुमरजःसान्द्रारुणाङ्काङ्कितौ। लोकत्राणविधानसाधुसवनप्रारम्भयूपौ भुजौ देयास्तामुरुविक्रमौ रघुपतेः श्रेयांसि भूयांसि वः ॥ ७४ ॥ कल्याणानां निधानं कलिमलमथनं पावनं पावनानां पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य। विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥ ७५ ॥ कल्याणोल्लाससीमा कलयतु कुशलं कालमेघाभिरामा काचित्साकेतधामा भवगहनगतिक्लान्तिहारिप्रणामा। सौन्दर्यह्रीणकामा धृतजनकसुतासादरापाङ्गधामा दिक्षु प्रख्यातभूमा दिविषदभिनुता देवता रामनामा ॥ ७६ ॥ योऽद्धा योद्धावधीत्तान्सपदि पलभुजः[3] संपराये[4] परा[5] ये येनायेना[6]श्रितानां स्तुतिरवनमितेशानचापेन चापे[7]। लङ्कालंकारहर्ता ककुभि ककुभि यः कान्तया सीतयासीद्दूनो[8] दूनो[9]ऽथ हृष्टः स विभुरवतु वः स्वःसभार्यः[10] सभार्यः ॥ ७७ ॥ ऋक्षाणां भूरिधाम्नां श्रितमधिपतिना प्रस्फुरद्भीमतारं स्फारं नेत्रानलेन प्रसभनियमितं चापि मीनध्वजेन। रामायत्त मुरारेः कुमुदशुचिलसन्नीलसुग्रीवमङ्गं ह्लावङ्गं वापि सैन्यं दशवदनशिरश्छेदहेतुं श्रियेऽस्तु ॥ ७८ ॥ गुर्वर्थं त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः पाणिस्पर्शाक्षमाभ्यां मृजति पथि रुजो यो हरीन्द्रानुजाभ्याम्। वैरूप्याच्छूर्पनख्याः प्रियविरहरुषा रोपितभ्रूविजृम्भत्रस्ताब्धिर्बद्धसेतुः खलु दवदहनः कोसलेन्द्रोऽवतान्माम् ॥ ७९ ॥ यस्तीर्थानामुपास्त्या[11] गलितमलभरं मन्यते स्म स्वमेवं नाज्ञासीज्जज्ञिरे यन्मम चरणरजःपादपूतान्यमूनि। पादस्पर्शेन कुर्वन्झटिति विघटितग्रावभावामहल्यां कौसल्यासूनुरूनं व्यपनयतु स वः श्रेयसा च श्रिया च ॥ ८० ॥ ( सीता ) ॥ उन्मृष्टं कुचसीम्नि यत्र मकरं दृष्ट्वा हठालिङ्गनात्कोपो मास्तु पुनर्लिखाम्येयमु[12]मिति स्मेरे रघूणां वरे। कोपेनारुणितास्रुपातदलितः प्रेम्णा च विस्तारितो दत्तो मैथिलकन्यया दिशतु नः क्षेमं कटाक्षाङ्कुरः ॥ ८१ ॥ ( हनूमान् ) ॥ अशेषलङ्कापतिसैन्यहन्ता श्रीरामसेवाचरणैककर्ता। अनेकदुःखाहतलोकगोप्ता त्वसौ हनूमांस्तव सौख्यकर्ता ॥ ८२ ॥ कृतक्रोधे यस्मिन्नमरनगरी मङ्गलरवा नै[13]वातङ्का लङ्का समजनि वनं दृश्यति सति। सदा सीताकान्तप्रणतिमतिविख्यातमहिमा हनूमानव्याद्वः कपिकुलशिरोमण्डनमणिः ॥ ८३ ॥ ( रामकृष्णौ ) ॥ त्रातः काकोदरो[14] येन द्रोग्धापि करुणात्मना। पूतनामारणख्यातः[15] स मेऽस्तु शरणं प्रभुः ॥ ८४ ॥ म-

---

१ वाचम् २ निश्चितम्. ३ राक्षसान्. ४ युद्धे. ५ दर्पिष्ठा. ६ भाग्येन. ७ प्राप्तवान् ८ विरहितः. ९ दुःस्थितमना १० देवसभास्वामी ११ सेवनेया १२ मकरम् १३ नवसाहसा. १४ अदरो भयशून्य. काक ;(पक्षे) कालियसर्प १५ पूतनामा पवित्रनामा रणे ख्यातश्च, (पक्षे) पूतनाया राक्षस्या मारणेन ख्यातः.

र्दितरावणकंसौ सरयूयमुनाविहारिणौ देवौ । अर्पितविप्रकुमारौ हरिपतिर्हरिकेतनप्रियौ वन्दे ॥ ८५ ॥ यः पूतनामारणलब्धकीर्तिः काकोदरो येन विनीतदर्पः । यशोदयालंकृतमूर्तिरव्यात्पतिर्यदूनामथवा रघूणाम् ॥ ८६ ॥ कृष्णः ॥ इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् । वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥ ८७ ॥ देवः पायादपायान्नः स्मेरेन्दीवरलोचनः । संसारध्वान्तविध्वंसहंसः कंसनिषूदनः ॥ ८८ ॥ पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः । त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः ॥ ८९ ॥ दर्पणार्पितमालोक्य मायास्त्रीरूपमात्मनः । आत्मन्येवानुरक्तो वः शिवं दिशतु केशवः ॥ ९० ॥ हृदयं कौस्तुभोद्भासि हरेः पुष्णातु वः श्रियम् । राधाप्रवेशरोधाय दत्तमुद्रमिव श्रिया ॥ ९१ ॥ देहि मत्कन्दुकं राधे परिधाननिगूहितम् । इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु नः ॥ ९२ ॥ मीमांसार्णवसोम लसदर्कं तर्कपद्मस्य । वेदान्तविपिनसिंहं वन्दे गोविन्दसाभिधं ब्रह्म ॥ ९३ ॥ अवलोकितमनुमोदितमालिङ्गितमङ्गनाभिरनुरागैः । अधिवृन्दावनकुञ्जं मरकतपुञ्जं नमस्यामः ॥ ९४ ॥ मकरीविरचनभङ्ग्या राधाकुचकलशपीडनव्यसनी । ऋजुमपि रेखां लुम्पन्बल्लववेषो हरिर्जयति ॥ ९५ ॥ कठिनतरदामवेष्टनलेखासंदेहदायिनो यस्य । राजन्ति वलिविभङ्गाः स पातु दामोदरो भवतः ॥ ९६ ॥ खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः । भरभुग्नविनतबाहुषु गोपेषु हसन्हरिर्जयति ॥ ९७ ॥ नीतं नवनीतं कियदिति पृष्टो यशोदया कृष्णः । इयदिति गुरुजनसंसदि करधृतराधापयोधरः पातु ॥ ९८ ॥ राधामधुसूदनयोरनुदिनमुपचीयमानस्य । प्रणयतनोरिव कुसुमं मिथोऽवलोकस्मितं पायात् ॥ ९९ ॥ श्रुतिमपरे स्मृतिमपरे भारतमपरे भजन्तु भवभीताः । अहमिह नन्दं वन्दे यस्यालिन्दे परं ब्रह्म ॥ १०० ॥ तप्तं कैर्न तपोभिः फलिनी तद्गोपबालानाम् । लोचनयुगले यासामञ्जनमासीन्निरञ्जनं ब्रह्म ॥ १०१ ॥ स्तनंधयं तं जननीमुखाब्जं विलोक्य मन्दस्मितमुज्ज्वलाङ्गम् । स्पृशन्तमन्यं स्तनमङ्गुलीभिर्वन्दे यशोदाङ्कगतं मुकुन्दम् ॥१०२॥ भुजप्रभादण्ड इवोर्ध्वगामी स पातु वः कंसरिपोः कृपाणः । यः पाञ्चजन्यप्रतिबिम्बभङ्ग्या धाराम्भसः फेनमिव व्यनक्ति ॥ १०३ ॥ विहाय पीयूषरसं मुनीश्वरा ममाङ्घ्रिराजीवरसं पिबन्ति किम् । इति स्वपादाम्बुजपानकौतुकी स गोपबालः श्रियमातनोतु वः ॥ १०४ ॥ विलिख्य सत्याकुचकुम्भसीम्नि पत्रावलिन्यासमिषेण राधाम् । लीलारविन्देन तया सरोषं पायाद्धिटः कोऽप्यभिहन्यमानः ॥ १०५ ॥ कुञ्चिताधरपुटेन पूरयन्वंशिकाप्रचलदङ्गुलिपङ्क्तिः । मोहयन्निखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥ १०६ ॥ अतसीकुसुमोपमेयकान्तिर्यमुना-

१ अर्जुनः. २ पूतनाया मारणेन लब्धा कीर्तिर्येन; (पक्षे) पवित्रनामा रणे लब्धा कीर्तिश्च येन. ३ कालियः सर्पः, (पक्षे) धृष्ट काकः. ४ यशोदया मात्रालंकृतो देहो यस्य; (पक्षे) यशसा दयया चालंकृतो देहो यस्य. ५ धारयाम.

तीरकदम्बमूलवर्ती । नवगोपवधूविनोदशाली वनमाली वितनोतु मङ्गलं वः ॥ १०७ ॥ गायन्तीनां गोपसीमन्तिनीनां स्फीताकाङ्क्षामक्षिरोलम्बमालाम् । निश्राञ्चल्यामात्मवक्त्रारविन्दे कुर्वन्नव्याद्देवकीनन्दनो वः ॥ १०८ ॥ पुञ्जीभूतं प्रेम गोपाङ्गनानां मूर्तीभूतं भागधेयं यदूनाम् । एकीभूतं गुप्तवित्तं श्रुतीनां श्यामीभूतं ब्रह्म मे संनिधत्ताम् ॥ १०९ ॥ आनन्दमादधतमायतलोचनानामानीलमावलितकन्धरमात्तवंशम् । आपादमामुकुटमाकलितामृतौघमाकारमाकलयताममुमान्तरं नः ॥ ११० ॥ त्वां पातु नीलनलिनीदलदामकान्तेः कृष्णस्य पाणिसरसीरुहकोशबन्धः । राधाकपोलमकरीलिखनेषु योऽयं कर्णावतंसकमलं विपुलीचकार ॥ १११ ॥ सकलभुवनबन्धोर्वैरमिन्दोः सरोजैरनुचितमिति मत्वा यः स्वपादारविन्दम् । घटयितुमिव मायां योजयत्याननेन्दौ वटदलपुटशायी मङ्गलं नः कृषीष्टाम् ॥ ११२ ॥ अभिनवनवनीतप्रीतमाताम्रनेत्रं विकचनलिनलक्ष्मीस्पर्धि सानन्दवक्त्रम् । हृदयभवनमध्ये योगिभिर्ध्यानगम्यं नवगगनतमालश्यामलं कंचिदीडे ॥ ११३ ॥ अभिनवनवनीतस्निग्धमापीतदुग्धं दधिकणपरिदिग्धं मुग्धमङ्गं मुरारेः । दिशतु भुवनकृच्छ्रच्छेदितापिच्छगुच्छच्छवि नवशिखिपिच्छालाञ्छितं वाञ्छितं वः ॥ ११४ ॥ कनककलशस्वच्छे राधापयोधरमण्डले नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् । असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपञ्जयति जनितव्रीडाहासप्रियाहसितो हरिः ॥ ११५ ॥ ललितगमना[2] नार्यो[3] राजन्मनोजनितान्तभाः[4] सुरतिसदृशस्ताः[5] सन्मुख्यो[6] भवानपि तद्भुवे । वनभुवमितो गेहादेको न गच्छतु मां विनेत्यसकृदुदितः पुत्रः पित्रा जयत्यनघो हरिः ॥ ११६ ॥ देवः पायात्पयसि विमले[7] यामुने मज्जतीनां[8] याचन्तीनामनुनयपदैर्वञ्चितान्यंशुकानि[1] । लज्जालोलैरलसवलितैरुन्मिषत्पञ्चबाणैर्गोपस्त्रीणां नयनकुसुमैरञ्चितः केशवो नः ॥ ११७ ॥ वृन्दारण्ये तपनसुतया तीरवानीरकुञ्जे गुञ्जन्मञ्जुभ्रमरपटलीकाकलीकेलिभाजि । आभीराणां मधुरमुरलीनादसंमोहितानां मध्ये क्रीडन्नवतु नियतं नन्दगोपालबालः ॥ ११८ ॥ शिरश्छायां कृष्णः क्षणमकृत राधाचरणयोर्भुजावल्लिच्छायामियमपि तदीयप्रतिकृतौ । इति क्रीडाकोपे निभृतमुभयोरप्यनुनयप्रसादौ जीयास्तामपि गुरुसमक्षं स्थितवतोः ॥ ११९ ॥ अवेमव्यापाराकलनम[9]तुरीस्पर्शम[10]चिरादनुन्मीलत्तन्तुप्रकरघटनायासमसकृत् । विपीदत्पाञ्चालीविपदपनयैकप्रणयिनः पटानां निर्माणं पतंगपति[11]केतोरवतु नः ॥ १२० ॥ कपोले पत्रालीं

१ दुकूलम्. २ गोपीपक्षे ललितं गमनं यासां ताः; कृष्णपक्षे ललिते गे गाने मनो यस्य सः. ३ स्त्रियः; (पक्षे) नास्त्यार्यः श्रेष्ठो यस्मात्सः ४ राजता मनोजेन मदनेन नितान्तात्यन्ता भाः कान्तिर्यासां ताः; (पक्षे) राजन्मनोजनिः शोभमानमदनस्तान्तो म्लानो यस्यास्तादृशी भा यस्य स. ५ शोभायमानया रत्या कामपत्न्या सदृशः; (पक्षे) सुष्ठु रतौ रमणे योग्यः. ६ सन्ति शोभनानि मुखान्याननानि यासां ताः; (पक्षे) सत्सु प्रशस्तेषु केलिचतुरेषु मुख्य. ७ स्वच्छे. ८ स्नानं कुर्वतीनाम् ९ वेमा वस्त्रव्यूतिदण्डस्तद्व्यापाररहितम्. १० तुरी तत्स्पर्शं विना. ११ पतगाः पक्षिणस्तेषां पतिर्गरुडः स केतुर्यस्य तस्य. कृष्णस्येत्यर्थः.

पुलकिनि विधातुं व्यवसितः स्वयं श्रीराधायाः करकलितवर्निर्मधुरिपुः। अभूद्वक्त्रेन्दौ य-न्निहितनयनः कम्पितभुजस्तदेतत्सामर्थ्यं तदभिनवरूपस्य जयति ॥ १२१ ॥ जयश्रीवि-न्यस्तैर्महितै इव मन्दारकुसुमैः स्वयं सिन्दूरेण द्विपरणमुदा मुद्रित इव। भुजापीडक्रीडा-हतकुवलयापीडकरिणः प्रकीर्णासृग्बिन्दुर्जयति भुजदण्डो मुरजिनः ॥ १२२ ॥ सुपर्णस्व-र्णाद्रौ रचितमणिशृङ्गो जलधिजामुखाम्भोजे भृङ्गो निगमबिलरात्पञ्जरशुकः। त्रिलोकीकस्तू-रीतिलककमनीयो व्रजवधूविहारी श्रीकृष्णो दिशतु भवतां शर्म सततम् ॥ १२३ ॥ क्व यासि खलु चौरिके प्रसुपितं स्फुटं दृश्यते द्वितीयमिह मामकं वहति कन्दुकं कञ्चुके। त्यजेति नवगोपिकाकुचयुगं प्रमथ्नन्बलाच्छसत्पुलकपञ्जरो जयति गोकुले केशवः ॥१२४॥ मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमैर्नक्तं भीरुरयं त्वमेव तदिमं राध गृहं प्रापय। इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥ १२५ ॥ कौन्तेयस्य सहायतां करुणया गत्वा विनीतात्मनो येनोल्लङ्घितसत्पथः कुरुप-तिश्चक्रे कृतान्तातिथिः। त्रैलोक्यस्थितिसूत्रधारतिलको देवः स वः सपदे साधूनामसुरा-धिनाथमथनः स्ताद्देवकीनन्दनः ॥ १२६ ॥ आताम्रे नयने स्फुरत्कुचभरः श्वासो न विश्राम्यति स्वेदाम्भःकणदन्तुरं तव मुखं हेतुस्तु नो लक्ष्यते। धिक्को वेद मनः स्त्रिया इति गिरा रुष्टां प्रियां भीपर्यस्तस्यारतत्क्षणकातरेक्षणपरिस्पृष्टो हरिः पातु वः ॥ १२७ ॥ संसक्तानिव पातुमौपनिषदव्याहारमाध्वीरसानुन्मार्ष्टुं व्रजसुन्दरीकुचतटीपाटीररेणूनिव। उन्मीलन्मुरलीनिनादबहुलामोदोपसीदद्गवीजिह्वालीढमलीकवत्सवशिशोः पादाम्बुजं पातु वः ॥ १२८ ॥ कृष्णो गोरसचौर्यमम्ब कुरुते किं कृष्ण मातः सुरापानं न प्रकरोमि राम किमिदं नाहं परस्त्रीरतः। किं गोविन्द वदत्यसौ हलधरो मिथ्येति तां व्याहरन्गोपीगो-पकदम्बकं विहसयन्मुग्धो मुकुन्दोऽवतु ॥ १२९ ॥ मातस्तर्णकरक्षणाय यमुनाकच्छं न गच्छाम्यहं कस्माद्वत्स पिनष्टि पीवरकुचद्वन्द्वेन गोपीजनः। भ्रूसंज्ञाविनिवारितोऽपि न-हुशो जल्पन्यशोदाग्रतो गोपीपाणिसरोजमुद्रितमुखो गोपीपतिः पातु वः ॥ १३० ॥ कासि त्वं वद चौर्यकारिणि कुतः कस्त्वं पुरो यामिकः किं ब्रूपे मुषितौ सुवर्णकलशौ भूपस्य केन त्वया। कुत्र स्तः प्रकटौ तवाञ्चलतटे कुत्रेति तत्पश्यतामित्युक्ते धृतवत्सवीकुचयुगस्त्वां पातु पीताम्बरः ॥ १३१ ॥ कृष्ण त्व पठ किं पठामि ननु रे शास्त्रं किमु ज्ञायते तत्त्वं कस्य विभोः स कस्त्रिभुवनाधीशश्च तेनापि किम्। ज्ञानं भक्तिरथो विरक्तिरनया किं मु-क्तिरेवास्तु ते दध्यादीनि भजामि मातुरुदितं वाक्यं हरेः पातु वः ॥ १३२ ॥ कृष्ण त्वं नवयौवनोऽसि चपलाः प्रायेण गोपाङ्गनाः कंसो भूपतिरब्जनालमृदुलग्रीवा वयं गोदुहः।

---

१ विक्षिप्तैः २ पूजित. ३ चित्रितः. ४ रक्तबिन्दु. ५ व्याप्तमित्यर्थः. ६ रात्रौ. ७ एकान्तक्रीडाः. ८ युधिष्ठिरस्य. ९ मारित. १० वृषवालः. ११ नगररक्षकः.

तद्याचेऽञ्जलिना भवन्तमधुना वृन्दावनं मद्बिना मा यासीरिति गोपनन्दवचसा नम्रो हरिः पातु वः ॥ १३३ ॥ कस्त्वं कृष्णमवेहि मां किमिह ते मन्मदिराशङ्कया युक्तं तन्नवनीत[1]भाजनपुटे न्यस्तः किमर्थं करः । कर्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिता बाला वत्सगतिं विवेक्तुमिति संजल्पन्हरिः पातु वः ॥ १३४ ॥ स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी क्षोणीमावृणुते तमालमलिनच्छाया तमःसंहतिः । तन्मे सुन्दर कृष्ण मुञ्च सहसा वर्त्मेति गोप्या गिरः श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥ १३५ ॥ मातः किं यदुनाथ देहि चषकं[2] किं तेन पातुं पयस्तन्नास्त्यद्य कदास्ति तन्निशि निशा का वान्धकारोदये । आमील्याक्षियुगं निशाप्युपगता देहीति मातुः पुनर्वक्षोजाम्बरकर्षणोद्यतकरः कृष्णः स पुष्णातु नः ॥ १३६ ॥ अर्धोन्मीलितलोचनस्य पिबतः पर्याप्तमेकं स्तनं सद्यःप्रस्नुतदुग्धदिग्धमपरं हस्तेन संमार्जतः । मात्रा चाङ्गुलिलालितस्य चुबुके स्मेरायमाने मुखे विष्णोः क्षीरकणाम्बुधामधवला दन्तद्युतिः पातु वः ॥ १३७ ॥ गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते किं त्वेवं विजनस्थयो[3]र्हतजनः संभावयत्यन्यथा । इत्यामन्त्रणभङ्गिसूचितवृथाप्रस्थानखेदालसामाश्लिष्यन्पुलकोत्कराञ्चितवपुर्गोपीं हरिः पातु वः ॥ १३८ ॥ रामो नाम बभूव हुं तदबला सीतेति हुं तौ पितुर्वाचा पञ्चवटीवने निवसतस्तामाहरद्रावणः । कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरितां सौमित्रे क्व धनुर्धनुर्धनुरिति प्रोक्ता गिरः पान्तु वः ॥ १३९ ॥ कोऽयं द्वारि हरिः[6] प्रयाह्युपवनं शाखामृगस्यात्र किं कृष्णो[7]ऽहं दयिते बिभेमि सुतरां कृष्णादहं वानरात् । राधेऽहं मधुसूदनो[8] व्रज लतां तामेव तन्वीमलामित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः ॥ १४० ॥ पीठे पीठनिषण्णबालकगले तिष्ठन्सगोपालको यन्त्रान्तःस्थितदुग्धभाण्डमवभिद्याच्छाद्य घण्टारवम् । वक्त्रोपान्तकृताञ्जलिः कृतशिरःकम्पं पिबन्यः पयः पायादागतगोपिकानयनयोर्गण्डूषफूत्कारकृत् ॥ १४१ ॥ [10]पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले नीले मुह्यति किं करोमि [11]महितैः क्रीतोऽस्मि ते विभ्रमैः । इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो राधया कृष्णस्तत्परमेव तद्व्यपदिशन्क्रीडाविटः पातु वः ॥ १४२ ॥ दृष्ट्या केशव गो[12]परागहृतया किंचिन्न[13] दृष्टं मया तेनात्र स्खलितास्मि नाथ [14]पतितां किं नाम नालम्बसे ।

---

१ मञ्जूषायाम् २ पानपात्रम्. ३ एकान्तगतयोः. ४ रचना. ५ यथा माता स्वपुत्रप्रस्वापनाय प्राचीनां कथा कथयति तथा यशोदापि राम इति कश्चिद्राजासीदिति वदति स्म. तच्छ्रुत्वा कृष्णोऽपि हुकारं दत्तवान्. ६ वानर, (पक्षे) कृष्णः ७ कृष्णवर्णः, (पक्षे) कृष्णनामा ८ भ्रमरः; (पक्षे) मधुसूदननामा. ९ आलम्बमानो रज्जुपञ्जरः. शिक्य इति प्रसिद्धः. १० हे रमे; (पक्षे) पद्मरूपे. ११ पून्यैः. १२ गोपे त्वयि यो राग आसक्तिस्तद्धृतयापहृतया; (पक्षे) गवा परागैर्धूलिभिर्व्याप्तया. १३ युक्तायुक्तम्; (पक्षे) समविषमम्. १४ पतिता ताम्; (पक्षे) पतन प्राप्ताम्.

एकस्त्वं विषमेषु[1]खिन्नमनसां सर्वाबलानां[2] गतिर्गोप्यैवं गदितः सलेशमवताद्गोष्ठे[4] हरिर्वश्चि-
रम् ॥ १४३ ॥ केयं भाग्यवती तवोरसि मणी ब्रूषेऽग्रवर्णं विना कृत्वास्याः प्रथमं विना
क सहजो वर्णो मणेस्तादृशः। स्त्रीरूपं कथमस्य लिङ्गनियमात्पृच्छामि वध्वाकृतिं मुग्धे
त्वत्प्रतिबिम्बमित्यपलपन्राधां हरिः पातु वः ॥ १४४ ॥ यां दृष्ट्वा यमुनातरंगिणिनिभं
व्यूहो गवां गाहते विद्युत्वानिति नीलकण्ठनिवहो यां द्रष्टुमुत्कण्ठते। उत्तंसाय तमालप-
ल्लवमिति च्छन्दन्ति यां गोपिकाः कान्तिः कालियशासनस्य वपुषः सा पावनी पातु वः
॥ १४५ ॥ श्रीमद्गोपवधूस्वयंग्रहपरिष्वङ्गेषु तुङ्गस्तनव्यामर्दाद्गलितेऽपि चन्दनरजस्यङ्गे
वहन्सौरभम्। कश्चिज्जागरजातरागनयनद्वन्द्वः प्रभाते श्रियं बिभ्रत्कामपि वेणुनादरसि-
को जाराग्रणीः पातु वः ॥ १४६ ॥ कण्ठालिङ्गनमङ्गलं घनकुचाभोगोपभोगोत्सवं श्रो-
णीसंगमसौभगं च सततं मत्प्रेयसीनां पुरः। प्राप्तुं कोऽयमितीर्ष्ययेव यमुनाकूले बलाद्यः
.वयं गोपीनामहरद्दुकूलनिचयं कृष्णः स पुष्णातु नः ॥ १४७ ॥ कृष्णेनाम्ब गतेन रन्तु-
मधुना मृद्भक्षिता स्वेच्छया सत्यं कृष्ण किमेष आह मुसली[6] मिथ्याम्ब पश्याननम्। व्यादे[7]-
हीति विकासिते च वदने दृष्ट्वा समस्तं जगन्माता यस्य जगाम विस्मयपदं पायात्स वः श्री-
पतिः ॥ १४८ ॥ अम्ब श्राम्यसि तिष्ठ गोरसमहं मथ्नामि मन्थानकं प्रालम्ब्य स्थितमी-
श्वरं सरभसं दीनाननो वासुकिः[8]। सासूयं कमलालया[9] सुरगणः[10] सानन्दमुद्यद्भयं राहुः[11] प्रै-
क्षत यं स वोऽस्तु शिवदो गोपालबालो हरिः ॥ १४९ ॥ कालिन्द्याः पुलिनेषु केलिकु-
पितामुत्सृज्य रासे रसं[12] गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम्। तत्पादप्र-
तिमानिवेशितपदस्योद्भूतरोमोद्गतेरक्षुण्णो[13]ऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः ॥ १५० ॥
कंसं ध्वंसयते मुरं तिरयते हंसं तथा हिंसते बाणं क्षीणयते बकं लघयते पौण्ड्रं तथा लुम्पते।
भौमं क्षामयते बलाद्बलभिदोर्दर्पं पराकुर्वते क्लिष्टं शिष्टगणं प्रणम्रमवते कृष्णाय तुभ्यं नमः
॥ १५१ ॥ रासोल्लासभरेण विभ्रमभृतामाभीर[14]वामभ्रुवामभ्यर्णे[15] परिरभ्य निर्भरमुरः प्रेमान्धया
राधया। साधु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुतिव्याजादुद्भट[16]चुम्बितस्मितमनोहारी
हरिः पातु वः ॥ १५२ ॥ साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासित[17]भ्रूवल्लीकमलीकदर्शि[18]-
तभुजामूलार्धदृष्टस्तनम्। गोपीनां निभृतं[19] निरीक्ष्य ललितं कांचिच्चिरं चिन्तयन्नन्तर्मुग्धमनोहरो
हरतु वः क्लेशं नवः[20] केशवः ॥ १५३ ॥ तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्गीत-
स्थानकृतावधानललनालक्षैर्न[21] संलक्षिताः। संमुग्धं मधुसूदनस्य मधुरे राधामुखेन्दौ मृदु[22] स्पन्दं

१ विषमेषुः पञ्चशरस्तेन खिन्नमनसाम्; (पक्षे) विषमेषु सङ्कटेषु खिन्नमनसाम्. २ स्त्रीणाम्; (पक्षे) बलर-हितानाम् ३ ससूचनम् ४ गोस्थानम् ५ रमणीत्यर्थं ६ बलभद्र ७ विकासय ८ समुद्रमथने रज्जूकृतस्य मम पुनरपि स एव भयकर. प्रसङ्ग आगत इति त्रासेन ९ मम सपत्नी काचिदुद्भविष्यतीत्यसूयया १० अमृतप्राप्तिर्भविष्यतीति धिया. ११ शिरश्छेदो भविष्यतीति बुद्ध्या १२ रागम्. १३ सफल. १४ गोपिकानाम्. १५ समीपम् १६ प्रकटम्. १७ उच्चै कृता १८ जृम्भणादिच्छलेनेत्यर्थं. १९ गोप्यभावम्. २० तरुणः. २१ अव्यक्तम्. २२ किंचिच्चलन यथा स्यात्तथा.

पल्लविताश्रिरं ददतु वः क्षेमं कटाक्षोर्मयः ॥ १५४ ॥ दृष्टिव्याकुलगोकुलावनरसादुद्धृत्य गोवर्धनं बिभ्रद्वल्लववल्लभाभिरधिकानन्दाच्चिरं चुम्बितः । कंदर्पेण तदर्पिताधरतटीसिन्दूरमुद्राङ्कितो बाहुर्गोपतनोरतनोतु भवतां श्रेयांसि कंसद्विषः ॥ १५५ ॥ राधामुग्धमुखारविन्दमधुपस्त्रैलोक्यमौलिस्थलीनेपथ्योचितनीलरत्नमवनीभारावतारक्षमः । स्वच्छन्दव्रजसुन्दरीजनमनस्तोषप्रदोषश्चिरं कंसध्वंसनधूमकेतुरवतु त्वां देवकीनन्दनः ॥ १५६ ॥ किं विभ्राम्यसि कृष्णभोगिभवने भाण्डीरभूमीरुहि भ्रातर्यासि न दृष्टिगोचरमितः सानन्दनन्दास्पदम् । राधाया वचनं तदध्वगमुखान्नन्दान्तिके गोपतो गोविन्दस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा गिरः ॥ १५७॥ सान्द्रानन्दपुरंदरादिदिविषद्वृन्दैरमन्दादरादानम्रैर्मुकुटेन्द्रनीलमणिभिः [11]संदर्शितेन्दीवरम् । स्वच्छन्दं मकरन्दसुन्दरगलन्मन्दाकिनीमेदुरं श्रीगोविन्दपदारविन्दमशुभ[12]स्कन्दाय वन्दामहे ॥ १५८ ॥ प्रातर्नीलनिचोल[13]मच्युतमुरःसंवीत[14]पीतांशुकं राधायाश्चकितं विलोक्य हसति स्वैरं सखीमण्डले । व्रीडाचञ्चलम[15]ञ्चलं नयनयोराधाय राधानने स्वादुस्मेरमुखोऽयमस्तु जगदानन्दाय नन्दात्मजः ॥ १५९ ॥ प्रीतिं वस्तनुतां हरिः कुवलयापीडेन सार्धं रणे राधापीनपयोधरस्मरणकृत्कुम्भेन संभेदवान् । [16]पत्रे बिभ्यति मीलति[17] क्षणमपि क्षिप्र तदालोकनाद्व्यामोहेन जितं जितं जितमभूद्व्यालोलकोलाहलः ॥ १६० ॥ त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे शङ्के सुन्दरि कालकूटमपिबन्मूढो मृडानीपतिः। इत्थं पूर्वकथाभिरन्यमनसो विक्षिप्य वामाञ्चलं राधायाः स्तनकोरकोपरि लसन्नेत्रो हरिः पातु वः ॥ १६१ ॥ वामांसस्थलचुम्बिकुण्डलरुचा जातोत्तरीयच्छविं वंशीगीतिभवत्त्रिभङ्गवपुषं भ्रूलास्यलीलापरम् । किंचित्स्रस्तशिखण्डशेखरमतिस्निग्धालिनीलालकं राधादिप्रमदाशतावृतमहं वन्दे किशोराकृतिम् ॥ १६२ ॥ अन्तर्मोहनमौलिघूर्णनचलन्मन्दारविस्रंसनः स्तब्धाकर्षणदृष्टिहर्षणमहामन्त्रः कुरङ्गीदृशाम् । दृप्यद्दानवदूयमानदिविषद्दुर्वारदुःखापदां भ्रंशः कंसरिपोर्व्यपोहयतु वोऽश्रेयांसि वंशीरवः ॥ १६३ ॥ मौलौ केकिशिखण्डिनी मधुरिमा धाराधरे वैरिणी पीतांसे वनमालिनी हृदि लसत्कारुण्यकल्लोलिनी । श्रोण्यां पीतदुकूलिनी चरणयोर्व्यत्यस्तविन्यासिनी लीला काचन मोहनी विजयते वृन्दावनावासिनी ॥ १६४ ॥ मालाबर्हमनोज्ञकुन्तलभरां वन्यप्रसूनोक्षितां शैलेयागुरुसक्तचित्रतिलकां शश्वन्मनोहारिणीम् । लीलावेणुरवामृतैकरसिकां लावण्यलक्ष्मीमयीं बालां बालतमालनीलवपुषं वन्दे परां देवताम् ॥ १६५ ॥ अंसालम्बितवामकुण्डलधरं मन्दोन्नतभ्रूलतं किंचित्कु-

१ इन्दुदर्शनात्तरंगा अतीभवन्तीति कटाक्षाणा तरगसाम्यमिति भाव. २ रक्षणम्. ३ अनुराग.. ४ नीलत्वादधरपानकर्तृत्वाच्च. ५ वृन्दाटवीत्यर्थ . ६ अलकारः ७ रात्रिमुखे हि नार्यस्तुष्यन्तीति भावः. ८ कृष्णश्चासौ भोगी सर्पश्च तस्य भवने, (पक्षे) कृष्णस्य भोगिनः शृङ्गारिणो विलासगृहे. ९ भाण्डीरनाम्नि वटवृक्षे. १० सगोपन कुर्वत . ११ सदर्शित इन्दीवरभ्रमो यत्र. १२ नाशाय. १३ वस्त्रम्. १४ परिधानीकृत. १५ कटाक्षः १६ वाहने. १७ मृते सति. १८ चञ्चलः. १९ साधु साध्विति शिरःकम्पनम्. २० गुम्फितम्. २१ अनिच्छोरित्यर्थः.

ञ्चितकोमलाधरपुटं साचि प्रसारीक्षणम् । आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा मूले कल्पतरोस्त्रिभङ्गललितं ध्याये जगन्मोहनम् ॥ १६६ ॥ नीलाम्भोरुहकोशकोमलतनुं स्मेराननं मालिनं सुस्निग्धं दधतं दुकूलयुगलं वाग्वैभवस्यास्पदम् । स्वीयानामुदितामृतेन हृदयं संतर्पयन्त्या सदा राधाकेलिकथासु संततरतं संतर्पयन्तं सदा ॥ १६७ ॥ अस्मिन्कुञ्जे विनापि प्रचलितपवनाद्वर्तते कोऽपि नूनं पश्यामः किं न गत्वेत्यनुसरति गणे भीतभीतेऽर्भकाणाम् । तस्मिन्राधासखो वः सुखयतु विलसल्लीलया कैटभारिर्व्यातन्वानो मृगारिप्रवलघुरघुरारावरौद्रान्निदानान् ॥ १६८ ॥ अङ्गुल्या कः [1]कपाटं प्रहरति कुटिले माधवः किं वसन्तो नो [2]चक्री किं कुलालो नहि [3]धरणिधरः किं द्विजिह्वः फणीन्द्रः । नाहं घोरा[4]हिमर्दी किमुत [5]खगपतिर्नो [6]हरिः किं कपीन्द्र इत्येवं सत्यभामाप्रतिवचनजितः पातु वश्चक्रपाणिः ॥ १६९ ॥ वृन्दारण्ये चरन्ती विभुरपि सततं भुर्भूवःस्वः सृजन्ती नन्दोद्भूताप्यनादिः शिशुरपि निगमैर्लक्षिता वीक्षितापि । विद्युल्लेखावनद्धोन्नमदमलमहाम्भोदसच्छायकाया माया पायादपायादविहितमहिमा कापि पैताम्बरी वः ॥ १७० ॥ नामोदस्ताखिलामो दमनियमयुजां यः प्रकामोपवाहः श्यामो दर्पाढ्यधामो दयमिलितयशोधारया मोदते यः । वामोदन्यासदामोदरतरलदृशां दत्तकामोदयो यः सामोदः श्रीललामो दलयतु दुरितं सोऽत्र दामोदरो वः ॥ १७१ ॥ ( **बलभद्रः** ) ॥ निष्पात्याशु हिमांशुमण्डलमधः पीत्वा तदन्तं सुधां कृत्वैनं चषकं हसन्निति हलापानाय कौतूहलात् । भो देव द्विजराजि माद्दशि सुरास्पर्शोऽपि न श्रेयसे मां मुञ्चेति तदर्थितो हलधरः पायादपायाज्जगत् ॥ १७२ ॥ प्रेमोन्नामितरेवतीमुखगतामास्वाद्य कादम्बरीमुन्मत्तं क्वचिदुत्पतत्क्वचिदपि भ्राम्यत्क्वचित्प्रस्खलत् । रक्तापाङ्गमधीरलाङ्गलमलिश्यामाम्बराडम्बरं क्लेशं नः कवलीकरोतु सकलं पाकाभिरामं महः ॥ १७३ ॥ उष्णालु क्वचिदर्कधामनि मनाङ्निद्रालु शीतानिले हालानां गृहयालु चुम्बदसकृल्लज्जालु जायामुखम् । नित्यं निष्पतयालु तिर्यगवनीशय्याशयालु क्षणं गीतिभ्यः स्पृहयालु धाम धवलं दीने दयालु श्रये ॥ १७४ ॥ ( **रुक्मिणी** ) ॥ श्लाघ्याशेषतनु सुदर्शनकरः सर्वाङ्गलीलाजितत्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः । बिभ्राणां मुखमिन्दुसुन्दररुचं चन्द्रात्मचक्षुर्दधत्स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥ १७५ ॥ ( **राधा** ) ॥ राधा पुनातु जगदच्युतदत्तचित्ता मन्थानमाकलयती दधिरिक्तपात्रे । यस्याः स्तनस्तवकचूचुकलोलदृष्टिर्देवोऽपि दोहनधिया वृषभं दुदोह ॥ १७६ ॥ सुधाधाम्नः कान्तिस्तव वदनपङ्केरुहगुणैर्जितेव म्लानत्वं व्रजति सहसा प्राणदयिते । वदत्येवं कान्ते दिवसविरहातङ्कचकिता तदङ्गे संलग्ना तव दिशतु राधा प्रियश-

---

१ द्वारम्. २ लक्ष्मीपति, (पक्षे) वसन्त. ३ चक्रधारी, (पक्षे) कुलाल. ४ विष्णु, (पक्षे) शेष. ५ कृष्णपक्षेऽहिः कालिय., गरुडपक्षेऽहिः सर्पः. ६ गरुड., ७ विष्णु, (पक्षे) वानर.

तम् ॥ १७७ ॥ ( नन्दकः ) ॥ सान्द्रां मुदं यच्छतु नन्दको वः सोल्लासलक्ष्मीप्रतिबिम्बगर्भः । कुर्वन्नजस्रं यमुनाप्रवाहसलीलराधास्मरणं मुरारेः ॥ १७८ ॥ ( वेणुः ) ॥ क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः । तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कणक्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥ १७९ ॥ बुद्धः ॥ षट्चक्रे[2] क्रम[3]भावना[4]परिगतं[5] हृत्पद्ममध्यस्थितं संपश्यञ्छिवरूपिणं लय[6]वशादात्मानम[7]ध्याश्रितः । युष्माकं मधुसूदनो बुधवपुर्धारी स भूयान्मुदे यस्तिष्ठेत्कमलासने[8] कृतरुचि[9]र्बुद्धै[10]कलिङ्गाकृतिः ॥ १८० ॥ रेतोरक्तमयान्यमूनि भाविनां[11] विण्मूत्रपूर्णोदराण्यालोक्येव कलेवराणि विगलत्तोयार्द्ररन्ध्राणि यः । मायाजालनिर्यन्त्रितानि[12] घृणया नोन्मीलयत्यक्षिणी निर्व्याजप्रणिधान[13]निश्चलमतिर्बुद्धश्चै स बुद्धोऽस्तु वः ॥ १८१ ॥ ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि । मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः पुमाञ्छश्वन्मारवधूभिरित्यभिहितो बुद्धो जिनः पातु वः ॥ १८२ ॥ बद्ध्वा पद्मासनं यो नयनयुगमिदं न्यस्य नासाग्रदेशे धृत्वा मूर्तौ[14] च शान्तौ शमरसमिलितौ चन्द्रसूर्याख्यवातौ । पश्यन्नन्तर्विशुद्धं किमपि च परमं ज्योतिराकारहीनं सौख्याम्भोधौ निमग्नः स दिशतु भवतां ज्ञानबोधं बुधोऽयम् ॥ १८३ ॥ कामेनाकृष्य चापं हृतपटुपटहं वल्गुभिर्मारवीरैर्भ्रूभङ्गोत्क्षेपजृम्भास्मितललितदृशा दिव्यनारीजनेन । सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद्वासवेन ध्यायन्यो योगपीठादचलित इति वः पातु दृष्टो मुनीन्द्रः ॥ १८४ ॥ कल्किः ॥ उद्यतकरकरवालः शकतिमिरध्वसने महानिपुणः । कल्किहरिर्वः पायादपायतः कलिनिशान्तोत्थः ॥ १८५ ॥ यवनीनयनाम्बुधोरणीभिर्धरिणीनामपनीय तापवह्निम् । सुकृतद्रुमसेकमाचरन्तं धृतकल्कं प्रणमामि निर्विकल्पम् ॥ १८६ ॥ प्रेङ्खद्वाजितरंगमुन्मदगजग्राहप्रगल्भं भटव्यावलगत्स्फुटपुण्डरीकनिलयं झिञ्झीरपिण्डावलिम् । म्लेच्छानीकमहार्णवं सुविपुलं सङ्ग्रामकल्पावधौ यश्चौर्वाग्निरिवाभवद्दयतु[16] स वः कल्कानि[17] कल्की हरिः ॥ १८७ ॥

---

## सूर्यः ।

खण्डिता[18]नेत्रकञ्जा[19]लिमञ्जुरञ्जनपण्डिताः । मण्डिताखिलदिक्प्रान्ताश्चण्डांशोः पान्तु भानवः ॥ १ ॥ शुकतुण्डच्छविसवितुश्चण्डरुचः पुडरीकवनबन्धोः । मण्डलमुदितं वन्दे कुण्ड-

---

१ शब्दः. २ आधारचक्र मणिपूरचक्रमधिष्ठानचक्रमाज्ञाचक्र विन्दुचक्र लयचक्र चेति षट्चक्राणि. ३ परिपाटी. ४ वासना. ५ व्याप्तम्. ६ चित्तैकाग्र्यवशात्. ७ स्थितः. ८ "जङ्घाया मध्यभागे तु सश्लेषो यत्र जङ्घया । पद्मासनमिति प्रोक्त तदासनविचक्षणैः ॥" ९ ज्ञानी. १० ज्ञानम्. ११ ससारिणाम् १२ बद्धानि. १३ चेत.-समाधिना. १४ शरीरे. १५ फेनपिण्डः. १६ खण्डयतु. १७ पापानि. १८ नायिकाविशेषा. १९ कमलम्.

लमा[1]खण्डलाशायाः ॥ २ ॥ अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः । मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥ ३ ॥ प्राचीकुङ्कुमतिलकं पूर्वाचलरोहणैकमाणिक्यम् । त्रिभुवनगृहैकदीप वन्दे लोकैकलोचनं देवम् ॥४॥ कटुभिरपि कठोरचक्रवाकोत्वरविरहज्वरशान्तिशीतवीर्यैः । तिमिरहतमयं महोभिरञ्जञ्जयति जगन्नयनौघमुष्णभानुः ॥ ५ ॥ यद्बिम्बमम्बरमणिर्यदपां प्रसूतिर्नक्तं निषिञ्चति यदग्निशिखासु भासः । ज्योत्स्ना निशासु हिमधाम्नि च यन्मयूखाः पूषा पुराणपुरुषः स नमोऽस्तु तस्मै ॥ ६ ॥ यो रक्ततामतितरामतुलो दधानो दिक्प्रौढदारनूहमोहनवाप्तवास. । योषिद्द्वयीपतिविडम्बनभृत्स शश्वत्पायादपायसमुदायहरो रविर्नः ॥ ७ ॥ ब्रह्माण्डसंपुटकलेवरमध्यवर्ति चैतन्यपिण्डमिव मण्डलमस्ति यस्य । आलोकितोऽपि दुरितानि निहन्ति यस्तं मार्तण्डमादिपुरुषं प्रणमामि नित्यम् ॥ ८ ॥ सिन्दूरस्पृहया स्पृशन्ति करिणा कुम्भस्थमाधोरणा भिल्लीपल्लवशङ्कया विचिनुते सान्द्रद्रुमद्रोणिषु । कान्ताकुङ्कुमकाङ्क्षया करतले मृद्नन्ति लग्नं च यत्तत्तेजः प्रथमोद्भवं भ्रमकरं सौरं चिरं पातु वः ॥ ९ ॥ एकस्मिन्नयने भृशं तपति यः काले स दाहक्रमो येनातन्यत यत्प्रकाशसमयेनैषां पदं दुर्लभम् । सा व्योमावयवस्य यन्न विदिता लोके गतिः शाश्वती श्रीसूर्यः सुरसेवितोऽपि हि महादेवः स नस्त्रायताम् ॥ १० ॥ जे[2]म्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं रक्तैः सिक्ता इवौघैरुदयगिरितटीधातुधाराद्रवस्य । आयान्त्या तुल्यकालं कमलवनरुचेश्चारुणा वो विभूत्यै भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥ ११ ॥ भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोडलीनां लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये । कालाकारान्धकारानपतितजगत्साध्वसध्वंसकल्पाः कल्याण वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य ॥ १२ ॥ साटोपव्योमह[3]ट्टोपितरजनिवणिङ्नायकोन्मुक्ततारा मुक्ताहारापहारात्तरलखगरवप्रोत्थिता कीर्तिशान्त्यै । कर्षन्नम्भोजकुम्भोदरकुहरबहिर्नि.सरत्षट्पदालीकालव्याली करेणाकलयतु दिनकृत्कल्मषोन्मूलनं वः ॥ १३ ॥ च[4]क्री चक्रा[5]रपङ्क्तिं ह[6]रिरपि च ह[7]रीन्धूर्जटि[8]र्धुर्ध्वजान्ता[9]नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कू[10]बराग्रं कुबेरः । रं[11]हः सङ्घः सुराणा जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥ १४ ॥ किं छत्र कि नु र[12]त्नं तिलकमुत तथा कुण्डलं कौस्तुभो वा चक्रं वा [13]वारिजं वेत्यमरयुवतिभिर्य[14]द्वालिद्विषि देहे । ऊर्ध्वं मौलौ ललाटे श्रवसि हृदि करे नाभिदेशे च दृष्टं पायात्तद्वोऽर्कबिम्बं स च दनुजरिपुर्वर्धमानः क्रमेण ॥ १५ ॥ शीर्ण[15]घ्राणाङ्घ्रिपाणी[16]न्व्रणिभि[17]रपघनैर्घर्घराव्यक्तघोषान्दीर्घा[18]घ्रा-

---

१ पूर्वदिश २ इन्द्र ३ क्रयविक्रयस्थानम् ४ विष्णु . ५ कीलक. ६ इन्द्र . ७ अश्वान् ८ यानमुख ९ चक्र १० युगधर ११ वेग . १२ चूडारत्नम् १३ यतो विष्णोर्नाभिदेशे कमल वर्तते. १४ वामनाकृत्या. १५ कुष्ठरोगविशीर्णनासिकापादपाणीन् १६ शतविशिष्टै. १७ शरीरैः. १८ चिरकाल प्राप्तान्.

तानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः। [1]घर्मांशोस्तस्य वोऽन्तर्द्विगुण[2]घनघृणानिघ्ननिर्विघ्नवृत्तेर्दत्तार्घाः सिद्धसंघैर्विदधतु [3]घृणयः शीघ्रम[4]ंहोविघातम् ॥ १६ ॥ ( किरणाः ) ॥ सिन्दूराणीव सीदत्कृपणकुलवधूमूर्ध्नि ये संचरन्तः प्रेक्ष्यन्ते दिक्षु शैलाः शिखरभुवि लसत्पद्मरागाङ्कुरा यैः। धुन्वन्ते ध्वान्तधाराः सह दुरितचयैर्दूरदृश्याः सुदृश्याः पान्तु त्वां पद्मबन्धोरकरणकिरणाः पूरणाः पद्मबन्धोः ॥ १७ ॥ ( तुरगाः ) ॥ अवतु नः सवितुस्तुरगावली समतिलङ्घिततुङ्ग[5]पयोधरा। स्फुरितमध्यग[6]तारुणनायका [7]मरकतैव लतेव नभश्रियः ॥ १८ ॥

---

## चन्द्रः।

लालयन्तमरविन्दवनानि क्षालयन्तमभितो भुवनानि। पालयन्तमथ कोककुलानि ज्योतिषां पतिमहं महयामि ॥ १ ॥ रविमावसते सतां क्रियायै सुधया तर्पयते सुरान्पितॄंश्च। तमसां निशि मूर्छतां विहन्त्रे हरचूडानिहितात्मने नमस्ते ॥ २ ॥ स्वर्भानुप्रतिवारपारणमिलद्दन्तौ[8]घयन्त्रोद्भव[9]श्वभ्राली[10]पतयालुदीधितिसुधासारस्तुषारद्युतिः। [12]पुष्पेष्वासनतन्त्रिया[13]परिणयानन्दाभिषेकोत्सवे देवः प्राप्तसहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥ ३ ॥

---

## पृथिवी।

[14]स्वर्गौकोभिरदोनिवासिपुरुषारब्धातिशुद्धाध्वरस्वाहाकारवषट्क्रियोत्थममृतं स्वादीय आदीयते। आम्नायप्रवणैरलंकृतिजुषेऽमुष्मै मनुष्यैः शुभैर्दिव्यक्षेत्रसरित्पवित्रवपुषे देव्यै पृथिव्यै नमः ॥ १ ॥

**इति श्रीसुभाषितरत्नभाण्डागारे प्रथमं प्रकरणं समाप्तम्।**

---

१ सूर्यस्य. २ सततकृपा. ३ रश्मयः. ४ पापम् ५ मेघाः; (पक्षे) स्तनौ. ६ अरुणरूपो नायकः सारथिर्यस्याः, (पक्षे) अरुण आरक्तो नायको हारमध्यमणि. ७ सूर्यतुरगमाणा हरितवर्णत्वादित्यर्थः. ८ गिलनम्. ९ छिद्रकरणसाधनम्. १० दन्तदशनकृतविवरपरपरा. ११ पतनशीला. १२ मदनः. १३ विवाहः. १४ देवैः.

# प्रकरणम् २।

## सामान्यप्रकरणम्।

### सुभाषितप्रशंसा।

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती। तस्माद्धि काव्यं मधुरं तस्मादपि सुभाषितम् ॥ १ ॥ सुभाषितेन गीतेन युवतीनां च लीलया। मनो न भिद्यते यस्य स योगी ह्यथवा पशुः ॥ २ ॥ सुभाषितमयद्रव्यसंग्रहं न करोति यः। [1]प्रस्तावयज्ञे संप्राप्ते कां प्रदास्यति दक्षिणाम् ॥ ३ ॥ संसारकटुवृक्षस्य द्वे फले ह्यमृतोपमे। सुभाषितरसास्वादः संगतिः सुजने जने ॥ ४ ॥ सुभाषितरसास्वादजातरोमाञ्चकञ्चुकाः। विनापि कामिनीसङ्गं कवयः सुखमेधते ॥ ५ ॥ पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम्। मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥ ६ ॥ धर्मो यशो नयो दाक्ष्यं मनोहारि सुभाषितम्। इत्यादिगुणरत्नाना संग्रही नावसीदति ॥ ७ ॥ संगीतमपि साहित्यं सरस्वत्याः स्तनद्वयम्। एकमापातमधुरमन्यदालोचनामृतम् ॥ ८ ॥ शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी। साहित्यरसमाधुर्यं शंकरो वेत्ति वा न वा ॥ ९ ॥ द्राक्षाम्लानमुखी जाता शर्करा चा[3]श्मतां गता। सुभाषितरसस्याग्रे सुधा भीता दिवं गता ॥ १० ॥ संसदि तदेव भूषणमुपकारकमवसरे धनं मुख्यम्। सूक्तं दधाति [4]सुवर्णं कल्याणमनर्घ्यमिह धन्याः ॥ ११ ॥ कथमिह मनुष्यजन्मा संप्रविशति सदसि वि[5]बुधगमितायाम्। येन न सुभाषितामृतमाह्लादि निपीतमातृप्तेः ॥ १२ ॥ [6]अकलितशब्दालंकृति[7]रनुकूला [8]स्खलितपदनिवेशापि। अभिसारिकेव कथयति [9]सूक्तिः सो[10]त्कर्षशृङ्गारा ॥ १३ ॥ आस्वादितदयिताधरसुधारसस्यैव सूक्तयो मधुराः। अकलितरसालमुकुलो न कोकिलः [11]कल[12]मुद्वयति ॥ १४ ॥ यस्य वक्त्र[13]कुहरे सुभाषितं नास्ति नाप्यवसरे प्रजल्पति। आगतः सदसि धीमतामसौ [14]लेख्यनिर्मित इवावभासते ॥ १५ ॥ सुभाषितं हारि विशत्यधोगलान्न दुर्जनस्या[15]र्करिपोरिवामृतम्। तदेव धत्ते हृदयेन सज्जनो हरिर्म[16]हारत्नमिवातिनि-

---

१ प्रसङ्ग २ नश्यति ३ पाषाणताम् ४ काञ्चनम्, (पक्षे) सुष्ठु पदैर्युक्तम्. ५ पण्डितपूर्णायाम्. ६ न कलिता शब्दस्यालङ्कृतिर्यया. अनुप्रासादिशब्दालङ्कृतिशून्येत्यर्थं; (पक्षे) अकलित शब्दो ययैतादृश्यलङ्कृतिभूषण यस्याः. सशब्दभूषणवत्त्वेऽन्यस्य ज्ञानं भविष्यतीति धियेति भाव ७ द्रुत रसप्रत्यायिका; (पक्षे) नायकचित्तानुकूल्यवती. ८ कोमल सुप्तिङ्पदाना ग्रथन यत्र, (पक्षे) स्थानादन्यत्र पतन यथा स्यात्तथा चरणविन्यासो यस्या.. ९ सुभाषितम्, (पक्षे) शोभनोक्तिमती. १० उत्कृष्टशालिशृङ्गाररसवती; (पक्षे) अहमस्याय ममेति रतिपरिपोषवती. ११ मधुरम्. १२ वदति. १३ बिले. १४ पङ्करचित.. १५ राहोः. १६ कौस्तुभमणि'.

मैलम् ॥ १६ ॥ नायं प्रयाति विकृतिं[1] निरसो न यः स्यान्न क्षीयते बहुजनैर्नितरां निपीतः। जाड्यं[2] निहन्ति रुचिमेति करोति तृप्तिं नूनं सुभाषितरसोऽन्यरसातिशायी[3] ॥ १७ ॥ किं हारैः किमु कङ्कणैः किमसमैः कर्णावतंसैरलं[4] केयूरैर्मणिकुण्डलैरलमलं साडम्बरैरम्बरैः[5]। पुंसामेकमखण्डितं पुनरिदं मन्यामहे मण्डनं यन्निष्पीडितपार्वणामृतकरस्पर्धोपमाः[6] [7] सूक्तयः ॥ १८ ॥ खिन्नं चापि सुभाषितेन रमते स्वीयं मनः सर्वदा श्रुत्वान्यस्य सुभाषितं खलु मनः श्रोतुं पुनर्वाञ्छति। अज्ञाञ्ज्ञानवतोऽप्यनेन हि वशीकर्तुं समर्थो भवेत्कर्तव्यो हि सुभाषितस्य मनुजैरावश्यकः संग्रहः ॥ १९ ॥

---

## विद्याप्रशंसा।

अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति। व्ययतो वृद्धिमायाति क्षयमायाति संचयात् ॥ १ ॥ अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम्। सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ २ ॥ सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम्[8]। अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥३॥ हर्तुर्न गोचरं याति दत्ता भवति विस्तृता। कल्पान्तेऽपि न या नश्येत्किमन्यद्विद्यया समम् ॥ ४ ॥ ज्ञातिभिर्वञ्च्यते नैव चौरेणापि न नीयते। दाने नैव क्षयं याति विद्यारत्नं महाधनम् ॥ ५ ॥ संयोजयति विद्यैव नीचगापि नरं सरित्। समुद्रमिव दुर्धर्षं नृपं भाग्यमतःपरम् ॥ ६ ॥ विद्या शस्त्रं च शास्त्रं च द्वे विद्ये प्रतिपत्तये[9]। आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥ ७ ॥ शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना। न गुह्यगोपने शक्तं न च दंशनिवारणे[10] ॥ ८ ॥ सद्विद्या यदि का चिन्ता वराकोदरपूरणे[11]। शुकोऽप्यशनमाप्नोति हरे राम इति ब्रुवन् ॥ ९ ॥ वसुमतीपतिना नु सरस्वती बलवता रिपुणापि न नीयते। समविभागहरैर्न विभज्यते विबुधबोधबुधैरपि सेव्यते ॥ १० ॥ श्रियः प्रदुग्धे विपदो रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि। संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः ॥ ११ ॥ न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि। व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम् ॥ १२ ॥ मातेव रक्षति पितेव हिते नियुङ्क्ते[12] कान्तेव चापि रमयत्यपनीय खेदम्। लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं किं किं न साधयति कल्पलतेव विद्या ॥ १३ ॥ विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं[13] धनं विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः। विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः ॥ १४ ॥ विद्ये ह्यतरासि किं नु कृपणं संभावनैर्लज्जसे सन्त्यन्ये तव तोषणे हितधियो धन्या वदान्या भुवि। कान्तानां कुचकुम्भकौशलरुचां नो हानिरेतावता षण्ढानां हृदयेऽपि यत्प्रणयते-

---

१ विकारम्. २ मान्द्यम्. ३ अन्यरसानतिक्रम्य वर्तत इत्यर्थः. ४ कर्णभूषणैः. ५ वस्त्रादिभिः. ६ पूर्ण.. ७ किरणाः. ८ नास्त्युत्तम यस्मात्. ९ ज्ञानाय. १० मक्षिका. ११ क्षुद्रकम्. १२ नियोजयति. १३ अन्तर्हितम्.

ानङ्गरागोदयः ॥ १५ ॥ विद्या नाम नरस्य कीर्तिरतुला भाग्यक्षये चाश्रयो धेनुः काम-
वा रतिश्च विरहे नेत्रं तृतीयं च सा । सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं
स्मादन्यमुपेक्ष्य सर्वविषमं विद्याधिकारं विना ॥ १६ ॥

## काव्यप्रशंसा ।

कान्पृच्छामः सुराः स्वर्गे निवसामो वयं भुवि । किं वा काव्यरसः स्वादुः किंवा स्वा-
यसी सुधा ॥१॥ निरवद्यानि[1] पद्यानि यद्यनार्यस्य का क्षतिः । भिक्षुकक्षे विनिक्षिप्तः किमि-
र्नीरसो भवेत् ॥ २ ॥ याता यान्ति च यातारो लोकाः शोकाधिका भुवि । काव्यसंब-
न्धनी कीर्तिः स्थायिनी निरपायिनी ॥ ३ ॥ नवोक्तिर्जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो
सः । विकटाक्षरसंबन्धः कृत्स्नमेकत्र दुष्करम् ॥ ४ ॥ सद्भिर्भाव्ये हिते काव्ये वृथा
दुर्जनगर्जनम् । चण्डीशाङ्गीकृते चन्द्रेऽरुंतुदः किं विधुंतुदः ॥ ५ ॥ त एव पदविन्यासास्ता
एवार्थविभूतयः । तथापि नव्यं भवति काव्यं ग्रथनकौशलात् ॥ ६ ॥ सरसापि कवेर्वाणी
हरिनामाङ्किता यदि । सादरं गृह्यते तज्ज्ञैः शुक्तिर्मुक्तान्विता यथा ॥ ७ ॥ काव्यस्या-
म्रफलस्यापि कोमलस्येतरस्य च । बन्धच्छायाविशेषेण रसोऽप्यन्यादृशो भवेत् ॥ ८ ॥
शब्दशक्त्यैव कुर्वाणा सर्वदानवनिर्वृतिम् । काव्यविद्या श्रुतिगता स्यान्मृतस्यापि जी-
वनी ॥ ९ ॥ श्लिष्टा सभङ्गा सद्वर्णा निर्दोषा सद्गुणा मृदुः । नानाभङ्गीविलासा
चेत्कृतिर्विकृतिरन्यथा ॥ १० ॥ धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । करोति कीर्तिं
प्रीतिं च साधुकाव्यनिषेवणम् ॥ ११ ॥ अध्वनि पदग्रहपरं मदयति हृदयं न वा
न वा श्रवणम् । काव्यमभिज्ञसभाया मञ्जीरं केलिवेलायाम् ॥ १२ ॥ अविदितगुणापि
सुकवेर्भणितिः[12] कर्णेषु किरति[13] मधुधाराम् । अनधिगतपरिमलापि हि हरति दृशं मालती-
माला ॥ १३ ॥ ख्यातिं गमयति सुजनः सुकविर्विदधाति केवलं काव्यम् । पुष्णाति कम-
लमम्भो लक्ष्म्या तु रविर्नियोजयति ॥ १४ ॥ कृतमन्दपदन्यासा[14] विकचश्री[15]चारुशब्दभङ्ग[16]-
वती । कस्य न कम्पयते [17]कं जरेव जीर्णस्य सत्कवेर्वाणी ॥ १५ ॥ सरसा सालंकारा
सुपदन्यासा सुवर्णमयमूर्तिः । आर्या तथैव भार्या न लभ्यते पुण्यहीनेन ॥१६॥ सा कविता
सा वनिता यस्याः श्रवणेन दर्शनेनापि । कविहृदयं विटहृदयं सरलं तरलं च सत्वरं भवति

---

१ उत्कृष्टानि २ मर्मस्पृक् ३ कठिनस्येत्यर्थः. ४ सर्वकाल नवसौख्यम्, (पक्षे) सर्वेषा रक्षसामानन्दम. ५ कविता, (पक्षे) काव्यस शुक्रस्य विद्या. सजीविनीत्यर्थ ६ नानार्थशब्दयुक्ता ७ पदच्छेदवैचित्र्यादने-कार्थपदवती. ८ कविता ९ रोग. दुःखदत्वात्. १० व्यङ्ग्यार्थशून्य यत्तु ध्वनिरुत्तम काव्य तद्भिन्नमित्यर्थ; (पक्षे) शिञ्जितशून्यम् ११ अनुप्रासमात्रार्थ पदग्रह· परमुत्कृष्टो यत्र; (पक्षे) अत्यन्तचरणसलग्नम्. १२ उक्ति. १३ वर्षति. १४ सुप्तिङन्तादि, (पक्षे) चरण १५ प्रफुल्लशोभा; (पक्षे) विगता कचश्री. केशशोभा यस्या. १६ चारवो ये शब्दभङ्गा रचनाविशेषास्तद्वती; (पक्षे) स्खलितशब्दवती. १७ शिरः.

॥१७॥ भ्रमरहिता[1] सा कचवत्स्त्रीणां कुचवच्च सरसहिता[2]। लसदक्षरपीयूषाधरवत्[3]कविता महात्मनां जीयात् ॥१८॥ सत्पात्रोर्पण[4]योचितसत्प्रति[5]बिम्बाभिनववस्तु । कस्य न जनयति हर्षं सत्काव्यं मधुरवचनं च ॥१९॥ सत्सूत्रसंविधानं सदलंकारं सुवृत्तमच्छिद्रम् । को धारयति न कण्ठे सत्काव्यं माल्यमर्घं च ॥ २० ॥ यदसेवनीयमसताम्[6]मृतप्रायं[7] सुवर्णविन्यासम्[8] । सुरसार्थमयं[9] काव्यं त्रिविष्टपं वा समं विद्मः ॥ २१ ॥ सत्कविरसनाशूर्पी[10] निस्तुष[11]तरशब्दशालिपाकेन[12] । तृप्तो दयिताधरमपि नाद्रियते का सुधा दासी ॥ २२ ॥ काव्यस्याक्षरमैत्रीभाजो[13] न च कर्कशा[14] न च ग्राम्याः[15] । शब्दा अपि पुरुषा अपि सैंधव[16] एवार्थबोधाय ॥२३॥ अन्तर्गूढा[17]नर्थान्[18]व्यञ्जयतः[19] प्रसाद[20]रहितस्य । संदर्भस्य[21] नदस्य च न रसैः[22] प्रीत्यै रसज्ञानाम् ॥ २४ ॥ आन्तरमिवापि बहिरिव व्यञ्जयितुं रसमशेषतः सततम् । असती सुकवीसूक्तिः काचघटीति त्रयं वेद ॥ २५ ॥ न ब्रह्मविद्या न च राज्यलक्ष्मीस्तथा यथेयं कविता कवीनाम् । लोकोत्तरे पुंसि निवेश्यमाना पुत्रीव हर्षं हृदये करोति ॥ २६ ॥ अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्मभूमिः । वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूः पदानाम् ॥ २७ ॥ सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः । न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः ॥ २८ ॥ अर्थो गिरामपिहितः पिहितश्च कश्चित्सौभाग्यमेति मरहट्ठवधूकुचाभः । नान्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः ॥ २९ ॥ रे रे खलाः शृणुत मद्वचनं समस्ताः स्वर्गे सुधास्ति सुलभा न तु सा भवद्भिः । कुर्मस्तदत्र भवतामुपकारकारि काव्यामृतं पिबत तत्परमादरेण ॥ ३० ॥ वाणी ममैव सरसा यदि रञ्जयित्री न प्रार्थये रसविदामवधानदानम् । सायंतनीषु मकरन्दवतीषु भृङ्गाः किं मल्लिकाः परमन्त्रणमारभन्ते ॥ ३१ ॥ आख्यातनामरचनाचतुरस्रसंधिसद्धात्वलंकृतिगुणं सरसं सुवृत्तम् । आसेदुषामपि दिवं कविपुंगवानां तिष्ठत्यखण्डमिह काव्यमयं शरीरम् ॥ ३२ ॥ सुसपरिषत्कर्णश्राव्यं कवित्वरसायनं विरसमनसां नेतुं नेहामहे श्रवणाङ्कितम् । मृगमदरसं बिम्बौष्ठीनां कठोरकुचोचितं जघननिकटे क्लिन्नं लिम्पेज्जरन्माहिषस्य कः ॥३३॥ अमृतजलधेः पायं पायं पयांसि पयोधरः किरति करकास्ताराकारा यदि स्फटिकावनौ । तदिह तुलनामा-

१ भ्रमरेभ्यो भृङ्गेभ्यो हिता, (पक्षे) भ्रमेण भ्रान्त्या रहिता २ सरैर्मालाभिः सहिता; (पक्षे) सरसेभ्यो हिता. ३ लसच्छोभायमानमक्षरमविनाशि पीयूष तद्वन्माधुर्य यस्मिन्; (पक्षे) लसन्त्यक्षराणि वर्णा एव पीयूष यस्याम्. ४ स्थापनम्. ५ सम्यग्बोधः. ६ सहृदयभिन्नानाम्; (पक्षे) पापवताम्. ७ अमृततुल्यम्; (पक्षे) अमृतबहुलम्. ८ शोभनाक्षराणा विन्यासो ग्रथन यत्र, (पक्षे) सुवर्णमयम् ९ शोभनरसार्थप्रचुरम्; (पक्षे) देवसमूहबहुलम्. १० प्रस्फोटनम्. ११ निर्दोष. १२ निर्दोषकाव्यास्वादेनेत्यर्थं १३ एकवर्गपठितत्वादिरूपाम् १४ श्रुतिकटवः; (पक्षे) क्रूरमतयः. १५ अविदग्धप्रयुक्ताः; (पक्षे) ग्राममात्रवासिनः. १६ व्याकरणसिद्धाः, (पक्षे) निर्मलमतय. १७ अभ्यन्तरे गूढस्थितान्, (पक्षे) अभ्यन्तरे निलीनान्. १८ प्रतिपाद्यविषयान्, (पक्षे) पदार्थान् १९ व्यञ्जनाविषयानकुर्वत, (पक्षे) अप्रकटयतः. २० प्रसादेन काव्यगुणेन रहितस्य; (पक्षे) निर्मलतया रहितस्य. २१ काव्यस्य. २२ शृङ्गारादि.; (पक्षे) जलम्.

नीयन्ते क्षणं कठिनाः पुनः सततममृतस्यन्दोद्गारा गिरः प्रतिभावताम् ॥ ३४ ॥ समुल्लासो वीचीनां सरसमधुनिष्यन्दलहरी समुन्मेषद्वेषी सकलरसपोषोपजनकः । न केषामाधत्ते मनसि परितोषं नवनवैर्विलासैरुन्मीलद्विकचितमधूलीपरिमलः ॥ ३५ ॥ यथा यूनस्तद्वत्परमरमणीयापि रमणी कुमाराणामन्तःकरणहरणं नैव कुरुते । मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियां किमस्या नाम स्यादरसपुरुषानादरभरैः ॥३६॥ परिच्छिन्नस्वादोऽमृतगुडमधुक्षौद्रपयसां कदाचिच्चाभ्यासाद्व्रजति ननु वैरस्यमधिकम् । प्रियाबिम्बौष्ठे वा रुचिरकविवाक्येऽप्यनवधिर्नवानन्दः कोऽपि स्फुरति तु रसोऽसौ निरुपमः ॥ ३७ ॥ प्रसत्तेर्यः पात्रं तिलकयति यं सूक्तिरचना य आद्यः स्वादूनां श्रुतिचुलुकलेह्येन मधुना । यदात्मानो विद्याः परिणमति यश्चार्थवपुषा स गुम्फो वाणीनां कविवृषनिषेव्यो विजयते ॥ ३८ ॥ सदा मध्ये यासामियममृतनिष्यन्दसरसा सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् । प्रसादं ता एता घनपरिचिताः केन महतां महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥ ३९ ॥ नैव व्याकरणज्ञमेति पितरं न भ्रातरं तार्किकं दूरात्संकुचितेव गच्छति पुनश्चाण्डालवच्छान्दसाम् । मीमांसानिपुणं नपुंसकमिति ज्ञात्वा निरस्तादरा काव्यालंकरणज्ञमेत्य कविताकान्ता वृणीते स्वयम् ॥ ४० ॥ रम्यार्थोक्तितनूज्ज्वला रसमयप्राणा गुणोल्लासिनी चेतोरञ्जकरीतिवृत्तिकवितापाकं वयो बिभ्रती । भावालंकरणोचितागमवती सर्वत्र निर्दोषता शय्यार्मेञ्चति कामिनीव कविता कस्यापि पुण्यात्मनः ॥ ४१ ॥ निर्ह्रादः क्रकचः क्षतैः किरति किं कर्णामृतं वल्लकी किंवा मुञ्चति मालती परिमलं पाषाणनिष्पेषणैः । इत्थं तारसकर्कशां धियमसौ जल्पैर्विकाल्याकुलैराकूटं कमनीयकान्तिदमितं कार्यं कथं स्यन्दते ॥४२॥ यन्त्राकृष्टसुवर्णसूत्रमिव यत्पद्यं सुमेरोस्तटादुन्मीलत्कुरुविन्दकन्दल इव स्वच्छः पदार्थोदयः । तत्राप्युल्लसदंशुकान्तविलसत्कान्ताकुचान्तोपमं व्यङ्ग्यं यत्र तदेव काव्यमितरद्वाग्देवतोपप्लवः ॥ ४३ ॥ ...तः पङ्कजकुड्मलं द्युतिपरं तत्केसरोल्लासवानर्थोऽप्यन्तरसौरभप्रतिनिभं व्यङ्ग्यं चमत्कारि ...त् । द्वित्रैर्यद्रसिकैश्चिरं सहृदयैर्भृङ्गैरिवास्वाद्यते तत्काव्यं न पुनः प्रमत्तकुकवेर्यत्किंचिदु...ज्जल्पितम् ॥ ४४ ॥ निन्द्यन्ते यदि नाम मन्दमतिभिर्वक्राः कवीनां गिरः स्तूयन्ते न च नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः । तद्वैदग्ध्यविदां सतामपि मनः किं नेहते वक्रता धत्ते ...कें न हरः किरीटशिखरे वक्रां कलामैन्दवीम् ॥ ४५ ॥ सानन्दप्रमदाकटाक्षविशिखैर्येषां ...न भिन्नं मनो यैः ससारसमुद्रपातविधुरेष्वन्येषु पोतायितम् । यैर्दुर्वारसरस्वतीविलसितं द्वित्रैः ...दैर्गुम्फितं तेषामप्युपरि स्फुरन्ति मतयः कस्यापि पुण्यात्मनः ॥४६॥ वाणि त्वत्पदपद्मरे...णुकणिका या स्वान्तभूमिं सता संप्राप्ता कवितालता परिणता सैवेयमुज्जृम्भते । त्वत्कर्णेऽपि चिराय यत्किसलयं सूक्तापदेशं शिरःकम्पभ्रंशितपारिजातकलिकागुच्छे विधत्ते ॥ ४७॥

१ विदुषाम्. २-मूरवल्ली. ३ आनन्दस. ४ गच्छति.

## नाट्यप्रशंसा।

प्रत्यङ्गमङ्कुरितसर्वरसावतारनव्योल्लसत्कुसुमराजिविराजिबन्धम्। धर्मेतरांशुरिव वक्रतयातिरम्यं नाट्यप्रबन्धमतिमञ्जुलसंविधानम्॥ १॥ देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा। त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्॥ २॥

## कुकाव्यनिन्दा।

किं तेन किल काव्येन मृद्यमानस्य यस्य ताः। उदधेरिव नायान्ति रसामृतपरंपराः॥ १॥ यदा प्रकृत्यैव जनस्य रागिणो भृशं प्रदीप्तो हृदि मन्मथानलः। तदात्र भूयः किमनर्थपण्डितैः कुकाव्यहव्याहुतयो निवेशिताः॥ २॥

## सामान्यकविप्रशंसा।

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः। नास्ति येषां यशःकाये[1] जरामरणजं भयम्॥ १॥ प्रस्तावे हेतुयुक्तानि यः पठत्यविशङ्कितः। स कविस्तानि काव्यानि काव्ये तस्य परिश्रमः॥ २॥ सुकवेः शब्दसौभाग्यं सुकविर्वेत्ति नापरः। कैलादवन्न[2] जानाति परः कङ्कणाचित्रताम्॥ ३॥ सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे। उत्पादका न बहवः कवयः शरभा इव॥ ४॥ कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः। न ह्यकूपारवत्[3] कूपा वर्धन्ते विधुकान्तिभिः॥ ५॥ क्षमी दाता गुणग्राही स्वामी पुण्येन लभ्यते। अनुकूलः शुचिर्दक्षः कविर्विद्वान्सुदुर्लभः॥ ६॥ कवीना मानसं नौमि तरन्ति प्रतिमाम्भसि। यत्र हंसवयांसीव भुवनानि चतुर्दश॥ ७॥ अपूर्वो भाति भारत्याः काव्यामृतफले रसः। चर्वणे सर्वसामान्ये स्वादुवित्केवलं कविः॥ ८॥ उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम्। जानाति हि पुनः सम्यक्कविरेव कवेः श्रमम्॥ ९॥ ते धन्यास्ते महात्मानो तेषां लोके स्थिरं यशः। यैर्निबद्धानि काव्यानि ये च काव्येषु कीर्तिताः॥ १०॥ अमृतोत्प्रेक्षणे रागं कुर्वन्त्युरगवज्जनाः। कविर्गरुडवन्मान्यमिन्द्रवज्रादि वृत्रकृत्॥ ११॥ काव्यमय्यो गिरो यावच्चरन्ति विशदा भुवि। तावत्सारस्वतं स्थानं कविरासाद्य तिष्ठति॥ १२॥ अनन्तपद[4]विन्यासरचना सरसा कवेः[5]। बुधो[6] यदि समीपस्थो न कुजन्मा[7] पुरो यदि॥ १३॥ कविः करोति पद्यानि लालयत्युत्तमो जनः। तरुः प्रसूते पुष्पाणि मरुद्वहति सौरभम्[8]॥ १४॥ कविः करोति काव्यानि स्वादु जानन्ति पण्डिताः। सुन्दर्या अपि लावण्यं पतिर्जानाति नो

---

१ कीर्तिशरीरे २ स्वर्णकार ३ समुद्र' ४ अनेकपदानि; (पक्षे) विष्णुपदम् आकाशमित्यर्थ. ५ कवयितु; (पक्षे) शुक्रस्य. ६ पण्डित.; (पक्षे) बुधग्रहः. ७ नीचः; (पक्षे) कुः पृथ्वी तस्या जन्म यस्य. मङ्गल इत्यर्थः. ८ सौगन्ध्यम्

पेता ॥ १९ ॥ कविः पिता पोषयति पालको रसिकः पतिः। कवितायुवतेर्नूनं सोदरास्तु विवेकिनः ॥ १६ ॥ तत्त्वं किमपि काव्यानां जानाति विरलो भुवि। मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥ १७ ॥ कतिपयनिमेषवर्तिनि जन्मजरामरणविह्वले जगति। कल्पान्तकोटिबन्धुः स्फुरति कवीनां यशःप्रसरः ॥ १८ ॥ कविवाक्यामृततीर्थस्नानैः पूता भृशं यशोदेहाः। येषा त एव भूपा जीवन्ति मृता स्तथैवान्ये ॥ १९ ॥ काव्यप्रपञ्चचञ्चू रचयति काव्यं न सारविद्भवति। तरवः फलानि सुवते विन्दति सारं मतङ्गसमुदायः ॥ २० ॥ विगुणोऽपि काव्यबन्धः साधूनामाननं गतः स्वदते। फूत्कारोऽपि सुवंशैरनूद्यमानः श्रुतिं हरति ॥ २१ ॥ विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः। कुलजा या सा जाया केवलजाया तु केवलं माया ॥ २२ ॥ अवयः केवलकवयः कीराः स्युः केवल धीराः। वीराः पण्डितकवयस्तानवमन्ता तु केवलं गवयः ॥ २३ ॥ अहमपि परेऽपि कवयस्तथापि परमन्तरं परिज्ञेयम्। ऐक्यं रलयोरपि यदि तत्किं करभायते कलभः ॥ २४ ॥ दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम्। रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥ २५ ॥ शीलाविद्यामारुलामोरिकाद्याः काव्यं कर्तुं सन्तु विज्ञाः स्त्रियोऽपि। विद्यां वेत्तुं वादिनो निर्विजेतुं दातुं वक्तुं यः प्रवीणः स वन्द्यः ॥ २६ ॥ लङ्कापतेः संकुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः। स सर्व एवादिकवेः प्रतापो न कोपनीयाः कवयः क्षितीन्द्रैः ॥ २७ ॥ जयन्ति ते पञ्चमनादमित्रचित्रोक्तिसंदर्भविभूषणेषु। सरस्वती यद्वदनेषु नित्यमाभाति वीणामिव वादयन्ती ॥ २८ ॥ कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु। कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागुरुधूपवासः ॥ २९ ॥ महीपतेः सन्ति न यस्य पार्श्वे कवीश्वरास्तस्य कुतो यशांसि। भूपाः कियन्तो न बभूवुरुर्व्यां नामापि जानाति न कोऽपि येषाम् ॥ ३० ॥ किं चारुचारित्रविलासशून्याः कुर्वन्ति भूपाः कविसंग्रहेण। किं जातु गुञ्जाफलभूषणानां सुवर्णकारेण वनेचराणाम् ॥ ३१ ॥ तर्केषु कर्कशतराः स्युरथापि पुंसां काले भवन्ति मृदवः कवितासु वाचः। दैत्येन्द्रशैलकुलिशं दयिताकपोले नाथस्य कोमलमुदाहरणं नखं नः ॥ ३२ ॥ अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः परभणितिषु तृप्तिं यान्ति सन्तः कियन्तः। निजघनमकरन्दस्पन्दपूर्णालवालः कनककलशसेकं नेहते किं रसालः ॥ ३३ ॥ पदव्यक्तिव्यक्तीकृतसहृदयानन्दसरणौ कवीना काव्येन स्फुरति बुधमात्रस्य धिषणा। नवक्रीडावेशव्यसनपिशुनो यः कुलवधूकटाक्षाणा पन्थाः स खलु गणिकानामविषयः ॥ ३४ ॥ अयं मे वाग्गुम्फो विशदपदवैदग्ध्यमधुरः स्फुरद्बन्धो वन्ध्यो जडहृदि कृतार्थः कविहृदि। कटाक्षो वामाक्ष्या दरदलतनेत्रान्तगलितः किशोरे निःसारः स तु किमपि यूनः स्थगयति ॥ ३५ ॥ मद्युक्तिश्चेदन्त-

१ कीर्तिप्रकाशः. २ वित्त. ३ वाल्मीकेः. ४ कविता.

मर्दयति[1] सुधीभूय सुधियः किमस्या नाम स्याद्[2]रसपुरुषानादरभरैः । यथा यूनस्तद्वत्परमरमणीयापि रमणी कुमाराणामन्तःकरणहरणं नैव कुरुते ॥ ३६ ॥ भुजतरुवनच्छायां येषां निषेव्य महौजसां जलधिरशना मेदिन्यासीदसावकुतोभया । स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रहं प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे ॥ ३७ ॥ यदि प्रभुरुदारधीः सुरसकाव्यकौतूहलस्तथैव च सभासदः सदसि तद्गुणग्राहिणः । सु[3]वर्णसदलंकृतिर्भवति तत्र नृत्योद्यता मदीयरसनानटी र[4]सघटीयमानन्दभूः ॥ ३८ ॥ वदन्तु के[5]तिचिद्धठात्खफछठेति वर्णच्छटान्घटः पट इतीत[6]रे पटु रटन्तु वाक्पाटवात् । वयं बकुलमञ्जरीगलदलीनमाध्वीझरीधुरीणपदरीतिभिर्भणितिभिः प्रमोदामहे ॥ ३९ ॥ हे राजानस्त्यजत सुकविप्रेमबन्धे विरोधं शुद्धा कीर्तिः स्फुरति भवतां नूनमेतत्प्रसादात् । तुष्टैर्बद्धं तदलघु रघुस्वामिनः सच्चरित्रं क्रुद्धैर्नीतस्त्रिभुवनजयी हास्यमार्गं दशास्यः ॥ ४० ॥ अर्था[7]न्केचिदुपासते कृपणवत्केचित्स्वलंकुर्वते[8] वेश्यावत्खलु धातुवादिन इवोद्बध्नन्ति केचिद्रसान्[9] । अर्थालंकृतिसद्रससद्द्रवमुचां वाचां प्रशस्तिस्पृशां कर्तारः कवयो भवन्ति कतिचित्पुण्यैरगण्यैरिह ॥ ४१ ॥ मन्दं निक्षिपते पदानि[10] परितः शब्दं[11] समुद्वीक्षते नानार्था[12]हरणं च काङ्क्षति[13] मुदालं[14]कारमाकर्षति । आदत्ते सकलं सु[15]वर्णनिचयं धत्ते र[16]सान्तर्गतं दोषा[17]न्वेषणतत्परो विजयते चोरोपमः सत्कविः ॥ ४२ ॥ स्वेच्छाभङ्गुरभाग्यमेघतडितः शक्या न रोद्धुं श्रियः प्राणानां सततं प्रयाणपटहश्रद्धा न विश्राम्यति । त्राणं येऽत्र यशोमये वपुषि वः कुर्वन्ति काव्यामृतैस्तानाराध्य गुरून्विधत्त सुकवीन्निर्गर्वमुर्वीश्वराः ॥ ४३ ॥ कल्याणं भगवत्कथाकथनतः काव्यं विधातुः कवेस्तस्यैवाङ्गतया क्वचिद्रचयतः शृङ्गारवीरादिकम् । को दोषो भविता यदत्र कविताशीलैः समाश्रीयते पन्था व्यासवसुंधरा[18]श्रुतिभवग्रन्थादिषु प्रेक्षितः ॥ ४४ ॥ ते भूमीपतयो जयन्ति नतयो येषां द्विपद्भूभृतां ते वन्द्या यतयो विशन्ति मतयो येषां परे ब्रह्मणि । ते श्लाघ्याः कवयो वयोमदभरव्याजृम्भमाणाङ्गनाद्दक्पाता इव तोपयन्ति हृदयं येषां गिरां संचयः ॥ ४५ ॥ भूतावेशनिवेशिताशय इव श्लोकं करोत्याशु यः श्लाघन्ते कविरद्भुतोऽयमिति तं मिथ्या जनो विस्मिताः । द्वित्राण्येव पुरः पदानि रचयन्पश्चात्समालोचयन्दूरं यः कविता निनीषति कविः कामीव स रतूयताम् ॥ ४६ ॥ सत्यं सन्ति गृहे गृहेऽपि कवयो येषां वचश्चातुरी

---

१ तोपयति २ नीरस ३ शोभनान्यक्षराणि; (पक्षे) हेम ४ काव्यरस ; (पक्षे) उदकम् ५ वैयाकरणाः ६ नैयायिका . ७ द्रव्यम्; (पक्षे) काव्यार्थान् ८ भूषणानि, (पक्षे) काव्यालकरणानि. ९ पारद., (पक्षे) काव्यरस १० सुप्तिङन्तादीनि; (पक्षे) पादविक्षेपे चरणान् ११ शब्दः शुद्धो वापशब्दो वेति सम्यग्विचारयति; (पक्षे) ध्वनिमाकर्णयति १२ श्लेषेण ध्वनिना वानेकार्थाना सपादनम्, (पक्षे) सुवर्णरूप्यादीना हरणम्. १३ इच्छति १४ उपमाद्यलकारम्, (पक्षे) कङ्कणादिभूषणम् १५ सुष्ठु वर्णाना सचयम्, (पक्षे) हेमसचयम् १६ शृङ्गारादिरसमिश्रम्; (पक्षे) रसा पृथ्वी तदन्तर्गतम् १७ काव्यदोषाणा गवेषणे तत्परः, (पक्षे) दोषा रात्रिस्तस्यामन्वेषण आसक्तः. १८ वसुधरा पृथ्वी तसा. श्रुतिर्लक्षणया वल्मीक तत्र भवो वाल्मीकि..

स्वे हर्म्ये कुलकन्यकेव लभते स्वल्पैर्गुणैर्गौरवम् । दुष्प्रापः स तु कोऽपि कोविदमतिर्यद्वाग्रसग्राहिणी पण्यस्त्रीव कलाकलापकुशला चेतांसि हर्तुं क्षमा ॥ ४७ ॥ धन्यास्ते कवयो यदीयरसना रूक्षाध्वसंचारिणी धावन्तीव सरस्वती द्रुतपदन्यासेन निष्क्रामति । अस्माकं रसपिच्छिले पथि गिरां देवी नवीनोदयत्पीनोत्तुङ्गपयोधरेव युवतिर्मान्थर्यमालम्बते ॥ ४८ ॥ साहित्ये सुकुमारवस्तुनि दृढन्यासग्रहग्रन्थिले तर्के वा मयि संविधातरि समं लीलायते भारती । शय्या वास्तु मृदूत्तरच्छदपटा दर्भाङ्कुरैरास्तृता भूमिर्वा हृदयंगमो यदि पतिस्तुल्या रतिर्योषिताम् ॥ ४९ ॥ येषां कोमलकाव्यकौशलकलालीलावती भारती तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते । यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपितास्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः ॥ ५० ॥ तर्के कर्कशवक्रवाक्यगहने या निष्ठुरा भारती सा काव्ये मृदुलोक्तिसारसुरभौ स्यादेव मे कोमला । या प्रायः प्रियविप्रयुक्तवनिताहृत्कानने कर्तरी प्रेयोलालितयौवने न मृदुला सा किं प्रसूनावली ॥ ५१ ॥ मातङ्गीमिव माधुरी ध्वनिविदो नैव स्पृशन्त्युत्तमां व्युत्पत्तिं कुलकन्यकामिव रसोन्मत्ता न पश्यन्त्यमी । कस्तूरीघनसारसौरभसुहृद्व्युत्पत्तिमाधुर्ययोर्योगः कर्णरसायनं सुकृतिनः कस्यापि संजायते ॥ ५२ ॥ यत्सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषाम् । कासारे दिवसं वसन्नपि पयःपूरं परं पङ्किलं कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः[2] ॥ ५३ ॥ मौलौ मन्दारदामभ्रमदलिपटलीकावलीं श्रोणिबिम्बे कूजत्काञ्चीकलापं चरणकमलयोर्मञ्जुमञ्जीरसिञ्जान् । उत्सङ्गे कीरगीतिं स्तनभुवि मसृणं वल्लकीपञ्चमं वा यत्काव्ये दत्तकर्णा शिव शिव मनुते भारती भारमेव ॥५४॥ कस्याचिद्वाचि कैश्चिन्ननु यदि विहितं दूषणं दुर्दुरूढैश्छिन्न किं नस्तदा स्यात्प्रथितगुणवतां काव्यकोटीश्वराणाम् । वाहाश्चेद्रन्धवाहाधिकविहितजवाः पञ्चशश्चान्धखञ्जाः का हानिः शीरशाहक्षितिपकुलमणेरश्वकोटीश्वरस्य ॥ ५५ ॥

---

## विशिष्टकविप्रशंसा ।

वाल्मीकिः ॥ कवीन्दुं नौमि वाल्मीकिं यस्य रामायणी कथाम् । चन्द्रिकामिव तन्वन्ति चकोरा इव साधवः ॥ १ ॥ सदूषणापि[3] निर्दोषा सखरापि[4] सुकोमला । नमस्तस्मै कृता येन रम्या रामायणी कथा ॥ २ ॥ योगीन्द्रश्छन्दसां स्रष्टा रामायणमहाकविः । वल्मीकजन्मा जयति प्राच्यः प्राचेतसो मुनिः ॥ ३ ॥ लौकिकानां हि साधूनामर्थं वागनुवर्तते । ऋषीणां पुनराद्यानां[5] वाचमर्थोऽनुधावति ॥ ४ ॥ आदिकवीचतुरास्यौ कमलजवल्मीकजौ वन्दे । लोकश्लोकविधात्रोर्ययोर्भिदा लेशमात्रेण ॥ ५ ॥ तमृषिं मनुष्यलोकप्रवेशविश्राम-

---

१ कर्पूर २ महिष ३ दूषणो राक्षसविशेष ; (पक्षे) काव्यदोषाः ४ खरो राक्षसविशेष.; (पक्षे) कर्कशत्वम्. ५ वाल्मीक्यादीनाम्

शाखिनं वाचाम् । सुरलोकादवतारश्रान्तरखेदच्छिदं वन्दे ॥ ६ ॥ विहितघनालंकारं[1] विचित्रवर्णावलीमयस्फुरणम्[2] । शक्रायुधमिव वक्रं[3] वल्मीकभुवं[4] मुनिं नौमि ॥ ७ ॥ सति काकुत्स्थकुलोन्नतिकारिणि रामायणेऽपि किं काव्यम् । रोहति कुल्या गङ्गापूरे किं बहुरसे वहति ॥ ८ ॥ भास्वद्वंशवतंसकीर्तिरमणीरङ्गप्रसङ्गस्वनद्वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा मुनिः । पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किमप्याकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षति ॥ ९ ॥ **व्यासः** ॥ नमः सर्वविदे तस्मै व्यासाय कविवेधसे । चक्रे सृष्टिं सरस्वत्या यो वर्षमिव भारतम् ॥ १० ॥ अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अभाललोचनः शंभुर्भगवान्बादरायणः ॥ ११ ॥ श्रवणाञ्जलिपुटपेयं विरचितवान्भारताख्यममृतं यः । तमहमरागमतृष्णं कृष्णद्वैपायनं वन्दे ॥ १२ ॥ व्यासगिरां निर्यासं सारं विश्वस्य भारतं वन्दे । भूषणतयैव संज्ञां यदङ्कितां[5] भारती वहति ॥ १३ ॥ **गुणाढ्यः** ॥ शश्वद्बाणद्वितीयेन नमदाकारधारिणा । धनुष्येण गुणाढ्येन निःशेषो रञ्जितो जनः ॥ १४ ॥ समुद्दीपितकंदर्पा[7] कृतगौरीप्रसाधना[8] । हरलीलेव लोकस्य विस्मयाय बृहत्कथा ॥ १५ ॥ अतिदीर्घजीविदोषाद्व्यासेन[9] यशोऽपहारितं हन्त । कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः ॥ १६ ॥ **कालिदासः** ॥ कवयः कालिदासाद्याः कवयो वयमप्यमी । पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम् ॥ १७ ॥ निर्गतामलवाक्यस्य कालिदासस्य सूक्तिषु । प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥ १८ ॥ कविरमरः कविरचलः कविरभिनन्दश्च कालिदासश्च । अन्ये कवयः कपयश्चापलमात्रं परं दधते ॥ १९ ॥ साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये[10][11][12] । शिक्षासमयेऽपि मुदे रतलीलाकालिदासोक्ती ॥ २० ॥ पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासा । अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती[13] बभूव ॥ २१ ॥ **भवभूतिः** ॥ सुकविद्वितयं मन्ये निखिलेऽपि महीतले । भवभूतिः शुकश्चायं वाल्मीकिस्तु तृतीयकः ॥ २२ ॥ भवभूतेः[14] संबन्धाद्भूधरभूरेव[15] भारती[16] भाति । एतत्कृतकारुण्ये[17] किमन्यथा रोदिति ग्रावा[18] ॥ २३ ॥ रत्नावलीपूर्वकमन्यदास्तामसीमभोगस्य वचोमयस्य । पयोधरस्येव हिमाद्रिजायाः परं विभूषा भवभूतिरेव ॥ २४ ॥ **बाणः** ॥ हृदि

१ विहिता घना बहवोऽलंकारा उपमादयो येन तम्; (पक्षे) विहित घना मेघा एवालकरणं येन तम्. २ विचित्रा वर्णानामक्षराणां यावली पङ्क्तिस्तत्प्रचुर स्फुरण स्फूर्तिर्यस्य तम्; (पक्षे) वर्णा नीलपीतादयस्तत्पङ्क्तिविकारः स्फुरणमुत्पत्तिर्यस्य तम् ३ वक्रोक्तिकुशलम्; (पक्षे) यथाश्रुतम्. ४ वाल्मीकिम्; (पक्षे) वल्मीकाज्जातम्. इन्द्रधनुषोऽपि तत एवोत्पत्तिरिति लौकिकम्. ५ व्यास. ६ भारतचिह्निताम् ७ कामोद्दीपका; (पक्षे) भस्मीकृतमदन. ८ वर्णितगौरीमाहात्म्या; (पक्षे) अलकृता पार्वती यया. ९ जीवित्वम् १० साभिप्रायम् ११ रसोत्कर्षधायकरसनिष्ठगुणवत्. १२ शब्दगुणशालि. १३ अन्वर्था. १४ शिवैश्वर्यस्य. १५ नगेन्द्रकन्या १६ सरस्वती. १७ भवभूतिकृतकरुणारसप्रधाने नाटके. उत्तररामचरित्र इत्यर्थः. १८ "अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्" इति पद्ये.

लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः । भवेत्कविकुरंगाणां चापलं तत्र कारणम् ॥ २५ ॥ शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरुच्यते । शीलाभट्टारिकावाची बाणोक्तिषु च सा यदि ॥ २६ ॥ जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि । प्रागल्भ्यमधिकमाप्तु वाणी बाणो बभूवेति ॥ २७ ॥ श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽलंकारे कतिचित्सदर्थविषये चान्ये कथावर्णके । आसर्वत्र गंभीरधीरकविताविन्ध्याटवीचातुरीसंचारे कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः ॥ २८ ॥ **दण्डी** ॥ जाते जगति वाल्मीकौ कविरित्यभिधाभवत् । कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥ २९ ॥ त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः । त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥ ३० ॥ **सुबन्धुः** ॥ कवीनामगलद्दर्पो नूनं वासवदत्तया[2] । शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्[3] ॥ ३१ ॥ **मुरारिः** ॥ भवभूतिमनादृत्य[4] निर्वाणमतिना मया । मुरारिपदचिन्तायामिदमाधीयते[5] मनः ॥ ३२ ॥ मुरारिपदभक्तिश्चेत्तदा माघे[6] रतिं कुरु । मुरारिपदभक्तिश्चेत्तदा माघे[7] रतिं कुरु ॥ ३३ ॥ देवी वाचमुपासते हि बहवः सारं तु सारस्वतं जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः । अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरतामापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः[8] ॥ ३४ ॥ **बिह्लणः** ॥ विद्वद्वृन्दतरंगिताग्रसरणिः कर्ता शिरोबिन्दुकं कर्मेति प्रतिबोधितान्वयविदो ये येऽपि तेभ्यो नमः । ये तु ग्रन्थसहस्रशाणकषणत्रुट्यत्कलङ्कैर्गिरामुल्लेखैः कवयन्ति बिह्लणकविस्तेष्वेव संनह्यति ॥ ३५ ॥ **जयदेवः** ॥ साध्वी माध्वीक[9] चिन्ता न भवति भवतः शर्करे कर्कशासि द्राक्षे द्रक्ष्यन्ति के त्वाममृत मृतमसि क्षीर नीरं रसस्ते । माकन्द क्रन्द[10] कान्ताधर धरणितलं गच्छ यच्छन्ति भावं यावच्छृङ्गारसारस्वतमिह जयदेवस्य विष्वग्[11]वचांसि ॥ ३६ ॥ **जगन्नाथपण्डितः** ॥ कवयति पण्डितराजे कवयन्त्यन्येऽपि विद्वांसः । नृत्यति पिनाकपाणौ नृत्यन्त्यन्येऽपि भूतवेतालाः ॥ ३७ ॥ माधुर्यैरपि धुर्यैर्द्राक्षाक्षीरेक्षुमाक्षिकादीनाम् । वन्ध्यैव माधुरीयं पण्डितराजस्य कवितायाः ॥ ३८ ॥ गिरां देवी वीणागुणरणनहीनादरकरा यदीयानां वाचाममृतमयमाचामति रसम् । वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपतेरधुन्वन्मूर्धानं नृपशुरथवायं पशुपतिः ॥ ३९ ॥ मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा कदाचित्केषांचित्खलु हि विदधीरन्नपि पदम् । ध्रुवं ते जीवन्तोऽप्यहह मृतका[12] मन्दमतयो न येषामानन्दं जनयति जगन्नाथभणितिः ॥ ४० ॥ **भट्टारहरिचन्द्रः** ॥ पदबन्धोज्ज्वलो[13] हारी[14] कृतवर्णक्रमस्थितिः[15] । भट्टारहरिचन्द्रस्य पद्यब-

---

१ द्रुपदपुत्री. २ एतन्नाम्ना प्रबन्धेन; (पक्षे) इन्द्रदत्तया. ३ इन्द्रियविशेषम्; (पक्षे) कुरुसेनानायक.. ४ शिवैश्वर्यम्, (पक्षे) एतन्नामान कविम् ५ विष्णु ; (पक्षे) कविविशेष. ६ माघकाव्ये. ७ अघे पातके मा प्रीतिं कुर्वित्यर्थः ८ मन्दराद्रि. ९ हे मधो. १० आक्रोश कुरु. ११ सर्वत' १२ शवा'. १३ सुप्तिङन्ताद्यक्षरसमूहः, (पक्षे) चरणः. १४ मनोहर'; (पक्षे) मुक्ताहारैर्युक्तः. १५ अक्षराणि; (पक्षे) ब्राह्मणक्षत्रियादिः.

न्धो नृपायते ॥ ४१ ॥ **सातवाहनः** ॥ [1]अविनाशिनमग्राम्यमकरोत्सातवाहनः । विशुद्ध[2]जातिभिः कोशं[3] रत्नैरिव सुभाषितैः ॥ ४२ ॥ **प्रवरसेनः** ॥ कीर्तिः प्रवरसेनस्य प्रयाता कुमुदो[4]ज्ज्वला । सागरस्य परं पा[5]रं कपिसेनेव से[6]तुना ॥ ४३ ॥ **भासः** ॥ सू[7]त्रधारकृतारम्भैर्नाटकैर्बहुभू[8]मिकैः । सप[9]ताकैर्यशो लेभे भासो देवकुलैरिव ॥ ४४ ॥ **मयूरः** ॥ तावत्कविविहंगानां ध्वनिर्लोकेषु शस्यते । यावन्नो विशते श्रोत्रे मयूरमधुरध्वनिः ॥ ४५ ॥ दर्पं कविभुजंगानां गता श्रवणगोचरम् । विषविद्येव मायूरी मायूरी वाङ्निकृन्तति ॥४६॥ **गोविन्दराजः** ॥ इन्दुप्रभारसविदं विहगं विहाय कीराननेस्फुरसि भारति का रतिस्ते । आद्यं यदि श्रयासि जल्पतु कौमुदीनां गोविन्दराजवचसां च विशेष एषः ॥ ४७ ॥ **रत्नखेटदीक्षितः** ॥ विपश्चिताम[10]पश्चिमे विवादकेलिनिश्चले सपत्नजित्ययत्नतस्तु रत्नखेटदीक्षिते । बृहस्पतिः क्व जल्पति प्रसर्पति क्व [11]सर्पराडसंमुखस्तु षण्मुखः सुदुर्मुखश्चतुर्मुखः ॥ ४८ ॥ **धनदः** ॥ यथेयं वाग्देवी सुकविमुखवासव्यसनिनी कुहूकण्ठी कण्ठे विलसति तथा चेदनवधि । तदा भूमीभागे निरुपमतमः किंचिदिव वा समाधत्ते साम्यं धनदभणितीनां मधुरिमा ॥ ४९ ॥ **सुदर्शनः** ॥ न मुग्धदयिताधरे न विषभाजि रत्नाकरे न राहुमुखकोटरे न किल ताक्ष्यर्पक्षान्तरे । सुदर्शनकवीश्वरे रसिकचक्रचूडामणौ गुणौकसि सुधा बुधास्त्यजत सान्द्रचन्द्रभ्रमम् ॥५०॥ **गणेश्वरः** ॥ गणेश्वरकवेर्वचोविरचनैकवाचस्पतेः प्रसन्नगिरिनन्दिनीचरणपल्लवं ध्यायतः । तथा जयति भारती भगवती यथा सा सुधा सुधीभवति सुभ्रुवामधरमाधुरी म्लायति ॥ ५१ ॥ **नरहरिः** ॥ यशोधननिधेर्यदा नरहरेर्वचो वर्ण्यते तदा गतमदा मदालसमरालबालारवाः । न विभ्रमचरीकरीभवति चाधरी माधुरी सुधाकरसुधाझरी मधुकथा वृथा जायते ॥ ५२ ॥ **ज्योतिरीशः** ॥ यश्चत्वारि शतानि बन्धघटनालंकारभाञ्जि द्रुतं श्लोकानां विदधाति कौतुकवशादेकाहमात्रे कविः । ख्यातः क्ष्मातलमण्डलेष्वपि चतुःषष्ठेकलाना निधिः सगीतागमनागरो विजयते श्रीज्योतिरीशः कृती ॥ ५३ ॥ **शाकल्लमल्लः** ॥ [12]एकोऽभूत्पुलिनात्ततस्तु [13]नलिनाच्चान्यो़ऽपि [14]नॉकोरभूत्प्राद्यास्ते त्रय एव दिव्यकवयो दीव्यन्तु देव्या गिरा । अर्वाचो यदि गद्यपद्यरचनाचातुर्यवागुद्धतास्तान्सर्वानतिशय्य खेलतितरां शाकल्लमल्लः कविः ॥ ५४ ॥ **राजशेखरः** ॥ बभूव वल्मीकभवः कविः पुरा ततः प्रपेदे भुवि भर्तृमेण्ठताम् । स्थितः पुनर्यो भवभूतिरेखया स वर्तते संप्रति राजशेखरः ॥ ५५ ॥ पातुं श्रोत्ररसायनं रचयितुं वाचः सता समता व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रो-

---

१ चिरस्थायिनम्; (पक्षे) नाशं न गच्छन्तम्. २ मात्राछन्दादि; (पक्षे) मूल्यवन्तम्. ३ ग्रन्थविशेष.; (पक्षे) भाण्डागारम्. ४ कुमुदवच्छुभ्रा; (पक्षे) कुमुदो नाम कपि शोभते यत्र. ५ दिगन्तरे; (पक्षे) समुद्रमुल्लङ्घ्य लङ्कादेशे. ६ काव्यविशेष ; (पक्षे) सेतुबन्धः ७ नाटकाचार्यः. (पक्षे) वास्तुविद्याज्ञाता. ८ प्रस्तावना; (पक्षे) अट्टालादिगृहावयवविशेषः ९ नाटकावयवविशेष.; (पक्षे) ध्वजः. १० पूर्व इत्यर्थः. ११ वासुकिः. १२ व्यासः. १३ ब्रह्मदेवः. १४ वाल्मीकिः.

तसः । भोक्तुं स्वादु फलं च जीविततरोर्यद्यस्ति ते कौतुकं तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥ ५६ ॥ **विज्जिका** ॥ नीलोत्पलदलश्यामां विज्जिकां मामजानता । वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥ ५७ ॥ **विजया** ॥ सरस्वतीव कर्णाटी विजयांका जयत्यसौ । या वैदर्भगिरां वासः कालिदासादनन्तरम् ॥ ५८ ॥ **कविवृन्दम्** ॥ अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः । श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः ॥ ५९ ॥ सरस्वतीपवित्राणां जातिस्तत्र न देहिनाम् । व्यासस्पर्धी कुलालोऽभूद्यद्द्रोणो भारते कविः ॥ ६० ॥ उपमा कालिदासस्य भारवेरर्थगौरवम् । दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥ ६१ ॥ माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे । स्मरतो भारवेरेव कवयः कपयो यथा ॥ ६२ ॥ श्रीरामायणभारतबृहत्कथानां कवीन्नमस्कुर्मः । त्रिस्रोता इव सरसा सरस्वती स्फुरति यैर्भिन्ना ॥ ६३ ॥ प्राचेतसव्यासपराशराद्याः प्राञ्चः कवीन्द्रा जगदर्चितास्ते । गोष्ठी नवीनापि महाकवीनां पूज्या गुणज्ञैर्भुवनोपकर्त्री ॥ ६४ ॥ धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटखर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥ ६५ ॥ यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो भासो हासः कविकुलगुरुः कालिदासो विलासः । हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः केषां नैषा कथय कविताकामिनी कौतुकाय ॥ ६६ ॥ भासो रामिलसोमिलौ वररुचिः श्रीसाहसाङ्कः कविर्मेण्ठो भारविकालिदासतरलाः स्कन्दः सुबन्धुश्च यः । दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते ॥ ६७ ॥ वाचः पल्लवयत्युमापतिधरः सदर्भशुद्धिं गिरां जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः । शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धनः स्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोईकविक्ष्मापतिः ॥ ६८ ॥ माघश्चोरो मयूरो मुररिपुरपरो भारविः सारविद्यः श्रीहर्षः कालिदासः कविरथ भवभूत्याह्वयो भोजराजः । श्रीदण्डी डिण्डिमाख्यः श्रुतिमुकुटगुरुर्भल्लटो भट्टबाणः ख्याताश्चान्ये सुबन्ध्वादय इह कृतिभिर्विश्वमाह्लादयन्ति ॥ ६९ ॥

---

## कुकविनिन्दा ।

अप्रगल्भाः पदन्यासे[3] जननीरागहेतवः[4] । सन्त्येके बहुलालापाः[5] कवयो बालका इव ॥ १ ॥ कविभिर्नृपसेवासु चित्तालंकारहारिणी । वाणी वेश्येव लोभेन परोपकरणीकृता ॥ २ ॥ अन्यवर्णपरावृत्त्या[6] बन्धचिह्ननिगूहनैः[7] । अनाख्यातः सतां मध्ये कविश्चोरो विभाव्यते ॥ ३ ॥ प्रायः कुकवयो लोके रागाधिष्ठितदृष्टयः[8] । कोकिला इव जायन्ते वाचालाः

१ कविविशेष २ विषमग्रन्थस्य शीघ्रोच्चारतः ३ सुप्तिङन्तादि; (पक्षे) अङ्घ्रिः. ४ जनाना नीरागो विरसता तस्य हेतव , (पक्षे) जनन्या मातू रागहेतवः प्रीतिहेतुभूता . ५ बहुला आलापा येषाम्; (पक्षे) बह्वी या लाला ता पिबन्ति ते. ६ वर्णान्तरपरिवर्तने. ७ गोपने.. ८ रक्ततया; (पक्षे) कोपेन.

कामकारिणः ॥ ४ ॥ किं कवेस्तस्य काव्येन सर्ववृत्तान्तगामिनी । कथेव भारती यस्य न प्राप्नोति दिगन्तरम् ॥ ५ ॥ किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः । परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ ६ ॥ मुखमात्रेण काव्यस्य करोत्यहृदयो जनः । छायामच्छामपि श्यामां राहुस्तारापतेरिव ॥ ७ ॥ श्लोकार्थस्वादकाले तु शब्दोत्पत्तिविचिन्तकाः । नीवीविमोक्षवेलायां वस्त्रमौल्यविचिन्तकाः ॥ ८ ॥ अधिभिल्लपल्लिगल्लं बल्लवपल्लवोऽपि वाचालः । नागरनरवरपरिषदि कस्य मुखादक्षरं क्षरति ॥ ९ ॥ गणयन्ति नो[1]पशब्दं न [2]वृत्तभङ्गं क्षयं न [3]चार्थस्य । रसिकत्वेनाकुलिता [4]वेश्यापतयः कुकवयश्च ॥ १० ॥ बालाकटाक्षसूत्रितमसतीनेत्रत्रिभागकृतभाष्यम् । कविमाणवका दूती व्याख्यातमधीयते भावम्[5] ॥ ११ ॥ स्वयमपि भूरि[6]च्छिद्रश्[7]चापलमपि सर्वतो[8]मुखं तन्वन् । तितउ[9]स्तुपस्य पिशुनो दोषस्य [10]विवेचनेऽधिकृतः ॥ १२ ॥ दुर्जनहुताशदग्धं काव्यसुवर्णं विशुद्धिमुपयाति । दर्शयितव्यं तस्मान्मत्सरिमनसः प्रयत्नेन ॥ १३ ॥ कविरनुहरति च्छायामर्थं कुकविः पदं चोरः । सकलप्रबन्धहर्त्रे साहसकर्त्रे नमस्तस्मै ॥ १४ ॥ विपुलहृदयाभियोग्ये खिद्यति काव्ये जडो न मौर्ख्ये स्वे । निन्दति कञ्चुकिकारं प्रायः शुष्कस्तनी नारी ॥ १५ ॥ अतिरमणीये काव्ये पिशुनोऽन्वेषयति दूषणान्येव । अतिरमणीये वपुषि व्रणमिव हि मक्षिकानिकरः ॥ १६ ॥ [11]द्राघीयसा धाष्टर्यगुणेन युक्ताः कैः कैरपूर्वैः परकाव्यखण्डैः । [12]आडम्बरं ये वचसां वहन्ति ते केचिदार्याः कवयो जयन्ति ॥ १७ ॥ कर्णामृतं सूक्तिरसं विमुच्य दोषेषु यत्नः सुमहान्खलस्य । अवेक्षते केलिवनं प्रविष्टः क्रमेलकः[13] कण्टकजालमेव ॥ १८ ॥ साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः । यत्तस्य दैत्या इव लुण्ठनाय काव्यार्थचोराः प्रगुणीभवन्ति ॥ १९ ॥ गृह्णन्तु सर्वे यदि वा यथेच्छं नास्ति क्षतिः क्वापि कवीश्वराणाम् । रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥ २० ॥ काव्यं करोषि किमु ते सुहृदो न सन्ति ये त्वामुदीर्णपवनं न निवारयन्ति । गव्यं घृतं पिब निवातगृहं प्रविश्य वाताधिका हि पुरुषाः कवयो भवन्ति ॥ २१ ॥ हठादाकृष्टानां कतिपयपदानां रचयिता जनः स्पर्धालुश्चेदहह कविता वश्यवचसा । भवेदद्य श्वो वा किमिह बहुना पापिनि कलौ घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः ॥ २२ ॥ स्तुवद्भवनिवर्तके सति हरौ कविः सूक्तिभिः करोति वरवर्णिनीचरितवर्णनं गर्हितम् । अनीतिरवनीपतिर्बत शुनीतनुं मौ-

---

१ दु शब्दम्. २ इन्द्रवज्रादि; (पक्षे) शीलम् ३ वाच्यस्य; (पक्षे) द्रव्यस्य. ४ जाराः. ५ एवमतितीक्ष्णमतिभिः सूत्रेण, ततोऽल्पमतिभिर्भाष्येन, ततोऽप्यल्पमतिभिर्व्याख्यानेन यथावबुध्यते ग्रन्थादि, तथा तीक्ष्णमतिभि कैश्चित्कविभि स्वल्पव्यवहारज्ञानेन, ततोऽल्पमतिभिरधिकतज्ज्ञानेन, ततोऽल्पमतिभिरधिकतरतज्ज्ञानेन काव्य क्रियत इति न व्यवहारज्ञानं कुत्रापि व्यभिचरतीति भाव. ६ बहुवाच्यः; (पक्षे) बहुरन्ध्र. ७ मौखर्यम्, (पक्षे) चापल्यम्. ८ सकलजनसमक्षम्; (पक्षे) सर्वदिग्विषयम्. ९ चालनी. १० निर्णये; (पक्षे) स्वीकारे. ११ अतिदीर्घेण. १२ प्रागल्भ्यम्. १३ उष्ट्र..

क्तिकैर्विभूषयति देवतामुकुटभागयोग्यैर्यथा ॥ २३ ॥ श्रीनाथस्तवनानुरूपकवनां वाणीं मनोहारिणीं कष्टं हा कवयः कदर्यकुटिलक्ष्मापालसात्कुर्वते । दूरोपाहृतसारसैन्धवपयो देवाभिषेकोचितं संसेके विनियुञ्जते सुमतयः शाखालवालस्य किम् ॥ २४ ॥ लीलालुण्ठितशारदापुरमहासंपद्भराणां पुरो विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेत्पामराः । अद्य श्वः फणिनां शकुन्तशिशवो दन्तावलानां वृकाः सिंहानां च सुखेन मूर्धसु पदं धास्यन्ति शालावृकाः ॥ २५ ॥ स्वाधीनो रसनाञ्चलः परिचिताः शब्दाः कियन्तः क्वचित्क्षोणीन्द्रो न नियामकः परिषदः शान्ताः स्वतन्त्रं जगत् । तद्यूयं कवयो वयो वयमिति प्रस्तावनाहुंकृतिः स्वच्छन्दं प्रतिसद्म गर्जत वयं मौनव्रतालम्बिनः ॥ २६ ॥ स्वर्गानर्गलनिर्गलत्सुरसरित्पाथः प्रपातप्रथाप्रत्याख्यानपटीयसापि वचसा जिह्रेति जिह्वेहनः । एकद्व्यक्षरकष्टपिष्टरचनादुर्वारगर्वग्रहाः कन्थामात्रकुविन्दकाः कवयितुं सज्जन्ति लज्जामुचः ॥ २७ ॥

## पण्डितप्रशंसा ।

पण्डिते हि गुणाः सर्वे मूर्खे दोषाश्च केवलाः । तस्मान्मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ॥ १ ॥ गीतशास्त्रविनोदेन कालो गच्छति धीमताम् । व्यसनेन तु मूर्खाणां निद्रया कलहेन वा ॥ २ ॥ यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि । निरस्तपादपे देश एरण्डोऽपि द्रुमायते ॥ ३ ॥ किं कुलेन विशालेन विद्याहीनस्य देहिनः । अकुलीनोऽपि विद्यावान्देवैरपि स पूज्यते ॥ ४ ॥ रोहणं सूक्तिरत्नानां वन्दे वृन्दं विपश्चिताम् । यन्मध्यपतितो नीचः काचोऽप्युच्चैर्महीयते ॥ ५ ॥ विद्वानेव विजानाति विद्वज्जनपरिश्रमम् । न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥६॥ प्राज्ञो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥७॥ विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥ ८ ॥ अलंकरोति यः श्लोकं शुक एव न मध्यमः । अलं करोति यः श्लोकं शुक एव नमध्यमः ॥ ९ ॥ सदोषमपि निर्दोषं भवत्यग्रे विपश्चितः । रामस्येवार्जुनवपुः कवेश्च सरसं वचः ॥ १० ॥ गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः । शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥ ११ ॥ स्थिरा शैली गुणवतां खलबुद्ध्या न बाध्यते । रत्नदीपस्य हि शिखा वात्ययापि न नाश्यते ॥ १२ ॥ वेश्यानामिव विद्यानां मुखं कैः कैर्न चुम्बितम् । हृदयग्राहिणस्तासां द्वित्राः सन्ति न सन्ति वा ॥ १३ ॥ विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः । याताश्चेन्न पराञ्चन्ति द्विर-

१ राजवर्णनपराम्. २ वृक्षवदाचरति. ३ विस्तीर्णेन ४ पूज्यते ५ महतीम् ६ प्रसवकाले या वेदना ताम्. ७ पर्याप्तं करोति तिरस्करोतीत्यर्थः ८ नमध्यम' शुको नकारो मध्ये यस्यैवंविध. शुनक. श्वा इति भावः ९ दोषसहितम्; (पक्षे) दोषा हस्तस्तत्सहितम् १० परशुरामस्य. ११ सहस्रार्जुनशरीरम्. १२ जानन्; (पक्षे) उपाददान. १३ गरलम्. १४ अभिनन्दयति; (पक्षे) धारयति. १५ निरुणद्धि वाचा कण्ठाद्बहिर्नोद्घाटयतीत्यर्थः; (पक्षे) स्थापयति. १६ रीति.

दानां रदा इव ॥ १४ ॥ अर्थाहरणकौशल्यं किं स्तुमः शास्त्रवादिनाम् । अव्ययेभ्यो[1]ऽपि ये चार्थान्निष्कर्षन्ति सहस्रशः ॥ १५ ॥ स एव रसिको लोके श्रुत्वा काव्यं परैः कृतम् । उत्पद्यते च युगपन्नयनेऽक्ष्णोश्च यस्य वाः[2] ॥ १६ ॥ विद्याविनयोपेतो हरति न चेतांसि कस्य मनुजस्य । काञ्चनमणिसंयोगो नो जनयति कस्य लोचनानन्दम् ॥ १७ ॥ सत्यं तपो ज्ञानमहिंसता च विद्वत्प्रणामं च सुशीलता च । एतानि यो धारयते स विद्वान्न केवलं यः पठते स विद्वान् ॥ १८ ॥ कवीश्वराणां वचसां विनोदैर्नन्दन्ति विद्यानिधयो न चान्ये । चन्द्रोपला एव करैर्हिमांशोर्मध्ये शिलानां सरसा भवन्ति ॥ १९ ॥ गीर्भिर्गुरूणां परुषाक्षराभिस्तिरस्कृता यान्ति नरा महत्त्वम् । अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो वसन्ति ॥ २० ॥ शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान्पुरुषः स एव । सुचिन्तितं चौषधमातुराणां न नाममात्रेण करोत्यरोगम् ॥ २१ ॥ न पण्डिताः साहसिका भवन्ति श्रुत्वापि ते संतुलयन्ति तत्त्वम् । तत्त्वं समादाय समाचरन्ति स्वार्थं प्रकुर्वन्ति परस्य चार्थम् ॥ २२ ॥ उदीरितो[3]ऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति नोदिताः[4] । अनुक्तमप्यूहति[5] पण्डितो जनः परेङ्गित[6]ज्ञानफला हि बुद्धयः ॥ २३ ॥ इभतुरगशतैः प्रयान्तु मूढा धनरहिता विबुधाः प्रयान्तु पद्भ्याम् । गिरिशिखरगतापि काकपङ्क्तिः पुलिनगतैर्[7]न समा हि राजहंसैः ॥ २४ ॥ शिशुरपि निपुणो गुरोर्गरीयान्[9] न तु वपुषैव महान्महत्प्रतिष्ठः । मणिरणुरपि भूषणाय पुंसां न तु पृथुलैव शिला विलासहेतुः ॥ २५ ॥ सन्तश्चेदिह गुणबिन्दवो बुधस्तान्संतुष्टः कवलयति स्फुटेऽपि दोषे । संयुक्तानपि पयसः कणान्विचिन्वन्नम्भस्तो ग्रसति हि मञ्जु मल्लिकाक्षः[10] ॥ २६ ॥ अन्या जगद्धित[11]मयी मनसः प्रवृत्तिरन्यैव कापि रचना वचनावलीनाम् । लोकोत्तरा च कृतिराकृतिरङ्गहृद्या विद्यावतां सकलमेव गिरां दवीयः[12] ॥ २७ ॥ अधिगतपरमार्थान्पण्डितान्मावमंस्थास्[13]तृणमिव लघुलक्ष्मीर्नैव तान्संरुणद्धि[14] । मदमिलितमिलिन्दश्यामगण्डस्थलानां न भवति बिसतन्तुर्वारणं वारणानाम्[15] ॥ २८ ॥ शास्त्रोपस्कृतशब्दसुन्दरगिरः[16] शिष्यप्रदेयागमा विख्याताः कवयो[17] वसन्ति विषये[18] यस्य प्रभोर्निर्धनाः । तज्जाड्यं[19] वसुधाधिपस्य कवयो ह्यर्थं विनापीश्वराः कुत्स्याः स्युः कुपरीक्षका न मणयो यैरर्घतः[20] पातिताः ॥ २९ ॥ हर्तुर्याति न गोचरं किमपि[21] शं[22] पुण्णाति सर्वात्मना ह्यर्थिभ्यः प्रतिपाद्यमानं[23] अनिशं[24] प्राप्नोति वृद्धिं पराम् ।

---

१ अव्ययेभ्य. अव्ययानामनेकार्थत्वात्; (पक्षे) व्ययरहितेभ्य:. कृपणेभ्य इति यावत्. २ उदकम्; (पक्षे) 'वाः वा' इति लौकिकशब्द.. ३ उच्चारित.. ४ प्रेरिताः. ५ तर्कयति. ६ अभिप्रायः. ७ सैकतगतैः. ८ शास्त्रवेत्ता. ९ श्रेष्ठ. १० राजहस. ११ लोकहितमधुरा. १२ अतिदूरम्. १३ अवमानं मा कुरु १४ रोधं न कुरुते. १५ गजानाम् १६ शास्त्रसंस्कारेण शुद्धा ये शब्दास्तैः सुन्दरा गिरो येषां ते. १७ पण्डिताः. १८ देशे. १९ मौर्ख्यम्. २० मूल्यत. २१ अचिन्त्यम्. २२ सुखम्. २३ दीयमानम्. २४ निरन्तरम्

कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमेतद्धनं येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥ ३० ॥

---

## कुपण्डितनिन्दा।

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्। लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १ ॥ मूर्खचिह्नानि षडिति गर्वो दुर्वचनं मुखे। विरोधी विषवादी च कृत्याकृत्यं न मन्यते ॥ २ ॥ मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः। अशुभं वाक्यमादत्ते पुरीषमिव सूकरः ॥ ३ ॥ उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये। पयःपानं भुजंगानां केवलं विषवर्धनम् ॥ ४ ॥ वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह। न मूर्खजनसंपर्कः सुरेन्द्रभवनेष्वपि ॥ ५ ॥ मूर्खोऽपि मूर्खं दृष्ट्वा च चन्दनादपि शीतलः। यदि पश्यति विद्वांसं मन्यते पितृघातकम् ॥ ६ ॥ अन्तःसारविहीनस्य सहायः किं करिष्यति। मलयेऽपि स्थितो वेणुर्वेणुरेव न चन्दनः ॥ ७ ॥ यस्य नास्ति विवेकस्तु केवलं यो बहुश्रुतः। न स जानाति शास्त्रार्थान्दर्वी पाकरसानिव ॥ ८ ॥ रूपयौवनसंपन्ना विशालकुलसंभवाः। विद्याहीना न शोभन्ते निर्गन्धाः किंशुका इव ॥ ९ ॥ विद्याविधिविहीनेन किं कुलीनेन देहिनाम्। अकुलीनोऽपि यो विद्वान्दैवतैरपि पूज्यते ॥ १० ॥ मदोपशमनं शास्त्रं खलानां कुरुते मदम्। चक्षुःप्रकाशकं तेज उलूकानामिवान्धताम् ॥ ११ ॥ ज्ञानविद्याविहीनस्य विद्याजालं निरर्थकम्। कण्ठसूत्रं विना नारी अनेकाभरणैर्युता ॥ १२ ॥ मूर्खः स्वल्पव्ययत्रासात्सर्वनाशं करोति ह। कः सुधीः संत्यजेद्भाण्डं शुल्कस्यैवातिसाध्वसात् ॥ १३ ॥ माता शत्रुः पिता वैरी येन बालो न पाठितः। न शोभते सभामध्ये हंसमध्ये बको यथा ॥ १४ ॥ पुस्तकेषु च नाधीतं नाधीतं गुरुसंनिधौ। न शोभन्ते सभामध्ये जारगर्भा इव स्त्रियः ॥ १५ ॥ विद्यया शस्यते लोके पूज्यते चोत्तमैः सदा। विद्याहीनो नरः प्राज्ञः सभायां नैव शोभते ॥ १६ ॥ शोभते विदुषां मध्ये नैव निर्गुणमानसः। अन्तरे तमसा दीपः शोभते नार्कतेजसाम् ॥ १७ ॥ बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः। अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ १८ ॥ अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः। ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥ १९ ॥ गुणिगणगणनारम्भे न पतति कठिनी सुसंभ्रमाद्यस्य। तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी भवति ॥ २० ॥ निर्गुण इति मृत इति च द्वावेकार्थाभिधायिनौ विद्धि। पश्य धनुर्गुणशून्यं निर्जीवं यदिह शंसन्ति ॥ २१ ॥ सुगृहीतमलिनपक्षा

---

१ लजत २ स्पर्धां करोति ३ विद्य ४ सुरेन्द्राणां भवनेषु स्वर्गादिलोकेष्वपीति भाव., ५ मज्जास्थिराशो वल वा. ६ नेतव्यानेतव्यवस्तुसवन्धी राजग्राह्यो भाग. ७ विकृतिभाव गतम्. ८ रञ्जयितुमसमर्थो भवति. ९ कनिष्ठिकाङ्गुलि.. १० पुत्रिणी

लघवः परभेदिनस्तीक्ष्णाः । पुरुषा अपि विशिखा अपि गुणच्युताः कस्य न भयाय ॥ २२ ॥ अन्तर्भूतो निवसति जडे[2] जडः[3] शिशिरमहसि हरिण इव । अजडे शशीव तपने स तु प्रविष्टोऽपि निःसरति ॥ २३ ॥ साहित्य[4]संगीत[5]कलाविहीनः साक्षात्पशुः पुच्छविषा[6]णहीनः । तृणं न खादन्नपि जीवमानस्तद्भागधेयं[7] परमं पशूनाम् ॥२४॥ जडेषु जातप्रतिभाभिमानाः खलाः कवीन्द्रोक्तिषु के वराकाः । प्राप्ताग्निनिर्वापणगर्वमम्बु रत्नाङ्कुरज्योतिषि किं करोति ॥ २५ ॥ येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः । ते मृत्युलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥ २६ ॥ मुक्ताफलैः किं मृगपक्षिणां च मिष्टान्नपानं किमु गर्दभाणाम् । अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं धर्मकथाप्रसङ्गः ॥ २७ ॥ अज्ञातपाण्डित्यरहस्यमुद्रा ये काव्यमार्गे दधतेऽभिमानम् । ते गारुडीयाननधीत्य मन्त्रान्हालाहलास्वादनमारभन्ते ॥ २८ ॥ अवद्यजम्बालगवेषणाय कृतोद्यमानां खलसैरिभाणाम् । कवीन्द्रवाङ्निर्झरनिर्झरिण्या संजायते व्यर्थमनोरथत्वम् ॥ २९ ॥ वरं दरिद्रः श्रुतिशास्त्रपारगो न चापि मूर्खो बहुरत्नसंयुतः । सुलोचना जीर्णपटापि शोभते न नेत्रहीना कनकैरलंकृता ॥ ३० ॥ विविनक्ति न बुद्धिदुर्विधः स्वयमेव स्वहितं पृथग्जनः । यदुदीरितमप्यदः परैर्[1] विजानाति तदद्भुतं महत् ॥ ३१ ॥ विदुरेर्ष्य[11]दपायमात्मना परतः श्रद्दधतेऽथ वा बुधाः । न परोपहितं न च स्वतः [12]प्रमिमीतेऽनुभवादृतेऽल्पधीः ॥ ३२ ॥ अथ [13]वाभिनिविष्टबुद्धिषु व्रजति व्यर्थकतां सुभाषितम् । रविरागिषु शीत[14]रोचिषः करजालं कमलाकरेष्विव ॥ ३३ ॥ इतरकर्मफलानि य[15]दृच्छया विलिख तानि सहे चतुरानन । अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख मा लिख मा लिख ॥ ३४ ॥ कतिचिदुद्धतनिर्भरमत्सराः कतिचिदात्मवचःस्तुतिशालिनः । अहह केऽपि निरक्षरकुक्षयस्तदिह संप्रति कं प्रति मे श्रमः ॥ ३५ ॥ ये के विचित्ररसशालिषु सत्कवीनां सूक्तेषु कर्णपथगामिषु नाद्रियन्ते । ते मालतीपरिमलेष्वपि कन्दलत्सु नासापुटं करतलेन पिदध्युरेव ॥ ३६ ॥ मद्वाणि मा कुरु विषादमनादरेण मात्सर्यमग्नमनसां सहसा खलानाम् । काव्यारविन्दमकरन्दमधुव्रतास्त्वमास्येषु धास्यसितमां कियतो विशालान् ॥ ३७ ॥ अरण्यरुदितं कृतं शं[16]वशरीरमु[17]द्वर्तितं स्थ[18]लेऽब्जमवरोपितं सुचिरमूषरे[19] वर्षितम् । श्वपुच्छम[20]वनामितं बधिरकर्ण[21]जापः कृतो धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥ ३८ ॥ [22]प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्राङ्कुरात्समुद्रमपि संतरेत्प्रचलदूर्मिमालाकुलम् । भुजंगमपि कोपितं शिरसि पुष्पवद्धा-

---

१ परैः शिष्याद्यवमान इत्यर्थः. २ मूर्खे; (पक्षे) जलरूपत्वात्. ३ मूर्खः; (पक्षे) पशुत्वात्. ४ साहित्यशास्त्रम्. ५ गायनम् ६ शृङ्गम् ७ दैवम् ८ कर्दम ९ बुद्धिशून्य. १० पामरजनः. ११ आगामिनम्. १२ जानाति. १३ दुराग्रहग्रस्तचित्तेषु १४ शीतभानोः. १५ स्वेच्छया १६ प्रेतशरीरम्. १७ उद्वर्तनं यवगोधूमादिचूर्णेन मलापकर्षणं तेन सुगन्धितम्. १८ निर्जलप्रदेशे. १९ पाषाणादिप्रचुरप्रदेशे. २० ऋजुतासंपादनाय नम्रीकृतम्. २१ कर्णमन्त्र. २२ बलात्कारं कृत्वा.

रयेन्न तु [1]प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ३९ ॥ लभेत [2]सिकतासु तैलमपि यत्नतः पीडयन्पिबेच्च [3]मृगतृष्णिकासु सलिलं पिपासार्दितः । कदाचिदपि पर्यटन्[4]शशविषाणमासादयेन्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ४० ॥ यदा किंचिज्ज्ञोऽहं [5]द्विप इव मदान्धः समभवं तदा सर्वज्ञोऽस्मीत्यभव[6]दवलिप्तं मम मनः । यदा किंचित्किंचिद्बुधजनसकाशादवगतं तदा मूर्खोऽस्मीति [7]ज्वर इव मदो मे व्यपगतः ॥ ४१ ॥ शिरः [8]शार्वं स्वर्गात्पशुपति[9]शिरस्तः क्षितिधरं महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् । अधोऽधो गङ्गेयं पदमुपगता स्तोकमधुना विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ ४२ ॥ वि[10]तरति गुरुः प्राज्ञे विद्यां तथैव यथा [11]जडे न तु खलु तयोर्ज्ञाने शक्तिं करोत्य[12]पहन्ति वा । भवति च पुन[13]र्भूयान्भेदः फलं प्रति तद्यथा प्रभवति रुचां बिम्बो[14]द्ग्राहे मणिर्न [15]मृदां चयः ॥ ४३ ॥ अविनयभुवामज्ञानानां शमाय भवन्नपि प्रकृतिकुटिलाद्विद्याभ्यासः खलत्वविवृद्धये । फणिभयभृतां मस्तूच्छेदक्षमस्तमसामसौ विषधरफणारत्नालोको भयं तु भृशायते ॥ ४४ ॥ व्यासादी[16]न्कविपुंगवान[17]नुचितैर्वाक्यैः सलीलं हसन्नुच्चैर्जल्प निमील्य लोचनयुगं श्लोकान्सगर्वं पठ । काव्यं धिक्कुरु यत्परैर्विरचितं स्पर्धस्व सार्धं बुधैर्यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥ ४५ ॥ ये संसत्सु विवादिनः परयशःशल्येन शूलाकुलाः कुर्वन्ति स्वगुणस्तवेन गुणिनां यत्नाद्गुणाच्छादनम् । तेषां रो[18]षकषायितोदरदृशां कोपोष्णनिःश्वासिनां दीप्ता रत्नशिखेव [19]कृष्णफणिनां विद्या जनोद्वेगिनी[20] ॥ ४६ ॥ ग्रीवा[21]स्तम्भभृतः [22]परोन्नतिकथामात्रे शिरः शूलिनः सोद्वेगभ्रमणप्रलापविपुलक्षोभाभिभूतस्थितेः । अन्तर्द्वेषविषप्रवेशविषमक्रोधोष्णनिःश्वासिनः कष्टा नूनम[23]पण्डितस्य वि[24]कृतिभिर्भीमै[25]र्ज्वरारम्भभूः ॥ ४७ ॥ मूर्खत्वं सुलभं भजस्व कुमते मूर्खस्य चाष्टौ गुणा निश्चिन्तो बहुभोजकोऽतिमुखरो रात्रिं दिवा स्वप्नभाक् । कार्याकार्यविचारणान्धबधिरो मानापमाने समः प्रायेणा[26]मयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ ४८ ॥ [27]व्यालं बाल[28]मृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते छेत्तुं [29]वज्रमणी[30]ञ्शिरीषकुसुमप्रान्तेन [31]संनह्यते । माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधे[32]रीहते नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः [33]सुधास्यन्दिभिः ॥ ४९ ॥ शक्यो वारयितुं जलेन हुतभुक्छत्रेण सूर्यातपो नागेन्द्रो [34]निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ । व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य ना-

---

१ ज्ञानलेशशून्यत्वेन विपरीतार्थग्राही. २ वालुकासु. ३ मरीचिकासु. ४ शृङ्गम्. ५ गज. ६ सगर्वम्. ७ ज्वरे यथा मदो गच्छति तथेत्यर्थ ८ शर्वसवन्धि. ९ मस्तकात्. १० ददाति. ११ मूर्खे. १२ नाशयति. १३ महान् १४ बिम्बग्रहणे. १५ मृत्पिण्डः. १६ कविश्रेष्ठान्. १७ अयोग्यैः. १८ रोषेण कषायितं ताम्रमुदरं गर्भो यस्यैवंविधा दृग्येषाम्. १९ कृष्णसर्पाणाम्. २० त्रासदात्री. २१ ग्रीवास्तम्भ धारयतः. २२ परोत्कर्षः. २३ मूर्खस्य २४ विकारः. २५ दारुणज्वरारम्भकभूमि.. २६ रोगवर्जितः. २७ सर्पम्. २८ बिसम्. २९ हीरकादीन्. ३० सर्षपपुष्पम्. ३१ सनद्धो भवति. ३२ इच्छति. ३३ अमृतस्राविभिः. ३४ तीक्ष्ण.

स्त्यौषधम् ॥ ९० ॥ काव्ये भव्यतमेऽपि विज्ञनिवहैरास्वाद्यमाने मुहुर्दोषान्वेषणमेव मत्सरजुषां नैसर्गिको दुर्ग्रहः । कासारेऽपि विकाशिपङ्कजचये खेलन्मराले पुनः क्रौञ्चश्चञ्चुपुटेन कुञ्चितवपुः शम्बूकमन्वेषते ॥ ९१ ॥ विद्ये हृद्यतरासि किं नु कृपणं संभावनैर्लज्जसे सन्त्यन्ये तव तोषणे हितधियो धन्या वदान्या भुवि । कान्तानां कुचकुम्भकौशलरुचां नो हानिरेतावता षण्ढानां हृदयेऽपि यत्प्रणयतेर्नानङ्गरागोदयः ॥ ९२ ॥ मीमांसा पठिता न यैरुपनिषन्नैव श्रुता तत्त्वतः श्रीमच्छङ्करभाष्यतो भगवती गीताप्यधीता न यैः । सिद्धान्तापगतं शिरोमणिमतं ज्ञात्वापि किंचित्ततो भट्टाचार्यपदं गताः कथमहो लज्जां लभन्ते न ते ॥ ९३ ॥ निन्द्यन्ते यदि नाम मन्दमतिभिर्वक्राः कवीनां गिरः स्तूयन्ते न च नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः । तद्वैदग्ध्यवतां सतामपि मनः किं नेहते वक्रतां धत्ते किं न हरः किरीटशिखरे वक्रां कलामैन्दवीम् ॥ ९४ ॥ पेटी चीवर पट्टवस्त्रपटल श्वेतातपत्र च्छग शाटीहारक घोटक स्फुटघटाटोपाय तुभ्यं नमः । येनानक्षरकुक्षयोऽपि जगतः कुर्वन्ति सर्वज्ञताभ्रान्तिं येन विना तु हास्यपदवीं सन्तोऽपि कष्टं गताः ॥ ९५ ॥ प्रादुष्यात्पण्डितानां[1] कविवचसि[2] कथं प्रत्ननूत्नत्वचिन्ता विद्यैरन्यद्यैर्वद्यान्यभिजहाति तथा गृह्णते स्युर्गुणाश्चेत् । अन्यस्त्वन्यप्रमाणः परमवतनुते छिद्यते तावता किं नार्घं रत्नस्य दोषो[3] दृषदिति यदिदं क्षिप्रमन्धाः क्षिपन्ति ॥ ९६ ॥

## छान्दसप्रशंसा ।

नाध्यापयिष्यन्निर्गमाञ्श्रमेणोपाध्यायलोका यदि शिष्यवर्गान्[4] । निर्वेदवादं किल निर्वितानमुर्वीतलं हन्त तदाभविष्यत् ॥ १ ॥

## छान्दसनिन्दा ।

आः कष्टमप्रहृष्टा शिष्टा अपि वित्तचापलाविष्टाः । अध्यापयन्ति वेदानादाय चिराय मासि मासि भृतिम्[5] ॥ १ ॥

## वैयाकरणप्रशंसा ।

वैयाकरणकिरातादपशब्दमृगाः क्व यान्ति संत्रस्ताः[7] । ज्योतिर्नटविटगायकभिषगाननगह्वराणि[8][9][10][11][12] यदि न स्युः ॥ १ ॥ यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् । स्वजनः श्वजनो मा भूत्सकलं शकलं सकृच्छकृत्[13] ॥ २ ॥ कृतदुरितनिराकरणं व्याकरणं चतुरधी-

१ प्रादुर्भवेत्. २ काव्ये. ३ दोषाः. ४ वेदान्. ५ वेतनम्. ६ भिक्षुः. ७ भीता.. ८ गणकाः. ९ नाट्यकाराः. १० जाराः. ११ वैद्याः. १२ गुहा.. १३ विष्ठा.

रधीयानः । बुधगणगणनावसरे कनिष्ठिकायां परं जयति ॥ ३ ॥ सूत्रं[1] पाणिनिबद्धं[2] कलयन्[3]पुरुषः समुद्वहति[4] सुदृशम्[5] । वर्णादीनां[6] धर्मान्बुद्ध्वा[7] विधिवत्[8]प्रयुङ्क्ते[9]ऽसौ ॥ ४ ॥ पातं[10] जले विष्णुपदापगायाः[11] पातञ्जले[12] चापि नये[13]ऽवगाहम्[14] । आचक्षते[15] शुद्धिदमा प्रसूते[16]रा च क्षिते[17]रागमधोक्षजे च ॥ ५ ॥ नृणामनभ्यस्तफणाभृदीशगिरां[18] दुरापा[19] बुधराजगोष्ठी[20] । अबुद्ध[21]चापश्रुतिपद्धतीनां युद्धक्षमेवोद्धृतयोद्धृसार्था ॥ ६ ॥ नाङ्गीकृतव्याकरणौषधानामपाटवं वाचि सुगाढमास्ते । कस्मिंश्चिदुक्ते तु पदे कथंचित्स्वैरं वपुः स्विद्यति वेपते[22] च ॥ ७ ॥ शब्दशास्त्र[23]मनधीत्य[24] यः पुमान्वक्तुमिच्छति वचः समान्तरे । बद्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना[25] ॥ ८ ॥

## वैयाकरणनिन्दा ।

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः... 

टिड्ढाणञ्द्वयसच्चुटूङसिङसोस्तिप्तस्झिसिप्थस्थमिब्वस्मस्ताहशिचष्टुनाष्टुरतङ्शश्छोऽच्यचो-ऽन्त्यादिटि । लोपोव्योर्वलिवृद्धिरेचियचिभंदाधाघ्वदाप्छेचटेरित्यब्दान्[26]खिलान्नयन्ति[27] कतिचिच्छब्दान्पठन्तः कटून्[28] ॥ १ ॥ सूत्रैः पाणिनिनिर्मितैर्बहुतरैर्निष्पाद्य शब्दावलिं वैकुण्ठस्तव[29]मक्षमा रचयितुं मिथ्याश्रमाः शाब्दिकाः । पक्वान्नं विविधं श्रमेण[30] विविधापूपाज्यसूपान्वितं मन्दाग्नीननुरुन्धते[31] मितबलानाघ्रातुमप्यक्षमान् ॥ २ ॥ कुप्वोःकःपौचशेषोऽध्यसखिससजुषोरुर्विरामोऽवसानं शश्छोऽटीत्यादिशब्दैः सदसि यदि शठाः[32] शाब्दिकाः पण्डिताः स्युः । तेषां को वापराधः कथयत सततं ये पठन्तीह थोन्तत्ताथय्याथय्यथय्याधिगधिगधिगधिक्थय्यथय्येति[33] शब्दान् ॥ ३ ॥

## नैयायिकप्रशंसा ।

अद्भुतस्तर्कपाथोधि[34]रगाधो यस्य वर्धकः । अक्षपादो[35]ऽतमः[36]स्पष्टस्त्वकलङ्कः कलानिधिः[37] ॥१॥ अपरीक्षितलक्षणप्रमाणैरपरामृष्ट[38]पदार्थसार्थतत्त्वैः । अवशीकृतजैत्र[39]युक्तिजालैरलमेतैर-

---

१ व्याकरणसूत्रम्; (पक्षे) कङ्कणम्. २ पाणिनिना बद्ध रचितम्; (पक्षे) पाणौ हस्ते निबद्धम् विवाहकाले सूत्रनिर्मिते कङ्कणे वधूवरयोर्हस्तयोर्बध्नन्तीति प्रसिद्धि ३ अर्थज्ञानपूर्वक विचारयन्; (पक्षे) धारयन्. ४ सम्यग्धारयति; (पक्षे) सम्यगुद्वहति पाणिग्रहणपूर्वक स्वीकरोतीत्यर्थ . ५ शोभना दृष्टिम् शुद्धाशुद्धविवेचनशक्तिमित्यर्थः; (पक्षे) शोभना दृग्यस्या एतादृशी स्त्रियम् ६ अकारप्रभृतिवर्णादीनाम्; (पक्षे) ब्राह्मणवर्णादीनाम्. ७ ज्ञात्वा. ८ यथाशास्त्रम्. ९ प्रयोग करोति; (पक्षे) योजयति. १० पतनम् ११ गङ्गायाः. १२ पतञ्जलिनिर्मिते. १३ व्याकरणशास्त्रे. १४ मज्जनम्; (पक्षे) अभ्यासम् १५ वदन्ति. १६ जननादारभ्य. १७ मरणान्तं च. १८ माहेश्वरसूत्राणाम्. १९ दुष्प्रापा. २० पण्डितराजसभा. २१ अज्ञातधनुर्वेदमार्गाणाम् २२ कम्पते. २३ व्याकरणम्. २४ अध्ययनमकृत्वा. २५ बिसतन्तुना. २६ वर्षाणि. २७ यापयन्ति. २८ कर्णकठोरान्. २९ विष्णुस्तवम्. ३० कृत्वेति शेष ३१ अनुकुर्वन्ति. ३२ धूर्ता. ३३ गायकाना तालशब्दानुकरणमेतत्. ३४ तर्कसमुद्रः ३५ गौतम ; (पक्षे) क्षपा ददातीति क्षपाद' स न भवतीति तथाविध'. चन्द्र इत्यर्थः. ३६ अज्ञानेन, (पक्षे) राहुणा. ३७ कलाना निधिः, (पक्षे) चन्द्रः. ३८ अज्ञातपदार्थसमूहतत्त्वैः. ३९ जययुक्ति.

नधीततर्कविद्यैः ॥ २ ॥ मोहं रुणद्धि विमलीकुरुते च बुद्धिं सूते च संस्कृतपदव्यवहारशक्तिम् । शास्त्रान्तराभ्यसनयोग्यतया युनक्ति तर्कश्रमो न तनुते किमिहोपकारम् ॥ ३ ॥ ज्ञानाब्धिरक्षिचरणः कणभक्षकश्च श्रीपाक्षिलोऽप्युदयनः स च वर्धमानः । गङ्गेश्वरः शशधरो बहवश्च नव्या ग्रन्थैर्व्यरुन्ध्यत इमे हृदयान्धकारम् ॥ ४ ॥ प्रायः काव्यैर्गमितवयसः पाणिनीयाम्बुराशेः सारज्ञस्याप्यपरिकलितन्यायशास्त्रस्य पुंसः । वादारम्भे वदितुमनसो वाक्यमेकं सभायां प्रेह्वा जिह्वा भवति कियतीं पश्य कष्टामवस्थाम् ॥ ५ ॥

## नैयायिकनिन्दा ।

परामृशन्तो लिङ्गानि सर्वत्र व्यभिचारकाः । तार्किका यदि विद्वांसो विटैः किमपराध्यते ॥१॥ गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च । अमी समाघ्रातवितर्कवादाः समागताः फूंकटपादमिश्राः ॥ २ ॥ कर्कशतर्कविचारव्यग्रः किं वेत्ति काव्यहृदयानि । ग्राम्य इव कृषिविलग्नश्चञ्चलनयनावचोरहस्यानि ॥ ३ ॥ नैयायिकानां नलिनाम्बराणां जनुर्गतं रासभचिन्तयैव । तथापि वेश्यास्तनसंनिवेशस्तोतुः कवेः कोऽपि विशेष एव ॥४॥ न जिघ्रत्याम्नायं स्पृशति न तदङ्गान्यपि सकृत्पुराणं नादत्ते न गणयति किं च स्मृतिगणम् । पठञ्शुष्कं तर्कं परपरिभवार्थोक्तिभिरसौ नयत्यायुः सर्वं निहतपरलोकार्थयतनः ॥५॥ प्रयत्नैरस्तोकैः परिचितकुतर्कप्रकरणाः परं वाचो वश्यान्कतिपयपदौघान्विदधतः । सभायां वाचाटाः श्रुतिकटु रटन्तो घटपटान्न लज्जन्ते मन्दाः स्वयमपि तु जिह्रेति विबुधः ॥ ६ ॥ कर्मब्रह्मविचारणां विजहतो भोगापवर्गप्रदां घोषं कंचन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः । प्रत्यक्षं न पुनाति नापहरते पापानि पीलुच्छटा व्याप्तिर्नावति नैव पात्यनुमितिर्नो पक्षता रक्षति ॥ ७ ॥ हेतुः कोऽपि विशिष्टधीरनुमितौ न ज्ञानयुग्मं मेरुत्वाचो नेति च मोघवादमुखरा नैयायिकाश्चेद्बुधाः । मेषस्याण्डमियत्पलं बलिभुजो दन्ताः कियन्तस्तथेत्येवं संततचिन्तनैः श्रमजुषो न स्युः कथं पण्डिताः ॥ ८ ॥ साधु व्याकरणं हिताय विशदं काव्यं पिकीगीतवन्मीमांसा श्रुतितत्परा तदनुगं साङ्ख्यं सपातञ्जलम् । त्वं तु न्यायविशुद्धवैदिकविधिव्याकोपत्रौद्धागमव्याघाताय निगूढतर्कग्रहण क्रामोदमाधास्यसि ॥ ९ ॥ हे हे मित्र जिता मयातिबलिनो विप्रा धनं चार्जितं शेषेभ्यः शरयन्त्रदानमपि सत्संपादितं भूरिशः । ग्रन्थाश्चापि कृताः सुतर्कघटकाः शास्त्राणि संदूष्य वै सोऽहं तर्कविभूषणोऽत्र गहने धात्रा शृगालः कृतः ॥ १० ॥

१ अज्ञानम् २ रोधयति. नाशयतीत्यर्थः. ३ उत्पादयति. ४ योजयति. ५ गौतम.. ६ कणाद.. ७ बुद्धेरज्ञानम्. ८ अनभ्यस्त. ९ वक्रा. १० वेदम्. ११ वेदाङ्गानि. १२ नीरसम्. १३ बहुभि . १४ मूर्खा . १५ लज्जा प्राप्नोति. १६ कर्मचिन्तनं ब्रह्मचिन्तनं च. १७ परमाणुसमुदायः. १८ व्याप्तिविशिष्टपक्षधर्मताज्ञानविशिष्टः. १९ पूर्वोक्तगताशद्वयम्. २० त्वगिन्द्रियप्रत्यक्षः. २१ जल्पाकाः. २२ काकाः.

## मीमांसकप्रशंसा ।

भगवदनभ्युपगमनं दैवतचैतन्यनिह्नवश्चैषाम् । कर्मश्रद्धावर्धकतत्प्राधान्यप्रदर्शनायैव ॥ १ ॥ आगमरूपविचारिण्यधिकरणसहस्राशिक्षितविपक्षे । स्वामिनि जैमिनियोगिन्यपरज्यति हृदयमस्मदीयमिदम् ॥ २ ॥ शबरकुमारिलगुरवो मण्डनभवदेवपार्थ[2]सारथयः । अन्ये च विश्वमान्या जयन्ति संत्रायमाणतन्त्रास्ते ॥ ३ ॥ नैयायिका वा ननु शाब्दिका वा त्र[3]योशिरःसु श्रमशालिनो वा । वादाहवे[4] बिभ्रति जैमिनीयन्यायोपरोधे[5] सति मौनमुद्राम् ॥ ४ ॥ आदौ धर्मे प्रमाणं विविधविधिभिदाशेषतां च प्रयुक्तिं पौर्वापर्याधिकारौ तदनु बहुविधं चातिदेशं तथोहम् । बाधं तन्त्रं प्रसङ्गं नयमनयशतैः सम्यगालोचयद्भ्यो भिन्ना मीमांसकेभ्यो विदधति भुवि के सादर वेदरक्षाम् ॥ ५ ॥

## मीमांसकनिन्दा ।

ते मीमांसाशास्त्रलोकप्रसिद्धाः सर्वर्षीणां सेहिरे नैव सत्ताम् । चैतन्यस्यापह्नवं देवतानां चक्रुर्विश्वं नश्वरं मन्यमानाः ॥ १ ॥ मीमांसकाः कतिचिदत्र मिलन्ति वेदप्रामाण्यसाधनकृतोऽपि न तेऽभिवन्द्याः । उद्घोषितोऽप्युपनिषद्भिरशेषशेषी[7] ब्रह्मैव[8] नाभ्युपगतः पुरुषोत्तमो यैः ॥ २ ॥

## वैद्यप्रशंसा ।

गुरोरधीताखिलवैद्यविद्यः पीयूषपाणिः कुशलः क्रियासु । गतस्पृहो धैर्यधरः कृपालुः शुद्धोऽधिकारी भिषगीदृशः स्यात् ॥ १ ॥ रागादिरोगान्सततानुषक्तानशेषकायप्रसृतानशेषान् । औत्सुक्य[10]मोहा[11]रतिदा[12]ञ्जघान योऽपूर्ववैद्याय नमोऽस्तु तस्मै ॥२॥ अन्यानि शास्त्राणि विनोदमात्रं प्राप्तेषु वा तेषु न तैश्च किंचित् । चिकित्सितज्योतिषमन्त्रवादाः पदे पदे प्रत्ययमावहन्ति ॥ ३ ॥ माबोधि वैद्यकमथापि महामयेषु प्राप्तेषु यो भिषगिति प्रथितस्तमेव । आ[13]कारयत्यखिल एव विशेषदर्शी लोकोऽपि तेन भिषगेष न दूषणीयः ॥ ४ ॥ मस्ते[14] दुःसहवेदनाकवलिते मग्ने स्वरेऽन्तर्गलं तप्तायां ज्वरपावकेन च तनौ ता[15]न्ते हृषीकव्रजे[16] । दूने[17] बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः कः शक्तः कलितामयप्रशमनो वैद्यात्परो विद्यते ॥ ५ ॥ भ्रान्ता वेदान्तिनः किं पठथ शठतयाद्यापि चाद्वैतविद्यां पृथ्वीतत्त्वे लुठन्तो विमृशथ सततं कर्कशास्तार्किकाः किम् । वेदैर्नानागमैः किं ग्लपयथ हृदयं श्रोत्रियाः[18] श्रोत्रशूलै[19]र्वैद्यं सर्वानवद्यं[20] विचिनुत शरणं प्राणसंप्रीणनाय ॥ ६ ॥

---

१ लोपम् २ कृष्ण. ३ वेदत्रयी. ४ वादयुद्धे ५ न्यायरूपे प्रतिबन्धके. ६ लोपम्. ७ प्रतीतपदार्थैः सहाविचाल्य. ८ स एव ब्रह्मेति. ९ अमृत पाणौ यस्य स. अमृतवदवश्यमारोग्यद इत्यर्थः. १० अविचार्यकार्यप्रवृत्तिः ११ विचाराशक्ति १२ असतोषः. १३ आह्वयति १४ मस्तके. १५ म्लाने. १६ इन्द्रियसमूहे १७ खिन्ने. १८ वेदाध्यायिन. १९ कर्णकटुभि.. २० सर्वेषा मध्ये निर्दोषम्.

## कुवैद्यनिन्दा ।

वैद्यराज नमस्तुभ्यं यमराजसहोदर । यमस्तु हरति प्राणान्वैद्यः प्राणान्धनानि च ॥ १ ॥ वैद्यराज नमस्तुभ्यं क्षपिताशेषमानव । त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते ॥ २ ॥ चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः । नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥ ३ ॥ कषायैरुपवासैश्च कृतामुल्लाघतां[1] नृणाम् । निजौषधकृतां वैद्यो निवेद्य हरते धनम् ॥ ४ ॥ अज्ञातशास्त्रसद्भावान्[2]शास्त्रमात्रपरायणान् । त्यजेद्दूराद्भिषक्पाशान्[3]पाशान्वैवस्वतानिव[4] ॥ ५ ॥ मिथ्यौषधैर्हन्त मृषाकषायैरसह्यलेह्यैरयथार्थतैलैः । वैद्या इमे वञ्चितरुग्णवर्गाः[5] पिचण्डभाण्डं[6] परिपूरयन्ति ॥ ६ ॥ नटोऽपि दद्याद्गणकोऽपि दद्यात्संप्रार्थितः पाशुपतोऽपि दद्यात् । वैद्यः कथं दास्यति याचमानो यो मर्तुकामादपि हर्तुकामः ॥ ७ ॥ न धातोर्[7]विज्ञानं न च परिचयो वैद्यकनये न रोगाणां तत्त्वावगतिरपि नो वस्तुगुणधीः । तथाप्येते वैद्या इति तरलयन्तो[8] जडजनानसून्[9]मृत्योर्[10]भृत्या इव वसु[11] हरन्ते गदजुषाम्[12] ॥ ८ ॥ सत्कोणं लोलनेत्रं कुलयुवतिमुखं दृश्यते सानुकम्पं रण्डानामर्धलज्जान्वितमधिपुलकं स्पृश्यते पीनमङ्गम् । क्षीबानां खाद्यतेऽन्तश्चिरनिहितधनं काष्ठमूलाश्रितोयैः पूर्वा सिद्धा कलानां सकलगुणनिधिर्वैद्यविद्याभिवन्द्या ॥ ९ ॥

## गणकप्रशंसा ।

चतुरङ्गबलो राजा जगतीं वशमानयेत् । अहं पञ्चाङ्गबलवानाकाशं वशमानये ॥ १ ॥ एकासनस्था जलवायुभक्षा मुमुक्षवस्[13]त्यक्तपरिग्रहाश्च[14] । पृच्छन्ति तेऽप्यम्बरचारिचारं[15] दैवज्ञमन्ये किमुतार्थचित्ताः ॥ २ ॥ न दैवं न पित्र्यं च कर्मावसिद्ध्येन्न यत्रास्ति देशे ननु ज्योतिषज्ञः । न तारा न चारा नवानां ग्रहाणां न तिथ्यादयो वा यतस्तत्र बुद्धाः ॥ ३ ॥ दूतो न संचरति खे न चलेच्च वार्ता पूर्वं न जल्पितमिदं न च संगमोऽस्ति । व्योम्नि स्थितं रविशशिग्रहणं प्रशस्तं जानाति यो द्विजवरः स कथं न विद्वान् ॥ ४ ॥ असुखमथ सुखं वा कर्मणां पङ्क्तिवेलास्[16]वहह नियतमेते भुञ्जते देहभाजः । तदिह पुरत एव प्राह मौहूर्तिकश्चेत्कथय फलममीषामन्ततः किं ततः स्यात् ॥ ५ ॥ वृद्धिह्रासौ[17] कुमुदसुहृदः[18] पुष्पवन्तो[19]परागः[20] शुक्रादीनामुदयविलयावित्यमी सर्वदृष्टाः । आविष्कुर्वन्त्यखिलवचनेष्वत्र कुम्भीपुलाकन्यायाज्[21]ज्योतिर्नयगतिविदां निश्चलं मानभावम् ॥ ६ ॥ भानोः शीतकरस्य वापि भुजगग्रासे[22] पुरो निश्चिते तीर्थानामटनं जनस्य घटते तापत्रयोच्चाटनम् । दृष्टे प्रागवधारिते सति धृतेस्तुष्टेश्च लाभो भवेद्दृष्टे तु व्यसनेऽत्र[23] तत्परिहृतिः[24] कर्तुं जपाद्यैः क्षमा ॥ ७ ॥

१ नीरोगताम्. २ वास्तवानर्थान्. ३ कुत्सिता भिषजो भिषक्पाशास्तान्. ४ यमसबन्धिनः. ५ रोगिसमूह.. ६ उदरभाण्डम्. ७ पारदादे.. ८ भ्रामयन्तः ९ प्राणान्. १० यमस्य ११ द्रव्यम् १२ रोगिणाम्. १३ मोक्षेच्छवः. १४ त्यक्तः परिग्रहः कलत्रं यैस्ते. १५ आकाशसंचारिग्रहगतिम्. १६ परिपाककालेषु १७ क्षयवृद्धी १८ चन्द्रस्य. १९ सूर्याचन्द्रमसौ २० ग्रहणम्. २१ स्थालीपुलाकन्यायेन. २२ ग्रहणे. २३ दुःखे २४ परिहारः.

## कुगणकनिन्दा ।

गणिकागणकौ समानधर्मौ निजपञ्चाङ्गनिदर्शकावुभौ । जनमानसमोहकारिणौ तौ विधिना वित्तहरौ विनिर्मितौ ॥ १ ॥ विलिखति सदसद्वा जन्मपत्रं जनानां फलति यदि तदानीं दर्शयत्यात्मदाक्ष्यम् । न फलति यदि लग्नं द्रष्टुरेवाह मोह हरति धनमिहैवं हन्त दैवज्ञपाशः ॥ २ ॥ प्रमोदे खेदे वाप्युपनमति पुंसो विधिवशान्मयैवं प्रागेवाभिहितमिति मिथ्या कथयति । जनानिष्टानिष्टाकलनपरिहारैकनिरतानसौ मेषादीनां परिगणनयैव भ्रमयति ॥ ३ ॥ ज्योतिःशास्त्रमहोदधौ बहुतरोत्सर्गापवादात्मभिः कल्लोलैर्निबिडे कणान्कतिपयाँल्लब्ध्वा कृतार्था इव । दीर्घायुः सुतसंपदादिकथनैर्दैवज्ञपाशा इमे गेहं गेहमनुप्रविश्य धनिना मोहं मुहुः कुर्वते ॥ ४ ॥

---

## पौराणिकनिन्दा ।

पौराणिकानां व्यभिचारदोषो नाशङ्कनीयः कृतिभिः कदाचित् । पुराणकर्ता व्यभिचारजातस्तस्यापि पुत्रो व्यभिचारजातः ॥ १ ॥

---

## पुरोहितनिन्दा ।

पुरीषस्य च रोषस्य हिंसायास्तस्करस्य च । आद्याक्षराणि संगृह्य वेधा चक्रे पुरोहितम् ॥ १ ॥

---

## कायस्थनिन्दा ।

काकाल्लौल्यं यमात्क्रौर्यं स्थपतेर्दृढघातिताम् । आद्याक्षराणि संयोज्य कायस्थो निर्मितः पुरा ॥ १ ॥ कायस्थेनोदरस्थेन मातुर्मांसं न भक्षितम् । मा जानीहि दयालुत्वं तत्र हेतुरदन्तता ॥ २ ॥ वाचयति नान्यलिखितं लिखितमनेनापि वाचयति नान्यः । अयमपरोऽस्य विशेषः स्वयमपि लिखित स्वयं न वाचयाति ॥ ३ ॥

---

## सज्जनप्रशंसा ।

अहो किमपि चित्राणि चरित्राणि महात्मनाम् । लक्ष्मीं तृणाय मन्यन्ते तद्भारेण नमन्त्यपि ॥ १ ॥ नाल्पीयसि निबध्नन्ति पदमुन्नतचेतसः । येषां भुवनलाभेऽपि निःसीमानो मनोरथाः ॥ २ ॥ अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् । अहो सुमनसां वृत्तिर्वामदक्षिणयोः समा ॥ ३ ॥ वज्रादपि कठोराणि मृदूनि कुसुमादपि । लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ४ ॥ गवादीनां पयोऽन्येद्युः सद्यो वा जायते दधि । क्षीरोदधेस्तु

---

१ स्वचातुर्यम्. २ कुदैवज्ञः. ३ हर्षे. ४ भ्रम करोति. ५ कुदैवज्ञाः. ६ लक्ष्मीभारेण. ७ उदारचेतसः. ८ अन्यस्मिन्दिवसे.

नाद्यापि महतां विकृतिः कुतः ॥ ५ ॥ गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा । पापं तापं च दैन्यं च हन्ति सन्तो महात्मनः ॥ ६ ॥ छायावन्तो गतव्यालाः स्वारोहाः फलदायिनः । मार्गद्रुमा महान्तश्च परेषामेव भूतये ॥ ७ ॥ संपदो महतामेव महतामेव चापदः । वर्धते क्षीयते चन्द्रो न तु तारागणः क्वचित् ॥८॥ अपकुर्वन्नपि प्रायः प्राप्नोति महतः फलम् । और्वं दधतमेवाग्निं समर्पयति सागरः ॥ ९ ॥ महतां प्रार्थनेनैव विपत्तिरपि शोभते । दन्तभङ्गो हि नागानां श्लाघ्यो गिरिविदारणे ॥ १० ॥ गुणग्रामाभिसंवादि नामापि हि महात्मनाम् । यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ॥११॥ वहन्ति शोकशङ्कुं च कुर्वन्ति च यथोचितम् । कोऽप्येष महतां हन्त गाम्भीर्यानुगुणो गुणः ॥ १२॥ श्लाघ्यः स एव गुणवान्रागद्वेषबहिष्कृतः । भूतार्थकथने यस्य स्थेयस्येव सरस्वती ॥ १३ ॥ नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी । गुणी च गुणरागी च विरलः सरलो जनः ॥ १४ ॥ महात्मानोऽनुगृह्णन्ति भजमानान्रिपूनपि । सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥ १५ ॥ मुखेन नोद्गिरत्यूर्ध्वं हृदयेन न यात्यधः । जरयत्यन्तरे साधुर्दोषं विषमिवेश्वरः ॥ १६ ॥ विकृतिं नैव गच्छन्ति सङ्गदोषेण साधवः । आवेष्टितं महासर्पैश्चन्दनं न विषायते ॥१७॥ मान्या एव हि मान्यानां मान कुर्वन्ति नेतरे । शंभुर्बिभर्ति मूर्धेन्दुं स्वर्भानुस्तं जिघृक्षति ॥ १८ ॥ सुजनं व्यजनं मन्ये चारुवंशसमुद्भवम् । आत्मानं च परिभ्राम्य परतापनिवारणम् ॥ १९ ॥ उदये सविता रक्तो रक्तश्चास्तमये तथा । संपत्तौ च विपत्तौ च महतामेकरूपता ॥ २० ॥ आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च । महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ २१ ॥ सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम् । असद्भिः शपथेनापि जले लिखितमक्षरम् ॥ २२ ॥ हरेः पदाहतिः श्लाघ्या न श्लाघ्यं खररोहणम् । स्पर्धापि विदुषा युक्ता न युक्ता मूर्खमित्रता ॥ २३ ॥ साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम् । न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया ॥ २४ ॥ नारिकेलसमाकारा दृश्यन्तेऽपि हि सज्जनाः । अन्ये बदरिकाकारा बहिरेव मनोहराः ॥ २५ ॥ स्नेहच्छेदेऽपि साधूनां गुणा नायान्ति विक्रियाम् । भङ्गेनापि मृणालानामनुबध्नन्ति तन्तवः ॥ २६ ॥ परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम् । धर्मे स्वीयमनुष्ठानं कस्यचित्सुमहात्मनः ॥ २७ ॥ संपत्सु महतां चित्तं भवत्युत्पलकोमलम् । आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ २८ ॥ पतति व्यसने दैवाद्दारुणे दारुणात्मनि । संवर्मयति वज्रेण धैर्येण महतां मनः ॥ २९ ॥ सन्तः स्वतः प्रकाशन्ते गुणा न परतो नृणाम् । आमोदो नहि कस्तू-

१ विकार. २ स्तुत्य. ३ पर्वतभेदने. ४ जीर्ण करोति. ५ राहु. ६ ग्रहीतुमिच्छति. ७ वेणुः; (पक्षे) कुलम्. ८ सिंहस्य. ९ पादताडनम् १० विकारम्. ११ सबन्ध कुर्वन्ति. १२ काठिन्यम्.

र्याः शपथेन विभाव्यते ॥ ३० ॥ पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः। प्रायेण साधुवृत्तानामस्थायिन्यो[1] विपत्तयः ॥ ३१ ॥ सकृत्कन्दुकपातेनोत्पतत्यार्यः पतन्नपि। तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥ ३२ ॥ दन्तिदन्तसमानं हि निःसृतं महतां वचः। कूर्मग्रीवेव नीचानां पुनरायाति याति च ॥ ३३ ॥ श्लोकस्तु श्लोकतां याति यत्र तिष्ठन्ति साधवः। लकारो[2] लुप्यते तत्र यत्र तिष्ठन्त्यसाधवः ॥ ३४ ॥ किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः। न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥ ३५ ॥ काकैः सह प्रवृद्धस्य कोकिलस्य कला[3] गिरः। खलसङ्गेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः ॥ ३६ ॥ यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः। चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ ३७ ॥ विवेकः सह संयत्या[4] विनयो विद्यया सह। प्रभुत्वं प्रश्रयोपेतं चिह्नमेतन्महात्मनाम् ॥ ३८ ॥ उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम्[5]। सुजनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः ॥ ३९ ॥ निर्गुणेष्वपि सत्त्वेषु[6] दया कुर्वन्ति साधवः। न हि संहरते ज्योत्स्नां[7] चन्द्रश्चाण्डालवेश्मनि[8] ॥ ४० ॥ उपकारिषु यः साधुः साधुत्वे तस्य को गुणः। अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ ४१ ॥ हृदयानि सतामेव कठिनानीति मे मतिः। खलवाग्विशिखैस्तीक्ष्णैर्भिद्यन्ते न मनाग्यतः[9] ॥ ४२ ॥ अपेक्षन्ते न च स्नेहं[10] न पात्रं[11] न देशान्तरम्[12]। सदालोकहितासक्ता[13] रत्नदीपा इवोत्तमाः ॥ ४३ ॥ ब्रूतेऽन्यस्यासतोऽप्यार्यो गुणान्दोषांश्च दुर्जनः। तुल्येऽप्यसत्त्वे किं त्वेको गच्छेदूर्ध्वमधोऽपरः ॥ ४४ ॥ सन्तो मनसि कृत्वैव प्रवृत्ताः कृत्यवस्तुनि। कस्य प्रतिशृणोति स्म कमलेभ्यः श्रियं रविः ॥ ४५ ॥ आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः। परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम् ॥ ४६ ॥ सन्त एव सतां नित्यमापदुद्धरणक्षमाः। गजानां पङ्कमग्नानां गजा एव धुरंधराः ॥ ४७ ॥ नूनं दुग्धाब्धिमन्थोत्थाविमौ सुजनदुर्जनौ। किं त्विन्दोः सोदरः पूर्वः कालकूटस्य चेतरः ॥ ४८ ॥ गोत्र[14]स्थितिं न मुञ्चति सदा सन्नतिमाश्रिताः[15]। उदन्वन्तश्च[16] सन्तश्च महासत्त्वतया[17] तथा ॥ ४९ ॥ अपूर्वः कोऽपि कोपाग्निः सज्जनस्येतरस्य[18] च। एकस्य शाम्यति स्नेहाद्वर्धतेऽन्यस्य वारितः ॥ ५० ॥ विगृहीतः पदाक्रान्तो भूयोभूयश्च खण्डितः। माधुर्यमेवावहति सुश्लोक इव सज्जनः ॥ ५१ ॥ प्रकृतिप्रत्ययोपेतः सद्वृत्तः साधुसंमतः। अर्थार्पणसमर्थश्च सुश्लोक इव सज्जनः ॥ ५२ ॥ गुणोऽपि नूनं दोषाय दुषिधातोः खलस्य च। सन्मार्गसिद्धये वृद्धिर्मृजेः साधुजनस्य च ॥ ५३ ॥ मुञ्चत-

१ क्षणिका. २ लकारलोपाच्छोक एवावतिष्ठते ३ अव्यक्तमधुरा ४ विनयः ५ निष्कपटम्. ६ प्राणिषु ७ चन्द्रकान्तिम्. ८ चाण्डालगृहे. ९ किंचिदपि. १० मैत्रीम्; (पक्षे) घृतादिम्. ११ योग्यताम्; (पक्षे) भाण्डम्. १२ अवस्थान्तरम्, (पक्षे) सूत्रवर्तिम्. १३ लोकाना हित तस्मिन्नासक्ता; (पक्षे) आलोक. प्रकाशस्तदेव हित तस्मिन्नासक्ता. १४ कुलमर्यादाम्, (पक्षे) पर्वतस्थितिम् १५ सन्नमनम् १६ समुद्राः. १७ प्राणिनः; (पक्षे) धैर्यम् १८ खलस.

श्रापलरसं प्रस्थिताः पावने पथि । घना इवार्द्रहृदयाः सन्तो जीवनहेतवः ॥ ५४ ॥ एतदर्थं कुलीनानां नृपाः कुर्वन्ति संग्रहम् । आदिमध्यावसानेषु न ते गच्छन्ति विक्रियाम् ॥ ५५ ॥ धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः । प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥ ५६ ॥ साधुरेव प्रवीणः स्यात्सद्गुणामृतवर्णने । नवचूताङ्कुरास्वादकुशलः कोकिलः किल ॥ ५७ ॥ उत्तमः क्लेशविक्षोभं क्षमः सोढुं न हीतरः । मणिरेव महाशाणघर्षणं न तु मृत्कणः ॥ ५८ ॥ सज्जना एव साधूनां प्रथयन्ति गुणोत्करम् । पुष्पाणां सौरभं प्रायस्तनुते दिक्षु मारुतः ॥ ५९ ॥ स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् । न त्यजन्ति रुतं मञ्जु काकसंपर्कतः पिकाः ॥ ६० ॥ संपत्तौ कोमलं चित्तं साधोरापदि कर्कशम् । सुकुमारं मधौ पत्रं तरोः स्यात्कठिनं शुचौ ॥ ६१ ॥ स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् । कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ॥ ६२ ॥ अप्यापत्समयः साधोः प्रयाति श्लाघनीयताम् । विधोर्विधुंतुदास्कन्दविपत्कालोऽपि सुन्दरः ॥ ६३ ॥ विना परीक्षां नो तत्त्वं प्रसिद्धं ज्ञायते सतः । स्ववर्मबन्धान्नो शुद्धिर्ज्ञायते कर्षणं विना ॥ ६४ ॥ दुष्टदुर्जनदौरात्म्यैः सज्जने रज्यते जनः । आरुह्य पर्वतं पान्थः सानौ निर्वृतिमेत्यलम् ॥ ६५ ॥ क्षणक्षयिणि सापाये भोगे रज्यन्ति नोत्तमाः । संत्यज्याम्भोजकिञ्जल्कं न प्रार्थयति शैवलम् ॥ ६६ ॥ उत्तमं सुचिरं नैव विपदोऽभिभवन्त्यलम् । राहुग्रसनसंभूतक्षणो विच्छाययेद्विधुम् ॥ ६७ ॥ प्रायः स्वभावं मुञ्चन्ति सन्तः संसर्गतोऽसताम् । चण्डाश्चण्डातपात्पादा हिमांशोरमृतसृजः ॥ ६८ ॥ तुल्यं परोपतापित्वं क्रुद्धयोः साधुनीचयोः । न दाहे ज्वलतोर्भिन्नं चन्दनेन्धनयोः क्वचित् ॥ ६९ ॥ महतां तादृशं तेजो यत्र शाम्यन्त्यनौजसः । अस्तं यान्ति प्रकाशेन तारका हि विवस्वतः ॥ ७० ॥ आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु । व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥ ७१ ॥ तीक्ष्णा नारुंतुदा बुद्धिः कर्म शान्तं प्रतापवत् । नोपतापि मनः सोष्म वागेका वाग्मिनः सतः ॥ ७२ ॥ आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न संपत्सु । अगुरोस्तथा न गन्धः प्रागस्ति यथाग्निपतितस्य ॥ ७३ ॥ शून्येऽपि च गुणवत्तामातन्वानः स्वकीयगुणजालैः । विवराणि मुद्रयन्द्रागूर्णायुरिव सज्जनो जयति ॥ ७४ ॥ तरुमूलादिषु निहितं जलमाविर्भवति पल्लवाग्रेषु । निभृतं यदुपक्रियते तदपि महान्तो वहन्त्युच्चैः ॥ ७५ ॥ संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् । तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ ७६ ॥ दुर्जनवचनाङ्गारैर्दग्धोऽपि न विप्रियं वदत्यार्यः । अगुरुरपि दह्यमानः स्वभावगन्धं परित्यजति किं नु ॥ ७७ ॥ अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः । परपरिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा ॥ ७८ ॥ पतितोऽपि राहुवदने

१ व्यक्ता भवति. २ लूता. ३ एकान्ते. ४ श्रेष्ठम्. ५ अनिष्टम्. ६ दूषणम्. ७ शोभिता.

[1]तरणि[2]र्बोधयति पद्मखण्डानि । भवति वि[3]पद्यपि महतामङ्गीकृतवस्तुनिर्वाहः ॥ ७९ ॥ छिन्नोऽपि रोहति तरुश्चन्द्रः क्षीणोऽपि वर्धते लोके । इति विमृशन्तः सन्तः संतप्यन्ते न लोकेऽस्मिन् ॥ ८० ॥ वासरगम्य[4]मनूरोरम्बरमवनी च वामनैकपदा । जलधिरपि पोत[5]लङ्घ्यः सतां मनः केन तुलयामः ॥ ८१ ॥ गौरीपतेर्गरीयो गरलं गत्वा गले जीर्णम् । जीर्यति कर्णे महतां दुर्वादो नाल्पमपि विशति ॥ ८२ ॥ निजप[6]दगतिगुणरञ्जितजगता करिणां च सत्कवीनां च । वहतामपि [7]महिमानं शोभायै सज्जना एव ॥ ८३ ॥ [8]बाणं हरिरिव कुरुते सुजनो वहु[9]दोषमप्य[10]दोपमिव । [11]यावद्दोषं [12]जाग्रति [13]मलिम्लुचा इव पुनः पिशुनाः ॥ ८४ ॥ [14]महतोः [15]सुवृत्तयोः सखि [16]हृदयग्रहयोग्ययोः समस्थितयोः । सज्जनयोः स्तनयोरपि निरन्तरं संगतं भवति ॥ ८५ ॥ [17]महतोऽपि हि विश्वासान्[18]महाशया दधति नाल्पमपि [19]लघवः । संवृणुतेऽद्रीनुदधिर्निदाघनद्यो न भेकमपि ॥ ८६ ॥ वैगुण्येऽपि हि महता विनिर्मितं भवति कर्म शोभायै । दुर्वहनितम्बमन्थरमपि हरति नितम्बिनीनृत्यम् ॥ ८७ ॥ सज्जन एव हि विद्या शोभायै भवति दुर्जने मोघा । न विदूरदर्शनतया कैश्चिदुपादीयते गृध्रः ॥ ८८ ॥ भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य । वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्द्योतः ॥ ८९ ॥ वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः । करण परोपकरणं येषां केषां न ते वन्द्याः ॥ ९० ॥ उपकारमेव तनुते विपद्गतः सद्गुणो महताम् । मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥ ९१ ॥ गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम् । तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ॥ ९२ ॥ अनवरतपरोपकरणव्यग्रीभवदमलचेतसां महताम् । आपातकाटवानि स्फुरन्ति वचनानि भेषजानीव ॥ ९३ ॥ न भवति स भवति न चिरं भवति चिरं चेत्फले विसंवादी । कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ ९४ ॥ इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः । तद्वत्सज्जनमैत्री विपरीतानां च विपरीता ॥ ९५ ॥ [20]परिचरितव्याः सन्तो यद्यपि कथयन्ति नो सदुपदेशम् । यास्तेषां [21]स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥ ९६ ॥ सुजनो न याति विकृतिं परहितनिरतो विनाशकालेऽपि । छेदेऽपि चन्दनतरुः [22]सुरभयति मुखं [23]कुठारस्य ॥९७॥ अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः । हेम्नः कठिनस्यापि द्रवणोपायो-

---

१ सूर्यः. २ विकासयति ३ संकटकाले. ४ अरुणस्य. ५ नौका. ६ चरणाः; (पक्षे) सुप्तिङन्तज्ञानम्. ७ महत्परिमाणम्; (पक्षे) प्रतिष्ठाम् ८ वाणासुरम् ९ गुणभिन्नो दोषः; (पक्षे) बहुतरबाहुशालिनम्. १० दोषशून्यम्, (पक्षे) बाहुरहितम् ११ समग्रदोषम्, (पक्षे) यावद्रात्रिम् १२ तद्विषयकगवेषणावन्तो भवन्ति; (पक्षे) निद्राभाववन्तो भवन्ति १३ तस्कराः. १४ श्रेष्ठयोः; (पक्षे) महापरिमाणशालिनोः १५ सुचरितयोः; (पक्षे) सुवर्तुलयोः. १६ आलिङ्गनयोग्ययोः; (पक्षे) वक्षःस्थितिशालिनोः. १७ श्रेष्ठानपि, (पक्षे) महापरिमाणानपि १८ श्रेष्ठाः, (पक्षे) गभीराः. १९ नीचाः; (पक्षे) स्वल्पपरिमाणशालिनः. २० सेव्याः. २१ स्वैरालापाः. २२ सुगन्धयति. २३ परशोः.

ऽस्ति न तृणानाम् ॥ ९८ ॥ अनुकुरुतः[1] खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः । विदधाति[2] रन्ध्रमेको गुणवानन्यस्तु[3] पिदधाति[4] ॥ ९९ ॥ आस्तामन्यत्सुजनाः परोपकारैककरणदुर्ललिताः । संतापितपिशुनेषु स्वगुणेष्वपि हन्त खिद्यन्ते ॥ १०० ॥ शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो[5] मेघः । नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥१०१॥ यदमी दशन्ति दशना रसना तत्स्वादु सौख्यमनुभवति । प्रकृतिरियं विमलानां क्लिश्यन्ति यदन्यकार्येषु ॥ १०२ ॥ तदपकृतं विधिनार्थिषु यत्सन्तः स्वल्पसंपदो विहिताः । तुच्छे पयसि घनानां सीदत्यतीव जीवलोकोऽयम् ॥ १०३ ॥ अमृतं किरति[6] हिमांशुर्विषमेव फणी समुद्गिरति । गुणमेव वक्ति साधुर्दोषमसाधुः प्रकाशयति ॥ १०४ ॥ गुणिनामपि निजरूपप्रतिपत्तिः परत एव संभवति । स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥ १०५ ॥ उत्कर्षवान्निजगुणो[7] यथा यथा याति कर्णमन्यस्य[8] । धनुरिव सुवंशजन्मा[9] तथा तथा सज्जनो नमति ॥ १०६ ॥ दुर्जनवदनविनिर्गतवचनभुजंगेन सज्जनो दष्टः । तद्विषनाशनिमित्तं साधुः संतोषमौषधं पिबति ॥ १०७ ॥ कमठकुलाचलदिग्गजफणिपतिविधृतापि चलति वसुधेयम् । प्रतिपन्नममलमनसां न फलति पुंसां युगान्तेऽपि ॥ १०८ ॥ अन्तःकटुरपि लघुरपि सद्वृत्तं यः पुमान्न संत्यजति । स भवति सद्यो वन्द्यः सर्षप इव सर्वलोकस्य ॥ १०९ ॥ अद्यापि दुर्निवारं स्तुतिकन्या[10] भजति कौमारम्[11] । सद्भ्यो न रोचते सासन्तोऽप्यस्यै न रोचन्ते ॥ ११० ॥ मूकः परापवादे परदारनिरीक्षणेऽप्यन्धः । पङ्गुः परधनहरणे स जयति लोकत्रये पुरुषः ॥ १११ ॥ पेशलमपि[12] खलवचनं दहतितरां मानसं सुतत्त्वविदाम् । परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥ ११२ ॥ भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे । चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥ ११३ ॥ उपरि करवाल[13]धाराकाराः क्रूरा भुजंगमपुंगवाः । अन्तः साक्षाद्द्राक्षादीक्षागुरवो जयन्ति केऽपि जनाः ॥११४॥ स्वस्थानादपि विचलति मज्जति जलधौ च नीचमपि भजते । निजपक्षरक्षणमनाः सुजनो मैनाकशैल इव ॥ ११५ ॥ दुर्जनसहवासादपि शीलोत्कर्षं न सज्जनस्त्यजति । प्रतिपर्व तपनवासी निःसृतमात्रः शशी शीतः ॥ ११६ ॥ विप्रियमप्याकर्ण्य ब्रूते प्रियमेव सर्वदा सुजनः । क्षारं पिबति पयोधेर्वर्षत्यम्भोधरो मधुरमम्भः ॥११७॥ खलसख्यं प्राङ्मधुरं वयोऽन्तराले निदाघदिनमन्ते । एकादिमध्यपरिणतिरमणीया साधुजनमैत्री ॥ ११८ ॥ न विमोचयितुं शक्यः क्षमां महान्मोचितो यदि कथंचित् । मन्दरगिरिरिव हि तलं निवर्तते ननु स समवाप्य ॥ ११९ ॥ स्वाधीनैव समृद्धिर्ज-

---

१ अनुकरणं कुरुत. २ करोति. ३ सूत्रयुक्त; (पक्षे) विद्याविनयादिगुणयुक्त. ४ आच्छादयति. ५ शब्दरहितः. ६ वर्षति. ७ रज्जुः; (पक्षे) विनयादि.. ८ कर्णप्रदेशे; (पक्षे) श्रवणतायाम्. ९ वेणुः; (पक्षे) कुलम्. १० स्तुतिरेव कन्या. ११ कुमारिकात्वम्. १२ कोमलम्. १३ खड्गम्.

नोपजीव्यत्वमुच्छ्र्यच्छाया । सत्पुंसो मरुभूरिव जीवनमात्रं समाशास्यम् ॥ १२० ॥ सर्वस्य सर्वदापि स्पर्शनयोगेन तापमपनेतुम् । सुजनस्य व्यजनस्य च शक्तिमसंगृह्णतः पश्य ॥ १२१ ॥ किं मधुना किं विधुना किं सुधया[1] किं च वसुधयाखिलया । यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयोरयनम्[2] ॥ १२२ ॥ किमपेक्ष्य फलं पयोधरान्ध्वनतः[3] प्रार्थयते मृगाधिपः । प्रकृतिः[4] खलु सा महीयसः सहते नान्यसमुन्नतिं[5] यया ॥ १२३ ॥ सावलेपमुपलिप्सिते परैरभ्युपैति विकृतिं रजस्यपि । अर्थितस्तु न महान्समीहते जीवितं किमु धनं धनायितुम् ॥१२४॥ वचनैरसतां[6] महीयसो न खलु व्येति गुरुत्वमुद्धतैः । किमपैति रजोभिरौर्वैः[7] रवकीर्णस्य[8] मणेर्महार्घता ॥१२५॥ प्रकटान्यपि नैपुणं[9] महत्परवाच्यानि[10] चिराय गोपितुम् । विवरीतुमथात्मनो गुणान्भृशमाकौशलमार्यचेतसाम् ॥ १२६ ॥ किमिवाखिललोककीर्तितं कथयत्यात्मगुणं महामनाः । वदिता[11] न लघीयसोऽपरः स्वगुणं तेन वदत्यसौ स्वयम् ॥ १२७ ॥ विसृजन्त्यविकत्थिनः[12] परे विषमाशीविषवन्नराः[13] क्रुधम् । दधतोऽन्तर[14]सारत्पतां ध्वनिसाराः पटहा इवेतरे ॥ १२८ ॥ जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः । विजितेन जितस्य दुर्मतेर्मतिमद्भिः सह कैर्विरुध्यते ॥ १२९ ॥ इयमुन्नतसत्त्वशालिनां महतां कापि कठोरचित्तता । उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ १३० ॥ आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरे जने । छेदतापननिघर्षताडनैरन्यभाव[15]मुपयाति काञ्चनम्[16] ॥ १३१ ॥ चातकस्त्रिचतुरान्पयःकणान्याचते जलधरं पिपासया । सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥ १३२ ॥ दोषजातमवधीर्य मानसे धारयन्ति गुणमेव सज्जनाः । क्षारभावमपनीय गृह्णते वारिधेः सलिलमेव वारिदाः ॥ १३३ ॥ सज्जनस्य हृदयं नवनीतं यद्वदन्ति कवयस्तदलीकम् । अन्यदेहविलसत्परितापात्सज्जनो द्रवति नो नवनीतम् ॥ १३४ ॥ तुङ्गात्मना तुङ्गतराः समर्था मनोरथान्पूरयितुं न नीचाः । धाराधरा एव धराधराणां निदाघदाहं शमितुं[17] न नद्यः ॥ १३५ ॥ प्रकाममभ्यस्यतु नाम विद्या सौजन्यमभ्यासवशादलभ्यम् । कर्णौ सपत्न्यः प्रविशालयेयुर्विशालयेदक्षियुगं न कोऽपि ॥ १३६ ॥ सन्तोऽपि सन्तः क्व किरन्तु तेजः क्व नु ज्वलन्तु क्व तनुं प्रथन्ताम् । विधाय रुद्धा न तु वेधसैव ब्रह्माण्डकोणे घटदीपकल्पाः ॥ १३७ ॥ प्रसादमाधुर्यगुणोपपन्ना यत्नादनौचित्यपराङ्मुखानाम् । अर्थाः कवीनामिव सज्जनानां सर्वस्य सर्वावसरोपयोगाः ॥ १३८॥ वनेऽपि सिंहा मृगमांसभक्षिणो बुभुक्षिता नैव तृणं चरन्ति । एवं कुलीना व्यसनाभिभूता[18] न नीचकर्माणि समाचरन्ति ॥ १३९ ॥

---

१ अमृतेन २ स्थानम् ३ शब्दान्कुर्वत. ४ स्वभाव ५ उत्कर्षम्. ६ निष्ठुरैः ७ भौमैः. ८ छन्नस्य ९ कौशलम्. १० परदूषणानि ११ वक्ता. १२ अनात्मश्लाघिन. १३ क्रूरसर्पवत्. १४ अभ्यन्तरे. १५ विकृतिम् १६ सुवर्णम्. १७ क्षमयितुम्. १८ सफलव्यापाराः.

अहो महत्त्वं महतामपूर्वं[1] विपत्तिकालेऽपि परोपकारः । यथास्यमध्ये[2] पतितोऽपि राहोः कलानिधिः पुण्यचयं[3] ददाति ॥ १४० ॥ पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः । नादन्ति सस्यं[4] खलु वारिवाहाः[5] परोपकाराय सतां विभूतयः[6] ॥ १४१ ॥ रत्नाकरः किं कुरुते स्वरत्नैर्विन्ध्याचलः किं करिभिः करोति । श्रीखण्डखण्डैर्मलयाचलः किं परोपकाराय सतां विभूतयः ॥ १४२ ॥ श्लाघ्यः स एको भुवि मानवानां स उत्तमः सत्पुरुषः स धन्यः । यस्यार्थिनो वा शरणागता वा नाशाभिभङ्गा विमुखाः प्रयान्ति ॥ १४३ ॥ सन्तस्तृणोत्सारणमुत्तमाङ्गात्[7]सुवर्णकोट्यर्पणमामनन्ति । प्राणव्यये वापि कृतोपकाराः खलाः परे वैरमिवोद्वहन्ति ॥ १४४ ॥ कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव । मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव ॥ १४५ ॥ क्षारं जलं वारिमुचः पिबन्ति तदेव कृत्वा मधुरं वमन्ति । सन्तस्तथा दुर्जनदुर्वचांसि पीत्वा च सूक्तानि समुद्गिरन्ति ॥ १४६ ॥ अयं स्वभावः स्वत एव यत्परश्रमापनोदप्रवणं महात्मनाम् । सुधांशुरेषः स्वयमर्ककर्कशप्रभाभितप्तामवति क्षितिं किल ॥ १४७ ॥ कर्णे जडानां वचनप्रपञ्चान्महात्मनः क्वापि न दूषयन्ति । भुजंगमानां गरलप्रसङ्गान्नापेयतां यान्ति महासरांसि ॥ १४८ ॥ अपांनिधिं वारिभिरर्चयन्ति दीपेन सूर्यं प्रतिबोधयन्ति । ताभ्यां तयोः किं परिपूर्णता स्याद्भक्त्या हि तुष्यन्ति महानुभावाः ॥ १४९ ॥ दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविनिश्चयाय । परोपकाराय वचांसि यस्य वन्द्यस्त्रिलोकीतिलकः[8] स एव ॥ १५० ॥ न दुर्जनानामिह कोऽपि दोषस्तेषां स्वभावो हि गुणासहिष्णुः । द्वेष्येव केषामपि चन्द्रखण्डविपाण्डुरा पुण्ड्रकशर्करापि ॥ १५१ ॥ किं चन्द्रमाः प्रत्युपकारलिप्सया करोति गोभिः कुमुदावबोधनम् । स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम् ॥ १५२ ॥ विपदि धैर्यमथाभ्युदये[9] क्षमा सदसि वाक्पटुता[10] युधि विक्रमः । यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं[11] हि महात्मनाम् ॥ १५३ ॥ अविरतं परकार्यकृता सतां मधुरिमातिशयेन वचोऽमृतम् । अपि च मानसमम्बुनिधिर्यशो विमलशारदपार्वणचन्द्रिका ॥ १५४ ॥ यदि दहत्यनलोऽत्र किमद्भुतं यदि न गौरवमद्रिषु किं ततः । लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥ १५५ ॥ आपद्गतः खलु महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् । कालागुरुर्दहनमध्यगतः समन्ताल्लोकोत्तरं परिमलं प्रकटीकरोति ॥ १५६ ॥ यः प्रीणयेत्सुचरितैः पितरं स पुत्रो यद्भर्तुरेव हितमिच्छति तत्कलत्रम् । तन्मित्रमापदि सुखे च समक्रियं यदेतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ १५७ ॥ प्रेमैव मास्तु यदि चेत्पथि केन सार्धं तेनापि चेद्गुणवता न

---

१ अलौकिकम्. २ मुखमध्ये. ३ वृद्धिम् ४ धान्यम्. ५ मेघाः. ६ ऐश्वर्याणि. ७ शिरसः. ८ त्रिलोक्या तिलको भूषणभूत.. ९ उदयकाले. १० वक्तृत्वशक्ति. ११ स्वभावसिद्धम्.

प्रेमं कदाचित्। तेनापि चेद्भवतु मास्तु कदापि भङ्गो भङ्गोऽपि चेद्भवतु वश्यमवश्यमायुः ॥ १५८ ॥ चन्द्रः क्षयी प्रकृतिवक्रतनुर्जडात्मा दोषाकरः स्फुरति मित्रविपत्तिकाले। मूर्ध्ना तथापि विधृतः परमेश्वरेण नैवाश्रितेषु महतां गुणदोषशङ्का ॥ १५९ ॥ दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रावसानसमये विहितोदयोऽपि। चन्द्रस्तथापि हरवल्लभतामुपैति नैवाश्रितेषु महतां गुणदोषशङ्का ॥ १६० ॥ लज्जागुणौघजननीं जननीमिव स्वामत्यन्तशुद्धहृदयामनुवर्तमानाम्। तेजस्विनः सुखमसूनपि संत्यजन्ति सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ १६१ ॥ अब्धौ विधौ वधुमुखे फणिना निवासे स्वर्गे सुधा वसति वै विबुधा वदन्ति। क्षारं क्षयी पतिमृतं गरलं पतन्तं कण्ठे सुधा वसति वै खलु सज्जनानाम् ॥ १६२ ॥ सत्पूरुषः खलु हिताचरणैरमन्दमानन्दयत्यखिललोकमनुक्त एव। आराधितः कथय केन करैरुदारैरिन्दुर्विकाशयति कैरविणीकुलानि ॥ १६३ ॥ दाता न दापयति दापयिता न दत्ते यो दानदापनपरो मधुरं न वक्ति। दानं च दापनमथो मधुरा च वाणी त्रीण्यप्यमूनि खलु सत्पुरुषे वसन्ति ॥ १६४ ॥ केनाञ्जितानि नयनानि मृगाङ्गनानां को वा करोति रुचिराङ्गरुहान्मयूरान्। कश्चोत्पलेषु दलसंनिचयं करोति को वा करोति विनयं कुलजेषु पुंसु ॥ १६५ ॥ अद्यापि नोज्झति हरः किल कालकूटं कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे। अम्भोनिधिर्वहति दुःसहवाडवाग्निमङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १६६ ॥ विश्वाभिरामगुणगौरवगुम्फितानां रोषोऽपि निर्मलधियां रमणीय एव। लोकप्रियैः परिमलैः परिपूरितस्य काश्मीरजस्य कटुतापि नितान्तरम्या ॥ १६७ ॥ किं जन्मना च महता पितृपौरुषेण शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम्। कुम्भा न कूपमपि शोषयितुं समर्थाः कुम्भोद्भवेन मुनिनाम्बुधिरेव पीतः ॥ १६८ ॥ आरभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नविहता विरमन्ति मध्याः। विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ १६९ ॥ सौजन्यधन्यजनुषः पुरुषाः परेषां दोषानपास्य गुणमेव गवेषयन्ति। त्यक्त्वा भुजंगमविषाणि पटीरगर्भात्सौरभ्यमेव पवना परिशीलयन्ति ॥ १७० ॥ आक्रोशितोऽपि सुजनो न वदत्यवाच्यं निष्पीडितो मधुरमुद्वमतीक्षुदण्डः। नीचो जनो गुणशतैरपि सेव्यमानो हास्येन तद्वदति यत्कलहेष्ववाच्यम् ॥ १७१ ॥ यद्वञ्चनाहितमतिर्बहुचाटुगर्भं कार्योन्मुखः खलजनः कृपणं ब्रवीति। तत्साधवो न न विदन्ति विदन्ति किं तु कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥ १७२ ॥ उदधिर्वधिरुव्यारनं हृतु-

१ सा. २ [illegible] ३ [illegible] [illegible]

मांस्ततार निरवधि गगनं चेत्काण्डकोशे विलीनम्। इति परिमितिमन्तो भान्ति सर्वेऽपि भावाः स तु निरवधिरेकः सज्जनानां विवेकः ॥ १७३ ॥ न हि भवति वियोगः स्नेहविच्छेदहेतुर्जगति गुणनिधीनां सज्जनानां कदाचित्। घनतिमिरनिबद्धो दूरसंस्थोऽपि चन्द्रः किमु कुमुदवनानां प्रेमभङ्गं करोति ॥ १७४ ॥ धवलयति समग्रं चन्द्रमाजीवलोकं किमिति निजकलङ्कं नात्मसंस्थं प्रमार्ष्टि। भवति विदितमेतत्प्रायशः सज्जनानां परहितनिरतानामादरो नात्मकार्ये ॥ १७५ ॥ प्रथमवयसि पीतं तोयमल्पं स्मरन्तः शिरसि निहितभारा नालिकेरा नराणाम्। उदकममृतकल्पं दद्युराजीवितान्तं न हि कृतमुपकारं साधवो विस्मरन्ति ॥ १७६ ॥ मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः। परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ १७७ ॥ उदयति यदि भानुः पश्चिमे दिग्विभागे प्रचलति यदि मेरुः शीततां याति वह्निः। विकसति यदि पद्मं पर्वताग्रे शिलायां न भवति पुनरुक्तं भाषितं सज्जनानाम् ॥ १७८ ॥ व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः सुकृतविलसितानां स्थानमूर्जस्वलानाम्। अकलितमहिमानः केतनं मङ्गलानां कथमपि भुवनेऽस्मिंस्तादृशाः संभवन्ति ॥ १७९ ॥ वपुरविहितसिद्धा एव लक्ष्मीविलासाः प्रतिजनकमनीयं कान्तिमत्केतयन्ति। अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा विकसितमिव पद्मं बिन्दवो माकरन्दाः ॥ १८० ॥ वहति भुवनश्रेणीं शेषः फणाफणकस्थितां कमठपतिना मध्येपृष्ठं सदा स च धार्यते। तमपि कुरुते क्रोडाधीनं पयोनिधिरादरादहह महतां निःसीमानश्चरित्रविभूतयः ॥ १८१ ॥ घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम्। दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ १८२ ॥ केनादिष्टौ कमलकुमुदोन्मीलने पुष्पवन्तौ विश्वं तोयैः स्नपयितुमसौ केन वा वारिवाहः। विश्वानन्दोपचयचतुरो दुर्जनानां दुरापः श्लाघ्यो लोके जयति महतामुज्ज्वलोऽयं निसर्गः ॥ १८३ ॥ उदन्वच्छन्ना भूः स च निधिरपां योजनशतं सदा पान्थः पूषा गगनपरिमाणं गणयति। इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ १८४ ॥ यदेतन्नेत्राम्भस्तदपि च समासाद्य तरुणीं कपोले व्यासक्तं कुचकलशमस्याः कलयति। ततः श्रोणीबिम्बं व्यवसितविलासं तदुचितं स्वभावस्वच्छानां पतनमपि भाग्यं वितरति ॥ १८५ ॥ यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपामुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिता। अयं कः संबन्धो यदनुहरते तस्य कुमुद विशुद्धाः शुद्धानां ध्रुवमनभिसंधिप्रणयिनः ॥ १८६ ॥ गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे गुणा दोषायन्ते तदिदमपि नो विस्मयपदम्। महामेघः क्षारं पिबति कुरुते वारि

१ तीर्णवान्. २ गाढान्धकारः. ३ नाशयतीत्यर्थः. ४ अमृततुल्यम्. ५ अमृतम्. ६ पङ्क्तिभिः. ७ आश्चर्यस्थानम्.

मधुरं फणी[1] क्षीरं पीत्वा वमति गरलं दुःसहतरम् ॥ १८७ ॥ प्रियप्राया[2] वृत्तिर्विनयमधुरो वाचि नियमः प्रकृत्या कल्याणी मतिरनवगीतः परिचयः । पुरो वा पश्चाद्वा तादिदमविपर्यासितरसं रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ १८८ ॥ असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो न सङ्गाद्दौर्जन्यं न हि सुजनता कस्यचिदपि । प्ररूढे संसर्गे[3] मणिभुजगयोर्जन्मजनिते मणिर्नाहेर्दोषान्स्पृशति न हि सर्पो मणिगुणान् ॥ १८९ ॥ असाधुः कुत्रापि व्रजति खलु दोषं न गुणता खलानां संसर्गैरपि कृतनिवासोऽपि निपुणः । यथा पक्षिव्यालैरपिहिततनुश्चन्दनतरुर्न वैकृत्यं याति क्षपयति च तापं सुमनसाम् ॥ १९० ॥ करे श्लाघ्यस्त्यागः[4] शिरसि गुरुपादप्रणयिता मुखे सत्या वाणी विजयिभुजयोर्वीर्यमतुलम्[5] । हृदि स्वस्था वृत्तिः श्रुतमधिगतैकव्रतफल विनाप्यैश्वर्येण प्रकृतिमहता मण्डनमिदम्[6] ॥ १९१ ॥ अचिन्त्याः पन्थानः किमपि महतामन्धकरिपोर्यदक्ष्णोऽभूत्तेजस्तदकृत[7] कथाशेषमदनम्[8] । मुनेर्नेत्रादत्रेर्यदजनि पुनर्ज्योतिरहह प्रतेने तेनेदं मदनमयमेव त्रिभुवनम् ॥ १९२ ॥ इहानेके सन्तः सततमुपकारिण्युपकृतिं कृतज्ञाः कुर्वन्तो जगति निवसन्तोऽपि सुधियः । कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥ १९३ ॥ अभेदेनोपास्ते कुमुदमुदरे वा स्थितवतो विपक्षादम्भोजादुपगतवतो वा मधुलिहः । अपर्याप्त. कोऽपि स्वपरपरिचर्यापरिचयप्रबन्धः साधूनामयमनभिसंधानमधुरः ॥ १९४ ॥ तृषार्तैः सारङ्गैः प्रति जलधरं भूरि विरुतं घनैर्मुक्ता धाराः सपदि पयसस्तान्प्रति मुहुः । खगानां के मेघाः क इह विहगा वा जलमुचामयाच्यो नार्तानामनुपकरणीयो न महताम् ॥१९५॥ शिला बाला जाता चरणरजसा यत्कुलशिशोः स एवायं सूर्यः सपदि निजपादैर्गिरिशिलाम् । स्पृशन्भूयो भूयो न खलु कुरुते कामपि वधूं कुले कश्चिद्धन्यः प्रभवति नरः श्लाघ्यमहिमा ॥१९६॥ बहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति । जन विद्वानेक·. सकलमभिसंधाय कपटैस्तटस्थः स्वानर्थान्घटयति च मौनं च भजते ॥१९७॥ परार्थव्यासङ्गादुपजहदपि स्वार्थपरताममेदैकत्वं यो वहति गुरु भूतेषु सततम् । स्वभावादस्यान्तः स्फुरति ललितोदात्तमहिमा समर्थो यो नित्यं स जयतितरा कोऽपि पुरुषः ॥१९८॥ परीवादस्तथ्यो भवति वितथो वापि महतामतथ्यस्तथ्यो वा हरति महिमानं जनरवः। तुलोत्तीर्णस्यापि प्रकटितहताशेषतमसो रवेस्तादृक्तेजो न हि भवति कन्यां गतवतः॥१९९॥ तमांसि ध्वंसन्ते परिणमति भूयानुपशयः सकृत्संवादेऽपि प्रथत इह चामुत्र च शुभम् । अथ प्रत्यासङ्गः कमपि महिमानं वितरति प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ॥२००॥ प्रिया न्याय्या[11] वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरं[12][13][14] त्वसन्तो नाभ्यर्थ्याः[15] सुहृदपि न याच्यः कृशधनः[16] ।

---

१ सर्प २ आनन्दात्मिका. ३ सबन्धे ४ सर्पस्य ५ दानम् ६ निस्तुलम् ७ भूषणम् ८ शङ्करस्य. ९ अकरोत् १० वार्तावशिष्टो मदनो यस्मिंस्तत्तथाविधम्. ११ न्यायानुसारिणी १२ वर्तनम् १३ पातकम्. १४ प्राणव्यये. १५ न याचितव्या.. १६ क्षीणधनः.

विपद्युच्चैः स्थेयं पदम[1]नुविधेयं च महतां सतां केनोद्दिष्टं[2] विषम[3]म[4]सिधाराव्रतमिदम् ॥ २०१ ॥ प्रदानं प्र[5]च्छन्नं गृ[6]हमुपगते संभ्रमविधिः प्रियं कृत्वा मौनं[7] सदसि कथनं नाप्यु[8]पकृतेः । अनुत्सेको लक्ष्म्यां निरभि[9]भवसाराः[10] परकथाः सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥२०२॥ विजेतव्या लङ्का चरणतरणीयो जलनिधिर्विपक्षः पौलस्त्यो[11] रणभुवि सहायाश्च कपयः । तथाप्येको रामः सकलमवधीद्राक्षसकुलं क्रिया[12]सिद्धिः सत्त्वे[13] भवति महतां नोपकरणे[14] ॥ २०३ ॥ रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा निरालम्बो मार्गश्च[15]रणरहितः सारथि[16]रपि । रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ २०४ ॥ धनुः पौष्पं[17] मौर्वी[18] मधु[19]करमयी चञ्चलदृशां दृशां कोणो बाणः सुहृदपि जडात्मा[20] हिमकरः । तथाप्येकोऽनङ्गस्त्रिभुवनमपि व्याकुलयति क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ २०५ ॥ विपक्षः श्रीकण्ठो जडतनुरमात्यः शशधरो वसन्तः सामन्तः कुसुममिषवः सैन्यमबलाः । तथापि त्रैलोक्यं जयति मदनो देह[21]रहितः क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ २०६ ॥ घटो जन्म[22]स्थानं मृग[23]परिजनो भूर्जवसनं वने वासः कन्दैरशनमपि दुःस्थं वपुरिदम् । अगस्त्यः पाथोधिं[24] यदकृत[25] कराम्भोजकुहरे क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ २०७ ॥ दाक्षिण्यं[26] स्वजने दया परजने शाठ्यं[27] सदा दुर्जने प्रीतिः साधुजने नयो[28] नृपजने विद्वज्जनेष्वार्जवम् । शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥ २०८ ॥ ये जाते व्यस[29]ने निरा[30]कुलधियः संपत्सु नाभ्युन्नताः प्राप्ते नैव पराङ्मुखाः प्रणयिनि प्राणप्रयोगैरपि । ह्रीमन्तः[31] स्वगुणप्रकाशनविधावन्यस्तुतौ पण्डितास्ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः ॥ २०९ ॥ क्षुद्राः[32] सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः स्वार्थो यस्य परार्थ एव स पुमानेकः सताम[33]ग्रणीः । दुःपूरोदरपूरणाय पिबति स्रोतः[34]पतिं वाडवो[35] जीमूत[36]स्तु निदा[37]घसंभृतजगत्संतापविच्छित्तये ॥ २१० ॥ मज्जन्तोऽपि विप[38]त्पयोधिगहने निःशङ्कधैर्यावृताः कुर्वन्त्येव परोपकारमनिशं सन्तो यथाशक्ति वै । राहोरुग्रक[39]रालवक्त्रकुहरग्रासाभिभूतोऽप्यलं चन्द्रः किं न जनं करोति सुखिनं ग्रासावशेषैः करैः[40] ॥ २११ ॥ वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता विद्यायां व्यसनं स्वयो[41]षिति रतिर्लोकापवादाद्भयम् ।

---

१ अनुसर्तव्यम्. २ उपदिष्टम्. ३ अतिकठिनम्. ४ खड्गधाराताण्डवम्. ५ गुप्तम् ६ अतिथौ. ७ अनुद्घाटनम्. ८ उपकारस्य ९ गर्वाभाव. १० निन्दा. ११ रावण. १२ कार्यसिद्धि.. १३ बले १४ सामग्र्याम्. १५ अनूरु. १६ अरुणः. १७ पुष्पमयम् १८ ज्या १९ भ्रमररूपा २० बुद्धिरहित ; (पक्षे डलयोः सावर्ण्यात्) जलात्मा जलरूपः. २१ अनङ्ग. २२ उत्पत्तिस्थानम् २३ मृगा एव परिजनः २४ समुद्रम् २५ अकरोत् २६ सरलभावः. २७ शठत्वम्. २८ नीति २९ सङ्कटे ३० अव्यग्रमनसः ३१ लज्जावन्तः ३२ नीचा. ३३ अग्रेसर. ३४ समुद्रम्. ३५ वाडवाग्नि.. ३६ मेघः. ३७ ग्रीष्मः. ३८ विपदेव पयोधि. समुद्र ३९ भयकरम्. ४० किरणैः ४१ स्वस्त्रियाम्.

भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खलेष्वेते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ २१२ ॥ दृश्यन्ते भुवि भूरिनिम्बतरवः कुत्रापि ते चन्दनाः पाषाणैः परिपूरिता वसुमती वज्रो मणिर्दुर्लभः। श्रूयन्ते करटारवाश्च सततं चैत्रे कुहूकूजितं तन्मन्ये खलसंकुलं जगदिदं द्वित्राः क्षितौ सज्जनाः ॥ २१३ ॥ घर्मार्तं न तथा सुशीतलजलैः स्नानं न मुक्तावलिर्न श्रीखण्डविलेपनं सुखयति प्रत्यङ्गमप्यर्पितम्। प्रीत्यै सज्जनभाषितं प्रभवति प्रायो यथा चेतसि सद्युक्त्या च पुरस्कृतं सुकृतिनामाकृष्टिमन्त्रोपमम् ॥ २१४ ॥ धर्मे तत्परता मुखे मधुरता दाने समुत्साहिता मित्रेऽवञ्चकता गुरौ विनयिता चित्तेऽतिगम्भीरता। आचारे शुचिता गुणे रसिकता शास्त्रेऽतिविज्ञानिता रूपे सुन्दरता हरौ भजनिता सत्स्वेव संदृश्यते ॥ २१५ ॥ सौजन्यामृतसिन्धवः परहितप्रारब्धवीरव्रता वाचालाः परवर्णने निजगुणालापे च मौनव्रताः। आपत्स्वप्यविलुप्तवीर्यनिचयाः संपत्स्वनुत्सेकिनो मा भूवन्खलवक्त्रनिर्गतविषज्वालातताः सज्जनाः ॥ २१६ ॥ ये दीनेषु दयालवः स्पृशति यानल्पोऽपि न श्रीमदो व्यग्रा ये च परोपकारकरणे हृष्यन्ति ये याचिताः। स्वस्थाः सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये तैः स्तम्भैरिव सुस्थिरैः किल भराक्रान्ता धरा धार्यते ॥ २१७ ॥ क्षारो वारिनिधिः कलङ्ककलुषश्चन्द्रो रविस्तापकृत्पर्जन्यश्चपलाश्रयोऽभ्रपटलादृश्यः सुवर्णाचलः। शून्यं व्योम रसा द्विजिह्वविधृता स्वर्धामधेनुः पशुः काष्ठं कल्पतरुर्दृषत्सुरमणिस्तत्केन साम्यं सताम् ॥ २१८ ॥ कस्मादिन्दुरसौ धिनोति जगतीं पीयूषगर्भैः करैः कस्माद्वा जलधारयैव धरणिं धाराधरः सिञ्चति। भ्रामं भ्राममयं च नन्दयति वा कस्मात्त्रिलोकीं रविः साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः ॥ २१९ ॥ अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः। कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥ २२० ॥ गर्वं नोद्वहते न निन्दति परान्नो भाषते निष्ठुरं प्रोक्तं केनचिदप्रियं च सहते क्रोधं च नालम्बते। श्रुत्वा काव्यमलक्षणं परकृतं संतिष्ठते मूकवद्दोषांश्छादयते स्वयं न कुरुते ह्येतत्सतां लक्षणम् ॥ २२१ ॥ किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः। किं चाङ्गीकृतमुत्सृजन्न मनसा श्लाघ्यो जनो लज्जते निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ २२२ ॥ सेतूपक्रमकौतुकाहृतगिरिप्रक्षेपवेगोच्छलन्निःशेषाम्बुपरिस्फुटोदरदरीगम्भीरिमा सागरः। चक्रे गोष्पदवद्विलङ्घितवतोऽप्यन्तर्भव मारुतेः पूर्णत्वादतिरिच्यते हि महतस्तुच्छस्य दुर्लङ्घ्यता ॥ २२३ ॥ शूराः सन्ति सहस्रशः प्रतिपदं विद्याविदोऽनेकशः सन्ति श्रीपतयो निरस्तधनदास्तेऽपि

१ शङ्करे. २ मनोजये ३ हीरकमणि ४ काकशब्दा ५ कोकिलशब्दाः ६ मुक्तासरः. ७ सुजनतामृतसमुद्राः. ८ विपत्तिकालेषु. ९ गर्वरहिता. १० व्याप्ताः ११ हर्षयुक्ता भवन्ति १२ पृथ्वी. १३ विद्युत्. १४ पृथ्वी.

क्षितौ भूरिशः। ये कर्मण्यनिरीक्ष्यवान्यमनुजं दुःखार्दितं यन्मनस्ताद्रूप्यं प्रतिपद्यते जगति ते सत्पूरुषाः पञ्चषाः ॥ २२४ ॥ दीनानां कल्पवृक्षः सगुणफलनतः सज्जनानां कुटुम्बी आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः। सत्कर्ता नावमन्ता पुरुषगुणनिधिर्द- क्षिणोदारसत्त्वो ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये ॥ २२५ ॥ नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः स्वार्थान्संपादयन्तो विततबहुतरार- म्भयत्नाः परार्थे। क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्मुखान्दूषयन्तः सन्तश्चाश्चर्यचर्या ज- गति बहुमताः कस्य नाभ्यर्थनीयाः ॥ २२६ ॥ जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम्। संजातव्यर्थपक्षाः पर- हितकरणे नोपरिष्टान्न वाधो ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥ २२७॥ हे पक्षिन्नागतस्त्वं कुत इह सरसस्तत्कियद्वो विशालं किं मद्धाम्नोऽपि बाढं ददति विपुलतां पाप मा ब्रूहि मिथ्या। इत्थं कूपोदकस्थः शपति तटगतं दर्दुरो राजहंसं नीचः प्रायः शठार्थो भवति हि विषमो नापराधेन दुष्टः ॥ २२८ ॥ वक्रे वल्गाप्रकर्षः समरभुवि तव प्राणरक्षापि दैवात्स्वेच्छाचारो न चास्ते न हि भवति तथा भारवाहो नितान्तम्। इत्यु- क्तोऽश्वः खरेण प्रहसितवदनो मूक एवावतस्थे तस्माज्जात्या महान्तोऽधमजनविषये मौन- मेवाश्रयन्ते ॥ २२९ ॥

---

## दुर्जननिन्दा।

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति। आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्य- ति ॥ १ ॥ न विना परवादेन रमते दुर्जनो जनः। काकः सर्वरसान्भुङ्क्ते विनामेध्यं न तृ- प्यति ॥ २ ॥ विशिखव्यालयोरन्त्यवर्णाभ्यां यो विनिर्मितः। परस्य हरति प्राणान्नैतच्चित्रं कुलोचितम् ॥ ३ ॥ विषमा मलिनात्मानो द्विजिह्वा जिह्मगा इव। जगत्प्राणहरा नित्यं कस्य नोद्वेजकाः खलाः ॥ ४ ॥ दुर्जनः परिहर्तव्यो विद्ययालकृतोऽपि सन्। मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ ५ ॥ खलानां कण्टकाना च द्विविधैव प्रतिक्रिया। उपानन्मुखभङ्गो वा दूरतो वापि वर्जनम् ॥ ६ ॥ अपूर्वः कोऽपि कोपाग्निः सज्जनस्य ख- लस्य च। एकस्य शाम्यति स्नेहाद्वर्धतेऽन्यस्य वारितः ॥ ७ ॥ ऊर्जितं सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनः पुनः। कवलीकुरुते स्वस्थं विधुं दिवि विधुंतुदः ॥ ८ ॥ दुर्जनः स्वस्वभावेन परकार्यं विनश्यति। नोदरतृप्तिमायाति मूषको वस्त्रभक्षकः ॥ ९ ॥ क्वचित्सर्पोऽपि मित्र- त्वमीयान्नैव खलः क्वचित्। न शेषशायिनोऽप्यस्य वशे दुर्योधनो हरेः ॥ १० ॥ उपकारोऽपि

---

१ प्रकटयन्तः. २ सद्मामाङ्गणे. ३ विषयशुचि. ४ बाण.. ५ सर्प. ६ अन्त्यवर्ण. खल इति. ७ वक्राः. ८ दुष्टस्वभावा. ९ सर्पा. १० प्रतीकार.. ११ उपानहा पादस्थचर्मणा मुखभङ्ग..

नीचानामपकारोऽपि जायते। पयःपानं भुजंगानां केवलं विषवर्धनम्॥ ११॥अलकाश्च खलाश्चैव मूर्ध्नि भीरुजनैर्धृताः। उपर्युपरि संस्कारेऽप्याविष्कुर्वन्ति वक्रताम् ॥ १२॥ खलानां धनुषां चापि सद्वंश[1]जनुषामपि। गुण[2]लाभो भवेदाशु परहृद्भेदकारकः ॥ १३ ॥ बहुनिष्कपटद्रोही[3] बहु-धान्योपघातकः[4]। रन्ध्रान्वेषी[5] च सर्वत्र दूषको मूषको यथा ॥ १४ ॥ नौश्च दुर्जनजिह्वा च प्रतिकूलविसर्पिणी[6]। परप्रतारणायैव[7] दारुणा[8] केन निर्मिता ॥ १५ ॥ यस्मिन्वंशे[9] समुत्पन्नस्तमेव निजचेष्टितैः[10]। दूषयत्यचिरेणैव घुणकीट[11] इवाधमः ॥ १६ ॥ स्वभावकठिनस्यास्य कृत्रिमां[12] बिभ्रतो नतिम्[13]। गुणोऽपि[14] परहिंसायै चापस्य[15] च खलस्य च ॥ १७ ॥ अयःपिण्ड इवोत्तप्ते खलानां हृदये क्षणात्। पतिता एव नश्यन्ति गुणास्तोयकणा इव ॥१८॥ वर्जनीयो मतिमता दुर्जनः सख्यवैरयोः। श्वा भवत्यपकाराय लिहन्नपि दशन्नपि ॥ १९॥ वक्रतां बिभ्रतो यस्य गुह्यमेव प्रकाशते। कथं न च समानः स्यात्पुच्छेन पिशुनः शुनः ॥२०॥ स्नेहेन[16] भूति[17]दानेन कृतः स्वच्छोऽपि दुर्जनः। दर्पणश्चान्तिके तिष्ठन्करोत्येकमपि द्विधा ॥२१॥ आजन्मसिद्धं कौटिल्यं खलस्य च हलस्य[18] च। सोढुं तयोर्मुखाक्षेपमलमेकैव सा क्षमा[19] ॥ २२ ॥ यथा यथैव स्नेहेन भूयिष्ठ[20]मुपचर्यते[21]। धत्ते तथा तथा तापं महावैश्वानरः खलः ॥ २३ ॥ स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्। अहो नु सदृशी वृत्तिस्तुला[22]-कोटेः खलस्य च ॥ २४ ॥ दुर्जनः कृतशिक्षोऽपि सज्जनो नैव जायते। अपि गङ्गाजलस्नानादधः केशः कुशायते ॥ २५ ॥ दह्यमानाः सुतीक्ष्णेन नीचाः परयशोऽग्निना। अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥ २६ ॥ खलः सत्क्रियमाणोऽपि ददाति कलहं सताम्। दुग्धधौतोऽपि किं याति वायसः कलहंसताम्[23] ॥ २७ ॥ दुर्जनस्य विशिष्टत्वं परोपद्रवकारिणाम्। व्याघ्रस्य चोपवासेन पारणं पशुमारणम् ॥२८॥ संत्यज्य शूर्पवद्दोषान्गुणान्गृह्णाति पण्डितः। दोषग्राही गुणत्यागी पल्लोलीव[24] हि दुर्जनः ॥२९॥ खलो न साधुतां याति सद्भिः संबोधितोऽपि सन्। सरित्पूरप्रपूर्णोऽपि क्षारो न मधुरायते ॥३०॥ सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः। सर्पो दशति कालेन दुर्जनस्तु पदेपदे ॥ ३१ ॥ अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः। शीलमेतदसाधूनामभ्रं पारिप्लवं[25] यथा ॥ ३२ ॥ अशक्ताः शक्तिमात्मीयां श्लाघयन्ते च दुर्जनाः। ते भवन्त्युपहासाय महतामेव संनिधौ ॥३३॥ सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः। मन्त्रेण शाम्यते सर्पो न खलः शाम्यते कदा ॥३४॥

---

१ कुलम्, (पक्षे) वेणु २ विनयादि; (पक्षे) रज्जु.. ३ बहु-निष्कपट-द्रोही, (पक्षे) बहु-निष्क-पट-द्रोही इति पदच्छेद ४ बहुधाअन्योपघातकः; (पक्षे) बहु-धान्य-उपघातक इति पदच्छेद. ५ दूषणान्वेषी; (पक्षे) छिद्रान्वेषी. ६ प्रतितीरम्; (पक्षे) विरुद्धम् ७ परेषां प्रकर्षेण तारणाय, (पक्षे) परेषां वञ्चनाय ८ भयङ्करा; (पक्षे) काष्ठेन ९ वेणौ, (पक्षे) कुले. १० स्वकर्मभिः. ११ काष्ठवेधक कृमि.. १२ क्रियया निर्वृताम्, (पक्षे) कपटयुक्ताम् १३ नम्रत्वम् १४ मौर्वी; (पक्षे) विनयादि. १५ धनुष.. १६ तैलेन, (पक्षे) ममतया. १७ भस्म; (पक्षे) वैभवम्. १८ लाङ्गलम्. १९ पृथ्वी, (पक्षे) शान्तिः. २० बाहुल्येन. २१ पूज्यते. २२ तुलायष्टे.. २३ राजहंसत्वम् २४ चालिनी. २५ चञ्चलम्.

दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम् । मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं यथा ॥३५॥ दुर्जनः सुजनो न स्यादुपायानां शतैरपि । अपानं मृत्सहस्रेण धौतं चास्यं कथं भवेत् ॥३६॥ खलास्तु कुशलाः साधुहितप्रत्यूहकर्मणि । निपुणाः फणिनः प्राणानपहर्तुं निरागसाम्[1] ॥३७॥ अहो बत महत्कष्टं विपरीतमिदं जगत् । येना[2]पत्रपते साधुरसाधुस्तेन तुष्यति ॥ ३८ ॥ तक्षकस्य विषं दन्ते मक्षिकाया विषं शिरः । वृश्चिकस्य विषं पुच्छं सर्वाङ्गे दुर्जनो विषम् ॥ ३९ ॥ दुर्जनो नार्जवं याति सेव्यमानोऽपि नित्यशः । स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव नामितम् ॥४०॥ वर्धयन्वाथ संमानं खलानां प्रीतये कुतः । फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ॥ ४१ ॥ दुर्जनैरुच्यमानानि संमतानि प्रियाण्यपि । अकालकुसुमानीव भयं संजनयन्ति हि ॥ ४२ ॥ शतं दद्यान्न विवदेदिति विज्ञस्य संमतम् । विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य लक्षणम् ॥ ४३ ॥ अहो खलभुजंगस्य विपरीतो वधक्रमः । अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते ॥ ४४ ॥ न यत्नकोटिशतकैरपि दुष्टः सुधीर्भवेत् । किं मर्दितोऽपि कस्तूर्या लशुनो याति सौरभम् ॥ ४५॥ पाषाणो भिद्यते टङ्कैर्वज्रं वज्रेण भिद्यते । सर्पोऽपि भिद्यते मन्त्रैर्दुष्टात्मा नैव भिद्यते ॥४६॥ दुर्जनो दोषमादत्ते दुर्गन्धिमिव सूकरः । सज्जनश्च गुणग्राही हंसः क्षीरमिवाम्भसः ॥ ४७ ॥ अपूर्वै[3]रसना [4]व्यालाः खलाननबिलेशयाः । कर्णमूले स्पृशन्त्यन्यं हरन्त्यन्यस्य जीवितम् ॥ ४८॥ दुर्जनेन समं सख्यं प्रीतिं चापि न कारयेत् । उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥ ४९॥ दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् । मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम् ॥ ५० ॥ मनस्यन्यद्वचस्यन्यत्कार्ये चान्यद्दुरात्मनाम् । मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥५१॥ जी[5]वनग्रहणे [6]नम्रा गृहीत्वा पुनरु[7]न्नताः । किं कनिष्ठाः किमु ज्येष्ठा [8]घटीयन्त्रस्य दुर्जनाः ॥ ५२ ॥ बिभ्राणा गरलं कण्ठे भु[9]जंगपरिवेष्टिता । शाम्भवीव तनुः कस्य न वन्द्या दौर्जनी[10] सभा ॥५३॥ [11]अक्षमालापवृत्तिज्ञा [12]कुशासनपरिग्रहा । ब्राह्मीव दौर्जनी संसद्वन्दनीया समे[13]खला ॥ ५४ ॥ खलः करोति दुर्वृत्तं नूनं फलति साधुषु । दशाननोऽहरत्सीतां बन्धनं च महोदधेः ॥ ५५ ॥ करोति स्वमुखेनैव [14]बहुधान्यस्य खण्डनम् । नमः पतनशीलाय मुसलाय खलाय च ॥५६॥ अपवादादभीतस्य समस्य गुणदोषयोः । असद्वृत्तेरहो वृत्तं दुर्विभावं विधेरिव ॥५७॥ न देवाय न धर्माय न सिन्धुभ्यो न चार्थिने । दुर्जनस्यार्जितं वित्तं

---

१ निरपराधताम्. २ लज्जा प्राप्नोति. ३ जिह्वा. ४ सर्पा . ५ उदकम्; (पक्षे) प्राणः. ६ अधोमुखा ; (पक्षे) विनीता . ७ ऊर्ध्वमुखा ; (पक्षे) उद्धता'. ८ एकरज्जुसनद्धघटमालारूप " राहाट " इति प्रसिद्धम् ९ सर्पाः; (पक्षे) जारा . १० दुर्जनसंबन्धिनी ११ अक्षमा य आलापास्तेषा वृत्तिज्ञा, (पक्षे) अक्षमाला जपमाला तस्या अपवृत्तिर्भ्रमण जानातीति सा १२ कुत्सित यच्छासनं शिक्षा तस्य परिग्रहोऽवलम्बो यस्याः सा; (पक्षे) कुशासन दर्भासन तत्परिग्रहः स्वीकारो यस्या सा १३ समे साधौ खला, (पक्षे) मेखलया सहिता. १४ बहुधा अन्यस्य परस्य खण्डनम्; (पक्षे) पुष्कलधान्यस्य खण्डनं चूर्णम्.

जतस्करैः ॥ ५८ ॥ मुखं पद्मदलाकारं वाचा चन्दनशीतला। हृदयं क्रोधसंयुक्तं तल्लक्षणम् ॥ ५९ ॥ निष्णातोऽपि च वेदान्ते साधुत्वं नैति दुर्जनः। चिरं जलो मैनाक इव मार्दवम् ॥ ६० ॥ खलः सज्जनकार्पासध्वंसक्षणैक[1]हुताशनः। परदुःनमारुतः केन वर्ण्यताम् ॥ ६१ ॥ यशःसौरभ्य[2]लशुनः शान्तिशैत्य[3]हुताशनः। सुमाकाशः खलः सज्जनदुःखदः ॥ ६२ ॥ अन्तर्मलिनदेहेन बहिराह्लादकारिणा। [5]महाकालफलेनेव के खलेन न वञ्चिताः ॥ ६३ ॥ अहो [6]प्रकृतिसादृश्यं [7]श्लेष्मणो दुर्जनस्य च। [8]मधुरैः कोपमायाति कटुकेनैव शाम्यति ॥ ६४ ॥ ईषल्लब्धप्रवेशोऽपि स्नेहविच्छेदकारकः। कृतक्षोभो [9]नरीनर्ति खलो मन्थनदण्डवत् ॥ ६५ ॥ बिभ्रती पुरस्तैक्ष्ण्यं पृष्ठतः कुर्वती गुणम्। कर्णान्विध्यति लोकस्य सूचीवत्सूचकस्य वाक् ॥६६॥ सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता। यथा स्त्रीणां तथा वाचा साधुत्वे दुर्जनो जनः ॥ ६७ ॥ कापूरुषः कुक्कुरश्च भोजनैकपरायणः। लालितः पार्श्वमायाति वारितो न च गच्छति ॥६८॥ मालिन्यमवलम्बेत यदा दर्पणवत्खलः। तदैव तन्मुखे देयं रजो नान्या प्रतिक्रिया ॥६९॥ नीचः समाश्रितोऽवश्यमनवाप्य पराश्रयम्। छिद्रं न रतिमाप्नोति दृष्टान्तोऽत्र कीटभवः ॥ ७० ॥ दुर्जनः परिहर्तव्यः प्रत्यक्षो द्विपदः पशुः। विध्यते वा कुशल्येन अदृष्टः कण्टको यथा ॥ ७१ ॥ यथा वृष्टिः समुद्रेषु भुक्तस्योपरि भोजनम्। एव प्रीतिः खलैः सार्धमुत्पन्नार्थेव सीदति ॥ ७२ ॥ क्वचित्कार्यवशान्नीचोऽप्यलं भवति नो महान्। कांसस्यैव हि राज्ञोऽपि दर्पणः कनकस्य च ॥७३॥ दुर्जनो दूषयत्येव सतां गुणगणं क्षणात्। मलिनीकुरुते धूमः सर्वथा विमलाम्बरम् ॥ ७४ ॥ यथा दोषो विभात्यस्य जनस्य न तथा गुणः। प्रायः कलङ्क एवेन्दोः प्रस्फुटो न प्रसन्नता ॥ ७५ ॥ संपत्तौ कर्कशं चित्तं खलस्यापदि कोमलम्। शीतलं कठिनं प्रायस्तप्तं मृदु भवत्ययः ॥ ७६ ॥ प्रायः प्रकुप्यतितरां प्रीत्यैव प्रखलो जनः। नयनं स्नेहसंपर्कात्कालुष्यं समुपेत्यलम् ॥ ७७ ॥ प्राप्य वित्तं जडास्तूर्णं निर्वृतिं यान्ति नान्यथा। तोयमासाद्य गर्जन्ति न रिक्ताः [10]स्तनयित्नवः ॥ ७८ ॥ नैवात्मनो विनाशं गणयति पिशुनः परव्यसनहृष्टः। प्राप्य सहस्रविनाशं समरे नृत्यति [11]कबन्ध इव ॥ ७९ ॥ रविरपि न दहति तादृग्यादृग्दहति वालुकानिकरः[12]। अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ॥ ८० ॥ त्यक्त्वापि निजप्राणान्परहितविघ्नं खलः करोत्येव। कवले पतिता सद्यो [13]वमयति मक्षिकान्नभोक्तारम् ॥ ८१ ॥ कृत-

---

१ दहनम्. २ कीर्तिरेव सौगन्ध्य तन्नाशकत्वाल्लशुन इव लशुनो हि कस्तूर्यादे सौगन्ध्य नाशयतीति प्रसिद्धि ३ शान्तिरेव शैत्य तन्नाशकत्वादग्निरिव ४ कारुण्यमेव कुसुम तस्याकाश आकाशस्य यथा पुष्प कदापि नोपलभ्यते तद्वत्खले कारुण्य कदापि नोपलभ्यत इत्यर्थ ५ तालफलेन ६ स्वभावसाम्यम्. ७ कफस्य. ८ साधुद्रव्यैः, (पक्षे) सुवचनै. ९ पुन पुनर्नृत्यति. १० मेघा. ११ अशिरस्क कलेवरम् १२ समूह १३ वान्ति कारयति.

मपि महोपकारं पय इव पीत्वा निरातङ्कम्[1] । प्रत्युत[2] हन्तुं यतते काकोदर[3]सोदरः खलो जगति ॥ ८२ ॥ नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम् । तद्वत्खलजनहृदयं बोधितमपि नैव याति माधुर्यम् ॥ ८३ ॥ एते स्निग्धतमा इति मा मा क्षुद्रेषु यात विश्वासम् । सिद्धार्थानामेषां[4] स्नेहो[5]ऽप्यश्रूणि[6] पातयति ॥ ८४ ॥ गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमात्रमादत्ते । पुष्पे फले विरागी क्रमेलकः[7] कण्टकौघमिव ॥ ८५ ॥ सुजनानामपि हृदयं पिशुनपरिष्वङ्गलिप्तमिह भवति । पवनः परागवाही रथ्यासु[8] वहन्रंजस्वलो[9] भवति ॥ ८६ ॥ परिपूर्णेऽपि तटाके काकः कुम्भोदकं पिबति । अनुकूलेऽपि कलत्रे नीचः परदारलम्पटो भवति ॥८७॥ दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः । पाणौ पयसा दग्धे तक्रं फूत्कृत्य[10] पामरः पिबति ॥ ८८ ॥ विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः । यदहिर्नकुलद्वेषी[11] स्वकुलद्वेषी पुनः पिशुनः ॥ ८९ ॥ अतिमलिने[12] कर्तव्ये भवति खलानामतीव निपुणा[13] धीः । तिमिरे[14] हि कौशिकानां[15] रूपं प्रतिपद्यते दृष्टिः ॥ ९० ॥ लब्धोत्साहो नीचः प्रथमतरं स्वामिनं पराभवति । भूमिरजो रथ्यादावुत्थापकमेव संवृणुते ॥ ९१ ॥ उपकृतमनेन सुतरामित्यसतामस्ति न क्वचिदपेक्षा । हेतुः स्वहस्तमाश्रितमुद्धृतोऽग्निर्दहत्येव ॥ ९२ ॥ परवादे दशवदनः पररन्ध्रनिरीक्षणे सहस्राक्षः । सद्वृत्तवित्तहरणे बाहुसहस्रार्जुनः पिशुनः ॥ ९३ ॥ परिशुद्धामपि वृत्तिं समाश्रितो दुर्जनः परान्व्यथते[16] । पवनाशिनो[17]ऽपि भुजगाः परपरितापं न मुञ्चन्ति ॥ ९४ ॥ प्रेरयति परमनार्यः शक्तिविहीनोऽपि जगदभिद्रोहे । तेजयति शस्त्रधारां स्वयमसमर्थः शिलां छेत्तुम् ॥ ९५ ॥ शिरसि निहितोऽपि नित्यं यत्नादपि सेवितो बहुस्नेहैः[18] । तरुणीकच इव नीचः कौटिल्यं नैव विजहाति ॥ ९६ ॥ व्योम्नि स वासं कुरुते चित्रं निर्माति सुन्दरं पवने । रचयति रेखाः सलिले चरति खले यस्तु सत्कारम् ॥ ९७ ॥ अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः । परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥ ९८ ॥ मृद्घटवत्सुखभेद्यो दुःसंधानश्च[19] दुर्जनो भवति । सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशु संधेयः ॥ ९९ ॥ मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् । लुब्धक[20]धीवरपिशुना निष्कारण[21]वैरिणो जगति ॥१००॥ रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि । अथवालं पापात्मन्कृतया कथयापि ते हतया ॥ १०१ ॥ विध्वस्त[22]परगुणानां भवति खलानामतीव मलिनत्वम् । अन्तरितशशिरुचामपि सलिलमुचां[23] मालिनिमा[24]भ्यधिकः ॥१०२॥

---

१ निःशङ्कम्. २ वैपरीत्ये. ३ सर्पबन्धु. ४ शिरीधाणाम्, (पक्षे) सिद्धोऽर्थः कार्यं येषां ते. ५ तैल; (पक्षे) स्नेहभाव.. ६ नेत्रोदकम्. ७ उष्ट्रः ८ वीथीषु. ९ रजोयुक्त. १० फूत्कार कृत्वा. ११ नकुल-द्वेषी; (पक्षे) न कुल-द्वेषी १२ अत्यन्तमलदूषिते १३ पूर्णा १४ तमसि १५ घूकानाम्. १६ व्यथा करोति. १७ वायुभक्षका. १८ बहुप्रकारैः स्नेहैः सुगन्धतैलादिभिः; (पक्षे) बह्व्या प्रीत्या १९ दुःखेन संधातुमशक्यः. २० व्याधः. २१ निष्कारणशत्रव. २२ नाशिता.. २३ मेघानाम् २४ मालिन्यम्.

[1]तिनिपुणं [2]गुणमयमखिलैः समीहितं नितराम् । ललिताम्बरमिव सज्जनमाखव इव खलाः ॥ १०३ ॥ [3]दूरस्थापितहृदयो [4]गूढरहस्यो निकामसा[5]शङ्कः । आश्लेषो भवति खलानां च संभेदः ॥ १०४ ॥ धर्मारम्भेऽप्यसतां परहिंसैव प्रयोजिका । काकानामभिषेकेऽकारणतां [6]वृष्टिरनुभवति ॥ १०५ ॥ यद्वीक्ष्यते खलानां मा-क्कापि दैवयोगेन । काकानामिव शौक्ल्यं तदपि हि न चिरादनर्थाय ॥ १०६ ॥ यत्खलु खलमुखहुतवहविनिहितमपि शुद्धिमेव परमेति । तदनलशौचमिवांशुकमिह लोके दुर्लभं प्रेम ॥ १०७ ॥ [7]वंशावलम्बनं यद्यो [8]विस्तारो [9]गुणस्य या च नतिः । तज्जालस्य खलस्य च नि[10]र्जङ्क्सु[11]सप्रणाशाय ॥ १०८ ॥ [12]सुगृहीतमलिनपक्षा [13]लघवः [14]परभेदिनस्तीक्ष्णाः[15] । पुरुषा अपि बाणा अपि [16]गुणच्युता कस्य न भयाय ॥ १०९ ॥ [17]स्वकपोलेन प्रकटीकृतं प्रमत्तत्वकारणं किमपि । द्विरदस्य दुर्जनस्य च मदं चकारैव दानमपि ॥ ११० ॥ संताप-मोहकम्पान्संपादयितुं निहन्तुमपि जन्तून् । सखि दुर्जनस्य भूतिः प्रसरति दूरं ज्वरस्येव ॥ १११ ॥ अर्थग्रहणे न तथा व्यथयति कटुकूजितैर्यथा पिशुनः । रुधिरादानादधिकं दुनोति कर्णे [18]क्वणन्मशकः ॥ ११२ ॥ [19]क्षुद्रोद्भवस्य [20]कटुतां प्रकटयतो विदधतश्च [21]मदमुच्चैः । मधुनोऽधमपुरुषस्य च गरिमा लघिमा च भेदाय ॥ ११३ ॥ त्यजति च गुणान्सुदूरं [22]तनुमपि दोषं निरीक्ष्य गृह्णाति । मुक्त्वालंकृतकेशान्यूकामिव वानरः पिशुनः ॥ ११४ ॥ दोषा[23]लोकननिपुणाः परुषगिरो दुर्जनाश्च घूकाश्च । दर्शनमपि भयजननं येषामनिमित्तपि-शुनानाम् ॥ ११५ ॥ पिशुनत्वमेव विद्या परदूषणमेव भूषणं येषाम् । परदुःखमेव सौख्यं शिव शिव ते केन वेधसा सृष्टाः ॥ ११६ ॥ हस्त इव भूतिमलिनो लङ्घयति यथा यथा खलः सुजनम् । दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥ ११७ ॥ अन्यस्य लगति कर्णे जीवितमन्यस्य हरति बाण इव । हृदयं दुनोति पिशुनः कण्टक इव पादलग्नोऽपि ॥ ११८ ॥ तस्मिन्गतार्द्रभावे वीतरसे शुण्ठिशकल इव पुरुषे । अपि भूतिभाजि मलिने नागरशब्दो विडम्बाय ॥ ११९ ॥ स्वरसेन बध्नतां करमादाने कण्टकोत्करैस्तुदताम् ।

---

१ गुह्यगोपने निपुणम्. २ तन्तुप्रचुरम्, (पक्षे) दयादाक्षिण्यादिप्रचुरम्. ३ दूरे स्थापित हृदय येन; (पक्षे) दूरे स्थापितमन्तःकरण येन. ४ अन्तःकरणविषयीभूतम्, (पक्षे) मन्त्रादि ५ भीतिः; (पक्षे) विश्वासाभावः. ६ काके स्नाने कृते वृष्टिर्भवतीति वृद्धव्यवहार ७ कुलस्य; (पक्षे) वेणोः. ८ जन्यत्वम्, (पक्षे) आश्रितत्वम्. ९ आधिक्यम्, (पक्षे) दैर्घ्यम् १० पाण्डित्यशौर्यादेः, (पक्षे) रज्जो . ११ विश्वस्तनाशायेत्यर्थः. १२ सम्यग्गृहीतो दुष्टाना पक्षोऽङ्गीकारो यैं, (पक्षे) झटिति निष्कासनानर्हाः श्यामपक्षवन्त इत्यर्थः. १३ नीचा ; (पक्षे) अल्पपरिमाणवन्तः १४ परान्भेदन्ति ते अन्येषा परस्परभेदजननेन कलहप्रवर्तका इत्यर्थ ; (पक्षे) इतरच्छेदकारका. १५ क्रूरकर्माण ; (पक्षे) यथाश्रुतम् १६ साधुत्वादिगुणहीना , (पक्षे) ज्यायाश्च्युता. १७ स्वस्य गण्डस्थलेन प्रकटीकृतम् दानस्य तत उत्पत्तेरिति भाव., (पक्षे) स्वमुखेनाभिहितम् एव मया दान कृतमिति. १८ गुणगुणेति शब्द कुर्वन्. १९ मधुमक्षिका, (पक्षे) नीच. २० रूक्षताम्, (पक्षे) कटुभाषिताम्. २१ उन्मादम्, (पक्षे) गर्वम्. २२ सूक्ष्मम्. २३ दूषणानि, (पक्षे) रात्रिः.

पिशुनानां पनसानां कोशाभोगोऽप्यविश्वास्यः ॥ १२० ॥ वंशे घुण इव न विशति दोषो रसभाविते सतां मनसि । रसमपि तु न प्रयच्छति बहुदोषः संनिपातीव ॥ १२१ ॥ परपरितापनकुतुकी गणयति नात्मीयमपि तापम् । परहतिहेतोः पिशुनः संदंश इव स्वपीडनं सहते ॥ १२२ ॥ सगुणापि हन्त विगुणा भवति खलास्याद्विचित्रवर्णापि । आखुमुखादिव शाटी पदपरिपाटी कवेः कापि ॥ १२३ ॥ कतिपयदिनपरमायुषि मदकारिणि यौवने दुरात्मानः । विदधति तथापराधं जन्मैव यथा वृथा भवति ॥ १२४ ॥ दुश्चरितैरेव निजैर्भवति दुरात्मा विशङ्कितो नित्यम् । दशनव्ययमापन्नं पन्नगकुलमाकुलीभवति ॥ १२५ ॥ स्वयमपि भूरिच्छिद्रश्चापलमपि सर्वतोमुखं तन्वन् । तितउस्तुपस्य पिशुनो दोषस्य विवेचनेऽधिकृतः ॥ १२६ ॥ पिशुनः खलु सुजनानां खलमेव पुरो निधाय जेतव्यः । कृत्वा ज्वरमात्मीयं जिगाय बाणं रणे विष्णुः ॥ १२७ ॥ वक्राः कपटस्निग्धा मलिनाः कर्णान्तिके प्रसज्जन्तः । कण्ठं च यं न सति खे खलाश्च गणिकाकटाक्षाश्च ॥ १२८ ॥ कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय । यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ॥ १२९ ॥ आचरति दुर्जनो यत्सहसा मनसोऽप्यगोचरानर्थान् । तन्न न जाने जाने स्पृशति मनः किं तु नैव निष्ठुरताम् ॥ १३० ॥ परितोषयिता न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः । परदोषकथाभिरल्पकः[1] स्वजनं तोषयितुं किलेच्छति ॥ १३१ ॥ सहजान्धदृशः[2] स्वदुर्नये[3] परदोषेक्षणदिव्यचक्षुषः । स्वगुणोच्चगिरो[4] मुनिव्रताः[5] परवर्णग्रहणेष्वसाधवः[6] ॥ १३२ ॥ सुकुमारमहो लघीयसां हृदयं तद्गतमप्रियं यतः । सहसैव समुद्गिरन्त्यमी क्षपयन्त्येव हि तन्मनीषिणः ॥ १३३ ॥ उपकारपरः स्वभावतः सततं सर्वजनस्य सज्जनः । असतामनिशं तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥ १३४ ॥ परितप्यत एव नोत्तमः परितप्तोऽप्यपरः सुसंवृतिः[7] । परवृद्धिभिराहितव्यथः[8] स्फुटनिर्भिन्नदुराशयोऽधमः[9] ॥ १३५ ॥ अनिराकृततापसंपदं[10] फलहीनां[11] सुमनोभिरुज्झिताम्[12] । खलतां खलतामिवासतीं[13][14] प्रतिपद्येत कथं बुधो जनः ॥ १३६ ॥ अपि वेत्ति षडक्षराणि चेदुपदेष्टुं शितिकण्ठमिच्छति[15] । वसनाशनमात्रमस्ति चेद्धनदादप्यतिरिच्यते[16] खलः ॥ १३७ ॥ वचनैरसतां महीयसो न खलु व्येति गुरुत्वमुद्धतैः । किमपैति रजोभिरौवरैरवकीर्णस्य मणेर्महार्घता ॥ १३८ ॥ अहमेव गुरुः[17] सुदारुणानामिति[18] हालाहल मा स्म तात दृप्यः[19] । ननु

---

१ तुच्छ. २ स्वाभाविकी अन्धा अपश्यन्ती दृग्येषां ते. ३ स्वदोषे. ४ आत्मप्रशंसायां प्रगल्भवाच इत्यर्थः. ५ मौनव्रतिनः. ६ परस्तुतिवचनेषु. ७ शोभना संवृतिः परितापगोपनं यस्य सः. ८ उत्पादितसंतापः. ९ स्फुटनिर्भिन्नः प्रकाशितो दुराशयः परशुभद्वेषलक्षणो दुरभिप्रायो यस्य सः. १० अनिराकृतानिवारिता तापसंपत्तापातिशयो यया ताम्; (पक्षे) सतापजननैकस्वभावादपरत्रासतश्छायाविरहात्. ११ इहामुत्र चोपकारशून्याम्; (पक्षे) सर्वार्थरहिताम्. १२ बुधैरुज्झिताम्; (पक्षे) पुष्पैर्वर्जिताम्. १३ खस्य लताम्. गगनलतिकामित्यर्थः. १४ दुष्टाम्; (पक्षे) निरुपाख्याम्. १५ शिवम्. १६ कुबेरात्. १७ श्रेष्ठः. १८ अतितीव्रानाम्. १९ गर्वोद्धतो मा भव.

सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥ १३९ ॥ वदने विनिवेशिता भुजंगी पिशुनानां रसनामिषेण[1] धात्रा । अनया कथमन्यथावलीढा नहि जीवन्ति जना मनागमन्त्राः ॥ १४० ॥ वहति विषधरान्[2] पटीरजन्मा[3] शिरसि मषीपटलं दधाति दीपः । विधुरपि भजतेतरां कलङ्कं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ॥ १४१ ॥ मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति । अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥ १४२ ॥ अन्तर्वाणि[4] मन्यमानः खलोऽयं पौरोभाग्यं[5] सूक्तिमुक्तासु[6] धत्ते । सर्वानन्दिन्यङ्के[7] कामिनीनामीर्मं[8] मार्गत्येष[9] वै बम्भरालिः[10] ॥ १४३ ॥ बोधितोऽपि बहुसूक्तिविस्तरैः किं खलो जगति सज्जनो भवेत् । स्नापितोऽपि बहुशो नदीजलैर्गर्दभः किमु हयो भवेत्क्वचित् ॥ १४४ ॥ विद्यया विमलयाप्यलंकृतो दुर्जनः सदसि[11] मास्तु कश्चन । साक्षरा हि विपरीततां गताः केवलं जगति तेऽपि राक्षसाः ॥ १४५ ॥ दोषपोषमभियाति परं यो बाधमेति बहुसज्जनयोगात् । संमतौ विमतिमात्रसहायो दुर्जनो भ्रम इवातिचकास्ति ॥ १४६ ॥ उन्नतं[12] पदमवाप्य यो लघुर्[13] हेलयैव स पतेदिति ब्रुवन् । शैलशेखरगतः पृषद्गण[14]श्चारुमारुतधुतः[15][16] पतत्यधः[17] ॥ १४७ ॥ भग्नकुम्भशकलेन[18] वै मलं बालकस्य जननी व्यपोहति । तद्वदोष्ठवदनेन दुर्जनो मातृतः शतगुणाधिको भवेत् ॥ १४८ ॥ अकरुणत्वमकारणविग्रहः[19] परधने परयोषिति च स्पृहा[20] । सुजनबन्धुजनेष्वसहिष्णुता[21] प्रकृतिसिद्धमिदं[22] हि दुरात्मनाम् ॥ १४९ ॥ निमित्तमुद्दिश्य हि यः प्रकुप्यति ध्रुवं स तस्यापगमे प्रसीदति । अकारणद्वेषि मनोऽस्ति यस्य वै कथं जनस्तं परितोषयिष्यति ॥ १५० ॥ अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते । विषं महाहेरिव यस्य दुर्वचः सुदुःसहं संनिहितं सदा मुखे ॥ १५१ ॥ तथारिभिर्न व्यथते शिलीमुखैः शेते दिगन्ते हृदयेन दूरतः । यथा खलानां कुधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडितः ॥ १५२ ॥ गुणापवादेन तदन्यरोपणाद्भृशाधिरूढस्य समञ्जसं जनम् । द्विधेव कृत्वा हृदयं निगूहतः स्फुरन्नसाधोर्विवृणोति मागसिः ॥ १५३ ॥ न दुर्जनः सज्जनतामुपैति बहुप्रकारैरपि सेव्यमानः । भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ॥ १५४ ॥ विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय । खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥ १५५ ॥ सद्वंश[23]जातं गुण[24]कोटि[25]युक्तं धनुः कथं पार्थिववामहस्ते । शरः परप्राणविहारदक्षः सपक्षपातोऽप्यधमो गरीयान् ॥ १५६ ॥ एकः खलोऽपि यदि नाम भवेत्सभायां मोघीकरोति विदुषां निखिलप्रयासम् । एकापि पूर्ण-

---

१ जिह्वाच्छलेन. २ सर्पान् ३ चन्दनः ४ शास्त्रवित् ५ दोषैकदृक्त्वम् ६ सूक्तय एव मुक्ताफलानि तासु ७ सर्वेषामाह्लादके. ८ व्रणम्. ९ शोधयति १० मक्षिका. ११ सभायाम् १२ उत्कर्षम्; (पक्षे) उच्चस्थानम् १३ अल्पबुद्धि, (पक्षे) अल्पपरिमाण १४ अम्बुकणसमुदायः १५ मन्देन १६ कम्पित. १७ उत्कर्षाद्धीयते, (पक्षे) अधोदेशे पतति १८ भिन्नशरावखण्डेन. १९ निरर्थकविरोधः. २० इच्छा. २१ असहनशीलता २२ स्वभावसिद्धम्. २३ वेणु; (पक्षे) कुलम्. २४ मौर्वी; (पक्षे) विद्याविनयादि.. २५ अग्रम्, (पक्षे) संख्याविशेष

मुदरं मधुरैः पदार्थैरालोड्य रेचयति हन्त न मक्षिका किम् ॥ १९७ ॥ हालाहलं खलु पि
पासति कौतुकेन कालानलं परिचुचुम्बिषति प्रकामम् । व्यालाधिपं च यतते परिरब्धुमद्
यो दुर्जनं वशयितुं कुरुते मनीषाम् ॥ १९८ ॥ ते दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभा
पक्ष्मलदृशामलकाः खलाश्च । नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतामा
न त्यजन्ति ॥ १९९ ॥ प्राक्पादयोः पतति खादति पृष्ठमांसं कर्णे कलं किमपि रौति[2] श
नैर्विचित्रम् । छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करो
॥ १६० ॥ हित्वा मदं सममसज्जनसज्जनौ तौ वन्दे नितान्तकुटिलप्रगुणस्वभावौ । ए
भिया निरभिसंहितवैरिभावं प्रीत्या परं परमनिर्वृतिपात्रभूतम् ॥ १६१ ॥ पादाहतोऽ
दृढदण्डसमाहतोऽपि यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः । हर्षादिवैष पिशुनोऽत्र म
व्यधर्मा कर्णे परं स्पृशति हन्त्यपरस्य मूलम् ॥ १६२ ॥ उद्भासिताखिलखलस्य विशृङ्ख
लस्य प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः । दैवादवाप्तविभवस्य गुणद्विषोऽस्य नीचस्य गोच
रगतैः सुखमाप्यते कैः ॥ १६३ ॥ संवर्धितोऽपि भुजगः पयसा न वश्यस्तत्पाल[?]नपि नि
हन्ति बलेन सिंहः । दुष्टः परैरुपकृतस्तदनिष्टकारी विश्वासलेश इह नैव बुधैर्विधेय
॥ १६४ ॥ दुर्वृत्तसंगतिरनर्थपरंपराया हेतुः सतां भवति किं वचनीयमेतत् । लङ्केश्वरं
हरति दाशरथेः कलत्रं प्राप्नोति बन्धमथ दक्षिणसिन्धुराजः ॥ १६५ ॥ कस्तूरिकां तृण
भुजामटवीश्वराणां निक्षिप्य नाभिषु चकार च तान्वधार्हान् । मूढो विधिः सकलदुर्जनलो
लजिह्वामूले स्म निक्षिपति चेत्सकलोपकारः ॥ १६६ ॥ बिसमलमशनाय स्वादु पाना
तोयं शयनमवनिपृष्ठे वल्कले वाससी च । नवधनमधुपानभ्रान्तसर्वेन्द्रियाणामविनयमनु
मन्तुं नोत्सहे दुर्जनानाम् ॥ १६७ ॥ मलयभुवि विरूढश्चन्दनेनाभिवृद्धो न भजति कि
वेणुः सौरभं चन्दनस्य । तदिह नहि विचित्रं सर्वदोषाकराणां नहि भवति खलानां साधु
तागन्धलेशः ॥ १६८ ॥ दिगन्ते खेलन्ती सरसहृदयानन्दजननी मया नीता दुष्टप्रचुर
नगरीं कापि कविता । अकस्मादुन्मीलत्खलवदनवल्मीकरसनाभुजंगीदष्टाङ्गी शिवशिव स
माप्ति गतवती ॥ १६९ ॥ अभूदम्भोराशेः सह वसतिरासीत्कमलया गुणानामाधारो नय
नफलमिन्दुः प्रथयति । कथं सिंहीसूनुस्तमपि तुदति प्रौढदशनैर्गुणानामास्वादं पिशुनरसन
किं रसयति ॥ १७० ॥ न विषममृतं कर्तुं शक्यं प्रयत्नशतैरपि त्यजति कटुतां न स्व
निम्बः स्थितोऽपि पयोह्रदे । गुणपरिचितामार्यां वाणीं न जल्पति दुर्जनश्चिरमपि बला
ध्माते लोहे कुतः कनकाकृतिः ॥ १७१ ॥ यदि परगुणा न क्षम्यन्ते यतस्व गुणार्जने
हि परयशो निन्दाव्याजैरलं परिमार्जितुम् । विरमसि न चेदिच्छाद्वेषप्रसक्तमनोरथो दिन
करकरान्पाणिच्छत्रैर्नुदञ्श्रममेष्यसि ॥ १७२ ॥ जिह्मो लोकः कथयति पुरा हन्त हित्वा गु

१ मतिम् २ शब्दं करोति. ३ आविष्कृतसकलदुष्टस. ४ अमर्यादस. ५ वनम्. ६ कुटिलः.

णौघानम्भःक्षारं गुणगणनिधेस्तस्य रत्नाकरस्य । विश्वे छिद्रानुसरणसमारूढसर्वेन्द्रियाणां दोषे दृष्टिः पिशुनमनसां नानुरागो गुणेषु ॥ १७३ ॥ सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा । अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः ॥ १७४ ॥ या लोमार्त्तविधे खलस्य सुरसा वाणी बुधैर्नीयते नो जानाति सतामचेतनतया सैव स्वयं लीयति । भर्तुः स्नेहचयात्प्रविश्य दहने भस्मीभवत्यङ्गना गाढालिङ्गनतत्परेण मनसा प्रेतो न वेत्ति प्रियाम् ॥ १७५ ॥ नागच्छन्नुपहूयते न वचनोत्थानासनैः पूज्यते नो पृच्छन्ननुभाष्यते न च दृशा सान्द्रादरं वीक्ष्यते । ईर्ष्यावेशकषायिते हृदि घृणालेशोऽपि न स्पृश्यते किं त्वेकः प्रवदन्समञ्जसमपि प्राज्ञः शठैर्हस्यते ॥ १७६ ॥ दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तादरः । अन्तर्भूतविषो बहिर्मधुमयश्चातीव मायापटुः को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥ १७७ ॥ जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं शूरे निर्घृणता मुनौ विमतिता दैन्यं प्रियालापिनि । तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कितः ॥ १७८ ॥ पोतो दुस्तरवारिराशितरणे दीपोऽन्धकारागमे निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्त्यै सृणिः । इत्येतद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः ॥ १७९ ॥ धातस्तात तवैव दूषणमिदं यन्नाम कस्तूरिका कान्तारान्तरचारिणा तृणभुजां यन्नाभिमूले कृता । यद्येवं पिशुनस्य हन्त रसनामूलेऽकरिष्यस्तदा प्रायासेन विनाभविष्यदतुला कीर्तिश्च निर्दोषता ॥ १८० ॥ ते वै सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये सामान्यास्तु परोपकारनिरताः स्वार्थाविरोधेन ये । तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ १८१ ॥ नारीणां वचनेन कर्म कुरुते दीनं वचो भाषते नालस्यं विजहाति तिग्मकिरणे प्रौढे समुत्तिष्ठति । किंचित्क्वापि न साहसं वितनुते देहे चिरं दूयते नो वा विन्दति पौरुषं कुपुरुषः कोऽप्येष निर्णीयताम् ॥ १८२ ॥ वक्रत्वं ननु कुन्तलादिव मुखे तैक्ष्ण्यं कटाक्षादिव क्रूरत्वं कुचमण्डलादिव सुनैर्घृण्यं स्वचित्तादिव । मालिन्यं नयनाञ्जनादिव किलाधैर्यं स्वभावादिव स्वैरन्यैव सुशिक्षितोऽसि खल किं जातोऽस्यतोऽरुंतुदः ॥ १८३ ॥ वाताहारतया जगद्विषधरैराश्वास्य निःशेषित ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः । तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकैर्दम्भस्य स्फुरितं विदन्नपि

१ स्वेच्छाचरणनिरोधो येषा ते २ अनिपुणमतिः ३ नीच.. ४ अन्तिक ५ कपटपटु ६ लज्जावति ७ व्रतेषु रुचि प्रीतिर्यस्य तस्मिन् ८ शाठ्यम्. ९ निर्दयता १० मननशीले ११ दीनत्वम् १२ सगर्वता. १३ वाचालत्वम् १४ नौका. १५ अङ्कुश.. १६ भग्नप्रयत्न १७ दुर्गममार्गसंचारिणाम्. १८ सूचकस्य. १९ जिह्वामूले. २० प्रकृष्टेन यत्नेन.

ननो जाल्मो गुणानीहते ॥ १८४ ॥ पक्षद्वन्द्वविराजितोऽहममलं मीनान्प्रसेवे सदा पुष्टाङ्गः
नकलादिभिः परिवृतश्चन्द्रः समः किं मम। सर्वस्थाणुशिरोगतोऽहममलं चन्द्रं बको हा
नते मात्सर्येण दुरात्मकोऽपि सुजनं दृष्ट्वा सदा हासते ॥ १८५ ॥ कस्त्वं भद्र [1]खलेश्वरो
ऽहमिह किं घोरे वने स्थीयते शार्दूलादिभि[2]रेव हिं[3]स्रपशुभिः खा[4]द्योऽहमित्याशया।
कस्मात्कष्टमिदं त्वया व्यवसितं मद्देहमांसाशिनः प्रत्युत्पन्ननृमांसभक्षणधियस्ते घ्नन्तु
सर्वान्नरान् ॥ १८६ ॥ भिक्षो मांसनिषेवणं किमुचितं किं तेन मद्यं विना मद्ये चापि परि-
श्रमो हि भवतां वाराङ्गनाभिः सह। वारस्त्रीषु रतः कुतस्तव धनं द्यूतेन चौर्येण वा चौर्य-
द्यूतपरायणस्य भवतो भ्रष्टस्य का वा गतिः ॥ १८७ ॥ भिक्षो कन्था श्लथा ते नहि
शफरिवधे जालमश्नासि मत्स्यांस्ते वै मद्योपदंशाः पिबसि मधु समं वेश्यया यासि वेश्याम्।
दत्त्वाङ्घ्रिं मूर्ध्न्यरीणां तव किमु रिपवो भित्तिभेत्तास्मि येषां चोरोऽसि द्यूतहेतोस्त्वयि सक-
लमिदं नास्ति नष्टे विचारः ॥ १८८ ॥ दैवादप्युत्तमानामपहरति यदा दुर्जनो वा कथं-
चिन्मानं नाप्नोति तेषामनुजनितगुणानेव कुत्राधिकत्वम्। स्वर्भानुर्भानवीयान्हरति यदि पुनः
शीतरश्मेर्मरीचीन्ब्रह्माण्डस्येह खण्डे तदपि नरपते किं ग्रहेशत्वमेति ॥ १८९ ॥

---

## लक्ष्मीस्वभावः।

या स्वसद्मनि पद्मेऽपि संध्या[5]वधि विजृ[6]म्भते। इं[7]न्दिरा मन्दिरेऽन्येषां कथं स्थास्यति
निश्च[8]ला ॥ १ ॥ गुणिनं जनमालोक्य निजबन्धनशङ्कया। राजॅल्लक्ष्मीः कु[9]रङ्गीव दूरं दूरं
पलायते ॥ २ ॥ शूरं त्यजामि वैधव्यादुदारं लज्जया पुनः। सापत्न्यात्पण्डितमपि तस्मा-
त्कृपणमाश्रये ॥ ३ ॥ गोभिः क्रीडितवान्कृष्ण इति गोसमबुद्धिभिः। क्रीडत्यद्यापि सा
लक्ष्मीरहो देवी पतिव्रता ॥ ४ ॥ अत्यार्यमतिदातारमतिशूरमतिव्रतम्। प्रज्ञाभिमानिनं चैव
श्रीर्भयान्नोपसर्पति ॥ ५ ॥ अनागतविधातारमप्रमत्तमकोपनम्। स्थिरारम्भमदीनं च नासौ
श्रीरुपतिष्ठते ॥ ६ ॥ मन्ये सत्यमहं लक्ष्मि समुद्रा[10]ज्जलिरुत्थिता। पश्यन्तोऽपि न पश्यन्ति
सन्तो विह्वललोचनाः ॥ ७ ॥ समायाति यदा लक्ष्मीर्नारिकेलफलाम्बुवत्। विनिर्याति
यदा लक्ष्मीर्गजभुक्तकपित्थवत् ॥ ८ ॥ लक्ष्मी[11]र्यादोनिधेर्यादो[12] नादो वादोचितं वचः। वि-
भेति [13]धीवरेभ्यो या [14]जडेष्वेव निम[15]ज्जति ॥ ९ ॥ कुटिला लक्ष्मीर्यत्र प्रभवति न सरस्वती
वसति तत्र। प्रायः श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके ॥ १० ॥ अ[16]व्यवसायिनमलसं
दैव[17]परं साहसाच्च परिहीनम्। प्र[18]मदा पतिमिव वृद्धं नेच्छति लक्ष्मीरुपस्थातुम् ॥ ११ ॥

---

१ खलराजः. २ व्याघ्रादिभिः ३ घातकपशुभिः ४ भक्षणीयः. ५ सध्याकालपर्यन्तम्. ६ विराजते. ७ लक्ष्मीः. ८ स्थिरा. ९ मृगीव. १० समुद्रस्य. ११ जलजन्तुः. १२ अदो वचो वादोचितं न. १३ कैवर्तेभ्यः, (पक्षे) बुद्धिश्रेष्ठेभ्यः. १४ मूर्खेषु; (पक्षे डलयोः सावर्ण्यात्) उदकेषु. १५ अन्तर्गच्छति; (पक्षे) सुस्थिरं तिष्ठति. १६ अनुद्योगिनम्. १७ नियतिपरम् १८ तरुणस्त्री.

गुणवद्भिः सह संगममुच्चैःपदमाप्तुमुत्सुका लक्ष्मीः। वीरकरवालवसतिर्ध्रुवमसिधाराव्रतं चरति ॥ १२ ॥ श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्। उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ १३ ॥ वाक्चक्षुःश्रोत्रलयं लक्ष्मीः कुरुते नरस्य को दोषः। गरलसहोदरजाता न मारयति यच्च तच्चित्रम् ॥ १४ ॥ अनुभवत ददत वित्तं मान्यान्मानयत सज्जनान्भजत। अतिपरुषपवनविलुलितदीपशिखाचञ्चला लक्ष्मीः ॥ १५ ॥ रत्नाकरतनुजनुषि द्विजराजे राजाने श्रियो मित्रे। अमृतकरे न कलावति पद्मनि वा सा कुतो भवति ॥ १६ ॥ पूरयति पूर्णमेघो तरंगिणीसंहतिः समुद्रमिव। लक्ष्मीरधनस्य पुनर्लोचनमार्गेऽपि नायाति ॥ १७ ॥ सुखयतितरां न रक्षति परिचयलेशं गणाङ्गनेव श्रीः। कुलकामिनीव नोज्झति वाग्देवी जन्मजन्मापि ॥ १८ ॥ सव्यवसायिनि शूरे क्लेशसहिष्णावनाकुलारम्भे। मयि पृष्ठतो विलग्ने यास्यसि कमले कियद्दूरम् ॥ १९ ॥ अपि दोर्भ्यां परिबद्धा बद्धापि गुणैरनेकधा निपुणैः। निर्गच्छति क्षणादिव जलधिजलोत्पत्तिपिच्छला लक्ष्मीः ॥ २० ॥ हरिभामिनि सिन्धुसंभवे कमले किं कथयामि ते गुणान्। अनुरज्यसि हा जडे जने गुणगौरे पुरुषे विरज्यसि ॥ २१ ॥ वीक्षितानि तव वारिधिकन्ये यत्र पालितजगन्ति लगन्ति। चित्रमत्र च परत्र च देही देहिशब्दमपहाय चकास्ति ॥ २२ ॥ यद्वदन्ति चपलेत्यपवादं नैव दूषणमिदं कमलायाः। दूषणं जलनिधेर्हि भवेत्तद्यत्पुराणपुरुषाय ददौ ताम् ॥ २३ ॥ चाञ्चल्यमुच्चैःश्रवसस्तुरंगात्कौटिल्यमिन्दोर्विषतो विमोहः। इति श्रियाशिक्षि सहोदरेभ्यो न वेद्मि कस्माद्गुणवद्विरोधः ॥ २४ ॥ श्वश्रूं विना वृत्तिरिह स्वतन्त्रा प्रायः स्नुषाणामपवादहेतुः। यद्वाणि लोके रमया विहीनां सतीमपि त्वामसतीं वदन्ति ॥ २५ ॥ उत्साहसंपन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम्। शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः ॥ २६ ॥ यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा। निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ २७ ॥ हालाहलो नैव विषं विषं रमा जनाः परं व्यत्ययमत्र मन्यते। निपीय जागर्ति सुखेन तं शिवः स्पृशन्निमा मुह्यति निद्रया हरिः ॥ २८ ॥ तापापहे सुहृदये रुचिरे प्रबुद्धे मित्रानुरागनिरते धृतसद्गुणौघे। स्वाङ्गप्रदानपरिपूरितषट्पदौघे युक्तं तवेह कमले कमले स्थितिर्यत् ॥ २९ ॥ रत्नाकरस्तव पिता कमले निवासो भ्राता सुधामयतनुः पतिरादिदेवः। केनापरेण कमले बत शिक्षितानि सारङ्गशृङ्गकुटिलानि विचेष्टितानि ॥ ३० ॥ लक्ष्मि क्षमस्व वचनीयमिदं दुरुक्तमन्धीभवन्ति पुरुषास्त्वदुपासनेन। नो चेत्कथं कमलपत्रविशालनेत्रो नारायणः स्वपिति पन्नगभोगतल्पे ॥ ३१ ॥

१ खड्गम्. २ वेश्या. ३ लक्ष्म्या.. ४ नारायणाय, (पक्षे) वृद्धाय. ५ विषभेद.. ६ लक्ष्मीः. ७ विपरीतभावम्. ८ चन्द्र.. ९ नारायण.. १० सर्प. ११ शरीरम् १२ शय्यायाम्.

[१]सौभाग्यं धत्ते परमसुखभोगास्पदमयं [२]विचित्रं तद्गेहं भवति पृथुकार्तस्वरमयम्। निविष्टः पल्यङ्के कलयति स [३]कान्तारतरणं प्रसादं कोपं वा जननि भवती यत्र तनुते ॥ ३२ ॥ समुद्रस्यापत्यं प्रथितमहिमामुद्रितभुवः स्वसा [४]शीतांशोस्त्रिनयनशिरोधामवसतेः। मुरारे[५]र्योषित्सा सरसिरुहकिञ्जल्कनिलया तथापि श्रीः स्त्रीत्वात्प्रकृतिचपलालिङ्गति खलान् ॥ ३३ ॥ तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न संतिष्ठते मूर्खान्द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि। शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनपि श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ॥ ३४ ॥ कस्मैचित्कपटाय कैटभरिपूरःपीठदीर्घालयां देवि त्वामभिवाद्य कुप्यसि न चेत्तत्किंचिदाचक्ष्महे। यत्ते मन्दिरमम्बुजन्म किमिदं विद्यागृहं यच्च ते नीचान्नीचतरोपसर्पणमपामेतत्किमाचार्यकम् ॥ ३५ ॥ पद्मे मूढजने ददासि द्रविणं विद्वत्सु किं मत्सरो नाहं मत्सरिणी न चापि चपला नैवास्ति मूर्खे रतिः। मूर्खेभ्यो द्रविणं ददामि नितरां तत्कारणं श्रूयतां विद्वान्सर्वगुणेषु पूजिततनुर्मूर्खस्य नान्या गतिः ॥ ३६ ॥ तिर्यक्त्वं भजतु प्रतारयतु वा धर्मक्रियाकोविदं हन्तु स्वां जननीं पिबत्वपि सुरां शुद्धां वधूमुज्झतु। वेदान्निन्दतु वा हिनस्तु जनतां किं वानया चिन्तया लक्ष्मीर्यस्य गृहे स एव भवति प्रायो जगद्वन्द्यताम् ॥ ३७ ॥ आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां मूकत्वं मितभाषितां वितनुते मौढ्यं भवेदार्जवम्। पात्रापात्रविचारणाविरहिता यच्छत्युदारात्मतां मातर्लक्ष्मि तव प्रसादवशतो दोषा अमी स्युर्गुणाः ॥ ३८ ॥ हे लक्ष्मि क्षणिके स्वभावचपले मूढे च पापेऽधमे न त्वं चोत्तमपात्रमिच्छसि खले प्रायेण दुश्चारिणि। ये देवार्चनसत्यशौचनिरता ये चापि धर्मे रतास्तेभ्यो लज्जसि निर्दये गतमतिर्नीचो जनो वल्लभः ॥ ३९ ॥ नाहं दुश्चरिणी न चापि चपला मूर्खो न मे रोचते नो शूरो न च पण्डितो न च शठो हीनाक्षरो नैव च। पूर्वस्मिन्कृतपुण्ययोगविभवो भुङ्क्ते स मे सत्फलं लोकानां किमसह्यता सखि पुनर्दृष्ट्वा परां संपदम् ॥ ४० ॥ हन्तुर्बन्धुजनान्धनार्थमनघान्गन्तुः परस्त्रीशतं रन्तुर्जन्तुविहिंसकैः सह जनैः संतुष्यतो वञ्चनैः। वक्तुस्तीक्ष्णमयुक्तमेव वचनं पंक्तुर्मितं चौदनं नित्यं नृत्यसि मन्दिरेषु कमले कृत्यं तवैतन्मतम् ॥ ४१ ॥ यत्राभ्यागतदानमानचरणप्रक्षालनं भोजनं सत्सेवा पितृदेवतार्चनविधिः सत्यं

---

१ हे जननि, भवती यत्र यस्मिन्पुरुषे प्रसाद तनुते करोत्यसौ पुरुषो भाग्यमैश्वर्यं धत्ते यत्र कोपं तनुते सोऽसौभाग्य सौभाग्याभाव धत्ते. अय प्रसादविषयः परमसुखभोगानामास्पदम् अयं कोपविषय परमत्यन्तमसुखभोगास्पदम् भवतीति शेषः. २ तस्य पूर्वोक्तस्य पुरुषस्य गेह विविधचित्रयुक्त तथा पृथु महत्कार्तस्वर स्वर्ण तन्मय भवति; (पक्षे) चित्ररहित तथा पृथुकानां बालानामन्नाद्यभावप्रयुक्तेनार्तस्वरेण प्रचुरम्. ३ स पूर्वोक्तः पुरुष कान्ताया रत रमण तदेव रणयुद्धम्, (पक्षे) कान्तार दुर्गमारण्य तत्तरण कलयति. ४ चन्द्रस. ५ प्रियः. ६ निष्पापान्. ७ प्राणिविघातकैः. ८ अयोग्यम् ९ मितपचम्. दरिद्रमिति भावः. १० किंप्रकारकम्.

गवां पालनम् । धान्यानामपि संग्रहो न कलहश्चित्तानुरूपा प्रिया हृष्टा प्राह हरिं वसामि कमला तस्मिन्गृहे निश्चला ॥ ४२ ॥ येषामन्यकलत्रदर्शनकलाव्युत्पत्तिशून्ये दृशौ मूढं हृच्च परार्थचिन्तनविधौ मिथ्यानभिज्ञं मुखम् । अप्रज्ञातपशून्बुभुक्षितशिशूनभ्रोदकैस्ताम्यतस्तेषां लक्ष्मि गृहान्दृशापि भयभीतेवेह नो वीक्षसे ॥ ४३ ॥ नो जानाति कुलीनमुत्तमगुणं सत्त्वान्वितं धार्मिकं नाचारप्रवणं न कार्यकुशलं न प्रज्ञयालंकृतम् । नीचं क्रूरमपेतसत्त्वमदयं तस्मादियं सेवते तद्वंशानुगुणं पयोधिसुतया लक्ष्म्या प्रमाणीकृतम् ॥ ४४ ॥ पीतोऽगस्त्येन तातश्चरणतलहतो वल्लभोऽन्येन[3] रोषादाबाल्याद्विप्रवर्यैः स्ववदनविवरे धारिता वैरिणी[4] मे । गेहं मे छेदयन्ति प्रतिदिवसमुमाकान्तपूजानिमित्तं तस्मात्खिन्ना सदाहं द्विजकुलसदनं नाथ नित्यं त्यजामि ॥ ४५ ॥

## धनप्रशंसा ।

अहो कनकमाहात्म्यं वक्तुं केनापि शक्यते । नामसाम्यादहो चित्रं धत्तूरोऽपि मदप्रदः ॥ १ ॥ न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो । मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥ २ ॥ धनमर्जय काकुत्स्थ धनमूलमिदं जगत् । अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥ ३ ॥ ब्रह्मघ्नोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् । शशिना तुल्यवंशोऽपि निर्धनः परिभूयते ॥ ४ ॥ विभवो हि यथा लोके न शरीराणि देहिनाम् । चाण्डालोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् ॥ ५ ॥ कुत आगत्य घटते विघटय्य क्व नु याति च । न लक्ष्यते गतिः सम्यग्घनस्य च धनस्य च ॥ ६ ॥ स्त्रीरूपं मोहकं पुंसो यून एव भवेत्क्षणम् । कनकं स्त्रीबालवृद्धषण्ढानामपि सर्वदा ॥ ७ ॥ संपदा सुस्थितंमन्यो भवति स्वल्पयापि यः । कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ ८ ॥ न नरस्य नरो दासो दासश्चार्थस्य भूपते । गौरवं लाघवं वापि धनाधननिबन्धनम् ॥ ९ ॥ यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान्गुणज्ञः । स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ते ॥ १० ॥ त्यजन्ति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च सुहृज्जनाश्च । तमर्थवन्त पुनराश्रयन्ति ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥ ११ ॥ बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते । न च्छन्दसा केनचिदुद्धृतं कुलं हिरण्यमेवार्जय निष्फला गुणाः ॥ १२ ॥ धनैर्निष्कुलीनाः कुलीना भवन्ति धनैरापदं मानवा निस्तरन्ति । धनेभ्यः परो बान्धवो नास्ति लोके धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ १३ ॥ दुन्दुभिस्तु सुतरामचेतनस्तन्मुखादपि धनं धनं धनम् । इत्थमेव निनदः प्रवर्तते किं पुनर्यदि जनः

१ स्त्री. २ समुद्र. ३ भृगुणा. ४ सरस्वती. ५ कमलम् ६ "धत्तूर. कनकाह्वय." इति कोशात्. ७ परिभव मामोति. ८ आत्मान सुस्थित मन्यतेऽसौ. ९ शास्त्रज्ञः. १० प्रेक्षणीय.. ११ "धन धन धनम्" इत्यनुकरणशब्दः, (पक्षे) वित्तम्.

सचेतनः ॥ १४ ॥ त्यक्त्वा युवा स्वयुवतिं सुविलासयोग्यां दूरं विदेशवसतौ निवसन्धनार्थी । राज्यागमे स्मरति तां न समेति तस्मात्कान्ताभ्रमादपि वरः कनकभ्रमोऽयम् ॥१५॥ जातिर्यातु रसातलं गुणगणस्तस्याप्यधो मज्जतां शीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना । शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ १६ ॥ निर्द्रव्याः पुरुषाः सदा च विकलाः सर्वत्र मन्दादराः पुत्रभ्रातृनिरापराधकुपितं दृष्टं न संभाषणम् । भार्या रूपवती सुमन्दमनसा स्नेहेन नालिङ्गते तस्माद्द्रव्यमुपार्जय शृणु सखे द्रव्येण सर्वे वशाः ॥ १७ ॥ माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते । अर्थप्रार्थनशङ्कया न कुरुते संभाषणं वै सुहृत्तस्माद्द्रव्यमुपार्जय शृणु सखे द्रव्येण सर्वे वशाः ॥ १८ ॥

## धननिन्दा ।

अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते । जनितारमपि त्यक्त्वा निःस्वं गच्छति दूरतः ॥ १ ॥ लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् । शेषे धराभरक्लान्ते शेते नारायणः सुखम् ॥ २ ॥ वरं हालाहलं पीत सद्यःप्राणहरं विषम् । न द्रष्टव्यं धनाढ्यस्य भ्रूभङ्गकुटिलं मुखम् ॥ ३ ॥ भक्तद्वेषो जडप्रीतिः सुरुचिर्गुरुलङ्घने । मुखे कटुकता नूनं धनिनां ज्वरिणामिव ॥ ४ ॥ आलिङ्गिताः परैर्यान्ति प्रस्खलन्ति समे पथि । अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥ ५ ॥ आजन्मानुगतेऽप्यस्मिन्नाले विमुखमम्बुजम् । प्रायेण गुणपूर्णेषु रीतिर्लक्ष्मीवतामियम् ॥ ६ ॥ धनं तावदसुलभं लब्धं कृच्छ्रेण रक्ष्यते । लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत् ॥ ७ ॥ जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु । मोहयन्ति च संपत्तौ कथमर्थाः सुखावहाः ॥ ८ ॥ यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि । भक्ष्यते सलिले नक्रैस्तथा सर्वत्र वित्तवान् ॥ ९ ॥ राजतः सलिलादग्नेश्चोरतः कुजनादपि । भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ १० ॥ धनाशया खलीकारः कस्य नाम न जायते । दूरादामिषलोभेन वध्यते खे वरः खगः ॥ ११ ॥ बधिरयति कर्णविवरं वाचं मूकयति नयनमन्धयति । विकृतयति गात्रयष्टिं संपद्रोगोऽयमद्भुतो राजन् ॥ १२ ॥ लक्ष्म्या परिपूर्णोऽहं न भयं मेऽस्तीति मोहनिद्रैषा । परिपूर्णस्यैवेन्दोर्भवति भयं सिंहिकासूनोः ॥१३॥ निरक्षरे वीक्ष्य महाधनत्वं विद्यानवद्या विदुषा च हेया । रत्नावतंसां कुलटां समीक्ष्य कि-

---

१ मनाक्प्रियम्. २ भ्रुकुटिमोटनेन वक्रम्. ३ भक्ताः सेवकास्तेषा द्वेषः; (पक्षे) भक्तमन्न तद्द्वेष.. ४ जडेषु मूर्खेषु प्रीति.; (पक्षे डलयोः सावर्ण्यात्) जले रुचि.. ५ गुरूणा पित्रादीनामुल्लङ्घने; (पक्षे) गुरु यल्लङ्घनमुपवासस्तस्मिन्. ६ कटुभाषित्वम्; (पक्षे) कटुत्वम्. ७ अविषमे. ८ विलक्षणः. ९ राहो..

मार्यनार्यः कुलटा भवन्ति ॥ १४ ॥ अर्जुनीयति[1] यदर्जने जनो वर्जनीयजनतर्जनादिभिः[2] । मङ्क्षु[3] नश्यति चिराय संचिता वञ्चिता जगति के न संपदा ॥ १५ ॥ वरमसिधारा तरुतलवासो वरमिह भिक्षा वरमुपवासः । वरमपि घोरे नरके पतनं न च धनगर्वितबान्धवशरणम् ॥ १६ ॥ तानीन्द्रियाण्यविकलानि[4] मनस्तदेव सा बुद्धिरप्रतिहता[5] वचनं तदेव । अर्थोष्मणा[6] विरहितः पुरुषः स एव ह्यन्यः क्षणेन भवतीति विचित्रमेतत् ॥ १७ ॥ आपद्गतं[7] हससि किं द्रविणान्ध मूढ लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् । एतान्प्रपश्यसि घटाञ्जलयन्त्रचक्रे रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥ १८ ॥ धनमपि परदत्तं दुःखमौचित्यभाजां भवति हृदि तदेवानन्दकारीतरेषाम् । मलयजरसबिन्दुर्बाधते न प्रसन्नं नयति च रसवाहादेवमत्यन्तमत्र ॥ १९ ॥ लभेद्यदयुतं[8] धनं तदधनं धनं यद्यपि लभेत नियुतं[9] धनं निधनमेव तज्जायते । तथा धनंपरार्धकं[10] तदपि भावहीनात्मकं यदक्षरपदद्वयान्तरगतं[11] धन तद्धनम् ॥ २० ॥ दायादाः स्पृहयन्ति तस्करगणा मुष्णन्ति[12] भूमिभुजो दूरेण च्छलमाकलय्य[13] हुतभुग्[14]भस्मीकरोति क्षणात् । अम्भः प्लावयते क्षितौ विनिहितं यक्षा हरन्ति ध्रुवं दुर्वृत्तास्तनया[15] नयन्ति निधनं[16] धिग्धिग्धनं तद्बहु ॥ २१ ॥

## धनिप्रशंसा ।

धनवान्बलवाँल्लोके सर्वः सर्वत्र सर्वदा । प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ॥ १ ॥ वयोवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः । सर्वे ते धनवृद्धानां द्वारि तिष्ठन्ति किंकराः ॥ २ ॥ न सा विद्या न तच्छीलं न दानं न च सा कला । अर्थार्थिभिर्न तच्छौर्यं धनिनां यन्न कीर्त्यते ॥ ३ ॥ पतन्ति खड्गधारासु विशन्ति मकरालयम्[17] । किं न कुर्वन्ति सुभगे कष्टमर्थार्थिनो नराः ॥ ४ ॥ एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर । एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ५ ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥६॥ धनी वरं कुलीनोऽप्यकुलीनो धनवर्जितः । सुविद्यो जातवंशोऽपि निर्धनः परिहीयते ॥ ७ ॥ को नाम नानुवृत्तिं सुमहानपि धनवतः कुरुते । वित्तेशभवनभित्तेः समीपमुपसेवते शंभुः ॥ ८ ॥ हेतुप्रमाणयुक्तं वाक्यं न श्रूयते दरिद्रस्य । अत्यतिपरुषमसत्यं[18] पूज्यं वाक्यं समृद्धस्य ॥ ९ ॥

१ धवलीभवति २ भयत्रासादिभि. ३ झटिति. ४ वैकल्यरहितानि ५ अखण्डिता ६ द्रव्यरूपोष्णतया ७ विपद्ग्रस्तम्. ८ दशसहस्रम्, (पक्षे) अकारेण युत धनम् अधनमित्यर्थ. ९ लक्षसंख्याकम्; (पक्षे) निशब्देन युत धनम्. निधनमित्यर्थ. १० धनस्य परार्ध संख्याविशेषः, (पक्षे) धनशब्दसबन्धि परमर्ध 'न' इति तच्च भावहीनात्मकम्. अभावबोधकमित्यर्थ. ११ अक्षर. परमात्मा तच्चरणद्वयान्तरे गत प्राप्त यद्धन मोक्षरूप धन तदेव धनम्; (पक्षे) अक्षरयो. पकारदकारात्मकयोर्मध्यवर्ति धन इत्येतदक्षरद्वयरूपम् धनमित्यर्थ.. १२ हरन्ति. १३ कपटम्. १४ अग्निः; १५ दुष्टाचरणाः. १६ नाशम्. १७ समुद्रम् १८ अतिकठोरम्.

वैभवभाजां दूषणमपि भूषणपक्ष एव निक्षिप्तम् । गुणमात्मनामधर्मं द्वेषं च गृणन्ति कारणदाः ॥ १० ॥ वाणी दरिद्रस्य शुभा¹ हितापि ह्यर्थेन शब्देन च संप्रयुक्ता । न शोभते वित्तवतः समीपे भेरीनिनादोपहतेव² वीणा ॥ ११ ॥ यादृशि तादृशि वित्तसनाथे पञ्च पिशाचशतानि वसन्ति । यानि पुनर्निवसन्ति महीशे तानि न केनचिदाकलितानि ॥ १२ ॥ न विद्यया नैव कुलेन गौरवं जनानुरागो धनिकेषु सर्वदा । कपालिना³ मौलिर्धृतापि जाह्नवी प्रयाति रत्नाकरमेव सत्वरम् ॥ १३ ॥ गङ्गां च धारयति मूर्ध्नि सदा कपाली सा तस्य चुम्बति मुखं न कदाचिदेव । रत्नाकरं प्रति चुचुम्ब सहस्रवक्त्रैर्गङ्गादयो युवतयः सधनानुकूलाः ॥ १४ ॥ धिगस्त्वेतां विद्यां धिगपि कवितां धिक्सुजनतां वयो रूपं धिग्धिग्धिगपि च यशो निर्धनवतः । असौ जीयादेकः सकलगुणहीनोऽपि धनवान्बहिर्यस्य द्वारे तृणलवनिभाः सन्ति गुणिनः ॥ १५ ॥ परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये स पश्चात्संपूर्णः कलयति धरित्रीं तृणसमाम् । अतश्चानैकान्त्याद्गुरुलघुतयार्थेषु धनिनामवस्था वस्तूनि प्रथयति च संकोचयति च ॥ १६ ॥

---

## दरिद्रनिन्दा ।

उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः । बालवैधव्यदग्धानां कुलस्त्रीणां कुचाविव ॥ १ ॥ हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः । पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥ २ ॥ इह लोकेऽपि धनिनां परोऽपि स्वजनायते । स्वजनोऽपि दरिद्राणां तत्क्षणाद्दुर्जनायते ॥ ३ ॥ परीक्ष्य सत्कुलं विद्यां शीलं शौर्यं सुरूपताम् । विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥ ४ ॥ दारिद्र्यानलसंतप्तः शान्तः संतोषवारिणा । याचकाशाविघातान्तर्दाहः केनोपशाम्यति ॥ ५ ॥ येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमाः । तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ ६ ॥ चाण्डालश्च दरिद्रश्च द्वावेतौ सदृशाविह । चाण्डालोऽपि दरिद्रोऽपि सर्वकर्मसु निन्दितः ॥ ७ ॥ अर्थेन तु विहीनस्य पुरुषस्याल्पमेधसः । क्रियाः सर्वा विनश्यन्ति ग्रीष्मे कुसरितो यथा ॥ ८ ॥ द्वाविमावम्भसि क्षेप्यौ गाढं बद्ध्वा गले शिलाम् । धनिनं चाप्रदातारं दरिद्रं चातपस्विनम् ॥९॥ अत्यन्तविमुखे⁷ दैवे व्यर्थे यत्ने च पौरुषे । मनस्विनो दरिद्रस्य वनादन्यत्कुतः सुखम् ॥१०॥ दूये⁸ कान्ताकरं वीक्ष्य मणिकङ्कणवर्जितम्⁹ । अतःपरं¹⁰ परं दूये मणिकं¹¹ कणवर्जितम्¹² ॥ ११ ॥ रात्रौ जानुर्दिवा भानुः कृशानुः¹³ संध्ययोर्द्वयोः । पश्य शीतं मया नीतं जानुभानुकृशानुभिः ॥ १२ ॥ किं करोमि क गच्छामि कमुपैमि दुरात्मना । दुर्भरेणोदरेणाहं प्राणैरपि विडम्बितः ॥ १३ ॥ दुःखं

---

१ कल्याणी. २ दुन्दुभिध्वनिलुप्तेव. ३ शंकरेण. ४ मस्तकः. ५ प्राणान्धारयतु. ६ आकाशम्; (पक्षे) वस्त्रम्. ७ पराङ्मुखे ८ खेद प्राप्नोमि. ९ मणियुक्त यत्कङ्कणं तेन वर्जितम्. १० अत्यन्तम्. ११ मृण्मयपात्रम् १२ धान्यकणरहितम् १३ अग्निः.

दुःखमिति ब्रूयान्मानवो नरकं प्रति । दारिद्र्यादधिकं दुःखं न भूतं न भविष्यति ॥ १४ ॥
किं चान्यैः सुकुलाचारैः सेव्यतामेति पूरुषः । धनहीनः स्वपत्नीभिस्त्यज्यते किं पुनः परैः
॥ १५ ॥ किं वाच्यं सूर्यशशिनोर्दारिद्र्यं महतां पुरः । दिनरात्रिविभागेन परिधत्तो यदं[1]-
म्बरम् ॥ १६ ॥ शून्यमपुत्रस्य गृहं चिरशून्यं नास्ति यस्य सन्मित्रम् । मूर्खस्य दिशः
शून्याः सर्वं शून्यं दरिद्रस्य ॥ १७ ॥ पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलही-
नम् । सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च ॥ १८ ॥ रोगी चिरप्रवासी परान्नभोजी परा-
वसथशायी । यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥ १९ ॥ अम्बा तुष्यति न
मया न स्नुषया सापि नाम्बया न मया । अहमपि न तया न तया वद राजन्[2]कस्य
दोषोऽयम् ॥ २० ॥ [3]पृथुकार्तस्वरपात्रं [4]भूषितनिःशेषपरिजनं देव । वि[5]लसत्करेणुगहनं सं-
प्रति सममावयोः [6]सदनम् ॥ २१ ॥ दारिद्र्यान्मरणाद्वा मरणं संरोचते न दारिद्र्यम् । अ-
ल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ २२ ॥ परिहरति रतिं मतिं लुनीते स्खलति भृशं
परिवर्तते च भूयः । इति बत विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥२३॥
दारिद्र्य भोस्त्वं परमं विवेकि[7] गुणाधिके पुंसि सदानुरक्तम् । विद्याविहीने गुणवर्जिते च
मुहूर्तमात्रं न [8]रतिं करोषि ॥ २४ ॥ दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्यु[9]-
षित्वा । वि[10]पन्नदेहे मयि [11]मन्दभाग्ये ममेति चिन्ता क्व गमिष्यसि त्वम् ॥ २५ ॥ एको हि
दोषो [12]गुणसंनिपाते निमज्जतीन्दोरिति [13]यो बभाषे । न तेन दृष्टं कविना समस्तं दारि-
द्र्यमेकं [14]गुणकोटिहारि ॥ २६ ॥ धनैर्विमुक्तस्य नरस्य लोके किं जीवितेनादित एव तावत् ।
यस्य प्रतीकारनिरर्थकत्वात्कोपप्रसादा विफलीभवन्ति ॥ २७ ॥ अहो नु कष्टं सततं
प्रवासस्ततोऽतिकष्टः [15]परगेहवासः । कष्टाधिका नीचजनस्य सेवा ततोऽतिकष्टा धनही-
नता च ॥ २८ ॥ वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालयं पत्रफलाम्बुभोजनम् । तृणानि
शय्या वसनं च वल्कलं न बन्धुमध्ये धनहीनजीवनम् ॥ २९ ॥ यदा तु भाग्यक्षयपीडितां
दशां नरः कृतान्तोपहितां प्रपद्यते । तदास्य मित्राण्यपि यान्त्यमित्रतां चिरानुरक्तोऽपि
विरज्यते जनः ॥ ३० ॥ अयं [16]पटो मे पितुरङ्गभूषणं पितामहाद्यैरुपभुक्तयौवनः । अलंक-
रिष्यत्यथ पुत्रपौत्रकान्मयाधुना पुष्पवदेव धार्यते ॥ ३१ ॥ अर्था न सन्ति न च मुञ्चति

---

१ आकाशम्; (पक्षे) वस्त्रम् २ दरिद्रस्येत्यर्थः. ३ पृथूनि कार्तस्वरस्य सुवर्णस्य पात्राणि यस्मिंस्तत्; (पक्षे) पृथुकाना बालानामार्तस्वरा रुदितशब्दास्तेषा पात्र भाजनम् ४ भूषिता अलंकृता निःशेषाः परिजना यस्मिन्, (पक्षे) भुवि उषिता निःशेषाः परिजना यस्मिन् ५ विलसन्त्यः शोभमानाः करेणवो हस्तिन्यस्ताभिर्गहन निबिडम्; (पक्षे बवयो सावर्ण्यात्) बिले सन्त एव सत्का बिलवर्तिनो ये रेणवो धूलयस्तैर्गहन व्याप्तम्. ६ गृहम्. ७ विचारशीलम्. ८ प्रीतिम् ९ स्थित्वा १० विनष्टशरीरे ११ हतभाग्ये. १२ गुणसमुदाये १३ कालिदास "एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः" इति कुमारसंभवस्थे पद्ये. १४ कोटिगुणनाशकमिति भावः. १५ परगृहवास १६ वस्त्रम्.

मां दुराशा त्यागे रतिं वहति दुर्ललितं मनो मे । याच्ञा हि लाघवकरी[1] स्ववधे च पापं प्राणाः स्वयं व्रजत किं प्रविलम्बितेन ॥ ३२ ॥ धनं यदि गतं गतं चरणयुग्मरेणूपमं धरा यदि गता गता कथय मे किमेतावता । इदं पुनररुंतुदं[3] धनिगणैरिदानींतनैर्दरिद्रगणनाविधौ यदहमङ्कपाते धृतः ॥ ३३ ॥ निवासश्चिन्तायाः परपरिभवो वैरमपरं जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् । वनं गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो हृदिस्थः शोकाग्निर्न च दहति संतापयति च ॥ ३४ ॥ अये लाजानुच्चैः पथि वचनमाकर्ण्य गृहिणी शिशोः कर्णौ यत्नात्सुपिहितवती दीनवदना । मयि क्षीणोपाये यदकृत दृशावश्रुशवले तदन्तःशल्यं मे त्वमिव पुनरुद्धर्तुमुचितः ॥ ३५ ॥ विधातुर्द्वे कन्ये सुगतिरपरा दुर्गतिरभूत्पुरा धाताराध्यां गुणकुलविहीनाय स ददौ । ततः पश्चात्तापादिव सुगणसज्जातमधुना कुलीनं विद्वांसं वरमिह मृगेण्यं मृगयते ॥ ३६ ॥ न भिक्षा दुर्भिक्षे मिलति दुरवस्थाः कथमृणं लभन्ते कर्माणि द्विजपरिवृढान्कारयतु कः । अदत्त्वैव ग्रासं ग्रहपतिरसावस्तमयते क्व यामः किं कुर्मो गृहिणि गहनो जीवनविधिः ॥ ३७ ॥ मा रोदीश्चिरमेहि वस्त्ररहितान्दृष्ट्वाद्य बालानिमानायातस्तव वत्स दास्यति पिता ग्रैवेयकं वाससी । श्रुत्वैवं गृहिणीवचांसि निकटे कुड्यस्य निष्किंचनो निःश्वस्याश्रुजलप्लवप्लुतमुखः पान्थः पुनः प्रस्थितः ॥ ३८ ॥ कन्थाखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकं रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलालोच्चयः । दंपत्योरिति जल्पतोर्निशि यदा चोरः प्रविष्टस्तदा लब्धं[11] कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः ॥ ३९ ॥ वृद्धोऽन्धः पतिरेष मञ्चकगतः[12] स्थूणावशेषं[13] गृहं कालोऽभ्यर्णजलागमः[14] कुशलिनी वत्सस्य वार्तापि नो । यत्नात्संचिततैलबिन्दुघटिका भग्नेति पर्याकुला[15] दृष्ट्वा गर्भभरालसां निजवधूं[16] श्वश्रूश्चिरं रोदिति ॥ ४० ॥ नो सेवा विहिता गुरोरपि मनाङ्नो वा कृतं पूजनं देवानां विधिवन्न वा शिव शिव स्निग्धादयः सेविताः । किं तु त्वच्चरणौ सरस्वति रसादा जन्मनः सेवितौ तस्मान्मां विजहाति सा भगवती शङ्के सपत्नी तव ॥ ४१ ॥ क्षुत्क्षामाः शिशवः शवा इव भृशं मन्दाशया बान्धवा लिप्ता जर्जरकर्करी[18] जतुलवैर्नो[19] मां तथा बाधते । गेहिन्या त्रुटितांशुकं घटयितुं कृत्वा सकाकु स्मितं[20] कुप्यन्ती प्रतिवेशिलोकगृहिणी सूचीं यथा याचिता ॥ ४२ ॥ दग्धं खाण्डवमर्जुनेन बलिना दिव्यैर्द्रुमैः सेवितं दग्धा वायुसुतेन रावणपुरी लङ्का पुनः स्वर्णभूः । दग्धः पञ्चशरः पिनाकपतिना तेनाप्ययुक्तं कृतं दारिद्र्यं जनतापकारकमिदं केनापि दग्धं न हि ॥ ४३ ॥ उत्तिष्ठ क्षणमेकमुद्वह[22] सखे दारिद्र्यभारं मम श्रान्तस्तावदहं चिरा-

१ लघुत्वकारिणी २ कालदैर्घ्येणेति यावत्. ३ मर्मस्पृक्. ४ छादितवती. ५ रोदन मा कुरु. ६ कण्ठभूषणम्. ७ वस्त्रे ८ भित्ते ९ दरिद्र. १० तुषसचय. ११ जीर्णवस्त्रखण्डम् १२ शय्या १३ गृहस्तम्भ. १४ समीप. १५ व्याकुला १६ स्नुषाम् १७ लक्ष्मीरित्यर्थ १८ चालनीसदृश. सच्छिद्रः कुम्भः. १९ लाक्षाखण्डैः. २० स्तवसहित स्मितम् २१ मदनः २२ धारय.

न्मरणजं सेवे त्वदीयं सुखम् । इत्युक्तं धनवर्जितस्य वचनं श्रुत्वा श्मशाने शवो दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वैव तूष्णीं स्थितः ॥ ४४ ॥ भद्रे वाणि ममानने कुरु दयां वर्णानुपूर्व्या चिरं चेतः स्वास्थ्यमुपैहि याहि करुणे प्रज्ञे स्थिरत्वं व्रज । लज्जे तिष्ठ पराङ्मुखी क्षणमहो तृष्णे पुरः स्थीयतां पापो यावदहं ब्रवीमि धनिनां देहीति दीनं वचः ॥४५॥ यो गङ्गामतरत्तथैव यमुनां यो नर्मदां शर्मदां[1] का वार्ता सरिदम्बुलङ्घनविधौ यश्चार्णवांस्तीर्णवान् । सोऽस्माकं चिरमास्थितोऽपि सहसा दारिद्र्यनामा सखा त्वद्दानाम्बुसरित्प्रवाहे न प्रधानम् संभाव्यते[2] ॥४६॥ दारिद्र्याद्ध्रियमेति[3] ह्रीपरिगतः सत्त्वात्परिभ्रश्यते निःसत्त्वः मधुरिपुकथा रिभवान्निर्वेदमापद्यते[5] । निर्विण्णः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते दत्तैर्भवति हि यमेत्यहो निधनता सर्वापदामास्पदम्[6] ॥ ४७ ॥ शीतेनाध्युषितस्य माघजलवच्चन्द्रः श्रीज्जतः शान्ताग्नेः स्फुरिताधरस्य धमतः क्षुत्क्षामकुक्षेर्मम । निद्रा क्वाप्यवमानितेऽणुर्जले संत्यज्य दूरं गता तत्पात्रप्रतिपादितेव कमला नो हीयते शर्वरी ॥ ४८ ॥ दारिद्र्यात्पु. धनं बान्धवजनो वाक्ये न संतिष्ठते सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः । सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते पापं कर्म च यत्परैरपि कृत तत्तस्य संभाव्यते ॥ ४९ ॥ सङ्गं नैव हि कश्चिदस्य कुरुते संभाष्यते नादरात्संप्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते । दूरादेव महाजनस्य विरहत्यल्पच्छदो लज्जया मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ ५० ॥ पौरेभ्यो न भयं न दण्डपतनं त्रासो न वा भूपतेर्निःसङ्गं शयनं निशासु गमनं दुर्गेषु मार्गेषु च । दारिद्र्य सुखमेव केवलमहो दोषद्वयं वर्तते जाया निन्दति अङ्गभोगसमये मुञ्चन्ति वै याचकाः ॥ ५१ ॥ वासश्चर्म विभूषणं शवशिरो भस्माङ्गलेपः सदा ह्येको गौः स च लाङ्गलाद्यकुशलः संपत्तिरेतादृशी । इत्यालोच्य विमुच्य शंकरमगाद्रत्नाकरं जाह्नवी कष्टं निर्धनिकस्य जीवितमहो दारैरपि त्यज्यते ॥ ५२ ॥ मद्गेहे मशकीव मूषकवधूर्मूषीव मार्जारिका मार्जारीव शुनी शुनीव गृहिणी वाच्यः किमन्यो जनः । मूर्छापन्नशिशूनसून्विजहतो दृष्ट्वा तु झिल्लीरवा लूता तन्तुवितानसंवृतमुखी चुल्ली चिरं रोदिति ॥ ५३ ॥ पीठाः[7] कच्छपवत्तरन्ति सलिले संमार्जनी मीनवद्दर्वी सर्पविचेष्टितानि कुरुते संत्रासयन्ती शिशून् । शूर्पार्धावृतमस्तका च गृहिणी भित्तिः प्रपातोन्मुखी रात्रौ पूर्णतडागसंनिभमभूद्राजन्मदीयं गृहम् ॥ ५४ ॥ शीलं शातयति श्रुतं शमयति प्रज्ञां निहन्त्यादर दैन्यं दीपयति क्षमा क्षपयति व्रीडामपि ह्रासयति । तेजो जर्जरयत्यपास्यति मतिं विस्तारयत्यर्थितां पुंसः क्षीणधनस्य किं न कुरुते वैरं कुटुम्बग्रहः ॥५५॥ दारिद्र्येण समीरितापि बहुशः कण्ठं समालम्बते कण्ठात्कष्टशतैः कथं कथमपि प्राप्नोति जिह्वातलम् । जिह्वाकीलककीलितैव सुदृढं तस्मान्न निर्यात्यसौ वाणी प्राणपरिक्षयेऽपि महतां देहीति नास्तीति च ॥५६॥

---

१ सुखदात्रीम् २ न दृश्यते. ३ लज्जा प्राप्नोति. ४ पराजित.. ५ खेदम् ६ स्थानम्. ७ आसनानि.

## दानप्रशंसा ।

अनुकूले विधौ देयं यतः पूरयिता हरिः । प्रतिकूले विधौ देयं यतः सर्वं हरिष्यति ॥ १ ॥ यद्ददाति यदश्नाति तदेव धनिनो धनम् । अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥ २ ॥ यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने । तत्ते वित्तमहं मन्ये शेषमका[illegible] रक्षसि ॥३॥ त्याग एको गुणः श्लाघ्यः किमन्यैर्गुणराशिभिः । त्यागाज्जगति पूज्यन्ते शिशोः कर्णौ [illegible]पाः ॥ ४ ॥ भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम् । दारिद्र्यमप्रदानेन तदन्तःशल्यं मे भवेत् ॥ ५ ॥ ग्रासादपि तदर्धं च कस्मान्नो दीयतेऽर्थिषु । इच्छानुरूपो भूत्पुरा धाताराध्[illegible]कस्य भविष्यति ॥ ६ ॥ गौरवं प्राप्यते दानान्न तु वित्तस्य संचयात् । कुलीनं विद्वांसं पयोदानां पयोधीनामधः स्थितिः ॥ ७ ॥ दरिद्रान्भर कौन्तेय मा प्रयच्छेकथमूर्णं [illegible] व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥ ८ ॥ दातव्यमिति यद्दानं दी[illegible]ऽनुपकारि[illegible] । देशे काले च पात्रे च तद्दानं सात्विकं विदुः ॥ ९ ॥ उपार्जितानां वित्तानां त्याग एव हि र[illegible] । [illegible]संस्थानां परीवाह इवाम्भसाम् ॥ १० ॥ दानोपभोगवन्ध्या या सुहृद्भिर्या न भुज्यते । पुंसां [illegible] लक्ष्मीरलक्ष्मीः क्रमशो भवेत् ॥ ११ ॥ किं तया क्रियते लक्ष्म्या या वधूरिव केवला । या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥ १२ ॥ आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः । गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ १३ ॥ दानेन श्लाघ्यतां यान्ति पशुपाषाणपादपाः । दानमेव गुणः श्लाघ्यः किमन्यैर्गुणकोटिभिः ॥ १४ ॥ दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ १५ ॥ यो न ददाति न भुङ्क्ते सति विभवे नैव तस्य तद्द्रव्यम् । तृणमयकृत्रिमपुरुषो रक्षति सस्यं परस्यार्थे ॥ १६ ॥ दातव्यं भोक्तव्यं सति विभवे संग्रहो न कर्तव्यः । पश्यामि मधुकरीणां संचितमर्थं हरन्त्यन्ये ॥ १७ ॥ अणुमपि वितरणशीलं भावमनुदयं बुधा जातु । लघुरणि हि वर्णं इष्टः सद्भिर्गुरुरेव चेद्विसर्गपरः ॥ १८ ॥ मीयतां कथमभीप्सितमेषां दीयतां द्रुतमयाचितमेव । तं धिगस्तु कलयन्नपि वाञ्छामर्थिवागवसरं सहते यः ॥ १९ ॥ प्रापितेन चटुकाकुविडम्बं लम्भितेन बहुयाचनलज्जाम् । अर्थिना यदघमर्जितं दाता तन्न लुम्पति विलम्ब्य ददानः ॥ २० ॥ यत्प्रदेयमुपनीय वदान्यैर्दीयते सलिलमर्थिजनाय । याचनोक्तिविफलत्वविशङ्कात्रासमूर्च्छनचिकित्सितमेतत् ॥ २१ ॥ अर्थिने न तृणवद्धनमात्रं किंतु जीवनमपि प्रतिपाद्यम् । एवमाह कुशवज्जलदायी द्रव्यदानविधिरुक्तिविदग्धः ॥२२॥ पङ्कसंकरविगर्हितमर्हेन श्रियः कमलमाश्रयणाय । अर्थिपाणिकमलं विमलं तद्वासवेश्म विदधीत सुधीस्तत्

१ दैवे. २ पूरणकर्ता. ३ अनेकोपभोग्या. ४ नाश इत्यर्थः. ५ तृणकृतकपटपुरुषः. सस्यरक्षणार्थमुच्चप्रदेशे श्वापदभयहेतुस्तृणादिभिः पुरुषः क्रियत इति प्रसिद्धम्. ६ ऐश्वर्ये. ७ भ्रमरीणाम् ८ ह्रासत्वम्.

॥ २३ ॥ दानपात्रमधमर्णमिहैकग्राहि कोटिगुणितं दिवि दायि । साधुरेति सुकृतैर्यदि कर्तुं पारलौकिककुसीदमसीदत् ॥ २४ ॥ अर्थो विनैवार्थनयोपसीदन्नाल्पोऽपि धीरैरवधीरणीयः। मान्येन मन्ये विधिना वितीर्णः स प्रीतिदायो बहुमन्तुमर्हः ॥ २५ ॥ दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यान्ति नाशम् । परोऽपि बन्धुत्वमुपैति दानैर्दानं हि सर्वव्यसनानि हन्ति ॥ २६ ॥ तुरगशतसहस्रं गोगजानां च लक्षं कनकरजतपात्रं मेदिनी सागरान्तम् । विमलकुलवधूनां कोटिकन्याश्च दद्यान्नहि नहि सममेतैरन्नदानं प्रधानम् ॥ २७ ॥ कामं वाचः कतिचिदफलाः सन्तु लोके कवीनां सन्त्येवान्या मधुरिपुकथा संस्तवात्कामदोग्ध्र्यः । वित्तं कामं भवतु विफलं दत्तमश्रोत्रियेभ्यः पात्रे दत्तैर्भवति हि धनैर्धन्यता भूरिदातुः ॥ २८ ॥ मेरुर्दूरगतो महान्हिमगिरिः प्रालेयमात्रोऽभवच्चन्द्रः श्रीसहितोऽपि याचकभयात्क्षीणत्वमालम्बते । कौपीनं धृतवान्हरोऽपि सहसा विष्णुर्जले संस्थितो वारां राशिरपेयतामुपगतः को नाम दातुं क्षमः ॥ २९ ॥ देयं भो अधने धनं सुकृतिभिर्नो संचितं सर्वदा श्रीकर्णस्य बलेश्च विक्रमपतेरद्यापि कीर्तिः स्थिता । आश्चर्यं मधु दानभोगरहितं नष्टं चिरात्संचितं निर्वाणादपि पाणिपादयुगलं घर्षन्त्यहो मक्षिकाः॥३०॥

---

## लोभनिन्दा ।

लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च । द्वेषक्रोधादिजनको लोभः पापस्य कारणम् ॥ १ ॥ लोभात्क्रोधः प्रभवति लोभात्कामः प्रजायते । लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ॥ २ ॥ लोभात्क्रोधः प्रभवति क्रोधाद्द्रोहः प्रवर्तते । द्रोहेण नरकं याति शास्त्रज्ञोऽपि विचक्षणः ॥ ३ ॥ मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम् । लोभाविष्टो नरो हन्ति स्वामिनं वा सहोदरम् ॥ ४ ॥ लोभेन बुद्धिश्चलति लोभो जनयते तृषाम् । तृषार्तो दुःखमाप्नोति परत्रेह च मानवः ॥ ५ ॥ लोभाविष्टो नरो वित्तं वीक्षते न स चापदम् । दुग्धं पश्यति मार्जारो यथा न लगुडाहतिम् ॥ ६ ॥ प्रायेण धनिनामेव धनलोभो निरन्तरम् । पश्य कोटिद्वयोपेतं लक्षाय प्रणतं धनुः ॥ ७ ॥ नात्यर्थमर्थार्थितया लुब्धमुद्वेजयेज्जनम् । अब्धिर्दत्त्वाश्वरत्नं स्त्रीमैथ्यमानोऽसृजद्विषम् ॥ ८ ॥ लोभः सदा विचिन्त्यो लुब्धेभ्यः सर्वतो भयं दृष्टम् । कार्याकार्यविचारो लोभविमूढस्य नास्त्येव ॥ ९ ॥ सत्यप्रशमतपोभिः शस्त्रधनैः शास्त्रवेदिभिर्विजितः । लोभो बत प्रविष्टः कुटिलं हृदयं किरातीनाम् ॥ १० ॥ स्नेहोपपन्न इति पूर्णदशाविशेषशाली स्वमात्मनि वसुप्रकरं निधाय । लब्धोदये तमथ गृह्णति पद्मबन्धौ दीपा भवन्ति कलुषा बलवान्हि लोभः ॥ ११ ॥ यद्दुर्गामटवीमटन्ति विकट क्रामन्ति देशान्तरं गाहन्ते गहनं समुद्रमथनक्लेशं कृषिं कुर्वते ।

---

१ तिष्ठतीति शेष.. २ गहनाम्. ३ अरण्यम्.

सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ १२ ॥

## उदारप्रशंसा ।

शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता दशसहस्रेषु दाता भवति वा न वा ॥ १ ॥ दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति । अदाता हि धनत्यागी धनं हित्वा हि गच्छति ॥ २ ॥ रक्षन्ति कृपणाः पाणौ द्रव्यं [1]कव्यमिवात्मनः । तदेव सन्तः सततमुत्सृजन्ति यथा मलम् ॥ ३ ॥ याचितो यः प्रहृष्येत दत्त्वा च प्रीतिमान्भवेत् । तं दृष्ट्वाप्यथवा श्रुत्वा नरः स्वर्गमवाप्नुयात् ॥ ४ ॥ आकारमात्रे विज्ञाते संपादितमनोरथाः । ते धन्या ये न शृण्वन्ति दीनाः कामार्थिनां गिरः ॥ ५ ॥ कर्णलब्धिगुणोत्कर्षास्त्यागिनो धन्विनस्तथा । निष्फलान्न विमुञ्चन्ति मार्गणान्संमुखे स्थितान् ॥ ६ ॥ देहि देहीति जल्पन्ति त्यागिनोऽप्यर्थिनोऽपि च । आलोकयन्ति भारः स्यादस्ति नास्तीति न क्वचित् ॥ ७ ॥ युध्यन्ते पक्षिपश्वाद्याः पठन्ति शुकसारिकाः । दातुं शक्नोति यो वित्तं स शूरः स च पण्डितः ॥ ८ ॥ अयं निजः परो [illegible]वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ९ ॥ अर्थिनां कृपणा दृ[illegible]ष्टिस्त्वन्मुखे पतिता सकृत् । तदवस्था पुनर्देवान्नान्यस्य मुखमीक्षते [illegible]स्य लक्ष्मीपयोधरोत्स[illegible]ङ्कुङ्कुमारुणितो हरेः । ध[illegible]लिः स येनास्य भिक्षापात्रीकृ[illegible]णः ॥ ११ ॥ कर्णस्त्वच[illegible]सं जीवं जीमत[illegible] यान्ति [illegible]दौ दधीचिरस्थीनि [illegible]त्मनाम् ॥ १२ ॥ दाता नीचोऽपि सेव्यः स्यान्निष्फलो न महानपि । जलार्थी वारिधिं त्यक्त्वा पश्य कूपं निषेवते ॥ १३ ॥ सैव परं न विनश्यति तनुरपि या श्रीर्निवेशि[10] सत्सु । अवशिष्यते हिमांशोः सैव कला या स्थिरा शंभौ ॥ १४ ॥ कियती पञ्चसहस्री कियती लक्षाप्यकोटिरपि कियती । औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥ १५ ॥

## कृपणनिन्दा ।

कृपणेन समो दाता न भूतो न भविष्यति । अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥ १ ॥ यदर्ज्यते परिक्लेशैरर्जितं यन्न भुज्यते । विभज्यते यदन्तेऽन्यैः कस्यचिन्मास्तु तद्धनम् ॥ २ ॥ यत्करोत्यरतिं क्लेशं तृष्णां [11]मोहं प्रजागरम् । न तद्धनं कदर्याणां हृदये [13]व्याधिरेव सः ॥ ३ ॥ मृत्युः शरीरगोप्तारं धनरक्षं वसुंधरा । दुश्चारिणीव हसति स्वपतिं पुत्रवत्सलम् ॥ ४ ॥ त्यागभोगविहीनेन धनेन धनिनो यदि । भवामः किं न तेनैव धनेन धनिनो वयम् ॥ ५ ॥ दानोपभोगरहिता दिवसा यस्य यान्ति वै । स कर्मकारभस्त्रेव

१ युद्धम्. २ विलास.. ३ मासम्. ४ बाणान्; (पक्षे) याचकान्. ५ स्वकीय.. ६ समुद्रम्. ७ अल्पा. ८ संपाद्यते. ९ अवसाने. १० अस्वस्थत्वम्. ११ विचाराशक्तिम् १२ कृपणानाम्. १३ पीडैव.

श्वसन्नपि न जीवति ॥ ६ ॥ अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयम् । आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥ ७ ॥ कृपणेन शवेनैव मृतेनापि न दीयते । मांसं वर्धयता तेन काकस्योपकृतिः कृता ॥ ८ ॥ बोधयन्ति न याचन्ते भिक्षाद्वारा गृहे गृहे । दीयतां दीयतां नित्यमदातुः फलमीदृशम् ॥ ९ ॥ द्वारं द्वारं रटन्तीह भिक्षुकाः पात्रपाणयः । दर्शयन्त्येव लोकानामदातुः फलमीदृशम् ॥ १० ॥ न दातुं नोपभोक्तुं च शक्नोति कृपणः श्रियम् । किं तु स्पृशति हस्तेन नपुंसक इव स्त्रियम् ॥ ११ ॥ किंशुके किं शुकः कुर्यात्फलितेऽपि बुभुक्षितः । अदातरि समृद्धेऽपि किं कुर्युरुपजीविनः ॥ १२ ॥ वरं विभवहीनेन प्राणैः संतर्पितोऽनलः । नोपचारपरिभ्रष्टः कृपणः प्रार्थितो जनः ॥ १३ ॥ उदारचरितस्त्यागी याचितः कृपणोऽधिकः । एको धनं ततः प्राणानन्यः प्राणांस्ततो धनम् ॥ १४ ॥ नोपभोक्तुमपि क्लीबो जानात्युपचितां श्रियम् । ग्राम्यो विरागयत्येव रमयन्नपि कामिनीम् ॥ १५ ॥ कृपणः स्ववधूसङ्गं न करोति भयादिव । भविता यदि मे पुत्रः स मे वित्तं हरेदिति ॥ १६ ॥ यदधोऽधः क्षितौ वित्तं निचखान मितंपचः । तदधोनिलयं गन्तुं चक्रे पन्थानमग्रतः ॥ १७ ॥ निजसौख्यं निरुन्धानो यो धनार्जनमिच्छति । परार्थं भारवाहीव क्लेशस्यैव हि भाजनम् ॥ १८ ॥ असंभोगेन सामान्यं कृपणस्य धनं परैः । अस्येदमिति संबन्धो हानौ दुःखेन गम्यते ॥ १९ ॥ सति द्राक्षाफले क्षीरे मृदामास्वादनं मुदे । अहो मातुरियं रीतिः कृपणे गर्भवर्तिनि ॥ २० ॥ अदातुर्मानसं क्वापि न स्पृशन्ति कवेर्गिरः । दोषायैवातिवृद्धस्य विलासास्तरुणीकृताः ॥ २१ ॥ शरणं किं प्रपन्नानि विषवन्मारयन्ति वा । न त्यजन्ते न भुज्यन्ते कृपणेन धनानि यत् ॥ २२ ॥ धनं यदिह मे दत्से विधे मा देहि कर्हिचित् । औदार्यं धनिनो देहि यन्मदीये हृदि स्थितम् ॥ २३ ॥ वीणेव श्रोत्रहीनस्य लोलाक्षीव विचक्षुषः । व्यसोः कुसुममालेव श्रीः कदर्यस्य निष्फला ॥ २४ ॥ लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया । दातापि विसृजत्यर्थं तयैव ननु शङ्कया ॥ २५ ॥ दैववशादुत्पन्ने सति विभवे यस्य नास्ति भोगेच्छा । न च परलोकसमीहा स भवति धनपालको मूर्खः ॥ २६ ॥ उपभोगकातराणां पुरुषाणामर्थसंचयपराणाम् । कन्यामणिरिव सदने तिष्ठत्यर्थः परस्यार्थे ॥ २७ ॥ यदि भवति धनेन धनी क्षितितलनिहितेन भोगरहितेन । तस्माद्वयमपि धनिनस्तिष्ठति नः काञ्चनो मेरुः ॥ २८ ॥ नन्दनरेन्द्रद्रविणैर्दुष्कृतं हि किमपि विहितमतिघोरम् । वसुधातलोष्मपाको विरमति नाद्यापि यत्नेभ्यः ॥ २९ ॥ दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य । कृप-

---

१ कस्य का उपकृतिरुपकारः कृता अपि तु न कस्यापि कापीत्यर्थः; (पक्षे) काकस्य पक्षिणः. २ त्यजतीति शेष. ३ आरोपयामास. ४ पातालम्. ५ दारिद्र्यशङ्कयैव. ६ इच्छा. ७ भूम्यन्तर्गतेन. ८ उपभोगहीनेन. ९ दृढतरमतिनिबिडं निबद्धा मुष्टिर्येन; (पक्षे) दृढतरं निबद्धा मुष्टिस्त्सरुर्यस्य. १० कोशागारे निषण्णस्य स्थितस्य; (पक्षे) कोशे खड्गपिधाने स्थितस्य. ११ स्वभावमलिनः. मलिनवेषत्वात्; (पक्षे) कृष्णवर्णत्वात्.

णस्य कृपाणस्य च केवलमाकारतो भेदः ॥ ३० ॥ कृपणस्य समृद्धीनां भोक्तारः सन्ति केचिदतिनिपुणाः । जलसंपदोऽम्बुराशेर्यान्ति वशं शश्वदौर्वाग्नेः ॥ ३१ ॥ प्राप्तानपि नो लभते भोगान्भोक्तुं स्वकर्मभिः कृपणः । मुखपाकः किल भवति द्राक्षापाके बलिभुजां हि ॥ ३२ ॥ अतिसाहसमतिदुष्करमत्याश्चर्यं च दानमर्थानाम् । योऽपि ददाति शरीरं न ददाति स वित्तलेशमपि ॥ ३३ ॥ केचित्स्वभावलुब्धास्तीव्रतरां यातनामपि सहन्ते । न तु संत्यजन्ति वित्तं मात्सर्यमिवाधमाः सततम् ॥ ३४ ॥ मेघा इवातिलुब्धा भवन्ति धन लवणवारिबहुतृष्णाः । तृणलवमिव निजदेहं त्यजन्ति लेशं न वित्तस्य ॥ ३५ ॥ अर्थिनि कवयति कवयति पठति च पठति स्तवोद्यतं स्तौति । पश्चाद्यामीत्युक्ते कृपणः प्रणतोऽञ्जलिं कुरुते ॥ ३६ ॥ याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य । तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ ३७ ॥ मा धनानि कृपणः खलु जीवंस्तृणयार्पयतु जातु परस्मै । तत्र नैष कुरुते मम चित्रं यत्तु नार्पयति तानि मृतोऽपि ॥ ३८ ॥ लोक एष परलोकमुपेता हा विधाय निधने धनमेकः । इत्यमुं खलु तदस्य निनीषत्यर्थिबन्धुरुदयद्दयचित्तः ॥ ३९ ॥ फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् । मृदुस्पर्शा शय्या सुललितलता पल्लवमयी सहन्ते संतापं तदपि धनिनां द्वारि कृपणाः ॥ ४० ॥ यदेते साधूनामुपरि विमुखाः सन्ति धनिनो न चैषामवज्ञैषामपि तु निजवित्तव्ययभयम् । अतः खेदो नास्मिन्परममनुकम्पैव भवति स्वमांसत्रस्तेभ्यः क इह हरिणेभ्यः परिभवः ॥ ४१ ॥ जहाति सहसासनं झटिति पृच्छति स्वागतं नमस्यति मुहुर्मुहुः श्रुतिमनोहरं भाषते । ददाति कुसुमं फलं शिथिलयत्यभीष्टक्रियामहो न परिचीयते कृपणवञ्चना चातुरी ॥ ४२ ॥ अयश्चणकचर्वणं फणिफणामणेः कर्षणं करेण गिरितोलनं जलनिधेः पदा लङ्घनम् । प्रसुप्तहरिबोधनं निशितखड्गसंस्पर्शनं कदाचिदखिलं भवेन्न च शठाद्धनस्यार्जनम् ॥ ४३ ॥

---

## याचकनिन्दा ।

वेपथुर्मलिनं वक्त्रं दीना वाग्गद्गदः स्वरः । मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ १ ॥ विद्यावतः कुलीनस्य धनं याचितुमिच्छतः । कण्ठे पारावतस्येव वाक्करोति गतागतम् ॥ २ ॥ दक्षिणाशाप्रवृत्तस्य प्रसारितकरस्य च । तेजस्तेजस्विनोऽर्कस्य ह्रियतेऽन्यस्य

---

१ आकारत आकृत्या भेद ; (पक्षे) कृपणशब्देऽकारो वर्तते, कृपाणशब्द आकारो वर्तते, एतावतैव भेदं भिन्नत्वम् कृपाणः खड्गः. २ समुद्रस्य. ३ वाडवाग्नेः. ४ मुखरोग. ५ काकानाम् ६ याचके. ७ कवित करोति ८ नम्रः ९ उद्यत्करुण चित्तं यस्य. १० क्लेशरहितम्. ११ वृक्षाणाम् १२ सत्वरम्. १३ कर्णमधुरम् १४ लोहम्. १५ निद्रितसिंहोत्थापनम्. १६ तीक्ष्णः. १७ कम्पः. १८ दक्षिणदिशाया प्रवर्तमानस्य; (पक्षे दक्षिणाया आशा तया प्रवृत्तस्य १९ प्रसारिता विस्तारिताः करा. किरणा येन; (पक्षे) प्रसारितः करो हस्तो येन

का कथा ॥ ३ ॥ साधुरेवार्थिभिर्याच्यः क्षीणवित्तोऽपि सर्वदा । शुष्केऽपि हि नदीमार्गे खन्यते सलिलार्थिभिः ॥ ४ ॥ तृणादपि लघुस्तूलस्तूलादपि च याचकः । वायुना किं न नीतोऽसौ मामेवं याचयिष्यति ॥ ५ ॥ देहीति वचनं श्रुत्वा हृदिस्थाः पञ्चदेवताः । मुखान्निर्गत्य गच्छन्ति श्रीह्रीधीधृतिकीर्तयः ॥ ६ ॥ नवीनदीनभावस्य याचकस्यातिमानिनः । वचोजीवितयोरासीत्पुरोनिःसरणे रण ॥ ७ ॥ अदृष्टमुखभङ्गस्य युक्तमन्धस्य याचितुम् । अहो बत महत्कष्टं चक्षुष्मानपि याचते ॥ ८ ॥ गतेर्भङ्गः स्वरो हीनो गात्रे खेदो महद्भयम् । मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ ९ ॥ दारिद्र्यानलसंतापः शान्तः संतोषवारिणा । याचकाशाविघातान्तर्दाहः केनोपशाम्यते ॥ १० ॥ दरिद्रस्य परा मूर्तिर्याच्ञा न द्रविणाल्पता । अपि कौपीनवाञ्शंभुस्तथापि परमेश्वरः ॥ ११ ॥ वदनाच्च बहिर्यान्ति प्राणा याच्ञाक्षरैः सह । ददामीत्यक्षरैर्दातु. पुनः कर्णाद्विशन्ति हि ॥ १२ ॥ देहीति वक्तुकामस्य यद्दुःखमुपजायते । दाता चेत्तद्विजानीयाद्दद्यात्स्वपिशितान्यपि ॥ १३ ॥ काक आह्वयते काकान्याचको न तु याचकान् । काकयाचकयोर्मध्ये वरं काको न याचकः ॥ १४ ॥ तीक्ष्णधारेण खड्गेन वरं जिह्वा द्विधा कृता । न तु मानं परित्यज्य देहि देहीति भाषितम् ॥१५॥ पुरतः प्रेरयत्याशा लज्जा पृष्ठावलम्बिनी । ततो लज्जाशयोर्मध्ये दोलायत्यर्थिना मनः ॥ १६ ॥ करान्प्रसार्य रविणा दक्षिणाशावलम्बिना । न केवलमनेनात्मा दिवसोऽपि लघूकृतः ॥ १७ ॥ एकेन तिष्ठताधस्तादन्येनोपरि तिष्ठता । दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥ १८ ॥ हृदि लज्जोदरे वह्निः स्वभावादग्निरुच्छिखः । तेन मे दग्धलज्जस्य पुनरागमनं नृप ॥ १९ ॥ सेवेव मानमखिलं ज्योत्स्नेव तमो जरेव लावण्यम् । हरिहरकथेव दुरितं गुणशतमप्यर्थिता हरति ॥ २० ॥ याचकवीरो धन्यः करदानग्राहकः स्वदातृभ्यः । कुरुते पराङ्मुखं वा ह्यतिनम्रं वा हरत्यसौ पुण्यम् ॥ २१ ॥ तावन्महतां महती यावत्किमपि हि न याच्यते लोकम् । बलिमनुयाचनसमये श्रीपतिरपि वामनो जातः ॥ २२ ॥ अनुसरति करिकपोलं भ्रमरः श्रवणेन ताड्यमानोऽपि । गणयति न तिरस्कारं दानान्धविलोचनो नीचः ॥ २३ ॥ कतरत्पुरहरपरुषं हालाहलकवलयाचनावचसोः । एकैव तव रसज्ञा तदुभयरसतारतम्यज्ञा ॥ २४ ॥ अग्रे लघिमा पश्चान्महतापि विधीयते नहि महिम्ना । वामन इति त्रिविक्रममभिदधति दशावतारविदः ॥ २५ ॥ गुरुतामुपयाति यन्मृतः पुरुषस्तद्विदितं मयाधुना । ननु लाघवहेतुरर्थिता न मृते तिष्ठति सा मनागपि ॥ २६ ॥ याचना हि पुरुषस्य महत्त्वं नाशयत्यखिलमेव तथा हि ।

१ कार्पास २ अहमहमिकया अग्रतो निःसरणे ३ मासानि ४ किरणान्, (पक्षे) हस्तान् ५ दक्षिणदिक्, (पक्षे) दक्षिणाया आशा स्पृहा ६ चन्द्रकान्तिः. ७ याचकत्वम् ८ कराद्धस्ताद्दानस्य ग्राहक; (पक्षे) करो राजग्राह्यो दण्डस्तस्य दान समर्पण तद्ग्राहकः ९ लक्ष्मीपतिरपि. १० ह्रस्वः; (पक्षे) लघु.. ११ किंचिदपि.

सद्य एव भगवानपि विष्णुवामनो भवति याचितुमिच्छन् ॥ २७ ॥ उत्तमर्णधनदानशङ्कया पावकोत्थशिखया हृदिस्थया। देव दग्धवसना सरस्वती नास्यतो बहिरुपैति लज्जया ॥ २८ ॥ नाक्षराणि पठता किमपाठि पाठितोऽपि किमु विस्मृत एव। इत्थमर्थिजनसंशयदोलाखेलनां खलु चकार नकारः ॥ २९ ॥ नीचतामनवलम्ब्य जनः को याचनादवचिनोति फलानि। हन्त वामनपदं प्रतिपेदे भिक्षुतामुपगतो जगदीशः ॥ ३० ॥ अन्यतो यदि निजोपचिकीर्षा मानहानिरिति भीतिरनीतिः। श्रीधरोऽपि हि बलेः श्रियमिच्छन्मानमातनुत वामनमेव ॥ ३१ ॥ संतापितानां मधुरैर्वचोभिर्मिथ्योपचारैश्च वशीकृतानाम्। आशावतां श्रद्दधतां च लोके किमर्थिनां वञ्चयितव्यमस्ति ॥ ३२ ॥ स्वार्थं धनानि धनिकात्प्रतिगृह्णतो यदास्य भजेन्मलिनतां किमिदं विचित्रम्। गृह्णन्परार्थमपि वारिनिधेः पयोऽपि मेघोऽयमेति सकलोऽपि च कालिमानम् ॥ ३३ ॥ [1]जनस्थाने भ्रान्तं [2]कनकमृगतृष्णाकुलतया वचो [3]वैदेहीति प्रतिपदमुदश्रु प्रलपितम्। [4]कृतालंकाभर्तुर्वदनपरिपाटीषु रचना मयाप्तं रामत्वं [5]कुशलवसुता न त्वधिगता ॥ ३४ ॥ क्व गन्तासि भ्रातः कृतवसतयो यत्र धनिनः किमर्थं प्राणानां स्थितिमनुविधातुं कथमपि। धनैर्याच्ञालब्धैर्ननु परिभवोऽभ्यर्थनफलं निकारोऽग्रे पश्चाद्धनमहह भोस्तद्धि निधनम् ॥ ३५ ॥ पङ्गो वन्द्यस्त्वमसि न गृहं यासि योऽर्थी परेषां धन्योऽन्ध त्वं धनमदवतां नेक्षसे यन्मुखानि। श्लाघ्यो मूक त्वमपि कृपणं स्तौषि नार्थाशया यः स्तोतव्यस्त्व बधिर न गिरं यः खलानां शृणोषि ॥ ३६ ॥ भ्रातर्धातरशेषयाचकजने वैरायसे सर्वथा यस्माद्विक्रमशालिवाहनमहीभृन्मुञ्जभोजादयः। अत्यन्त चिरजीविनो न विहितास्ते विश्वजीवातवो मार्कण्डिध्रुवलोमशप्रभृतयः सृष्टाः प्रभूतायुषः ॥ ३७ ॥ उड्डीना [6]गुणपत्रिणः सुखफलान्या[7]राद्विकीर्णान्यधः पर्यस्ताः परितो यशःस्तबकिताः संपल्लतापल्लवाः। प्रागेवापसृतप्रमोदहरिणच्छाया कथान्तं गता [8]दैन्यारण्यमतंगजेन सहसा भग्नेऽभिमानद्रुमे ॥ ३८ ॥ शूराः केऽपि पुरःस्थितां रिपुनरश्रेणिं सहन्ते सुखं धीराः केचन पञ्चबाणसदृशं कान्ता[9]दृगन्ताहतिम्। केचित्क्रूररवाश्च [10]पञ्चवदनान्दन्तीचपेटान्भटा नैवार्थिप्रकरं प्रसारितकरं कश्चिद्विसोढुं क्षमः ॥ ३९ ॥ आदर्शाय शशाङ्कमण्डलमिदं हाराय हेमाचलं दीपाय द्युमणिर्महीमिव कथं नो भिक्षवे दत्तवान्। दित्सापल्लवितप्रमोदसलिलव्याकीर्णमन्त्रा-

---

१ जनाना स्थानानि नगरपत्तनादीनि तेपु भ्रमण कृतम्, (पक्षे) जनस्थाने नासिकाख्यजनपदे परिभ्रमण कृतम्. २ कनक द्रव्यमेव मृगतृष्णा मरीचिका तया, (पक्षे) कनकस्य मृगो मायारूपधारी मारीचो राक्षसस्तस्य तृष्णा तया. ३ वे इति पदच्छेद. देहीति प्रलपितम्, (पक्षे) वैदेही जानकीति प्रलपितम्. ४ कांभर्तु कुत्सितस्वामिनो वदनपरिपाटीषु रचना अलमत्यर्थं कृता, (पक्षे) लङ्काभर्तू रावणस्य वदनपरिपाट्यामिषुरचना बाणरचना कृता ५ कुशल च वसु च द्रव्य तद्भावो न सपादित, (पक्षे) कुशलवौ सुतौ यस्याः सा वैदेही न प्राप्ता ६ गुणा एव पक्षिण. ७ समीपे. ८ दैन्यमेवारण्यगज.. ९ कान्ताकटाक्षवेधम्. १० सिहान्

म्बुजो जानीमो भृगुनन्दनस्तदखिलं न प्रायशो दृष्टवान् ॥ ४० ॥ दौर्गत्येन समीरिता हृदयतः कण्ठं समालम्बते कण्ठात्कष्टतरं कथं कथमपि प्राप्नोति जिह्वाञ्चलम्। लज्जाकीलककीलितेव निबिडं तस्मान्न निर्यात्यहो वाचा प्राणपरीक्षणेऽपि महतां देहीति नास्तीति च ॥ ४१ ॥ वक्त्रादुद्गस मे हठादधिवस त्वं वाणि वक्त्र मनागीशानां तदनु क्रुधा भजतु मां लक्ष्मीरिमानुज्झतु। पश्चात्तेषु पठत्सु मा प्रति यशोगाथावलीस्तृष्णया वक्त्र मय्यथ वक्त्रयत्यनुभवन्त्वेतेऽपि तद्यातनाम् ॥ ४२ ॥ तावत्सर्वगुणालयः पटुमतिः साधुः सतां वल्लभः शूरः सच्चरितः कलङ्करहितो मानी कृतज्ञः कविः। दक्षो धर्मरतः सुशीलगुणवांस्तावत्प्रतिष्ठान्वितो यावन्निष्ठुरवज्रपातसदृशं देहीति नो भाषते ॥ ४३ ॥ आस्वाद्य स्वयमेव वच्मि महतीर्मर्मच्छिदो वेदना मा भूत्कस्यचिदप्ययं परिभवो याच्ञेति संसारिणः। पश्य भ्रातरियं हि यौवनजराधिक्कारकेलिस्थली मानम्लानमसी गुणव्यतिकरप्रागल्भगर्वच्युतिः ॥ ४४ ॥ प्राणानां बत किं ब्रुवे कठिनतां तैरेव साविष्कृता निष्क्रामन्ति कथंचिदेव हि न ये याच्ञावचोभिः समम्। आत्मानं पुनराक्षिपामि विदितस्थैर्योऽपि येषामहो मिथ्याशङ्कितताद्वियोगविधुरो यत्प्रार्थये सर्वशः ॥ ४५ ॥ वासो वल्कलमास्तरः किसलयान्योकरूणां तलं मूलानि क्षतये क्षुधां गिरिनदीतोयं तृषाशान्तये। क्रीडा मुग्धमृगैर्वयांसि सुहृदो नक्तं प्रदीपः शशी स्वाधीने विभवे तथापि कृपणा याचन्त इत्यद्भुतम् ॥ ४६ ॥ ...न्ते स्वादुफला वनेषु तरवः स्वच्छं पयो नैर्झरं वासो वल्कलमाश्रयो गिरिगुहा शय्या तावल्लरी। आलोकाय निशासु चन्द्रकिरणाः सख्यं कुरङ्गैः सह स्वाधीने विभवेऽप्यहो ...पतिं सेवन्त इत्यद्भुतम् ॥ ४७ ॥ निष्कन्दाः किमु कन्दरोदरभुवः क्षीणास्तरूणां त्वचः ...न शुष्काः सरितः स्फुरद्गिरिगुरुग्रावस्खलद्वीचयः। प्रत्युत्थानमितस्ततः प्रतिदिनं कुर्व...रुद्भीविभिर्यद्द्वारार्पितदृष्टिभिः क्षितिभुजां विद्वद्भिरप्यास्यते ॥ ४८ ॥ कामं जीर्णपलाशसंतिकृतां कन्थां वसानो वने कुर्यामम्बुभिरप्ययाचितसुखैः प्राणानुबन्धस्थितिम्। साङ्गग्ला...ने सवेपितं सचकितं स्वान्तर्निदाघज्वरं वक्तुं न त्वहमुत्सहे सकृपणं देहीति दीनं वचः ॥ ४९ ॥ द्वारे द्वारे परेषामविरलमटति द्वारपालैः कैरालैर्[1] दृष्टो योऽप्याहतः सन्रणति ...णयति स्वापमानं तु नैव। क्षन्तुं शक्नोति नान्यं स्वसदृशमितरागारमप्याश्रयन्तं श्राम्यत्यात्मोदरार्थे कथमहह शुना नो समो याचकः स्यात् ॥ ५० ॥

## परोपकारप्रशंसा।

परोपकारः कर्तव्यः प्राणैरपि धनैरपि। परोपकारजं पुण्यं न स्यात्क्रतुशतैरपि ॥ १ ॥ धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत्। तन्निमित्तो वरं त्यागो विनाशे नियते सति ॥२॥ रविश्चन्द्रो घना वृक्षा नदी गावश्च सज्जनाः। एते परोपकाराय युगे दैवेन निर्मि-

१ विकरालै..

ताः ॥ ३ ॥ तृणं चाहं वरं मन्ये नरादनुपकारिणः । घासो भूत्वा पशून्पाति भीरून्पाति रणाङ्गणे ॥ ४ ॥ परोपकृतिकैवल्ये तोलयित्वा जनार्दनः । गुर्वीमुपकृतिं मत्वा ह्यवतारान्दशाग्रहीत् ॥ ५ ॥ आत्मार्थं जीवलोकेऽस्मिन्को न जीवति मानवः । परं परोपकारार्थं यो जीवति स जीवति ॥ ६ ॥ रागिणि नलिनीलक्ष्मीं दिवसो निदधाति दिनकरप्रभवाम् । अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥ ७ ॥ कृच्छ्रानुवृत्तयोऽपि हि परोपकारं त्यजन्ति न महान्तः । तृणमात्रजीवना अपि करिणो दानद्रवार्द्रकराः ॥ ८ ॥ प्रत्युपकुर्वन्बहुभिर्न भवति पूर्वोपकारिणस्तुल्याः । एको न करोति कृतं निष्कारणमेव कुरुतेऽन्यः ॥ ९ ॥ उपकारकमायतेर्भृशं प्रसवं कर्मफलस्य भूरिणः । अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥ १० ॥ परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः । परोपकाराय दुहन्ति गावः परोपकारार्थमिदं शरीरम् ॥ ११ ॥ भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्भूरिविलम्बिनो घनाः । अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥ १२ ॥ श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन । विभाति कायः खलु सज्जनानां परोपकारैर्न तु चन्दनेन ॥ १३ ॥ पद्माकरं दिनकरो विकचं करोति चन्द्रो विकासयति कैरवचक्रवालम् । नाभ्यर्थितो जलधरोऽपि जलं ददाति सन्तः स्वयं परहितेषु कृताभियोगाः ॥ १४ ॥ दातुः परोपकृतिनिर्भरचित्तवृत्तेरासन्नदूरगणना न हि संश्रितेषु । भानुर्विकासयति हन्त सरोजखण्डं पाणिस्थपङ्कजसमं भुवनान्तरेषु ॥ १५ ॥

## कृतघ्ननिन्दा ।

परोपकारशून्यस्य धिङ्मनुष्यस्य जीवितम् । यावन्तः पशवस्तेषां चर्माप्युपकरिष्यति ॥ १ ॥ ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा । निष्कृतिर्विहिता लोके कृतघ्ने नास्ति निष्कृतिः ॥ २ ॥ उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् । तं जनमसत्यसंधं भगवति वसुधे कथं वहसि ॥ ३ ॥ व्योम निशं वा कुरुते चित्रं निर्माति यत्नतः सलिले । स्नपयति पवनं सलिलैर्यस्तु खले चरति सत्कारम् ॥ ४ ॥ शोकं मा कुरु कुक्कुर सत्त्वेष्वहमधम इति मुधा साधो । कष्टादपि कष्टतरं दृष्ट्वा श्वान कृतघ्ननामानम् ॥ ५ ॥

## संतोषप्रशंसा ।

संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् । कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥

१ भीतान् २ परोपकार ३ मोक्ष ४ उभयोस्तुलना कृत्वा. ५ भारवतीम् ६ मत्स्यादीन्. ७ जग्राह ८ कर्ण. ९ शास्त्रेण. १० कासारम् ११ कुमुदमण्डलम्. १२ असत्यप्रतिज्ञम्. १३ सुखम् १४ आलेख्यम् १५ पूजाम्. १६ भषक. १७ व्यर्थम्

॥ १ ॥ अकृत्वा परसंतापमगत्वा खलनम्रताम्। अनुत्सृज्य सतां वर्त्म यत्स्वल्पमपि तद्बहु ॥ २ ॥ आगमिष्यन्ति ते भावा ये भावा मयि भाविताः। अहं तैरनुगन्तव्यो न तेषामन्यतो गतिः ॥ ३ ॥ यो मे गर्भगतस्यापि वृत्तिं कल्पितवान्प्रभुः। शेषवृत्तिविधानाय स किं सुप्तोऽथवा मृतः ॥ ४ ॥ अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम्। सुखान्यपि तथायान्ति दैन्यमत्रातिरिच्यते ॥ ५ ॥ पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे। अनृणी चाप्रवासी च स वारिचरमोदते ॥ ६ ॥ आत्माधीनशरीराणां स्वपतां निद्रया स्वया। कदन्नमपि मर्त्यानाममृतत्वाय कल्पते ॥ ७ ॥ सर्वत्र सपदस्तस्य संतुष्टं यस्य मानसम्। उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥ ८ ॥ ते धन्याः पुण्यभाजस्ते तैस्तीर्णः क्लेशसागरः। जगत्संमोहजननी यैराशाशीविषी जिता ॥ ९ ॥ अकिंचनस्य दान्तस्य शान्तस्य समचेतसः। सदा संतुष्टमनसः सर्वाः सुखमया दिशः ॥ १० ॥ न योजनशतं दूरं बाध्यमानस्य तृष्णया। सतुष्ट यत्करप्राप्तेऽप्यर्थे भवति नादरः ॥ ११ ॥ आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म। स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः ॥ १२ ॥ अर्थी करोति दैन्यं लब्धार्थो गर्वपरितोषम्। नष्टधनश्च सशोक. सुखमास्ते निःस्पृहः पुरुषः ॥ १३ ॥ तन्मूलं गुरुतायास्तत्सौख्यं तद्यशस्तदौर्जित्यम्। तत्सौभाग्यं पुंसां यदेतदप्रार्थनं नाम ॥ १४ ॥ सर्पाः पिबन्ति पवनं न च दुर्बलास्ते शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति। कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं सतोष एव पुरुषस्य परं निधानम् ॥ १५ ॥ चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नैवाङ्घ्रिपाः फलभृतः सरितोऽप्यशुष्यन्। रुद्धा गुहाः किमतितोऽवति नोपपन्नान्कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥ १६ ॥ मन्निन्दया यदि जनः [11]परितोषमेति नन्वप्रयत्नसुलभोऽयमनुग्रहो मे। [12]श्रेयोऽर्थिनोऽपि पुरुषाः [13]परतुष्टिहेतोर्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ १७ ॥ वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या सम इह परितोषो निर्विशेषो विशेषः। स हि भवति दरिद्रो यस्य तृष्णा विशाला मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ १८ ॥ गन्धाढ्या नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूथिकां तां दृष्ट्वाशु गतः स चन्दनवनं पश्चात्सरोज गतः। बद्धस्तत्र निशाकरेण सहसा रोदित्यसौ मन्दधी. सतोषेण विना पराभवपदं प्राप्नोति सर्वो जनः ॥ १९ ॥ मृत्युर्मार्धाति मूर्ध्नि शश्वदुरगी घोरा जरा रूपिणी त्वामेषा ग्रसते परिग्रहमयैर्गृध्रैर्जगद्ग्रस्यते। धूत्वा बोधजलैरबोधबहुलं तल्लोभजन्यं रजः संतोषामृतसागराम्भसि चिरं मग्नः सुखं स्थास्यसि ॥ २० ॥

---

१ मार्गम् २ जीवनोपायम् ३ विशिष्यते ४ कुत्सितमन्नम् ५ उपानद्भ्यां गूढौ पिहितौ पादौ यस्य ६ सर्पिणी ७ गौरवस्य ८ उत्साहशीलत्वम् ९ अयाचनम्. १० सतोषम्. ११ प्रसादः. १२ कल्याणेच्छव १३ अन्यसतोष·

## तृष्णानिन्दा ।

तृष्णे देवि नमस्तुभ्यं धैर्यविप्लवकारिणि । विष्णुस्त्रैलोक्यपूज्योऽपि यत्त्वया वामनीकृतः ॥ १ ॥ तृष्णे कृष्णेऽपि ते शक्तिर्दृष्टा मर्त्येषु का कथा । त्रैलोक्यव्यापि यद्रूपं तद्रूपं वामनीकृतम् ॥२॥ तृष्णां चेह परित्यज्य को दरिद्रः क ईश्वरः । तस्याश्चेत्प्रसरो दत्तो दास्यं च शिरसि स्थितम् ॥३॥ वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः । गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ४ ॥ नास्त्यन्या तृष्णया तुल्या क्वचिदेव नितम्बिनी । या प्राणानपि मुष्णन्ती भवत्येवाधिकं प्रिया ॥५॥ च्युता दन्ताः सिताः केशा दृङ्निरोधः पदे पदे । पातसज्जमिमं देहं तृष्णा साध्वी न मुञ्चति ॥ ६ ॥ तृष्णे त्वमपि तृष्णान्धा त्रिषु स्थानेषु वर्तसे । व्याधितेष्वनपत्येषु जरापरिणतेषु च ॥ ७ ॥ धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु । अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति च ॥ ८ ॥ तृष्णे देवि नमस्तुभ्यं या त्व सर्वस्य सर्वदा । उत्पादयस्ययत्नेन गोष्पदे सागरभ्रमम् ॥९ ॥ अपि मेरूपमं प्राज्ञमपि शूरमपि स्थिरम् । तृणीकरोति तृष्णैका निमेषेण नरोत्तमम् ॥ १० ॥ आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला । यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥ ११ ॥ तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् । येनाशाः पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥ १२ ॥ गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभो महत् । नभसोऽपि महद्ब्रह्म ततोऽप्याशा गरीयसी ॥ १३ ॥ आशैव राक्षसी पुंसामाशैव विषमञ्जरी । आशैव जीर्णमदिरा धिगाशा सर्वदोषभूः ॥१४॥ क्षुत्तृडाशाः कुटुम्बिन्यो मयि जीवति नान्यगाः । तासामाशा महासाध्वी कदाचिन्मां न मुञ्चति ॥ १५ ॥ यौवन जरया ग्रस्तमारोग्यं व्याधिभिर्हतम् । जीवितं मृत्युरभ्येति तृष्णैका निरुपद्रवा ॥१६॥ यत्र कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ १७ ॥ आशाया ये दासास्ते दासाः सर्वलोकस्य । आशा येषा दासी तेषां दासायते लोकः ॥ १८ ॥ दन्ता विश्लथदन्ताः केशाः काशप्रसूनसंकाशाः । नयनं तमसामयन तथापि चित्तं धनाङ्गनायत्तम् ॥ १९ ॥ त्वामुदर साधु मन्ये शाकैरपि यदसि लब्धपरितोषम् । हतहृदयं ह्यधिकाधिकवाञ्छाशतदुर्भरं न पुनः ॥२०॥ अङ्गं गलित पलित मुण्डं दशनविहीनं जात तुण्डम् । वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशा पिण्डम् ॥ २१ ॥ दिनयामिन्यौ सायंप्रातः शिशिरवसन्तौ पुनरायातः । कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः ॥ २२ ॥ आशैवलम्बोपचिता न कस्य तृष्णालतानर्थफलं प्रसूते । दिने दिने लब्धरुचिर्विवस्वान्मीनं

१ विलयम् २ ह्रस्वीकृत. ३ स्त्री. ४ हरन्ती ५ वार्धक्यम्. ६ मेरुसदृशम् ७ तृणवल्लघूकरोति. ८ पर्वत ९ शिर. १० दन्त.. ११ मुखम् १२ आश्रय १३ सूर्य. १४ मत्स्यः; (पक्षे) मीनराशिः

च ¹मेषं च ²वृषं च भुङ्क्ते ॥ २३ ॥ भिक्षाशनं तदपि नीरसमेकवारं शय्या च भूः परिजनो निजदेहमात्रम् । वस्त्रं सुजीर्णशतखण्डमयी च कन्था हा हा तथापि विषयान्न जहाति चेतः ॥ २४ ॥ गदोदन्ता दन्ताः पलितकलितः कुन्तलभरः तमःक्षेत्रे नेत्रेऽविषयपटुनी नः श्रुतिपुटे । अभूदङ्गं रङ्गद्वलिवलयवल्लीविलुलितं तथाप्येतच्चेतस्तरुण इव धावत्यनुदिनम् ॥ २५ ॥ गतं तत्तारुण्यं तरुणिहृदयानन्दजनकं विशीर्णा दन्तालिर्निजगतिरहो ³यष्टिशरणा । जडीभूता दृष्टिः श्रवणरहितं कर्णयुगलं मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ २६ ॥ वपुः कुब्जीभूतं गतिरपि तथा यष्टिशरणा विशीर्णा दन्तालिः श्रवणविकलं श्रोत्रयुगलम् । शिरः शुक्लं चक्षुस्तिमिरपटलैरावृतमहो मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ २७ ॥ खलोल्लापाः सोढाः कथमपि तदाराधनतया निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा । कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि त्वमाशे मोघाशे किमु परमितो नर्तयसि माम् ॥ २८ ॥ निवृत्ता भोगेच्छा बहुपुरुषमानो विगलितः समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः । शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने अहो दुष्टः कायस्तदपि मरणापायचकितः ॥ २९ ॥ अमीषां प्राणाना तुलितबिसिनीपत्रपयसां कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् । यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां कृतं म्लानव्रीडैर्निजगुणकथापातकमपि ॥ ३० ॥ समारम्भा भग्नाः कति कति न वारास्तव पशो पिपासोस्तुच्छेऽस्मिन्द्रविणमृगतृष्णार्णवजले । तथापि प्रत्याशा विरमति न ते मूढ शतधा न दीर्णं यच्चेतो नियतमशनिग्रावघटितम् ॥ ३१ ॥ विवेकव्याकोशे विकसति शमे शाम्यति तृषा परिष्वङ्गे तुङ्गे प्रसरतितरा सा परिणतिः । जरा जीर्णैश्वर्यग्रसनगहनाक्षेपकृपणस्तृषापात्रं यस्यां भवति मरुताम्प्यधिपतिः ॥ ३२ ॥ उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः । मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥ ३३ ॥ निःस्वोऽप्येकशतं शती दशशत सोऽपीह लक्षं शतं लक्षेशः क्षितिराजतां क्षितिपतिश्चक्रेशता वाञ्छति । चक्रेशः सुरराजतां सुरपतिर्ब्रह्मास्पदं वाञ्छति ब्रह्मा विष्णुपदं हरिः शिवपदं तृष्णावधि को गतः ॥ ३४ ॥ आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी । मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी तस्याः पारगता विशुद्धमनसा नन्दन्ति योगीश्वराः ॥ ३५ ॥ माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्या ह्रिया स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते । तृष्णे त्वा-

१ एडकः, (पक्षे) मेषराशिः २ वृषभ ; (पक्षे) वृषभराशि ३ यष्ट्यधीना. ४ धनिकानाम् ५ शून्यमनसाम्. ६ वज्रपाषाणघटितम् ७ इन्द्र. ८ निक्षेपः. ९ सच्छिद्रकपर्दिका. १० नक्र.. ११ अम्भसा भ्रमः. १२ पृथ्वी.

मनुबध्नता फलमियत्प्राप्तं जनेनामुना यः स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते ॥ ३६ ॥ दन्तैरुच्चलितं धिया तरलितं पाण्यङ्घ्रिणा कम्पित दृग्भ्यां कुड्मलितं बलेन गलितं रूपश्रिया प्रोषितम् । प्राप्तायां यमभूपतेरिह महाधाव्यां धरायामिय तृष्णा केवलमेकिकैव सुभटी धीरा पुरो नृत्यति ॥३७॥ भ्रान्तं याचनतत्परेण मनसा देहीति वाक्प्रेरिता भुक्तं मानविवर्जितं परगृहे साशङ्कितं काकवत् । साक्षेपं भ्रुकुटीकटाक्षकुटिलं दृष्टं खलाना मुखं तृष्णे देवि यदन्यदिच्छसि पुनस्तत्रापि सज्जा वयम् ॥ ३८ ॥ भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला । भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकवत्तृष्णे जृम्भसि पापकर्मनिरते नाद्यापि संतुष्यसि ॥ ३९ ॥ शान्तेर्मातुर्विवेकात्पितुरपि कृपण मैङ्क्षु कृत्वा पृथग्मामाशा योषा स्वतन्त्रा व्रजति परगृहान्सर्वदा वीर्तलज्जा । संधत्ते मत्कृशत्व मम यमनियमौ भ्रातरौ भर्त्सयन्ती पुष्ट्वा चैवात्मबन्धूंस्तदपि पुनरहो हन्त वन्ध्यां श्रयामः ॥ ४० ॥ आशानिष्ठाप्रतिष्ठाः किल मम महिलास्तासु सौख्यं कदाचिद्या भ्रान्त्या सा प्रदद्यादिह किमपि तथा मध्यमा सा परत्र । आद्या सा नोभयत्राप्यहह तदपि किं सक्ततां यामि तस्यां या प्रौढ्यादप्रगल्भे प्रतिदिवसमुभे ते कदर्थीकरोति ॥ ४१ ॥ लज्जे त्व मज्ज सिन्धौ गिरिवरशिखरे त्वं च तिष्ठ प्रतिष्ठे शान्ते प्रान्ते दिशान्ते कुरु वसतिमहो गर्व खर्वो भवाशु । तेजः पातालमूल भज भुवि भगवन्मान मा नाम तेऽस्तु प्रेम्णैकामाश्रयन्तीं सततमहमिमां तृष्णमाशां श्रयिष्ये ॥ ४२ ॥

---

## धीरप्रशंसा ।

स एव धन्यो विपदि स्वरूपं न विमुञ्चति । त्यजत्यर्ककरैस्तप्तं हिमं देहं न शीतताम् ॥ १ ॥ चलन्ति गिरय. कामं युगान्तपवनाहताः । कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः ॥ २ ॥ कृतं पुरुषशब्देन जातिमात्रावलम्बिना । योऽङ्गीकृतगुणैः श्लाघ्यः सविस्मयमुदाहृत ॥ ३ ॥ असमानमिवौजांसि सहसा गौरवेरितम् । नाम यस्याभिनन्दन्ति द्विषोऽपि स मतः पुमान् ॥ ४ ॥ सह परिजनेन विलसति धीरो गहनानि तरति पुनरेकः । विषमेकेन निपीतं त्रिपुरजिता सह सुरैरमृतम् ॥ ५ ॥ श्लाघ्या महतामुन्नतिरद्भुतमध्यवसितं च धीराणाम् । कनकगिरिरनभिलङ्घ्यो रविरनिशमनुज्झितारम्भः ॥ ६ ॥ अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम् । वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य धीरस्य ॥ ७ ॥

---

१ तवानुबन्ध कुर्वतेत्यर्थ २ मुकुलितम् ३ शीघ्रम् ४ गतलज्जा. निर्लज्जेत्यर्थः. ५ अहो इत्याश्चर्ये. ६ स्त्रिय. ७ प्रतिष्ठा. ८ अस्मल्लोके ९ निष्ठा १० परलोके. ११ आशा. १२ इहलोके परलोके च. १३ निष्ठाप्रतिष्ठे १४ पीडयति. १५ दुस्तराणि. १६ शंकरेण. १७ व्यापार. १८ अजिरम्. १९ कृत्रिमसरित्

कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम्[2] । अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा याति कदाचिदेव ॥ ८ ॥ अर्थः सुखं कीर्तिरपीह मा भूदनर्थ एवास्तु तथापि धीराः । निजप्रतिज्ञामधिरूढमाना महोद्यमाः कर्म समारभन्ते ॥ ९ ॥ रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् । सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥ १० ॥ निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् । अद्यैव वा मरणमस्तु युगान्तरे वा न्याय्यात्[3] पथः[4] प्रविचलन्ति पदं न धीराः ॥ ११ ॥ कान्ताकटाक्षविशिखा[5] न लुनन्ति[6] यस्य चित्तं न निर्दहति कोपकृशानुतापः[7] । कर्षन्ति भूरि विषयांश्च न लोभपाशा लोकत्रयं जयति कृत्स्नमिदं[8] स धीरः ॥ १२ ॥ आपत्समुद्धरणधीरधियः परेषां जाता महत्यपि कुलेन भवन्ति सर्वे । विन्ध्याटवीषु विरलाः खलु पादपास्ते ये दन्तिदन्तमुसलोल्लिखनं सहन्ते ॥ १३ ॥ विरम विरसायासादस्माद्दुरध्यवसायतो विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे । अपि जडमते कल्पापाये व्यपेतनिजक्रमाः कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः ॥ १४ ॥

## वीरप्रशंसा ।

ए[illegible] हि शूरेण पदाक्रान्तं महीतलम् । क्रियते भास्करस्येव स्फारस्फुरिततेजसा ॥ १ ॥ पल्लवतः[9] कल्पतरोरेष विशेषः करस्य ते वीर । भूषयति कर्णमेकः परस्तु कर्णं [illegible]रस्[illegible]ते ॥ २ ॥ स्पृहयति भुजयोरन्तरमायतकरवालकररुहविदीर्णम् । विजयश्रीर्वीराणां [illegible]त्पन्नप्रौढवनितेव ॥ ३ ॥ विनाप्यर्थैर्वीरः स्पृशति बहुमानोन्नतिपदं समायुक्तोऽप्यर्थैः परिभवपदं[12] याति कृपणः । स्वभावादुद्भूतां गुणसमुदयावाप्तिविषयां द्युतिं[13] सैंहीं[14] किं श्वा धृतकनकमालोऽपि[15] लभते ॥ ४ ॥ को वीरस्य मनस्विनः स्वविषयः को वा विदेशस्तथा[16] य देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् । यद्दंष्ट्रानखलाङ्गुलप्रहरणः[17] सिंहो वनं गाहते[18] तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ ५ ॥

## तेजस्विप्रशंसा ।

बालस्यापि रवेः पादाः[19] पतन्त्युपरि भूभृताम्[20] । तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥ १ ॥ एकः स एव तेजस्वी सैंहिकेयः[21] सुरद्विषाम् । शिरोमात्रावशेषेण जीयन्ते येन शात्रवः ॥ २ ॥ मौनी पादप्रहारेऽपि न क्षमी नीच एव सः । आकृष्टशस्त्रो मित्रेऽपि न तेज-

१ दरिद्रस्य. २ शोधयितुम्. ३ न्यायादनपेतात् ४ मार्गात् ५ कटाक्षा एव विशिखा बाणाः. ६ न छिन्दन्ति ७ कोपः क्रोध. स एव कृशानुरग्निस्तत्तापः ८ सपूर्णम् ९ किसलयात्. १० श्रोत्रम् ११ अङ्गराजम् १२ पराजयस्थानम् १३ कान्तिम् १४ सिंहसबन्धिनीम् १५ धृता कनकस्य सुवर्णस्य माला येन. १६ परदेश . १७ दंष्ट्रा नखा पुच्छ तान्येव प्रहरणान्यायुधानि यस्य स.. १८ प्रविशति १९ किरणाः; (पक्षे) चरणाः. २० पर्वतानाम्, (पक्षे) राज्ञाम्. २१ राहु

स्वी खलो हि सः ॥ ३ ॥ तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् । हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥ ४ ॥ स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि । निदर्शनमसाराणां लघुर्बहुतृणं नरः ॥ ५ ॥ तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते । पञ्चमः पञ्चतपसस्तपनो जातवेदसाम् ॥ ६ ॥ अकृत्वा हेलया पादमुच्चैर्मूर्धसु विद्विषाम् । कथंकारमनालम्ब्या कीर्तिर्द्यामधिरोहति ॥७॥ अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः । केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥ ८ ॥ तेजस्विनि क्षमासारे नातिकार्कश्यमाचरेत् । अतिनिर्मथनादग्निश्चन्दनादपि जायते ॥ ९ ॥ तेजोहीने महीपाले स्वे परे च विकुर्वते । निःशङ्को हि जनो धत्ते पदं भस्मन्यनूष्मणि ॥ १० ॥ एकचक्रो रथो यन्ता विकलो विषमा हयाः । आक्रमत्येव तेजस्वी तथाप्यर्को नभस्तलम् ॥ ११ ॥ साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते । तस्य धीशालिनः कोऽन्यः सहेताराल्लितां भ्रुवम् ॥ १२ ॥ सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु । प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ १३ ॥ यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः । तत्तेजस्वी पुरुषः परकृतविकृतिं कथं सहते ॥ १४ ॥ दर्शिततत्तेजोर्पोच्छ्रायैस्तेजोर्वाद्भिः सुगोत्रसंजातैः । हीरैरप्स्विव प्राज्ञैरापत्स्वपि गम्यते नाधः ॥ १५ ॥ दीप्यन्तां ये दीप्त्यै घटिता मणयश्च वीरपुरुषाश्च । तेजः स्वविनाशाय तु भवति तृणानामिव लघूनाम् ॥ १६ ॥ मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयंहतैः । लघयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥ १७ ॥ तीव्रोष्णदुर्विषयवीर्यभृतः परेषां तेजस्विनो न गणयन्ति वपुर्महत्त्वम् । यत्पद्मरागशकलाकृतिरद्रितुङ्गं कार्त्स्न्येन भस्मयति काष्ठचयं स्फुलिङ्गः ॥ १८ ॥ न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः । मयूखैरश्रान्तं तपति यदि देवो दिनकरः किमाग्नेयग्रावा निकृत इव तेजांसि वमति ॥ १९ ॥ हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो वज्रेणाभिहताः पतन्ति गिरयः किं शैलमात्रं पविः । दीपे प्रज्वलिते विनश्यति तमः किं दीपमात्रं तमस्तेजो यस्य विराजते स बलवान्स्थूलेषु कः प्रत्ययः ॥ २० ॥ स्वल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थि गोः श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधः शान्तये । सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं

१ राहु. २ सूर्यम् ३ चन्द्रम् ४ मार्दवस्य ५ दृष्टान्त ६ दुर्बलानाम्. ७ निष्पौरुषः. ८ तृणकल्पमित्यर्थ. ९ दूरस्थोऽपि. १० पञ्चाग्निसाध्य तपो यस्य. ११ कथमित्यर्थ. १२ निराधारा. १३ हतः १४ ऊष्मरहिते १५ सारथि.. १६ अरुण.. १७ तुरगा'. १८ प्रशस्तकपोलेषु १९ बलवताम् २० सूर्यकान्त २१ विकार'. २२ कान्ति'; (पक्षे) प्रताप.. २३ कान्त्याधिक्यम्, (पक्षे) धनुष औन्नत्यम्. २४ प्रकाशकत्वम्; (पक्षे) सामर्थ्यम् २५ पर्वतः, (पक्षे) कुलम्. २६ विधातृनिष्पादिता २७ विस्तृतम्. २८ स्वभावाधीनत्वात्. २९ अकृत्रिम. ३० किरणै. ३१ सततम्. ३२ सूर्यकान्त.. ३३ धिकृत इव. ३४ वज्रम्. ३५ विश्वास

सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं[1] फलम् ॥ २१ ॥ शमयति गजानन्यान्गन्धद्विपः कलभोऽपि सन्भवति सुतरां वेगोदग्रं भुजंगशिशोर्विषम् । भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं न खलु वयसा जात्यैवायं स्वकार्यसहो भरः ॥ २२ ॥

## मनस्विप्रशंसा।

कामं[2] प्रियानपि प्राणान्विमुञ्चन्ति मनस्विनः । इच्छन्ति न त्वमित्रेभ्यो महतीमपि सत्क्रियाम् ॥ १ ॥ ब्रूत नूतनकूष्माण्डफलानां के भवन्त्यमी । अङ्गुलीदर्शनादेव विलीयन्ते मनस्विनः ॥ २ ॥ ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः । शफरीस्फुरितेना[3]ब्धेः क्षुब्धता जातु[4] जायते ॥ ३ ॥ कुसुमस्तबकस्ये[5]व द्वे वृत्ती स्तो मनस्विनः । मूर्ध्नि वा सर्वलोकस्य विशीर्येत वनेऽथवा ॥ ४ ॥ पादाहतं यदुत्थाय मूर्धानमधिरोहति । स्वस्थादेवाप[6]मानेऽपि देहिनस्त[7]द्वरं रजः ॥ ५ ॥ समूलघातमघ्नन्तः[8] परान्[9]नो घ्नन्ति मानिनः । प्रध्वसितान्धतमस[10]स्तत्रोदाहरणं रविः ॥ ६ ॥ स पुमानर्थवज्जन्मा[11] यस्य नाम्नि पुरःस्थिते । नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः[12] ॥ ७ ॥ स्थित्यतिक्रान्तिभीरूणि[13] स्वच्छान्याकुलि[14]तान्यपि । तोयानि तोयराशीना मनांसि च मनस्विनाम् ॥ ८ ॥ शक्तिवैकल्य[15]नम्रस्य[16] निःसारत्वाल्लघीयसः[17] । जन्मिनो[18] मानहीनस्य तृणस्य च समा गतिः ॥ ९ ॥ अलङ्घ्यं तत्तदुद्वीक्ष्य यद्यदुच्चैर्महीभृताम् । प्रियतां ज्यायसी मा गान्महतां केन तुङ्गता ॥ १० ॥ तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः । पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥ ११ ॥ दुरासदवनज्यायान्गम्यस्तुङ्गोऽपि भूधरः । न जहाति महौजस्कं[20] मानप्रांशुम[21]लङ्घ्यता ॥ १२ ॥ गुरून्कुर्वन्ति ते वंश्यानन्वर्था तैर्वसुंधरा । येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥ १३ ॥ उदाहरणमाशीःषु प्रथमे ते मनस्विनाम् । शुष्केऽशनिरिवामर्षो यैरर्रातिषु पात्यते ॥ १४ ॥ तुङ्गत्वमितरा[22] नाद्रौ नेदं[23] सिन्धावगाधता । अलङ्घनीयताहेतुरुभयं तन्मनस्विनि ॥ १५ ॥ न क्वचिच्च बहिर्यान्ति मानिना प्रार्थनागिरः । यदि निर्यातुमिच्छन्ति तदा प्राणपुरःसराः ॥ १६ ॥ असेवितेश्वरद्वारमदृष्टविरहव्यथम् । अनुक्तक्लीबवचनं धन्य कस्यापि जीवितम् ॥ १७ ॥ मानिनो हतमानस्य मानोऽपि न सुखप्रदः । जीवनं मानमूलं हि माने म्लाने कुतः सुखम् ॥ १८ ॥ मनस्वी म्रियते काम कार्पण्य न तु गच्छति । अपि निर्वाणमायाति नानलो याति शीतताम् ॥ १९ ॥ मन-

---

१ बलानुरूपम्. २ यथेच्छम् ३ मत्स्यीस्फुरणेन ४ कदाचित्. ५ गुच्छस्य ६ सतुष्टात्. ७ चेतनात् ८ अनुन्मूलयन्त ९ शत्रून् १० गाढ तम ११ सार्थकजन्मा १२ पुरुषगणनाप्रस्तावे १३ मर्यादोल्लङ्घनाद्भेतोर्भीरूणि १४ सक्षोभितानि १५ उत्साहादिशक्तिवैधुर्येण, (पक्षे) अवष्टम्भसामर्थ्यविरहेण १६ प्रह्वीभूतस्य, (पक्षे) विधेयभूतस्य. १७ दुर्बलत्वात्, (पक्षे) स्थिरांशरहितत्वात् १८ गौरवहीनस्य, (पक्षे) नीरसस्य १९ जन्तोः. २० प्रतापसंपन्नम्. २१ मानोन्नतपुरुषम्. २२ अगाधता. २३ तुङ्गत्वम्

स्विहृदयं धत्ते रोषेणैव प्रसन्नताम् । भस्मना ज्वलदङ्गारः प्रसादं लभतेतराम् ॥ २० ॥ कामाय स्पृहयत्यात्मा संयतोऽपि मनीषिणः । वीथीनियमितोऽप्युक्षा शष्पमासाद्य धावति ॥ २१ ॥ मनस्विनो न मान्यन्ते परतः प्राप्य जीवनम् । बलिभुग्भ्यो न काकेभ्यः स्पृहयन्ति हि कोकिलाः ॥ २२ ॥ दूर्वाङ्कुरतृणाहारा धन्यास्तात वने मृगाः । विभवोन्मत्तचित्तानां न पश्यन्ति मुखानि यत् ॥ २३ ॥ सुखं जीवन्ति हरिणा वनेष्वपरसेविनः । अर्थैरयत्नसुलभैर्जलदर्भाङ्कुरादिभिः ॥ २४ ॥ सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते । राजानुवर्तनक्लेशनिर्विण्णेन मनस्विना ॥ २५ ॥ कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन । धनिषु न दैन्यं विदधति ते किल पशवो वयं सुधियः ॥ २६ ॥ प्रत्युपकुर्वन्बह्वपि न भवति पूर्वोपकारिणा तुल्यः । एकोऽनुकरोति कृतं निष्कारणमेव यत्परः कुरुते ॥ २७ ॥ न नटा न विटा न गायका न परद्रोहनिबद्धबुद्धयः । नृपसद्मनि नाम के वयं स्तनभारानमिता न योषितः ॥ २८ ॥ अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः । अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ २९ ॥ ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः । अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥ ३० ॥ पुरो वा पश्चाद्वा वयमुपविशामः क्षितिभुजां ततः किं नश्छिन्नं वचनमपि नाक्रीतजगताम् । अगारे कान्तारे कुचकलशभारे मृगदृशां मणेस्तुल्यं मूल्यं सहजमभिवर्तद्युतिमतः ॥ ३१ ॥ अभुक्तायां यस्यां क्षणमपि न यातं नृपशतैर्भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम् । तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ ३२ ॥ क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः । क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ३३ ॥ स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं कपालं यस्योच्चैर्विनिहितमलंकारविधये । नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ ३४ ॥ विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा । इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥३५॥ वरमहिमुखे क्रोधाध्माते करो विनिवेशितो विषमपि वरं पीत्वा सुप्तं कृतान्तनिवेशने । गिरिवरतटीमुक्तश्चात्मा वरं शतधा कृतो न तु खलजनावाप्तैरर्थैः कृतं हितमात्मनः ॥३६॥ नानीयन्ते मधुनि मधुपाः पारिजातप्ररोहैर्नाभ्यर्थ्यन्ते तुहिनरुचिना चन्द्रिकायां चकोराः । अस्मद्वाचां धुरि मधुरिमा यद्यपूर्वावतारः सोल्लासाः स्युः स्वयमिह बुधाः किं मुधाभ्यर्थनाभिः ॥३७॥ मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणुरङ्गीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते । तद्दद्युर्ददते-

१ प्रत्युपकार कुर्वन्. २ अनुकरण करोति. ३ सर्पमुखे. ४ क्रोधपूर्णे. ५ कालगृहे.

ऽथवा न किमपि क्षुद्रा दरिद्रा भृशं धिग्धिक्तान्पुरुषाधमान्धनकणं वाञ्छन्ति तेभ्योऽपि ये ॥ ३८ ॥ त्वं चेन्नीचजनानुरागरभसादस्मासु मन्दादरः का नो मानद मानहानिरियती भूः किं त्वमेकः प्रभुः । गुञ्जापुञ्जपरंपरापरिचयाद्भिल्लीजनैरुज्झितं मुक्तादाम न धारयन्ति किमहो कण्ठे कुरङ्गीदृशः ॥ ३९ ॥ त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः । इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥ ४० ॥ ब्रह्माण्डं कियदस्तु तत्र वसुधापिण्डं किमाचक्ष्महे तत्राप्येकतरं तु खण्डममितास्तस्मिन्नृपाः केचन । तेभ्यो दैन्यशतोपनीतविभवा दृष्टानुकम्पास्तु ते धिङ्मूढाः स्पृहयन्ति हन्त किमपि स्वार्थो न तेभ्योऽपि ये ॥ ४१ ॥ पातालान्न विमोचितो बत बली नीतो न मृत्युः क्षयं नोन्मृष्टं शशिलाञ्छनं सुमलिनं नोन्मूलिता व्याधयः । शेषस्यापि भरं विधृत्य न कृतो भारावतारः क्षणं चेत[illegible] सत्पुरुषाभिमानमनिशं मिथ्या वहन्खिद्यसे ॥४२॥ अस्त्यद्यापि चतुःसमुद्रपरिखापर्यन्त[illegible]र्वीतल तस्मिन्नेव वसन्ति सूक्तिरसिकाः केचित्क्वचिद्भूभुजः । एकः कोऽपि निरादरो यदि भवे[illegible]न्यो भवेत्सादरो वाग्देवी वदनाम्बुजे वसति चेत्को नाम दीनो जनः ॥ ४३ ॥ [illegible] शिबिका न चास्ति कटकाद्यालंक्रियासत्क्रिया नोत्तुङ्गस्तुरगो न कश्चिदनुजो [illegible]न्दरम् । किं तु क्ष्मातलवर्त्यशेषविदुषां साहित्यविद्याजुषां चेतस्तोषकरी शि[illegible] विद्यानवद्यास्ति नः ॥ ४४ ॥ लक्ष्मीर्निर्वृतिमेति हीनचरितैर्यैरेव तच्छिक्षया [illegible] करोमि तामनुचरीं रामां सकामामिव । ब्रह्माण्डे निपतत्यपि स्खलति न प्रा[illegible] मनस्तेषामार्यमनस्विनामनुपदं गन्तास्मि नाहं यदि ॥ ४५ ॥ पुण्ये ग्रामे वने [illegible] सितपटच्छन्नपालीं[1] कपालीमादाय[2] न्यायगर्भद्विजवरहुतभुग्धूमधूम्रोपकण्ठम् । [illegible]प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो मानी प्राणी स्वदेशे न पुनरनुदिनं तुल्य[illegible]ः ॥ ४६ ॥ अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं शूरस्त्वं [illegible]शमनविधावक्षयं पाटवं नः । सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रो[illegible] मय्यप्यास्था न चेत्त्वयि मम सुतरामेष राजन्गतोऽस्मि ॥ ४७ ॥ श्रेयस्वी यत्र [illegible]नं व्रजति दुरितकृच्चापमानं मनुष्यैरज्ञेय यत्र दूतैः प्रभुमनु मनुजो नीयते चानपेक्षः । [illegible]त्योर्गेहं वरं तन्न तु कुधनवतां यत्र सर्वापमानो लोकैर्विज्ञायमानः स्वयमतिथितया यत्र [illegible]र्थी प्रयाति ॥ ४८ ॥

## अपौरुषत्वनिन्दा ।

मा[3] जीवन्यः परा[4]वज्ञादुःखदग्धोऽपि जीवति । तस्या[5]जननिरेवास्तु जननीक्लेशका-

---

१ शुभ्रवस्त्रेण विहिता पाली यस्या. २ भिक्षापात्रम्. ३ गर्हित जीवतीति मा जीवन्. ४ परै. कृतावज्ञा तदेव दुःख तेन दग्धः खिन्नः. ५ अनुत्पत्ति.

रिणः ॥ १ ॥ असंपादयतः कंचिदर्थं ज्ञाति[1]क्रिया[2]गुणैः[3] । यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम् ॥ २ ॥

---

## गुणप्रशंसा ।

गुणाः कुर्वन्ति दूतत्वं दूरेऽपि वसतां सताम् । केतकीगन्धमाघ्राय स्वयं गच्छन्ति षट्पदाः[4] ॥ १ ॥ गुणवज्जनसंसर्गाद्याति सर्वोऽपि गौरवम् । पुष्पमालाप्रसङ्गेन सूत्रं शिरसि धार्यते ॥ २ ॥ कलावतः[5] सैव कला[6] ययाधः[7]क्रियते भवः[8] । बह्वीभिश्च कलाभिः किं याभिरङ्कः[9] प्रदर्श्यते ॥ ३ ॥ न पुत्रत्वेन पूज्यन्ते गुणैरासाद्यते पदम् । रवेर्व्यापारमादत्ते प्रदीपो न पुनः शशी ॥ ४ ॥ किं कुलेन विशालेन शीलमेवात्र कारणम् । कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥ ५ ॥ गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः । वासुदेवं [illegible]मस्यन्ति वसुदेवं न ते जनाः ॥ ६ ॥ यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् । न[illegible]कस्तूरिकामोदः शपथेन निवार्यते ॥ ७ ॥ नहि जन्मनि ज्येष्ठत्वं ज्येष्ठत्वं गुण उच्यते । गुणाद्गुरुत्वमायाति दधि दुग्धं घृतं यथा ॥ ८ ॥ किमाढ्यत्वगुरुत्वाभ्यां चरमोऽपि [illegible]गुणैर्गुरुः । केतकीकुसुमे पश्य लघुपत्रेऽतिगौरवम् ॥ ९ ॥ केतकीकुसुमं भृङ्गः खण्ड्यमानोऽ[illegible]सेवते । दोषाः किं नाम कुर्वन्ति गुणापहृत[10]चेतसः ॥ १० ॥ शरीरस्य गुणानां च दूरमत्[illegible]निर्वर्तशरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥ ११ ॥ गुणेष्वेव हि कर्तव्यः [illegible]प्रयत्नः पुरुषैः सदा । गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥ १२ ॥ गुणैः सर्वज्ञकल्पैः[11] [illegible]तैराद्रि दत्येको[12] निराश्रयः । अनर्घ्य[13]मपि माणिक्यं हेमाश्रयमपेक्षते ॥ १३ ॥ गुणेषु क्रि[illegible] किर्माटोपैः[14] प्रयोजनम् । विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ १४ ॥ [illegible] मायाति न महत्यापि संपदा । पूर्णेन्दुर्न तथा वन्द्यो निष्कलङ्को यथा कृशः [illegible] स्वयं स्वगुणविस्ताराद्दूर्णनाभः पतत्यधः । तमेव संहरन्भूयः पदमुच्चैर्विगाहते ॥ [illegible]वणमा[illegible] ॥ [illegible] णो दूषणतां याति दूषणं गुणतां क्वचित् । यथा हि नम्रता दोषः स्तनयोः स[illegible] गुण ॥ १७ ॥ गुणैर्गौरवमायाति नोच्चैरासनमास्थितः । प्रासाद[15]शिखरस्थोऽपि काकः किं ग[illegible]रुडायते ॥ १८ ॥ अहो गुणानां प्राप्त्यर्थं यतन्ते बहुधा नराः । मुक्ता यदर्थं भग्नास्या [illegible]तरेष च का कथा ॥ १९ ॥ गुणेन स्पृहणीयः स्यान्न रूपेण युतो जनः । सौगन्ध्यवर्ज्यं नादेयं पुष्पं कान्तमपि स्वयम् ॥ २० ॥ प्रभुभिः पूज्यते लोके कलैव न कुलीनता । कलावान्मान्यते मूर्ध्नि सत्सु देवेषु शंभुना ॥ २१ ॥ गुणयुक्तोऽपि पूर्णोऽपि कुम्भः कूपे निमज्जति ।

---

१ ब्राह्मणत्वादि. २ इज्याध्ययनादि ३ शौर्यादि ४ भ्रमराः ५ चन्द्रस्य, (पक्षे) विदुष ६ षोडश भाग, (पक्षे) चतुःषष्टिकलानामन्यतमा ७ अधोभागे क्रियते, (पक्षे) तिरस्क्रियते ८ शिवः; (पक्षे) संसारः ९ कलङ्क, (पक्षे) दोष १० गुणाकृष्टान्तःकरणस्य ११ शिवतुल्य. १२ दुःख प्राप्नोति १३ अमूल्यम् १४ आडम्बरैः. १५ राजभवनम्.

भारसहो नास्ति गुणकग्राहको यदि ॥२२॥ अहो वैचित्र्यमेतस्य संसारस्य किमुच्यते। गु-
णोऽपि क्लेशहेतुः स्याद्विश्रान्तः कण्ठकन्दले ॥२३॥ जात्युत्कृष्टस्य हि मणेर्नोचितं शाण-
घर्षणम्। आदर्शे चित्रकारैः किं लिख्यते प्रतिबिम्बितम् ॥ २४ ॥ गुणयुक्तोऽप्यधो याति
रिक्तः कूपे यथा घटः । निर्गुणोऽपि मृतः पश्य जनैः शिरसि धार्यते ॥ २५ ॥ गुणिनो-
ऽपि हि सीदन्ति गुणग्राही न चेदिह । सगुणः पूर्णकुम्भोऽपि कूप एव निमज्जति ॥२६॥
गुणो गुणान्तरापेक्षी स्वरूपख्यातिहेतवे । स्वभावबाल्यं लावण्यं तारुण्येन मनोहरम् ॥२७॥
गुणैः पूजा भवेत्पुंसां नैकस्माज्जायते कुलात्। चूडारत्नं शशी शंभोर्यानमुच्चैःश्रवा हरेः॥२८॥
सर्वत्र गुणवानेव चकास्ति प्रथिते नरे । मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते ॥ २९॥
गुणानर्चन्ति जन्तूनां न जातिं केवलां क्वचित् । स्फाटिकं भाजनं भग्नं काकिन्यापि न गृह्यते
॥३०॥ गुण आकर्षणयोग्यो धनुष इवैकोऽपि लक्षलाभाय। लूता तन्तुभिरिव किं गुणैर्विमर्दासहैर्बहुभिः ॥३१॥ अनवसरे गुणवानपि हृदयादवतार्यते स्त्रिया हारः । पश्य शलाकावसरे
[illegible]य भूपैः प्रसार्यते स्वकरः ॥ ३२ ॥ गुणवन्तः क्लिश्यन्ते प्रायेण भवन्ति निर्गुणाः
[illegible]नः [illegible]नः ॥ [illegible]यान्ति शुका यथेष्टसंचारिणः काकाः ॥३३ ॥ गुणिनि गुणज्ञो रमते ना-
[illegible] [illegible]णिनि परितोषः । अलिरेति वनात्पद्मं न दर्दुरस्त्वेकवासोऽपि ॥ ३४ ॥
[illegible] स[illegible] [illegible]पदः कर्णितजनचक्षुरतुलगतिः । पत्रमयोऽपि पदार्थः पतङ्गतामेति गुणयो-
॥३५॥ [illegible] वि[illegible] [illegible]मितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति । निखिलरसायनमहि-
[illegible] [illegible] रूप[illegible]शुन इव ॥ ३६ ॥ दोषमपि गुणवति जने दृष्ट्वा गुणरागिणो न खिद्य-
। [illegible] [illegible]शक्ता[illegible]णिनि पतितं पश्यति लोकः कलङ्कमपि ॥३७॥ अन्तर्गतैर्गुणैः किं छित्रा
[illegible] [illegible]णो विरलाः । सगुणो गीतैर्यदसौ वनेचर हरिणमपि हरति ॥ ३८ ॥
[illegible] इति [illegible] इति च द्वावेकार्थाभिधायिनौ विद्धि। पश्य धनुर्गुणशून्यं निर्जीवं यदिह शंसन्ति
॥३९॥ गु[illegible] गुणज्ञेषु गुणीभवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः। सुस्वादुतोयाः प्रभवन्ति
[illegible] [illegible]मासाद्य भवन्त्यपेयाः ॥४०॥ गुणेषु यत्नः पुरुषेण कार्यो न किंचिदप्राप्यतम
णानाम् । गुणप्रकर्षादुडुपेन शंभोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥ ४१ ॥ निष्कलङ्ककलयापि
नो यः संयुतः स खलु पूज्यते जनैः । भद्र पश्य जडजोऽपि धार्यते शंकरेण शिरसा नि-
शाकरः ॥ ४२ ॥ वक्रोऽपि पङ्कजनितोऽपि दुरासदोऽपि व्यालाश्रितोऽपि विफलोऽपि
कण्टकोऽपि । गन्धेन बन्धुरसि केतक पुष्पजेन ह्येको गुणः खलु निहन्ति समस्तदोषान्
॥४३॥ न खनति खुरैः क्षोणीपृष्ठं न नर्दति सादरं प्रकृतिपुरुषं प्रेक्ष्याप्यग्रे न कुप्यति गो-
। वहति च धुरं धुर्यो धैर्यादनुद्धतकन्धरो जगति गुणिनः कार्यौदार्यात्परानतिशेरते

१ रज्जुयुक्त., (पक्षे) विनयादिगुणसपन्न. २ रिक्त, (पक्षे) निर्द्रव्य. ३ विचारक्षम.; (पक्षे) यथाश्रुतम्. ४ लक्षसंख्याकधनलाभाय; (पक्षे) वेध्यलाभाय ५ विचारासहै, (पक्षे) आकर्षणासहै ६ क्लेश प्राप्नुवन्ति. ७ भ्रमर. ८ भेक ९ पूज्य. १० निर्मलविद्यया ११ दुष्प्रापः.

॥ ४४ ॥ गुणानामज्ञाता प्रचुरधनदातापि न मुदे मुदे विद्याज्ञाता भवति मितदातापि गुणिनाम् । दृशौ ग्राम्या दत्ते न पुनरवधत्ते च चतुरो दृशः प्रान्तं दत्त्वा वशयति नितान्तं पुरवधूः ॥ ४५ ॥ उपादाता यावन्न भवति गुणानां गुणवतामसत्कल्पास्तावास्त्रिभुवनमहार्घा अपि गुणाः । अपि प्राग्दैत्यारेर्हृदयवसतेः कौस्तुभमणिः स किं नासीदब्धौ श्रुतिरपि न यस्य क्वचिदभूत् ॥ ४६ ॥ विवादप्रारम्भः प्रथयति परं दम्भमतुलं गुणानां गाम्भीर्यं तव भवति साक्षी कलकलः । पयःपूर्णः कुम्भो ध्वनति न तथा वातवलितो यथा रिक्तो भांभांध्वनिमनिभृतं मुञ्चति मुहुः ॥ ४७ ॥ कौशेयं कृमिजं सुवर्णमुपलादिन्दीवरं गोमयात्पङ्कात्तामरसं शशाङ्क उदधेर्गोपित्ततो रोचना । काष्ठादग्निरहेः फणादपि मणिर्दूर्वापि गोरोमतः प्राकाश्यं स्वगुणोदयेन गुणिनो यास्यन्ति किं जन्मना ॥ ४८ ॥

## उद्यमप्रशंसा ।

उद्योगः खलु कर्तव्यः फलं मार्जारवद्भवेत् । जन्मप्रभृति गौर्नास्ति पयः पिबति [illegible] । गुणा- ॥ १ ॥ उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः । षडेते यत्र वर्तन्ते [illegible]णैर्गुरुः । कृत् ॥ २ ॥ उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः । न हि सिंहस[illegible]सेवते । शन्ति मुखे गजाः ॥ ३ ॥ न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मनः । अ[illegible]भिर्वर्त [illegible] तिलेभ्यः प्राप्तुमर्हति ॥ ४ ॥ विहाय पौरुषं यो हि दैवमेवावलम्बते । प्रा[illegible] मूर्ध्नि तिष्ठन्ति वायसाः ॥ ५ ॥ पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते । [illegible] विना दैवं न सिध्यति ॥ ६ ॥ यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् । [illegible] विना दैवं न सिध्यति ॥ ७ ॥ यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति । [illegible] कर्म मानवः प्रतिपद्यते ॥८॥ निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः । [illegible] यान्ति विवशाः सर्वसंपदः ॥ ९ ॥ दैवं पुरुषकारेण साध्यसिद्धिनिबन्धनम् । [illegible] मितुमिच्छेत स लोके नावसीदति ॥ १० ॥ योजनानां सहस्रं तु शनैर्गच्छेत्पि[illegible]का । अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥ ११ ॥ काममपि श्रियमासाद्य यस्तद्वृद्धौ न चेष्टते । तस्यायतिषु न श्रेयो बीजभोजिकुटुम्बवत् ॥ १२ ॥ उद्योगिनः करालम्बं करोति कमलालया । अनुद्योगिकरालम्बं करोति कमलाग्रजा ॥१३॥ काकतालीयवत्प्राप्तं दृष्ट्वापि निधिमग्रतः । न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥ १४ ॥ आलस्यं हि मनुष्याणां शरीरस्थो महान्रिपुः । नास्त्युद्यमसमो बन्धुः कृत्वायं नावसीदति ॥ १५ ॥ गच्छन्पिपी-

१ पाषाणात्. २ कमलम्. ३ कर्दमात्. ४ रक्तकमलम्. ५ गोरोचनम्. ६ आश्रयति. ७ प्रासादे देवालयशिखरे य. सिंहस्तद्वत्. ८ साध्यसिद्ध्यधीन तदायत्तमित्यर्थः. ९ उल्लङ्घयितुम्. १० व्यापारं न करोति. ११ उत्तरकालेषु. १२ कल्याणम्. १३ लक्ष्मी. १४ अलक्ष्मी.. १५ काकागमनमिव तालपतनमिव काकतालीय तद्वत्. अवितर्कितम्. अकस्मादिति यावत्. १६ खिन्नो न भवति.

लिकापङ्क्तिः समुद्रमधिगच्छति । न गच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥ १६ ॥ संपदा सुस्थितंमन्यो भवति स्वल्पयापि यः । कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ १७ ॥ न लभन्ते विनोद्योगं जन्तवः संपदां पदम् । सुराः क्षीरोदविक्षोभमनुभूयामृतं पपुः ॥ १८ ॥ पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते । उद्यमेन तदुपार्जितं चिराद्दैवमुद्यमवशं न तत्कथम् ॥ १९ ॥ उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवं प्रधानमिति कापुरुषा वदन्ति । दैवं विहाय कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ २० ॥

## संहतिप्रशंसा ।

संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि । तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः ॥ १ ॥ अल्पानामपि वस्तूनां संहतिः कार्यसाधिका । तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ २ ॥ बहूनामल्पसाराणां समवायो हि दुर्जयः । तृणैर्विधीयते रज्जुर्बध्यन्ते तेन दन्तिनः ॥ ३ ॥

## क्षमाप्रशंसा ।

क्षमा शस्त्रं करे यस्य दुर्जनः किं करिष्यति । अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ १ ॥ नरस्याभरणं रूपं रूपस्याभरणं गुणः । गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥ २ ॥ क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा । क्षमा वशीकृतिर्लोके क्षमया किं न सिद्ध्यति ॥ ३ ॥

## विनयप्रशंसा ।

तिष्ठतां तपसि पुण्यमासृजन्संपदोऽनुगुणयन्सुखैषिणाम् । योगिनां परिणमन्विमुक्तये केन नास्तु विनयः सतां प्रियः ॥ १ ॥

## सत्यप्रशंसा ।

सूनृतं सर्वशास्त्रार्थनिश्चितज्ञानशोभितम् । भूषणं सर्ववचसां लज्जेव कुलयोषिताम् ॥ १ ॥ अश्वमेधसहस्रं च सत्यं च तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २ ॥ गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः । अलुब्धैर्दानशूरैश्च सप्तभिर्धार्यते मही ॥ ३ ॥

१ पुरुषश्रेष्ठम्. २ कुत्सितपुरुषा. ३ सघात. ४ धान्यत्वक्. ५ रज्जुत्वम्. ६ शान्ति. ७ तपोनिष्ठानाम्. ८ संपादयन्. ९ अनुकूलयन्. १० संपद्यमानः ११ अपवर्गाय.

## असत्यनिन्दा ।

नासत्यवादिनः सख्यं न पुण्यं न यशो भुवि । दृश्यते नापि कल्याणं कालकूटमिवाश्नतः ॥ १ ॥ असत्यमप्रत्ययमूलकारणं कुवासनासद्मसमृद्धिवारणम् । विपन्निदानं परवञ्चनोर्जितं कृतापराधं कृतिभिर्विवर्जितम् ॥ २ ॥ यशो यस्माद्भस्मीभवति वनवह्नेरिव [illegible] निदानं दुःखानां यदवनिरुहाणामिव जलम् । न यत्र स्याच्छायातप इव त[illegible] कथंचित्तन्मिथ्यावचनमभिधत्ते न मतिमान् ॥ ३ ॥ जिह्वैकेव सतामुभे फणवत[illegible] स्रश्च तास्ताः सप्तैव विभावसोर्नियमिताः षट्कार्तिकेयस्य च । पौलस्त्यस्य [illegible] तेर्जिह्वासहस्रद्वयं जिह्वालक्षशतैककोटिनियमो नो दुर्जनानां मुखे ॥ ४ ॥

## आत्मश्लाघानिन्दा ।

परैः प्रोक्ता गुणा यस्य निर्गुणोऽपि गुणी भवेत् । इन्द्रोऽपि लघुतां याति [illegible] कस्तूपितैर्गुणैः ॥ १ ॥ न सुखं न [illegible] मार्जारवद्भः स्वयं स्वगुणवर्णने । यथैव च पुरंध्रीणां [illegible] । गुणाकुचमर्दनम् ॥ २ ॥ स्वयं तथाद्रः शक्तिर्यं स्वगुणाख्यापनं पुनः । स्वगुणाख्यापनैर्गुरुः [illegible] परद्वारा प्रयोजयेत् ॥ ३ ॥ न सौख्यसौभाग्यकरा गुणा नृणां स्वयं गृहीताः [illegible] स्तना इव । परैर्गृहीता द्वितयं वितन्वते न तेन गृह्णन्ति निजं गुणं बुधाः ॥ ४ ॥ [illegible] णगरिमा सुखाकरः स्यात्स्वयमनुवर्णयतां सतां न तावत् । निजकरकमलेन [illegible] कुचकलशाकलनेन को विनोदः ॥ ५ ॥

## स्वभाववर्णनम् ।

सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः । अतीत्य हि गुणान्सर्वान्स्वभावो मू[illegible] वर्तते ॥ १ ॥ किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् । भवन्ति सुतरां स्फीत[illegible] सुक्षे[illegible] कण्टकिद्रुमाः ॥ २ ॥ यः स्वभावो हि यस्यास्ते स नित्यं दुरतिक्रमः । श्वा यदि [illegible] राजा तत्किं नाश्नात्युपानहम् ॥ ३ ॥ परोपदेशकुशला दृश्यन्ते बहवो जनाः । स्वभावमनुवर्तन्ते सहस्रेष्वपि दुर्लभाः ॥ ४ ॥ किं कुलेन विशालेन शीलमेवात्र कारणम् । कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥ ५ ॥ सति शीले गुणा भान्ति पुंसां शौर्यादयो यथा । यौवने सदलंकाराः शोभां बिभ्रति सुभ्रुवः ॥ ६ ॥ रक्तत्वं कमलानां सत्पुरुषाणा परोपकारित्वम् । असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ ७ ॥ वचो हि सत्यं परमं विभूषणं गजाङ्गनायाः कृशता कटौ तथा । द्विजस्य विद्यैव पुनस्तथा क्षमा शीलं हि सर्वस्य नरस्य भूषणम् ॥ ८ ॥ न धर्मशास्त्रं पठतीति कारण न चापि वेदाध्ययनं

१ विषम् २ भक्षयत ३ अविश्वास ४ विपत्तेः कारणम्. ५ कुशलैः. ६ दावाग्नेः. ७ आदिकारणम्. ८ वृक्षाणाम्. ९ वक्ति. १० सर्पाणाम् ११ ब्रह्मण.. १२ अग्नेः.. १३ रावणस. १४ शेषस. १५ अतिक्रम्य.

दुरात्मनः । स्वभाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥ ९ ॥ निम्नो-
न्नतं वक्ष्यति को जलानां विचित्रभावं मृगपक्षिणां च । माधुर्यमिक्षौ कटुतां मरीचे स्वभा-
वतः सर्वमिदं हि सिद्धम् ॥ १० ॥ वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-
न्मेरुः स्वल्पशिलायते मृगपतेः संघः कुरंगायते । व्यालो माल्यगुणायते विषरसः पीयूष-
यमेन तो या ङ्गे ऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥११॥ ऐश्वर्यस्य विभूषणं सुज-
क्षौर्यस्य वाक्संयमो ज्ञानस्योपशमः कुलस्य विनयो वित्तस्य पात्रे व्ययः । अक्रोध-
दि न सिध्यात्मा बलवतां धर्मस्य निर्व्याजता सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम्
ाकः पद्मवने रतिं न कुरुते हंसो न कूपोदके मूर्खः पण्डितसंगमे न रमते
ासने । कुस्त्री सज्जनसंगमे न रमते नीचं जनं सेवते या यस्य प्रकृतिः स्व-
ा केनापि न त्यज्यते ॥ १३ ॥ व्याघ्रः सेवति कानन सुगहनं सिंहो गुहा सेवते
ति पद्मिनी कुसुमितां गृध्रः श्मशानस्थलीम् । साधुः सेवति साधुमेव सततं नी-
नीचं जनं यो यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ॥ १४ ॥

ापत
ोधा

## वाग्वर्णनम् ॥

व वाचः सभायोग्या याश्चित्ताकर्षणक्षमाः । वेषा परेषां विदुषा द्विषामविदुषामपि
तर्णानाब्धेस्तु परं पारं नोपेयाय सरस्वती । तो निमज्जनभयात्तुम्बी वहति वक्षसि
॥ प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः । भवन्ति कस्यचित्पुण्यैर्मुखे वाचो
श्रयः ॥ ३ ॥ वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरेव । अनन्ता वाङ्मयस्याहो गेयस्येव
त्म ॥ ४ ॥ वह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते । अनुज्झितार्थसंबन्धः प्रबन्धो
मोहः ॥५॥ म्रदीयसीमपि घनामनल्पगुणसाश्रिताम् । प्रसारयन्ति कुशलाश्चित्रां वाचं
न्तरम् ॥ ६ ॥ सर्वालंकारयुक्तापि न श्लिष्टा शोभते व सा । वाणी मनोजातसुखं प्रौढानां
ाति हि ॥७॥ मृदुलं शीतलं मिष्टं निर्झरीकृतपर्वतम् । यथा वारि तथा वाणी किं

१ ॥न अतिक्रम्य वर्तते. २ नीचोच्चम् ३ तीक्ष्णताम्. ४ कृत्रिमसरिदिवाचरति ५ सर्पः. ६ माला ७ तम्मृतम् ८ विजृम्भते. ९ सौजन्यम् १० वाङ्नियमनम् ११ शान्तिः १२ निष्कपटत्वम् १३ सुस्वभावः. १४ गानसमुद्रस्य. १५ न प्राप्तवती १६ इक्ष्वाकुफलम् जलतरणार्थं तुम्ब्याः संग्रह लोका कुर्वन्तीति प्रसिद्धम्. १७ प्रसन्नवदनाः, (पक्षे) उत्तानार्थाः. १८ कान्त्या शोभया मनोहारिण्य; (पक्षे) भाषणगुणेन मनोहारिण्यः. १९ आलिङ्गनम्, (पक्षे) श्लेष. २० परिमितैः २१ निषादादिभि २२ स्वप्रतिभानुसारेण २३ यथेष्टम् २४ असगतम् २५ दुर्वच २६ अतिसुकुमाराक्षराम्; (पक्षे) श्लक्ष्णतराम् २७ अर्थगुर्वीम्; (पक्षे) सान्द्राम् कदलीदलकल्पामित्यर्थ. २८ श्लेषादिभिः, (पक्षे) तन्तुभि २९ रचिताम्, (पक्षे) निर्मिताम् ३० शब्दादिविचित्राम्, (पक्षे) विचित्ररूपाम् ३१ शाटीमिव ३२ उपमादिभिः, (पक्षे) कङ्कणादिभि ३३ श्लेषरहिता, (पक्षे) आलिङ्गनरहिता ३४ मन. प्रति जात यत्सुख तत्, (पक्षे) कामहर्षम्. ३५ चतुराणाम्, (पक्षे) प्रकर्षेण विधिपूर्वक विवाहितानाम्.

न साध्यं धनंजय ॥ ८ ॥ या कर्षति निजयोगादन्तर्गतजीवनानि[1] सरसानाम्[2] । वाणी सैव गुणवती[3] घटीव यद्वा वधूटीव[4] ॥ ९ ॥ रतरीतिवीतवसना[5] प्रियेव शुद्धापि वाङ्मुदे सरसा[6] । अलसा[7] सालंकृतिरपि[8] न रोचते शालभञ्जीव[9] ॥ १० ॥ सुखयतितरां न रक्षति परिचयलेशं गणाङ्गनेव[10] श्रीः । कुलकामिनीव नोज्झति वाग्देवी जन्मजन्मापि ॥११॥ वाङ्माधुर्यान्नान्यदस्ति प्रियत्वं वाक्पारुष्याच्चोपकारोऽपि नष्टः । किं तद्द्रव्यं कोकिलेनोपनीतं [illegible] । वा लोके गर्दभस्यापराधः ॥ १२ ॥ कामान्[11] दुग्धे[12] विप्रकर्षत्यलक्ष्मीं[13] कीर्तिं सूते दुष्कृतं [illegible] हिनस्ति । तां चाप्येतां मातरं मङ्गलानां धेनुं धीराः सूनृतां[14] वाचमाहुः ॥ १३ ॥ विविक्तवर्णाभरणा[15] सुखश्रुतिः[16] प्रसादयन्ती हृदयान्यपि द्विषाम् । प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा[17] सरस्वती ॥ १४ ॥ केयूरा[18] न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला[19] न स्नानं न विलेपनं न कुसुमं नालंकृता[20] मूर्धजाः[21] । वाण्येका समलंकरोति[22] पुरुषं या संस्कृता धार्यते क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥१५॥ अस्त्यद्यापि चतुःसमुद्रपरिखापर्यन्तमुर्वीतलं वर्तन्तेऽपि च तत्र तत्र रसिका गोष्ठीषु सक्ता नृपाः । एकस्तत्र निरादरं [illegible] वति चेदन्यो भवेत्सादरो वाग्देवी[23] वदनाम्बुजे वसति चेत्को नाम दीनो जनः ॥१६॥ [illegible] सूक्तीन्दुकलाकलङ्कजनका ये गाढगर्वज्वरा ये वा केवलतर्ककर्कशधियः साक्षाच्च ये [illegible] गुः । ये वा द्वेषमषीमलीमसधियस्तान्प्राज्ञगोष्ठीरसप्रौढप्राड्वडवग्रहान्परिहरन्वाचां प्रसारं कुरु निज[illegible]॥ तथ्यं तथ्यं सहेतु प्रियमितमृदुलं सारवद्दैन्यहीनं साभिप्रायं दुरापं सविनयमशठं [illegible] मिनीनमल्पाक्षरं च । बह्वर्थं कोपशून्यं स्मितयुतघनदाक्षिण्यसंदेहहीनं वाक्यं ब्रूयाद्रस— समये सप्रेमयाप्रमत्तम् ॥ १८ ॥

---

## [illegible]प्रशंसा ।

विरोधिवचसो मूकान्वागीशानपि [illegible] लमेव त । जडानप्यनुलोमार्थान्[24] प्रवाचः[25] [illegible] ॥ १ ॥ तीक्ष्णा नारुंतुदा बुद्धिः कर्म शान्तं प्रतापवत् । नोपतापि मनः सोष्म [illegible] गिका

१ हृद्गतानि जीवनानि, (पक्षे) उदकानि २ रसिकानाम्, (पक्षे) कूपादीनाम् ३ प्रागल्भ्यादिगुणयुक्ता; (पक्षे) रज्जुयुक्ता. ४ स्त्रीव ५ अनुप्रासोपमाद्यलंकाररहितापि ६ शृङ्गारादिमती, (पक्षे) शृङ्गाररसवती ७ आलस्ययुक्ता, (पक्षे रलयोः सावर्ण्यात्) अरसा रसशून्या ८ अलंकृतियुतापि, (पक्षे) कटककुण्डलयुतापि ९ प्रतिमेव १० वेश्येव ११ मनोरथान् १२ प्रपूरयति १३ अवलक्ष्मीम् १४ सत्याम् १५ विविक्ताः संयोगादिनाश्लिष्टाः स्फुटोच्चारिता वर्णा अक्षराण्येवाभरणानि यस्याः सा; (पक्षे) विविक्तानि शुद्धानि वर्णो रूपमाभरणानि च यस्याः सा १६ सुखा श्रुतिः श्रवणं यस्याः सा श्राव्येत्यर्थः, (पक्षे) श्रूयत इति श्रुतिर्वाक्सा सुखा यस्याः सा मञ्जुभाषिणीत्यर्थः. १७ प्रसन्नानि वाचकानि गम्भीराण्यर्थगुरूणि च पदानि सुप्तिङन्तरूपाणि यस्याः सा; (पक्षे) प्रसन्ना विमला गम्भीरपदालसचरणा १८ बाहुभूषणानि. १९ चन्द्रवदुज्ज्वला.. २० सुगन्धतैलादिना संस्कृता २१ केशा २२ सम्यगलंकरोति २३ सरस्वती. २४ वक्ता २५ अनुकूलवादिन २६ प्रगल्भवाच. २७ कुशलानाम् २८ अभिमानोष्णम्

वाग्मिनः सतः ॥ २ ॥ प्रसाद[1]रम्यमोजस्वि[2] गरीयो[3] लाघवान्वितम्[4] । साकाङ्क्ष[5]मनुपस्कारं[6] विष्वग्गति[7] निराकुलम्[8] ॥ ३ ॥ न्याय[9]निर्णीतसारत्वान्निरपेक्ष[10]मिवागमे[11] । अप्रकम्प्य[12]तयान्येषामाम्नाय[13]वचनोपमम् ॥ ४ ॥ अलङ्घ्यत्वा[14]ज्जनैरन्यैः क्षुभितोदन्वदूर्जितम्[15] । औदार्या[16]दर्थ[17]संपत्तेः शान्तं चित्तमृषेरिव ॥ ५ ॥ इदमीदृग्गुणोपेतं लब्धावसरसाधनम्[18] । व्याकुर्या[19]त्कः प्रियं वाक्यं यो वक्ता नेदृगाशयः ॥ ६ ॥ श्रुतिसिद्धान्तशूरस्य तद्विरुद्धान्निरुन्धतः । वल्गितं वावदूक[20]स्य कृतिनः किं न शोभते ॥ ७ ॥ अल्पाक्षररमणीयं यः कथयति निश्चितं स खलु वाग्मी । वहुवचनमल्पसारं यः कथयति विप्रलापी सः ॥ ८ ॥ शुद्धकांस्यरचितापि लालिता जिह्वया[21] यदि न योजिता भवेत् । किं तया करण[22]मस्ति घण्टया जिह्वया ध्वनिमतां हि पूज्यया ॥ ९ ॥ भवन्ति ते सभ्य[23]तमा विपश्चि[24]तां मनोगतं वाचि निवेशयन्ति[25] ये । नयन्ति तेष्व[26]प्युपपन्न[27]नैपुणा गम्भीर[28]मर्थं कतिचित्प्रकाशताम् ॥ १० ॥ स्तुवन्ति गुर्वीमभिधेय[29]संपदं विशुद्धि[30]मुक्ते[31]रपरे विपश्चितः । इति स्थितायां प्रतिपूरुषं रुचौ सुदुर्लभाः सर्वमनोरमा गिरः ॥ ११ ॥ पिकः[32] तावत्कृष्णः पर[33]मरुणया पश्यति दृशा परापत्यद्वेषी स्वसुतमपि नो पालयति यः । तथाप्येषोऽमीषां सकलजगतां वल्लभतमो न दोषा गण्यन्ते खलु मधुरवाचां क्वचिदपि ॥ १२ ॥ आस्वाद्यैप कषायमङ्कुरमु-[illegible]द्धाशयो माकन्दस्य यशांसि कोकिलयुवा निर्माति दिग्भित्तिषु । माध्वीकानि [illegible]स्य मधुपास्तत्रैव गुञ्जन्त्यमी को ब्रूतामसतां सतां च वचसां वर्त्मातिगं चेष्टितम् ॥ १३ ॥ [illegible] श्रोतॄन्मूक[34]यति ब्रुवन्स्थिर[35]तम कुर्वन्नमीषां मनो निर्बाष्पः परबाष्पकृत्परदृ[illegible]काश[illegible]ो नान्यदृक् । यस्त्यक्ताङ्गविकम्पनः प्रचलयन्नित्यं सतां मस्तकं क्षीरं श्रोतृषु मुख्यमात्मनि गुणं धत्ते स वक्तोत्तमः ॥ १४ ॥ तद्वक्ता सदसि ब्रवीतु वचनं यच्छृण्वतां चेतसः प्रोल्लासं[36] रसपूरणं[37] श्रवणयोरक्ष्णोर्विकासश्रियम् । क्षुन्निद्राश्रमदुःखकालगतिहृत्कार्यान्तर[38]प्रस्मृतिं प्रोत्कण्ठामनिशं श्रुतौ वितनुते शोकं विरामादपि ॥ १५ ॥

---

१ प्रसाद प्रसिद्धार्थपदत्व तेन रम्यम् २ समासभूयिष्ठम् ३ अर्थभूयस्त्वपरिगतम्. न तु शब्दाडम्बरमात्रमित्यर्थः. ४ विस्तरदोषरहितम् ५ आकाङ्क्षावत्पदकदम्बात्मकम् न तु दशदाडिमादिवाक्यवदनाकाङ्क्षितमित्यर्थः. ६ अध्याहारदोषरहितम् ७ कृत्स्नार्थप्रतिपादकम् न तु सावशेषार्थमित्यर्थः ८ असंकीर्णार्थम्. ९ न्यायेन युक्त्या निश्चितार्थत्वात् १० स्वतन्त्रमिव ११ शास्त्रे १२ अनुमानादिभिरबाध्यत्वादप्रत्याख्याततया १३ वेदवाक्यतुल्यमित्यर्थः १४ अनुल्लङ्घनीयत्वात् १५ उद्वेलाम्भोधिगम्भीरम्. १६ अग्राम्यार्थत्वात्, (पक्षे) त्यागित्वात् १७ प्रयोजनसंपत्तेः, (पक्षे) अणिमादिसमृद्धेः १८ लब्धे प्राप्ते अवसरसाधने कालोपायौ येन तत् १९ व्याहरेत् २० वक्तुः. २१ घण्टाजिह्वा. २२ कर्तव्यम् न किंचित्कार्यमस्तीति भावः २३ सभाया साधुतमा निपुणतमा २४ विदुषाम् २५ वाचोद्गिरन्तीत्यर्थः २६ वक्तृषु २७ सभावितकौशला २८ निगूढम् २९ अर्थसंपत्तिम् ३० सामर्थ्यम् ३१ शब्दस्य ३२ कोकिल ३३ आरक्तया ३४ मूकान्करोति ३५ अचलम् तटस्थमिति यावत् ३६ प्रकर्षेणोल्लास विकासम्. ३७ रसाना शृङ्गारादीन पूरणम् ३८ अन्यकार्यविस्मृतिम्.

## मौनगुणाः ।

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः । बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधनम् ॥ १ ॥ रूपवांश्चापि मूर्खोऽपि गत्वा च विपुलां सभाम् । संरक्षेच्च स्वकां जिह्वां भार्यां दुश्चारिणीं यथा ॥ २ ॥ स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः । विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥ ३ ॥ कोलाहले काककुलस्य जाते विराजते कोकिलकूजितं किम् । परस्परं संवदतां खलानां मौनं विधेयं सततं सुधीभिः ॥४॥

## स्थानमाहात्म्यम् ।

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति । स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ॥ १ ॥ किंचिदाश्रयसंयोगाद्धत्ते शोभामसाध्वपि । कान्ताविलोचने न्यस्तं मलीमसमिवाञ्जनम् ॥ २ ॥ कुस्थानस्य प्रवेशेन गुणवानपि पीड्यते । वैश्वानरोऽपि लोहस्थः कारुकैरभिहन्यते ॥ ३ ॥ पदस्थितस्य पद्मस्य मित्रे वरुणभास्करौ । पदच्युतस्य तस्यैव क्लेशदाहकरावुभौ ॥ ४ ॥ राजा कुलवधूर्विप्रा मन्त्रिणश्च पयोधराः । स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नरा नखाः ॥ ५ ॥ स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः । इति विज्ञाय मतिमान्स्वस्थानं न परित्यजेत् ॥ ६ ॥ पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः । जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ ७ ॥ अतिमलिनोऽपि स्वरत्व पुष्यति भानोः परिग्रहादनलः । अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥ ८ ॥ प्रायो यत्किंचिदपि प्राप्नोत्यौत्कर्षमाश्रयान्महतः । मत्तेभकुम्भतटगतमेति शृङ्गारतां भस्म ॥ ९ ॥ अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च । पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च ॥ १० ॥ आश्रयवशेन सततं गुरुता लघुता च जायते पुंसाम् । विन्ध्ये विन्ध्यसमानाः करिणो बत दर्पणे लघवः ॥ ११ ॥ जानामि नागेन्द्र तव प्रभावं कण्ठे स्थितो गर्जसि शंकरस्य । स्थानं प्रधानं न बलं प्रधानं स्थाने स्थितः कापुरुषोऽपि शूरः ॥ १२ ॥ उभौ पक्षौ श्वेतौ वियति विषये वारितगतिः सदा मीनं भुङ्क्ते वसति सकलस्थाणुशिरासि । बके सर्वश्चान्द्रो गुणसमुदयः कश्चिदधिको गुणाः स्थाने मान्या नरवर न तु स्थानरहिताः ॥ १३ ॥ सिंहक्षुण्णकरीन्द्रकुम्भगलितं रक्ताक्तमुक्ताफलं कान्तारे बदरीधिया द्रुतमगाद्भिल्लस्य पत्नी मुदा । पाणिभ्यामवगुह्य शुक्लकठिनं तद्वीक्ष्य दूरे जहावस्थाने पततामतीव महतामेतादृशी स्याद्गतिः ॥ १४ ॥

१ स्वसाधीनम् २ पिधानम् ३ मूर्खताया ४ सभायाम् ५ मकरः ६ श्वपकेण. ७ लोहकारैः. ८ काजलम् ९ मौक्तिकत्वम्. १० मेघस्य. ११ विन्ध्यपर्वते. १२ मत्स्यान्; (पक्षे) मीनराशिम् १३ तरुशैलादय, (पक्षे) शिव

# सत्संगतिप्रशंसा।

महानुभावसंसर्गः कस्य नोन्नतिकारकः। रथ्याम्बु जाह्नवीसङ्गात्त्रिदशैरपि वन्द्यते ॥ १ ॥ महाजनस्य संसर्गः कस्य नोन्नतिकारकः। पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम् ॥ २ ॥ महानुभावसंसर्गः कस्य नोन्नतिकारकः। हरिहस्तगतः शङ्खः पवित्रः प्रथितो भुवि ॥ ३ ॥ मलयाचलगन्धेन त्विन्धनं चन्दनायते। तथा सज्जनसङ्गेन दुर्जनः सज्जनायते ॥ ४ ॥ द्रवत्वात्सर्वलोहानां ममत्वान्मृगपक्षिणाम्। भयाल्लोभाच्च मूर्खाणां दर्शनात्संगतं सताम् ॥ ५ ॥ वीणावंशाश्रया तुम्बी चुम्बत्युच्चैः कुचौ स्त्रियः। पिबत्यनार्यसंयोगाद्रक्तं नक्तंचरो यथा ॥ ६ ॥ चन्दनं शीतलं लोके चन्दनादपि चन्द्रमाः। चन्द्रचन्दनयोर्मध्ये शीतला साधुसंगतिः ॥ ७ ॥ साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः। कालेन फलते तीर्थं सद्यः साधुसमागमः ॥ ८ ॥ करोति निर्मलाधारस्तुच्छस्यापि महर्घताम्। अम्बुनो बिन्दुरल्पोऽपि शुक्तौ मुक्ताफलं भवेत् ॥ ९ ॥ हीयते हि मतिस्तात हीनैः सह समागमात्। समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥ १० ॥ मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः। पङ्कच्छिदः फलस्येव निकर्षेणाविलं पयः ॥ ११ ॥ कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः। अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ १२ ॥ काचः काञ्चनसंसर्गाद्धत्ते मारकतीर्द्युतीः। तथा सत्संनिधानेन मूर्खो याति प्रवीणताम् ॥ १३ ॥ यथोदयगिरौ द्रव्यं संनिकर्षेण दीप्यते। तथा सत्संनिधानेन हीनवर्णोऽपि दीप्यते ॥ १४ ॥ भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः। कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥ १५ ॥ यदि सत्सङ्गविरतो भविष्यसि भविष्यसि। अथ दुर्जनसंसर्गे पतिष्यसि पतिष्यसि ॥ १६ ॥ आश्रयो महतः सोऽयं न निमज्जति सर्वथा। कपिर्नीः सेतुसंबन्धादुपनीतो बलेन यः ॥ १७ ॥ अलब्ध्वापि धनं राज्ञः संश्रिता यान्ति संपदम्। महाह्रदसमीपस्थं पश्य नीलं वनस्पतिम् ॥ १८ ॥ सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते। स सद्भिः सह कर्तव्यः सन्तसङ्गा हि भेषजम् ॥ १९ ॥ क्षुद्रोऽपि तनुते तात तेजस्तेजस्विसंगतः। अर्कसंपर्कतः पश्य दर्पणे दहनद्युतिम् ॥ २० ॥ बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति। संभूयाम्भोधिमभ्येति महानद्या नगापगा ॥ २१ ॥ सज्जनसङ्गो मा भूद्यदि सङ्गो मास्तु ते पुनः स्नेहः। स्नेहो यदि मा विरहो यदि विरहो मास्तु जीवितस्याशा ॥ २२ ॥ वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः। न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥ २३ ॥ गुरुरपि लघूपनीतो न निमज्जति नियतमाशये निहितः। वानरकरोपनीतः शैलो मकरालयस्यैव

१ देवैः. २ आश्रयः. ३ महामूल्यत्वम् ४ कनकफलस्येव ५ कलुषम् ६ उदकम्. ७ पाषाण ८ मरकतसंबन्धिनी. ९ उदयपर्वते. १० सूर्यसंनिधानेन. ११ प्रकाशितो भवति. १२ अन्तःकरणे, (पक्षे) मध्ये.

॥ २४ ॥ [1]गवाशनानां स शृणोति वाक्यमहं हि राजन्वचनं मुनीनाम् । न चास्य दोषो न च मद्गुणो वा संसर्गजा दोषगुणा भवन्ति ॥ २५ ॥ [2]कल्पद्रुमः कल्पितमेव सूते सा [3]कामधुक्कामितमेव दोग्धि । चिन्तामणिश्चिन्तितमेव दत्ते सतां हि सङ्गः सकलं प्रसूते ॥ २६ ॥ असज्जनः सज्जनसङ्गिसङ्गात्करोति दुःसाध्यमपीह साध्यम् । पुष्पाश्रयाच्छंभुशिरोऽधिरूढा पिपीलिका चुम्बति चन्द्रबिम्बम् ॥ २७ ॥ सत्सङ्गाद्भवति हि साधुता खलानां साधूनां न हि खलसंगमात्खलत्वम् । [4]आमोदं कुसुमभवं मृदेव धत्ते मृद्गन्धं न हि कुसुमानि धारयन्ति ॥ २८ ॥ किंवापरेण बहुना परिजल्पितेन संसर्ग एव महतां महते फलाय । अम्भोनिधेस्तटरुहास्तरवोऽपि येन वेलाजलोच्छलितरत्नकृतालवालाः ॥ २९ ॥ [5]जाड्यं धियो हरति सिञ्चति वाचि सत्यं मानोन्नतिं [6]दिशति पापम[7]पाकरोति । चेतः प्रसादयति दिक्षु [8]तनोति कीर्तिं सत्संगतिः कथय किं न करोति पुंसाम् ॥ ३० ॥ दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरंतनमघं चुलुकीकरोति । भूतेषु किं च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति ॥ ३१ ॥ कान्तारभूमिरुहमौलिनिवासशीलाः प्रायः पलायनपरा जनवीक्षणेन । कूजन्ति तेऽपि हि शुकाः खलु रामनाम सङ्गः स्वभावविपरीतविधौ निदानम् ॥ ३२ ॥ [9]दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रा[10]वसानसमये विहितोदयोऽपि । चन्द्रस्तथापि [11]हरवल्लभतामुपैति नैवाश्रितेषु महतां गुणदोषशङ्का ॥ ३३ ॥ [12]एके केचिद्यतिकरगताः पात्रसंज्ञां लभन्ते गायन्त्यन्ये सरसमधुरं वीणया संप्रयुक्ताः । एके तेषां सहगतिवशाद्दुस्तरं तारयन्ति केचित्तेषां ज्वलितहृदया रक्तमेवापिबन्ति ॥ ३४ ॥ संतप्ताय[13]सि संस्थितस्य पयसो नामापि न श्रूयते मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते । स्वात्यां सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ ३५ ॥ गङ्गेवाघविनाशिनी जनमनःसंतोषसच्चन्द्रिका तीक्ष्णांशोरपि सत्प्रभेव जगदज्ञानान्धकारावहा । छायेवाखिलतापनाशनकरी स्वर्धेनुवत्कामदा पुण्यैरेव हि लभ्यते सुकृतिभिः सत्संगतिर्दुर्लभा ॥ ३६ ॥ कीर्तिर्नृत्यति नर्तकीव भुवने विद्द्योतते साधुता ज्योत्स्नेव प्रतिभा सभासु सरसा गङ्गेव संमीलति । चित्तं रञ्जयति प्रियेव सततं संपत्प्रसादोचिता संगत्या न भवेत्सतां किल भवेत्किं किं न लोकोत्तरम् ॥ ३७ ॥ बुद्धिं वर्धयति श्रियं वितनुते वैदग्ध्यमामुञ्चति श्रेयः पल्लवयत्यघानि दलयत्युन्मीलयत्युन्नतिम् । विज्ञानं परिशोधयत्युपचिनोत्युच्चैः कला-

---

१ यवनानाम् यवनगृहस्थित सहोदर शुकमुद्दिश्य मुनिगृहस्थितस्य शुकस्योक्तिरियम्. २ कल्पवृक्ष. ३ कामधेनु. ४ सुगन्धम्. ५ मान्द्यम्. ६ ददाति. ७ निराकरोति. ८ विस्तारयति. ९ दोषा रात्रिस्तस्याः कर; (पक्षे) दोषाणामाकरः. खनिरित्यर्थः. १० सूर्यास्तसमये; (पक्षे) मित्रव्यसनकाले. ११ शिवप्रियताम्. १२ तुम्बीत्यर्थः. १३ लोहे.

कौशलं किं किं नारभते हरेरिव कथानर्थं सतां संगतम् ॥ ३८ ॥ पुण्यः पुण्यजलेषु बिन्दुपतितं शुक्तासु मुक्ताजलं कर्पूरं कदलीदलेषु गरलं व्याले स्थले कर्दमः । दैत्यं पात्रपुरा च देवपतितं पात्रामृतं जायते स्वातिश्चैव परोपकारकरणं पात्रानुसारं फलम् ॥ ३९ ॥

---

## असत्संगतिनिन्दा ।

अहो दुर्जनसंसर्गान्मानहानिः पदे पदे । पावको लोहसङ्गेन मुद्गरैरभिहन्यते ॥ १ ॥ न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह । पयोऽपि शौण्डिकीहस्ते[1] मदिरां मन्यते जनः ॥ २ ॥ अन्तर्मलिनसंसर्गाच्छ्रुतवानपि दुष्यति । यच्चक्षुःसंनिकर्षेण कर्णोऽभूत्कुटिलाश्रयः ॥ ३ ॥ दुष्टतां दुष्टसंसर्गाददुष्टमपि गच्छति । सुराबिन्दुनिपातेन पञ्चगव्यघटी यथा ॥४॥ अणुरप्यसतां सङ्गो सद्गुणं हन्ति विस्तृतम् । गुणरूपान्तरं याति तक्रयोगाद्यथा पयः ॥५॥ बहुभिर्मूर्खसंघातैरन्योन्यपशुवृत्तिभिः । प्रच्छाद्यन्ते गुणाः सर्वे मेघैरिव दिवाकरः ॥ ६ ॥ दुर्वृत्तः क्रियते धूर्तैः श्रीमानात्मविवृद्धये । कि नाम खलसंसर्गः कुरुते नाश्रयाशवत् ॥७॥ आनन्दमृगदावाग्निः[3] शीलशाखिमदद्विपः[4] । ज्ञानदीपमहावायुरयं[5] खलसमागमः ॥ ८ ॥ असत्सङ्गाद्गुणज्ञोऽपि विषयासक्तमानसः । अकस्मात्प्रलयं याति गीतरक्तो यथा मृगः ॥ ९॥ आहृत्य रक्ष्यमाणापि यत्नेनान्तविरागिणी । असन्मैत्री च वेश्या च श्रीश्च कस्य कदा स्थिरा ॥ १० ॥ पात्रमपात्रीकुरुते[6] दहति गुणं[7] स्नेहमाशु[8] नाशयति । अमले मलं[9] नियच्छति दीपज्वालेव खलमैत्री ॥ ११ ॥ दुर्जनजनसंसर्गात्सज्जनपुरुषोऽत्र दोषमायाति । रावणकृतापराधाज्जलधेरपि बन्धनं प्राप्तम् ॥ १२ ॥ सुघनेऽपि सुवृत्तवानपि बालिमूर्धाधिकृतास्पदोऽपि सन् । यदि बालिशवक्रसंगमो निपतत्येव वधूकुचाविव ॥ १३ ॥ संगति स्वविपरीतगुणैस्त्वं मा कृथाः खलु सखे समयेऽस्मिन् । पश्य पूर्वमपि कृष्णरूपतामर्जुनोऽपि समवायनिमित्तम् ॥ १४ ॥ शाखोटकैश्चन्दनसंगतोऽपि वक्षोजयोः क्रीडितमायताक्ष्याः । पयोऽपि मद्यं श्वपचे हि मन्यते संसर्गजा दोषगुणा भवन्ति ॥ १५ ॥ दुर्वृत्तसंगतिरनर्थपरंपराया हेतुः सतां भवति किं वचनीयमत्र । लङ्केश्वरो हरति दाशरथेः कलत्रं प्राप्नोति बन्धनमसौ किल सिन्धुराजः ॥ १६ ॥ हंसोऽध्वगश्रममपोहयितुं दिनान्ते कारण्डकाकबककोककुलं प्रविष्टः । मूकोऽयमित्युपहसन्ति लुनन्ति पक्षान्नीचाश्रयो हि महतामपमानहेतुः ॥ १७ ॥

---

१ मद्यविक्रयकर्त्री. २ मद्यम् ३ आनन्द एव मृगस्तस्य दावाग्निरिव. दाहकत्वात् ४ शीलमेव शाखी वृक्षस्तस्य मदद्विप इव. उन्मूलकत्वात्. ५ ज्ञानमेव दीपस्तस्य महावात इव निर्वाणकरणत्वात्. ६ अयोग्यम्. ७ सूत्रम्; (पक्षे) विनयादिः. ८ तैलम्; (पक्षे) प्रीति . ९ मषीम्; (पक्षे) दोषम्.

## स्नेहवचनम् ।

सखि साहसिकं प्रेम दूरादपि विराजते । चकोरीनयनद्वन्द्वमानन्दयति चन्द्रमाः ॥१॥ दूरस्थोऽपि समीपस्थो यो यस्य हृदि वर्तते । यो यस्य हृदये नास्ति समीपस्थोऽपि दूरतः ॥ २ ॥ गिरौ कलापी गगने च मेघो लक्षान्तरे भानुरुदेति पद्मम् । शशी द्विलक्षः कुमुदश्च प्रीतिर्यो यस्य प्रीतिर्न हि तस्य दूरम् ॥ ३ ॥ जहाति सहसासनं झटिति पृच्छति स्वागतं नमस्यति कृताञ्जलिः स्मितमनोरमं भाषते । ददाति कुसुमं फलं शिथिलयत्यभीष्टां कृपामहो न परिचीयते कपटवञ्चनाचातुरी ॥ ४ ॥ क्वेन्दोर्मण्डलमज्जिती क्वचिरचिः पद्माकरः क्व स्थितः क्वाभ्राः सन्ति मयूरपङ्क्तिरमलाः क्वालिः क्व वा मालती । हारं प्रस्थितहंसवृन्दममसो क्वासौ सरो मानसं यो यस्याभिमतः स तस्य निकटे दूरेऽपि सन्वल्लभः ॥५॥

## सुमित्रप्रशंसा ।

कराविव शरीरस्य नेत्रयोरिव पक्ष्मणी । अविचार्य प्रियं कुर्यात्तन्मित्रं मित्रमुच्यते ॥१॥ यस्य मित्रेण संभाषा[1] यस्य मित्रेण संस्थितिः । मित्रेण सह यो भुङ्क्ते ततो[2] नास्तीह पुण्यवान् ॥ २ ॥ शुचित्वं[3] त्यागिता[4] शौर्यं सामान्यं[5] सुखदुःखयोः । दाक्षिण्यं[6] चानुरक्तिश्च[7] सत्यता च सुहृद्गुणाः ॥ ३ ॥ अन्यथैव हि सौहार्दं भवेत्स्वच्छान्तरात्मनः । प्रवर्तते ... वाणी शाठ्योपहतचेतसः ॥४॥ उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे । राजद्वारे च यस्तिष्ठति स बान्धवः ॥५॥ स बन्धुर्यो विपन्नानामापदुद्धरणे क्षमः । न तु भग्नगौरवपूजात्राणवस्तूपालम्भपण्डितः ॥ ६ ॥ आपदामापतन्तीनां हितोऽप्यायाति हेतुताम् । मातृजङ्घा हि वत्सस्य स्तम्भीभवति बन्धने ॥७॥ औरसं कृतसंबन्धं तथा वंशक्रमागतम् । रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥ ८ ॥ याचते कार्यकाले यः स किं भृत्यः स किं सुहृत् । अकार्यकार्यकर्ता यस्त्वनादिष्टोऽप्यसौ सुहृत् ॥ ९ ॥ तदेवास्य परं मित्रं यत्र संक्रामतां द्वयम् । दृष्टे सुखं च दुःखं च प्रतिच्छायेव दर्पणे ॥ १० ॥ व्याधितस्यार्थहीनस्य देशान्तरगतस्य च । नरस्य शोकदग्धस्य सुहृद्दर्शनमौषधम् ॥ ११ ॥ दर्शने स्पर्शने वापि श्रवणे भाषणेऽपि वा । यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥ १२ ॥ स्वाभाविकं तु यन्मित्रं भाग्येनैवाभिजायते । तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ १३ ॥ न मातरि न दारेषु न सोदर्ये न चात्मनि । विश्वासस्तादृशः पुंसां यावान्मित्रे स्वभावजे ॥ १४ ॥ शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् । केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥१५॥ उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् । विभावयन्समृद्धीना फलं सुहृदनुग्रहम् ॥ १६ ॥

१ मिथो भाषणम् २ तस्मात्पुरुषात् ३ निर्मलचित्तत्वम् ४ दानशीलत्वम्. ५ समानस्य भाव सामान्यम्. समत्वमित्यर्थ. ६ सरलत्वम्. ७ प्रीतिः. ८ अकपटमित्रता ९ शत्रु. १० विश्वास.. ११ सुहृत्स्वनुग्रह. प्रसादस्तम्

नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् । कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥ १७ ॥ प्राणैरपि हिता वृत्तिरद्रोहो व्याजवर्जनम् । आत्मनीव प्रियाधानमेतन्मैत्रीमहाव्रतम् ॥१८॥ पापान्निवारयति योजयते हिताय गुह्यानि गूहति गुणान्प्रकटीकरोति । आपद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ १९ ॥ मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम् । ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुलास्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत् ॥२०॥ क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः । गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ २१ ॥

## कुमित्रनिन्दा ।

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् । वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ १ ॥ रहस्यभेदो याच्ञा न नैष्ठुर्यं चलचित्तता । क्रोधो निःसत्यता द्यूतमेतन्मित्रस्य दूषणम् ॥ २ ॥

न्यास्तदर्थरज

प्रस्तारः ण

## संसारः ।

चारिणोर्द ... व निःसार पदवी न दवीयसी । अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥१॥ ... संसारे सुखभ्रान्तिः शरीरिणाम् । लालापानमिवाङ्गुष्ठे बालानां स्तन्यविभ्रमः ... जातेति ... रविषवृक्षस्य द्वे फले ह्यमृतोपमे । काव्यामृतरसास्वाद आलापः सज्जनैः सह ... वा न वेति ... ङ्गारकतीव्रः संसारोऽयं महानसो गहनः । इह विषयामृतलालसमानसमार्जार ... ॥ ४ ॥ अयमविचारितचारुतया संसारो भाति रमणीयः । अत्र पुनः परमार्थदृशा न किमपि सारमणीयः ॥ ५ ॥ क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः क्वचिद्वीणावादः क्वचिदपि च हाहेति रुदितम् । क्वचिद्रम्या रामा क्वचिदपि जराजर्जरतनुर्न जाने संसारः किममृतमयः किं विषमयः ॥ ६ ॥ कृच्छ्रेणामेध्यमध्ये[11] नियमिततनुभिः[12] स्थीयते गर्भगर्ते[13] कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रयोगः । नारीणामप्यवज्ञा[14] विलसति नियतं वृद्धभावेऽप्यसाधुः संसारे रे मनुष्या वदत यदि सुखं स्तोकमप्यस्ति[15] किंचित् ॥७॥

---

१ प्रीते रसायनमिव रसायनम्. प्रीतिवर्धकमित्यर्थः. २ अग्नौ ३ मित्रविपत्तिम्. ४ गुह्यप्रकाशनम् ५ प्रार्थनम्. ६ मार्गः. ७ अतिदूरा. ८ मध्ये. ९ निःसारे १० पाकगृहम् ११ अशुचिमलादि तन्मध्ये. १२ जरायुणा बद्धशरीरैः. १३ गर्भाशये. १४ अवमानः. १५ अल्पम्.

## गृहस्थाश्रमप्रशंसा ।

न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । शास्त्रवित्सत्यवादी च गृहस्थोऽपि विमु-च्यते ॥ १ ॥ यदि रामा यदि च रमा यदि तनयो विनयधीगुणोपेतः । तनये तनयो-त्पत्तिः सुरवरनगरे किमाधिक्यम् ॥ २ ॥ सविप्रपादोदककर्दमानि सवेदशास्त्रध्वनिगर्जि-तानि । स्वाहास्वधाकारनिरन्तराणि स्वानन्दतुल्यानि गृहाणि तानि ॥ ३ ॥ सानन्दं सदनं सुताश्च सुधियः कान्ता न दुर्भाषिणी सन्मित्रं सधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः । आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे साधोः सङ्गमुपासते हि सततं धन्यो गृ-हस्थाश्रमः ॥ ४ ॥ मानुष्यं वरवंशजन्म विभवो दीर्घायुरारोग्यता सन्मित्रं सुसुतः सती प्रियतमा भक्तिश्च नारायणे । विद्वत्त्वं सुजनत्वमिन्द्रियजयः सत्पात्रदाने रतिस्ते पुण्येन विना त्रयोदशगुणाः संसारिणां दुर्लभाः ॥ ५ ॥ वंशो विश्वावतंसो जनुरनुपहतं स्वान्त-मौन्नत्यकान्तं लीला शीलानुकूला क्षपितकलिमला कापि विद्यानवद्या । वाणी वेणी गुणानां समधिकयशसां साधिका सोधिका श्रीः श्रीमद्गौरीमयूरीमुदिर पुरहर त्वत्कृपाया विपाकः ॥ ६ ॥

## गृहस्थाश्रमदूषणम् ।

यत्र नास्ति दधिमन्थनघोषो यत्र नो लघुलघूनि शिशूनि । यत्र नास्ति गौरवपूजा तानि किं बत गृहाणि वनानि ॥ १ ॥ न विप्रपादोदकपङ्किलानि न वेदशास्त्र निगर्जिता-नि । स्वाहास्वधाकारविवर्जितानि श्मशानतुल्यानि गृहाणि तानि ॥ २ ॥ क्रोशन्तः शिशवः संवारि सदनं पङ्कावृतं चाङ्गणं शय्या दंशवती च रूक्षमशनं धूमेन पूर्णं गृहम् । भार्या नि-ष्ठुरभाषिणी प्रभुरपि क्रोधेन पूर्णः सदा स्नानं शीतलवारिणा हि सततं धिग्धिग्गृहस्थाश्रमम् ॥ ३ ॥ तावद्विद्यानवद्या गुणगणमहिमा रूपसंपत्तिशौर्यं स्वस्थाने सर्वशोभा गुणकथने वाक्पटुस्तावदेव । यावत्पाकाकुलाभिः स्वगृहयुवतिभिः प्रेषितापत्यवक्त्राद्बोधाः नास्ति तैलं न च लवणमपीत्यादिवाचां प्रचारः ॥ ४ ॥

## पुत्रप्रशंसा ।

इदं तत्स्नेहसर्वस्वं सममाढ्यदरिद्रयोः । अचन्दनमनौशीरं हृदयस्यानुलेपनम् ॥ १ ॥

१ न्यायेन सपादित धन येन. २ मुक्तो भवति. ३ स्त्री. ४ लक्ष्मीः ५ ब्राह्मणचरणक्षालनोदकेन प-ङ्किलानि ६ गृहम्. ७ उत्तमकुल उत्पत्ति ८ ऐश्वर्यम् ९ विश्वभूषणम्. १० मन.. ११ निर्दोषा. १२ प्र-वाहः १३ साधयित्री १४ गौर्येव मयूरी तस्या मुदिरो मेघः. १५ हे त्रिपुरनाशक. १६ परिणामः. फलमि-त्यर्थ. १७ उदकपूर्णम्. १८ मशकपूर्णा. १९ अस्निग्धम्. २० कठोरभाषिणी. २१ इद तु पितुर्लौकिक संबोधनम्

गृहे जानुचरः केल्यां मुग्धस्मितमुखाम्बुजः। पुत्रः पुण्यवतामेव पात्रीभवति नेत्रयोः ॥२॥ स्वगर्भशुक्तिनिर्भिन्नं सुवृत्तं सुतमौक्तिकम्। वंशश्रीतिलकीभूतं मन्दभाग्यस्य दुर्लभम् ॥३॥ वर्धते न चिरं लोके वंशलक्ष्मीरसंततिः। स्वल्पावशेषितस्नेहवर्तिमालेव दीपिका ॥ ४ ॥ अन्तःकरणतत्त्वस्य दंपत्योः स्नेहसंश्रयात्। आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥५॥ दिग्वाससं गतव्रीडं जटिलं धूलिधूसरम्। पुण्याधिका हि पश्यन्ति गङ्गाधरमिवात्मजम् ॥ ६ ॥ धूलिधूसरसर्वाङ्गो विकसद्दन्तकेसरः। आस्ते कस्यापि धन्यस्य द्वारि दन्ती गृहेऽर्भकः ॥७॥ निन्द्यते पितृभिस्तस्तैर्निरपत्यधनः पुमान्। अध्वनीनैरतिश्रान्तैरवकेशीव पादपः ॥ ८ ॥ किं मिष्टं सुतवचनं मिष्टतरं किं तदेव सुतवचनम्। मिष्टान्मिष्टतमं किं श्रुतिपरिपक्वं तदेव सुतवचनम् ॥ ९ ॥ उरोरुहाद्दुद्गमितैः पयोभिरापूर्य केल्या निजमास्यगर्भम्। फूत्कृत्य मातुर्वदने हसन्तं तनूभवं पश्यति कोऽपि धन्यः ॥ १० ॥ कृतचङ्क्रमणं गणेषु किंचित्कणत्किंकिणिरिङ्गदङ्घ्रिपद्मम्। यदि सन्महितं सुतं श्रितं स्यात्तदिदं सद्म हितं भवेत्तदानीम् ॥ ११ ॥ अह किमम्बा किमभीष्टितापदे तवेति मातुर्धुरि तातपृच्छया। प्रलोभ्यतुल्यं प्रवदन्तमर्भकं मुदा हसञ्जिघ्रति मूर्ध्नि पुण्यभाक् ॥ १२ ॥ आलक्ष्यदन्तमुकुलाननिमित्तहासैरव्यक्तवर्णरमणीयवचःप्रवृत्तीन्। अङ्काश्रयप्रणयिनस्तनयान्वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १३ ॥ आनन्दस्रुतिरात्मनो नयनयोरन्तःसुधाभ्यञ्जनं प्रस्तारः प्रणयस्य मन्मथतरोः पुष्पं प्रसादो रतेः। आलानं हृदयद्विपस्य विषयारण्येषु संचारिणो दंपत्योरिह लभ्यते सुकृततः संसारसारः सुतः ॥ १४ ॥

## कन्यानिन्दा।

जातेति कन्या महती हि चिन्ता कस्मै प्रदेयेति महान्वितर्कः। दत्ता सुखं यास्यति वा न वेति कन्यापितृत्वं खलु नाम कष्टम् ॥ १ ॥

## सत्पुत्रप्रशंसा।

एकोऽपि गुणवान्पुत्रो निर्गुणैः किं शतैरपि। एकश्चन्द्रो जगच्चक्षुर्नक्षत्रैः किं प्रयोजनम् ॥ १ ॥ एकेन हि सुवृक्षेण पुष्पितेन सुगन्धिना। वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ २ ॥ प्रज्ञया वा विसारिण्या यो बलेन धनेन वा। धुरं वहति गोत्रस्य जननी तेन पुत्रिणी ॥ ३ ॥ एकेनापि सुपुत्रेण विद्यायुक्तेन भासते। कुलं पुरुषसिंहेन चन्द्रेणेव हि शर्वरी ॥ ४ ॥ को धन्यो बहुभिः पुत्रैः कुशूलापूरणाढकैः। वरमेकः कुलालम्बी यत्र

१ जानुभ्यां चरतीति सः। रिङ्गमाण इत्यर्थः. २ संततिरहिता ३ नग्नम् ४ पान्थैः. ५ वन्ध्यः ६ स्तनात् ७ माता ८ इष्टस्थाने ९ प्रलोभ्यस्य प्रलोभनार्थं दर्शितस्य वस्तुनोऽनुरूपम् १० अवघ्राण करोति. ११ गजबन्धनस्तम्भः. १२ प्रसरणशीलया. १३ कार्यभारम्. १४ पुरुषश्रेष्ठेन. १५ रात्रिः.

विश्रूयते पिता ॥ ५ ॥ पुण्यतीर्थे कृतं येन तपः क्वाप्यतिदुष्करम् । तस्य पुत्रो भवेद्वश्यः समृद्धो धार्मिकः सुधीः ॥ ६ ॥ वरमेको गुणी पुत्रो न च मूर्खशतान्यपि । एकश्चन्द्रस्तमो हन्ति न च तारागणोऽपि च ॥७॥ एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् । सहैव दशभिः पुत्रैर्भारं वहति रासभी[1] ॥ ८ ॥ एकेनापि सुपुत्रेण जायमानेन सत्कुलम् । शशिना चैव गगनं सर्वदैवोज्ज्वलीकृतम् ॥ ९ ॥ किं जातैर्बहुभिः पुत्रैः शोकसंतापकारकैः । वरमेकः कुलालम्बी यत्र विश्राम्यते कुलम् ॥ १० ॥ कुम्भः परिमितमम्भः पिबत्यसौ कुम्भसंभवो[2]ऽम्भोधिम् । अतिरिच्यते[3] सुजन्मा कश्चिज्जनकं निजेन चरितेन[4] ॥ ११ ॥ विद्याविहीना बहवोऽपि पुत्राः कल्पायुषः सन्तु पितुः किमेतैः । क्षयिष्णुना[5] वापि कलावता[6] वा तस्य प्रमोदः शशिनेव[7] सिन्धोः ॥ १२ ॥ पात्रं न तापयति नैव मलं प्रसूते स्नेहं न संहरति नैव गुणान्क्षिणोति । द्रव्यावसानसमये चलतां न धत्ते सत्पुत्र एव कुलसद्मनि[8] कोऽपि दीपः ॥ १३ ॥

---

## कुपुत्रनिन्दा ।

किं तेन जा[illegible] जातेन मातृयौवनहारिणा[10] । आरोह[illegible] न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥ १ ॥ किं[illegible] तया क्रियते धेन्वा या न दोग्ध्री[11] न गर्भिणी । कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धा[illegible]कः ॥ २ ॥ कोऽर्थः पुत्रेण जातेन याति वंशः समुन्नतिम् । परिवर्तिनि संसारे मृतः को वा न जायते ॥ ३ ॥ एकेन शुष्कवृक्षेण दह्यमानेन वह्निना । दह्यते तद्वनं सर्वं दुष्पुत्रेण कुलं त[illegible]था ॥ ४ ॥ कोटरान्तःस्थितो वह्निस्तरुमेकं दहेत्खलु । कुपुत्रस्तु कुले जातः स्वकुलं नाशय[illegible] ॥ ५ ॥ अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः । सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥ [illegible] अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरौ । यतस्तावल्पदुःखाय यावज्जीवं जडो दहेत् ॥ [illegible] ॥ यस्य पुत्रो न वै विद्वान्न शूरो न च धार्मिकः । अप्रकाशं[12] कुलं तस्य नष्टचन्द्रेव शर्वरी ॥ ८ ॥ अविनीतः सुतो जातः कथं न दहनात्मकः । विनीतस्तु सुतो जातः कथं न पुरुषोत्तमः ॥ [illegible] यस्य न प्रथितं यशः । विद्यायामर्थलाभे च मातुरुच्चार एव सः ॥ १० ॥ निरुत्साहं निरानन्दं निर्वीर्यमरिनन्दनम् । मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ ११ ॥ वरं गर्भस्रावो वरमपि च नैवाभिगमनं वरं जातप्रेतो वरमपि च कन्यैव जनिता । वरं वन्ध्या भार्या वरमपि च गर्भेषु वसतिर्न चाविद्वान्रूपद्रविणगुणयुक्तोऽपि तनयः ॥ १२ ॥ पित्रोर्नैव वचः शृणोति दिवसत्यागे व्रजत्यालयं यान्तीभिर्युवतीभिरध्वनि मुहुः कौतूहलं विन्दति । बन्धूनामुपदेशवाचि वदति क्रोधैकतानं वचः साधून्निन्दति दुर्जनं च मनुते मित्रं कुपुत्रो जनः ॥ १३ ॥

---

१ गर्दभी २ अगस्त्यः. ३ अधिको भवति. ४ आचरणेन. ५ क्षयशीलेन ६ कलापूर्णेन. ७ चन्द्रेण. ८ कुलमेव सद्म गृहं तस्मिन्. ९ कदाचित्. १० यौवननाशकेन. ११ दोहनशीला. १२ प्रकाशरहितम्.

# दैवाख्यानम् ।

दैवमुल्लङ्घ्य यत्कार्यं क्रियते फलवन्न तत् । सरोम्भश्चातकेनात्तं गलरन्ध्रेण गच्छति ॥ १ ॥ भाग्यवन्तं प्रसूयेथा मा शूरं मा च पण्डितम् । शूराश्च कृतविद्याश्च वने सीदन्ति पाण्डवाः ॥ २ ॥ न केवलं मनुष्येषु दैवं देवेष्वपि प्रभु । सति मित्रे धनाध्यक्षे चर्मप्रावरणो हरः ॥ ३ ॥ सच्छिद्रो मध्यकुटिलः कर्णः स्वर्णस्य भाजनम् । धिग्दैवं निर्मलं चक्षुः पात्रं कज्जलभस्मनः ॥ ४ ॥ भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि । पश्य गच्छत एवास्तं नियतिः केन लङ्घ्यते ॥ ५ ॥ किं करोति नरः प्राज्ञः शूरो वाप्यथ पण्डितः । दैवं यस्य फलान्वेषि करोति विफलाः क्रियाः ॥ ६ ॥ दैवे विमुखतां याते न कोऽप्यस्ति सहायवान् । पिता माता तथा भार्या भ्राता वाथ सहोदरः ॥ ७ ॥ पिबन्ति मधु पद्मेषु भृङ्गाः केसरधूसराः । हंसाः शैवालमश्नन्ति धिग्दैवमसमञ्जसम् ॥ ८ ॥ करोतु नाम नीतिज्ञो व्यवसायमुदारधीः । फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम् ॥ ९ ॥ दैवं फलति सर्वत्र न विद्या न च पौरुषम् । समुद्रमथनाल्लेभे हरिर्लक्ष्मीं हरो विषम् ॥ १० ॥ दैवं फलति सर्वत्र न विद्या न च पौरुषम् । पाषाणस्य कुतो विद्या येन देवत्वमागतः ॥ ११ ॥ यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ १२ ॥ रोगशोकपरीतापबन्धनव्यसनानि च । आत्मापराधवृक्षाणां फलान्येतानि देहिनाम् ॥ १३ ॥ अचोद्यमानानि यथा पुष्पाणि च फलानि च । स्वं कालं नातिवर्तन्ते तथा कर्म पुरा कृतम् ॥ १४ ॥ विपत्तौ किं विषादेन सम्पत्तौ हर्षणेन किम् । भवितव्यं भवत्येव कर्मणामीदृशी गतिः ॥ १५ ॥ हरिणापि हरेणापि ब्रह्मणा त्रिदशैरपि । ललाटलिखिता रेखा न शक्या परिमार्जितुम् ॥ १६ ॥ सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरोऽपि । नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम् ॥ १७ ॥ अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥ १८ ॥ अयाचितः सुखं दत्ते याचितश्च न यच्छति । सर्वस्वं चापि हरते विधिरुच्छृङ्खलो नृणाम् ॥ १९ ॥ मनोरथान्करोत्युच्चैर्जनो दैवहतानपि । सिद्ध्यसिद्ध्योः समं कुर्याद्दैव हि फलसाधनम् ॥ २० ॥ पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी । शङ्खो रोदिति भिक्षार्थी फल भाग्यानुसारतः ॥२१॥ तादृशी जायते बुद्धिर्व्यवसायोऽपि तादृशः । सहायास्तादृशाश्चैव यादृशी भवितव्यता ॥ २२ ॥ भवितव्यं भवत्येव नारिकेलफलाम्बुवत् । गन्तव्य गतमित्याहुर्गजभुक्तकपित्थवत् ॥ २३ ॥ महतामाश्रयः पुंसां फलं भाग्यानुसारतः । ईशस्य कण्ठलग्नोऽपि वासुकिर्वायुभक्षकः ॥२४॥ कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी । तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ २५ ॥ कर्मणा बाध्यते बुद्धिर्न बुद्ध्या कर्म बाध्यते । सुबुद्धिरपि यद्रामो हैमं हरिण-

१ दैवम् २ पराक्रमः. ३ प्राप्नोति ४ अप्रेर्यमाणानि. ५ खेदेन. ६ देवै .

मन्वगात् ॥ २६ ॥ गुणोऽपि दोषतां याति वक्रीभूते विधातरि। सानुकूले पुनस्तस्मिन्दोषोऽपि च गुणायते ॥ २७ ॥ अवश्यं भाविनो भावा भवन्ति महतामपि। नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः ॥ २८ ॥ पुरुषः पौरुषं तावद्यावद्दैवं तु सन्मुखम्। विपरीते गते दैवे पुरुषो न च पौरुषम् ॥ २९ ॥ अत्यन्तविमुखे दैवे व्यर्थं यत्नं च पौरुषम्। मनस्विनो दरिद्रस्य वनादन्यत्कुतः सुखम् ॥ ३० ॥ न देवसेवया याति कर्मबन्धः परिक्षयम्। जघास घासमेवासौ बलीवर्दः कपर्दिनः[1] ॥ ३१ ॥ अवश्यंभाविभावानां प्रतीकारो भवेद्यदि। तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ॥ ३२ ॥ भवितव्यं यथा येन नासौ भवति चान्यथा। नीयते तेन मार्गेण स्वयं वा तत्र गच्छति ॥ ३३ ॥ किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्मणा। प्रागेव हि मनुष्याणां बुद्धिः कर्मानुसारिणी ॥ ३४ ॥ लिखिता चित्रगुप्तेन ललाटेऽक्षरमालिका। तां देवोऽपि न शक्नोति उल्लिख्य लिखितुं पुनः ॥ ३५ ॥ येन यत्रैव भोक्तव्यं सुखं वा दुःखमेव वा। स तत्र बद्ध्वा रज्ज्वैव बलाद्दैवेन नीयते ॥ ३६ ॥ सा सा संपद्यते बुद्धिः सा मतिः सा च भावना। सहायास्तादृशा एव यादृशी भवितव्यता ॥ ३७ ॥ अनुरागवती[2] संध्या दिवसस्तत्पुरःसरः[3]। अहो दैवगतिश्चित्रा तथापि न समागमः ॥ ३८ ॥ अघटितघटितं घटयति सुघटितघटितानि दुर्घटीकुरुते। विधिरेव तानि घटयति यानि पुमान्नैव चिन्तयति ॥ ३९ ॥ विकटाटव्यामटनं शिलाधिरोहणमपांनिधेस्तरणम्। निगडं गुहाप्रवेशो विधिपरिपाकः कथं न संतार्यः ॥ ४० ॥ स्ववशः करोति कर्म प्रमादतस्तु परवशो भवति। स्ववशो रोहति वृक्षं निपतत्यवशास्ततः पुरुषः ॥ ४१ ॥ किं त्वं न वेत्सि जगति प्रख्यातं लाभकारणे मूलम्। विधिलिखिताक्षरमालं फलति कपालं न भूपालः ॥ ४२ ॥ द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्। आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ४३ ॥ अनुकूले सति धातरि[4] भवत्यनिष्टादपीष्टमविलम्बम्। पीत्वा विषमपि शंभुर्मृत्युंजयतामवाप तत्कालम् ॥ ४४ ॥ अनुचितमेवाचरितं पशुपतिना यद्विधेः शिरश्छिन्नम्। छिन्नो न चास्य हस्तो येनायं दुर्लिपि[5] लिखति ॥ ४५ ॥ तन्न भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन। करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥ ४६ ॥ सर्वाङ्गमर्पयन्ति लीलासुप्तं क्रमेण शय्यायाम्। अलसमपि भाग्यवन्तं श्रयते पुरुषायितेव श्रीः ॥ ४७ ॥ आरोहतु गिरिशिखरं तरतु समुद्रं प्रयातु पातालम्। विधिलिखिताक्षरमालं फलति कपालं न भूपालः ॥ ४८ ॥ सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम्। अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥ ४९ ॥ यन्मनोरथशतैरगोचरं न स्पृशन्ति कवयोऽपि गिरा यत्। स्वप्नवृत्तिरपि यत्र दुर्लभा लीलयैव विदधाति तद्विधिः

१ शिवस्य. २ रक्तिमा; (पक्षे) रतिः. ३ अगावर्ति; (पक्षे) आज्ञाकरः. ४ दैवे. ५ दुर्लेखम्.

॥ ५० ॥ अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति। जीवत्यनाथो विपिने-ऽप्यरक्षितः कृतप्रयत्नोऽपि गृहे विनश्यति ॥ ५१ ॥ दाता बलिः प्रार्थयिता च विष्णुर्दानं भुवो वाजिमखस्य[1] कालः। नमोऽस्तु तस्यै भवितव्यतायै[2] यस्याः फलं बन्धनमेव जातम् ॥ ५२ ॥ प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः। तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं न हि तत्परेषाम् ॥ ५३ ॥ मा धाव मा धाव विनैव दैवं नो धावनं साधनमस्ति लक्ष्म्याः। चेद्धावनं साधनमस्ति लक्ष्म्याः श्वा धावमानोऽपि लभेत लक्ष्मीम् ॥ ५४ ॥ ईशः करस्थीकृतकाञ्चनाद्रिः कुबेरमित्रं रजताचलस्थः। तथापि भि-क्षाटनमस्य जातं विधौ[3] शिरःस्थे कुटिले[4] कुतः श्रीः ॥ ५५ ॥ स्वयं महेशः श्वशुरो न-गेशः सखा धनेशस्तनयो गणेशः। तथापि भिक्षाटनमेव शंभोर्बलीयसी केवलमीश्वरेच्छा ॥ ५६ ॥ असंभवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय। प्रायः समासन्नविपत्ति-काले धियोऽपि पुंसां मलिनीभवन्ति ॥ ५७ ॥ न भूतपूर्वो न च केन दृष्टो हेम्नः कुरंगो न कदापि वार्ता। तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥५८॥ धनानि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनः श्मशाने। देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः ॥ ५९ ॥ वने जने शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा। सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥ ६० ॥ सुखस्य दुःखस्य न को-ऽपि दाता परो ददातीति कुबुद्धिरेषा। अहं करोमीति वृथाभिमानः स्वकर्मसूत्रग्रथितो हि लोकः ॥ ६१ ॥ यः सुन्दरस्तद्वनिता कुरूपा या सुन्दरी सा पतिरूपहीना। यत्रोभयं तत्र दरिद्रता च विधेर्विचित्राणि विचेष्टितानि ॥ ६२ ॥ भ्रमन्वनान्ते नवमञ्जरीषु न षट्पदो गन्धफलीम्[6] आजिघ्रत्। सा किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छा ॥ ६३ ॥ रामो हि भर्ता गणको वसिष्ठः सूर्यो विवेके सुभगं विलग्नम्। सुखं न सुप्ता क्षणमेव सीता न कर्मणः कोऽपि बली समर्थः ॥ ६४ ॥ विधौ विरुद्धे न पयः पयोनिधौ सुधौघसिन्धौ न सुधा सुधाकरे। न वाञ्छितं सिध्यति कल्पपादपे न हेम हेमप्रभवे[5] गिरा-वपि ॥ ६५ ॥ ललाटपट्टे लिखिता विरिञ्चिना वर्णावली या किल तां प्रमार्ष्टुम्। न को-ऽपि शक्तोऽत्र यथा जलाशया न चातकतृट्शमना भवन्ति ॥ ६६ ॥ अवश्यभव्येष्वनव-ग्रहग्रहा यया दिशा धावति वेधसः स्पृहा। तृणेन वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना ॥ ६७ ॥ निपतति किल दुर्बलेषु दैवं तदवितथं ननु येन कारणेन। बल-वति न तथा यथाबलानां प्रभवति कष्टशरासनो मनोभूः ॥ ६८ ॥ हराशिरसि शिरांसि यानि रेजुः शिव शिव तानि लुठन्ति गृध्रपादे। अयि खलु विषमः पुराकृताना भवति हि

---

१ अश्वमेधस्य. २ दैवाय. ३ दैवे; (पक्षे) चन्द्रे. ४ वक्रे, (पक्षे) विपरीते. ५ हिमालयः. ६ चम्पककलिकाम्.

जन्तुषु कर्मणां विपाकः ॥ ६९ ॥ क्व च ननु जनकाधिराजपुत्री क्व च दशकन्धरमन्दिरे निवासः । अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः ॥ ७० ॥ क्व नु कुलमकलङ्कमायताक्ष्याः क्व नु रजनीचरसंगमापवादः । अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः ॥ ७१ ॥ मम गुणलघिमा भवेन्न तस्या गुणगरिमा न च दूषणं तवेदम् । न च रमणविचेष्टितं तवेदं भवतु विधातुरयं विपक्षपक्षः ॥ ७२ ॥ क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता । नियतं प्रतिकूलवर्तिनो बत धातुश्चरितं सुदुःसहम् ॥ ७३ ॥ सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः । तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥ ७४ ॥ गजभुजंगमयोरपि बन्धनं शशिदिवाकरयोर्ग्रहपीडनम् । मतिमतां च समीक्ष्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥ ७५ ॥ यदपि जन्म बभूव पयोनिधौ निवसनं जगतीपतिमस्तके । तदपि नाथ पुराकृतकर्मणा पतति राहुमुखे खलु चन्द्रमाः ॥ ७६ ॥ प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता । अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ७७ ॥ यस्माच्च येन च यथा च यदा च यच्च यावच्च यत्र च शुभाशुभमात्मकर्म । तस्माच्च तेन च तथा च तदा च तच्च तावच्च तत्र च विधातृवशादुपैति ॥ ७८ ॥ नैवाकृतिः फलति नैव कुलं न शीलं विद्यापि नैव न च यत्नकृतापि सेवा । भाग्यानि पूर्वतपसा किल संचितानि काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ७९ ॥ आकाशमुत्पततु गच्छतु वा दिगन्तमम्भोनिधिं विशतु तिष्ठतु वा यथेच्छम् । जन्मान्तरार्जितशुभाशुभकृन्नराणां छायेव न त्यजति कर्मफलानुबन्धः ॥ ८० ॥ भीमं वनं भवति तस्य पुरं प्रधानं सर्वो जनः सुजनतामुपयाति तस्य । कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ ८१ ॥ कैवर्तकर्कशकरग्रहणच्युतोऽपि जालान्तरे निपतितः शफरी वराकः । दैवात्ततो विगलितो गिलितो बकेन वक्रे विधौ वद कथं व्यवसायसिद्धिः ॥ ८२ ॥ दैवे समर्प्य चिरसंचितकर्मजालं सुस्थाः सुखं वसत किं परयाचनाभिः । मेरुं प्रदक्षिणयतोऽपि दिवाकरस्य ते तस्य सप्त तुरगा न कदाचिदष्टौ ॥ ८३ ॥ येनाञ्चलेन सरसीरुहलोचनायास्त्रातः प्रभूतपवनादुदये प्रदीपः । तेनैव सोऽस्तसमयेऽस्तमयं विनीतः क्रुद्धे विधौ भजति मित्रममित्रभावम् ॥ ८४ ॥ आधोरणाङ्कुशभयात्करिकुम्भयुग्मं जातं पयोधरयुगं हृदयेऽङ्गनानाम् । तत्रापि वल्लभनखक्षतभेदभिन्नं नैवान्यथा भवति यल्लिखितं विधात्रा ॥ ८५ ॥ संजातसान्द्रमकरन्दरसां क्रमेण पातुं गतश्च कलिकां कमलस्य भृङ्गः । दग्धा निपत्य सहसैव हिमं नवैषा वामे विधौ नहि फलन्त्यभिवाञ्छितानि ॥ ८६ ॥ सिंहो बली गिरिगुहागहनप्रवासी वासोदरे वसति भूमिभृतां विडालः । नो पौरुषं कुलमपि प्रचुरा न वाणी

१ क्लेशद. २ परिणाम.. ३ मूर्खता. ४ दैवम्. ५ दैववशात्.

दैवं बलीय इति मुञ्च सखे विषादम् ॥ ८७ ॥ [1]सदसि विदुरभीष्मद्रोणशारद्वतानां पति-भिर[2]मरकल्पैः पञ्चभिः पालितापि । अहह [3]परिभवस्य द्रौपदी पात्रमासीद्बलवति सति दैवे बन्धुभिः किं विधेयम् ॥ ८८ ॥ गुणवदगुणवद्वा कुर्वता कार्यमादौ [4]परिणतिर[5]वधार्या यत्नतः पण्डितेन । [6]अतिरभसकृतानां कर्मणामा विपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ८९ ॥ स हि [7]गगनविहारी [8]कल्मषध्वंसकारी दशशतकरधारी [9]ज्योतिषां मध्यचारी । विधुरपि विधियोगाद्ग्रस्यते राहुणासौ लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ॥ ९० ॥ अयममृतनिधानं नायकोऽप्योषधीनां शतभिषगनुयातः शंभुमूर्ध्नोऽवतंसः । विरहयति न चैनं राजयक्ष्मा शशाङ्कं हतविधिपरिपाकः केन वा लङ्घनीयः ॥ ९१ ॥ शशिनि खलु कलङ्कः कण्टकं पद्मनाले युवतिकुचनिपातः पक्वता केशजाले । जलधिजलमपेयं पण्डिते निर्धनत्वं वयसि धनविवेको निर्विवेको विधाता ॥ ९२ ॥ प्रियसखि विपद्दण्डप्रान्तप्रपातपरंपरापरिचयचले चिन्ताचक्रे निधाय विधिः खलः । मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालवद्भ्रमयति मनो नो जानीमः किमत्र करिष्यति ॥ ९३ ॥ क्वचित्पाणिप्राप्तं घटितमपि कार्यं विघटयत्क्षुधा कृत्वाखुर्विवरं घटमानं घटयति । तदेवं सर्वेषामुपरि परितो जाग्रति विधावुपालम्भः कोऽप्यतः पथा लोकार्जनविधौ ॥ ९४ ॥ नमस्यामो देवान्ननु हतधियस्तेऽपि वशगा विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः । फलं कर्मायत्तं यदि किममरैः किं च विधिना नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ ९५ ॥ त्रिलोकेशः [10]शार्ङ्गी [11]शबरशरलक्ष्यत्वमगमद्[12]विधाता[13] लोकानामलभत शिर[14]ःकृन्तनविधिम् । [15]प्रयातौ तौ राहोर्दिनकरशशाङ्कौ कवलतां प्रभुर्नग्नः शंभुः शिरसि लिखितं लङ्घयति कः ॥ ९६ ॥ सुधांशुर्जातेयं कथमपि कलङ्कस्य कणिका विधातुर्दोषोऽयं न च गुणनिधेस्तस्य किमपि । स किं नात्रेः पुत्रो न किमु हरचूडार्चनमणिर्न वा हन्ति [16]ध्वान्तं जगदुपरि किं वा न वसति ॥ ९७ ॥ [17]लुलाये [18]गोमायौ मृगपरिषदि श्वापदकुले करिष्यन्कार्पण्यं किमिह महिमानं गमयसि । निमग्नः पङ्केऽस्मिन्ननुभव करीन्द्राधिपदशामभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः ॥ ९८ ॥ धुनोति ध्वान्तानि व्यपनयति नीहारपटलं कुल राजीवानां दलयति रथाङ्गं रमयति । जगद्व्यापी देवः सुखयति जनानां च नयन न याति स्थेमान यदि तदिह दैवं जयतु कः ॥ ९९ ॥ त एवामी बाणास्तदपि हरलब्धं धनुरिदं स एवाहं पार्थः प्रमथितसुरारातिनिचयः । इमास्तास्ता

---

१ सभायाम् २ देवतुल्यैः ३ पराभवस्य. ४ परिणाम. ५ निश्चेतव्या ६ अतित्वरया ७ आकाशसंचारी ८ अन्धकारनाशकर्ता ९ नक्षत्राणाम् १० समर्थो भवति ११ कृष्णः. १२ शबरो जरानामा भिल्ल. प्रभासे परस्पर कलहेनाखिलयादवोपसंहारानन्तरमश्वत्थस्याधस्ताद्वामोरौ दक्षिणं पाद निधायास्थिते भगवति जरानाम्ना भिल्लेन दूरतो भगवच्चरण दृष्ट्वा मृगमुखभ्रमाद्भगवत्पादो बाणेन विद्ध इति भागवते. १३ ब्रह्मा. १४ शिरःकर्तनम्. १५ प्रासताम्. १६ अन्धकारम्. १७ महिषे, १८ मृगधूर्तके.

गोप्यो हरिचरणचित्तैकशरणा ह्रियन्ते गोपालैर्विधिरपि बलीयान्न तु नरः ॥ १०० ॥ अलंकारः शङ्काकरनरकपालं परिजनो विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः । अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोर्विधौ[1] वक्रे मूर्ध्नि स्थितवति वय के पुनरमी ॥१०१॥ पिता रत्नाधारः शुचिसहचरास्ते च मणयः स्वसा स्निग्धा लक्ष्मीरयमवरजः कल्पविटपी । अहो कास्यं धातुस्तदपि खलु शङ्खः प्रतिपदं रुदित्वा यद्दीर्घं दिशि दिशि वराटं मृगयते ॥१०२॥ पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं नोलूकेन[2] विलोक्यते यदि दिवा सूर्यस्य किं दूषणम् । धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं यद्धात्रा निजभालपट्टलिखितं तन्मार्जितुं[3] कः क्षमः[4] ॥ १०३ ॥ या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् । तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं हे साधो व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ॥१०४॥ ब्रह्मा येन कुलालवन्नियमितो[5] ब्रह्माण्डभाण्डोदरे विष्णुर्येन दशावतारगहने क्षिप्तः सदा संकटे । रुद्रो येन कपालपाणिपुटे [illegible] कारितः सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥१०५॥ यद्धात्रा यदा च यच्च याव[illegible]स्तोकं महद्वा धनं तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ ततो नाधिक[illegible] तावच्च तत्र च [illegible]वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः कूपे पश्य पयोनिधावपि घटो [illegible]पि नैव न[illegible]जलम् ॥१०६॥ नेता यस्य बृहस्पतिः प्रहरणं[6] वज्रं सुराः सैनिकाः स्वर्गो दुर्ग[illegible]रुषस्[illegible] किल हरेरैरावतो वारणः । इत्याश्चर्यबलान्वितोऽपि बलिभिर्भग्नः परैः संगरे तद्युक्तं वरमेव दैवशरणं धिग्धिग्वृथा पौरुषम् ॥१०७॥ रामो येन विडम्बितो मृदुमयश्चन्द्रः कलङ्कीकृतः क्षाराम्बुः सरितां पतिश्च नहुषः सर्पः कपाली हरः । माण्डव्यो मुनिशूलपीडिततनुर्भिक्षाभुजः पाण्डवा नीतो येन रसातलं बलिरसौ तस्मै नमः कर्मणे ॥१०८॥ जातः सूर्यकुले पिता दशरथः क्षोणीभुजामग्रणीः सीता सत्यपरायणा प्रणयिनी यस्यानुजो लक्ष्मणः । दोर्दण्डेन समो न चास्ति भुवने प्रत्यक्षविष्णुः स्वयं रामो येन विडम्बितोऽपि विधिना चान्ये जने का कथा ॥ १०९ ॥ जामाता पुरुषोत्तमो भगवती लक्ष्मीः स्वयं कन्यका दूतो यस्य बभूव कौशिकमुनिर्यज्वा वसिष्ठः स्वयम् । दाता श्रीजनकः प्रदानसमये चैकादशस्था ग्रहाः किं ब्रूमो भवितव्यतां हतविधे रामोऽपि यातो वनम् ॥ ११० ॥ आसाद्यापि महोदधिं न वितृषो जातो जलैर्वाडवो मेघं प्राप्य न चातकोऽपि चरणौ मानुं न लेभेऽरुणः । चन्द्रः शंकरशेखरेऽपि निवसन्पक्षक्षये क्षीयते प्रायः सज्जनसंगतौ हि लभते दैवानुरूपं फलम् ॥ १११ ॥ यावद्भाग्यमहोदयो नहि भवे[illegible]त्तावन्निरर्था गुणा विद्यावेदविनोदशास्त्रकविताचातुर्यशूरादयः । भाग्ये तिष्ठति निर्गुणोऽपि गुणिनामग्रेसरो जायते मान्याः सर्वगुणा गुणाग्रणि भवेद्भाग्याय तस्मै नमः ॥ ११२ ॥ आ-

१ चन्द्रे, (पक्षे) दैवे २ दिवाभीतेन ३ शोधयितुम्. ४ समर्थः. ५ कुम्भकारः. ६ आयुधम्.

हारे शुचिता ध्वनौ मधुरता वाचालता मांधवे वन्धौ निर्ममता जनेषु निरता नीडे पराधी-
नता । एतैरेव गुणैर्युताः परभृतास्त्यक्त्वा किमेते जना वन्दन्ते खलु खञ्जनं कृमिभुजं
चित्रा गतिः कर्मणाम् ॥ ११३ ॥ गीतं कोकिल ते मुदा रसविदः शृण्वन्ति कर्णामृतं नो
किंचिद्वितरन्ति ते तरुदलैरेव स्वयं जीवसि । कर्णायुर्हरमुद्गिरन्ति विरुतं काकास्तु तेभ्यो
बलिं प्रज्ञा एव दिशन्ति हन्त धिगिदं वक्रं विधेः क्रीडितम् ॥ ११४ ॥ छित्त्वा पाशम-
पास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां पर्यन्ताग्निशिखाकलापजटिलान्निःसृत्य दूरं वनात् ।
व्याधानां शरगोचरादतिजवेनोत्प्लुत्य धावन्मृगः कूपान्तः पतितः करोति विमुखे किंवा
विधौ पौरुषम् ॥ ११५ ॥ लब्धं जन्म सह श्रिया स्वयमपि त्रैलोक्यभूपाकरः स्थित्यर्थं
परमेश्वराभ्युपगतस्तेनापि मूर्ध्ना धृतः । वृद्धिं शीतकरस्तथापि न गतः क्षीणः परं प्रत्युत
प्रायः प्राक्तनमेव कर्म बलवत्कः कस्य कर्तुं क्षमः ॥ ११६ ॥ रामे प्रव्रजनं बलेर्नियमनं
पाण्डोः सुताना वनं वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् । कारागारनिषेवणं
च मरणं संचिन्त्य लङ्केश्वरे सर्वः कालवशेन नश्यति नरः को वा परित्रायते ॥ ११७ ॥
भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे
भोगिनः । तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा लोकाः पश्यत दैवमेव हि नृणां
वृद्धौ क्षये कारणम् ॥ ११८ ॥ माता यस्य धराधरेन्द्रदुहिता तातो महेशस्तथा भ्राता
विघ्नकुलान्तकः पितृसखो देवो धनानां पतिः । ख्यातः क्रौञ्चविदारणे सुरपतेः सेनाग्रगः
षण्मुखस्तद्दुर्दैवबलेन कुत्र घटते नाद्यापि पाणिग्रहः ॥ ११९ ॥ कांश्चित्तुच्छयति प्रपूरयति
वा कांश्चिन्नयत्युन्नतिं कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् । अन्योन्यं
प्रतिपक्षसंहतिमिमा लोकस्थितिं बोधयन्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः
॥ १२० ॥ तुल्यं भूभृति जन्म तुल्यमुभयोर्मूल्यं च तुल्यं वपुस्तुल्यं दार्ढ्यमुदग्रटङ्कदलन
तुल्यं च पाषाणयोः । एकस्याखिलवन्दनाय विधिना देवत्वमारोपितं तद्द्वारे विहिता
परस्य तु पदाघातास्पदं देहली ॥ १२१ ॥ यद्भग्नं धनुरीश्वरस्य समरे यज्जामदग्न्यो जित-
स्त्यक्ता येन गुरोर्गिरा वसुमती सेतुः पयोधौ कृतः । एकैकं दशकन्धरक्षयकृतो रामस्य
किं वर्ण्यते दैव वर्णय येन सोऽपि सहसा नीतः कथाशेषताम् ॥ १२२ ॥ खल्वाटो दिव-
सेश्वरस्य किरणैः संतापितो मस्तके वाञ्छन्देशमनातपं तु विधिना तालस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां
भाजनम् ॥ १२३ ॥ भूयिष्ठ द्रविणात्मजं जनयितुं लिप्सावता चेतसा नार्यः पञ्च मया
क्रमेण कुलजाः काले समुद्वाहिताः । सद्विद्या कविता विदेशवसतिः सेवा तथाभ्यर्थना

१ वसन्ते २ कुलाये ३ कोकिला ४ मृगबन्धनी ५ उड्डीय. ६ पार्वती. ७ गजानन. ८ कुबेर
९ विवाह १० पर्वते. ११ दृढता. १२ उदग्रा ये टङ्कास्तैर्दलनम्. १३ द्रविण द्रव्य तदेवात्मज. पुत्रस्तम्.
१४ विवाहिता

दैवेन प्रतिबन्धकेन युगपद्वन्ध्याः समस्ताः कृताः ॥ १२४ ॥ मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे वाणिज्यं कृषिसेवनादि सकला विद्याः कलाः शिक्षतु । आकाशं सकलं प्रयातु खगवत्कृत्वा प्रयत्नं परं नो भाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥ १२५ ॥ लक्ष्मीकौस्तुभपारिजातसहजः सूनुः सुधाम्भोनिधेर्दैवेन प्रणयप्रसादविधिना मूर्ध्ना धृतः शंभुना । अद्याप्युज्झति नैव दैवविहितं क्षैण्यं क्षपावल्लभः केनान्येन विलङ्घ्यते विधिगतिः पाषाणरेखासखी ॥ १२६ ॥ अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां मेरुर्मृत्कणतां तृणं कुलिशतां वज्रं तृणप्रायताम् । वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया लीलादुर्ललिताद्भुतव्यसनिने दैवाय तस्मै नमः ॥ १२७ ॥ जन्म ब्रह्मकुलेऽग्रजो धनपतिर्यः कुम्भकर्णाग्रजः सूनुर्वासवजित्स्वयं दशशिरा दोर्दण्डका विंशतिः । अस्त्रं कामगमं विमानमजयं मध्येसमुद्रं पुरी सर्वं निष्फलमेतदेव नियतं दैवं परं दुर्जयम् ॥ १२८ ॥ यत्राखण्डलदन्तिदन्तमुसलान्याखण्डितान्याहवे धारा यत्र पिनाकपाणिपरशोराकुण्ठितामागताः । तन्मे तावदुरो नृसिंहकरजैर्व्यादीर्यते सांप्रतं दैवे दुर्बलतां गते तृणमपि प्रायेण वज्रायते ॥ १२९ ॥ दोःसंदेहवशंवदत्रिभुवनश्रीगर्वसर्वंकषः कैलासोद्धरणप्रचण्डचरितो वीरः कुबेरानुजः । यत्रायं स्वयमस्ति सेयममरावत्यापि वन्द्या पुरी नीता मर्कटकेन कामपि दशां धिग्दैवमावश्यकम् ॥ १३० ॥ येनाकारि मृणालपत्रमशनं क्रीडा करिण्या सह स्वच्छन्दं भ्रमणं च कन्दरगणे पीतं पयो नैर्झरम् । सोऽयं वन्यकरी नरेषु पतितः पुष्णाति देहं तृणैर्यद्दैवेन ललाटपत्रलिखितं तत्प्रोज्झितुं कः क्षमः ॥ १३१ ॥ दैवेन प्रभुणा स्वयं जगति यद्यस्य प्रमाणीकृतं तत्तस्योपनमेन्मनागपि महान्नैवाश्रयः कारणम् । सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ॥ १३२ ॥ कान्तं वक्ति कपोतिकाकुलतया नाथान्तकालोऽधुना व्याधोऽधो धृतचापसज्जितशरः श्येनः परिभ्रामति । इत्थं सत्यहिना स दष्ट इषुणा श्येनोऽपि तेनाहतस्तूर्णं तौ तु यमालयं प्रति गतौ दैवी विचित्रा गतिः ॥ १३३ ॥ रेवावारिणि वारणेन विपुले राजीवराजीरजःपुञ्जापिञ्जरितोर्मिणि प्रविगलद्दानाम्बुगन्धोत्कटे । धौतं येन मृगारिरक्तमसकृद्दन्तान्तरालस्थितं कोष्णं सोऽपि पयः पपौ हत विधेः को गोचरे नागतः ॥ १३४ ॥ पीयूषं वपुषोऽस्य हेतुरुदयो विश्वस्य नेत्रोत्सवः स्पृष्टं भानुकरैरिदं त्रिभुवनं ज्योत्स्नाभरैः सिञ्चति । सर्वाशाप्रतिरोधकान्धतमसध्वंसाय बद्धोद्यमे धिग्धातारमिहापि लक्ष्म लिखितुं यस्य प्रवृत्तं मनः ॥ १३५ ॥ आपत्तावपि नैव मुञ्चति गुणो मार्गं प्रदीपद्युतेर्यच्छुद्धाधिकवंशजन्मजनितो लक्ष्मादिदाने रतः । नुन्न तद्धनमर्थितैकशरण कौटिल्य-

१ निष्फला २ युद्धे ३ वज्रताम् ४ इन्द्र. ५ ऐरावतः. ६ शिव. ७ हिरण्यकशिपोरुक्तिरियम्. ८ नर्मदोदके

माग्भूतले धिग्दैवं हि विधेर्विधुर्यदितरा रीतिः समुन्मीलति ॥ १३६ ॥ केषांचिन्निजवेश्मनि स्थितवतामालस्यनिद्रावतां दृश्यन्ते फलिता लता इव फलैराचूलमूलश्रियः । अद्रिं लङ्घयतां गिरिं प्रयततां पृथ्वीतले धावतामुद्योगव्यवसायसाहसधिया तन्नास्ति यत्पच्यते ॥ १३७ ॥ स्थाल्यां वैदूर्यमय्यां पचति तिलकणांश्चन्दनैरिन्धनाद्यैः सौवर्णैर्लाङ्गलाद्यैर्निखनति वसुधामर्कमूलस्य हेतोः । छित्त्वा कर्पूरखण्डान्वृतिमिह कुरुते कोद्रवाणां समन्तात्प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपोमन्दभाग्यः ॥ १३८ ॥ पञ्चैते पाण्डुपुत्राः क्षितिपतितनया धर्मभीमार्जुनाद्याः शूराः सत्यप्रतिज्ञा दृढतरवपुषः केशवेनापि गूढाः । ते वीराः पाणिपात्रे कृपणजनगृहे भिक्षुचर्यां प्रवृत्ताः को वा कार्ये समर्थो भवति विधिवशाद्भाविनी कर्मरेषा ॥ १३९ ॥ यत्र श्यामाकबीजान्यपि चटकवधूचञ्चुकोटिच्युतानि प्रोड्डीयन्ते स्ववेश्मन्यशनविरहिते निर्धने श्रोत्रियाणाम् । दैवे दातर्यकस्माच्चटुलशिशुकराकृष्टहारावलीतो भ्रष्टास्तत्रैव दृष्टा युवतिभिरलसं घूर्णिता मौक्तिकौघाः ॥ १४० ॥ यन्माता विष्णुनाभिः पतिरपि च सुतो यस्य साक्षात्प्रजानां लक्ष्मीर्यत्संश्रयाभूद्यदपि करतले भारती संबभार । भानुर्यस्यास्ति मित्रं तदपि सरसिजं क्षीणमिन्दोर्मयूखैस्त्रातुं नैवोत्सहन्ते गतसुकृतफलं प्राप्तकालं सहायाः ॥ १४१ ॥ कुत्रायोध्या क्व रामो दशरथवचनाद्दण्डकारण्यमागात्क्वासौ मारीचनामा कनकमयमृगः कुत्र सीतापहारः । सुग्रीवे राममैत्री क्व जनकतनयान्वेषणे प्रेषितो[3]ऽहं योऽर्थोऽसंभावनीयस्तमपि घटयते क्रूरकर्मा विधाता ॥ १४२ ॥

---

## जरावर्णनम् ।

अलंकरोति हि जरा राजामात्यभिषग्यतीन् । विडम्बयति[?] पण्यस्त्रीमल्लगायकसेवकान् ॥ १ ॥ क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः । निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥ २ ॥ शशिनीव हिमार्तानां घर्मार्तानां यथा रवौ । मनो न रमते स्त्रीणा[4]जरापीतेन्द्रिये पतौ ॥ ३ ॥ मलिनैरलकैरेतैः शुक्लत्वं प्रकटीकृतम् । तद्रोषादिव निर्याता वदनाद्[6]रदनावलिः ॥ ४ ॥ [7]वृद्धत्वानलदग्धस्य सारयौवनवस्तुनः । दृश्यते देहगेहेषु भस्मैव [8]पलितच्छलात् ॥ ५ ॥ वीक्ष्यते पलित[9]श्रेणिर्नैव वृद्धस्य मूर्धनि । [10]मृषैव जातं जन्मेति किंतु भस्म विधिर्न्य[11]धात् ॥ ६ ॥ इयत्यामपि सामग्र्यां [12]सुकृतं न कृतं त्वया । इतीव कुपितो [13]कृतान्तोऽनन्तकः पातयत्यलम् ॥ ७ ॥ यममिव करधृतदण्डं हरिमिव [14]सगदं शशाङ्कमिव व-

---

१ रत्नविशेष २ प्राचीरम्. ३ हनूमत उक्तिरियम् ४ जरया पीतानि ग्रस्तानीन्द्रियाणि यस्य तस्मिन्. ५ केशै. ६ दन्तपङ्क्ति' ७ वार्धक्य तदेवानलस्तेन दग्धस. ८ पलितमिषेण. ९ पङ्क्ति.. ११ व्यर्थमेव. ११ निक्षिप्तवान्. १२ पुण्यम्. १३ यमः. १४ गदया सहितम्; (पक्षे) गदेन रोगेण सहितम्.

क्रम् । शिवमिव च विरूपाक्षं[1] जरा करोत्यकृतपुण्यमपि ॥ ८ ॥ वदनं दशनविहीनं[2] वाचो न परिस्फुटा गता शक्तिः । अव्यक्तेन्द्रियशक्तिः पुनरपि बाल्यं कृतं जरया ॥ ९ ॥ पटु रटति पलितदूतो[3] मस्तकमासाद्य सर्वलोकस्य । परिभवति जरा मरणं कुरु धर्मं विरम पापेभ्यः ॥ १० ॥ शतमन्युं[4] दण्डधरं[5] कुबेरमपि[6] शूलिनं[7] तथा गदिनम्[8] । कुरुते जरा न सा किं कुर्यान्नीरूपनामकं मनुजम् ॥ ११ ॥ कृष्णवर्त्मनि[9] गुणान्गणयन्ती जीवने[10]ऽपि जनयत्यनुरागम् । आगता बत जरेव हिमानी[11] सेव्यतां सुरतरंगवती[12]यम् ॥ १२ ॥ कृतान्तस्य दूती जरा कर्णमूले समागत्य वक्तीति लोकाः शृणुध्वम् । परस्त्रीपरद्रव्यवाञ्छां त्यजध्वं भजध्वं रमानाथपादारविन्दम् ॥ १३ ॥ वर्णं सितं शिरसि वीक्ष्य शिरोरुहाणां[13] स्थानं जरा परिभवस्य यदेव पुंसाम् । आरोपितास्थिशकलं[14] परिहृत्य[15] यान्ति चाण्डालकूपमिव दूरतरं तरुण्यः ॥ १४ ॥ श्रुतिः[16] शिथिलतां गता स्मृतिरपि[17] प्रनष्टाधुना गतिर्विपथमागता विगलिता द्विजानां[18] ततिः । गवामपि[19] च संहतिः समुचितक्रियातश्च्युता कृता नु जरया तया कलियुगस्य साधर्म्यता[20] ॥ १५ ॥ गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलिर्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते । वाक्यं नाद्रियते च बान्धवजनैर्भार्या न शुश्रूषते हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते[21] ॥ १६ ॥ स्थूलप्रावरणोऽतिवृत्त[22]कथकः कासाश्रुलालाविलो भग्नोरःकटिपृष्ठजानुजघनो मुग्धोऽतिथीन्वारयन् । शृण्वन्धृष्ट[23]वधूवचांसि धनुषा संत्रासयन्वायसानाशापाशनिबद्धजीवविभवो वृद्धो गृहे ग्लायति[24] ॥ १७ ॥ पादौ संस्तम्भयन्ती[25] मुखमपि नमयन्त्यङ्गमाकुञ्चयन्ती हस्तावुत्कम्पयन्ती प्रणयिजनवचो न श्रुतीः श्रावयन्ती । रथ्यामुद्वेजयन्ती[26] वलिततनुमती[27] नूतनोढा[28] जरा वा तुल्या पूर्वा[29] तु पुंस[30]स्त्रसति[31] बत परा[32] [33]भीतिहेतुर्नरस्य ॥ १८ ॥

---

## क्षुधावर्णनम् ।

नास्ति क्षुधासमं दुःखं नास्ति रोगः क्षुधासमः । नास्त्याहारसमं सौख्यं नास्ति क्रोध-

---

१ विकृताक्षम् २ दन्तरहितम् ३ पलितमेव दूत. ४ इन्द्रम्; (पक्षे) कोपनम् ५ यमम्; (पक्षे) यष्टिधरम्. ६ धनाधिपम्, (पक्षे) कुत्सितशरीरम् ७ शिवम्; (पक्षे) शूलयुक्तम्. ८ विष्णुम्; (पक्षे) गदयुक्तम्. ९ अग्नौ; (पक्षे) कृष्णस्य वर्त्म मार्गस्तस्मिन् १० उदके; (पक्षे) प्राणे. ११ हिमसहति.. १२ सुरते रङ्गवती; (पक्षे) सुराणा तरगवती भागीरथी. १३ केशानाम्. १४ आरोपितमस्थ्नः शकल खण्डं यस्मिन्. १५ अस्पृश्यत्वादिति भावः. १६ कर्णेन्द्रियम्, (पक्षे) वेदः. १७ स्मरणम्, (पक्षे) मन्वादिवाक्यम्. १८ दन्तानाम्; (पक्षे) ब्राह्मणानाम् १९ इन्द्रियाणाम्; (पक्षे) धेनूनाम् २० समानधर्मत्वम् २१ शत्रुवदाचरति. २२ अतिक्रान्तानि वृत्तानि कथयतीति २३ धार्ष्ट्ययुक्तस्त्रीवचनानि. २४ खेद प्राप्नोति. २५ पादयो. स्तम्भनं कुर्वती. २६ उद्वेग कुर्वती. २७ वलय. सजाता यस्याः सा वलिता सा चासौ तनुश्च तद्वती; (पक्षे) वलित वलनं तद्युक्ता या तद्वती. २८ नवीनविवाहिता स्त्री. २९ नूतनोढा. ३० पुरुषात्. ३१ उद्वेग प्राप्नोति. ३२ जरा. ३३ भयकारणम्.

समो रिपुः ॥ १ ॥ शय्या वस्त्रं चन्दनं चारु हास्यं वीणा वाणी दृश्यते या च नारी । न भ्राजन्ते क्षुत्पिपासातुराणां सर्वारम्भास्तण्डुलाः प्रस्थमूलाः ॥ २ ॥ आदौ रूपविनाशिनी कृशकरी कामाङ्कुरच्छेदिनी पुत्रामित्रकलत्रभेदनकरी गर्वाङ्कुरच्छेदिनी । कामं मन्दकरी तपःक्षयकरी धर्मस्य निर्मूलनी सा मां संप्रति सर्वरोगजननी प्राणापहन्त्री क्षुधा ॥ ३ ॥

## भिक्षुकः ।

प्रतिदिनमयत्नसुलभे भिक्षुकजननि साधुजनकल्पलते । नृपनमननरकतारिणि भगवति भिक्षे नमस्तुभ्यम् ॥ १ ॥ अगस्तितुल्याश्च घृताब्धिशोषणे दम्भोलितुल्या वटकाद्रिभेदने । शाकावलीकाननवह्निरूपास्त एव भट्टा इतरे भटाश्च ॥ २ ॥ अग्र्यो भुक्तिमतां प्रयोगसमये मन्त्रेषु पृष्ठं गतः पाकागारगतस्तु पाचकमनस्तोषाय वाचस्पतिः । उञ्छायां निरतो रतोऽर्भकगणे पिण्डेषु दत्तादरो नानाश्राद्धगणैकचालितमना भट्टोत्तमो राजते ॥ ३ ॥ उच्चैरध्ययनं पुरातनकथा स्त्रीभिः सहालापन तासामर्भकलालनं पतिनुतिस्तत्पाकमिथ्यास्तुतिः । आदेशस्य करावलम्बनविधिः पाण्डित्यलेखक्रिया होरागारुडमन्त्रतन्त्रकविधिर्भिक्षोर्गुणा द्वादश ॥ ४ ॥ प्रातः क्षालितलोचनाः करतले चञ्चत्पवित्राङ्कुरास्तत्तत्स्थाननिशितोर्ध्वतिलकाश्चैलान्तबद्धाक्षताः । को जातश्च मृतोऽथवा मृततिथिः कस्यालये वर्तते इत्थं हर्षशतैर्युताः प्रतिदिनं धावन्त्यहो भिक्षुकाः ॥ ५ ॥

## परगृहवासः ।

शिरसा धार्यमाणोऽपि सोमः सौम्येन शंभुना । तथापि कृशतां धत्ते कष्टः खलु पराश्रयः ॥ १ ॥ विना कार्येण ये मूढा गच्छन्ति परमन्दिरम् । अवश्यं लघुतां यान्ति कृष्णपक्षे यथा शशी ॥ २ ॥ कष्टं खलु मूर्खत्वं कष्टं खलु यौवनेषु दारिद्र्यम् । कष्टादपि कष्टतरं परगृहवासः परान्नं च ॥ ३ ॥ उडुगणपरिवारो नायकोऽप्योषधीनाममृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः । भवति विगतरश्मिर्मण्डलं प्राप्य भानोः परसदननिविष्टः को लघुत्वं न याति ॥ ४ ॥

## उदरपूरणदूषणम् ।

अस्य दग्धोदरस्यार्थे किं न कुर्वन्ति पण्डिताः । वानरीमिव वाग्देवीं नर्तयन्ति गृहे गृहे ॥ १ ॥ किमकारि न कार्पण्यं कस्यालङ्घि न देहली । अस्य पापोदरस्यार्थे किमनाटि

१ सुन्दरम् २ शत्रु ३ कुटुम्बम् ४ अरण्यम् ५ योद्धार ६ अग्रगण्य ७ भोक्तॄणाम् ८ बृहस्पतिः. ९ दक्षिणायाम अथ तु वैदिकाना सांकेतिकः शब्द. १० पठनम् ११ शिशु.. १२ स्तुतिः. १३ प्रश्नकथनम्. १४ वस्त्रान्ते १५ नक्षत्रसमूह' परिवारो यस्य. १६ वनस्पतीनाम् १७ निस्तेजाः. १८ सूर्यस. १९ परगृहम् २० नीचताम्.

न नाटकम् ॥ २ ॥ एकः स एव जीवति हृदयविहीनोऽपि सहृदयो राहुः । यः सकलल[1]घिमकारणमुदरं न[2] बिभर्ति दुः[3]पूरम् ॥ ३ ॥ कंधरां समपहाय क[4]धरां प्राप्य संयति[5] जहास कस्यचित् । मां किलानमयतः स्वपूर्तये दुर्भरात्किमुदराद्वियोगतः ॥ ४ ॥ अहितहितविचारशून्यबुद्धेः श्रुति[6]समयैर्बहुभिस्तिरस्कृतस्य । उदरभरणमात्रकेवलेच्छोः पुरुषपशोश्च पशोश्च को विशेषः ॥ ५ ॥ इयमुदरदरी दुरन्तपूरा यदि न भवेदभिमानभूमिरत्र । क्षणमपि न सहे भवादृशानां कुटिलकटाक्षनिरीक्षणं नृपाणाम् ॥ ६ ॥ अपहरति महत्त्वं प्रार्थना किं न जाने जनयति गुरुलज्जामित्यहं किं न वेद्मि । तदपि वद वदान्यं तं सदा प्रत्यहं मां जठरपिठरवर्ती वह्निरर्थीकरोति ॥ ७ ॥ गङ्गातरंगकणशीक[7]रशीतलानि विद्याधराध्युषितचारुशिलातलानि । स्थानानि किं हिमवतः प्रलयं गतानि यत्सावमानपरपिण्डरतो मनुष्यः ॥ ८ ॥ अभिमतमहामानग्रन्थिप्रभेदपटीयसी[8] गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका । विपुलविलसल्लज्जावल्लीवितानकुठारिका जठरपिठरी[9] दुष्पूरेयं करोति विडम्ब[10]नम् ॥ ९ ॥ ये वर्धन्ते धनपतिपुरःप्रार्थनादुःखभाजो ये चाल्पत्वं दधति विषया[11]क्षेपपर्यस्तबुद्धेः । तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं ध्यानच्छेदे शिख[12]रिकुहरग्रावशय्यानिषण्णः ॥ १० ॥ मातर्नातः परमनुचितं यत्खलानां पुरस्तादस्ताशङ्कं जठरपिठरी[13]पूरणे नर्तितासि । तत्क्षन्तव्य सहजसदये वत्सले वाणि कुर्या प्रायश्चित्तं गुणगणनया गोपवेषस्य[14] विष्णोः ॥ ११ ॥ दीना[15] दीनमुखैस्तथैव शिशुकैराकृष्टजीर्णाम्बरा क्रोशद्भिः[16] क्षुधितैर्निरन्नविधुरा दृश्येत चेद्गेहिनी[17] । याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी जनः ॥ १२ ॥ हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनाम् । संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ १३ ॥ किं कन्दाः कन्दरेभ्यः[18] प्रलयमुपगता निर्झरा वा गिरिभ्यः प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः । वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां[19] खलानां दुःखोपात्ताल्पवित्तस्मय[20]पवनवशान्नर्तितभ्रूलतानि ॥ १४ ॥

---

## सेवकनिन्दा ।

स्वाभिप्रायपरोक्षस्य परचित्तानुवर्तिनः । स्वयं विक्रीतदेहस्य सेवकस्य कुतः सुखम्

---

१ लघुत्वकारणम्. २ धारयति. ३ दुःखेन पूरयितुमशक्यम्. ४ मस्तकम्. ५ युद्धे. ६ सिद्धान्तैः. ७ अम्बुकणः. ८ समर्था. ९ जठरभाण्डम्. १० उपहासः. ११ विषयाक्षेपेण पर्यस्ता भ्रष्टा बुद्धिर्येषां. १२ शिखरी पर्वतस्तस्य कुहरं बिलं तत्संबन्धी यो ग्रावा पाषाणः स एव शय्या तस्यां निषण्णः उपविष्टः. १३ उदरभाण्डम्. १४ गोपवेषधारिणः कृष्णस्य. १५ कृपणा. १६ रोदनं कुर्वद्भिः. १७ भार्या. १८ दरीभ्यः. १९ अविनीतानाम्. २० गर्वः.

॥ १ ॥ चलेषु स्वामिचित्तेषु सुलभे पिशुने जने । यदि जीवन्त्यहो चित्रं क्षणमप्युपजीविनः ॥ २ ॥ सेवा श्ववृत्तिर्यैरुक्ता न तैः सम्यगुदाहृतम् । स्वच्छन्दचारी कुत्र श्वा विक्रीतासुः क्व सेवकः ॥ ३ ॥ सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् । स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ ४ ॥ वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम् । पुंसां विवेकहीनानां सेवया न धनार्जनम् ॥ ५ ॥ या प्रकृत्यैव चपला निपतत्यशुचावपि । स्वामिनो बहु मन्यन्ते दृष्टिं तामपि सेवकाः ॥ ६ ॥ मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितम् । प्रथमो यो न तत्रापि स किं जीवत्सु गण्यते ॥ ७ ॥ तावज्जन्मातिदुःखाय ततो दुर्गतता सदा । तत्रापि सेवया वृत्तिरहो दुःखपरंपरा ॥ ८ ॥ नाश्नाति सेवयौत्सुक्याद्विनिद्रो न प्रबुध्यते । न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति ॥ ९ ॥ भूशय्या ब्रह्मचर्यं च कृशत्वं लघु भोजनम् । सेवकस्य यतेर्यद्वद्विशेषः पापधर्मजः ॥ १० ॥ शीतातपादिकष्टानि सहते यानि सेवकः । धनाय तानि चाल्पानि यदि धर्मान्न मुच्यते ॥ ११ ॥ मृदुनातिसुवृत्तेन सुमृष्टेनातिहारिणा । मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया ॥ १२ ॥ स्वयं जहाति सेवकः सुखं च मानमेव च । यदर्थमर्थमीहते तदेव तस्य हीयते ॥ १३ ॥ प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् । दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥ १४ ॥ मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा धृष्टः पार्श्वे वसति च सदा दूरतस्त्वप्रगल्भः । क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १५ ॥ विज्ञैः स्निग्धैरुपकृतमपि द्वेष्यतामेति कश्चित्साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति । चित्रं चित्रं किमथ चरितं नैकभावाश्रयाणां सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १६ ॥ भक्तानामुपकारिणां परहितव्यापारयुक्तात्मनां सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानामपि । व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा तस्मादम्बुपतेरिवावनिपतेः सेवा सदाशङ्किनी ॥ १७ ॥ आहारे वडवानलश्च शयने यः कुम्भकर्णायते संदेशे बधिरः पलायनविधौ सिंहः शृगालो रणे । अन्धो वस्तुनिरीक्षणेऽथ गमने खञ्जः पटुः क्रन्दने भाग्येनैव हि लभ्यते पुनरसौ सर्वोत्तमः सेवकः ॥ १८ ॥

## जीवितसाफल्यम् ।

यस्य जीवन्ति धर्मेण पुत्रा मित्राणि बान्धवाः । सफलं जीवितं तस्य नात्मार्थे को हि जीवति ॥ १ ॥ यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा । अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥ २ ॥ वाणी रसवती यस्य भार्या पुत्रवती सती । लक्ष्मीर्दानवती

१ सूचके २ सेवका. ३ विक्रीता असव प्राणा येन स. ४ नाशितम् ५ भिक्षा ६ भारवाहकत्वेनोपजीवनम्. ७ इच्छति. ८ वहुभाषक.. ९ असमञ्जस. १० भयशील. ११ वार्ताहरणे. १२ पादविकल. १३ रोदने.

यस्य सफलं तस्य जीवितम् ॥ ३ ॥ स जीवति यशो यस्य कीर्तिर्यस्य स जीवति । अयशोऽकीर्तिसंयुक्तो जीवन्नपि मृतोपमः ॥ ४ ॥ चलं वित्तं चलं चित्तं चले जीवितयौवने । चलाचलमिदं सर्वं कीर्तिर्यस्य स जीवति ॥ ५ ॥ यस्मिञ्जीवति जीवन्ति बहवः स तु जीवति । काकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ॥ ६ ॥ स जातो येन जातेन याति वंशः समुन्नतिम् । [1]परिवर्तिनि संसारे मृतः को वा न जायते ॥ ७ ॥ [2]अञ्जलिरकारि लोकैर्ग्लानि[3]र्मनागपि[4]रञ्जिता जगती । संध्याया इव वसतिः स्वल्पापि सखे सुखायैव ॥ ८ ॥ यज्जीवति क्षणमपि [5]प्रथितं मनुष्यैर्विज्ञानविक्रमयशोभिरभज्यमानम् । तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ ९ ॥ यो नात्मजे न च गुरौ न च भृत्यवर्गे दीने दयां न कुरुते न च बन्धुवर्गे । किं तस्य जीवितफलं हि मनुष्यलोके काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ १० ॥ जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् । संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न वाधो ब्रह्माण्डोडुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥ ११ ॥

## ऋणम् ।

न विषं विषमित्याहुर्ब्रह्मस्वं[6] विषमुच्यते । विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रिकम् ॥ १ ॥ पापं कर्तुमृणं कर्तुं मन्यन्ते मानवाः सुखम् । परिणामोऽतिगहनो महतामपि नाशकृत् ॥ २ ॥ जातसूतिर्मृतासूतिर्दशरात्रान्निवर्तते । ब्रह्मस्वी च सदा सूतिर्हव्यं कव्यं विनश्यति ॥ ३ ॥ ब्रह्मस्वं ब्रह्महत्या चोभयतो नरकार्णवः । कल्पान्ते ब्रह्महा शुद्धिर्ब्रह्मस्वी नैव शुद्ध्यति ॥ ४ ॥ लोकद्वयप्रतिभयैकनि[7]दानमेतद्धिक्प्राणिनामृणमहो [8]परिणामघोरम् । एकः स एव हि पुमान्परमस्त्रिलोके क्रुद्धस्य येन धनिकस्य मुखं न दृष्टम् ॥ ५ ॥

## प्रवासः ।

यो न संचरते देशान्यो न सेवेत पण्डितान् । तस्य संकुचिता बुद्धिर्घृतबिन्दुरिवाम्भसि ॥ १ ॥ यस्तु संचरते देशान्यस्तु सेवेत पण्डितान् । तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि ॥ २ ॥ व्यापारान्तरमुत्सृज्य वीक्षमाणो वधूमुखम् । यो गृहेष्वेव निद्राति [9]दरिद्राति स दुर्मतिः ॥ ३ ॥ देशे देशे किमपि कुतुकाद[10]द्भुतं लो[11]कमानाः संपा-

१ भ्रमणशीले. २ अर्घदानार्थमिति भाव.; (पक्षे) अञ्जलिकरणेन लोके आज्ञाकारित्व ध्वन्यते. ३ निस्तेजस्कत्वम्, (पक्षे) असामर्थ्यम्. ४ आरक्तता नीता; (पक्षे) अनुरागवती कृता ५ प्रख्यातम्. ६ ऋणम्. ७ कारणम्. ८ परिणामे भयकरम्. ९ दरिद्रो भवति. १० आश्चर्यम्. ११ वीक्षमाणा..

चैव द्रविणमतुलं सद्म भूयोऽप्यवाप्य । संयुज्यन्ते सुचिरविरहोत्कण्ठिताभिः सतीभिः साख्यं धन्याः किमपि दधते सर्वसंपत्समृद्धाः ॥ ४ ॥ आकिंचन्यादतिपरिचयाज्जाययोपेक्ष्यमाणो भूपालानामननुसरणाद्विभ्यदेवाखिलेभ्यः । गेहे तिष्ठन्कुमतिरलसः कूपकूर्मैः सधर्मा किं जानीते भुवनचरितं किं सुखं चोपभुङ्क्ते ॥ ५ ॥ तीर्थानामवलोकनं परिचयः सर्वत्र वित्तार्जनं नानाश्चर्यनिरीक्षणं चतुरता बुद्धेः प्रशस्ता गिरः । एते सन्ति गुणाः प्रवासविषये दोषोऽस्ति चैको महान्यन्मुग्धामधुराधराधरसुधापानं विना स्थीयते ॥ ६ ॥

## व्यापारिणः ।

आसीत्सत्ययुगे बलिस्तदनु च त्रेतायुगे भार्गवो रामः सत्यपराक्रमोऽथ भगवान्धर्मस्तथा द्वापरे । दाता कोऽपि न चास्ति संप्रति कलौ जीवन्ति केनार्थिन इत्येवं कृतनिश्चयेन विधिना व्यापारिणो निर्मिताः ॥ १ ॥ शक्रोद्याननिवासितामधिगतो दाता स कल्पद्रुमः पातालं किल कामधेनुरपि सा कामप्रसूरन्वगात् । इत्थं विश्वसृजा विचिन्त्य यवनागाराधिकारार्थिनः सद्विद्यानिधिरक्षणार्थमधुना व्यापारिणो निर्मिताः ॥ २ ॥ कौपीनं धृतवान्हरोऽपि भगवान्विष्णुः प्रविष्टो जलं वारां राशिरपेयतामुपगतः को नाम दातुं क्षमः । इत्थं विश्वसृजा विचिन्त्य यवनागाराधिकारार्थिनः सद्विद्यानिधिजीवनार्थमधुना व्यापारिणो निर्मिताः ॥ ३ ॥

## कलिमहिमा ।

यवनैरवनिः क्रान्ता हिन्दवो विन्ध्यमाविशन् । बलिना वेदमार्गोऽयं कलिना कवलीकृतः ॥१॥ सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति । कुमार्यश्च प्रसूयन्ते प्राप्ते कलियुगे सदा ॥ २ ॥ परान्नेन मुखं दग्धं हस्तौ दग्धौ प्रतिग्रहात् । परस्त्रीभिर्मनो दग्धं कुतः शापः कलौ युगे ॥ ३ ॥ राक्षसाः कलिमाश्रित्य जायन्ते ब्रह्मयोनिषु । ब्राह्मणानेव बाधन्ते तत्रापि श्रोत्रियान्कृशान् ॥ ४ ॥ कुशलाः शब्दवार्तायां वृत्तिहीनास्तु रागिणः । कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ॥ ५ ॥ वागुच्चारोत्सवं मात्रं तत्क्रियां कर्तुमक्षमाः । कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ॥ ६ ॥ कृते च रेणुका कृत्या त्रेतायां जानकी तथा । द्वापरे द्रौपदी कृत्या कलौ कृत्या गृहे गृहे ॥ ७ ॥ मद्युगमध्योत्पन्नाः कृतयुगधर्मानुसारिणः किमिति । इति रोषादिव कलिना पीड्यन्ते साधवो जगति ॥ ८ ॥ नाधीतेऽत्र जनो यदि कश्चिदधीते शते सहस्रे वा । दुस्तर्केषु श्राम्यति दूरीकुरुते श्रुतिस्मृतिसुतर्कान् ॥ ९ ॥ सीदन्ति सन्तो विलसन्त्यसन्तः पुत्रा म्रियन्ते

१ द्रव्यम्. २ बहुलम्. ३ गृहम्. ४ पुन.. ५ दारिद्र्यात्. ६ अवमानित.. ७ सदृश. ८ षोडशवार्षिकी. ९ अवरोध. १० अध्ययनं न करोति.

जनकश्चिरायुः। परेषु मैत्री स्वजनेषु वैरं पश्यन्तु लोकाः कलिकौतुकानि ॥ १० ॥ एतादृशे कलियुगेऽपि शतेषु कश्चिज्जातादरो जगति यः श्रुतिमार्ग एव। यत्किंचिदाचरति पात्रमसौ स्तुतीनां श्लाघ्यं मितापमपि किं न मरौ सरश्चेत् ॥ ११ ॥ उपनयनविवाहावुत्सवैकप्रधानौ कलिविभवत एषां कालभेदानभिज्ञाः। विजहति न कदाचिद्वेदपाठैकयोग्ये वयसि च यवनानीवाचनाभ्यासमेते ॥ १२ ॥ न देवे देवत्वं कपटपटवस्तापसजना जनो मिथ्यावादी विरलतरवृष्टिर्जलधरः। प्रसङ्गो नीचानामवनिपतयो दुष्टमनसो जना भ्रष्टा नष्टा अहह कलिकालः प्रभवति ॥ १३ ॥ गता गीता नाशं क्वचिदपि पुराणं व्यपगतं विलीनाः स्मृत्यर्था निगमनिचयो दूरमगमत्। इदानीं रैदासप्रभृतिवचनैर्मोक्षपदवी तदेवं जानीमो कलियुग तवैवैष महिमा ॥१४॥ अपारैर्व्यापारैरहारिह नयन्तोऽशनदशास्तथ स्नाताः संध्यां विदधति न जातु स्वसमये। त्यजन्तः स्वां वृत्तिं द्विजकुलभवां ग्रामगणकीभवन्तो हन्तामी कथमपि च जीवन्ति बहवः ॥ १५ ॥ कुक्षेः पूर्त्यै यवनवितते्र्भृत्यकृत्यानि कर्तुं विक्रीणीते वपुरपि निजं वेतनैरेतदास्ताम्। विप्रो भूत्वाप्यहह गणनानैपुणैर्वञ्चयित्वा स्वर्णस्तेयं रचयति जनः स्वामिनां पोषकाणाम् ॥ १६ ॥ वेदव्यासः स नवदश यो वेद वेदाक्षराणि श्लोकं त्वेकं परिपठति यः स स्वयं जीव एव। आपस्तम्ब[1] स इह कलयेत्सम्यगौपासनं यः कष्टं शिष्टक्षितिकृति कलौ कार्श्यमृच्छन्ति विद्याः॥१७॥ ये कायस्थजनाश्च ये नृपसुता ये च द्विजाः शास्त्रिणस्ते यत्नादनुसृत्य निर्दयतया शुष्कांस्तरुष्काधिपान्। देवान्भूमिसुरांश्च पान्ति कृतिनस्ते चेन्मुधोदासते ब्राह्मण्याय जलाञ्जलिः किल भुवि प्राज्ञैः प्रदेयो भवेत् ॥ १८ ॥ आक्रान्तासु वसुंधरासु यवनैरासेतुहेमाचलं विद्राणे क्षितिभृद्गणे विकरुणे निद्राति नारायणे। निर्विघ्नप्रसरे कलावपि बलान्निष्कण्टकं वैदिकं पन्थानं किल तत्र तत्र परिपात्येको हि लोकोत्तरः ॥ १९ ॥ अज्ञानामविरामलौकिकवचोभाजाममीषां पुनर्मन्त्रोच्चारण एव पर्यवसितं मौनव्रतं कर्मसु। ग्रामाय व्ययलेखनेन नयतां कालानशेषानहो पारंपर्यत ईदृशामिह नृणां ब्राह्मण्यमन्यादृशम् ॥ २० ॥ ये मुष्णन्ति निशि प्रविश्य भवनं ये वा बलात्काननं नैते स्वामिधनं हरन्ति ननु तान्निन्दन्ति चोरा इति। सद्यो हन्त हरन्ति पोषकधन संख्यां विपर्यस्य ये कष्टं तानपि वञ्चकानिह पुरस्कुर्वन्ति सर्वे जनाः ॥ २१ ॥ सौहार्दं शशशृङ्गवत्सुजनता वन्ध्या सुतस्पर्धिनी किं ब्रूमो गुणिनां गुणग्रहिलता व्योमप्रसूनोपमा। दृष्टिः शीलसुधाहलाहलमयी राज्ञां सुधामण्डले लोके संप्रति यत्कले स जयति त्वद्दृष्टिलीलारसः ॥ २२ ॥ निर्वीर्या पृथिवी निरोषधिरसा नीचा महत्त्वं गता भूपाला निजकर्मधर्मरहिता विप्राः कुमार्गे रताः। भार्या

१ स्वल्पजलम्. २ मरुदेशे. ३ राजान.. ४ बृहस्पति.. ५ स्मार्ताग्निम्. ६ प्राप्नुवन्ति. ७ उदासीना भवेयु ८ नष्टे.

भर्तृविरोधिनी पररता पुत्राः पितुर्द्वेषिणो हा कष्टं खलु वर्तते कलियुगे धन्या नराः सज्जनाः ॥ २३ ॥ दूरादर्थिनमाकलय्य भजते सद्यो विरूपाक्षतां सङ्गे किं च विरोचनत्वमथ संस्थाने नृसिंहाकृतिम् । पाण्डित्योक्तिषु वक्रतुण्डरचनां दाने त्वपर्णात्मतामेकः पञ्चसुरात्मकः प्रभुरहो भाग्यैः कलौ लभ्यते ॥ २४ ॥ धर्मः प्रव्राजितस्तपः प्रचलितं सत्यं च दूरे गतं पृथ्वी मन्दफला नराः कपटिनश्चित्तं च शाठ्यार्जितम् । राजानोऽर्थपरा न रक्षणपराः पुत्राः पितुर्द्वेषिणः साधुः सीदति दुर्जनः प्रभवति प्राप्ते कलौ दुर्युगे ॥२५॥ सन्तः क्वापि न सन्ति सन्ति यदि वा दुःखेन जीवन्ति ते विद्वांसोऽपि न सन्ति सन्ति यदि वा मात्सर्ययुक्ताश्च ते । राजानोऽपि न सन्ति सन्ति यदि वा तृष्णाधनग्राहिणो दातारोऽपि न सन्ति सन्ति यदि वा सेवानुकूलाः कलौ ॥ २६ ॥ हर्म्यस्थानमधर्मकर्मविततेर्दुर्मानभर्मासनं शास्त्रस्तोमललाटभूलिपिलयः शान्तिः सवानामपि । सर्वाम्नायवचःसमापनदिनं संस्था सदर्चाविधेरर्थाशाजनिभूरभूदिह महानर्थावहोऽयं कलिः ॥ २७ ॥ प्रातर्हन्त कृताछिवोऽपि रजकस्पृष्टाङ्गको रासभैरूढान्धारयते पटाननुदिनं धृत्वा बहिर्गच्छति । गत्वा म्लेच्छमुखाशुचीन्स्पृशति च स्पृष्ट्वापि न स्नात्यहो न स्नातोऽप्यथ भुङ्क्त एव चपलो भुङ्क्त्वापि न व्रीडति ॥ २८ ॥ शस्त्रैर्जीवति शास्त्रमुज्झति पर शूद्राहृतैरम्बुभिः स्नात्वाचामति देवताः स्नपयति स्वैरं पचत्योदनम् । उच्छिष्टान्न बिभेति याति यवनैरुच्चावचैः सगति मातङ्गान्निकटं गतानगणयन्मार्गान्मुहुर्गाहते ॥ २९ ॥ नीचैर्दुर्यवनैः शुनीभिरपि वा निःशङ्कमालोकित भुङ्क्ते पङ्क्तिविदूषकैः सह नरैरज्ञातवेदाक्षरैः । मद्यास्वादनमत्तचित्तजनतामोहाय भीहानितः कर्माण्यारभते श्रुतिस्मृतिवचो दूराण्यसाराण्यहो ॥ ३० ॥ विद्वत्ता वसुधातले विगलिता पाण्डित्यधर्मो गतः श्रोतॄणां हृदयेष्ववुद्धिरधिका ज्ञानं गतं चारणे । गाथागीतविनोदवाक्यरचनायुक्त्या जगद्रञ्जित ज्योतिर्वैद्यकशास्त्रसारमखिलं क्षुद्रेषु जातं कलौ ॥३१॥ धिक्त्वां रे कलिकाल याहि विलयं केयं विपर्यस्तता हा कष्टं श्रुतिशालिनां व्यवहृतिर्म्लेच्छोचिता दृश्यते । एकैर्वाङ्मयदेवता भगवती विक्रेतुमानीयते निःशङ्कैरपरैः परीक्षणविधौ सर्वाङ्ग उत्पद्यते ॥ ३२ ॥ कालः संप्रति वर्तते कलियुगे सत्या नरा दुर्लभा देशाश्च प्रलय गता करभरैर्लोभं गताः पार्थिवाः । नानाचौरगणा मृषन्ति पृथिवीमार्यो जनः क्षीयते पुत्रश्चापि न विश्वसेत्स्वपितरं कष्टं जगद्वर्तते ॥ ३३ ॥ कन्यां कामप्युदूह्य

---

१ निकृतनेत्रत्वम्, (पक्षे) शिवताम् २ रुचिराहित्यम्, (पक्षे) बलिपितृत्वम् ३ नृसिंहस्य इव क्रूरामाकृतिम्; (पक्षे) नृसिंहस्याकृतिम् ४ वक्रा या तुण्डस्य रचना ताम् मुखवक्रत्वमित्यर्थ, (पक्षे) वक्रतुण्डस्य गणपतेरिव या रचना ताम् गणेशरूपत्वमित्यर्थ. ५ न विद्यन्ते पर्णान्यपि यस्य ताम् अकिंचनत्वमित्यर्थ, (पक्षे) अपर्णा पार्वती तद्रूपताम् ६ यज्ञानाम् ७ वेदवचसाम् ८ स्नानम् ९ गर्दभैः १० न लज्जते ११ अन्नम्. १२ उच्चनीचैरनेकभेदभिन्नैः. १३ चाण्डाल. १४ प्रविशति. १५ दुष्टयवनैः. १६ पङ्क्तिबाह्यैः. १७ निष्फलानि. १८ नटार्दा. १९ नीचेषु.

प्रविजहद्दुर्दयद्यौवनामङ्ग एनां द्रव्याशापाशकृष्टो भ्रमति चिरतरं हन्त देशान्तरेषु । अन्योन्याश्लेषवाञ्छाविगलितवयसोरात्तमालिन्यमत्योर्दंपत्योर्व्याकृतं वै हतविधिरुभयोर्लोकयोः शोकयोगम् ॥ ३४ ॥

---

## मद्यपानगर्हणम् ।

वैक्लव्यं[2] धरणीपातम्[3] अयथोचितजल्पनम् । संनिपातस्य[4] चिह्नानि[5] मद्यं सर्वाणि दर्शयेत् ॥१॥ एकतश्चतुरो वेदा ब्रह्मचर्यं तथैकतः । एकतः सर्वपापाणि मद्यपानं तथैकतः ॥ २ ॥ मद्यपस्य कुतः सत्यं दया मांसाशिनः कुतः । कामिनश्च कुतो विद्या निर्धनस्य कुतः सुखम् ॥ ३ ॥ अयुक्तं बहु भाषन्ते यत्र कुत्रापि शेरते । नग्नो विक्षिप्य गात्राणि स जाल्म इव मद्यपः ॥ ४ ॥ मत्तो हिर्नास्ति सर्वं मिथ्या प्रलपति हि विकलया बुद्ध्या । मातरमपि कामयते[7] सावज्ञं मद्यपानमत्तः सन् ॥ ५ ॥ चित्ते भ्रान्तिर्जायते मद्यपानाद्भ्रान्ते चित्ते पापचर्याम्[8] उपैति । पापं कृत्वा दुर्गतिं[9] यान्ति मूढास्तस्मान्मद्यं नैव पेयं न पेयम् ॥ ६ ॥

---

## तमाखुः ।

तमाखुपत्रं[10] राजेन्द्र भज माज्ञानदायकम्[11] । तमाखुपत्रं[12] राजेन्द्र भज माज्ञानदायकम् ॥ १ ॥ दारिद्र्यशीलोऽपि नरस्तमाखुं नैव मुञ्चति । निवारितोऽपि मार्जारस्तमाखुं नैव मुञ्चति ॥ २ ॥ बिडौजाः[13] पुरा पृष्टवान्पद्मयोनिं[14] धरित्रीतले सारभूतं किमस्ति । चतुर्भिर्मुखैरित्यवोचद्विरिञ्चिस्तमाखुस्तमाखुस्तमाखुस्तमाखुः ॥ ३ ॥ न स्वादु नौषधमिदं न च वा सुगन्धि नाक्षिप्रियं किमपि शुष्कतमाखुचूर्णम् । किं चाक्षिरोगजनकं च तदस्य भोगे बीजं नृणां नहि नहि व्यसनं विनान्यत् ॥ ४ ॥ सुपर्णपरिसेवितस्[15] तदनु साधुपूगान्वितो[16] द्विजावन[17]महापटुस्तदनु सारसंधानभाक्[18] । सदैव सुधयाशनं[19] भवति यस्य विष्णोः समस्तमाखुरिति सेव्यतां भवति वै यतो रागिता[20] ॥ ५ ॥ श्रीकृष्णः पूतनायाः स्तनमलमपिबत्कालकूटेन पूर्णं प्रस्कन्नं भूप्रदेशे किमपि च पिबतो यत्तदा तस्य वक्त्रात् । तस्मादेषा तमाखुः

---

१ सजातयौवनाम्. २ विकलत्वम्. ३ अयुक्तप्रलापः. ४ त्रिदोषस्य. ५ लक्षणानि. ६ नाशयति. ७ इच्छति. ८ पापाचरणम्. ९ नरकम् १० आखुर्मूषिकः पत्र वाहनं यस्य. ११ मा लक्ष्मीः. १२ अज्ञानदायकं तमाखुपत्रं मा भजेति. १३ इन्द्रः. १४ ब्रह्मदेवम् १५ सुपर्णेन गरुडेन सेवित ; (पक्षे) सुष्ठुपर्णेन नागवल्लीदलेन सह परिसेवित. १६ साधूना पूगैः सर्वैरन्वितः; (पक्षे) साधु. सम्यक्पूगः क्रमुकस्तेनान्वित . १७ द्विजा द्विजन्मानो ब्राह्मणादयस्तेषामवन[illegible] तस्मिन्महासमर्थः; (पक्षे) द्विजा दन्ताः. १८ सारं श्रेष्ठवस्तु मोक्षादि तस्य संधिं भजति; (पक्षे) सारः [illegible]रसारस्तेन सवान सम्यङ्मेलन भजति. १९ सुधयामृतेन यस्य भोजनं भवति, (पक्षे) सुधया चूर्णेन यस्य भक्षण भवति. २० यतो विष्णोररागिता विषयेष्वप्रीतिर्जायते, (पक्षे) यतस्तमाखोस्तमाखुपत्राद्रागिता [illegible]क्तिमा जायते.

सुरवरपरमोच्छिष्टमेतद्दुरापं स्तुत्वा नत्वा मिलित्वा ह्यनिशमतिमुदा सेव्यते वैष्णवाग्र्यैः ॥ ६ ॥ भ्रातः कस्त्वं तमाखुर्गमनमिह कुतो वारिधेः पूर्वपारात्कस्य त्वं दण्डधारी नहि तव विदितं श्रीकलेरेव राज्ञः । चातुर्वर्ण्यं विधात्रा विविधविरचितं ब्रह्मणा धर्महेतोरेकीकर्तुं बलात्तन्निखिलजगति रे शासनादागतोऽस्मि ॥ ७ ॥

इति श्रीसुभाषितरत्नभाण्डागारे द्वितीयं प्रकरणं समाप्तम् ।



# प्रकरणम् ३ ।

## राजप्रकरणम् ।

### राजसभावर्णनम् ।

सभाकल्पतरुं वन्दे वेदशाखोपशोभितम् । शास्त्रपुष्पसमाकीर्णं विद्वद्भ्रमरमण्डितम् ॥१॥ विद्वांसः कवयो भट्टगायकाः परिहासकाः । इतिहासपुराणज्ञाः सभा सप्ताङ्गसंयुता ॥ २ ॥ धनदैर्धर्मवार्तैश्च कविभिर्गुरुभिर्वृता । सभा ते भाति भूमीन्द्र सुधर्मातोऽधिका क्षितौ ॥ ३ ॥ सुवर्णवर्णललिता पदविन्यासशालिनी । वाणीव भाति ललिता सभा ते जगतीपते ॥ ४ ॥ विबुधावलिसंपूर्णा सुखपूर्णदिगीश्वरा । चतुराननसंपूर्णा स्वर्गादपि सभाधिका ॥ ५ ॥ गुरु[1]रेकः कवि[2]रेकः सदसि मघोनः[3] कलाधरो[4]ऽप्येकः । अद्भुतमत्र सभायां गुरवः कवयः कलाधराः सर्वे ॥ ६ ॥ अनेकविद्वज्जनरत्नपूर्णं वेदोदकन्यायतरंगरम्यम् । अलङ्घनीयं गुरुतीर्थमेकं सभासमुद्रं शिरसा नमामि ॥ ७ ॥ सारस्वते स्रोतसि दूरमग्नैः सुधीवरैरुद्धृतसूक्तिरत्ने । न तत्किमप्युर्वरितं यदेषामुपायनीकृत्य पुरो भवेयम् ॥ ८ ॥ सद्वेदिमध्योत्तमहेमकुम्भस्तना सुवर्णाधिकृता प्रसन्ना । सद्रत्नभूषाविमला त्वयासौ कान्तेव संसन्नृप भाति रम्या ॥ ९ ॥ पद्मानना पद्मपलाशनेत्रा पद्मच्छविः पद्मकरामलांशुका । पद्मीशनाथैः परिशीलनीया लक्ष्मीरिवाभाति नरेश ते सभा ॥ १० ॥ साग्रयोऽपि किल शीतलशीला विश्रुता अपि बहु श्रुतवन्तः । पण्डिता अपि जडाः परवादे श्रोत्रिया इह सदा निवसन्ति ॥ ११ ॥ क्वचिच्चारुचामीकरारम्भरम्भा क्वचिद्रत्नविद्योतितध्वान्तदक्षा । क्वचिद्धीरकश्रेणिकैलासहासा क्वचित्क्षीरवीरप्रवीरप्रकाशा ॥ १२ ॥ नाहूतापि पुरः पदं रचयति प्राप्तोपकण्ठं हठात्पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालम्बते । वैवर्ण्यं स्वरभङ्गमश्चति बलान्मन्दाक्षमन्दानना कष्टं भोः प्रतिभावतोऽप्यभिसभं वाणी नवोढायते ॥ १३ ॥ चिन्तासक्तनिमग्नमन्त्रिसलिलं दूतोर्मिशङ्काकुलं पर्यन्तस्थितचौरनक्रमकरं नागाश्वहिंस्राश्रयम् । नानावाशकङ्कपक्षिरुचिरं कायस्थसर्पास्पदं नीतिक्षुण्णतटं च राजकरणं[7] हिंस्रैः समुद्रायते ॥ १४ ॥

---

१ बृहस्पति.. २ शुक्रः. ३ इन्द्रस्य. ४ चन्द्रः. ५ गुप्तचराः. ६ शब्दं कुर्वाणाः. पिशुना इत्यर्थः. ७ राज्ञोऽधिकरणम्.

## राजमिलनम्।

क्षुत्क्षामार्भकसंभ्रमोक्तिनिगडैः किर्मीरिता नर्मतो भार्याक्रन्दितकुन्तकालितहृदो गर्वातुरत्वं गतः। प्रभ्रष्टा पदतः कदापि नहि ये तेऽद्य त्वदीयैर्गुणैराकृष्टा विदुषां वरा वयमहो त्वां द्रष्टुमभ्यागताः॥ १॥

---

## सामान्यराजप्रशंसा।

राजंस्त्वद्दर्शनेनैव गलन्ति त्रीणि तत्क्षणात्। रिपोः[1] शस्त्रं कवेर्दैन्यं नीवीबन्धो[2] मृगीदृशाम्॥ १॥ चिराद्यत्कौतुकाविष्टं कल्पवृक्षमुदीक्षितुम्। तन्मे सफलमद्यासीन्नेत्रं त्वय्यवलोकिते॥ २॥ सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे जनैः। नारयो लेभिरे पृष्ठं न वक्षः[3] परयोषितः॥ ३॥ त्वया वीर गुणाकृष्टा[4] ऋजुदृष्ट्या विलोकिताः। लक्ष्यं[5] लब्ध्वैव गच्छन्ति मार्गणा[6] इव मार्गणाः[7]॥ ४॥ कल्पद्रुमो न जानाति न ददाति बृहस्पतिः। अयं तु जगतीजानिर्[8]जानाति च ददाति च॥ ५॥ रविः करसहस्रेण[9] दशाशापरिपूर न[10]। त्वमेकेन करेणैव सहस्राशाप्रपूरकः॥ ६॥ बलिः पातालनिलयोऽधः कृतश्चित्रमत्र किम्। अधःकृतो दिविस्थोऽपि चित्रं कल्पद्रुमस्त्वया॥ ७॥ आर्तानामिह जन्तूनामार्तिच्छेदं करोति यः। शङ्खचक्रगदाहीनो द्विभुजः परमेश्वरः॥ ८॥ बहुधा राज्यलाभेन यस्तोषस्तव भूपते। बहुधाराज्य[11]लाभेन स तोषो मम भूपते॥ ९॥ भुजंग[12]भोगसं[13]क्रान्ता कलत्रं[14] तव मेदिनी। अहंकारः परां कोटिमारोहति कुतस्तव॥१०॥ तुलामारुह्य[15] रविणा वृश्चिके[16] निहितं पदम्। भवता शिरसि न्यस्तमयत्नेनैव भोगिनाम्[17]॥ ११॥ किं कृतेन[18] न यत्र त्वं यत्र त्वं किमसौ कलिः। कलौ चेद्भवतो जन्म कलिरस्तु कृतेन किम्॥ १२॥ असिधारापथे नाथ शत्रुशोणितपिच्छले। आजगाम कथं लक्ष्मीर्निर्जगाम कथं यशः॥१३॥ कोऽप्यन्यः कल्पवृक्षोऽयमेकोऽस्ति क्षितिमण्डले। यत्पाणिपल्लवोऽप्येकः कुरुतेऽधः सुरद्रुमम्॥ १४॥ अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः। मार्गणौघः[19] समायाति गुणो[20] याति दिगन्तरम्॥ १५॥ युधि स्थिरोऽसि भीमोऽसि चरितैरर्जुनो भवान्। प्रज्ञया सह देवोऽसि वाच्यता न कुलस्य ते॥ १६॥ बलिकर्णदधीचाद्याः पुरा पञ्चत्वमागताः। पञ्चत्वं न गताश्चित्रं त्वयि जीवति पञ्चमे॥ १७॥ एक एव महान्दोषो भवतां विमले

---

१ वैरिणः. २ पलायनाभावादित्यर्थः. ३ उरःस्थलम् ४ ज्या; (पक्षे) विनयादिः ५ शरव्यम्; (पक्षे) लक्ष्यद्रव्यम्. ६ पान्था.. ७ बाणा.. ८ पृथिवीपति. ९ किरणानि १० दिशः. ११ बहुधारा गलन्ति यस्य तदाज्य घृतम्. १२ शेष., (पक्षे) जार.. १३ फणा, (पक्षे) उपभोगः. १४ भार्या. १५ तुलाराशिम्. १६ वृश्चिकराश्याम् १७ सर्पाणाम्, (पक्षे) कामिनाम् १८ कृतयुगेन. १९ याचका, (पक्षे) बाणाः. २० विनयादिः, (पक्षे) ज्या.

कुले । लुम्पन्ति पूर्वजां कीर्तिं जाता जाता गुणाधिकाः[1] ॥ १८ ॥ भग्नासु रिपुसेनासु नरेन्द्र त्वं महामहाः । खड्गान्तर्निजमेवैकमद्राक्षीः संमुखं मुखम् ॥ १९ ॥ किं वर्ण्यतां कुचद्वन्द्वमस्याः कमलचक्षुषः । आसमुद्रकरग्राही भवान्यत्र करप्रदः ॥ २० ॥ वेधा वेदेन[2] याश्लिष्टो गोविन्दोऽपि गदान्वितः[3] । शंभुः शूली[4] विषादी[5] च देव केनोपमीयसे ॥ २१ ॥ तृष्णापहारी[6] विमलो द्विजावासो[7] जनप्रियः । ह्रदः पद्माकरः[8] किं तु बुधस्त्वं[9] स जलाश्रयः[10] ॥ २२ ॥ सदाहंसालसं बिभ्रन्मानसं प्रचलज्जलम् । भूभृन्नाथोऽपि नायाति यस्य साम्यं हिमालयः ॥ २३ ॥ मीमांसको महीपोऽयमन्यथा शक्तिमान्कथम् । नैयायिकोऽपि स्यादेव परशक्तेस्तु खण्डनात् ॥ २४ ॥ राजन्दौवारिकादेव प्राप्तवानस्मि वारणम्[11] । मदवारणमिच्छामि[12] त्वत्तोऽहं जगतीपते ॥ २५ ॥ राजन्कनकधाराभिस्त्वयि सर्वत्र वर्षति । अभाग्यछत्रसंच्छन्ने मयि नायान्ति बिन्दवः ॥ २६ ॥ सर्वज्ञ इति लोकोऽयं भवन्तं भाषते मृषा । परमेकं न जानासि वक्तुं नास्तीति याचके ॥ २७ ॥ आश्वासस्नेहभक्तीनामेकमालम्बनं महत् । प्रकृष्टस्येव धर्मस्य प्रसादो मूर्तिसंचयः ॥ २८ ॥ सत्यभामासमाश्लिष्टः[13] साधुवृन्दावने[14] रतः । यशोदयासमायुक्तस्त्वां[15] पायात्त्वादृशो हरिः ॥ २९ ॥ भवान्हि भगवानेव गतो[16] भेदः परस्परम् । महत्यागदयायुक्तः[17] सत्यभामासमाश्रितः[18] ॥ ३० ॥ एकमेव गुणं प्राप्य नम्रतामगमद्धनुः । तवाशेषगुणा राज्ञः स्तब्धतेति सुविस्मयः ॥ ३१ ॥ भूषणाद्युपभोगेन प्रभुर्न भवति प्रभुः । परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥ ३२ ॥ कस्ते शौर्यमदो योद्धुं त्वय्येकं सप्तिमास्थिते[19] । सप्तसप्तिसमारूढा[20] भवन्ति परिपन्थिनः[21] ॥ ३३ ॥ हुतमिष्टं च तप्तं च धर्मश्चार्यं कुलस्य ते । गृहात्प्रतिनिवर्तन्ते पूर्णकामा यदर्थिनः ॥ ३४ ॥ फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः[22] । द्रष्टुमाखण्डलः शक्तः क्वाहमेष क्व ते गुणाः ॥ ३५ ॥ अमितः समितः[23] प्राप्तैरुत्कर्षैर्हर्षद प्रभो । अहितः सहितः साधुयशोभिरसतामसि ॥ ३६ ॥ स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति । प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ ३७ ॥ पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम् । देव त्रिपथगात्मानं गो-

---

१ अत्र वंशे पूर्वापेक्षयोत्तरोत्तरः पुरुषो न कोऽपि न्यूनगुणोऽभूत्किंतु विशिष्टगुण एवाभवदिति भावः. २ वेदनया दुःखेनाश्लिष्ट ; (पक्षे) वेदेन नयेन चाश्लिष्ट . ३ गदेन रुजान्वितः; (पक्षे) गदया सहितः. ४ शूलेन युक्त ; (पक्षे) त्रिशूलेन युक्त . ५ दुःखी, (पक्षे) विषमत्तीति सः. ६ तृषा; (पक्षे) आशा. ७ पक्षिणः; (पक्षे) ब्राह्मणा ८ कमलम्, (पक्षे) लक्ष्मीः. ९ बुधग्रहः; (पक्षे) विबुधः. १० उदकाश्रयः; (पक्षे डलयोः सावर्ण्यात् ) जडाश्रयो मूर्खाश्रयः. ११ गजम्; (पक्षे) निवारणम् १२ मदेन युक्त वारणम्, (पक्षे) मत्-अवारणम्. १३ सत्यभामयालिङ्गित ; (पक्षे) सत्य भा कान्तिर्मा लक्ष्मीरेतैर्युक्त . १४ साधु यद्वृन्दावन तस्मिन्रतः (पक्षे) साधूना वृन्द समूहस्तस्यावन रक्षण तस्मिन्नासक्तः १५ यशोदया नन्दपत्न्या युक्तः; (पक्षे) यश कीर्तिर्दया कारुण्य ताभ्या युक्तः. १६ गकारेण, (पक्षे) नष्ट १७ महती या गदा तया युक्त; (पक्षे) मह उत्सवस्त्यागो दान दया करुणा एतैर्युक्त १८ सत्यभामया समन्वित ; (पक्षे) सत्य सूनृत भा कान्तिर्मा लक्ष्मीराभि. सम्यग्युक्त १९ अश्वम् २० सूर्यमण्डलभेदिन इत्यर्थः २१ शत्रवः. २२ चित्रगुप्त.. २३ युद्धात्

पयत्युग्रमूर्धनि ॥ ३८ ॥ यद्दोर्थं कूर्मराजस्य यश्च शेषस्य विक्रमः । पृथिव्या रक्षणे राजन्नेकत्र त्वयि तत्स्थितम् ॥ ३९ ॥ त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् । न धत्ते [1]शिरसा गङ्गां भूरिभारभिया हरः ॥ ४० ॥ त्वयि संगरसंप्राप्ते धनुषासादिताः शराः । शरैरारिशिरस्तेन भूस्तया त्वं त्वया यशः ॥ ४१ ॥ ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः । निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः ॥ ४२ ॥ मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः । श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥ ४३ ॥ यस्य चेतसि निर्व्याजद्वन्द्वं तृणगणायते । क्रोधे विरोधिनां सैन्यं प्रसादे कनकाचलः ॥ ४४ ॥ देव त्वद्दानपाथोधौ दारिद्र्यस्य निमज्जतः । न कोऽपि हि करालम्बं दत्ते मत्तेभदायकः ॥ ४५ ॥ राजचन्द्रं समालोक्य त्वां तु भूतलमागतम् । रत्नश्रेणिमिषान्मन्ये नक्षत्राण्यभ्युपागमन् ॥ ४६ ॥ धारयित्वा त्वयात्मानं महात्यागधनाधुना । मोचिता बलिकर्णाद्याः स्वयशोगुप्तकर्मणः ॥ ४७ ॥ क्षणमप्यनुगृह्णाति यं दृष्टिस्तेऽनुरागिणी । ईर्ष्ययेव त्यजत्याशु तं नरेन्द्र दरिद्रता ॥ ४८ ॥ योऽसकृत्[2]परगोत्राणां [3]पक्षच्छेदक्षणक्षमः । [4]शतकोटिदतां बिभ्रद्[5]विबुधेन्द्रः स राजते ॥ ४९ ॥ अदृष्टे दर्शनोत्कण्ठा दृष्टे विश्लेषभीरुता । नादृष्टे न च दृष्टे च भवता विदधे सुखम् ॥ ५० ॥ ताम्बूलेन विना राजञ्जडीभूता सरस्वती । न निःसरेन्मुखाद्वाणी गृहात्कुलवधूरिव ॥ ५१ ॥ अर्थिप्रत्यर्थिलक्षैरप्यपराङ्मुखचेतसम् । त्वां पराङ्मुखतां निन्युः केवलं परयोषितः ॥ ५२ ॥ तव निर्वर्णयद्वर्णं स्वर्णं वर्णय तादृशे । त्वत्कोशगृहान्निर्गत्य तीर्थेषु वसति ध्रुवम् ॥ ५३ ॥ न समासः समर्थस्य वसुव्याकरणस्य ते । विग्रहो नैव केनापि न परः सर्वनामभाक् ॥ ५४ ॥ अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत् । तदवस्था पुनर्देव नान्यस्य मुखमीक्षते ॥ ५५ ॥ धैर्यलावण्यगाम्भीर्यप्रमुखैस्त्वमुदन्वतः । गुणैस्तुल्योऽसि भेदस्तु वपुषैवेदृशेन ते ॥ ५६ ॥ अलौकिकमहालोकप्रकाशितजगत्त्रयः । स्तूयते देव सद्वंशमुक्तारत्न न कैर्भवान् ॥ ५७ ॥ शासति त्वयि हे राजन्नखण्डावनिमण्डलम् । न मनागपि निश्चिन्ते मण्डले शत्रुमित्रयोः ॥ ५८ ॥ मत्वा लोकमदातारं संतोषे यैः कृता मतिः । त्वयि राजनि ते राजन्न तथा व्यवसायिनः ॥ ५९ ॥ पद्मोदयदिनाधीशः सदागतिसमीरणः । भूभृदावलिदम्भोलिरेव एव भवान्भुवि ॥ ६० ॥ [6]सन्नारीभरणोमायमाराध्य विधुशेखरम् । [7]सन्नारीभरणोऽमायस्ततस्त्वं पृथिवी जय ॥६१॥ देव त्वमेव [8]पातालमा[9]शाना त्व निबन्धनम् । त्वं [10]चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥६२॥

१ शिवमस्तके. २ शत्रुकुलानाम्, (पक्षे) प्रकृष्टपर्वतानाम् ३ सहाय , (पक्षे) पतत्र . ४ शतस्य कोटेश्च दातृताम्; (पक्षे) वज्रेण खण्डकृताम् ५ पण्डिता ; (पक्षे) देवा· ६ सतीर्नारीर्बिभर्ति पालयतीति सन्नारीभरणा तादृशीमुमा याति पत्नीत्वेन प्राप्नोति यस्तम् ७ सन्ना अवसन्ना अरीणामिभा हस्तिनो यस्मात्तादृशो रणो यस्य तादृशोऽमायोऽकपटः ८ अलमत्यर्थं पाता पालक.; (पक्षे) पाताललोक ९ आशानामर्थिप्रत्यर्थिना निबन्धन मूलम्; (पक्षे) आशाना दिशा निबन्धनं ज्ञापक भूलोक इत्यर्थ. १० चामरमरुता चामरीयवायूना भूमिराश्रय . चामरवीज्यमानत्वात्; (पक्षे) अमराणा मरुद्गणाना च भूमिराश्रय.. स्वर्गलोक इत्यर्थ..

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविण: । अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः ॥ ६३ ॥ अखण्डमण्डल[1]: श्रीमान्पश्यैष पृथिवीपतिः । न निशाकरवज्जातु कला[2]वैकल्यमागतः ॥ ६४ ॥ अरातिविक्रमालोकविकस्वरविलोचनः । कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥ ६५ ॥ कानने सरिदुद्देशे गिरीणामपि कन्दरे । पश्यन्त्यन्तकसंकाशं त्वामेकं रिपवः पुरः ॥ ६६ ॥ उद्दण्डे भुजदण्डे तव कोदण्डे परिस्फुरति । अरिमण्डलरविमण्डलरम्भाकुचमण्डलानि वेपन्ते ॥ ६७ ॥ भवतामहमिव बहवो मम तु भवानिव भवानेव । कुमुदिन्यः कति न विधोर्विधुरिव विधुरेव कुमुदिन्याः ॥ ६८ ॥ लब्धार्धचन्द्र ईशः कृतकंसभयं च पौरुष विष्णोः । ब्रह्मापि नाभिजातः केनोपमिमीमहे नृप भवन्तम् ॥ ६९ ॥ स[3]रलप्रियंगुणाढ्यं ल[4]म्बितमालं विचि[5]त्रतिलकं च । वनमिव वपुस्तवैतत्कथमवनं नृप जनस्यास्य ॥ ७० ॥ बाणकरवीरदमनकशतपत्रकबन्धुजीवकुसुमानि । नृप विविधविटपिरूपस्तथापि विट[6]पः कथं नासि ॥ ७१ ॥ स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः । चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥ ७२ ॥ कल्पतरुकामदोग्ध्रीचिन्तामणिध[7]नदश[8]ङ्खानाम् । रचितो र[9]जोभरपयस्तेजःश्व[10]भ्रासान्तराम्बरैरेष[11]ः ॥ ७३ ॥ तिग्मरुचिरप्रतापो विधु[12]रनिशाकृद्विभो मधुरलीलः । [13]मतिमानतत्त्ववृत्तिः [14]प्रतिपदपक्षाग्रणीर्विभ्राति भवान् ॥ ७४ ॥ [15]शनिरश[16]निश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् । यत्र प्रसीदसि पुनः स भात्यु[17]दारोऽनु[18]दारश्च ॥ ७५ ॥ क्षणदासाव[19]क्षणदा वनम[20]वनं व्य[21]सनम[22]व्यसनम् । बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥ ७६ ॥ प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् । दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥ ७७ ॥ गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः । विश्वंभराप्यतिलघुर्नरनाथ तवान्तिके नियतम् ॥ ७८ ॥ समदमतंगजमदजलनिस्यन्दतरंगिणीपरिष्वङ्गात् । क्षितितिलक त्वयि तटजुषि शंकरचूडापगापि कालिन्दी ॥ ७९ ॥ विदलितसकलारिकुलं तव बलमिदमभवदाशु विमल च । प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥ ८० ॥ पञ्च-

---

१ मण्डलं राज्य विम्ब च. २ कलावैदग्ध्य चन्द्रषोडशांशश्च. ३ सरला वृक्षविशेषा प्रियंगवश्चैतेषा समाहारस्तेनाढ्य पूर्णम्, (पक्षे) सरल च तत्प्रिय हृद्य च गुणैर्गौरवर्णत्वादिभिर्युक्तम्. ४ लम्बिनस्तमाला यस्मिंस्तत्; (पक्षे) लम्बिता माला माल्य यस्य ५ विचित्रा नानाविधास्तिलका वृक्षविशेषा यस्मिंस्तत्, (पक्षे) विचित्रो विचित्रवर्णस्तिलक कस्तूरीकुङ्कुमादिकृतो यस्मिंस्तत्. ६ विटान्पालयतीति स.. ७ कुबेरः. ८ निधिविशेष . ९ परागसमूहः. १० शङ्खाभ्यन्तरमाकाशम्. ११ एष राजा कल्पवृक्षादीनां क्रमेण रजोभरादिभि पञ्चभिर्भूतै रचित इत्यन्वयः. १२ विधुराणा शत्रूणा निशेव निशा मरण तत्कर्ता. १३ मतिर्वस्तुतत्त्वावधारणक्षमा बुद्धिः, मान प्रमाण ताभ्या तत्त्वे याथार्थ्ये वृत्तिरनुसरणं यस्य स. १४ प्रतिपद प्रतिस्थान पक्षाणामात्मीयानामग्रणीरग्रसरः. १५ शनिग्रह.. १६ वज्रम्. १७ महान्. १८ अनुगता दारा वनिता यस्य. वशीकृतवनित इत्यर्थः १९ अनुत्सवदा. २० रक्षकम्. शत्रूणा पलायनस्थानत्वात्. २१ द्यूतनृत्यादि. २२ अविस्तीर्णम् दुःखदशाया तदविस्तारात्.

वतः कल्पतरोरेष विशेषः करस्य ते वीर। भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते॥८१॥ हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः। रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि॥ ८२॥ स्तनयुगमुक्ताभरणाः कण्टककलिताङ्गयष्टयो देव। त्वयि कुपितेऽपि प्रागिव विश्वस्ता रिपुस्त्रियो जाताः॥ ८३॥ संततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते। द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः॥८४॥ कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः। धरणीव धृतिर्धृतिरिव धरणी सततं विभाति यस्य तव॥ ८५॥ यद्वचतीर्यत धनं सुरवृक्षैः पञ्चभिः सह वनीपकवृन्दे। तावदेव च करोत्थभुजोऽन्तः प्राहिणोद्विधृतपञ्चसुशाखः॥ ८६॥ रत्नसानुशिखराङ्गणफुल्लत्कल्पपादपतलेषु निषण्णाः। उद्गृणन्ति नृपहंस सवर्णं त्वद्यशः प्रवरकिंनररामाः॥ ८७॥ गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः। ओष्ठविद्रुमदलान्यमोचयन्निर्दिशन्युधि रुषा निजाधरम्॥ ८८॥ वलमार्तभयोपशान्तये विदुषां संमतये वहुश्रुतम्। वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजनम्॥८९॥ तावका कति न सन्ति मादृशा मादृशस्तु भवदेकजीवनः। अम्बुदस्य कति वा न चातकाश्चातकस्य पुनरेक एव सः॥ ९०॥ विकृतिष्वपि कार्यमासज्जन्ते न भजन्ते परमाश्रयं कदापि। दधते वहुकर्मभेदवुद्धिं फलवन्तोऽपि गुणा विचित्रमेतत्॥ ९१॥ निखिलेषु गुणेषु चित्रता ते मनसो वैभवमद्भुतं तवैव। न च ते परतः प्रमाणभावस्तदपि न्यायनिविष्टतातिचित्रम्॥ ९२॥ स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वा सृजतानवद्यविद्यम्। विधिना ससृजे नवो मनोभूर्भुवि सत्य सविता वृहस्पतिश्च॥ ९३॥ कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः। पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः॥ ९४॥ गुणभेदविदग्रिमप्रसङ्गे व्यवधानादनुपस्थितं पुरस्तात्। अपि वाजिनमात्रशेषमिष्टौ घटयन्वाजिभिरर्थ्यसे विधिज्ञैः॥ ९५॥ यदि वै मनसि प्रशान्तिरुच्चैः कुरु कल्पद्रुम दानकौशलम्। न भवेदिति वा वद स्फुटं कलिकर्ण प्रतियामि मन्दिरम्॥ ९६॥ नानन्वयस्ते न च ते विरोधोऽलंकारकोटौ तव नोपमापि। क्षितीश नो ते विषमं न किंचित्साहित्यसौहित्यनिधिस्तथापि॥ ९७॥ अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः। ददृशे तव वैरिणा मदः स गतः क्वापि तवेक्षणेक्षणात्॥ ९८॥ तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः। भटाः परेषा विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांशवः॥ ९९॥ विशांपते विस्तरतो न वक्तुं जानामि जानन्नपि ते गुणौघान्। यस्यैव योऽसि प्रथमानकीर्ते स एव तद्वानिति निर्निरूढि॥ १००॥ यशोदयामण्डितकान्तदेहो वाल्येऽपि गोपालजनस्य नेता। गोमण्डलं पासि बलेन युक्तः कथं

१ राधेयम् दानातिशयेनेत्यर्थः. २ असमदृष्टिः, (पक्षे) त्रिलोचन. ३ सुकृतम्, (पक्षे) वृषासुरः. ४ राजभागभाग; (पक्षे) किरणाः. ५ विक्षिप्तत्वम्.

न राजन्पुरुषोत्तमोऽसि ॥ १०१ ॥ नक्षत्रभूः क्षत्रकुलप्रसूतेर्युक्तो न भोगैः खलु भोगभाजः सुजातरूपोऽपि न याति यस्य समानतां कांचन काञ्चनाद्रिः ॥ १०२ ॥ अखण्डिता शक्तिरथोपमानं न स्वीकृतं न च्छलरीतिरस्ति । अस्पृष्टसंदेहविपर्ययस्य कोऽयं तव न्याये नये निवेशः ॥ १०३ ॥ स्वतः प्रकाशो मनसो महत्त्वं धर्मेषु शक्तिर्न तथान्यथा धीः । भूपाल गोपालपदैकभक्तेरन्यैव नैयायिकता तवेयम् ॥ १०४ ॥ यस्येषवः संयुगयामिनीषु प्रोतप्रतिक्ष्मापतिमौलिरत्नाः । गृहीतदीपा इव भिन्दते स्म खड्गान्धकारे रिपुचक्रवालम् ॥ १०५ ॥ लब्ध्वा यदन्तःपुरसुन्दरीणां लावण्यनिष्यन्दमुपान्तभाजाम् । गृहीतसारस्त्रिदशैः पयोधिः पीयूषसंदर्शनसौख्यमाप ॥ १०६ ॥ यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुपः स्यात् । पारे परार्धं गणितं यदि स्याद्गणेयनिःशेषगुणोऽपि स स्यात् ॥ १०७ ॥ एतद्यशःक्षीरधिपूरगाहि पतत्यगाधे वचनं कवीनाम् । एतद्गुणानां गणनाङ्कपातः प्रत्यर्थिकीर्तीः खटिकाः क्षिणोति ॥ १०८ ॥ देवाधिपो वा भुजगाधिपो वा नराधिपो वा यदि हैहयः स्याम् । संदर्शनं ते गुणकीर्तनं ते सेवाञ्जलिं ते तदहं विदध्याम् ॥ १०९ ॥ अत्यादरादध्ययनं द्विजानामर्थोपलब्धा फलवद्विधाय । क्रतूनतुच्छादयितुं तवैषा मीमांसकाद्याधिकृतिः प्रसिद्धा ॥ ११० ॥ तुच्छान्तराध्यासमसंनिकृष्टमध्यक्षमत्यन्तमगच्छतस्ते । अख्यातिसख्यानुगतद्विषश्च ख्यातिस्थिता निर्वचनीयरूपा ॥ १११ ॥ अन्यार्थमङ्गीकृतवारपाणौ विशङ्कमानास्तव दाननीरम् । परस्परं दीनमुखा न केवी देवीः सुमेरुं शुशुचुः स्वभूमिम् ॥११२॥ तवाग्रतो वीर महीमहेन्द्रो मन्दं गजाः शृङ्खलिनो विशन्ति । आवासदानादरिभूपतीनामाशान्तशैला इव सापराधाः ॥ ११३ ॥ कामं नृपाः सन्ति सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् । नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ ११४ ॥ दारिद्र्यदायादगणाधमेन दीनो द्विजोऽर्थार्णपदातिसात्कृतः । जागर्ति नाथे त्वयि भो द्विजाना विधेहि तद्येन सुखं भजे नृप ॥ ११५ ॥ कमलभूतनया वदनाम्बुजे वसतु ते कमला करपल्लवे । वपुषि ते रमतां कमलाङ्गजः प्रतिदिनं हृदये कमलापतिः॥११६॥ उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तर पयः । निमित्तनैमित्तिकयोरयं विधिस्तव प्रसादस्य पुरस्तु संपदः॥११७॥अनेन सर्वार्थिकृतार्थताकृताहृतार्थिनौ कामगवीसुरद्रुमौ । मिथः पयःसेचनपल्लवाशने प्रदाय दानव्यसनं समाप्नुतः॥११८॥ मयि स्थितिर्नम्रतयैव लभ्यते दिगेव तु स्तब्धतया विलङ्घ्यते । इतीव चापं दधदाशुगं क्षिपन्नयं नयं सम्यगुपादिशद्द्विपाम् ॥११९॥ नृपः कराभ्यामुदतोलयन्निजे नृपानयं यान्पततः पदद्वये । तदीयचूडाकुरुविन्दरश्मिभिः स्फुटेयमेतत्करपादरञ्जना ॥ १२० ॥ इदं नृपप्रार्थिभिरुज्झितोऽर्थिभिर्मणिप्ररोहेण विवृध्य रोहणः । कियद्दिनैरम्बरमावरिष्यते मुधा मुनिर्विन्ध्यमरुद्ध भूधरम् ॥ १२१ ॥ त्वया प्रदत्ता धरणीवसुंधरास्तै रत्नगर्भा क्षितिपालमौले । जानेऽन्यदत्ता तु जनेऽर्थिनां

स्थिरासौ मेदिनी सौख्यमुपेत्वतत्त्वम् ॥ १२२ ॥ कृतं च गर्वाभिमुखं मनस्त्वया किमन्य-देवं निहताश्च नो द्विषः । तमांसि तिष्ठन्ति हि तावदंशुमान्न यावदायात्युदयाद्रिमौलि-ताम् ॥ १२३ ॥ अनेन पर्यासयताश्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु । प्रत्यर्पिताः शत्रु-विलासिनीनामाक्षेपसूत्रेण विनैव हाराः ॥ १२४ ॥ अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः । चतुर्दशत्वं कृतवान्कुतः स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥१२५॥ अमुष्य-विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम् । अगाहताष्टादशतां जिगी-षया नवद्वयद्वीपपृथग्जयश्रियाम् ॥ १२६ ॥ दिगीशवृन्दांशविभूतिरीशिता दिशां स का-मप्रसभावरोधिनीम् । बभार शास्त्राणि दृशं द्वयाधिकां निजत्रिनेत्रावतरत्वबोधिकाम् ॥ १२७ ॥ पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे । भुवं यदेकाङ्घ्रि-कनिष्ठया स्पृशन्दधावधर्मोऽपि कृशस्तपस्विताम् ॥ १२८ ॥ स्फुरद्धनुर्निस्वनतद्धनाशुग प्रगल्भवृष्टिव्ययितस्य संगरे । निजस्य तेजःशिखिनः परःशता वितेनुरङ्गारमिवाशयः परे ॥ १२९ ॥ अनल्पदग्धारिपुरानलोज्ज्वलैर्निजप्रतापैर्वलयं ज्वलद्भुवः । प्रदक्षिणीकृत्य ज-याय सृष्टया रराज नीराजनया स राजघः ॥ १३० ॥ सितांशुवर्णैर्वयति स्म तद्गुणैर्महा-सिवेम्नः सहकृत्वरी बहुम् । दिगङ्गनाङ्गाभरणं रणाङ्गणे यशःपटं तद्भटचातुरीतुरी ॥१३१॥ प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता । अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत ॥ १३२ ॥ अयं दरिद्रो भवितेति वैधसीं लिपिं ललाटेऽर्थि-जनस्य जाग्रतीम् । मृषा न चक्रेऽल्पितकल्पपादपः प्रणीय दारिद्र्यदरिद्रतां नृपः ॥१३३॥ विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः । अमानि तत्तेन निजायशो-युगं द्विफालबद्धाश्चिकुराः शिरस्थितम् ॥ १३४ ॥ अजस्रमभ्यासमुपेयुषा समं मुदैव देवः कविना बुधेन च । दधौ पटीयान्समयं नयन्नयं दिनेश्वरश्रीरुदयं दिने दिने ॥ १३५ ॥ अधोविधानात्कमलप्रवालयोः शिरःसु दानादखिलक्ष्माभुजाम् । पुरेदमूर्ध्वं भवतीति वेधसा पदं किमस्याङ्कितमूर्ध्वरेखया ॥ १३६ ॥ सदुत्तंस दैवादयं कोऽपि दीनो ऋणाब्धौ विलीनो विहीनो गुणेन । भवत्संनिधिं सन्निधिं प्राप्य पीनो बभूवाशुपीनो यथा नीरपूरम् ॥ १३७ ॥ कति नो विषया विभालिताः कति वा भूमिभुजो न शीलिताः । धरणीधर तावकान्गुणानवधार्याजगणं गुरुं लघुम् ॥ १३८ ॥ तव नित्यमुत्सवपरंपरा भव-त्वनिशं त्वमित्थमुपकारसादरः । निजकीर्तिकान्तिकलितोज्ज्वले जगत्यथ सत्सुतादिभिरलं सुखं भज ॥ १३९ ॥ राजन्दुधुक्षसि[1] यदि क्षितिधेनुमेतां तेनाद्य वत्समिव लोकममुं पुषाण[2] । तस्मिंश्च सम्यगनिशं परितुष्यमाणे नानाफलैः फलति कल्पलतेव भूमिः ॥ १४० ॥ अभ्युद्धृता वसुमती दलितं रिपूरः क्रोडीकृता बलवता बलिराजलक्ष्मीः । एकत्र जन्मनि

१ दोहन कर्तुमिच्छसि २ पोषण कुरु.

कृतं यदनेन राज्ञा जन्मत्रये तदकरोत्पुरुषः पुराणः ॥ १४१ ॥ एकस्त्रिधा वससि चेतसि चित्रमत्र देव द्विषां च विदुषां च मृगीदृशां च । तापं च संमदरसं च रतिं च पुष्णञ्शौर्योष्मणा च विनयेन च लीलया च ॥ १४२ ॥ शक्तिं प्रमापयति वीर तवोपमानं प्रामाण्यमाप्तवचनेषु परैव जातिः । जातौ गुणा गुणगणाश्रयिणो विशेषा वैशेषिकं किमपि दर्शनमद्भुतं ते ॥ १४३ ॥ किं कारणं सुकविराज मृगा यदेते व्योमोत्पतन्ति विलिखन्ति भुवं वराहाः । देव त्वदस्त्रचकिताः श्रयितुं स्वजातिमेके मृगाङ्कमृगमादिवराहमन्ये ॥ १४४ ॥ संभाव्यमिष्टभुवनाभयदानपुण्यसंभारमस्य वपुरत्र हि विस्फुरन्ति । लक्ष्मीश्च सात्विकगुणज्वलितं च तेजो धर्मश्च मानविजयौ च पराक्रमश्च ॥ १४५ ॥ प्रत्यक्षरस्नुतसुधारसनिर्विषाभिराशीभिरभ्यधिकभूषितभोगभाजः । गायन्ति कञ्चुकविनिह्नुतरोमहर्षस्वेदोर्मयस्तव गुणानुरगेन्द्रकन्याः ॥ १४६ ॥ उच्चैर्गजैरटनमर्थयमान एव त्वामाश्रयन्निह चिराडुषितोऽस्मि राजन् । उच्चाटनं त्वमपि लम्भयसे[2] तदैव मामद्य नैव विफला महतां हि सेवा ॥ १४७ ॥ भद्रात्मनो[3] दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य । यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥ १४८ ॥ साकं कुरंगकदृशा मधुपानलीलां कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते । अन्याभिधायि तव नाम विभो गृहीतं केनापि तत्र विषमामकरोदवस्थाम् ॥ १४९ ॥ सत्यान्वितो द्विजपतिर्वसुदः कृतोर्वी गोपालसंश्रिततनुः कमलाश्रयश्च । सत्येन दुस्तरमिरातरसोवनेद्धा संराजते हरिरिवैष प्र पृथिव्याम् ॥ १५० ॥ नाथ त्वदङ्घ्रिनखधावनतोयलग्नास्तत्कान्तिलेशकणिका जलधिं प्रविष्टाः । ता एव तस्य मथनेन घनीभवन्त्यो नूनं समुद्रनवनीतपदं प्रपन्नाः ॥ १५१ श्रीशत्रुशल्य भवदेकसमाश्रितस्य या वर्षपूर्णधनता भवता व्यधायि । मे सैव संनिहितसं निहितामयासीत्पृथ्वीन्द्र तेन कलये भवताश्चिरायुः ॥ १५२ ॥ सद्भूतिभूषिततनुं हृतकाम वर्गं प्रज्ञातृतीयनयनं गलराजिदोषम् । आर्याभिवन्दितपदं द्विजराजभालं त्वां कामदं नृ न के कलयन्ति शंभुम् ॥ १५३ ॥ अत्यायतैर्नियमकारिभिरुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः । शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार ॥ १५४ ॥ नानाविधप्रहरणैर्नृप संप्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान् । दृप्तारिवीरविसरेण वसुंधरेय निर्विप्रलम्भपरिलम्भविधिर्वितीर्णा ॥ १५५ ॥ अन्तःपुरीयसि रणेषु सुतीयसि त्वं पौरं जनं तव सदा रमणीयते श्रीः । दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्रसंचारमत्र भुवि संचरसि क्षितीश ॥ १५६ ॥ राजन्विभान्ति भवतश्चरितानि तानि इन्दोर्द्युति

१ दूरनिरसनम्. २ प्रापयसि. ३ ए॰ १ २ भद्र शिलीमुखवारणदानकरशब्दा यथाक्रम शोभनवाणनिवारकवितरणहस्तबोधकाः. हस्तिपक्षे तु भद्रजा॥ [illegible] हस्तिमदजलशुण्डादण्डबोधकाः. ४ चन्द्रस्य पदमित्यर्थः. ५ उपायाना सततानुष्ठानमेवायतत्वं भुजानामाजा[illegible]त्वम्. ६ उद्धृताना जनानाम्; (पक्षे) असुराणाम्. ७ सामदानविधिभेदरूपै ; (पक्षे) चतुर्भि..

दधति यानि रसातलेऽन्तः। धीदोर्बले अतितते उचितानुवृत्ती आतन्वती विजयसंपदमेत्य भातः॥ १५७॥ पौरं सुतीयति जनं समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचञ्चुः। नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना॥ १५८॥ दोर्भ्यां तितीर्षति तरंगवतीभुजंगमादातुमिच्छति करे हरिणाङ्कबिम्बम्। मेरुं लिलङ्घयिषति ध्रुवमेष देव यस्ते गुणान्गदितुमुद्यममादधाति॥ १५९॥ हिमशिशिरवसन्तग्रीष्मवर्षाशरत्सु स्तनतपनवनाम्भोहर्म्यगोक्षीरपानैः। सुखमनुभव राजंस्त्वद्विषो यान्तु नाशं दिवसकमललज्जाशर्वरीरेणुपङ्काः॥ १६०॥ इह निवसति मेरुः शेखरो भूधराणामिह हि निहितभाराः सागराः सप्त चैव। इदमतुलमनन्तं भूतलं भूरिभूतोद्भवधरणसमर्थं स्थानमस्मद्विधानाम् ॥ १६१॥ विदधतु धरणीशा दानमुच्चैर्धरायां प्रभवतु सुजनस्तत्प्रेरकः पुण्यशीलः। निजपरमतिहीनः केवलं सत्स्वदीनस्त्वमिह नृप कुलीनः कार्यकर्ता विभासि॥ १६२॥ कवीनां संतापो भ्रमणममितो दुर्गतिरिति त्रयाणा पञ्चत्वं रचयसि न तच्चित्रमधिकम्। चतुर्णां वेदानां व्यरचि नवता वीर भवता द्विपत्सेनालीनामयुतमपि लक्षं त्वमकृथाः॥१६३॥ समाजे सम्राजां सदसि विदुषां धाम्नि धनिनां निकाये नीचानामपि च तरुणीना परिषदि। वयं यत्रैव स्मः क्षणमतिथयस्तत्र शृणुमः स्फुरद्रोमोद्भेदाः सुभग भवतः पौरुषकथाः॥१६४॥ न लोपो वर्णानां न खलु परतः प्रत्ययविधिर्निपातो नास्त्येव क्वचिदपि न भग्नाः प्रकृतयः। गुणो वा वृद्धिर्वा सततमुपकाराय जगतां मुनेर्दाक्षीपुत्रादपि तव समर्थः पदविधिः॥१६५॥ न मिथ्यावादस्ते न च विगुणचर्चास्वभिरतिर्न वा वाच्यं किंचिद्वचसि न मनाग्न्यायिनि मतिः। तथाप्येतच्चित्रं यदसि जगतीजानिरधुना त्वमेवैको लोके निगमपरभागार्थनिपुणः॥ १६६॥ चकोराणां चन्द्रः कुसुमसमयः काननभुवां सरोजानां भानुः कुवलयकदम्बं मधुलिहाम्। मयूराणां मेघः प्रथयति यथा चेतसि सुखं तथास्माकं प्रीतिं जनयति तवालोकनमिदम्॥ १६७॥ अदातारं दातृप्रवरमनयं विश्वविनयं विरूपं रूपाढ्यं विगतजयिन विश्वजयिनम्। अकुल्यं कुल्यं त्वामहमवदमाशापरवशान्मृषावादेत्युक्तस्त्वयि खलु मृषावादिनि मयि॥ १६८॥ यशःस्तोमानुच्चैरुपचिनु चकोरप्रणयिनी रसज्ञा पाण्डित्यच्छिदुरशशिधामभ्रमकरान्। अपि त्वत्तेजोभिस्तमसि शमिते रक्षति दिशामसौ यात्रामैत्रीं नभसि नितरामम्बरमणिः॥ १६९॥ सुराणां पातासौ स पुनरतिपुण्यैकहृदयो ग्रहस्तस्यास्थाने गुरुरुचितमार्गे स निरतः। करस्तस्यात्यर्थं वहति शतकोटिप्रणयितां स सर्वस्वं दाता तृणमिव सुरेशं विजयते॥ १७०॥ मनोभूर्मुग्धासु क्षिपति यदि बाणावलिमसौ कथं ताभिः क्षिप्तास्त्वयि नयनविक्षेपविशिखाः। अथ ज्ञातं ब्रूमः शृणु सुभग शृङ्गारनलिनीवनक्रीडाहंसं स्मरमिव विदुस्त्वां मृगदृशः॥ १७१॥ यशश्चन्द्रैरुद्यत्सुकृतनरकल्प-

१ लक्षसख्याकम्, (पक्षे) शरव्यम्. २ पाणिने.

द्रुमकरैः परं लक्ष्मीगर्भैर्द्विरदहयरत्नादिफलदैः । निजैर्दानाम्भोभिर्नियततुलितक्षीरजलधि श्चिरं जीयाज्जीयादधिधरणि सोऽयं नरपतिः ॥ १७२ ॥ अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् । कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥ १७३ ॥ तुला धारो धाता वहति वसुधा शूर्पपदवीं फणीशः स्यात्सूत्रं कनकशिखरी मानपलिका । तुला दण्डः सत्यं यदि भवति दामोदरगदा तथाप्येषोऽशक्यस्तव गुणसमूहस्तुलयितुम् ॥ १७४ ॥ न तूणादुद्धारे न गुणघटनेनाश्रुतिशिखं समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि नृणां पश्यत्यस्य क च न विशिखान्किंतु पतितद्विषद्वक्षःश्वभ्रैरनुमितिरमून्गोचरयति ॥ १७५ ॥ अमुष्योर्वीभर्तुः प्रसृमरचमूसिन्धुरभवैरवैमि प्रारब्धे वमथुभिरवश्यायसमये । न कम्पन्तामन्तः प्रतिनृपभटा म्लायतु न तद्वधूवक्राम्भोजं भवतु न स तेषां कुदिवसः॥१७६॥ भवानग्रेऽरीणां विपदमनुसंधाय समिति प्रसत्यव्यग्रत्वं रचयतु परं व्याकरणवित् । अकृत्वैवालोपं स्वयमहह मुग्रत्वमुररीकृतं यकौस्तेषां क इह सुमतिः साधु मनुते ॥ १७७ ॥ यशःपूरं दूरं तनु सुतनुनेत्रोत्पलवनीतमस्तन्द्राचन्द्रातप तप सहस्राणि शरदाम् । इयं चास्तां युष्मद्गुणकथनपीयूषपटलश्रितोत्सङ्गानन्दत्सुरनरभुजङ्गा त्रिजगती ॥ १७८ ॥ स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः प्रतिदिनमथवा ते वृत्तिरेवंविधैव । अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं शमयति परितापं छायया संश्रितानाम् ॥ १७९ ॥ नियमयसि कुमार्गप्रस्थितानात्तदण्डः प्रशमयसि विवादं कल्पसे रक्षणाय । अतनुषु विभवेषु ज्ञातयः सन्तु नाम त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ १८० ॥ अभिमतफलदाता त्वं च कल्पद्रुमश्च प्रकटमिह विशेषं किंचनोदाहरामः । कथमिव मधुरोक्तिप्रेमसंमानमिश्रं तुलयति सुरशाखी देव दानं त्वदेयम् ॥ १८१ ॥ अकाण्डधृतमानसव्यवसितोत्सवैः सारसैरकाण्डपटुताण्डवैरपि शिखण्डिनां मण्डलैः । दिशः समवलोकिताः सरसनिर्भरप्रोल्लसद्भवत्पृथुवरूथिनी रजनिभूरजश्यामलाः ॥ १८२ ॥ सहस्रकरपूरणान्निखिलजन्तुवक्राम्बुजप्रकाशकरणादथ प्रबलवैरितेजोवधात् । दरिद्रतिमिरोद्धृतेरखिलभूपचूडामणिर्जगन्मणिरहर्मणिर्जगद्दिदं च धत्तः समम् ॥ १८३ ॥ यशःकिरणधोरणीतुलितरोहिणीवल्लभ त्वया क्षणमुदीक्ष्यते जगति यो दरिद्रो जनः । पयोधरमहीधरे नटति तस्य वामभ्रुवां रणत्कनककिङ्किणीकलरवेण देवः स्मरः ॥ १८४ ॥ यमः प्रतिमहीभृतां हुतवहोऽसि तन्नीवृतां सतां खलु युधिष्ठिरो धनपतिर्धनाकाङ्क्षिणाम् । गृहं शरणमिच्छतां कुलिशकोटिभिर्निर्मितं त्वमेक इह भूतले बहुविधो विधात्रा कृतः ॥ १८५ ॥ आलोकान्तप्रतिहततमोवृत्तिरासां प्रजानां

१ परिमाणपानताम्. २ परिमाणपाषाणः. ३ सधानेन. ४ आकर्णान्तम्. ५ रन्ध्रैः. ६ प्रसारिण.. ७ करशीकरैः. ८ नीहारकाले. ९ लोकालोकपर्वतपर्यन्तम्.

तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः। तिष्ठत्येकः क्षणमधिपतिर्ज्योतिषां व्योममध्ये षष्ठे काले त्वमपि लभसे देव विश्रान्तिमह्नः॥१८६॥ शूली जातः कदशनवशाद्भैक्ष्ययोगात्कपाली वस्त्राभावाद्गगनवसनः स्नेहशून्याज्जटावान्। इत्थं राजंस्तव परिचयादीश्वरत्वं मयाप्तं तस्मान्मह्यं किमिति कृपया नार्धचन्द्रं ददासि॥१८७॥ अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये रक्षायोगादयमपि तपः प्रत्यहं संचिनोति। अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः॥१८८॥ नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीमेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति। आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यैरस्याधिज्ये धनुषि विजये पौरुहूते च वज्रे॥१८९॥ त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै। सामर्थ्यानामिव समुदयः संचयो वा गुणानामाविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः॥१९०॥ हेषन्ते यज्जितजलधरध्वानमेते तुरंगा भूमिं पादैर्यदपि च मुहुर्दक्षिणैरालिखन्ति। यानौत्सुक्यं यदपि चलनाद्वालधेर्व्यञ्जयन्ति त्वद्दोर्दण्डद्वितयवशगा तत्समग्रा जयश्रीः॥१९१॥ यदि परगुणा न क्षम्यन्ते यतस्व गुणार्जने नहि परयशो निन्दाव्याजैरलं परिमार्जितुम्। विरमसि न चेदिच्छाद्वेषप्रसक्तमनोरथो दिनकरकरान्पाणिच्छत्रैर्नुदञ्श्रममेष्यसि॥१९२॥ यत्कीर्त्या धवलीकृतं त्रिभुवनं मूर्त्या जगन्मोहितं भक्त्येशः परितोषितः सुचरितैरानन्दिताः सज्जनाः। पूर्णाशा बहवः कृता वितरणैर्येन त्वया याचकास्तस्मै सर्वगुणाश्रयाय भवते दीर्घायुराशास्महे॥१९३॥ दाने कल्पतरुर्नये सुरगुरुः काव्ये कविस्तेजसि प्रौढग्रीष्मरविर्धने धनपतिः सत्ये दयायां शिबिः। गाम्भीर्ये सरितांपतिर्निरुपमे शौर्ये सुभद्रापतिः श्रीमान्धर्मरतिर्महीपतिरयं जीयात्सहस्रं समाः॥१९४॥ विद्वन्मानसहंस वैरिकमलासंकोचचन्द्रद्युते दुर्गामार्गणनीललोहितसमित्स्वीकारवैश्वानर। सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥१९५॥ भास्वत्सारथिबन्धुवाहनसखी गेहे तनौ तत्सुतोनाभ्युद्भूतजजा तवास्तु वदने सूर्येन्द्रवाहौ बहिः। अङ्के सूनुतनूजतत्सुतसुतः शय्यागृहे सुन्दरी विद्वान्संसदि वाचि कृष्णचरितं ध्यानं हरेर्मानसे॥१९६॥ हस्तन्यस्तकुशोदके त्वयि न भूः सर्वंसहा वेपते देवागारतया स काञ्चनगिरिश्चित्ते न धत्ते भयम्। अज्ञातद्विपभिक्षाभिक्षुककुलावस्था न दुस्थाशया वेपन्ते मददन्तिनः परममी भूमीपते तावकाः॥१९७॥ अर्थिभ्रंशबहूभवत्फलभरव्याजेन कुब्जायितः सत्यस्मिन्नतिदानभाजि कथमप्यास्तां स कल्पद्रुमः। आस्ते

१ दिवसस्य. २ ऐन्द्रे ३ साक्षात् ४ केशसमूहयुक्त पुच्छाग्रभाग ५ कृधातोर्लिङ्. ६ भास्वान्सूर्यस्तत्सारथिररुणस्तद्बन्धुर्गरुडः स वाहन यस्येति विष्णुस्तत्सखी भार्या लक्ष्मीरित्यर्थः. ७ मदनः. ८ नाभ्युद्भूतो ब्रह्मा तत्पुत्री सरस्वती ९ सूर्यवाहनमश्व.. इन्द्रवाहनं हस्ती. १० असंभवेन ११ व्ययाभावादुपचीयमानस. १२ लज्जयैवेति भाव.. १३ दानशौण्डे. १४ लज्जासवरणोपायासभवादिति भावः.

निर्व्ययरत्नसंपदुदयोदग्रः कथं याचकश्रेणीवर्जनदुर्यशोनिबिडितव्रीडस्तु रत्नाचलः ॥१९८॥ देव त्वत्करनीरदे दिशि दिशि प्रारब्धपुण्योन्नतौ चञ्चत्कङ्कणरत्नकान्तितडिति स्वर्णाम्बु[1] वर्षति । [2]स्फीता कीर्तितरंगिणी समभवत्तृप्ता [3]गुणग्रामभूः पूर्णं चार्थिसरः शशाम विदुषं दारिद्र्यदावानलः ॥ १९९ ॥ देव त्वा[4]मसमानदाननिहितैरर्थैः कृतार्थीकृतत्रैलोक्यं फल-भारभङ्गुरशिराः कल्पद्रुमो निन्दति । [6]टङ्कच्छेदनवेदनाविरमणात्संजातसौख्यस्थितिः प्राचीन[7]व्रणिताङ्गरोहणतया श्रीरो[8]हणः [9]स्तौति च ॥ २०० ॥ गण्डौ पाण्डिमसात्तनूस्त-निमसात्पक्ष्मावली बाष्पसात्कीरः पञ्जरसान्मनोऽपि ह्रसात्कण्ठोऽपि कैवल्यसात् । आस-न्देव [10]चमूवरेण्य भवतः प्रत्यर्थिवामभ्रुवां कोदण्डे [11]परिवेषभाजि विजयश्रीसाधने [12]योधने ॥ २०१ ॥ देव त्वं मलयाचलोऽसि भवतः श्री[13]खण्डशाखी भुजस्तस्मिन्कालभुजंगमो निव-सति स्फूर्जत्[14]कृपाणच्छलात् । एष [15]स्वाङ्गमनर्गलं रिपुतरु[16]स्कन्धेषु संघट्टयन्दीर्घव्योमविसारि निर्मलयशोनिर्मो[17]कमुन्मु[18]ञ्चति ॥२०२॥ कर्पूरप्रतिपन्थिनो हिमगिरिग्रावाग्रसंघर्षिणः क्षीराम्भो-निधिमध्यगर्भजयिनो गङ्गौघसर्वंकषाः । स्वच्छन्द हरिचन्दनद्युतितुदः कुन्देन्दुसंवादिनस्त-स्यासन्नरविन्दकन्दरुचयोऽनेके गुणाः केचन ॥ २०३ ॥ मन्ये स्पर्शमणिं तवैनमतुलं पाणिं द्विजाभ्यर्चने दुर्वर्णान्यपि भिक्षुभालफलकान्यासन्सुवर्णानि यत् । तच्चित्रं परमत्र मित्र भवता दत्ताः स्वहस्तादिमा दुर्वर्णा न सुवर्णतामुपगताः क्षुद्रास्तु मुद्राः कथम् ॥२०४॥ संतप्तश्रमहा-रिशीतलतले पुण्याश्रमालंकृतावुद्यद्दैवदवानलेन कलिते विद्वत्तरूणां चये । सद्यो वर्ष सुवर्ण-वारिद विभो स्वर्णाम्बुधारास्ततो विश्वव्यापियशाः शिरोखनिभृतामाक्रम्य नन्दानिशम् ॥२०५॥ इन्दुस्त्वद्यशसा जितोऽवनिपते भासांनिधिस्तेजसा कन्दर्पो वपुषा सुधाजलनिधि-र्वाचोविलासेन च । तथ्यं ते जयशीलमेतदधुना त्वद्दानमद्दैन्ययोर्मध्येतुं न विजेष्यतीति विषये दोलायते मे मनः ॥२०६॥ यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रतामस्मिन्नेव बिभर्ति यश्च किरति क्रूरध्वनिं निष्ठुरः । दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन्गुणं विख्यातः परमेष एव नृपतिः सीमा गुणग्राहिणाम् ॥ २०७ ॥ देव त्वं जय यस्य राजति महाराष्ट्री-कुचोच्चं कुलं लाटीवाङ्मृदु नर्म चेदिवनितानाभीगभीरं मनः । आभीरीकटिविस्तृता मतिर-सिर्गौडीकचश्यामला कर्णाटीरतिनिष्ठुरो रणरसः कीरीमुखोत्थं यशः ॥ २०८ ॥ ते कौपी-

---

१ पानीयम्. २ जलभरैर्वृद्धिं प्राप्ता. ३ गुणसमूहभूमि.. ४ अनुपमदानाय न्यस्तैः सुवर्णादिभिः. ५ यत-स्त्वया दानेन सर्वे याचकाः सफलीकृता अतस्तत्फलाना गृहयालव केऽपि च नासन्निति भावः. ६ खनित्रैः. ७ निर्व्रणतया. ८ पर्वतः. ९ यतस्तथैव सर्वेषां सरत्नतया रत्नार्थिनोऽभावान्न कैश्चिदपि विदार्यंत इति भावः. १० सेनाप्रधान ११ परिवेषो मण्डलीकरण धनुषस्त भजते सेवतेऽसौ परिवेषभाक्तस्मिञ्जाते सति. कर्णा-न्तमाकर्षणेन कुण्डलाना प्राप्ते सतीत्यर्थः. १२ रणे १३ चन्दनवृक्षः. १४ खड्गम् १५ यथेच्छम्. १६ रिपुम-स्तकेष्विति यावत् १७ कञ्चुकम् १८ यथा कश्चन सर्पस्तरुस्कन्धे सघट्टनं कुर्वन्स्व कञ्चुकं परित्यजति तथा त्वत्कृपाणाहि. शत्रुतरुस्कन्धेषु संश्लिष्य यश.कञ्चुक मुञ्चतीति भाव..

नैधनास्त[1] एव हि परं धात्रीफलं[2] भुञ्जते तेषां द्वारि नदन्ति[3]वाजिनिवहास्तैरेव लब्धा क्षितिः । तैरेतत्समलंकृतं[4] निजकुलं किंवा बहु ब्रूमहे ये दृष्टाः परमेश्वरेण भवता रुष्टेन तुष्टेन वा ॥ २०९ ॥ साशङ्कस्य समाकुलीकृतमतेरत्यन्तनिस्तेजसश्छिन्नाङ्गस्य विकम्पमानहृदयस्यारूढमन्योर्भृशम् । लज्जां संत्यजतः क्रमं विमृशतो विघ्नान्बहून्पश्यतः क्लेशो योऽर्थिजनस्य वक्तुमनसो मा भूत्स ते विद्विषाम् ॥ २१० ॥ नो कामः प्रतिहन्यते प्रणयिषु स्वप्नेऽपि नाथ त्वया नैवाधःकुरुषे विषं द्विरसनव्याला न ते वल्लभाः । नो वह्वचस्तव मूर्तयो न च तनुर्नित्यं जडानुग्रहव्यग्रा नो विषमा च दृक्त्वमथ च ख्यातः क्षिताविश्वरः ॥ २११ ॥ संग्रामाङ्गण[5]मागतेन भवता चापे[6] समारोपिते[7] देवाकर्णय येन येन सहसा यद्यत्समासादितम् । कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥ २१२ ॥ हारानाहर देव चन्द्रधवलान्नो चेत्पयोधेस्तटीं संप्राप्ते त्वयि सैन्यवारणगणैर्मज्जद्भिरक्षोभितम् । सिन्दूरारुणमम्बु मेघपटलीपीतोज्झितं शुक्तिषु स्वल्पैरेव दिनैः करिष्यसि महीमाताम्रमुक्ताफलाम् ॥ २१३ ॥ कृष्णत्वं घनमण्डलस्य गलितं लग्नं मुखे त्वद्विषां विद्युद्दाम जगाम तावकमति गर्जिर्भवद्दुन्दुभिम् । वृष्णिस्त्वत्परिपन्थिपार्थिववधूनेत्रेषु चक्रे स्थितिं चापं ते वसुधाधिनाथ बलभित्कोदण्डकान्तिः श्रिता ॥२१४ ॥ नालिङ्गन्ति कुचद्वयं भवदिभप्रोत्तुङ्गकुम्भद्वयत्रासाद्वेणिलतासु नैव दधति प्रीतिं तवासिभ्रमात् । भ्रूभङ्गान्भवदीयदुर्धरधनुर्भ्रान्त्या भजन्ते न ते वैरिक्षोणिभुजो निजाम्बुजदृशां भूमण्डलाखण्डलम् ॥ २१५ ॥ अस्य क्षोणिपतेः पराधपरया[8] लक्षीकृताः संख्यया प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः[9] किलाकीर्तयः । गीयन्ते स्वरमष्टमं कलयता[10] जातेन वन्ध्योदरान्मूकानां प्रकरेण[11] कूर्मरमणीदुग्धोदधे रोधसि[12] ॥ २१६॥ द्वारं खङ्गिभि[13]रावृतं बहिरपि प्रस्विन्नगण्डैर्गजैरन्तः कञ्चुकिभिः[14] स्फुरन्मणिधरैरध्यासिता भूमयः । आक्रान्तं महिषीभि[15]रेव शयनं त्वद्विद्विषां मन्दिरे राजन्सैव चिरंतनप्रणयिनी शून्येऽपि राज्यस्थितर्[illegible] ॥ २१७ ॥ शौर्यं केसरिणा परोपकरण कल्पद्रुमेणार्पितं लावण्यं मकरध्वजेन च शरच्चन्द्रेण शुभ्रं यशः । धैर्यं ते कमठाधिपेन विपुलं गाम्भीर्यमम्भोधिना सौभाग्यं तु तवैव केवलमिदं तत्केन नो विद्महे ॥ २१८ ॥ कर्णस्ते न तुलां कथं कथमपि प्राप्तुं क्षमो नो यतस्ते दुःशासनके न शल्यनृपतौ दुर्योधने वा न वा । नो दुष्टे शकुनौ सदा वितरणस्वीयत्वबुद्धिर्मनागास्ते धर्मरतिर्म-

१ कोपीनमेव धन येषाम्; (पक्षे) को पृथिव्या पीनधना. पुष्टधनाः २ आमलकीफलम्, (पक्षे) पृथ्वी-[illegible]. राज्यमित्यर्थः. ३ न इति पदच्छेद गजाश्वसमूहा ; (पक्षे) वाजिनिवहा अश्वसमूहा नदन्ति हेषित कुर्वन्तीत्यर्थः ४ समल सदोष कृतम्; (पक्षे) सम्यगलकृतम् ५ युद्धभूमिम्. ६ धनुषि. ७ सज्जीकृते. ८ परार्धसख्यामतिक्रान्तया ९ अन्धः. अस राज्ञोऽकीर्तिरेव नास्तीति भावः. १० कुर्वता. ११ समूहेन. १२ तीरे. १३ खड्गधारिभिः; (पक्षे) गण्डकैः १४ द्वारपालैः ; (पक्षे) सर्प . १५ पट्टाभिषिक्तस्त्रीभि., (पक्षे) महिषस्त्रीभिः.

तिर्नैरहरौ न द्वेष्टृता बन्धुषु ॥ २१९ ॥ कामं कामसमस्त्वमत्र जगति ख्यातोऽसि यत्सर्वदा रूपेणैव महीपते तव धनुःपाण्डित्यमन्यादृशम्। त्वं यस्मिन्विशिखं विमुञ्चसि तमेवोद्दिश्य मुक्तत्रपं त्रुट्यत्कञ्चुकमुद्गतस्पृहमहो धावन्ति देवाङ्गनाः ॥ २२० ॥ सर्वं लुण्ठितमुद्भटैस्तव भटैस्तेन द्विषत्सुभ्रुवस्त्राणाय त्वयि योजिताञ्जलिपुटं काकूक्तिमातन्वते। त्राणं दूरत एव तिष्ठतु मनस्तासां त्वया लुण्ठितं तद्गम्भीर वदामि कुप्यसि न चेत्साधोरयं कः क्रमः॥२२१॥ कोदण्डस्तव हस्तगो हृदि वलत्यर्तिस्तव द्वेषिणां त्वं दाता रभसेन मार्गणगणस्तानेव संसेवते। देव त्वं तु जयस्यमित्रमनिशं ते यान्ति वैकुण्ठतां संग्रामे तव भूपते महदिदं चित्रं समालोक्यते ॥ २२२ ॥ मेदिन्यां विषमेषुरित्यनुदिनं शृङ्गारवीरोद्भटाचार्यः श्रीजगतीपतिः कमलदृक्कैर्नाम नो गीयते। शय्यायां चरणाङ्गणे च पतिताः सीदन्ति निश्चेतनाः कामिन्यश्च विरोधिनश्च शतशो येनामुना खण्डिताः ॥ २२३ ॥ दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डाशुगध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येरणम्। वलगद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डवभ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत् ॥ २२४ ॥ को दण्डं न ददाति देव भवते कोदण्डमातन्वते को नारातिमुपैति पारमुदधेः कोनारुणे लोचने। का कुञ्जान्तरमेत्य वैरितरुणी काकुं न वा भाषते राजन्गर्जति वारणे तव पुरः को वा रणे वर्तताम्॥ २२५ ॥ दृष्ट्वा मण्डलमध्यलग्नमधुलिड्वैतण्डलक्षस्फुरत्तत्कोदण्डलसत्तेषुलहरीः को न क्षमाखण्डल। स्वारात्ताण्डवभागकाण्डवनभुग्धाराज्वलद्गाण्डवक्रुध्यत्पाण्डवकाण्डवर्षमतुलं ब्रह्माण्डवर्त्म स्मरेत् ॥ २२६ ॥ आलानं[1] जयकुञ्जरस्य द्वेषदां सेतुर्विपद्वारिधेः[2] पूर्वाद्रिः[3] करवालचण्डमहसो[4] लीलोपधानं[5] श्रियः। संग्रामामृतसागरप्रमथनक्रीडाविधौ[6] मन्दरो[7] राजन्राजति वैरिराजवनितावैधव्यदस्ते भुजः ॥ २२७ ॥ लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा। ईन्दुः[8] किं घटितः किमेष विहितः पूषा[9] नृपेश्वरः[10] दैतं चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः[11] ॥ २२८ ॥ नानाभूषणभूषितः प्रतिभयापात्रं प्रभूता स्थितिर्भारासक्तकरो भवाधिकरुचिर्भूरीकृताश्वद्विपः। शश्वत्संगतभासमानमुकुटो भिक्षुप्रवृद्धादरस्त्वं राजेन्द्र रिपुस्तवापि नितरां भेदः परं भेदकृत् ॥ २२९ ॥ प्रत्यावासकसज्जतां प्रथमतस्त्वां योद्धुमुत्कण्ठिता योधास्तेऽभिसृता मनागरिचमूः स्वाधीननाथा स्थिता। भीत्या प्रोषितभर्तृका समभवत्त्वत्सायकैः

---

१ बन्धनस्तम्भ २ अनेनास्य सेतोरविनश्वरत्व सूचितम् ३ उदयाचलः. ४ सूर्य. ५ उष्णीषके. ६ विलोडनलीला ७ यथा क्षीराब्धिमन्थने मन्दराचलस्तथा सग्रामामृतसागरविलोडने त्वद्भुजः. यथा च तत्रामृतमुत्पन्नं तथात्र यश इति भाव. ८ यतस्त्वमेव विमलसकललावण्यगृहमतस्त्वत्पुरः सकलङ्कस्य चन्द्रस्य लावण्यमयत्वेन घटनं व्यर्थमेवेति भाव. ९ यतः पूषा त्वत्प्रतापगरिमालक्षांशमपि नाप्नोतीति भाव· १० यतश्चिन्तारत्नस्याय प्रभावो यद्याचकयाचितार्थाना सद्य एव पूरण भवति तच्च त्वत्त एव भवतीति. अतश्चिन्तामण्युत्पत्तिर्वृथेति भाव. ११ यत· पृथ्वीभारस्त्वया भुजाभ्यामेव धारितोऽतस्तदुत्पत्तिर्व्यर्थेति भाव.

खण्डिता दूरादन्तरिता विधाय कलहं हा विप्रलब्धा विधे ॥ २३० ॥ प्रामाण्यं स्वत एव नैव परतो विज्ञायते मानता शब्दस्यापि यथार्थता स्तुतिवचोराशेर्मनोवृत्तयः। विश्वव्यापकतां गतो न च महानन्यो भ्रमः क्वापि ते नास्त्ये देव मतं किमस्ति भवतः शास्त्रेषु न ज्ञायते ॥ २३१ ॥ प्रामाण्यं परतः स्वतोऽपि भवतो विज्ञायते सन्मते भूमीन्द्र त्वच्चुरक्षणस्थिरतया वर्णाश्चिरं स्थापिताः। सर्वज्ञैकसदीश्वरोऽपि न परं ब्रूते भवानीश्वरं तन्नैयायिकनायकस्य भवतो मीमांसकत्वं कुतः ॥ २३२ ॥ एकं वस्तु यदस्ति विश्वजनतानन्दप्रमोदात्मकं सत्य तत्त्वमसीति वाक्यमखिलं त्वय्येव विश्राम्यति। त्वामाकर्ण्य न किंचिदन्यदवनीशृङ्गार भो मन्यते त्वय्याप्ते जनकादिकीर्तिजनके किं ज्ञानमीमांसया ॥ २३३ ॥ त्वद्बाणेषु यमो जयेषु नियमो पाते स्थिरं चासनं भ्रान्तौ श्वासविनिग्रहो गुणगणे प्रत्याहृतिः श्रीमतः। ध्यानं शूलिनि धारणा च धरणेर्धर्मे समाधिर्यतस्तन्निर्विण्णहृदः किमीश्वरपरे वाञ्छन्ति पातंजले ॥ २३४ ॥ दृष्टान्तो न तवास्ति वाचि न च ते संदेहलेशः क्वचिद्व्याजोक्तिर्न कदापि शास्त्रकलने नैवानुमाने रुचिः। सामान्यं च विशेषवन्न मनुषे नाक्षेपबुद्धिर्मनाग्व्याघातोऽपि न वा मुखेऽप्यथ कथं साहित्यतर्कज्ञता ॥ २३५ ॥ मेघो भाति जलेन गौस्तु पयसा विद्वन्मुखं भाषया तारुण्येन च कामिनी मधुरया वाण्या पिकः खं जलात्। मालिन्यान्नयनं श्रिया च सदनं ताम्बूलरागान्मुखं ब्रह्माण्डं सकलं त्वया नरपते भाति स्म चित्रं महत् ॥ २३६ ॥ दारिद्र्योपहतो यथा घनघनं चान्द्रीं चकोरः प्रभां कामार्तस्तरुणीं क्षुधापरिगतः सद्व्यञ्जन भोजनम्। सच्छिष्यः स्वगुरुं वियोगविधुरो वत्सो यथा मातरं तद्वद्वः सतत स्मरामि मनसा मद्वत्सलाञ्श्रीमतः ॥ २३७ ॥ लक्ष्मीस्ते सदने सदा विहरतां वित्ते च चिन्तामणिः स्वर्धेनुस्तव गोकुले सुरतरुश्चारामभूमौ तव। वाणी ते वदने दया नयनयोर्दानं करे चान्वहं विष्णुश्चेतसि ते मतिश्च वसतां कीर्तिश्च लोकत्रये ॥ २३८ ॥ त्वामुर्वीधर चित्रकाव्यकरणे सेनागणो भाषणे त्राणे व्याकरणे रणे वितरणे विश्वंभराभूषणे। सत्यं सत्यवतीभवे[1] शरभवे[2] वागीशवे[3] विष्णवे दाक्षीकुक्षिभवे[4] पृथोदरभवे[5] देवद्रुवे मेरवे ॥ २३९ ॥ गङ्गायत्यसितापगा फणेगणः शेषीयति श्रीपतिः श्रीकण्ठीयति कैरवीयति कुलं नीलोत्पलानां च वै। कर्पूरीयति कज्जल पिककुल लीलामरालीयति स्वःकुम्भीयति कुम्भिनामपि घटा त्वत्कीर्तिसघट्टतः ॥ २४० ॥ लक्ष्मीस्ते हृदि भारती च वदने मौलौ सदा केशवश्चण्डी ते भुजदण्डयोर्गुणनिधे गेहे कुबेरस्थितिः। चित्तं नाथ तवास्तु धर्मसदने दानप्रसंगः करे सर्वास्ते विपदः प्रयान्तु विपिने त्वं दीर्घजीवी भव ॥ २४१ ॥ आयुस्ते नरवीर वर्धतु सदा हेमन्तरात्रिर्यथा लोकाना प्रियवर्धनो भव सदा हेमन्तसूर्यो यथा। लोकानां भयवर्धनो

---

१ व्यासाय. २ षडाननाय. ३ बृहस्पतये ४ पाणिनये ५ अर्जुनाय.

भव सदा हेमन्ततोयं यथा नाशं यान्तु तवारयोऽपि सततं हेमन्तपद्मं यथा ॥ २४२ ॥ इन्दुं कैरविणीव काकपटलीवाम्भोजिनीवल्लभं मेघं चातकमण्डलीव मधुपश्रेणीव पङ्केरुहम् । माकन्दं पिकसुन्दरीव सरसीं हंसीव विद्वत्प्रभो चेतोवृत्तिरियं ममापि नृपते त्वां द्रष्टुमुत्कण्ठते ॥ २४३ ॥ सत्यासक्तमनाः प्रवृद्धनरकच्छेदी द्विजेन्द्राश्रयो युक्तानेकसुखोद्भवास्पदमलं श्रीर्यत्र संराजते । यो गङ्गां च बिभर्ति यश्च सशिवो यः कामदेवाश्रयः संधः साम्यमयं प्रयातु भवतां कृष्णेन रुद्रेण वा ॥ २४४ ॥ यद्बाहू वहतः पराक्रमहृतां प्रत्यर्थिसीमन्तिनीचक्षुःकज्जलकालिकामिव धनुर्मौर्वीकिणश्यामिकाम् । यद्दोर्दुर्मदकर्मकार्मुकगुणप्रोत्तालकोलाहलैर्वैरिस्त्रीकलमेखलाकलकलाः पीता इवास्तं गताः ॥ २४५ ॥ सौन्दर्यं मदनादपि प्रथयति प्रौढिप्रकर्षं पुरां भेत्तारं मदनारिमप्यधरयत्युद्दामदोःक्रीडितम् । मुग्धत्वं मदनारिमौलिशशिनोऽप्युत्कर्षमालम्बते मूर्तैस्तत्किमसौ रसैर्विरचितः शृङ्गारवीराद्भुतैः ॥ २४६ ॥ आदाय प्रतिपक्षकीर्तिनिवहान्ब्रह्माण्डभूषान्तरे निर्विघ्नं धमता नितान्तमुदितैः स्वैरेव तेजोऽग्निभिः । तत्ताद्दक्पुटपाकशोधितामिव प्राप्तं गुणोत्कर्षिणा पिण्डस्थं च महत्तरं च भवता निःक्षारतारं यशः ॥ २४७ ॥ व्यास्यं नैकतयास्थितं श्रुतिगणं जन्मी न वल्मीकतो नाभौ नाभवमच्युतस्य सुमहद्भाष्यं च नाभाषिषम् । चित्रार्थां न बृहत्कथामचकथं सुत्राम्णि नासं गुरुर्देव त्वद्गुणवृन्दवर्णनमहं कर्तुं कथं शक्नुयाम् ॥ २४८ ॥ एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खावली जेतुर्मङ्गलपालिकेव पुलकैरन्या कपोलस्थली । लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहां पश्यतो द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडम्बरम् ॥ २४९ ॥ येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः । ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमास्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥ २५० ॥ अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधयस्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः । आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥ २५१ ॥ येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधरस्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं परामोति च । तेषां सगररङ्गसक्तमनसां राज्ञां त्वया भूपते पाशूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ २५२ ॥ द्वेष्याकीर्तिकलिन्दशैलसुतया नद्यास्य यद्दोर्द्वयीकीर्तिश्रेणिमयी समागममगाद्गङ्गा रणप्राङ्गणे । तत्तास्मिन्विनिमज्य बाहुजभटैरारम्भि रम्भापरीरम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥ २५३ ॥ अस्मिन्दिग्विजयोद्यते पतिरयं मे स्तादिति ध्यायति कम्पं सात्विकभावमञ्चति रिपुक्षोणी-

१ अनेकशाखारूपेण न विस्तारितवान् तत्कर्ता व्यासो न भवामीत्यर्थ २ वेदसमूहम् ३ नाहं वाल्मीकिरित्यर्थ.. ४ नाहं चतुर्मुख इत्यर्थः. ५ नाहं सहस्रजिह्व इत्यर्थ.. ६ नाहं गुणाढ्य इत्यर्थ.. ७ इन्द्रे. ८ नाहं वाचस्पतिरित्यर्थ.. ९ विस्तीर्णा. १० खड्गम् ११ तैलादि, (पक्षे) मित्रत्वम् १२ यमुनया. १३ क्षत्रियभटै.. १४ एतद्विरोधिना मरणमेव शरणमिति भावः. १५ औत्पातिके भूकम्पे सात्विकोत्प्रेक्षा. १६ प्राप्नोति.

न्द्रदारा धरा । अस्यैवाभिमुखं निपत्य समरे यास्यद्भिरूर्ध्वं[1] निजः पन्था[2] भास्वति[3] दृश्यते तैलमयः प्रत्यर्थिभिः पार्थिवैः ॥ २५४ ॥ विद्राणे रणचत्वरा[4]दरिगणे त्रस्ते समस्ते पुनः कोपात्कोऽपि निवर्तते यदि भटः कीर्त्या जगत्युद्भटः[5] । आगच्छन्नपि संमुखं विमुखता[6]मेवाधिगच्छत्यसौ द्रागेतच्छुरिकारयेण ठणिति[7] छिन्नापसर्पच्छिराः ॥ २५५ ॥ हित्वा दैत्यरिपोरुरः[8] स्वभवनं शून्यत्वदोषस्फुटासीदन्मर्कटकीट[9][10]कृत्रिमसितच्छत्रीभवत्कौस्तुभम् । उज्झित्वा निजसद्म पद्ममपि तद्वच[11]क्रावनद्धीकृतं लूतातन्तुभिरन्तरद्य भुजयोः श्री[12]रस्य विश्राम्यति ॥ २५६ ॥ सिन्धोर्जैत्र[13]मयं[14] पवित्रमसृजत्तत्कीर्तिपूर्ताद्भुतं यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न वाचंयमाः[15] । यद्बिन्दुश्रियमिन्दुरञ्चति जलं चाविश्य दृश्येतरो[16] यस्यासौ[17] जलदेवतास्फटिकभूर्जागर्ति यागेश्वरः ॥ २५७ ॥ युद्धा चाभिमुख रणस्य चरणस्यैवा[18]दसीयस्य वा युद्धान्तः स्वपरान्तरं निपततामुन्मुच्य बाणावलीः । छिन्नं वा[19]वनतीभवन्निजभियः खिन्नं भरेणा[20]थवा राज्ञानेन हठाद्विलोठित[21]मभूद्भूमावरीणां शिरः ॥ २५८ ॥ राज्ञामस्य शतेन किं कलयतो हेतिं[22] शतघ्नीं कृतं[23] लक्षैर्लक्ष[24]भिदो दृशैव जयतः पद्मानि[25] पद्मैरलम्[26] । कर्तुं सर्वपर[27]च्छिदः किमपि नो शक्यं परार्धेन[28] वा तत्संख्या[29]पगमं विनास्ति न गतिः काचिद्द्वैतद्विषाम् ॥ २५९ ॥ क्षीरोदन्वदपः प्रमथ्य[30] मथिता[31]देशे[32]ऽमरैर्निर्मिते[33] स्वाक्रम्यं[34] सृजतस्तदस्य यशसः क्षीरोदसिंहासनम् । केषां नाजनि वा जनेन जगतामेतत्कवित्वामृतस्रोतःप्रोते[35] पिपासुकर्णकलसीभाजाभिषेकोत्सवः ॥ २६० ॥ निस्त्रिंशै[36]स्त्रुटितारिवारणघटाकुम्भास्थिकूटा[37]वर्त[38]स्थानस्था[39]युकमौक्तिकोत्कर[40]किरः कैरस्य नायं करः । उन्नीत[41]श्चतुरङ्गसैन्यसमरत्वङ्ग[42]त्तुरंगक्षुरक्षुण्णासु[43] क्षितिषु क्षिपन्निव[44] यशःक्षौणीज[45]बीजव्रजम् ॥ २६१ ॥ यत्कस्यामपि भानु[46]मान्न ककुभि स्थेमान[47]मालम्बते जातं यद्वनकाननैकशरणप्राप्तेन दावाग्निना । एषैतद्भुजतेजसा विजितयोस्तावत्तयोरौचिती[48] धिक्कं वाडवमम्भसि द्विषिभिया येन प्रविष्टं पुनः ॥२६२॥ आत्मन्यस्य समुच्चितीकृत[50]गुणस्याहोतरामौचिती यद्भ्रात्रान्तरवर्णनाद[49]जनयद्[51]दूजानि-

१ ऊर्ध्वलोकम्. २ आसन्नमृत्योरादित्यमण्डल सच्छिद्रमिव दृश्यते. ३ सूर्यमण्डले. ४ रणाङ्गणात्. ५ प्रसिद्धः. ६ पराङ्मुखत्वम्, (पक्षे) विगतमुखत्वम् ७ ठणिति कश्चिदनुकरणशब्द ८ विष्णोः. ९ रिक्तता-दोष. १० तन्तुवायकीटा. ११ वक्षम् १२ लक्ष्मी १३ जेतृ जयशीलम्. ततोऽप्यधिकमित्यर्थ. १४ खातम् १५ सर्वेऽपि कवयो मौनिनो भवन्ति. वर्णयितुमशक्यत्वादिति भावः १६ सावर्ण्याददृश्या १७ इन्दु १८ अमुष्य १९ नम्रीभवत् २० भारेण. २१ परिवर्तितम् २२ आयुधम्. २३ अलम् २४ लक्षसंख्या; (पक्षे) शरव्यम्. २५ पद्मसंख्या, (पक्षे) अब्जानि २६ पद्मसंख्याभि. २७ शत्रुच्छिद २८ परार्धसंख्यया, (पक्षे) परेषामरीणामर्धेन. २९ एकत्वादि ; (पक्षे) युद्धम् ३० विलोड्य. ३१ मथनोद्भूतो निर्जलो दधिक्षीरविकार ३२ रूपान्तरे ३३ रूपान्तरापादानेन क्षीराब्धावभाव गमिते सतीत्यर्थ.. ३४ स्वेनाक्रमणार्थम्. ३५ पूरिते ३६ खड्गः ३७ सघात. ३८ गर्तप्रदेश ३९ स्थायिन. ४० समूहः. ४१ उत्क्षिप्त ४२ सचरत् ४३ कृष्टासु ४४ वपन्निव ४५ वृक्षः ४६ सूर्यः ४७ स्थिरत्वम् ४८ औचित्यम्. ४९ अग्रेजन्म सहजद्वेषि तस्मिन्. ५० समाहृतगुणस्य. ५१ दण्डनमकरोदित्यर्थ.

रेष द्विषाम् । भूयोऽहंक्रियते स्म येन च हृदा स्कन्धो न यश्चानमत्तन्मर्माणि [1]दलंदलं [2]सं-
मिदलंकर्मीणबाणव्रजः ॥ २६३ ॥ यद्भर्तुः कुरुतेऽभि[3]षेणनमयं शक्रो भुवः सा ध्रुवं दिग्दा-
हैरिव भस्मभिर्मघवता सृष्टैर्धृतो[4]द्धूलना । शंभोर्मा बत सांध्यवेलनटनं भाजि व्रतं द्रागिति
क्षौणी नृत्यति मूर्तिरष्टवपुषोऽसृग्वृष्टिसंध्याधिया ॥ २६४ ॥ प्रागेतद्वपुरामुखेन्दु सृजतः
स्रष्टुः समग्रस्त्विषां कोशः शोषमगादगाधजगतीशिल्पेऽप्यनल्पायितः । निःशेषद्युतिमण्ड-
लव्ययवशादीर्घै[5]र्लभैरेष वा शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्मितः ॥ २६५ ॥
अस्यारिप्रकरः शरश्च नृपतेः [6]संख्ये पतन्तावुभौ [7]सीत्कारं च न संमुखौ रचयतः [8]कम्पं च
न प्राप्नुतः । तद्युक्तं न पुनर्[9]निवृत्तिरुभयोर्जागर्ति यन्[10]मुक्तयोरेकस्तत्र भिनत्ति [11]मित्रमपरश्चा-
मित्रमित्यद्भुतम् ॥ २६६ ॥ एतस्योन्नतसर्वकर्मकृतिनस्त्रैलोक्यचूडामणेः शंभुब्रह्मपुरंदरप्र-
भृतयः स्तुत्यै न शक्ता यदि । देवः पन्नगनायको भगवती वाणी स्वयं चेज्जडा सौन्दर्यस्य
निरूपणे वद कथं शक्तो भवेन्मानवः ॥ २६७ ॥ अर्धं [12]दानववैरिणा गिरिजयाप्यर्धं हर-
स्याहृतं देवेत्थं भुवनत्रये स्मरहराभावे [13]समुन्मीलति । गङ्गा सागरमम्बरं शशिकला शे-
षश्च पृथ्वीतलं सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥ २६८ ॥ अन्यास्ता [14]गु-
णरत्नरोहणभुवो धन्या मृदन्यैव सा संभाराः खलु तेऽन्य एव विधिना यैरेव सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थलाद्दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि
वस्त्राणि च ॥२६९॥ यैर्दृष्टोऽसि तदा ललाटपतितप्रासप्रहारो युधि स्फीतासृक्स्रुतिपाटली-
कृतपुरोभागः परान्दारयन् । तेषां दुःसहकामदेहदहनप्रोद्भूतनेत्राञ्चलज्वालालीभरभासुरे
पुररिपावस्तं गतं कौतुकम् ॥ २७० ॥ येऽणुत्वं मनसि स्वके विवृणुते रीत्या कयापि स्फुटं
काणादाचरणस्य तत्समुचितं मन्ये प्रतिक्ष्माभृताम् । न्यायाभिज्ञतमोऽपि यत्प्रथयसे चित्ते
महत्त्व निजे मीमांसामत पक्षपातत इदं मन्ये त्वयाङ्गीकृतम् ॥ २७१ ॥ ये लब्धाश्रयमा-
यतः फलभृतं कुर्वन्ति किंचिद्गुणं वार्धौ वारिमुचो न कस्य विदितास्ते कर्ममीमांसकाः ।
आलोच्यैव निराश्रयान्फलभरैः संबन्धतः सद्गुणाञ्श्रीमद्राम तवाद्भुतं पुनरिदं मीमांसकत्वं
स्तुमः ॥ २७२ ॥ शंभौ यद्गुणवल्लरीमुपनयत्याकृष्य कर्णान्तिकं भ्रश्यन्ति त्रिपुरावरोधसु-
दृशां कर्णोत्पलग्रन्थयः । स्वं चास्फालयति प्रकोष्ठकमिमामुन्मुच्य तासामहो भिद्यन्ते
वलयानि दाशरथिना तद्भग्नमैशं धनुः ॥ २७३ ॥ त्रैलोक्याभयलग्नकेन भवता वीरेण
विस्मारितः सज्जीभूतमुहूर्तमण्डलधनुःपाण्डित्यमाखण्डलः । किं चाजस्रमखार्पितेन ह-
विषा तं फुल्लमांसोल्लसत्सर्वाङ्गीणवलीविलुप्तनयनव्यूहः कथं वर्तते ॥ २७४ ॥ कल्पक्षो-

१ दलयित्वा. २ अमोघबाण इत्यर्थः. ३ सेनयाभियानम्. ४ धृतभस्मानुलेपना. ५ सुलभैः. ६ युगपद्.
७ दुःखाभावात्; (पक्षे) निर्गत्यभावात्. ८ भयाभावात्; (पक्षे) दुष्प्रयोगाभावात्. ९ अगमादि-
भाव, (पक्षे) प्रत्यक्षादिति भाव.. १० संसारादित्यर्थः; (पक्षे) चापादित्यर्थः. ११ सूर्यम्; (पक्षे) यथा-
श्रुतम् १२ हरिणा हरिहरात्मकस्यैकस्य विग्रहस्य प्रसिद्धेः. १३ प्रकाशमाने. १४ पर्वतविशेषः.

णिरुहोऽयमित्यनुदिनं भूमीसुरैर्भाव्यसे कामोऽसाविति कामिनीभिरभितश्चित्ते चिरं चिन्त्यसे। श्रीनारायणमेव केवलमिति प्रेम्णा श्रिया ध्यायसे त्वं कालोऽयमिति प्रतिक्षितिधरैरेकोऽप्यनेकात्मभृत् ॥ २७५ ॥ नीतिस्त्रीमुकुरो जयध्वजनवस्तम्भः प्रतापांशुमत्पूर्वाद्रिः परिपन्थिभूपतिमहासंपन्मृगीवागुरः। उद्यत्पुण्यलतालवालमतनून्मत्तद्विपालो न कं यः श्रीकेलिनिकेतनं गुणमणिश्रेणी नवीनाकरः॥ २७६ ॥ रत्नान्यम्बुधितोयगर्भमगमन्मेरुः सुराङ्घ्रिश्रिये स्वीयाङ्के कमलां निधाय विदधे निद्रां हरिर्नीरधौ। यस्मिन्दित्सति भूरि दातरि नृणां भालस्थले दुर्लिपिं व्रीडानम्रशिराः कमण्डलुमयं जग्राह मार्ष्टुं विधिः ॥२७७॥ गाम्भीर्यं भवतो यशोत्रसुखमा त्वत्तेजसां संचयो दानं भूर्यदि वृष्टिरेव सकलेन क्षान्तिरेकत्र वै। आस्ते सागरसागरे शशिधरे सूर्योत्स्यरे वारिदे मेदिन्यां प्रतिभासते निजगुणे भूमीयते संप्रति ॥ २७८ ॥ लक्ष्मीश्चेन्न सरस्वती तदुभयं यद्यस्ति नोदारता सा चैतत्रितयं भवेच्च कुहचित्पुण्यैरगण्यैरपि। सौजन्यं न विजृम्भते तदपि चेन्नास्तेऽवक्रास्ता मतिस्तत्सर्वं परमेश्वरस्य कृपया त्वय्येव सभाव्यते ॥ २७९ ॥ शत्रूणां यमदण्डतां मृगदृशा कंदर्पकोदण्डतां गीर्वाणद्रुमभावमर्थिविदुषां मध्ये त्रयाणामिति। आश्चर्यं मनुजेन्द्ररत्न भवतो यद्बाहुदण्डद्वयं नानात्वं गतमेकमेव जगतां मध्ये त्रयाणामिति ॥ २८० ॥ रक्तेनैव विलोचनेन करुणारत्नं करेण त्वया दृश्यन्ते नरदेवरत्न सुहृदां विद्वेषिणो नो नृपाः। किं सेक्ताः प्रथमं सुधाभिरभवन्दावानलैः किं परैः पूर्वं पल्लविताः कुतः किमपरे भस्मत्वमासादेतम् ॥ २८१ ॥ या लक्षावलयानि बाहुयुगले कण्ठे च काचस्रजं मन्यन्ते बहुभूषणानि वनिता दीनद्विजानां पुरा। ता माणिक्यचितापि हेमवलयान्युञ्जन्ति मुक्तास्रजं यद्द्वाराद्बहुदानशीलनृपते तत्त्यागलीलायितम् ॥ २८२ ॥ मेरुर्दूरगतो हिमालयगिरिः प्रालेयरूपोऽभवच्चन्द्रः श्रीसहजोऽपि यावकभयात्क्षीणत्वमुन्मीलति। कौपीनं कृतवान्हरोऽपि भगवान्विष्णुर्जलं सेवते वारां राशिरपेयतामुपगतः को नाम दातुं क्षमः ॥ २८३ ॥ भो भो देव प्रतापतो रिपुगणान्निर्जित्य राज्य कुरु दीनानाथ जनोपकारकरणे स्वस्थान्वितस्त्वं भव। चण्डीविष्णुरवीश्वरस्य चरणे भक्तिः सदा वर्धता पायात्सा परमेश्वरी प्रतिदिनं कल्याणमुक्तिप्रदा ॥ २८४ ॥ दंष्ट्रासंकटवक्त्रकन्दरगलज्जिह्वास्य हरताशना ज्वालाभासुरिभूरिकेशरशयस्तारस्य दैत्यैः सह। उद्गायन्ति यशांसि यस्य विततैर्नादैः प्रचण्डानिलप्रक्षुभ्यत्करिकुम्भकूटकुहरव्यक्तैरणक्षोणयः ॥ २८५ ॥ कल्याणं भवतां यशः प्रसरतां धर्मः स्थिरा वर्धतां सपत्तिः प्रथतां प्रजा प्रणमतां शत्रुक्षयो जायताम्। वाक्यं संवदतां वपुः दावतां लक्ष्मीपतिः प्रीयतामायुस्ते शरदां शतं विजयतां दानाय दीर्घायुषे ॥ २८६ ॥ दृष्टिवाङ्कुशमुद्रया निगडितो दारिद्र्यदन्तावलो वाचा सुन्दरयार्चया मम कुतो गङ्गावगाहोत्सवः। अभ्युत्थाननमस्क्रियार्घघटनैर्मानोऽपि दानोत्तरो लीलेयं भवता वयं तु विदुषां

मूर्धानमध्यासिताः ॥ २८७ ॥ पद्मा सद्मानि केशवस्य गहने रत्नानि रत्नाकरे हेमाद्रिर्हिम-
सानुना व्यवहितः स्वर्गे सुराणां तरुः । जम्बुद्वीपधरासु भूमिपतयो जाम्बूनदैर्दुर्मदास्त्वं
तावत्सकलाप्तयेऽसि सुलभो भाग्यैर्द्विजानामिह ॥ २८८ ॥ राजन्नभ्युदयोऽस्तु जीव शरदां
सार्धं शतं तेऽरयो रोगैर्यान्तु लयं यशः शशधरः काष्ठासु देदीप्यताम् । शिष्टान्पाहि बुधा-
न्नय प्रणतिभिर्देह्यर्थिनां स्वं सदा वाणी ते वदने रमा प्रतिदिनं गेहे भुजे स्ताज्जयः
॥ २८९ ॥ प्रभ्रश्यच्छ्रुतिमस्तकः प्रविगलत्सद्वर्णं विप्रास्थितिर्नश्यत्स्वाङ्गबलः प्रनष्टवचन-
प्राग्भावपूर्णस्मृतिः । वृद्धोऽत्यन्तमयं स्वयं कलिमहाम्लेच्छेन निर्मूलितो धर्मः संप्रति
चाल्यते तव करालम्बेन भूमीपते ॥ २९० ॥ बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां
प्रेयसां श्लिष्यन्ति प्रणयन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृशोर्नि-
पतितोऽस्यौचित्यवारांनिधे विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयते
॥ २९१ ॥ हित्वा त्वामुपरोधशून्यमनसां मन्ये न मौलिः परो लज्जामज्जनमन्तरेण न
रमामन्यत्र संदृश्यते । यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः प्राप्य त्यागकृ-
तावमाननमपि त्वय्येव यस्याः स्थितिः ॥ २९२ ॥ धर्मं पालय नन्दय द्विजगणान्रामं
समाराधय प्रत्यर्थिक्षितिपालभूरुहवनं निर्मूलमुन्मूलय । कान्ताचित्तसरोजसौभगवने भृङ्ग-
त्वमासादय स्फीतां कीर्तिमशेषलोकजयिनीमाकल्पमाकल्पय ॥ २९३ ॥ चिन्तागम्भीरकू-
पादनवरतचलद्भूरिशोकारघट्टव्याकृष्टं निश्वसन्त्यः पृथुनयनघटीयन्त्रनिर्मुक्तधारम् । नासा-
वं[1]शप्रणालीविषमपथपतद्बाष्पपानीयमेता देव त्वद्वैरिनार्यः कुचकलशयुगेनान्वहं संवहन्ति
॥ २९४ ॥ त्वत्प्रारब्धप्रचण्डप्र[2]धनीनधं[3]नितारातिवीरातिरेकक्रीडत्कीला[4]लकुल्यावलि[5]भिरल-
भत स्य[6]न्दमाकन्दमुर्वी । दं[7]भोलिस्तम्भभास्वद्भुज भु[8]जगजगद्भर्तुराभर्तुरेनां तेनायं मूर्ध्नि रत्न-
द्युतिततिमिषतः शोभते शो[9]णभावः ॥ २९५ ॥ आसीदासीमभूमीवलयमलयजालेपनेपथ्य-
कीर्तिः सप्तां[10]कूपारपारीसद्मनजनघं[11]नोद्गीतचापप्रतापः । वीरादस्मात्परः कः पदयुगयुगपत्पाति-
भूपातिभूयश्चूडारत्नोडुपत्नीक[12]रपरिचरणामन्दनन्दन्नखेन्दुः ॥ २९६ ॥ एतेनोत्कृ[13]त्तकण्ठप्र-
तिसुभटन[14]टारब्धनाट्याद्भुतानां कष्टं द्रष्टैव नाभूद्भुवि स[15]मरसमालोकिलोकास्पदेऽपि । अश्वै-
रस्वैरवेगैः[16] कृतखु[17]रखुरलीर्म[18]ङ्क्षु संक्षु[19]भ्यमानक्ष्मापृष्ठोत्तिष्ठदन्धंकरणरणधुरारेणुधारान्धकारात्
॥ २९७ ॥ मन्दोद्भूतैः शिरोभिर्मणिभरगुरुभिः प्रौढरोमाञ्चदण्डस्फायन्निर्मोकसंधिप्रसरदवि-
गलत्संमदस्वेदपूराः । जिह्वायुग्माभिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं वेलाशैलाङ्कभाजो भु-
जगयुवतयस्त्वद्गुणानुद्गृणन्ति ॥ २९८ ॥ आ शैलेन्द्राच्छिलान्तःस्खलितसुरधुनीशीकरासाः

---

१ जलमार्ग. २ सग्राम.. ३ विनाश प्राप्ताः. ४ रुधिरनदी. ५ श्रेणय ६ क्षरणम्. ७ वज्रम्. ८ शेषस.
९ रक्तता १० समुद्रपरतीराणाम्. ११ निरन्तरम् १२ अंशव, (पक्षे) हस्ता. १३ छिन्नकण्ठैः. १४ न-
र्तकः. १५ मुग्धप्रेक्षकजनालयेऽपि. १६ अमन्दवेगैः. १७ खुरसचारैः. १८ सपदि. १९ सचूर्ण्यमानात्.

रशीतादा तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य । आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥ २९९ ॥ श्रावंश्रावं त्वदीयं गुणगणमखिलं सर्वदा याचकेभ्यस्त्वत्प्राप्यामीप्सितेभ्यः सकलविषयजं रूपवर्गं विहाय । त्वत्तोऽहं प्राप्तुमिच्छुर्विबुधतिलकतां त्वत्समीपेऽतिदूरादायातस्त्वं शतायुर्भव कुरु च तथा येन नान्यं भजेऽहम् ॥ ३०० ॥ विद्यावन्तो विनीताः प्रसभमभिसभं वाक्प्रपञ्चेषु जीवाः कैवानैवारभन्ते त्रिजगति विततां कीर्तिवल्लीमतल्लीम् । तेषामाधारभावं भुवनपरभृतो बिभ्रतो ये लसन्ते ते तु त्रैलोक्यतुङ्गा विमलफलजुषः स्वःपतिं स्वल्पयन्ति ॥ ३०१ ॥ वक्राम्भोजे सरस्वत्यधिवसति सदा शोण एवाधरस्ते बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः । वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ॥ ३०२ ॥ केचिद्वृद्धाः सहेलं निजभवनगता मोचिताः केऽपि केचिद्देहाद्देहान्तराणि क्षणमपि गमिताः केऽपि नीता निबन्धम् । हत्वा हत्वा च केचित्प्रतिपदमदयं प्रापिता व्यर्थभावं क्षोणीनाथस्य तस्योन्नतभुजपरिघेनारयः सारयश्च ॥३०३॥ उच्चैः कल्याणवाही करजितवसुधः सर्वदा पूर्णकामो विख्यातः कर्णवृत्त्या न च वचसि कटुश्चित्रपाकानुभावी । कोशापेक्षी परस्मादुचितबहुकथस्तत्परः पुण्यलोके चित्रं राजाधिराज त्वमिव तव रिपुस्तत्र कम्पं प्रतीमः ॥ ३०४ ॥ उत्पत्त्युत्पन्नशिष्टा विविधगुणगणा यत्र यान्ति प्रतिष्ठा बाधेन प्राक्तनानां न च नियमविधिर्नापि संख्यार्थदाने । ऊहः सर्वत्र यस्य स्फुरति च सकलः सत्य एवार्थवादो मीमांसाभावमञ्चत्यभिनवमधुना मूर्तिरेषा त्वदीया ॥ ३०५ ॥ हेलाप्रस्थानवेलाहतपृथुपटनादुन्दुभिध्वानधाराधारावाहिप्रसङ्गादसमनृपसक्तसंभ्रमभ्रान्तचित्ताः । दैन्याद्गाकुञ्चिताङ्गं विगलितनयनस्पन्दमिन्दीवराक्ष्यो लीयन्ते त्वद्रिपूणां निजगृहवलभीचारुचित्रालिकासु ॥ ३०६ ॥ आश्रण्यामाजिचर्यां तव विबुधगणा द्रष्टुमागत्य दृष्ट्वा रुष्टं त्वां न गाधार्ज्जगदिति जगुपुः सम्भ्रमास्तत्र तत्र । वह्निस्ते कोपपुञ्जे तुरगखुरपुटे मातरिश्वा प्रकोपे भ्रूकुटौ भास्वान्यशोजौ विधुरसिलतिका प्रान्तकक्षे कृतान्तः ॥ ३०७ ॥ यावद्भा भास्करस्य प्रभवति गगने यावदाकाशगङ्गा यावद्योगी नगाद्या गगनगगपतिर्गोपतिर्वा गणेशः । यावद्ब्रह्मा पिनाकी हरितनुकमला वेदसिद्धान्तवाणी तावत्पुत्रप्रपौत्रस्वजनपरिवृतो भुज्यतां राजलक्ष्मीः ॥३०८॥

---

## विशिष्टराजप्रशंसा ।

**परशुरामः** ॥ आदर्शाय शशाङ्कमण्डलमिदं हाराय हेमाचलं दीपाय द्युमणिर्महीमिव

---

१ वाणी, (पक्षे) नदीविशेष.. २ आरक्त., (पक्षे) नदविशेष ३ मुद्राभिः सहित., (पक्षे) अब्धि. ४ सेना, (पक्षे) नद्य .

कथं नो भिक्षवे दत्तवान्। दित्सापल्लवितप्रमोदसलिलव्याकीर्णमन्त्राम्बुजो जानीमो भृगुनन्दनस्तदखिलं न प्रायशो दृष्टवान्॥ १॥ गोत्राचारविचारपारगतया वृद्धानिरादिष्टया मात्रा वस्तुषु तेषु तेषु पुरतः प्रस्तारितेषु क्रमात्। अन्नप्राशनवासरे सरभसं वक्षोभरोत्सर्पिणा येनात्तं धनुरीक्षिताश्च सपदि क्षत्रावतंसा दिशः॥ २॥ **दशरथः**॥ चिरादक्ष्णोर्जाड्यं शमयति समस्तासुरवधूकचाकृष्टिक्रीडाप्रसभसुभगंभावुकभुजः। त्रिलोकी जङ्घालोज्ज्वलसहजतेजा मनुकुलप्रसूतिः सुत्राम्णो विजयसहकृत्वा दशरथः॥ ३॥ यस्योद्यद्भुजदण्डचण्डिमवलत्कोदण्डलीलायितैर्निष्पीते दनुजेन्द्रचन्द्रवदनाभ्रूवल्लरीविभ्रमे। लक्ष्मीमस्त्रविपाटलक्षतमयीमालम्बते केवलं पौलोमीकरजाङ्कुरव्यतिकरादाखण्डलीयं वपुः॥ ४॥ यस्येन्द्रारिजयश्रिया सह झटित्याकृष्य मौर्वीलतां साकं भूवलयेन चापवलयं दोर्मण्डले बिभ्रति। पौलोमीकुचकुम्भसीमनि रहः पश्यन्नखाङ्कं नवं धत्ते चेतसि केवलं न तु करे कोदण्डमाखण्डलः॥ ५॥ **जनकः**॥ ज्याघातः कार्मुकस्य श्रयति करतलं कण्ठमोंकारनादस्तेजो भाति प्रतापाभिधमवनितले ज्योतिरात्मीयमन्तः। राज्यं सिंहासनश्रीः शममपि परमं वक्ति पद्मासनश्रीर्येषां ते यूयमेते निमिकुलकुमुदानन्दचन्द्रा नरेन्द्राः॥ ६॥ **रामचन्द्रः**॥ एकादशरुद्राणामेका गौरीत्यनौचितीं मत्वा। राघव नृप तव यशसा दशापि गौरीकृता हरितः॥ ७॥ त्वद्वैरिभवनलिखितां सीतामाहर्तुमुद्धृत्य। कपिकौणपमण्डलयोः शिवशिव भूयो भवन्ति संरम्भाः॥ ८॥ शरासने सायकमादधाने श्रीरामभद्रक्षितिपालमौलौ। सुराङ्गनानां वरलालसानां वामानि नेत्राणि परिस्फुरन्ति॥ ९॥ गायन्तु किंनरगणाः सह किंनरीभिः श्रीरामचन्द्र शिखरेषु हिमाचलस्य। शेषेन्दुकुन्ददलबालमृणालनालनीहारहारहरहासनिभं यशस्ते॥ १०॥ नालीकभङ्गकृदतीव नदीनबन्धुर्नक्षत्रपो नवसुधाविभवैकहेतुः। भाते॥ किमिन्दुरपि नार्यभिमानहारी राजा परं जयति राघवसार्वभौमः॥ ११॥ नृपतिमुकुटमणे त्वत्प्रयाणप्रशस्तिं प्लवगपदनमद्भूनिर्भराक्रान्तभोगैः। लिखति दशनटङ्कैरुन्नमद्भिर्नमत्परठकमठभर्तुः कर्परे सर्पराजः॥ १२॥ रघुतिलक नृपाल त्वद्विपक्षोणिपालप्रतिलसदपकीर्तिश्यामले विश्वभाले। भगवति भजमाने कृष्णतां शूलपाणौ किमुदधिगिरिपुत्र्यौ चक्रतुस्तत्र विघ्नः॥ १३॥ अधाक्षीन्नो लङ्कामयमयमुदन्वन्तमतरद्विशल्यं सौमित्रेरयमुपनिनायौषधिवनम्। इति स्मारंस्मार त्वदरिनगरीभित्तिलिखितं हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः॥ १४॥ यदि क्षुण्णं पूर्वैरिति जहति रामस्य चरितं गुणैरेतावद्भिर्जगति पुनरन्यो जयति कः। स्वमात्मानं तत्तद्गुणगरिमगम्भीरमधुरस्फुरद्वा-

१ इन्द्रस्य २ अब्जीकभङ्गकृत्, (पक्षे) कमलविकासकृत् ३ अनाथबन्धु; (पक्षे) नदीनः समुद्रस्तद्बन्धुः. ४ क्षत्रियश्रेष्ठः; (पक्षे) नक्षत्रनायकः. ५ वसुधैश्वर्यस्य कारणम्; (पक्षे) नवीनायाः सुधाया यो विभवस्तस्य मुख्यकारणम्. ६ शत्रुमानहारी; (पक्षे) नारीणां मानहारकः. ७ शरीरम्. ८ कपाले. ९ शेषराजः.

द्राग्ब्रह्माणः कथमुपकरिष्यन्ति कवयः ॥ १५ ॥ झगिति जगतीमागच्छन्त्याः पितामह-
विष्टपान्महति पथि यो देव्या वाचः श्रवः समजायत । अथ कथमसौ मुक्तेदेनं न चेदव-
गाहते रघुपतिगुणग्रामश्लाघासुधामयदीर्घिकाम् ॥ १६ ॥ लज्जा कीर्तिर्जनकतनया शैवकोदण्डभङ्गे तिस्रः कन्या निरुपमतया भेजिरे रामचन्द्रम् । अन्त्यापाणिग्रहणसमये ज्यायसी जातकोपा भूपैः सार्धं खलु गतवती मध्यमाथो दिगन्तान् ॥ १७ ॥ गेहे गेहे सुभग भवतो रामभद्र क्षितीश त्वामालिख्य स्वमपि सविधे सस्पृहं भावयन्त्यः । तस्मिन्नाकस्मिकमुपगते वल्लभे प्रीतिभाजः पौष्पं चापं तव करतले वेपमाना लिखन्ति ॥ १८ ॥ अहो रघुशिरोमणेरभिनवप्रतापावलिप्रचण्डकिरणप्रथप्रसरसाध्वसादाश्रयम् । सुराधिपतिरम्बुदान्कमलमिन्दिरा सेवते हिमांशुरपि चन्द्रमाः सततमम्बुधौ मज्जति ॥ १९ ॥ कीर्तिः श्रीरघुवंशरत्न भवतः स्वर्वाहिनीगाहिनी दिक्पालानखिलान्परीत्य दधती पाण्योः प्रतापानलम् । सप्ताम्भोनिधिमण्डलान्यधिगता त्वय्येकपत्नीव्रतख्यात्यै विष्णुपदं [illegible] नुदिनं शेषस्य शीर्षाण्यपि ॥ २० ॥ कीर्तौ व्याप्तिमवेत्य वैरिवनिताबाष्पे [illegible] ॥ [illegible]दुत्तुङ्गे पृथिवीभुजां परिवृढे शश्वद्विपक्षे स्थितम् । सर्वक्ष्मापतिमौलि[illegible] विबुध[illegible]भूस्त्वद्दत्तनज्ञा- चन्द्र[illegible] प्रभो चित्रं पश्य तव प्रतापदहनं जानन्ति सत्तार्किकाः जनमु[illegible] मण्डनम् । [illegible]म त्वदनेकचित्रचरितप्रोद्दामकी[illegible]दल्लादैवधूतमूर्ध्नि सकल[illegible]संचाः [illegible]गे विहरति [illegible]श्रोत्राः फणिनस्तदेतदुचितं [illegible] काश्यप्येषा हिमकर- [illegible]मी दिशामीश्वराः ॥ २२ ॥ भ्रान्त्वा भूवलयं दशास्यदमन[illegible] ॥ ११४ ॥ विद्यारत्नं [illegible]मरालसंगमवशात्सा तत्र गर्भिण्यभूत् । पश्य स्वर्गतरंगिणीपरि[illegible]संस्का स्रोतोरत्नं विबुधत- [illegible]ति विशालमण्डकमिदं शीतद्युतेर्मण्डलम् ॥ २३ ॥ ज्ञाते तत्पुरु[illegible]हिमा[illegible]॥ निशारत्नं चन्द्रः [illegible]विग्रणीरल्पः कोऽपि समाश्रयन्निह बहुव्रीहिं बहुव्रीहिभाक् । [illegible] । कलारत्नं गानं इति कुर्वन्कविभास्करस्तस्मादण्वपि कर्म धारयतु न द्वन्द्वे तु निर्द्व[illegible]तेः ॥ ११६ ॥ वारिजिघृक्षयार्णवगतैः साकं व्रजन्ती मुहुः ससर्गाद्वडवानलस्य सम[illegible]पतपने कोपावलिं मन्ये राम तया क्रमेण जनितो युष्मत्प्रतापानलो येनारातिवधूविलोच[illegible]म वैरिवनितासीमन्त- वर्धते ॥ २५ ॥ ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरे[illegible]देव श्रीनरसिंह ते वानरभटान्संतारयन्तेऽपि च । नैते ग्रावगुणा न वारिधिगुणा नो वान[illegible] नूनमासन्पुनर्जन्मानो [illegible]रथैः प्रतापमहिमा सोऽयं समुज्जृम्भते ॥ २६ ॥ कीर्तिः श्रीरघुवंशदी[illegible]वनो निःशेषमर्घायते [illegible] ज्वालाकलापायते [illegible] करोऽयमपरः [illegible] किं वासौ

[illegible] स्वसतीत्वव्रतज्ञापनाय दिव्यकरणं युक्तमेव. अत्राय भाव. या हि स्त्री दिव्य[illegible] गाग्नौ; अपर देवताः प्रदक्षिणीकृत्य पाण्योरनल दधती सप्तमण्डलान्यतिक्रामति, ततो वि[illegible] सर्प कर्षति. तद्वदिय त्वत्कीर्तिरपि जलाग्निराजपदविष्णुपदसर्पस्पर्शनाख्यानि पञ्चदिव्यानि हाय विवत्त इति २ उत्कटा ३ कम्पितः ४ शेषशिरोवधूनने भूमे पात एव स्यात्ततस्तेषा[illegible] कावस्थान भवेद्यतस्तेषा भूम्याश्रितत्वात्तसाश्च शेषाश्रितत्वादित्यर्थः. ५ हस.. ६ तीरे. ७ कुन्[illegible]तीत्याहेत्यर्थः..

प्रलयानलः किमथवा सर्वोऽपि भौमानलः श्रीमन्सिंह भवत्प्रतापमहिमा नोदेति केषां मतिः ॥ १२० ॥ काठिन्यं कुचकुम्भयोर्नयनयोश्चाञ्चल्यमेतद्द्वयं भो ब्रह्मन्भवता कथं न पदयोरस्माकमासादितम् । इत्थं श्रीनरसिंह ते त्रिभुवनाधीशस्य धाटीभिया कान्तारेषु मिथः पलायनपरा जल्पन्ति वैरिस्त्रियः ॥१२१॥ एताः संप्रति गर्भगौरवभराद्राज्ञोऽवरोधाङ्गनाः कान्तारेषु पलायितुं बत कथं पद्भ्यां भवेयुः क्षमाः । इत्थं चेतसि संविभाव्य सदयं वैकुण्ठकण्ठीरव त्वन्नादावलिभिः सखीभिरिव किं तद्गर्भपातः कृतः ॥१२२॥ स्नातस्त्वद्रिपुरक्तपाथसि यशोधौताम्बरं धारयँल्लक्ष्मीश त्वदरातिवक्त्रकमलैर्भूदेवतां पूजयन् । जुह्वच्चैतदसून्प्रकोपदहने युष्मत्प्रतापोदयः शत्रुच्छत्रधरार्थदर्पयशसां प्राणाहुतीराददे ॥ १२३ ॥ कीर्तिः श्रीनरसिंह ते त्रिपथगा तत्रोदितं कैरवं चान्द्रं मण्डलमत्र नीलमिव यत्तद्भृङ्गवृन्दं किमु । यद्वा त्वद्दलितारिवृन्दतरुणीचित्तेन्धनाग्नेः स्थलं चन्द्रस्तत्र विभाति नीलमिव यद्धूमः स मन्यामहे ॥ १२४ ॥ अन्तर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरे सोऽपि शेते सिन्धोः सोऽप्येकदेशे तमपि चुलुकयां कुम्भयोनिश्चकार । धत्ते खद्योतलीलामयमपि नभसि श्रीनृसिंह क्षितीन्द्र त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति ॥ १२५ ॥ नृत्यद्भर्गाट्टहासप्रचरसहचरैस्तावकीनैर्यशोभिर्धावल्यं नीयमाने त्रिजगति परितः श्रीनृसिंह क्षितीन्द्र । नेदृग्यद्येष नाभीकमलपरिमलप्रौढिमासादयिष्यद्देवानां नाभविष्यत्कथमपि कमलाकामुकस्यावबोधः ॥ १२६ ॥ श्रीमद्वैकुण्ठकण्ठीरव तव निनदाकर्णनत्रासधावच्छक्रेभोद्भिन्नगण्डस्थलविगलदतिस्वच्छमुक्तामणीनाम् । माला तारावलीयं विलसति च पतद्दानपाथःपयोधिर्नो चेत्कत्या नु तारावलिरथ लवणः सागरोऽसौ कुतस्त्यः ॥ १२७ ॥ द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्पश्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः । द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्वन्नानन्दं कोविदानां जगति विजयते श्रीनृसिंहः क्षितीन्द्रः १२८ ॥ **वीरवरः** ॥ कामो वामदृशां निधिर्नयजुषां कालानलो विद्विषां स्वःशाखी विदुषां गुरुर्गुणवतां पार्थो धनुर्धारिणाम् । लीलावासगृहं कलाकुलजुषां कर्णः सुवर्णार्थिनां श्रीमान्वीरवरः क्षितीश्वरवरो वर्वर्ति सर्वोपरि ॥ १२९ ॥ **वीरभानः** ॥ लङ्काधामनि वीरभानृपतेः प्रेक्ष्य प्रतापोदयं प्रत्यागारमधीरनीरजदृशो भूयो हुताशभ्रमात् । क्षुभ्यद्वाणिविधूतपाणिविगलन्मुक्तामणिप्रस्खलद्वाष्पश्रेणिविलोलवेणिदयितं कण्ठस्थले बिभ्रति ॥ १३० ॥ भेरीझाङ्कृतिभिस्तुरंगनिनदैः कुम्भीन्द्रकोलाहलैः प्रस्थाने तव वीरभान दलितं ब्रह्माण्डभाण्डोदरम् । आधाय ज्वलति प्रतापदहने रङ्कैः पुनर्वेधसा तारानायकतारकासुरसरिद्व्याजादिवायोजितम् ॥ १३१ ॥ **वीरसिंहः** ॥ वीरसिंहारिनारीणामञ्जनाक्ताश्रुबिन्दवः । उरोजे पतिता रेजुः

१ विष्णोरुदरे. २ शेषे. ३ ज्योतिरिङ्गणः. ४ विस्तारस. ५ सदृक्षैः. ६ कीर्तिवच्छुभ्र इत्यर्थः.

सरोजे मधुपा इव ॥ १३२ ॥ यस्योच्छिन्ना न वेदा मनसि सदयता दूषणानामभावो दक्षो दूरेऽणुदृष्ट्या जहति कठिनतां दानशक्तिर्गरिष्ठा। आधत्ते यश्च कुन्दं शिरसि द-[1]रवतां यश्च दूरीकृतार्तिः स श्रीमान्वीरसिंह त्वमिव तव रिपुस्तत्र दम्भं प्रतीमः ॥१३३॥ वै-कुण्ठाभप्रकामः कमलयुतशिराः कुञ्जराकृष्टदृष्टिः कोदण्डोदारनामाप्यमितपरिजनो विश्वविख्यातकीर्तिः। सुन्दर्यासक्तचित्तः समरणविजयी कङ्कणाहारयुक्तो वीर श्रीवीरसिंह त्वमिव तव रिपुः किंतु मुक्तादिवर्णः ॥ १३४ ॥ **रूपनारायणः** ॥ अये यदि समीहसे परपुरावरोधं सदा समाकलय मद्वचः किमपि रूपनारायण। प्रतीपनृपनागरीनयननीरकल्लोलिनीसमुत्तरणचातुरीं तुरगराजमध्यापय ॥ १३५ ॥ **रामजामः** ॥ क्षुभ्यत्प्रत्यर्थिपृथ्वीपतिहृदयसरस्तोषशोषं दधाने त्वद्दोर्ष्णां सुप्रतापे तपति बहुगुणा रामजाम क्षितीन्द्र। सूर्यो मित्रत्वमायात्समजनि दहनः कृष्णवर्त्मा निमज्जन्पारावाराम्बुपूरे निवसति वडवावह्निरन्यत्किमु ब्याम् ॥१३६॥ **श्रीवीरः** ॥ दृष्टः साक्षादसुरविजयी नाकिनां चक्रवर्ती मात्स्यो न्यायः कथयति यथा वारुणीदण्डनीतेः। पातालेन्द्रादहिभयमथास्त्येव नित्यानुषक्तं तन्नः पुण्यैरजनि भवता वीर राजन्वती भूः ॥१३७॥ ऐश्वर्यं नहुषस्य शंभुविषयश्रद्धा दशास्यस्य सा शौर्यं श्रीरघुनायकस्य सहजं गाम्भीर्यमम्भोनिधेः। दातृत्वं बलिकर्णयोरिह जगत्येकत्र चेत्स्यात्तदा श्रीवीरक्षितिपालमौलिनृपतेः साम्यं कथंचिद्भवेत् ॥ १३८ ॥ भिक्षुद्वारि सदानवारिमधुपश्रेणीमिमान्दूभ्रमान्धत्ते यन्तृवधूर्वधूकरतलं शोणाम्बुजाशङ्कया। सैवान्वेति पलायितेति चकिता हस्ताग्रमाधुन्वती मुग्धा वीरमहीपते तदखिलं त्वद्दानलीलायितम् ॥ १३९ ॥ श्रीवीर क्षितिपाल ते सुललितं दानोद्यमे यद्वचः क्वास्ते सर्वहिरण्यमित्युदभवत्तत्कालमाकर्ण्य तत्। तापः प्राप हिरण्यरेतसि जनिं जाड्यं हिरण्याचले स्वेदाम्भोऽपि हिरण्यगर्भवपुषि स्वापाय संत्रासतः ॥ १४० ॥ राजानः शशिभास्करान्वयभुवः के के न संजज्ञिरे भर्तारं पुनरेकमेव हि भुवस्त्वां वीर मन्यामहे। येनाङ्गं परिमृद्य कुन्तलमथाकृष्य व्युदस्यायतं चोलं प्राप्य च मध्यदेशमसकृत्काञ्च्यां करः प्रापितः ॥ १४१ ॥ स्वान्ते वैभवमस्ति नैव परतः प्रामाण्यनिर्धारणं नैवातद्वति तत्प्रकारकमतिर्नैवोपमानं तव। त्वद्देशेषु विभाति न च्छलकथा नो वा क्वचित्संशयः श्रीवीर प्रथिता कथं पुनरियं नैयायिकत्वप्रथा ॥ १४२ ॥ कीर्तिस्ते धनिकाधनं मधुरिमा तस्याधमर्णा सुधा शीतांशुः प्रतिभूस्तदर्थनकृते सैषा दिव धावति। सा लीना तव वाचि वीरनृपते चन्द्रो निरङ्घ्रिध्वनिः शङ्कातङ्कभृदंशुकावृततनुर्नक्तं परिभ्राम्यति ॥ १४३ ॥ वीरक्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुपस्त्वत्कीर्तेस्तुलनां मृगाङ्कमलिनो धत्तां कथं चन्द्रमाः। स्यादेतत्त्वदरातिसौधशिखरप्रोद्भूतदूर्वाङ्कुरग्रासव्यग्रमतिः पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥ १४४ ॥ श्रीमद्वीर महीमहेन्द्र भवतः प्रस्थानकालोद्भव-

१. इह पद्ये शत्रुपक्ष आद्याक्षरत्यागः.

द्यादित्रध्वनिभीतभानुहरयो द्रागम्बरं प्रागमन्। तस्मिन्नेवमुपद्रवे किल विपर्यस्तं समस्तं रवेर्युग्याः सप्तरथाङ्गमेकमपदं सूतश्चिरादुद्भ्रमः ॥ १४५॥ गर्वग्रन्थिलगुर्जरज्वरकरः कर्णाटकर्णाटवीदावाग्निर्द्रविणेन्द्रवीर्यदलनो गौडेन्द्रनिद्राहरः। हम्मीरप्रमदामदालसलसद्भ्रूनर्तनस्तम्भनः प्रस्थाने तव वीर डिण्डिमचमत्कारः समुज्जृम्भते ॥ १४६ ॥ श्रीकण्ठासक्तहस्तोऽधिगतमणिगणः शैशवाभ्यस्तविद्यो लावण्यध्वस्तकामो कविजनमिलितो यौवनाप्तप्रकामः। आदत्तक्षोणिदण्डो द्विजवशकृतधीः कङ्कणाहारयुक्तः स श्रीमान्वीर वीर त्वमिव तव रिपुस्तत्र मुक्तादिवर्णः ॥ १४७ ॥ लोकानां मानमात्रं मनुजननरतिस्त्वंससूदाङ्घ्रिरक्षो राज्ञामासत्त्ववदक्षः कृतसमयरुचिर्मण्डितो वीरवर्गैः। कायत्वज्झीनकेतुः करकलितयवा कोषमानैर्विहीनः श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मैन्दं प्रतीमः ॥ १४८ ॥ वादानाशानुयुक्तो नगरकृतमतिर्यौवनाक्रान्तदेहः संग्रामप्राप्तधैर्यो न विदलितरुची राजलक्ष्म्यातिहीनः। नित्यं दारासभस्थः प्रखरतनुनिभो यः सुभिक्षानुवर्ती श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मुक्तादिवर्णः ॥ १४९ ॥ श्रीवीर त्वद्रिपूणां रणशिरसि शरैर्भिन्नशीर्षाङ्ककानां वीरावेशाद्गतानां दिवमधिकरुषान्योन्यशौण्डीर्यभाजाम्। क्षेपे दिव्याङ्गनानां भुवि कचनिचयो द्राक्कटाक्षे शरासासीपुभ्रान्त्यारिवीर भ्रमकुटिलहृदामाजिरावर्तते स्म ॥ १५० ॥

बल्लालः ॥ बल्लाल क्षोणिपाल त्वदहितनगरे संचरन्ती किराती कीर्णान्यालोक्य रत्नान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी। मुक्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती श्वासामोदानुयातैर्मधुकरनिकरैर्धूमशङ्कां बिभर्ति ॥ १५१ ॥ मणिपालः ॥ प्रामाण्यं परतो न शक्तिगणना सादृश्यलोपः सदा कार्यं चेश्वरकर्तृ नन्वनुमितौ ज्ञानं विशिष्टात्मकम्। सर्वं न्यायनयानुसारिविबुधे चैतन्यनाशोपमान्नश्येत्तन्मणिपाल भूप भवतो नैयायिकत्वं कुतः ॥ १५२ ॥ मुकुन्ददेवः ॥ करवारिरुहेण संधुनाने तरवारिं नृपतौ मुकुन्ददेवे। वरयन्त्यमरावतीतरुण्यः प्रथमं काञ्चनपारिजातमालाः ॥ १५३ ॥ रुद्रः ॥ कतिपयदिवसैः क्षयं प्रयायात्कनकगिरिः कृतवासरावसानः। इति मुदमुपयाति चक्रवाकी वितरणशालिनि वीररुद्रदेवे ॥ १५४ ॥ कवीन्द्राणामासन्प्रथमतरमेवाङ्गणभुवश्चलद्भृङ्गासङ्गाकुलकरिमदामोदमधुराः। अमी पश्चात्तेषामुपरि पतिता रुद्रनृपतेः कटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः ॥ १५५ ॥ भूयो भूयस्त्वदरिदलनाद्वासनाशासकाशाद्यातैर्वातैरहह तरणेरुल्बणेषु व्रणेषु। सायं सायं लवणसलिलस्पर्शबाधासमाधावस्यालस्या कलितवपुषो रुद्र कः स्यादुपायः ॥ १५६ ॥ चन्द्रोऽनेन कलङ्कितो बत वने रामोऽमुना वञ्चितः किं चानेन कुलाङ्गनानयनयोर्लावण्यलक्ष्मीर्हृता। सस्यानामभिलापकस्य भवतः श्रीरुद्रचन्द्र प्रभो तन्मन्ये हरे-

१ अश्वा. २ इह पद्ये शत्रुपक्ष आद्याक्षरत्याग. ३ अत्र पद्ये मकारस्थाने दकारः पठनीयः. ४ महती. ५ अल्प. ६ मेरु. ७ नाश. ८ दानम्.

णस्य हन्त हननायाखेटकोपक्रमः ॥ १५७ ॥ रुद्रस्यापि दिगम्बरस्य कृपया स्वर्गेऽमराः कोटिशो याचन्ते न कदापि काञ्चनमहो शश्वत्सदा भुञ्जते । एकोऽहं वसुधातले न च पुनः स्नेहस्य पात्रं सदा याचिष्ये कथमन्यभूपतिमतः श्रीरुद्रभूमीपते ॥ १५८ ॥ भार्गवः॥ ध्नन्वन्ती तिमिरद्युतिं कृतवती प्रत्यर्थिचक्रव्यथामेषा भार्गव तावकी विजयते निस्त्रिंशधारा निशा । युद्धक्रुद्धविपक्षपक्षविदलत्कुम्भीन्द्रकुम्भस्थलभ्रश्यन्मौक्तिककैतवेन परितस्तारावलीं वर्षति ॥ १५९ ॥ भीमः ॥ रुधिरविसरप्रसाधितकरालकरवालरुचिरभुजपरिघः । झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृपभीमः ॥१६०॥ युष्मद्दोर्दण्डमण्डत्पवनामितरणचण्डकोदण्डदण्डोन्मुक्तेषूच्छिन्नमूर्च्छत्प्रतिनृपतिभुजाखण्डमुण्डा च कीर्णा । गायन्नृत्यत्प्रवल्गद्रजनिचरवधूदत्ततालैः करालैर्वेतालैरट्टहासप्रकटितदशनैर्युद्धभूर्भाति भीम ॥ १६१ ॥ मानसिंहः ॥ काञ्चीं काञ्ची न धत्ते कलयति न दृशा केलितल्पं कलिङ्गी सिन्दूरं दूर एव क्षिपति करतलन्यस्तमाङ्गी पुरंध्री । सौराष्ट्री मार्ष्टि भूयः सपदि नयनयो रक्तता रक्तिमानं कार्णाटी कर्णिकायां मलिनयति मनो मानसिंहप्रयाणे ॥ १६२ ॥ भावसिंहः ॥ यस्याग्निः कोपपुञ्जे वसति खुरपुटे वाजिनां गन्धवाहो लक्ष्मीः सस्नेहदृष्टौ कमठकुलमणेर्वाचि वाचामधीशः । रौक्षे कौक्षेयकाग्रे क्षपितक्षपितरि कोपनोऽसौ कृतान्तः कस्तं श्रीभावसिंहं प्रबलमखभुजामाश्रयं नाश्रयेत ॥ १६३ ॥ भैरवः ॥ धनानि विद्वत्कविमण्डलीषु पञ्चेषुबाणानपि कामिनीषु । वर्षन्ति वज्राण्यरिधोरणीषु श्रीभैरवक्षोणिमणेः कटाक्षम् ॥ १६४ ॥ कल्याणदासः ॥ कीर्तिस्वर्गतरंगिणी हिमगिरिर्विद्यानटी रङ्गभूर्लावण्यामृतभाजनं रसिकता वल्ली रसालद्रुमः । कान्तापाङ्गमृगस्थली तरुणता लक्ष्मीविलासाम्बुजं जीयाद्विश्वविभूषणं नरपतिः कल्याणदासाभिधः ॥ १६५ ॥ कातववीरभद्रः ॥ कीर्तिः कातववीरभद्र भवतः स्ववाहिनीगाहिनी दिक्पालानखिलान्परीत्य दधती पाण्योः प्रतापानलम् । सप्ताम्भोनिधिमण्डलान्यधिगतास्त्वय्येकपत्नीव्रतख्याते विष्णुपदं स्पृशत्यनुदिनं शेषस्य शीर्षाण्यपि ॥ १६६ ॥ कुसुमेन्द्रसाहिः ॥ वीर श्रीकुसुमेन्द्रसाहिनृपतेः प्रौढप्रतापो वरः कन्या काञ्चनमालवक्षितिपतेः साम्राजलक्ष्मीरियम् । तस्या वेपकरग्रहस्य समये तत्कुम्भसंस्थापितं कर्तुं मण्डपबन्धन विरचितु विप्रा वयं प्रेषिताः ॥ १६७ ॥ अर्जुनेन्द्रः ॥ आयातस्ते समीपं तव गुणविमलान्पण्डितो वादकर्ता काव्ये भव्ये हि रेवाभवविगतरसे रुग्युगे रोपहर्ता । नाहं जाने चिकित्सां सकलगुणनिधे दुर्दरिद्रत्वरोगे श्रीमद्राजार्जुनेन्द्र प्रबलमपि यते कल्पिता सा चिकित्सा ॥ १६८ ॥ कार्तवीर्यः ॥ काष्ठानुषङ्गात्परिवर्धमाने जाग्रत्प्रतापज्वलने त्वदीये । श्रीकार्तवीर्ये प्रसभं पतन्ति प्रत्यर्थिपृथ्वीपतयः पतङ्गाः ॥ १६९ ॥ माणिकः ॥ यशःशशाङ्काभ्युदये प्रवृद्धो द्विपद्वधूनेत्रजलाम्बुराशिः । नष्टं हि दारिद्र्यतमो बुधानां तव क्षितौ माणिक

भूमिपाल ॥ १७० ॥ सदग्रहारैर्भवता प्रदत्तैर्मदङ्गनाकण्ठतटाग्रहारैः। श्रीमाणिकक्षोणि-पते प्रतुष्टा यथा यशो गायति तद्विधेहि ॥१७१॥ संजाते द्रवरूपतां हि रजताद्रौ स्वर्णशैले द्रुतं भूमीपालललाम माणिकविभो प्रौढैः प्रतापानलैः। योगेऽभूदनयोः सुपाण्डुररुचिः सा तेऽरिकान्ताजनैर्नीता स्वीयकपोलयोश्च विरहव्याजेन गोपायते ॥ १७२ ॥ भोगासक्तैक-चेता भयवशसुखकृद्भीतिहा स्वाश्रितानां भागान्भव्याय यच्छज्जगति भवनतः साधु भण्डारतिश्च। भूपानां ग्लानिकर्ता भटनगजयभध्वंसदेहो हि भल्लाकीर्णः श्रीमाणिकेन्द्र-स्त्वमिव तव रिपुस्तत्र कम्पं प्रतीमः ॥ १७३ ॥ संग्रामक्षोणिदृप्यच्चपलरिपुचमूसिन्धुकी-लालमालां पीत्या कालः कृपाणोऽम्बुद उपसमरं गर्जते वीरघोषैः। वर्षत्युद्दामगौरं दिशि दिशि तव भोः कीर्तिवारीभकुम्भप्रोद्यन्मुक्ताहिमाश्मच्छुरितमरिततेर्माणिकक्षोणिपाल ॥ १७४ ॥ वेङ्कटपतिः ॥ अत्र मन्मथमिवातिसुन्दरं दानवारिमिव दिव्यतेजसम्। शैलराजमिव धैर्यशालिनं वेद्मि वेङ्कटपतिं महीपतिम् ॥ १७५ ॥ रूपमणिः ॥ श्रीमद्रूप-मणे गुणेन यदयं हीनोऽपि नीतो गुरोर्गाढं गौरवमादरेण भवता तेनास्ति शंभुर्भवान्। यत्तेनाप्यऋजुः कलङ्कविकलो दोषाकरोऽपि स्फुटं विप्राधीशपदे विधाय विधृतश्चान्द्रोऽनिशं मस्तके ॥ १७६ ॥ रामनाथः ॥ करकम्पितखड्गयष्टिभीमे रणसंनाहितरामनाथवीरे। अरिभूभृदमर्त्यसुन्दरीणामचलन्दक्षिणवामलोचनानि ॥ १७७ ॥ राजेन्द्रसिंहः ॥ मूर्धा कल्याणवाही करजितवसुधः सर्वदा पूर्णकामो विख्यातः कर्णवृत्त्या वचसि न च कटु-श्चित्रपाकानुभावी। कोशापेक्षी परस्मादुचितबहुकथः सर्वदा पूर्णलोक इत्थं राजेन्द्रसिंह त्वमिव तव रिपुस्तत्र कम्पं प्रतीमः ॥ १७८ ॥ श्रीमिश्रः ॥ युधि श्रीमिश्रोर्वीधर तव रिपूणां बलमदैः[1] सहोभूत्वा रूपं भटिचिणि सदैः[2] प्राप च गदैः[3]। नदैरासीच्चापात्ससमपयदैस्तत्र समभूत्सुतो ज्ञातां निन्दैः[10] समजनि विसुभ्यामपि रदैः[11] ॥ १७९ ॥ माधवः ॥ सत्यासक्तमना गुणाकरलताकीर्णो न दीनाश्रयोरिष्टध्वंसपराजयश्च सुमनोवृन्दैरलं वन्दितः। नानास्थानक-लाप्रधानमहिमा नित्यं सदानन्दकः श्रीमान्माधव एव माधवसमः क्षोणीतले राजते ॥१८०॥ राजबहादुरः ॥ नित्यं वृद्धिमुपैषि संकलयसे सर्वाः कलाः सर्वदा सानन्दं कुमुदाकरं वितनुषे नास्ते कलङ्कस्तव। सर्वाशाः परिपूरयन्समुदयं धत्सेऽनिशं सर्वतो न श्रीराज-बहादुरेन्द्र नृपते चन्द्राधिकस्त्वं कथम् ॥ १८१ ॥ नाना ॥ जयश्रियः कृपाणीयं वेणी नानाख्यभूपतेः। अस्यां करगृहीतायामसावभिमुखी तव ॥ १८२ ॥ वङ्गालिदासः ॥ वङ्गालिदास भवतः शुभनामवर्णाः पञ्चेषुपञ्चविशिखानि नितम्बिनीषु। प्राणन्ति बन्धुषु विरोधिषु पाण्डवन्ति देवद्रुमन्ति कविपण्डितमण्डलीषु ॥ १८३ ॥ मल्लशाहः ॥ मूर्गः

---

१ विष्णुः. २ हरम्. ३ मदनशासकत्वात्. ४ कवचित. ५ अदन्तीत्यर्थः. ६ असादीत्यर्थः. ७ अगादीत्यर्थः. ८ अपानादीत्यर्थः. ९ समपापादीत्यर्थः. १० स्वनिन्दीत्यर्थः. ११ विस्वरादीत्यर्थः.

प्रमीललोचनः पिकः कृतोक्तिमोचनः श्रितानतिः कृताततिर्मरालिकास्खलद्गतिः। निरीक्ष्यते लसन्मते सुमह्लशाह भूपते तवारिकामिनी वृथाद्भुतं हुताटवी यथा ॥ १८४ ॥ पलायिता तवारिवामलोचना यदा यदा पुलिन्दनायकैः सुलिप्तकालकूटसायकैः। विहाय नासिकासु मौक्तिकं स्रजं च मौक्तिकीं विलुण्ठिताः पुमर्थपञ्चमेह मह्लभूपते ॥ १८५ ॥ आदायादाय मुक्तास्तदनु शिखिधियादाय माणिक्यसर्वं धूमभ्रान्तिं वहन्त्यः स्ववदनकमलामोदलुब्धालिवृन्दे। पक्तुं भिल्लयः प्रवृत्ताः सरभसमसकृद्यद्विषत्पत्तनेषु ब्रूमः किं कीर्तिपूरं धवलितवसुधं मह्लशाहस्य तस्य ॥ १८६ ॥ निजामशाहः ॥ नृपतिनिजाम तवाद्भुतचरणार्पणबहलपीडाभिः। रचयति बहिरिव रसनामरुणध्वजकैतवादवनिः ॥ १८७ ॥ धराणिधर निजामशाह युष्मत्करकरवालकरालकालसर्पः। द्विषदसुपवन निपीय पीनो दिशि दिशि मुञ्चति कञ्चुकं यशस्ते ॥ १८८ ॥ अटत्कटकघोटकप्रकटटापटङ्कारवच्चटच्चटदिति स्फुटं स्फुटति मेदिनी खर्परम्। निजामधरणीपतौ वलति कौतुकाडम्बरादिदं भुवनमण्डलं दरदरीदरीदर्यहो ॥ १८९ ॥ क्षोणीकाम निजामशाह भवतः प्रौढैः प्रतापानलैर्द्रागेव द्रवरूपतामुपगते चामीकराणां चये। भ्रश्यद्वासवधामधौरणि मुहुर्मज्जद्रुहग्रामणि त्रस्यत्कामिनि निःपतद्धनितलं मेरोः समुन्मीलति ॥ १९० ॥ क्षोणीकाम निजाम तावकभुजं लब्ध्वा भुजंगीश्वरं जानीमः करवालकालभुजगी किं नाम गर्भिण्यभूत्। मत्तेभेन्द्रविभिन्नकुम्भविदलन्मुक्ताकलापच्छलादच्छामण्डपरंपरामधिरणं सूते स्फुरन्ती मुहुः ॥ १९१ ॥ वाहव्यूहक्षुरक्षतां वसुमतीं संवीक्ष्य मूर्च्छावतीं भेरीझाङ्कृतिचञ्चलेन पयसा वारांनिधिः सिञ्चति। दिग्बाला तनुते निजामनृपतेर्वातं पताकांशुकैर्धूलीधोरणिरश्विनीसुतमिव प्रष्टु दिवं धावति ॥ १९२ ॥ विद्वद्गोष्ठीगरिष्ठ प्रतिभटदमन श्रीनिजाम प्रतीमः कृत्वा त्वत्कीर्तिगाथां वहति गणविधिं पद्मयोनिः कठिन्या। वक्रालेखा गुरूणाममृतकरकलां कञ्जमल्लीमरालाः शुद्धा लेखा मधूनां बिसभुजगनभोनिम्नगा दन्तिदन्ताः ॥ १९३ ॥ अङ्गासंजातभङ्गाद्यनवनवसतिप्राप्तरङ्गाः कलिङ्गास्तैलङ्गाः स्वर्गगङ्गाभिषवणमतयः शौर्यदङ्गाश्च वङ्गाः। लाटाः स्विद्यल्ललाटाः पदगमनदृढाः श्वासलोलाश्च चोला जायन्ते श्रीनिजाम प्रथुरण भवतः प्रौढनिःसाणनादात् ॥१९४॥ अकबरः ॥ जम्बुद्वीपगृहप्रकाशनकरी स्नेहक्षमाधायिनी नीत्योद्गीर्णमषीततिः खलजनश्रेणी पतङ्गान्तकृत्। गाजीन्द्राकबरक्षितीश्वरमनश्चिन्तान्धकारापहा यस्य क्षोणिपतेरराजदखिलं दीपोऽपमा लेखनी ॥१९५॥ हस्ताम्भोजालिमाला नखशशिरुचिरश्यामलच्छायवीचिस्तेजोऽग्नेर्धूमधारा वितरणकरिणो गण्डदानप्रणाली। वैरिश्रीवेणिदण्डो लवणिमसरसी बालशैवालवल्ली वेल्लत्यम्भोधरश्रीरकबरधरणीपालपाणौ कृपाणः॥ १९६ ॥ वीर त्वं कार्मुकं चेदकबर कलयस्युग्रटङ्कारघोषं दूरे सद्यः कलङ्का इव धरणिभृतो यान्ति

१ गजशिबिकादिवाहनम्.

कङ्कालशेषाः। शङ्कापन्नश्च किं कारणमिति मनसा भ्रान्तिपङ्कायितेन त्यक्त्वाहंकारमङ्काद्विसृजति गृहिणीं किं च लङ्काधिनाथः॥१९७॥ **जल्लालुदीनः**॥ कर्णाटं देहि कर्णाविकविधिविहितत्यागलाटं ललाटप्रोत्तुङ्गद्राविडं वा प्रचलभुजचलप्रौढिमागाढराढम्। प्रस्फूर्जद्गुर्जरं वा दलितरिपुवधूगर्भवैदर्भकं वा गाती राजीवदृष्टे कुशशतमथवा शाहजल्लालुदीनः॥ १९८॥ गाजी जल्लालुदीन क्षितिपकुलमणे द्राक्प्रयाणे प्रतीते प्रेयस्यः प्रारभन्ते तरलतरगतिव्याकुला मङ्गलानि। नेत्राम्भःपूरपूर्णस्तनकलशमुखन्यस्तबालप्रवालास्त्रुट्यन्मुक्ताकलापच्च्युतकुचकुसुमच्छन्नकीर्णलाजाः॥ १९९॥ **मुद्दाफरशाहः**॥ आकाश प्रसर प्रसर्पत दिशस्त्वं पृथ्वि पृथ्वी भव प्रत्यक्षीकृतमादिराजयशसां युष्माभिरुज्जृम्भितम्। श्रीमुद्दाफरशाह पार्थिवयशोराशेः समुज्जृम्भणाद्बीजोच्छ्वासविदीर्णदाडिमदशां ब्रह्माण्डमारोक्ष्यति॥ २००॥ **साहिजहा**॥ भूभृन्मौलितटीषु वर्षति महाधाराधरेऽस्मिन्नसौ जाता भूप सरस्वती विजयिनी कल्लोलिनी पाविनी। श्रीमत्साहिजहा ब्रवीमि तदिदं माहात्म्यमस्याः कथं यस्यां मज्जति पङ्कजीयति शिवस्तन्मूर्धजो लीयति॥ २०१॥ **सिन्धुराधीश्वरः**॥ अशर्मदहनज्वलत्कटुकटाक्षरूक्षेक्षणक्षणक्षपितशात्रवे जयति सिन्धुराधीश्वरे। वयं न बहु मन्महे निजभुजानमद्गाण्डिवच्युतास्त्रशिखिताण्डवज्वलितखाण्डवं पाण्डवम्॥ २०२॥ **दिल्लीन्द्रचूडामणिः**॥ राजेति क्षणदाकरं विजयते दानोरुलक्ष्मीरिति स्वर्नागं बहुवाहिनीपतिरिति क्षीरोदमास्कन्दति। दुर्गाधीश इति स्फुटं पुररिपुं विद्वेष्टि भोगोद्भटश्रीरित्यर्हति वासुकिं स्वयशसा दिल्लीन्द्रचूडामणिः॥ २०३॥ **पारसीकक्षितीशः**॥ यदपि कटकयात्रारोधि पाथोधिना ते दिशि दिशि मम यत्नापारसीकक्षितीश। तदपि कुरु मुधा नो जीवितान्तं नितान्तं कथयति बहुभार्यं नैकनारीवियोगः॥ २०४॥ **गुर्जराधीशः**॥ कालिन्दि ब्रूहि कुम्भोद्भव जलधिरहं नाम गृह्णासि कस्माच्छत्रोर्मे नर्मदाहं त्वमपि कथमहो मत्सपत्न्याश्च नाम। मालिन्यं ब्रूहि किं ते प्रविरलविगलत्कज्जलैर्मालवीनां नेत्राम्भोभिः किमासां समजनि कुपितो गुर्जराणामधीशः॥ २०५॥ **कलिङ्गेश्वरः**॥ आयुर्दानमहोत्सवस्य विनतक्षोणीभृतां मूर्तिमान्विश्वासो नयनोत्सवो मृगदृशां कीर्तेः प्रकाशः परः। आनन्दः कलिताकृतिः सुमनसां वीरश्रियो जीवितं धर्मस्यैष निकेतनं विजयते वीरः कलिङ्गेश्वरः॥ २०६॥ धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः। एकोऽपि त्रिकलिङ्गभूमितिलक त्वत्कीर्तिराशिर्ययौ नानामण्डनतां पुरंदरपुरीवामभ्रुवां विग्रहे॥ २०७॥ **चोलेन्द्रः**॥ त्वत्खड्गखण्डितसपत्नविलासिनीनां भूषा भवन्त्यभिनवा भुवनैकवीर। नेत्रेषु

१ नर्मदायाः समुद्रस्य च संवादोऽयम्. २ यमुनाभ्रान्त्या समुद्रेण कालिन्दीत्युक्ते कोपात्साकूतं नर्मदाया उत्तरम् "हे कुम्भोद्भव अगस्त्यमुने ब्रूहि" इति. ३ धृताकारः. ४ स्थानम्. ५ शत्रु..

कङ्कणमथोरुपु पैत्रवल्ली चोलेन्द्रसिंह तिलकं करपल्लवेषु ॥ २०८ ॥ सिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकैस्तत्त्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टाः । तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकैरित्थं चोलेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ॥ २०९ ॥ **बाङ्गालक्षोणिपालः** ॥ आग्नेयास्त्रप्रवीणप्रबलमृगभटाः शत्रुसंक्षोभदक्षा यस्य प्रौढप्रतापानलबहलशिखास्विन्धनत्वं प्रयाति । सोऽयं प्राचीपयोधिप्रहितकरततीतूर्णसंपूर्णकोपो बाङ्गालक्षोणिपालस्त्रिभुवनजनतागीतकीर्तिप्ररोहः ॥ २१० ॥ **मालवाखण्डलः** ॥ पर्यङ्के राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरंगः सङ्ग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः । भग्नप्रत्यर्थिवंशोल्बणविजयकरिस्नानदानाम्बुपट्टः खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥ २११ ॥ **कर्णाटवसुंधराधिपः** ॥ मागाः प्रत्युपकारकातरधिया वैवर्ण्यमाकर्णय श्रीकर्णाटवसुंधराधिपसुधासिक्तानि सूक्तानि नः । वर्ण्यन्ते कति नार्णवा न च नदीदावाग्निविन्ध्याटवी इन्द्रामारुतनिर्झरप्रभृतयस्तेभ्यः किमाप्तं मया ॥ २१२ ॥ **काविलेन्द्रः** ॥ विस्फार्य व्योमगङ्गाबलदुरुलहरीकैतवात्केसरालीरुच्चैर्मस्तिष्कदेशे हिमकरकपटान्मण्डलीकृत्य पुच्छम् । दिङ्नागारब्धलम्बस्तव विशदयशःकेसरी काविलेन्द्र ब्रह्माण्डारण्यवीथीगिरिगहनदरीसंभ्रमी बभ्रमीति ॥ २१३ ॥ वेलामुल्लङ्घ्य हेलादलितधरणिभृद्वाहिनीकोटिपूरैरुद्वेल्लत्काविलेन्द्र प्रबलजलनिधिः प्लावनायोज्जजृम्भे । स्यान्मग्ना मेदिनीयं प्रबलभुजबलप्रौढतच्चन्द्रहासज्वालाभिः संततं चेन्न दहति वडवा वीतिहोत्रोवधेता ॥ २१४ ॥

---

## राजविभूषावर्णनम् ।

यशःपटोऽयमद्भुतो न ते महीप कञ्चुकः । सुपुण्यकर्म भात्यदो जयप्रदं सुरक्षणम् ॥ १ ॥ प्रज्ञातृतीयोऽग्रविलोचनस्य भूत्योज्ज्वलस्येश्वरकामदातुः । कामारिमुत्सृज्य मुदा सकामा ह्युष्णीपगङ्गा तव भाति मूर्ध्नि ॥ २ ॥ चित्राभिरस्योपरि मौलिभाजां आभिर्मणीनामनणीयसीभिः । अनेकधातुच्छुरिताश्मरश्मेर्गोवर्धनस्याकृतिरन्वकारि ॥ ३ ॥ तमङ्गदे मन्दरकूटकोटिव्याघट्टनोत्तेजनया मणीनाम् । वंहीयसा दीप्तिवितानकेन चकासयामासतुरुल्लसन्ती ॥ ४ ॥ शिरोवेष्टनव्याजतस्ते मुखेन्दोः परं पक्षपाताद्ग्रसत्येव राहुम् । रुषा मूर्ध्नि बद्धं कचच्छद्मनालं शशाङ्कोऽङ्कहीनो विभात्येष राजन् ॥ ५ ॥ ताराधिनाथमभिजित्य मुखश्रियाद्धा राजंस्त्वया पदककैतवतो व्यलम्बि । बन्दीकृता इव तदीयवधूसमूहा हारच्छलेन तव वक्षसि भाति नूनम् ॥ ६ ॥ धवलकुसुमभास्वत्कञ्चुकस्योपरिष्टात्कनकपरिकरेण भ्राजसे राजराज । शरदि घनगणोद्यद्विद्युद्दामरेखाकलित इह धरेन्द्रः प्रोन्नतो विन्ध्य-

१ ज[illegible]; (पक्षे) वन्दयद्. २ पत्रयुक्ता; (पक्षे) पत्रिरारचना. ३ तिलकनामक [illegible]; (पक्षे) [illegible].

शैलः ॥ ७ ॥ स्वभावारक्तश्रीनखरसुषुमानद्धकनकस्फुरद्दिग्युद्राजत्कटकयुगलाभ्यां तव करौ । विभातः काश्मीरद्रवविलुलिताविन्द्रविजये हृते स्वर्गद्वारार्गल इव विभो द्विट्स्थितिकृते ॥ ८ ॥ त्वच्छ्रोत्रान्तं शरणमधिगे द्विट्प्रतापैकरत्नमध्ये कीर्तिद्वितयविलसन्मौक्तिकालंकृता मे । पुञ्जीभूते वपुषि दलितेऽद्धा चतुर्धा विधारं भीत्या कीर्तेः क्षितिपतिमणे ते प्रतापस्य भातः ॥ ९ ॥

## गजप्रशंसा ।

नीता कुम्भस्थलकठिनता कामिनीनामुरोजैः स्तेयं धृत्वा धृतमणिगणैः कञ्चुकैरावृतेव । इत्याख्यातं नरपतिगृहद्वारि कुम्भेन्द्रडिम्भाः शुण्डादण्डैर्वपुषि बहुलां धूलिमुद्धूलयन्ति ॥ १ ॥ सिन्दूरद्युतिमुग्धमूर्धनि धृतस्कन्धावधिश्यामिके व्योमान्तःस्पृशि सिन्धुरेऽस्य समरारम्भोद्धुरे धावति । जानीमो नु यदि प्रदोषतिमिरव्यामिश्रसंध्याधियैवास्तं यान्ति समस्तबाहुजभुजातेजःसहस्रांशवः ॥ २ ॥ एतद्गन्धगजस्तृषाम्भसि भृशं कण्ठान्तमज्जत्तनुः फेनैः पाण्डुरितः स्वदिक्करिजयक्रीडायशःस्पर्धिभिः । दन्तद्वन्द्वजलानुबिम्बनचतुर्दन्तः कराम्भोर्वमिव्याजादभ्रमुवल्लभेन विरहं निर्वापयत्यम्बुधेः ॥ ३ ॥ स्वीयोद्दानप्रगन्धप्रकुपितहृदयोत्तारितोद्दण्डशुण्डैरुद्गच्छत्पुच्छगुच्छप्रतिकरटिधिया सिन्धुरैर्धावमानैः । तत्पादन्यासनम्रीभवदचलभरोद्भ्रान्तिधारावघूर्णत्पारावाराम्बुपूर्णा धरणिरतितरां शङ्कमाना चकम्पे ॥ ४ ॥

## तुरगप्रशंसा ।

मेखलीयति मेदिन्याः ककुभः कङ्कणीयति । मण्डली तुरगः कुर्वञ्जगतः कुण्डलीयति ॥ १ ॥ धावन्तमनुधावन्ति हरिणं तव वाजिनः । नाभिनिर्मुक्तकस्तूरीलुब्धा इव समीरणाः ॥ २ ॥ अनूनवेगादयमद्वितीयश्छायातुरंगादपि लज्जमानः । खुरोद्धतैर्वीर तुरंगमस्ते रजोभिरह्नांपतिमावृणोति ॥ ३ ॥ प्रयातुमस्माकमिदं कियत्पदं धरात्तदम्भोधिरपि स्थलायताम् । इतीव वाहैर्निजवेगदर्पितैः पयोधिरोधक्षममुद्धतं रजः ॥ ४ ॥ इयती जगती कियती भविता नमिता न नयामिति याति हयः । वियदङ्गणरिङ्गणरङ्गणभूर्विमृशन्निव नर्तनमातनुते ॥ ५ ॥ किमङ्गारवद्गां खुरैः स्पर्शयन्तः कुरङ्गा इवाङ्गानि संकोचयन्तः । अटन्तो नटन्तो भटं तोषयन्तस्तुरंगाः सुरङ्गाः पुरं गाहयन्ति ॥ ६ ॥ अलक्षितगतागतैः कुलवधूकटाक्षैरिव क्षणानुनयशीतलैः प्रणयकेलिकोपैरिव । सुवृत्तमसृणोन्नतैर्मृगदृशामुरोजैरिव त्वदीयतुरगैरिदं धरणिचक्रमाक्रम्यते ॥ ७ ॥ निर्मांसं मुखमण्डले परिमितं मध्ये लघुं कर्णयोः स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे । पीनं पश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे राजा वा-

१ अभ्रकषे. २ अनर्गल इत्यर्थः. ३ क्षत्रिय. ४ सूर्यः. ५ प्रतिबिम्बेन. ६ करशीकर इत्यर्थः. ७ ऐरावतेन.

जिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः ॥ ८ ॥ धूलीभिर्दिवमन्धयन्बधिरयन्नाशाः खुराणां रवैर्वातं संयति खञ्जयञ्जवजयैः स्तोतॄन्गुणैर्मूकयन् । धर्माराधनसंनियुक्तजगता राज्ञामुनाधिष्ठितः सौन्द्रोत्फालमिषाद्दिगाहति पदा स्प्रष्टुं तुरंगोऽपि गाम् ॥ ९ ॥ वातं स्थावरयन्नभः पुटकयन्स्रोतस्वतीं सूत्रयन्सिन्धुं पल्वलयन्वनं विटपयन्भूमण्डलं लोष्टयन् । शैलं सर्षपयन्दिशं च पलयंल्लोकत्रयं क्रोडयन्हेलारब्धरयो हयस्तव कथंकारो गिरां गोचरः ॥ १० ॥ तप्तां गामिव संस्पृशन्ति गतिभिर्द्यामुत्पतन्तो मुहुरन्तेवासिन आजवश्रुतगतीवाध्यापयन्तोऽनिलान् । देव स्वीयखुराग्रदीर्णवसुधाधूलीवितानं बलारात्यश्वो नटनं पठिष्यति हि वस्तन्वन्ति वाहास्तव ॥ ११ ॥

---

## खड्गप्रशंसा ।

वर्णयामि विमलत्वमम्भसः किं त्वदीयकरवालवर्तिनः । एति यत्प्रभवमैन्दवीं द्युतिं विश्वशुक्तिपुटमौक्तिकं यशः ॥ १ ॥ खड्गवारि भवतः किमुच्यते लोलशैवलमिवारिकुन्तलैः । तत्र राजति निवेशितं त्वया राजहंसनिवहोपमं यशः ॥ २ ॥ न पक्षवृत्तिर्न सपक्षवृत्तिर्विपक्षवृत्तिः करवालधूमः । तथापि ते भूमिपते जगत्यां प्रतापवह्निप्रमितिं करोति ॥ ३ ॥ रिपुश्रियः किं कचसंचयोऽयं प्रतापवह्नेः किमु धूमराजिः । विलोक्य यत्पाणिगतं कृपाणमेवं जनस्तर्कयते रणेषु ॥ ४ ॥ सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा । तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते ॥ ५ ॥ दर्पान्धगन्धगजकुम्भकपाटकूटसंक्रान्तनिम्नघनशोणितशोणशोचिः । वीरैर्व्यलोकि युधि कोपकषायकान्तिः कालीकटाक्ष इव यस्य करे कृपाणः ॥ ६ ॥ धाराधरस्त्वदसिरेष नरेन्द्र चित्रं वर्षन्ति वैरिवनिताजनलोचनानि । कोशेन संततमसंगतिराहवेऽस्य दारिद्र्यमभ्युदयति प्रतिपार्थिवानाम् ॥ ७ ॥ कुरंगाक्ष्या वेणीं सुभगविपरीते रतिविधावधिस्कन्धं दृष्ट्वा किमपि निपतन्तीमरिभटः । अधिग्रीवं युष्मत्प्रचलकरवालव्यतिकरं स्मरन्नेव स्तब्धो विरमति परीरम्भरभसात् ॥ ८ ॥ कृपाणीयं काली तव रिपुयशःक्षीरमनिशं पिबन्ती व्यालीव प्रथयति तथा दुर्विषहताम् । यथा दूरादस्याः स्फुरणमपि संभाव्य सहसा विमुह्यन्ति प्रौढप्रहरणभृतोऽपि प्रतिभटाः ॥ ९ ॥ राजन्वीर विपक्षलक्षसुवधूवैधव्यदीक्षागुरुः सङ्ग्रामाध्वरकर्ममर्मकुशलः प्रत्यर्थिपृथ्वीभुजाम् । प्राणानर्घ्यमणेर्मयापहरणं नाकारि किंतु प्रभो भ्रूभङ्गेन तवेति दिव्यमभवत्कोशं स खड्गः परः ॥ १० ॥ अस्यासिर्भुजगः स्वकोशविवराकृष्टः स्फुरत्कण्णिमा कम्पोन्मीलदरालललीलव-

---

१ अन्तरिक्षचारिणा दृष्टी प्रतिबध्नन्नित्यर्थः २ तत्रत्यान्प्राणिन इत्यर्थः ३ वायोरप्यधिकवेग इत्यर्थः. ४ जगतो धर्मैकसाधनकारिणा ५ वेगातिशयत्वान्निरन्तरमूर्ध्वचरणनिक्षेपव्याजात् ६ भुवम्,(पक्षे) धेनुम्. "गोब्राह्मणानलान्भूमिं गोच्छिष्टं न पदा स्पृशेत्" इति निषेधादिति भावः. ७ वक्रविलासा.

लनैस्तेषां भिये भूभुजाम्। सङ्ग्रामेषु निजाङ्गुलीमयमहासिद्धौषधीवीरुधः पर्वास्ये विनिवेश्य जाङ्गुलिकता यैर्नाम नालम्बिता ॥११॥ भूभृन्मौलितटीषु दर्शितसमारम्भोऽयमम्भोधरस्त्वत्खड्गः प्रतिपक्षपङ्कपटलं प्रक्षालयन्धारया । युद्धक्रुद्धविरुद्धसिन्धुरगलद्गण्डस्थलप्रस्खलन्मुक्ताभिः करकाभिराशु समरे क्षोणीतले वर्षति ॥१२॥ आश्चर्यं समराम्बरे रिपुयशश्चन्द्रप्रतापार्कयोः सर्वग्रासमयं सहैव तनुते त्वत्खड्गराहुः कथम्। किं चान्यत्परलोकनिर्भयभवांस्तस्मिन्प्रहत्युत्सवे गृह्णाति त्यजतामकम्पहृदयो राज्ञां समस्ता भुवः ॥ १३ ॥ देव त्वत्करपद्मकोशविगलन्मत्तालिमालामसिं वैधव्योद्भटधूमकेतुमपरे त्वद्वैरिवामभ्रुवाम् । वेणीकालवधोः प्रतापहुतभुग्धूमं च केचिज्जगुर्मन्ये कालभुजंगलोलरसना हालाहलव्यापृता ॥ १४ ॥ सिक्तायां वीरकण्ठस्थलबहलगलद्रक्तधाराम्बुवर्षैर्माद्यन्मातंगकुम्भोद्दलनविलुलितैर्मौक्तिकैः पुष्पितायाम् । सङ्ग्रामोद्यानभूमौ तुरगखुरपुटोत्खातकृष्टस्थलायां जातं ते खड्गवल्ल्याः फलमतुलरसास्वादहृद्यं जयश्रीः ॥ १५ ॥ सर्पीवैषा कृपाणी तव भुजभुजगासंगतः संगरादौ सद्यःकृत्तारिखण्डच्युतरुधिररजोयोगमभ्यावहन्ती । दृप्यद्दानाम्बुपूरोत्कटकरिघटनागण्डशैलेषु लीना सूते सद्यः किलाण्डान्यतिविमलगलद्भूरि मुक्ताच्छलेन ॥ १६ ॥ लेखन्ती व्योमगर्भे दिशि विदिशि मुहुर्निष्पतन्ती हरन्ती शश्वत्प्रौढान्धकारानखिलजनमयो विस्मयं वर्धयन्ती। यस्य स्फारासिधारा तडिदिव तरला वैरिकण्ठोपकण्ठं प्राप्ता सद्यो नटीव प्रणयकुतुकिनी मोहमाविष्करोति ॥ १७ ॥ चूडापीडाभिरामाः स्फुरदुरुमणिभिर्मुद्रिकाकल्पभूतैर्दोर्दण्डः कुण्डलीन्द्रस्तव जयति जयन्मण्डलाधार एषः। क्षीरभ्रान्त्यारिकीर्तिं सपदि समुदितां पातुकामः प्रसर्प्य जिह्वामुच्चैः किमेनां चपलयति चमत्कारिणीं खड्गधाराम् ॥ १८ ॥

## राजयात्रावर्णनम् ।

प्रयाणे तव राजेन्द्र मुक्ता वैरिमृगीदृशाम् । राजहंसगतिः पद्भ्यामाननेन शशिद्युतिः ॥ १ ॥ दिङ्नारीणां स्पृशत्यर्को रजःसंदूषिताम्बरम् । प्रस्थाने नृपते सन्तोऽपथैर्यान्ति रजोवृताः ॥ २ ॥ त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् । न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥३॥ यात्रासु यस्य ध्वजिनीभरेण दोलायमाना सकला धरित्री । आर्द्रव्रणाधिष्ठितपृष्ठपीठमकर्मठं कूर्मपतिं चकार ॥ ४ ॥ अस्य प्रयाणेषु समग्रशक्तेरग्रेसरैर्वाजिभिरुत्थितानि । कुर्वन्ति सामन्तशिखामणीनां प्रभाप्ररोहास्तमयं रजांसि ॥ ५ ॥ यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम । तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥ ६ ॥ त्वय्यागते किमिति वेपत एष सिन्धुस्त्वं सेतुमन्थकृदतः किमसौ बिभेति । द्वीपान्तरेऽपि न हि तेऽस्त्यवशंवदोऽद्य त्वां राजपुंगव निषेवत एव लक्ष्मीः ॥७॥

---

१ मर्कटकुलगतिरित्यर्थः. २ ग्रन्थिम्. ३ विपर्ययता. ४ सेतुश्च मन्थश्चेति.

त्वयि प्रचलति प्रभो तुरगवल्गनासु स्फुरद्धरावलयधूलिभिः सकलमेव कीर्णं नभः । दिवाकरहयावली निरवलम्बसंचारतः श्रमापनयनाय किं वसुमतीयमूर्ध्वं गता ॥ ८ ॥ चोलीं चोलीं न तु कलयते गुर्जरा जर्जराङ्गी भूर्जाक्रान्तं विशति विपिनं मालवी मालवीथीम् । नो संगीतं रचयति मनागङ्गवङ्गी कृशाङ्गी नाङ्गी रागं रहसि तनुते भूपते त्वत्प्रयाणे ॥९॥ देव त्वद्विजयप्रयाणविलसत्सद्वाजिराजव्रजक्षुण्णक्ष्मातललीनपांशुपटलव्याप्तो निमेपेक्षणः । सुत्रामा[1] बहु मन्यते फणिपतिं पातालमूलस्थितं सोऽप्युद्दामकरीन्द्रदुर्धरभरक्रान्तः सहस्रेक्षणम् ॥ १० ॥ देवे दिग्विजयोद्यते धृतधनुःप्रेत्यर्थिसीमन्तिनीवैधव्यव्रतदायिनि प्रतिदिशं क्रुद्धे परिभ्राम्यति । आस्तामन्यनितम्बिनी रतिरपि प्रायो न पौष्पं करे भर्तुर्धर्तुमदान्मदान्धमधुपीनीलीनिचोलं धनुः ॥ ११ ॥ देव त्वद्विजयोद्यमे हरिखुरव्रातक्षतक्ष्मातलात्प्रोद्भूते रजसः परागपटले दिक्चक्रमाक्रामति । अक्ष्णां पङ्क्तिशतानि निन्दति निजं हस्तद्वयं निन्दति स्वां निन्दत्यनिमेषतां परिपतद्बाष्पाम्बुधारो हरिः ॥ १२ ॥ युष्मद्वाजिजितांजिराजि चरणक्षेपक्षतैर्मोहिनीं मङ्क्षु क्षोणिमवेक्ष्य सिञ्चति घनैर्भर्ता नदीनां जलैः । आशामण्डलमुत्कटध्वजपटैर्वातं तनोति द्रुतं चञ्चच्चलरेणुराश्विनमिवाशीघ्रं दिवं गच्छति ॥ १३ ॥ धूर्ताधोरणदेववासवकरी पङ्केन लिप्तः कथं नीतः स्वर्गतरंगिणीजलमसौ तत्रास्ति पङ्कः कुतः । सर्वाशाविजयोत्सवं प्रति कृतोद्योगे धराधीश्वरे स्फायन्ते करिकर्णतालपवनोद्भूताश्च भूरेणवः ॥ १४ ॥ दृप्यद्वैरिकरीन्द्रसिंह शरदि त्वज्जैत्रयात्रोद्यमे मेघात्प्रार्थितमिन्द्रचापमहसा विद्युद्रुचा गर्जिते । श्यामत्वेन च दृष्टिभिर्धनुषि ते खड्गे च भेर्यां रिपोर्वक्त्रे तच्छलनाद्दशोः स्थितमतीत्याश्चर्यमाकर्ण्यताम् ॥ १५ ॥ प्रौढाहंकृतिशालिनः कुतुकिनो यस्य प्रयाणोत्सवे ढक्कादुन्दुभिनादनादिकतती सोल्लासकोलाहलैः । दिक्चक्रे परिपूरिते सचकितं स्तम्बेरमाः शूकराः शार्दूला महिषा दिशासु सहसा धावन्ति सर्वास्वपि ॥ १६ ॥ देवे दिग्विजयोद्यते परिपतत्काम्बोजवाहावलीवीङ्खोल्लेखविसर्पिणि क्षितिरजःपुञ्जे वियच्चु-

---

१ इन्द्रः. २ शत्रवः. ३ यदि मम भर्ता कामो धनुर्धारयिष्यति तदाय राजा मद्भर्तारं धनुर्धरत्वाद्धनिष्यतीति भयात्स्वभर्त्रा धनुर्नाग्राहयदिति भाव. ४ अश्वः. ५ समूहः. ६ दशशतानि. ७ यतश्चेतावद्रज समुच्छलित येन तस्य सहस्रनेत्राणि तिरोहितानि बभूवुस्तेन यदि मम नेत्रसहस्र नाभविष्यत्तदा चैतावद्रजोनिकरस्तत्र नापतिष्यदतो नेत्रसहस्र मम किमर्थमभवदिति ८ सत्यपि नेत्रसहस्रे तत्तिरोधानाय यदि हस्तसहस्रमप्यभविष्यत्तदा हस्तै· सर्वनेत्राच्छादन कर्तु शक्यमतो मम पाणिद्वय व्यर्थमेवेति ९ यतो मया देवत्वादनिमेषता पक्ष्मपाताभाव. किमिति प्राप्तः यस्माच्चक्षुषा रज.पटलाक्रान्तत्वमभूद्यदि च मे नयनेष्वनिमेषता नाभविष्यत्तदा रज पातोऽपि नाभविष्यदतः स्वामनिमेषता निन्दतीति भावः. १० सर्वनेत्रेषु रज.कणससर्गात्परिपतन्ती निर्गच्छन्ती नेत्रेभ्यो बाष्पाम्बुधाराश्रुजलप्रवाहो यस्य सः. ११ इन्द्रः. ११ गच्छन्तः. १२ गतिः. १३ उद्गमः. वाजिनां ह्रेषणादिकरणमित्यर्थः..

म्नति । भानोर्वाजिभिरङ्ग[1]भूषणरसानन्दः समासादितो लब्धः किं च नभःस्थलीमरधुनीप-
ङ्करुहै[3]रन्वयः ॥ १७ ॥ देव त्वद्गजवाजि[4]पत्रपटलप्रोद्भूतधूलीभरैराकाशं वसुधायते[5] खरकरः[6]
सोमायते निष्प्रभः । किं चाधो भरकुञ्चितः फणवतां नाथः स कूर्मायते[7] कूर्मो भोगिपतीयते[8]
किमपरं रात्रीयते[9] वासरः ॥ १८ ॥ वेल्लत्पक्षति-राजहंसयुवती त्रुट्यन्मृणालावलिभ्राम्यत्ष-
ट्पदभूरिझाङ्कृतिपतच्चक्रीकृतकेङ्कृति । पर्यस्यन्नवपद्मसंहतिपतद्दिग्वर्तिवेगस्थितिप्रस्थानध्वजवा-
तलोलमजनि स्वर्गापगायाः पयः ॥१९॥ सत्यं त्वं पुरुषोत्तमोऽसि नियतं तत्रापि रामो भ-
वान्प्रस्थाने तव लज्जये वनमतिव्यक्तं यतो मेदिनी । द्राक्पूर्वाचलपश्चिमाचलकुचावाञ्च-
णवती प्रोच्छलदृक्कारावचलत्पयोधिलहरीचैलाञ्चलैश्चञ्चलैः ॥ २० ॥ प्रस्थाने तव भूमिपाल
वसुधा जाता रजोदोषला त्वद्विट्दारपयोधरोऽञ्जनवृतं वर्षत्यधोऽश्रूदकम् । झञ्झाश्वास-
हिमापमौक्तिकगणान्वामाः किरन्ति द्विषस्तच्चोत्पात इति प्रतापदहने यास्यन्ति ते शात्रवः
॥२१॥ एतद्दत्तासिघातस्रवदसृगसुहृद्वंश[10]सार्द्रेन्धनैतद्दोरुद्दामप्रतापज्वलदनलमिलद्धूमभूमभ्र-
माय । एतद्दिग्जैत्रयात्रासमसमरभरं पश्यतः कस्य नासीदेतन्नासीर[11]वाजिव्रजखुरजरजोरा-
जिराजि[12]स्थलीषु ॥ २२ ॥ तत्तद्दिग्जैत्रयात्रोद्धुरै[13]स्तुरगखुराग्रोद्धतैरन्धकारं निर्वाणारिप्रतापा-
नलजमिव सृजत्येष राजा रजोभिः । भूगोलच्छायमाया[14]मय[15]गणितविदुन्नेयकायो भियाभूदे-
तत्कीर्तिप्रतानैर्विधुभिरिव युधे राहुराहूयमानः ॥ २३ ॥ गान्धारा गुप्तदारास्त्वयि चलति
गलद्बाष्पधारा विहारा रागस्त्रासान्वगाराः क्षितिपकुलमणेर्गुर्जरा जर्जराशाः । तैलङ्गास्त्य-
क्तलिङ्गास्त्रिभुवनतिलक क्लिश्यदङ्गाः कलिङ्गा मोरङ्गा मुक्तरङ्गा सपदि समभवन्वीरगङ्गा-
विहंगाः ॥ २४ ॥ काश्चित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्रेन्दुलक्ष्मीरश्रीकाः काश्चि-
दन्तर्दिश इव दधिरे दारमुद्भ्रान्तसत्त्वाः । भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्प-
मानाः प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्यः शशंसुः ॥ २५ ॥ जाने युष्मत्प्रयाणे
क्षितितिलकरजोयोगदोषादशेषा दिग्योषाः स्नान्ति सद्यस्त्वदरिनृपवधूनेत्रनीरापगासु । सं-
गम्य त्वत्प्रतापैस्तदनु किमु दधौ दोहदं देव तासां प्राची प्रातः प्रसूते यदियमुरुमहोखण्ड-
मार्तण्डबिम्बम् ॥ २६ ॥ घूर्णन्ते तूर्णमेतत्कुलधरणिभृतो दिग्द्विपा दिग्विदिक्षु क्षुभ्यन्ति क्षो-
भयन्ति क्षितिमतिमृदितो मर्मणा कूर्मराजः । प्रस्थाने यस्य गर्जत्करटिघनघटासंभ्रमन्यञ्च-

---

१ अङ्गे भूषणमिव भूषण भूमिविलुण्ठनलक्षण तस्य यो रसस्तस्यानन्द आह्लादः. यतो वाजिना भूमौ विलुण्ठन परमं भूषण सुखावह चातो रज सश्लेषे सूर्याश्वैर्भूविलुण्ठनसुख लब्धमिति भावः. २ गङ्गा. ३ वशः. ४ वाहनम्. ५ त्वद्वाहिन्येतावती विपुलासीद्यत्तत्समर्दादाकाशमपि रजोमय बभूवेति भावः ६ चण्डांशुः. ७ यथा कूर्मः स्वं शरीर संकोचयति तथा शेषोऽपि त्वद्वाहिनीभारेण संकुचितशरीरोऽभूदिति भावः. ८ सकुचितशरीरोऽपि प्रलम्बकायोऽभूदित्यर्थः. ९ यतस्तादृक्त्वद्वाहिन्या धूलिपटलं समुच्छलित येन दिनमप्यन्धकारवशाद्रात्रिरेवाभवदिति भावः. १० वेणवः. ११ सेनामुखम् १२ रणभूमिषु. १३ उच्छृङ्खलः. १४ कपटम् १५ गणितशास्त्रैकवेद्य.. ज्योति.शास्त्रप्रमाणक यद्राहोर्भूच्छायात्मक तदेतत्कीर्तिचन्द्रभियेत्युत्प्रेक्षा.

दुर्वीमुर्वीदर्वीकरेन्द्रः कलयितुमुदितश्रायमार्तिं बिभर्ति ॥ २७ ॥ नृत्यत्त्वद्वाजिराजि प्रसरखुरपुटप्रोद्धतैर्धूलिजालैरालोकालोकभूमीधरमतुलनिरालोकभावं प्रयाते । विश्रान्तिं कामयन्ते रजनिरिति धिया भूतले सर्वलोकाः कोकाः क्रन्दन्ति शोकानलविकलतया किं च नन्दन्त्युलूकाः ॥२८॥इन्द्रः प्रक्षुब्धचित्तो दिशि दिशि सकलान्दिक्पतीन्सावधानान्कुर्वन्वज्राच्छपाणिः सुरवरवलितां देवसेनां निगृह्य । स्वर्गद्वारे यदीयोद्धतबलनिहतप्रौढढक्कानिनादं श्रुत्वा तिष्ठन्प्रकम्पत्कुचकलशतटीकिंनरीगीयमानः ॥ २९ ॥ आजित्वद्वाजिराजिप्रखरखुरतरन्यासलीलाभिरुर्व्यां दीर्णायां देव निर्यन्नविरलमवनीपाल पातालवह्निः । अश्वीयाद्विश्वमेव प्रतिनृपतिवधूनेत्रधाराम्बुधारावारा यद्येनमारादरिकुलदमन द्राङ्न निर्वापयेयुः ॥३०॥ पताका ॥ भयेन कृष्णान्यरुणानि रागात्पाण्डूनि कान्तादिवियोगभाजाम् । द्विषां मनांसि ध्वजकैतवेन लोलानि भोस्त्वां नृप संश्रयन्ति ॥ ३१ ॥ दुन्दुभिः ॥ गङ्गाम्भसि सुरत्राण तव निःसाणनिःस्वनः । स्वान्तीवारिवधूवर्गगर्भपातनपातकी ॥ ३२ ॥ ब्रह्माण्डं प्रविखण्डच्य भूधरगुहासुप्तान्हरीन्बोधयन्गर्भान्वैरिवधूव्रजस्य नृपते निःपात्यहापातकी । कीलालं परिशोष्य च प्रतिभटानां तेजसा तेऽद्भुतं शोद्धुं विष्णुपदं स्पृशत्यधिपयोराशिप्लुतो दुन्दुभिः ॥ ३३ ॥ पारीन्द्राणां धुरीणैरवनिधरगुहागर्ततः प्रोच्छलद्भिः स्वापभ्रंशापराधप्रचलितनयनप्रान्तमाकर्ण्यमानः ।त्वत्प्रस्थानान्तरुद्यत्प्रलयजलधरध्वानधिक्कारधीरो धृष्टक्षीराम्बुतीरो जगति विजयते दुन्दुभिद्वन्द्वनादः ॥ ३४ ॥ **गवाक्षविलोकनम्** ॥ आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः । बद्धुं न संभावित एव तावत्करेण रुद्धोऽपि च केशपाशः ॥३५॥ प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव । उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान ॥ ३६ ॥ विलोचनं दक्षिणमञ्जनेन संभाव्य तद्वञ्चितवामनेत्रा । तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ३७ ॥ जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् । नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥ ३८ ॥ अर्धाञ्चिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती । कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ३९ ॥ स्तनं धयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती । संप्रस्नुतायां पदवी स्तनाभ्यां सिषेच काचित्पयसा गवाक्षम् ॥ ४० ॥ अभिवीक्ष्य सामिकृतमण्डलं यतीः कररुद्धनीविगलदंशुकाः स्त्रियः । दधिरेऽधिभित्ति पटहप्रतिस्वनैः स्फुटमट्टहासमिव सौधपङ्क्तयः ॥ ४१ ॥ रभसेन हारपददत्तकाञ्चयः प्रतिमूर्धजं निहितकर्णपूरकाः । परिवर्तिताम्बरयुगाः समापतन्वलयीकृतश्रवणपूरकाः स्त्रियः ॥ ४२ ॥ व्यतनोदपास्य चरणं प्रसाधिका करपल्लवाद्रसवशेन काचन । द्रुतयावकैकपदचित्रितावनिं पदवीं गतेन गिरिजा हरार्धताम् ॥४३॥ व्यचलन्विशङ्कटकटीरकस्थली शिखरस्खलन्मुखरमेखलाकुलाः । भवनानि तुङ्गतपनीयसंक्रमक्रमणक्वणत्कनकनूपुराः स्त्रियः ॥४४॥ करयुग्मपद्म-

मुकुलापवर्जितैः प्रतिवेश्म लाजकुसुमैरवाकिरन् । अवदीर्णशुक्तिपुटमुक्तमौक्तिकप्रकरैरिव प्रियरथाङ्गमङ्गनाः ॥ ४५ ॥ नलिनान्तिकोपहितपल्लवश्रिया व्यवधाय चारु मुखमेकपाणिना । स्फुरिताङ्गुलीविवरनिःसृतोल्लसद्दशनप्रभाङ्कुरमजृम्भतापरा ॥ ४६ ॥

## रणसामग्री ।

अथोच्चैकजरठकपोतकंधरा तनूरुहप्रकरविपाण्डुरद्युति । बलैश्चलच्चरणविधूतमुच्चरद्घनावलीरुदचरत क्षमारजः ॥ १ ॥ विषङ्गिभिर्भृशमितरेतरं क्वचित्तुरंगमैरुपरि निरुद्धनिर्गमाः । चलाचलैरनुपदमाहताः खुरैर्विबभ्रमुश्चिरमध एव धूलयः ॥ २ ॥ गरीयसः प्रचुरमुखस्य रागिणो रजोऽभवद्व्यवहितसत्त्वमुत्कटम् । सिसृक्षतः सरसिजजन्मनो जगद्बलस्य तु क्षयमपनेतुमिच्छतः ॥ ३ ॥ पुरा शरक्षतिजनितानि संयुगे नयन्ति न प्रसभमसृञ्जि पङ्कताम् । इति ध्रुवं व्यलगिषुरात्तभीतयः खमुच्चकैरनलसखस्य केतवः ॥ ४ ॥ क्वचिल्लसद्घननिकुरम्बकर्बुरः क्वचिद्धिरण्मयकणपुञ्जपिञ्जरः । क्वचिच्छरच्छशधरखण्डपाण्डुरः खुरक्षतक्षितितलरेणुरुद्ययौ ॥ ५ ॥ महीयसां महति दिगन्तदन्तिनामनीकजे रजसि मुखानुषङ्गिणि । विसारितामजिहत कोकिलावलीं मलीमसां जलदमदाम्बुराजयः ॥ ६ ॥ शिरोरुहैरलिकुलकोमलैरमी मुधा मृधे मृषत युवान एव मा । बलोद्धतं धवलितमूर्धजानिति ध्रुवं जनाञ्जरत इवाकरोद्रजः ॥ ७ ॥ सुसंहतैर्दधदपि धाम नीयते तिरस्कृतिं बहुभिरसंशयं परैः । यतः क्षितेरवयवसंपदोऽणवस्त्विषांनिधेरपि वपुरावरीषत ॥ ८ ॥ द्रुतद्रवद्रथचरणक्षतक्षमातलोल्लसद्बहुलरजोऽवगुण्ठितम् । युगक्षयक्षणनिरवग्रहे जगत्पयोनिधेर्जल इव मग्नमाबभौ ॥ ९ ॥ समुल्लसद्दिनकरवक्त्रकान्तयो रजस्वलाः परिमलिताम्बरश्रियः । दिगङ्गनाः क्षणमविलोकनक्षमाः शरीरिणां परिहरणीयतां ययुः ॥ १० ॥ निरीक्षितुं वियति समेत्य कौतुकात्पराक्रमं समरमुखे महीभृताम् । रजस्ततावनिमिषलोचनोत्पलव्यथाकृति त्रिदशगणैः पलाय्यत ॥ ११ ॥ विषङ्गिणि प्रतिपदमापिबत्यपो हताचिरद्युतिनि समीरलक्ष्मणि । शनैःशनैरुपचितपङ्कभारिकाः पयोमुचः प्रययुरपेतवृष्टयः ॥ १२ ॥ नभोनदीव्यतिकरधौतमूर्तिभिर्वियद्गतैरनधिगतानि लेभिरे । चलच्चमूतुरगखुराहतोत्पतन्महीरजःस्नपनसुखानि दिग्गजैः ॥ १३ ॥ गजव्रजाक्रमणभरावनम्रया रसातलं यदखिलमानशे भुवा । नभस्तलं बहुलतरेण रेणुना ततोऽगमत्त्रिजगदिवैकतां स्फुटम् ॥ १४ ॥ समस्थलीकृतविवरेण पूरिता महीभृतां बलरजसा महागुहाः । रहस्त्रपाविधुरवधूरतार्थिनां नभःसदामुपकरणीयतां ययुः ॥ १५ ॥ गते मुखच्छदपटसादृशीं दृशः पथस्तिरोदधति घने रजस्यपि । मदानिलैरधिमधुचूतगन्धिभिर्द्विपा द्विपानभिययुरेव रंहसा ॥ १६ ॥ मदाम्भसा परिगलितेन सप्तधा गजाञ्जनः क्षमितरजश्चयानघः । उपर्यवस्थितघनपांशुमण्डलानलोकयत्ततपटमण्डपानिव ॥ १७ ॥ तूणीरबन्धपरिणद्धभुजान्तरालमाकर्णलम्बिशिखिपिच्छकलापधारि । कोदण्डपाणि

निनदत्प्रतिरोधकानामापातदुष्प्रसहमाविरभूदनीकम् ॥ १८ ॥ आदावेव गजेन्द्रमौलिविलसन्नण्ड्रा पताकावली पश्चाद्वारणराजधोरणिरतिप्रोद्दामयोधाश्रिता । उद्दण्डध्वजलाञ्छिताप्यथ नीभूता रथानां तती तत्पश्चात्तुरगावली विजयते योधैः समं सर्वतः ॥१९॥ योधैरेव वशीकृताः कथमपि प्रोद्दामरोपान्धिता गाढध्वान्तधराधरा इव रणक्षौणीं समालम्बिताः । ईषन्मीलितघूर्णित प्रतिदिशं प्रक्षिप्तनेत्रार्णवो मन्दान्दोलितमौलयो मदजलैराभान्ति दन्तावलाः ।२०॥ आरूढक्षितिपालभालविगलत्स्वेदाम्बुसेकोद्धता भेरीझाङ्कृतिचापटंकृतिचमत्कारोच्छन्नमानसा । क्षुभ्यत्क्षोणितल स्फुरत्खुरपुट चञ्चच्चलत्केशरं मन्दभ्रान्तविलोचनं प्रतिदिशं नृत्यन्ति वाजिव्रजाः ॥ २१ ॥ अन्यूनोन्नतयोऽतिमात्रपृथवः पृथ्वीधरश्रीभृतस्तन्वन्तः कनकावलीभिरुपमां सौदामिनीदामभिः । वर्पन्तः शममानयन्त्युपलसच्छृङ्गारलेखायुधाः काले कालियकायकालवपुषः पांशून्गजाम्भोमुचः ॥२२॥ हेपाघोपैर्हरीणां जितघननिनदैर्बृंहितैः कुञ्जराणां ज्याघातोत्थैर्निनादैः पटुपटहरवैर्मर्दलोद्दामशब्दैः । प्राप्तैः कर्णोपकण्ठं मदगजनिवहस्कन्धघण्टाप्रणादैः शृङ्गाराय त्वरन्ते त्रिदशमृगदृशो वीरवर्गानुरक्ताः ॥२३॥ सज्जन्ता कुम्भभित्तिच्युतमदमदिरामत्तभृङ्गाः करीन्द्रा युज्यन्तां स्यन्दनेपु प्रसभजितमरुच्चण्डवेगास्तुरंगाः । कुन्तैर्नीलोत्पलानां वनमिव ककुभामन्तराले सृजन्तव्यादाताः संचरन्तु प्रसभमभिलसत्पाणयः पत्तयोऽपि ॥ २४ ॥

---

## रणवर्णनम् ।

तनुत्राणं तनुत्राणं शस्त्रं शस्त्रं रथो रथः । इति शुश्रुविरे विष्वगुद्भटाः सुभटोक्तयः॥१॥ पत्तिः पत्तिमभीयाय रणाय रथिनं रथी । तुरंगस्थ तुरंगस्थो दन्तिस्थं दन्तिनि स्थित[1]॥२॥ संग्रामानन्दवर्धिष्णौ विग्रहे पुलकाङ्किते । आसीत्कवचविच्छेदो वीराणा मिलतां मिथः ॥ ३ ॥ निर्दय खड्गभिन्नेभ्यः कवचेभ्यः समुच्छ्रितैः । आसन्व्योमदिशस्तूलैः पलितैरिव पाण्डुराः ॥ ४ ॥ खड्गा रुधिरसलिप्ताश्चण्डाशुकरभासुराः । इतस्ततोऽपि वीराणां वैद्युतं वैभवं दधुः ॥ ५ ॥ गृहीताः पाणिभिर्वीरैर्विकोशाः खड्गराजयः । कान्तिजालच्छलादाजौ व्यहसन्समदा इव ॥ ६ ॥ खड्गाः शोणितसंदिग्धा नृत्यन्तो वीरपाणिपु । रजोघने रणेऽनन्ते विद्युता विभ्रमं दधुः ॥ ७ ॥ शस्त्रभिन्नेभकुम्भेभ्यो मौक्तिकानि च्युतान्यधुः । आहवक्षेत्रमभ्युप्तकीर्तिबीजोत्कराश्रियम् ॥ ८ ॥ वीराणां विषमैर्घोपैर्विद्रुता वारणा रणे । शास्यमाना अपि त्रासाद्रेजुर्धूताङ्कुशा दिशः ॥९॥ रणे बाणगणैर्भिन्ना भ्रमन्तो भिन्नयोधिनः । निमम्ज्जुर्गलद्रक्तनिमग्नाः सुमहागजाः ॥ १० ॥ खड्गनिर्लूनमूर्धानो निपतन्तोऽपि वाजिनः । प्रथमं पातयामासुरसिना दारितानरीन् ॥ ११॥ वीराणां शस्त्रभिन्नानां शिरांसि निपतन्त्यपि ।

---

१ परित

अधावन्दन्तदष्टौष्ठभीषणान्यरिपु क्रुधा ॥ १२ ॥ शिरांसि वरयोधानामर्धचन्द्रहृतान्यपि आददाना भृशं पादैः श्येना व्यानशिरे दिशः ॥ १३ ॥ उत्क्षिप्ता अपि हस्तीन्द्रैः कोपतः पत्तयः करैः । ते रिपूनहनन्खड्गपातैः स्वस्य पुरः प्रभोः ॥ १४ ॥ उत्क्षिप्य करिभिर्दूरं मुक्तानां योधिनां दिवि । प्रापि जीवात्मभिर्दिव्याङ्गनाकण्ठपरिग्रहः ॥ १५ ॥ क्रुद्धस्य दन्तिनः पत्तिर्जिघृक्षोरसिना करम् । निर्भिद्य दन्तमुसलान्यारुरोह जिघृक्षया ॥ १६ ॥ खड्गेनामूलतो हत्वा दन्तिनोऽङ्घ्रिचतुष्टयम् । प्रपतिष्णोः प्रविष्टोऽपि पदातिर्निरगाद्द्रुतम् ॥१७॥ करेण करिणा वीरः सुगृहीतोऽपि कोपिना । असिनासूञ्जहाराशु तस्यैव स्वयमक्षतः ॥१८॥ तुरंगी तुरगारूढं प्रासेनाहत्य वक्षसि । पततस्तस्य नाज्ञासीत्प्रासघातं स्वके हृदि ॥१९॥ तुरंगसादिनं शस्त्रहृतप्राणं गतं भुवि । अन्त्राढ्योऽपि महावाजी नात्रस्तनयनोऽत्यजत् ॥ २० ॥ द्विपा प्रासहृतप्राणो वाजिपृष्ठदृढासनः । हस्तोद्धृतमहाप्रासो भटो जीवन्निवाभ्रमत् ॥ २१ ॥ खड्गेन शितधारेण भिन्नोऽपि रिपुणाश्वगः । नामूर्च्छत्कोपतो हन्तुमियेष च पतन्नपि ॥ २२ ॥ रथिनो रथिभिर्बाणैर्हृतप्राणा दृढासनाः । कृतकार्मुकसंधानाः सप्राणा इव मेनिरे ॥ २३ ॥ मिथोऽर्धचन्द्रनिर्लूनमूर्धानौ रुषितौ रुषा । खेचरौ भुवि नृत्यन्तौ स्वकबन्धावपश्यताम् ॥ २४ ॥ पत्तिः पदातिं रथिनं रथेशस्तुरंमसादी तुरगाधिरूढम् । यन्ता गजस्याभ्यपतद्गजस्थं तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ २५ ॥ उत्थापितः संयति रेणुरश्वैः सान्द्रीकृतः स्यन्दनचक्रैः । विस्तारितः कुञ्जरकर्णतालैर्नेत्रक्रमेणोपरुरोध सूर्यम् ॥२६॥ रथो रथाङ्गध्वनिना विजज्ञे विलोलघण्टाक्वणितेन नागः । स्वभर्तृनामग्रहणाद्बभूव सान्द्रे रजस्यात्मपरावबोधः ॥ २७ ॥ आवृण्वतो लोचनमार्गमाजौ रजोऽन्धकारस्य विजृम्भितस्य । शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिरप्रवाहः ॥ २८ ॥ स च्छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूतः । अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवाबभासे ॥२९॥ आधोरणानां गजसंनिपाते शिरांसि चक्रैर्निशितैः क्षुराग्रैः । हृतान्यपि श्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतुः ॥ ३० ॥ तनुत्यजां वर्मभृतां विकोशैर्बृहत्सु दन्तेष्वसिभिः पतद्भिः । उद्यन्तमग्निं शमयांबभूवुर्गजा विविग्नाः करशीकरेण ॥ ३१ ॥ शिलीमुखोत्कृत्तशिरःफलाढ्या च्युतैः शिरस्त्रैश्चषकोत्तरेव । रणक्षितिः शोणितमद्यकुल्या रराज मृत्योरिव पानभूमिः ॥ ३२ ॥ केचिद्गदाः केऽपि सचापबाणानन्ये कृपाणीमपरे च शूलम् । शक्त्यृष्टिमन्ये मुशलं परे च प्रोत्तानहस्ताः परिनर्तयन्ति ॥ ३३ ॥ सरोषयुद्धाङ्गनमभ्यधावन्मत्तद्विपानामाधोरणकोत्सुकानाम् । पादाभिघाताभिहताः पतन्ति रथाश्च योधाश्च तुरंगमाश्च ॥ ३४ ॥ रम्भातरूनुद्धतवातपूरा यथा यथा वारणयूथनाथाः । संग्रामभूमौ विनिपातयन्ति रथांश्च योधाश्च तुरगमांश्च ॥ ३५ ॥ परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकाल-

१ कुन्तेन

मेव । अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थनयोर्विवादः ॥ ३६ ॥ महास्वनः सैन्यविमर्दसंभवः कर्णान्तमूलंकषतामुपेयिवान् । पयोनिधेः क्षुब्धतरस्य मन्थनो बभूव भूम्ना भुवनोदरंभरिः ॥ ३७ ॥ महागजानां गुरुबृंहितैः शतैः सुहेषितैर्घोरतरैश्च वाजिनाम् । घनै रथानां चलचण्डचीत्कृतैस्तिरोहितोऽभूत्पटहस्य निःस्वनः ॥ ३८ ॥ घनैर्विलोक्य स्थगितार्कमण्डलैश्चमूरजोभिर्निचितं नभस्तलम् । अयायि हंसैरभिमानसं घनभ्रमेण सानन्दमनर्ति केकिभिः ॥ ३९ ॥ विलोक्य धूलीपटलैर्भृशं भृतं द्यावापृथिव्योरलमन्तरं महत् । किमूर्ध्वतोऽधः किमधस्तदूर्ध्वतो रजोऽभ्युपैतीति जनैरतर्क्यत ॥४०॥ नोर्ध्वं न चाधो न पुरो न पृष्ठतो न पार्श्वतोऽभूत्खलु चक्षुषो गतिः । सूच्यग्रभिन्नैः पृतनारजोभरैः सुनिर्भरं प्राणिगणस्य सर्वतः ॥४१॥ उद्दामदानद्विपबृंहितैः शतैर्नितान्तमुत्तुङ्गतुरङ्गहेषितैः । चलद्ध्वजस्यन्दननेमिनिःस्वनैरभून्निरुच्छ्वासमथाकुलं नभः ॥४२॥ महागजाना गुरुभिस्तु गर्जितैर्विलोलघण्टारणितै रणोज्ज्वलैः । वीरप्रभेदैः प्रमदप्रमेदुरैर्वाचालतामादधिरेतरां दिशः ॥४३॥ दन्तीन्द्रदानाम्बुधिवारिवीचिभिः सद्योऽपि नद्यो बहु ताः पुपूरिरे । धरारजोभिस्तुरगक्षतैर्भृत वाः पङ्कतामेत्य रजस्वलीकृतम् ॥४४॥ निम्नप्रदेशाः स्थलतामुपागमन्निम्नत्वमुच्चैरपि सर्वतः स्थलम् । तुरङ्गमाणा व्रजता खुरैः क्षिती रथैर्गजेन्द्रैः परितः समीकृता ॥४५॥ नभोदिगन्तप्रतिघोषभीषणैर्महार्महीभृत्तटदारणोल्बणैः । पयोधिनिर्धूननकेलिभिर्जगद्बभूव भेरीस्वनितैः समाकुलम् ॥४६॥ इतस्ततो वातविधूतचञ्चलैरारोधिताशागमनैर्ध्वजांशुकैः । लघुक्वणत्काञ्चनकिङ्किणीकुलैरमज्जि धूलीजलधौ नभोगतैः ॥ ४७ ॥ घण्टारवै रौद्रतरैर्निरन्तरैर्विसृत्वरैर्गर्जरवैः सुभैरवैः । मदद्विपानां प्रथयाबभूविरे न वाहिनीनां पटहस्य निःस्वनाः ॥ ४८ ॥ करालवाचालमुखैश्चमूरवैः स्वस्ताम्बरा वीक्ष्य रजस्वला दिशः । तिरोबभूवे गगने दिनेश्वरो रजोऽन्धकारे परितः कुतोऽप्यसौ ॥ ४९ ॥ आक्रान्तपूर्वा रभसेन सैनिकैर्दिगङ्गना व्योमरजोभिर्दूषिता । भेरीरवाणा प्रतिशब्दितैर्वनैर्जगर्ज गाढं गुरुमत्सरादिव ॥५०॥ गुरुसमीरसमीरितभूधरा इव गजा गगनं विजगाहिरे । गुरुतरा बहुवारिभराद्घना भुवमतीव नमन्त इवाभवन् ॥ ५१ ॥ सजग्मतो तावपायानपेक्षौ सेनाम्भोधी धीरनादौ रयेण । पक्षच्छेदात्पूर्वमेकत्र देशे वाञ्छन्तौ वा विन्ध्यसह्यौ निलेतुम् ॥ ५२ ॥ पत्तिः पत्तिं वाहमेयाय वाजी नागं नागः स्यन्दनस्थो रथस्थम् । इत्थं सेना वल्लभस्येव रागादङ्गेनाङ्गं प्रत्यनीकस्य भेजे ॥ ५३ ॥ रथ्याघोषैर्बृंहणैर्वारणानामैक्यं गच्छन्वाजिनां ह्रेषया च । व्योमव्यापी सततं दुन्दुभीनामव्यक्तोऽभूदीरितेव प्रणादः ॥ ५४ ॥ रोषावेशाद्गच्छता प्रत्यमित्रं दूरोत्क्षिप्तस्थूलबाहुध्वजानाम् । दीर्घास्तिर्यग्वैजयन्तीसदृश्यः पादातानां भ्रेजिरे

---

१ [illegible] बुध [illegible] भजन्ति तदा सेना प्र.[illegible] [illegible] परित्यज्यादि [illegible]

खड्गलेखाः ॥ ५५ ॥ उद्यन्नादं धन्विभिर्निष्ठुराणि स्थूलान्युच्चैर्मण्डलत्वं दधन्ति । आस्फाल्यन्ते कार्मुकाणि स्म कामं हस्त्यारोहैः कुञ्जराणां शिरांसि ॥ ५६ ॥ घण्टानादो निस्वनो डिण्डिमानां ग्रैवेयाणामारवो बृंहितानि । आमेत्येवं प्रत्यवोचन्गजानामुत्साहार्थं वाचमाधोरणस्य ॥ ५७ ॥ रोषावेशादाभिमुख्येन कौचित्पाणिग्राहं रंहसैवोपयातौ । हित्वा हेतीर्[1]मल्लवन्मुष्टिघातं घ्नन्तौ बाहूबाहवि व्यासृजेताम् ॥ ५८ ॥ शुद्धाः सङ्गं न क्वचित्प्राप्तवन्तो दूरान्मुक्ताः शीघ्रतां दर्शयन्तः । अन्तःसेनं विद्विषामाविशन्तो युक्तं[2] चक्रुः सायका वा[3]जितायाः ॥ ५९ ॥ आक्रम्याजेरग्रिमस्कन्धमुच्चैरास्थायाथो वीतशङ्कं शिरश्च । हेलालोलं वर्त्म गत्वातिमर्त्यं द्यामा[4]रोहन्मानभाजः सुखेन ॥ ६० ॥ रोदोरन्ध्रं व्यश्नुवानानि लोलैरङ्गस्यान्तर्मापितैः स्थावराणि । केचिद्गुर्वीमेत्य संयन्निषद्यां[5] क्रीणन्ति स्म प्राणमूल्यैर्यशांसि ॥ ६१ ॥ वीर्योत्साहश्लाघि कृत्वा[6]वदानं संग्रामाग्रे मानिनां लज्जितानाम् । अज्ञातानां शत्रुभिर्युक्तमुच्चैः श्रीमन्नाम श्रावयन्ति स्म नग्नाः[7] ॥ ६२ ॥ मिश्रीभूते तत्र सैन्यद्वयेऽपि प्रायेणायं व्यक्तमासीद्विशेषः । आत्मीयास्ते ये पराञ्चः[8] पुरस्तादभ्यावर्ती संमुखो यः परोऽसौ ॥ ६३ ॥ सद्वंशत्वादङ्गसंसङ्गिनीत्वं नीत्वा कामं गौरवेणावबद्धा । नीता हस्तं वञ्चयित्वा परेण द्रोहं चक्रे कस्यचित्स्वा कृपाणी ॥ ६४ ॥ नीते भेदं धौतधाराभिघातादम्भोदाभे शात्रवेणापरस्य । सासृग्राजि[9]स्तीक्ष्णमार्गस्य[10] मार्गो विद्युद्दीप्तः कङ्कटे[11] लक्ष्यते स्म ॥ ६५ ॥ आमूलान्तात्सायकेनायतेन स्यूते बाहौ मण्डुकश्लिष्टमुष्टेः । प्राप्यासह्यां वेदनामस्तधैर्यादप्यभ्रश्यच्चर्म नान्यस्य पाणेः ॥ ६६ ॥ भित्त्वा घोणा[12]मायसे[13]नाधिवक्षः स्थूरी[14]पृष्ठो गार्ध्रपक्षेण[15] विद्धः । शिक्षाहेतोर्गाढरज्ज्वेव बद्धो हर्तुं वक्त्रं नाशकद्दुर्मुखोऽपि ॥ ६७ ॥ विष्वद्रीचीर्[16]विक्षिपन्सैन्यवीचीराजावन्तः क्वापि दूरं प्रयातम् । बभ्रामैको बन्धुमिष्टं दिदृक्षुः सिन्धौ वाद्यो मण्डलं [17]गोर्वराहः ॥ ६८ ॥ यावच्चक्रे नाञ्जनं बोधनाय व्युत्थानज्ञो हस्तिचारी मदस्य । सेनास्वानाद्दन्तिनामात्मनैव स्थूलास्तावत्प्रावहन्दानकुल्याः ॥ ६९ ॥ प्रत्यासन्ने दन्तिनि प्रातिपक्षे यन्त्रा नागः प्रास्तवक्त्रच्छदोऽपि । क्रोधाक्रान्तः क्रूरनिर्दारिताक्षः प्रेक्षांचक्रे नैव किंचिन्मदान्धः ॥ ७० ॥ अन्योन्येषां पुष्कर[18]ैरामृशन्तो दानोद्भेदानुच्चकैर्भुग्नबालाः । उन्मूर्धानः संनिपत्यापरान्तैः प्रायुध्यन्त स्पष्टदन्तध्वनीभाः ॥ ७१ ॥ द्राघीयांसः संहताः स्थेमभाजश्चारूदग्रास्तीक्ष्णतामत्यजन्तः । दन्ता दन्तैराहताः साम[19]जानां भङ्गं जग्मुर्न स्वयं सामजाताः ॥ ७२ ॥ मातङ्गानां दन्तसंघट्टजन्मा हेमच्छेदच्छायचञ्चच्छिखाग्रः । लग्नोऽप्यग्निश्चामरेषु प्रकामं माञ्जिष्ठेषु व्यज्यते न स्म सैन्यैः ॥ ७३ ॥

१ शस्त्राणि २ अनुरूप कर्म ३ पक्षवत्ताया. ४ यथा कथञ्चित्कश्चित्स्कन्धमूर्ध्वारोहणक्रमेण किंचिदुरारोहमद्रितटादिकमारोहति तद्वदिति भाव. ५ आपणम्. ६ महत्कर्म. ७ वन्दिन.. ८ पराङ्मुखा ९ सरक्तरेखा. १० खड्गस. ११ कवचे १२ नासाम् १३ लोहमयेन. १४ नवारूढ.. १५ बाणविशेषेण. १६ सर्वव्यापिनी १७ पृथिव्या १८ शुण्डाग्रै. १९ गजानाम्

ओर्पामासे मत्सरोत्पातवाताश्लिष्यद्दन्तक्ष्मारुहां घर्षणोत्थैः । योगान्तैर्वा वह्निभिर्वारणाना- मुच्चैर्मूर्धन्व्योम्नि नक्षत्रमाला ॥ ७४ ॥ सान्द्राम्भोदश्यामले सामजाना वृन्दे नीताः शोणितैः शोणिमानम् । दन्ताः शोभामापुरम्भोनिधीना कन्दोद्भेदा वैद्रुमा वारिणीव ॥ ७५ ॥ उत्क्षिप्योच्चैः प्रस्फुरन्तं रदाभ्यामीषादन्तः कुञ्जरं शात्रवीयम् । शृङ्गप्रोतप्रावृषेण्याम्बुदस्य स्पष्टं प्रापत्साम्यमुर्वीधरस्य ॥ ७६ ॥ व्याप्तं लोकैर्दुःखलभ्यापसार सरम्भित्वादेत्य धीरो महीयः । सेनामध्यं गाहते वारणः स्म ब्रह्मेव प्रागादिदेवोदरान्तः ॥ ७७ ॥ भृङ्गश्रेणी- श्यामभासां समूहैर्नाराचानां विद्धनीरन्ध्रदेहः । निर्भीकत्वादाहवेनाहतेच्छो हृष्यन्हस्ती हृष्टरोमेव रेजे ॥ ७८ ॥ आताम्राभा रोषभाजः कटान्तादाशूत्खाते मार्गणे धूर्गतेन । नि- श्च्योतन्ती नागराजस्य जज्ञे दानस्याहो लोहितस्येव धारा ॥ ७९ ॥ कुर्वञ्ज्योत्स्नाविप्लुषां तुल्यरूपस्तारस्ताराजालसारामिव द्याम् । खड्गाघातैर्दारिताद्दन्तिकुम्भादाभाति स्म प्रोच्छ- लन्मौक्तिकौघः ॥ ८० ॥ दूरोत्क्षिप्तक्षिप्रचक्रेण कृत्तं मत्तो हस्तं हस्तिराजः स्वमेव । भीमं भूमौ लोलमानं सरोषः पादेनासृक्पङ्कपेषं पिपेष ॥ ८१ ॥ आपस्काराल्लूनगात्रस्य भूमि निःसाधारं गच्छतोऽवाङ्मुखस्य । लब्धायामं दन्तयोर्युग्ममेव स्वं नागस्य प्रापदुत्तम्भनत्वम् ॥ ८२ ॥ हस्तेनाग्रे वीतभीतिं गृहीत्वा कंचिद्व्यालः क्षिप्तवानूर्ध्वमुच्चैः । आसीनानां व्योम्नि तस्यैव हेतोर्दिव्यस्त्रीणामर्पयामास नूनम् ॥ ८३ ॥ आक्रम्यैकामग्रपादेन जङ्घामन्या- मुच्चैराददानः करेण । सास्थिस्वानं दारुवद्दारुणात्मा कंचिन्मध्यात्पाटयामास दन्ती ॥ ८४ ॥ उत्प्लुत्याराद्र्धचन्द्रेण लूने वक्त्रेऽन्यस्य क्रोधदष्टोष्ठदन्ते । सैन्यैः कण्ठच्छेदलीने कबन्धा- द्भूयो विभ्ये वल्गतः सासिपाणेः ॥ ८५ ॥ प्रत्यावृत्तं भङ्गभाजि स्वसैन्ये तुल्य मुक्तैरा- किरन्ति स्म कंचित् । एकौघेन स्वर्णपुङ्खैर्द्विषन्तः सिद्धा माल्यैः साधुवादैर्द्वयेऽपि ॥ ८६ ॥ वाणाक्षिप्तारोहशून्यासनानां प्रक्रान्तानामन्यसैन्यैर्ग्रहीतुम् । सरब्धाना भ्राम्यतामाजिभूमौ वीरी वीरैः सस्मरे वारणानाम् ॥ ८७ ॥ कश्चिन्मूर्च्छामेत्य गाढप्रहारः सिक्तः शीतैः शीकरैर्वारणस्य । उच्छश्वास प्रस्थिता तं जिघृक्षुर्व्यर्थाकूता नाकनारी मुमूर्च्छ ॥ ८८ ॥ लूनग्रीवात्सायकेनापरस्य द्यामत्युच्चैराननादुत्पतिष्णोः । त्रेसे मुग्धैः सैंहिकेयानुकाराद्रौ- द्राकारादप्सरोवक्त्रचन्द्रैः ॥ ८९ ॥ वृत्तं युद्धे शूरमाश्लिष्य काचिद्रन्तुं तूर्णं मेरुकुञ्जं जगाम । त्यक्त्वा नाग्नौ देहमेति स्म यावत्पत्नी सद्यस्तद्वियोगासमर्था ॥ ९० ॥ त्यक्तप्राणं संयुगे हस्तिनीस्था वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासुः । प्राप्याखण्ड देवभूयं सतीत्वादाशिश्लेष स्वैव कंचित्पुरंध्री ॥ ९१ ॥ स्वर्गे वासं कारयन्त्या चिराय प्रत्यग्रत्व प्रत्यह धारयन्त्या । कश्चिद्रेजे दिव्यनार्या परस्मिल्लोके लोकं प्रीणयन्त्येह कीर्त्या ॥ ९२ ॥ गत्वा नूनं वैबुधं

१ दग्धेत्यर्थ २ महादन्त. ३ आमूलात् ४ आयतम् ५ हृष्टहस्ती. ६ भज्यमानास्थिपटत्कारशब्दयुक्तम् ७ वाणेन ८ वन्धनस्थानम् ९ वृन्दै..

सद्म रम्यं मूर्च्छाभाजामाजगामान्तरात्मा । भूयो दृष्टप्रत्यया: प्राप्तसंज्ञा: साधीयस्ते यद्व्रणायाद्रियन्ते ॥ ९३ ॥ कश्चिच्छस्त्रापातमूढोऽपवोढुर्लब्ध्वा भूयश्चेतनामाहवाय । व्यावर्तिष्ट क्रोशतः सख्युरुच्चैस्त्यक्तश्चात्मा का च लोकानुवृत्तिः ॥ ९४ ॥ भिन्नोरस्कौ शत्रुणाकृष्य दूरादासन्नत्वात्कौचिदेकेषुणैव । अन्योन्यावष्टम्भसामर्थ्ययोगादूर्ध्वाविव स्वर्गतावप्यभूताम् ॥ ९५ ॥ भग्नैर्दण्डैरातपत्राणि भूमौ पर्यस्तानि प्रौढचन्द्रद्युतीनि । आहाराय प्रेतराजस्य रौप्यस्थालीनीव स्थापितानि स्म भान्ति ॥ ९६ ॥ रेजुर्भ्रष्टा वक्षसः कुङ्कुमाङ्का मुक्ताहाराः पार्थिवानां व्यसूनाम् । हासाछक्ष्याः पूर्णकामस्य मन्ये मृत्योर्दन्ताः पङ्क्तिरक्तामवस्य ॥९७॥ निम्नेष्वोघीभूतमस्त्रक्षतानामस्त्रं भूमौ यच्चकासांचकार । रागार्थं तत्किं नु कौसुम्भमम्भः [9]संव्यानानामन्तकान्तःपुरस्य ॥९८॥ रामेण त्रिःसप्तकृत्वो ह्रदानां चित्रं चक्रे पञ्चकं क्षत्रियास्रैः। रक्ताम्भोभिस्तत्क्षणादेव तस्मिन्संख्येऽसंख्याः प्रावहन्द्वीपवत्यः ॥ ९९ ॥ संदानान्तादस्त्रिभिः शिक्षितास्त्रैराविश्याधः शातशस्त्रावलूनाः । कूर्मोपम्यं व्यक्तमन्तर्नदीनामैभाः प्रापन्नङ्घ्रयोऽसृङ्मयीणाम् ॥ १०० ॥ पद्माकारैर्योधवक्त्रैरिभानां कर्णभ्रष्टैश्चामरैरेव हंसैः । सोप[3]स्काराः प्रावहन्नस्रतोयाः स्रोतस्विन्यो वीचिघूर्चैस्तराङ्गैः ॥१०१॥ उत्क्रान्तानामामिषायोपरिष्टादध्याकाशं बभ्रमुः पत्रवाहाः । मूर्ताः प्राणा नूनमद्याप्यवेक्षामासुः कायं त्याजिता दारुणास्त्रैः ॥१०२॥ आतन्वद्भिर्दिक्षु पत्राग्रनादं प्राप्तैर्दूरादाशु तीक्ष्णैर्मुखाग्रैः । आदौ रक्तं सैनिकानामजीवैर्जीवैः पश्चात्पत्रिपूगैरपायि ॥ १०३ ॥ ओजोभाजां यद्व्रणे संस्थितानामादत्तीव्रं सार्धमङ्गेन नूनम् । ज्वालाव्याजादुद्वमन्ती तदन्तस्तेजस्तारं दीप्तजिह्वा [6]ववाशे ॥१०४॥ नैरन्तर्यच्छिन्नदेहान्तरालं दुर्भक्षस्य ज्वालिना वाशितेन । योद्धुर्बाणप्रोतमादीप्य मांसं पाकापूर्वस्वादमादे शिवाभिः ॥१०५॥ ग्लानिच्छेदी क्षुत्प्रबोधाय पीत्वा रक्तारिष्टं शोषिताजीर्णशेषम् । स्वादुंकारं कालखण्डोपदंशं क्रोष्टा डिम्बं [8]व्यष्वणद्व्यस्वनच्च ॥१०६॥ क्रव्यात्पूगैः [11]संग्रामिकानां [12]प्रत्याशाभिर्मेदसो दारितानि। [13]आभीलानि प्राणिनः प्रत्यवश्यन्कार्ये नूनं व्याददावाननानि ॥१०७॥ कीर्णा रेजे साजिभूमिः समन्तादप्राणद्भिः प्राणभाजां [13]प्रतीकैः । बह्वारम्भैरर्धसंयोजितैर्वा रूपैः स्रष्टुः सृष्टिकर्मान्तशाला ॥१०८॥ त्वत्पत्रमुक्तविशिखैरशनिप्रकाशैरामूलऌननवकेतककान्तदन्ताः । त्रासावसन्नमदधारकपोलभागाः संपादयन्ति करिणः करिणीभ्रमं नः ॥१०९॥ कोऽप्येष खण्डितशिरा विकसन्मुखश्रीः प्रारब्धताण्डवविधिः सुरकामिनीभिः । आलोक्यते निजकराभिनयानुरूपव्यापारितेक्षणनिवेदितसत्त्वसारः ॥११०॥ मिलितमिहिरभासं मौलिमेतस्य दृष्ट्वा परवरतनु पादालक्तकं तर्कयन्त्या । त्वदसिधरणिजानिर्भानुबिम्बेन गच्छन्सुरनगरमृगाक्ष्या वीक्ष्यते साभ्यसूयम् ॥१११॥ भवत्तुरग-

१ उत्तरीयाणाम् २ नद्य. ३ सपरिकरा.. ४ मृतानाम्. ५ पक्षिण., (पक्षे) बाणाः. ६ रौति स्म. ७ कलेवरम् ८ मुक्तवान्. ९ मुखानि. १० तूर्याणाम्. ११ तृष्णाभिः. १२ भयकराणि. १३ अवयवैः.

निष्ठुरक्षुरद्रढव्रतेराचिता क्षणात्समरविच्युतप्रतिनृपालचेलाञ्चिता। इयं रणधरा भवद्भिर्द्रुदानधाराजलैः किमु व्रणतलेऽर्पितं वसनपट्टया सिञ्चति ॥ ११२ ॥ कृपाणकरिणानलं रुधिरनीरपूरच्छटाजटाव्रततिसंकुलं भटतिमिङ्गिलैराकुलम्। प्रमथ्य समरार्णवं धरमकर्षि लक्ष्मीस्त्वया विधाय मदमन्थरं मथनमन्दर सिन्धुरम् ॥ ११३ ॥ झणज्झणितकङ्कणक्वणितकिङ्किणीकं धनुर्ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम्। वितत्य किरतोः शरानविरतस्फुरच्चूडयोर्विचित्रमभिवर्धते भुवनभीममायोधनम् ॥ ११४ ॥ प्रतीक्ष्यन्ते वीराः प्रतिमुखमुरोभिः सरभसं विपक्षाणां हेतीः प्रतिनियतधैर्यानुभवतः । विदीर्णत्वग्भारादलितपिशिताच्छिन्नघमनिप्रकाण्डास्थिस्नायुस्फुटतरविलक्ष्यान्त्रनिवहाः ॥ ११५ ॥ शितैर्बाणैरेके मृधभुवि परे तीक्ष्णनखरैः क्रियासातत्येनाप्यहमहमिकाक्रान्तमनसः। मिथो विध्यन्ति स्म प्रबलतमसंमर्दविदलत्क्षितिक्षोदःपिष्टातकसुरभिवक्षस्तटभृतः ॥११६॥ भङ्गैर्भिन्नाः प्रतिनृपतयः शङ्खनादानुदाराञ्श्रुत्वा राजन्पुनरपि भुजादण्डकण्डूतिभाजः। आलिङ्गन्त्यास्त्रिदशसुदृशो भ्रूलतां वीक्ष्य भुग्नां चापभ्रान्त्या चपलमनसो हस्तमावर्तयन्ति ॥ ११७ ॥ मुञ्चद्भिर्मदवारि वारणगणैर्मेघायित कार्मुकैरेतैः शक्रशरासनायितमधश्छत्रैः शिलीन्ध्रायितम्। खद्योतायितमस्त्रघट्टनसमुद्भूतस्फुलिङ्गैः स्फुरन्नाराचैरशनायितं रणभुवा सैन्यैर्नभस्यायितम् ॥ ११८ ॥ भुग्नभ्रूयुगलैः क्रुधा समधिकस्फारारुणाक्षैः क्षणात्स्वेदाम्भःपटलप्रकृष्टतिलकैर्दष्टाधरोष्ठैरपि। दृष्टश्मश्रुभिरुत्पतद्भिरभितः सकीर्णमालक्ष्यते त्वद्धस्तास्त्रनिकृत्तवैरिसुभटश्रेणीशिरोभिर्वियत् ॥११९॥ क्ष्वेडाभिः ककुभः पृषत्कनिकरैर्व्योम द्विधाखण्डितैर्देहैर्विद्विषतां धरातलमपि प्रच्छादयन्तौ चिरम्। कुर्वातेऽश्रुजलाविलेक्षणपथान्येतावकाण्डोच्चरद्रोमाञ्चाणि सवेपथून्यपि मुहुर्वर्ष्माणि नः पश्यताम् ॥१२०॥ आगुञ्जद्गिरिकुञ्जकुञ्जरघटाविस्तीर्णकर्णज्वर ज्यानिर्घोपममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन्। वेल्लद्भैरवभूरिरुण्डनिकरैर्वीरो विधत्ते भुवस्तृण्यत्कालकरालवक्त्रविघसव्याकीर्यमाणा इव ॥ १२१ ॥ नो चापाकलनं न पत्रिधरणं न ज्यासमाकर्षणं नो बाहुस्फुरणं न बाणगमनं संलक्ष्यते ते रणे। किं तु प्रौढकरीन्द्रकुम्भविगलन्मुक्तागणप्रस्फुरत्प्रत्यर्थिक्षितिपालमौलिमणिभिर्विद्योतते भूरियम् ॥ १२२ ॥ वीराणां रुण्डतुण्डप्रविघटनपटुस्फारदोर्दण्डखण्डव्यापाराक्षिप्यमाणप्रतिभटविकटाटोपवर्ष्मप्ररूढः । कूटः कोऽप्येप युद्धाजिरभुवि जरठश्चित्रकूटानुकारी लीयन्ते यत्र शत्रुप्रपतनविवशाः कोटिशः शूरकीटाः ॥ १२३ ॥ प्रासप्रोतप्रवीरोल्बणरुधिरपरामृष्टबुक्काजिघत्साधावद्गृध्राधिराजाप्रतिमतनुरुहच्छायया वारितोष्णाः । विश्राम्यन्ति क्षणार्धं प्रधनपरिसरेष्वेव मुक्ताभियोगा वीराः शस्त्रप्रहारव्रणभररुधिरोद्गारदिग्धाखिलाङ्गाः ॥ १२४ ॥ जीवाकृष्टिं स चक्रे मृधभुवि धनुष. शत्रुरासीद्गतासुर्लक्षाप्तिर्मार्गणानामभवदरिबले तद्यशस्तेन लब्धम्। मुक्ता तेन क्षमेति त्वरितमरिगणैरुत्तमाङ्गैः प्रतिष्ठा पञ्चत्व द्वेपिसैन्ये स्थितमवनिपतिर्नोप

संख्यान्तरं सः ॥ १२५ ॥ युष्मद्दोर्दण्डमण्डल्यवनमितरणञ्चण्डकोदण्डदण्डोन्मु न्नमूर्छत्प्रतिनृपतिभुजाखण्डमुण्डावकीर्णा । गायन्नृत्यत्प्रवल्गद्व्रजनिचरवधूदत्ततालैः वैतालैरट्टहासप्रकटितदशनैर्युद्धभूर्भाति भीमा ॥ १२६ ॥ क्षुण्णं त्वद्वैरिराजीखुरपु वीक्ष्य हावै रिरक्तं स्वात्मन्यासिक्तमुद्यद्द्विरदमदजलैः शीतलैः शीलितां च । मवेक्ष्य ध्वजवसनचलैर्वीजितामाजिभूमिं धूलिः स्वर्गं द्रुता ते रचयति सुयशः सौ त्संयोगात् ॥ १२७ ॥

---

## अरिपलायनम् ।

सालकाननयुक्तापि सोलकाननवर्जिता । हारावरुद्धकण्ठापि विहारारिवधूस्तव विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः । वृककाकशिवास्तत्र धावन्त्यरिपुरे त्वकान्तदवकान्तारो यद्वैरिसुदृशामभूत् । जघनस्तनमुच्चैर्यो व्यलिखत्कण्टकैर्नखैः काठिन्यं कुचयोः स्रष्टुं वाञ्छन्त्यः पादपद्मयोः । निन्दन्ति विश्वधातारं त्वद्वारी कुर्वते रतिम्॥ ५ ॥ वीर त्वद्रिपुरमणी परिधातुं पल्लवानि संस्पृश्य । न ... हरति ... जकररुहरुचिरैरवचितानि पाण्डुपत्रधिया ॥६॥ त्वद्वैरिणो वीर पलायितस्य ... य प्रकाशयन्नक्रमरण्यमार्गान् । कृशानुरासीदभिनन्दनीयस्तुङ्गेषु लग्नो रिपुमन्दिरेषु ॥७॥ ... राजन्द्विपस्ते भयविद्रुतस्य भालस्थलं कण्टकिनो वनान्ताः । अद्यापि किं वानुभविष्य... ...नीति व्यपाटयन्द्रष्टुमिवाक्षराणि ॥ ८ ॥ इतस्त्रसद्विद्रुतवैरिभूभृत्प्रियाय दृष्टा वनमानवीज... ...नैः । शशंस पृष्ठाभुतमात्मदेशं शीतद्विपः शीतलशीतलं किल ॥ ९ ॥ समस्तावनीनाथम... ...शैले भवन्तः परास्ता द्विपः पद्मविरतारिनेत्रा । नितान्तं विहस्ता स्वहस्तारविन्दैर्विधत्ते ... पुरस्ताद्वुरस्ताडनानि ॥ १० ॥ अलकभुजलताभिर्नाहतो नागरीभिर्भवनदमनकानां नाति... ...थेर्वा बभूव । त्वदरिनगरमध्ये संचरंश्चैत्रजन्मा जरदजगरपीतः क्षीयते गन्धवाहः ॥ ११ ॥ त्वदरिनृपतिमाशावासगं धूलिधाराधवलमहह शिशुं वीक्ष्य भर्गभ्रमेण । सुरभिरुदविवेला... काननं गाहमानो दिशति कुसुमबाणं दूरतो निर्गमाय ॥ १२ ॥ त्वदरिनृपतिकेलीसौ... ...प्रसंरूढदूर्वाङ्कुरकवलविलोलं वीक्ष्य र... मृगशोः । उपवनहरिणीनामुन्नतो भ्रूलतानां ...सरति रतिजानिग्लानिजन्मा विवर्तः ॥ १३ ॥ वर्षासु भीतमवशाद्विभुज भुजंगमेकं ...गृह्य शिरसि स्थितमञ्जनाभम् । शून्ये तवारिनगरे शबरी मयूरमादित्सते कनकमुष्टिकृपा... ...णलोभात् ॥ १४ ॥ स्फुटतरमटवीनां प्रान्तरे पर्यटन्ती हरिहतगजकुम्भोन्मुक्तमुक्ताफलानि ... परिकरपतिहस्ताम्भोजशोणप्रभाभिः परिहरति च दूरान्मङ्क्षु गुञ्जाभ्रमेण ॥ १५ ॥ ये कन्दरासु निवसन्ति सदा

---

१ ... २ ... ४ ...

हिमाद्रेस्त्वत्पातशङ्कितधियो विवशा द्विषस्ते । अभ्यङ्गमुत्पुलकमुद्वहतां सकम्पं तेषामहो बत भियां न बुधोऽप्यभिज्ञः ॥ १६ ॥ कुरुबक कराघातक्रीडासुखेन वियुज्यसे बकुलवि-टपिन्स्मर्तव्यं ते मुखासवसेचनम् । चरणघटनावन्ध्यो यास्यस्यशोक सशोकतामिति निज-पुरत्यागे यस्य द्विषां जगदुः स्त्रियः ॥ १७ ॥ अनारतपरिस्खलन्नयनवारिधाराशतप्रवृद्ध-पथनिम्नगासलिलरुद्धयानोद्यमा । त्वदीयरिपुकामिनी बहुविदेशमानैषिणी विनिन्दति बलं दृशा गुरुरुपाश्रुषं प्रावृषम् ॥ १८ ॥ इतश्चेतश्चाद्रिर्विघटिततटः सेतुरुदरे धरित्री दुर्लङ्घ्या बहुलहिमपङ्को गिरिरयम् । इदानीं निर्वृत्ते करितुरगनीराजनविधौ न जाने यातारस्तव च रिपवः केन च पथा ॥ १९ ॥ क्षणं कान्तागारप्रसरविलसन्मानसरतिः क्षणं शैलोत्सङ्गे द्विजकुलरवाकृष्टहृदयः । क्षणं पत्त्रध्वानश्रुतिपुलकितो यद्भयभराद्वसन्प्राप्तोऽरण्ये रिपुरव-निपालस्थितिमिव ॥ २० ॥ अये मातस्तातः क्व गत इति यद्वैरिशिशुना दरीगेहे लीना निभृतमिह दृष्टा स्वजननी । करेणास्यं तस्य द्रुतमथ निरुद्ध्याश्रुसृतया विनिश्वस्य स्फारं शिव शिव दृशैवोत्तरयति ॥ २१ ॥ अपर्णेयं भूभृद्वनमटति वल्काम्बरधरा जटालो दि-ग्वासाः शिखरिणि शिवोऽयं निवसति । इति भ्रान्त्यान्योन्यं क्षणमिलितयोः क्षोणितिलक द्विपद्दंपत्योस्ते शिवशिवशिवन्ति प्रणतयः ॥ २२ ॥ पश्येत्कश्चिच्चल चपल रे का त्वराहं कुमारी हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि । इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽर-ण्यवृत्तेः कन्या कंचित्फलकिसलयान्याददानाभिधत्ते ॥ २३ ॥ स्वल्पं ब्रूमः किमपि चरितं वीरवर्य त्वदीयं मिथ्यावादाः कवय इति नो दुःप्रवादो रुणद्धि । मुक्ता मुक्ता मलयशिखरे त्वद्विपक्षावरोधैरण्डभ्रान्त्या भुजगललनाः सादरं पालयन्ति ॥ २४ ॥ क्षोणीपाल त्वदरि-हरिणीलोचना शोचमाना गुञ्जाहारं कुचकलशयोर्निःश्वसन्ती करोति । क्षुभ्यत्क्षीराम्बुधिल-हरिसंक्षोभिभिस्त्वद्यशोभिर्गौरं मुक्ताफलमयमिवाविन्दते नन्दतन्वा ॥ २५ ॥ विमुञ्चति पदे पदे रुचिरचीरहारादिकं शुकं गृहसमुत्सुकं त्यजति नैव जीवाधिकम् । पलायनपरायणा तव विभो रिपोरङ्गना मुहुर्वलितकंधरं मिहिरमण्डलं वीक्षते ॥ २६ ॥ धराधर तव द्विपा वनजुषा विहीनत्विषां दधे गुणनिधे धनुर्विगुणमप्यनेकं गुणम् । कलाहरणयष्टिकाकरणक-न्दरान्तः शिवानिवारणविहगिकाकरणचुल्लिकाकर्षणैः ॥ २७ ॥ राजेन्राजसुता न पाठ-यति मा देव्योऽपि तूष्णीं स्थिताः कुब्जे भोजय मा कुमारसचिवैर्नाद्यापि किं भुज्यते । इत्थं नाथ शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जराच्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभा-षते ॥ २८ ॥ क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः पादैः पातितयावकै-रिव गलद्बाष्पाम्बुधौताननाः । भीता भर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना दावाग्नि प-रितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥ २९ ॥ तन्वीमुज्झितभूषणा कलगिरं रोमोद्गमं नि-

१ लाक्षारसः.

भ्रतीं वेपन्तीं व्रणिताधरां विवसनां सीत्कारमातन्वतीम् । दोर्भ्यां चण्डतुषारपातसभयामालिङ्ग्य कण्ठे भृशं स्वां मूर्तिं दयितामिवातिरसिका त्वद्विद्विषः शेरते ॥ ३० ॥ भूसंपर्करजोनिपातमलिनाः स्वस्माद्गृहात्प्रच्युताः सामान्यैरपि जन्तुभिः करतलैर्निःशङ्कमालिङ्गिताः । संलग्नाः क्वचिदेकतामुपगताः क्वापि प्रबुद्धाः क्वचित्सुप्ताः क्वापि च सारवत्प्रतिगृहं भ्रान्तास्तवारिस्त्रियः ॥ ३१ ॥ कर्षद्भिः सिचयाञ्चलान्यतिरसात्कुर्वद्भिरालिङ्गनं गृह्णानैः कचमालिहद्भिरधरं विभ्रामयद्भिः करौ । प्रत्यक्षेऽपि भवद्विरोधिनृपतेरन्तःपुराणामहो धिक्कष्टं विटपैर्विटैरिव वने किं नाम नो चेष्टितम् ॥ ३२ ॥ स्नाताः प्रावृषि वारिवाहपटलैः प्रोद्भूतदूर्वाङ्कुरव्याजेनात्तकुशाः प्रणालसलिलैर्दत्त्वा निवापाञ्जलीन् । प्रासादास्तव विद्विषां परिपतत्कुड्यस्थपिण्डच्छलात्कुर्वन्ति प्रतिवासरं निजपतिप्रेताय पिण्डक्रियाः ॥ ३३ ॥ मौलिं मानविधिं विना नमयितुं हारं स्वयं गुम्फितुं निर्यातुं दयितस्य पाणिकमलच्छायां विना वर्त्मनि । निद्रातुं च विनाङ्कपालिशयनं द्रष्टुं च शून्या दिशः सख्या त्वत्प्रतिवीर नीरजमुखी साकूतमध्याप्यते ॥ ३४ ॥ घ्रातं तालफलाशया स्तनतटं बिम्बभ्रमेणाधरो दष्टः पाकविदीर्णदाडिमधिया लीढाः स्फुरन्तो रदाः । भ्राम्यन्ती श्रमनिस्सहानुविपिनं त्वद्वैरिसीमन्तिनी निद्राणा मुहुराहता मुहुरपि क्षिप्ता च शाखामृगैः ॥ ३५ ॥ त्वत्प्रत्यर्थिवसुंधरेशतरुणीः संत्रासतः सत्वरं यान्तीर्वीर विलुण्ठितुं सरभसं याताः किराता वने । तिष्ठन्ति स्तिमिताः प्ररूढपुलकास्ते विस्मृतोपक्रमास्तासामुत्तरलैः स्तनैरतितरां लोलैरपाङ्गैरपि ॥ ३६ ॥ एतस्मिन्विजने वनेऽतनुतरुच्छन्नावकाशे सुखं तिष्ठामीति तव द्विषामधिपतिर्यावद्विधत्ते मतिम् । तावत्तत्र निपातितं भुवि भवन्नाम्नाङ्कितेनाहतं दृष्ट्वा केसरिणः करङ्कमसमत्रासो मुहुर्मूर्च्छति ॥ ३७ ॥ का त्वं पुत्रि नरेन्द्र लुब्धकवधूर्हस्ते किमेतत्पलं क्षामं किं सहजं ब्रवीमि नृपते यद्यस्ति ते कौतुकम् । गायन्ति त्वदरिप्रियाश्रुतटिनीतीरेषु सिद्धाङ्गना गीतान्धा न तृणं चरन्ति हरिणास्तेनामिषं दुर्बलम् ॥ ३८ ॥ स्वप्नेऽपि क्षितिपावतंस भवतो भीत्या व्रजन्ती वनं निर्मग्ना प्रतिपक्षवैरिरमणी कल्लोलिनीपाथसि । उत्क्षिप्ताननमुन्नतभ्रुचरणव्यासक्तमुक्ताफलं भूपः स्फारितबाहुवल्लिशयनादुद्भ्रान्तमुत्तिष्ठति ॥३९॥ तादृग्दण्डविकीर्तनर्तितममी चक्रादयः क्रामिताः क्वापि क्वापि च कण्टकैरुपगता रेखोपरेखाभ्रमम् । यस्य प्रौढतरप्रतापदहनज्वालाभिरन्ते दिशामापाके निपतन्ति पार्थिवघटाः शीर्यन्ति वीर्यन्ति च ॥ ४० ॥ आगच्छागच्छ सज्ज कुरु वरतुरगं संनिधेहि द्रुतं मे खड्गः क्वासौ कृपाणीमुपनय धनुषा किं किमङ्गप्रविष्टम् । संरम्भोन्निद्रितानां क्षितिभृति गहनेऽन्योन्यमेवं प्रतीच्छन्वादः स्वप्नाभिदृष्टे त्वयि चकितदृशां विद्विषामाविरासीत् ॥ ४१ ॥ यातीतः पान्थ पन्था व्रजति

---

१ शत्रवः. २ भयात् ३ स्तब्धाः. ४ लुण्ठनरूपः. ५ अतिचपलैः. ६ महद्भिः. ७ शस्त्रविशेषः. ८ अस्थिपञ्जरम् ९ अतुलत्रासः. १० मासम्.

ननु कथं स्थावरं वर्त्म मुग्धे मार्गं पृच्छामि पृच्छ स्थितमिदमिह ते विस्मितं वीक्ष्य नेत्रे । अध्वान ब्रूह्यपेतध्वनि भवति वचश्चित्रमुद्दामनेत्रा दृश्यन्ते दावमूढाः पथि पथिकविटैस्त्वद्विषां नाथ नार्यः ॥ ४२ ॥ आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे लुप्तायां मेखलायां कनकमणितुलाकोटियुग्मे गृहीते । शोणं बिम्बौष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये राजन्गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥ ४३ ॥ सिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकैस्तत्रासोल्लासलोलाः किसलयमनसा पाणयः कीरदष्टाः । तच्छोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकैरित्थं राजेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ॥ ४४ ॥ प्राप्तास्त्रासात्पिपासातिशयमुपगताः पातुमारण्यमम्भो युष्मद्विद्वेषियोषाः श्वसितसमुदयैस्तत्तदीयैरशोषि । एतत्संवीक्ष्य मूर्च्छानिपतिततनवो नैव जीवेयुरेताश्चिन्तोपेताः शबर्यो निजनयनजलैः पल्वलं पूरयेयुः ॥ ४५ ॥ वीर त्वद्वैरिदारा गहनगिरिगुहागह्वरान्तस्तमिस्रं त्वत्रासाद्गुह्यवासा दरकलितहृदो यद्यदेव प्रपन्नाः । तत्तज्ज्योत्स्नायमानं धरणिपरिवृढं प्रेक्ष्य युष्मद्यशोभिः सद्यो मोहान्धकारानुसरणशरणा वासरान्वाहयन्ति ॥ ४६ ॥ कीर्त्या पारं प्रयान्त्या वरममचरमं लम्भितेव प्रतापादब्धीनां शोषवार्ता स्वसदसि निभृतं केनचित्कापि लीलाम् । लक्ष्म्या कोशे हि नासौ वरमसि सुधया कामधेन्वा कटाक्षे कोपे क्ष्वेडेन शश्वद्यशसि च शशिना वारिणाद्वारिनेत्रे ॥ ४७ ॥ एतद्भीतारिनारी गिरिबिलविगलद्वासरा निःसरन्ती स्वक्रीडाहंसमोहग्रहिलशिशुभृशप्रार्थितोन्निद्रचन्द्रा । आक्रन्दद्भूरि यत्तन्नयनजलमिलच्चन्द्रहंसानुबिम्बप्रत्यासत्तिप्रहृष्यत्तनयविहसितैराश्वसीद्व्यश्वसीच्च ॥ ४८ ॥ धूलीधाराभिरन्धास्तदनु बधिरतामागता स्फारभेरीभूयोझाङ्काररावैरमृतकरकुलापीडयत्सैन्ययाने । धावन्तो विन्ध्यभूभृद्घनघनकुहरे कण्टकाकृष्टकेशास्त्रायध्वं मुञ्चतेति प्रतिहतविकला वैरिणः संगिरन्ते ॥ ४९ ॥ देव त्वद्धाटिकाया गिरिगहनतटीं संविशन्ती पटीरं लुम्पन्ती छिन्नहारा त्वदरिवरवधूस्तां दराद्वीक्ष्य दिक्षु । स्नेहार्द्रा स्रस्तवस्त्रा विगलितकबरी हन्त हन्तुं न शक्ता रीतीं त्वामाश्रयन्ती रतिविरतिकृतां भाति कालेऽपि भेजे ॥ ५० ॥

## प्रतापवर्णनम् ।

चित्रं तपति राजेन्द्र प्रतापतपनस्तव । अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणम् ॥ १ ॥ त्वत्प्रतापस्य भानोश्च अन्तरं महदन्तरम् । सच्छत्रान्बाधते पूर्वो विच्छत्रान्बाधतेऽपरः ॥ २ ॥ राजन्सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः । पुनस्त्वद्वैरिवनिताबाष्पपूरेण पूरिताः ॥ ३ ॥ दीपयन्रोदसीरन्ध्रमेष ज्वलति सर्वतः । प्रतापस्तव राजेन्द्र वैरिवंशदवानलः ॥४॥

१ भर्मदः. २ सत्वराः.

त्वत्प्रतापानर्घहेमसंपुटेऽतिमनोहरे । ब्रह्माण्डशालिग्रामोऽसौ धराधीश विराजते ॥ ५ ॥ तवारिनारीनयनाम्बुपूरं निपीय राजन्भुमतिप्रतापः । रिङ्गत्तरंगावलिनीयतुङ्गं यथा समुद्रं वडवाहुताशः ॥ ६ ॥ वृद्धं प्रतापं तव भूप जेतुं मेरुं परं वीक्ष्य रविः सुमेरुम् । द्राग्द्वादशात्माशतसंख्यरश्मिः सप्ताश्व आसीन्मित आशु चण्डः ॥ ७ ॥ त्वत्प्रतापतपनातपतप्तस्तीक्ष्णरश्मिरपि दिक्षु नितान्तम् । धावति प्रतिदिनं मुकुटेश त्वद्यशोच्चयतितस्तुहिनांशुः ॥८॥ उदितेऽपि तवावनीन्द्र तेजस्तपने स्फारगभस्तिभारभाजि । तव वैरिनृपा यशस्तमांसि स्फुरदुज्जृम्भितमाचरन्ति चित्रम् ॥ ९ ॥ प्रत्यर्थिवामनयनानयनाम्बुपूरैः सद्यः स्खलद्बहलकज्जलजालनीलैः । युष्मत्प्रतापतपनस्तपनाद्यवीयानारभ्यते यदमुना यमुनासहस्रम् ॥ १० ॥ मार्तण्डमण्डलसमं भवतः प्रतापं ये वर्णयन्ति नहि ते कवयः प्रवीणाः । अम्भोनिधौ विलयमेति परं पतङ्गः पारं प्रयाति जलधेस्तु तव प्रतापः ॥ ११ ॥ उल्लास्य कालकरवालमहाम्बुवाहं देवेन येन जरठोर्जितगर्जितेन । निर्वापितः सकल एव रणे रिपूणां धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥ १२ ॥ वदन्तु देव तावकं प्रतापमेव पावकं महातुषारशीतलं वदामहे वयं यतः । सुमेरुकन्दरोदरास्थितो गृहीतकम्बलस्तवारिवर्गपङ्कजः प्रकम्पते मुहुर्मुहुः ॥ १३ ॥ अये नृपतिमण्डलीमुकुटरत्न युष्मद्भुजामहोष्मततिसंजुषा बत भवत्प्रतापार्चिषा । द्विषामतिभृशं यशः प्रकटपारदो ध्यापनादुदस्फुटत तारकाकपटतो विहायस्तटे ॥ १४ ॥ अत्युक्तौ यदि न प्रकुप्यसि मृषावादं न चेन्मन्यसे तद्ब्रूमोऽद्भुतदर्शनेन रसना केषां न कण्डूयते । देव त्वत्तरुणप्रतापदहनज्वालावलीशोषिताः सर्वे वारिधयस्तवारिवनितानेत्राम्बुभिः पूरिताः ॥ १५ ॥ देव त्वत्तरुणप्रतापतपनत्रासादिव त्र्यम्बको नो गङ्गां विजहाति निःसरति न क्षीराम्बुधेर्माधवः । ताम्यंस्तामरसान्तरालवसतिर्देवः स्वयंभूरभूत्पातालावधिपङ्कलग्नवपुषस्तिष्ठन्ति कूर्मादयः ॥ १६ ॥ अब्दैर्वारिजिघृक्षयार्णवगतैः साकं व्रजन्ती मुहुः संसर्गाद्वडवानलस्य समभूदापन्नसत्त्वा तडित् । मन्ये देव तया क्रमेण जनितो युष्मत्प्रतापानलो येनारातिवधूविलोचनजलैः सिक्तोऽपि संवर्धते ॥ १७ ॥ देव त्वद्भुजदण्डदर्पगरिमोद्गीर्णप्रतापानलज्वालावक्रिमकीर्तिपारदघटीविस्फारिता बिन्दवः । शेषाहिः कति तारकाः कति कति क्षीरोदधिः कत्यपि प्रालेयाचलशङ्खशुक्तिकरकाः कर्पूरकुन्देन्दवः ॥ १८ ॥ भङ्गाकीर्तिमषीमलीमसतया प्रत्यर्थिसेनाभटश्रेणीतिन्दुककाननेषु विलसत्यस्य प्रतापानलः । अस्मादुत्पतिताः स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुटं भालोद्भूतभवाक्षिभा-

---

१ कठिनम्. २ ऊर्जस्वलम् ३ अत्राय भावः. वैरिस्त्रियः स्वभर्तृमरणाद्यथायथाधिक रुदन्ति तथातथाधिकं तन्नेत्राम्बुभिस्त्वत्प्रतापाग्निः सवर्धने. त्वत्प्रतापोऽधिको भवतीति यावत्. यतः स प्रतापाग्निर्वडवानलपितुस्तडितश्च मातुः समुत्पन्नस्तौ च पितरौ पानीययोगादेवोज्जृम्भेतेऽतस्तत्पुत्रोऽपि त्वत्प्रतापो भवद्वैरिरमणीनेत्राम्बुभि सिच्यमानो वृद्धिमाप्नोतीत्येतदुचितमेवेति. ४ पराजयः. ५ कालस्कन्दवनेषु. ६ तिन्दुककाष्टेभ्यो दह्यमानेभ्यो महान्त. स्फुलिङ्गा उत्तिष्ठन्तीति वृद्धव्यवहारः. ७ हरनिटिलनेत्रम्..

नुहुतभुग्जम्भारिदंम्भोलयः ॥ १९ ॥ तादृग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्तृतां शङ्के यत्प्रतिबिम्बमम्बुधिपयःपूरोदरे वाडवः । व्योमव्यापिविपक्षराजकयशस्तारा: पराभावुकः कासामस्य न स प्रतापतपनः पारं गिरां गाहते ॥ २० ॥ शंभुर्मानससंविधौ सुरधुनीं मूर्ध्ना दधानः स्थितः श्रीकान्तश्चरणस्थितामपि वहन्नेतां निलीनोऽम्बुधौ । मग्नः पङ्करुहे कमण्डलुगतामेनां दधन्नाभिभूर्मन्ये वीर तव प्रतापदहनं ज्ञात्वोल्बण भाविनः ॥ २१ ॥ युष्मत्प्रौढतरप्रतापतपनज्वालावलीव्याकुले ब्रह्माण्डे मधुसूदनोऽहिशयने शेते पयःसागरे । शंभुर्जह्नुसुतां दधाति शिरसा भूमिस्तुषाराचलं तापव्याकुलितः पतत्यतितरां भानुः समुद्रे मुहुः ॥ २२ ॥ नार्यः कुङ्कुमशङ्कया निटिलगं प्रोञ्छन्त्यपास्तद्विषां सांध्यं रागममुं विभाव्य गगने गच्छन्ति केलिगृहम् । मुग्धा दावधियोऽरयस्तव विभो यान्ति द्रुतं कानने लाक्षाराग इति प्रकुप्यति धवे कान्ता प्रतापोदये ॥ २३ ॥ यो नास्ताचलमस्तकं प्रति गतो दीनत्वमालम्बते यो नायाति निशासु संशयपदं नोदेति गिर्याश्रयात् । यो राहोरपि कर्करोपु दशनेष्वासीन्न वा गोचरः सोऽयं भूप तव प्रतापतपनो वर्वति सर्वोपरि ॥ २४ ॥ कान्तारे जलवृक्षवैरिणि मुहुस्त्वद्वैरिवामभ्रुवो बालैराकुललोचनैः प्रतिपदं रुद्धक्रमाश्चङ्क्रमे । पृथ्वीचण्डरुचे पटच्चरदशासंघट्टदीप्तप्रभं सिञ्चन्त्यञ्जलिसंचिताश्रुभिरलं युष्मत्प्रतापानलम् ॥ २५ ॥ चक्रद्वन्द्वमुदञ्चति प्रतिदिशं मोदं विधत्तेतरां पद्मानां ततिरेति घूकतिमिरेन्दूद्धापितेऽन्यं क्वचित् । वैकल्यं च मिनोति हंस उदये म्लायत्यरीणा व्रजो राजन्कैरविणीवनैः समुदिते युष्मत्प्रतापे रवौ ॥ २६ ॥ अध्यायोधनवेदिमार्गणकुशानास्तीर्य खड्गस्रुचा हुत्वारेः पललं चरुं हविरसृक्तन्मस्तकस्वस्तिकैः । संवेष्टचाहवनीयमानसदसिख्योऽसौ प्रतापानलोऽस्थापि द्रागुदकाञ्जलीकृतचतुःपाथोधिना श्रीमता ॥ २७ ॥ त्रैलोक्याभयदानकल्पितमति द्योतत्प्रभो भास्वरः स्वैरं स्वस्तटिनीतटेऽपि विहरन्भाति प्रतापस्तव । माघे मज्जनशीतसंभ्रमयुता मुग्धा द्युलोकस्त्रियः स्तम्भान्तं निजपाणिपद्मनिवहैः संभावयन्त्यञ्जसा ॥ २८ ॥ देव त्वद्भुजदण्डचण्डिमचमत्कारिप्रतापानलज्वालाजालभयादिवाभिविशति क्षीराम्बुधि माधवः । भर्गः स्वर्गधुनीं दधाति शिरसा त्यक्तस्त्रिलोकीकृतिर्वेधा किं तु मुहुः कमण्डलुजलैरात्मानमासिञ्चति ॥ २९ ॥ श्रीमद्वीराधिवीर पृथुतरमहसस्त्वत्प्रतापाग्निकीलाच्छ्रुत्वाब्धेः शोषवार्तां शरणमनुगतः कुत्राचित्कश्चिदेव । चन्द्रः कीर्त्या सुधास्ये त्रिदशतरुवरः पाणिपद्मे च कोशे लक्ष्मीः क्ष्वेडं च कोपे जलधरकुसुमं वैरिकान्तादृगन्ते ॥ ३० ॥ द्रागाक्रम्योदयाद्रिं चरमगिरिमतिस्पर्धया तिग्मरश्मेर्मेरुं पर्यंत्यलङ्कानगरमुपगतः कौतुकात्त्वत्प्रतापः । वीक्ष्यामुं वीतिहोत्र पुनरपि विपद देव निश्चिन्वतीना यः क्षोभो राक्षसीनां क्षणमजनि स हि त्वद्विषां सर्वदास्ताम् ॥ ३१ ॥ त्वत्खड्गाघातजीथव्यथारिपुवनितामुक्त-

---

१ कुलिशम्. २ " चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते " इति. ३ अर्चि.. ४ गरलम्.

बाष्पाम्बुधारासारादाराद्दुदाराद्दिशि दिशि सरितामुद्भवाश्चेद्भवेयुः । कल्पान्तक्रूरकेलिप्रकरविजयिनो विस्फुरत्त्वत्प्रतापात्पारावारानपारानपि सपदि परा शुष्यतः पूरयेत्कः ॥३२॥ दुर्वारारातिवाजीवनदवदहनः कौङ्कुमो दिग्वधूनां सर्वाङ्गीणोऽङ्गरागस्त्रिभुवनभवनध्वान्तविध्वंसदीपः । त्वद्दोरुद्दामदर्वीकरमुखहुतभुग्भूतधात्रीपुरंध्र्यावासो माञ्जिष्ठमुर्वीरमणकुलमणे जागरीति प्रतापः ॥३३॥ भूजाने किं न जाने भवदतुलभुजभ्राजमानप्रतापज्योतिर्ज्वालावलीभिर्जलनिधिवलये निर्जलं किं न भूयात् । युष्मत्प्रत्यर्थिपृथ्वीपरिवृढवनितानीरनेत्रस्रवन्तीस्यूतः स्रोतःसहस्रैरयमिह परितश्चेन्न पूर्येत सद्यः ॥ ३४ ॥

---

## कीर्तिवर्णनम् ।

राजंस्त्वत्कीर्तिचन्द्रेण तिथयः पूर्णिमाः कृताः । मद्गेहान्न बहिर्याति तिथिरेकादशी भयात् ॥ १ ॥ अस्थिवद्दधिवच्चैव कुष्ठवत्पिष्टवत्तथा । राजंस्तव यशो भाति शरच्चन्द्रमरीचिवत् ॥ २ ॥ सरस्वती स्थिता वक्त्रे लक्ष्मीर्वेश्मनि ते स्थिता । कीर्तिः किं कुपिता राजन्येन देशान्तरं गता ॥ ३ ॥ यद्गुणैर्ग्रथितैः शुद्धैरमितैर्ब्रह्मगोलकः । विधत्ते कीर्तिकन्यायाः क्रीडाकन्दुककौशलम् ॥ ४ ॥ सिक्तं स्फटिककुम्भान्तः स्थितिः श्वेतीकृतैर्जलैः । मौक्तिकं चेल्लतां सूते तत्पुष्पैस्ते समं यशः ॥ ५ ॥ अहो विशालं भूपाल भुवनत्रितयोदरम् । माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ ६ ॥ त्वत्कीर्तिराजहंस्या वैरिवधूवदनभाजनस्थमपि । पीतं हासक्षीरं व्यक्तीकृतमश्रुनीरं च ॥ ७ ॥ कुचकलशेष्वबलानामलकायामथ पयोनिधेः पुलिने । क्षितिपाल कीर्तयस्ते हारन्ति हरन्ति हीरन्ति ॥ ८ ॥ रजनीषु विमलभानोः करजालेन प्रकाशितं वीर । धवलयति भुवनमण्डलमखिलं तव कीर्तिसंततिः सततम् ॥ ९ ॥ दूरेऽपि श्रुत्वा भवदीयकीर्तिः कर्णौ हि तृप्तौ न च चक्षुषी मे । तयोर्विवादं परिहर्तुकामः समागतोऽहं तव दर्शनाय ॥ १० ॥ आकर्ण्य भूपाल यशस्त्वदीयं विधूनयन्तीह न के शिरांसि । विश्वंभराभङ्गभयेन धात्रा नाकारि कर्णौ भुजगेश्वरस्य ॥ ११ ॥ यस्याञ्जनश्यामलखड्गपट्टजातानि जाने धवलत्वमापुः । अरातिनारीशरकाण्डपाण्डुगण्डस्थलीनिर्लुठनाद्यशांसि ॥ १२ ॥ यः कोटिहोमानलधूमजालैर्मलीमसीकृत्य दिशां मुखानि । तत्कीर्तिभिः क्षालयति स्म शश्वदखण्डतारापतिपाण्डुराभिः ॥ १३ ॥ इदं यशांसि द्विषतः सुधारुचः किमङ्गमेतद्द्विपतः किमाननम् । यशोभिरस्याखिललोकधाविभिर्विभीषिता धावति तामसी मसी ॥ १४ ॥ अदः समित्संमुखवीरयौवतत्रुटद्दुजार्कम्बुमृणालहारिणी । द्विषद्गणस्त्रैणदृगम्बुनिर्झरे यशोमरालावलिरस्य खेलति ॥ १५ ॥ आभिः सरन्तीमपि देहगर्भात्कीर्तिः परेषामसतीं वदन्ति । स्वैरं चरन्तीमपि च त्रिलोक्यां त्वत्कीर्तिमाहुः कवयः सतीं

---

१ अपरिमितः. २ कम्पयन्ति. ३ पृथ्वी. ४ शेषस. ५ युवतीसमूहः. ६ शङ्खवलयानि.

। ॥ १६ ॥ करवालकरालवारिधारा यमुना दिव्यतरंगिणी च कीर्तिः । तव कामद तीर्थराज दूरादनुबध्नासि सरस्वती कवीनाम् ॥ १७ ॥ त्रिजगदङ्गनलङ्घनजाङ्घिकैस्तव यशोभिरिव पवित्रिताः । प्रथमपार्थिवपुंगवकीर्तयो विबुधसिन्धुजलैरिव सिन्धवः ॥ १८ ॥ त्वत्कीर्तमौक्तिकफलानि गुणैस्त्वदीयैः संदर्भितुं विबुधवामदृशः प्रवृत्ताः । नान्तो गुणेषु न च कीर्तिषु रन्ध्रलेशो हारो न जात इति ताश्च मिथो हसन्ति ॥ १९ ॥ पृथ्वीपते शुभमते भवतो भवस्य ब्रूमो वयं सुयशसा कियदन्तरं वा । गौरीचकार गिरिशो निजमर्धमङ्ग गौरीकृतं च भवता भुवनं समस्तम् ॥ २० ॥ कीर्तिस्तव क्षितिप याति भुजङ्गगेहं[1] मातङ्गसंगमकरी[2] च दिगन्तकेषु[3] । त्यक्त्वाम्बरं[4] भजति नन्दनम्[5]अगम्यं[6] किं किं करोति न निरर्गलतां[7] गता स्त्री ॥ २१ ॥ निर्भुक्तशेषधवलैरचलेन्द्रमन्थसंक्षुब्धदुग्धमयसागरगर्भगौरैः । राजन्निदं बहुलपक्षदलन्मृगाङ्कच्छेदोज्ज्वलैस्तव यशोभिरशोभि विश्वम् ॥ २२ ॥ त्वत्कीर्तितत्त्वममलं सकलास्ववस्थास्वामुष्य भूपतिमणे ललनामवद्याम् । स्वश्रेयसे स्थिरमना रिपुवीरसंघो ह्यद्वैतवाद्यधिविनावयतीव नित्यम् ॥ २३ ॥ प्रतिनगरमटन्ती प्रत्यगारं व्रजन्ती प्रतिनरपतिवक्षःकण्ठपीठे लुठन्ती । गिरिगरिमनितं वा छादने सावधाना तदपि च तव कीर्तिर्निर्मलैवेति चित्रम् ॥ २४ ॥ त्यजसि यदपि लक्ष्मी कीर्तिमासाद्य दानैर्व्रजति तदपि कीर्तिः सिन्धुपारं न लक्ष्मीः । कथय क इह हेतुर्नारवेशस्तदीये वसति हृदयपद्मे नन्दसूनुर्मुरारिः ॥ २५ ॥ अनुक्षणमनुक्षणं क्षितिप रक्ष्यमाणा त्वया प्रयाति विदिशो दश प्रबलकीर्तिरेकाकिनी । इयं नियतमर्थिषु प्रतिदिन वितीर्णा रसा जहाति न तवान्तिकं द्वितयमेतदत्यद्भुतम् ॥ २६ ॥ समुन्नतघनस्तनस्तबकचुम्बितुम्बीफलक्कणन्मधुरवीणया विबुधलोकवामभ्रुवा । त्वदीयमुपगीयते हरकिरीटकोटिस्फुरत्तुषारकरकन्दलीकिरणपूरगौरं यशः ॥२७॥ वनेषु वनदेवता दिवि दिवौकसां वल्लभा भुजंगकुलकन्यका भुजगलोकलीलावने । यशः समरसंचितं नरमृगेन्द्र गायन्ति ते प्रभाविजितकौमुदीकुमुदपाण्डुताडम्बरम् ॥२८॥ अपायि मुनिना[9] पुरा पुनरमायि[10] मर्यादया अतारि[11] कपिना[12] पुरा पुनरदाहि लङ्कारिणा । अमान्थि[13] मुरवैरिणा पुनरबन्धि[14] लङ्कारिणा क्व नाम वसुधापते तव यशोऽम्बुधिः क्वाम्बुधिः ॥ २९ ॥ महाराज श्रीमज्जगति यशसा ते धवलिते पयःपारावारं[15] परमपुरुषो[16]ऽयं मृगयते । कपर्दी[17] कैलासं सुरपतिरपि[18] स्वं करिवरं[19] कलानाथं[20] राहुः कमलभवनो[21] हंसमधुना[22] ॥ ३० ॥

---

१ नागलोकम्, (पक्षे) गणिकापतिगेहम्. २ ऐरावतादीनामष्टदिग्गजाना समागमकरी, (पक्षे) चण्डालसंगमकारिणी. ३ दिक्पर्यन्तेषु; (पक्षे) विजनप्रदेशेषु ४ व्योम, (पक्षे) वस्त्रम् ५ सुरालयवनम्, (पक्षे) पुत्रम्. ६ गन्तुमशक्यम्, (पक्षे) गमनानर्हम् ७ निष्प्रतिबन्धत्वम् ८ पीतः ९ अगस्तिना. १० मित.. ११ तीर्ण. १२ हनुमता १३ मथित' १४ बद्ध.. १५ क्षीरसमुद्रम् १६ विष्णु . १७ शिव'. १८ इन्द्रः. १९ ऐरावतम्. २० चन्द्रम् २१ विधि'. २२ यत सर्वेषा समुद्राणा पर्वताना गजाना सर्वभक्षाणा पक्षिणा च त्वच्छ्वेतकीर्त्या श्वेतत्वात्क्षीराब्ध्यादीनामनवगमस्तेषामतस्ते तान्सर्वत्रावलोकयन्तीति भाव..

कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो। शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥ ३१ ॥ पतत्येतत्तेजोहुतभुजि कदाचिद्यदि तदा पतङ्गः स्यादङ्कीकृततमपतङ्गापद्दुदयः। यशोऽमुष्येवोपार्जयितुमसमर्थेन विधिना कथंचित्क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधिः ॥ ३२ ॥ निजश्वासोद्भूता हयवरभटास्ताज्यकचिमत्प्रतापाग्नौ दग्धारिसुनगरधूलिर्न यशः। रणे त्वत्कौक्षेयोद्दलितगजकुम्भोद्गतमहत्स्फुरन्मुक्तानां ते विलसति वितानं भुवि विभो ॥ ३३ ॥ इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारिर्दिङ्नागानां मदजलमषीभाञ्जि गण्डस्थलानि। अद्याप्युर्वीवलयतिलक श्यामलिम्नानुलिप्तान्याभासन्ते वद धवलितं किं यशोभिस्त्वदीयैः ॥ ३४ ॥ किं वृत्तान्तैः परगृहगतैः किंतु नाहं समर्थस्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः। गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्यामुन्मत्तेव भ्रमति भवतो वल्लभा देव कीर्तिः ॥ ३५ ॥ कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम्। स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥ ३६ ॥ अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेषस्याहेर्भूयःफणसमुचितः काययष्टीनिकायः। दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः कायव्यूहः क्व जगति न जागर्त्यदः कीर्तिपूरः ॥ ३७ ॥ पाद्यं दुग्धाम्बुधिरपि सुधानर्घमर्घं तथैतास्तारा हारास्तमनु मलयजं चन्दनं चन्द्रिकैव। इन्दोर्बिम्बं रुचिरमुकुरः स्वर्गतेऽतिश्रुतायास्तत्त्वत्कीर्तेरुपहृतमिदं स्वयमेवेच्छं वधूभिः ॥ ३८ ॥ कथमवनिप दर्पो यन्निशातासिधारादलनगलितमूर्ध्नां विद्विषां स्वीकृता श्रीः। ननु तव निहतारेरप्यसौ किं न नीता त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ ३९ ॥ समिति पतिनिपाताकर्णनद्रागदीर्णप्रतिनृपतिमृगाक्षीलक्षवक्षःशिलासु। लिखितलिपिरिवोरस्ताडनव्यस्तहस्तप्रखरनखरटङ्कैरस्य कीर्तिप्रशस्तिः ॥ ४० ॥ सुसितवसनालंकारायां कदाचन कौमुदीमहसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः। तदनु भवतः कीर्तिः केनाप्यगीयत येन सा प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥ ४१ ॥ देव त्वद्यशसि प्रसर्पति जगल्लक्ष्मीसुधोच्चैःश्रवाश्चन्द्रैरावणकौस्तुभाः स्थितिमिवामन्यन्त दुग्धाम्बुधौ। किं त्वेकः पुनरस्ति दूषणकणो यन्नोपयाति भ्रमात्कृष्णं श्रीः शितिकण्ठमद्रितनया नीलाम्बरं रोहिणी ॥ ४२ ॥ इन्दुं निन्दति चन्दनं न सहते मल्लीस्रजं नेक्षते हारं द्वेष्टि सिताब्जमुज्झति बिसस्तोमं विगृह्णाति च। श्रीभूपाल महीधरेषु विपिनेष्वम्भोधितीरेषु च त्वत्कीर्तिस्त्वदरिप्रिया च विलसत्युच्चैः स्फुरत्पाण्डिमा

१ तन्तुवायः, (पक्षे) कु पृथिवी विन्दति लभते सः. २ पट वस्त्र करोषि; (पक्षे) पटु करोषि. ३ तन्तु.; (पक्षे) सद्गुण.. ४ नग्ना ; (पक्षे) स्तुतिपाठका.. ५ कलङ्क. ६ दिग्गजानाम्. ७ मुक्तानि. ८ नीलिम्ना. ९ शेषपूरकः. १० समूहः. यावत्फण कार्यभैवितव्यमिति भावः. ११ कायसंघातः. १२ अभिन्ना. अक्षरविन्यासयोग्या इति यावत्. १३ बलभद्रम्.

॥ ४३ ॥ इन्दुं निन्दति चन्दनं न सहते विद्वेष्टि पङ्केरुहं हारं भारमवैति नैव कुरुते कर्पूरपूरे मनः । स्वर्गङ्गामवगाहते हिमगिरिं गाढं समालिङ्गते त्वत्कीर्तिर्विरहातुरेव न मनागेकत्र विश्राम्यति ॥ ४४ ॥ यस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति द्राक्कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते । चञ्चुं चञ्चलयन्ति चन्द्रकिरणभ्रान्त्या चकोराः पयोबुद्ध्या व्योम्नि नियोजयन्ति कलशीमानीय वामभ्रुवः ॥ ४५ ॥ कर्पूरादपि केतकादपि दलत्कुन्दादपि स्वर्णदीकल्लोलादपि कैरवादपि चलत्कान्ताद्दगन्तादपि । दूरोन्मुक्तकलङ्कशंकरशिरःशीतांशुखण्डादपि श्वेताभिस्तव कीर्तिभिर्धवलिता सप्तार्णवा मेदिनी ॥ ४६ ॥ देव त्वद्यशसा सदा सुमहसा गीर्वाणवृन्देऽखिले शंभोर्भावमवापिते तु सहसा यत्कौतुकं तच्छृणु । साकूताः सकुतूहलाः सचकिताः सोत्कण्ठिताः सादुताः साशङ्काश्च मुहुर्मुहुर्मधुरिपौ लक्ष्म्या दृशः पातिताः ॥ ४७ ॥ किं शीतांशुमरीचयः किमु सुरस्रोतस्विनीवीचयः किंवा केतकसूचयः किमथवा चन्द्रोपलानां चयः । इत्थं जातकुतूहलाभिरभितः सानन्दमालोकिताः कान्ताभिस्त्रिदिवौकसां दिशि दिशि क्रीडन्ति यत्कीर्तयः ॥ ४८ ॥ श्रीमद्राजशिखामणे तुलयितुं धाता त्वदीयं यशः कैलासं च निरीक्ष्य तत्र लघुतां निक्षिप्तवान्पूर्तये । उक्षाणं तदुपर्युमासहचरं तन्मूर्ध्नि गङ्गाजलं तस्याग्रे फणिपुंगवं तदुपरि स्फारं सुधादीधितिम् ॥ ४९ ॥ भारत्या वदनं श्रिया च सदनं श्रीकण्ठभक्त्या मनो धर्मेण श्रवणौ परैश्च चरणौ शौर्येण बाहुद्वयम् । दानेनापि करौ समीक्ष्य सकलं यस्याज्ञया भूतलं स्थातुं चानवकाशतां कथयितुं कीर्तिस्तु दूरं गता ॥ ५० ॥ अस्योर्वीरमणस्य पार्वणविधुद्वैराज्यसज्जं यशः सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत् । तत्कम्बुप्रतिबिम्बितं किमु शरत्पर्जन्यराजिश्रियः पर्यायः किमु दुग्धसिन्धुपयसां सर्वानुवादः किमु ॥ ५१ ॥ कर्पूरन्ति सुधाद्रवन्ति कमलाहासन्ति हंसन्ति च प्रालेयन्ति हिमालयन्ति करकासारन्ति हारन्ति च । त्रैलोक्याङ्गनरङ्गलङ्घिमगतिप्रागल्भ्यसंभाविताः शीतांशोः किरणच्छटा इव जयन्त्येतर्हि तत्कीर्तयः ॥ ५२ ॥ किं चित्रं भुवनानि पावयति यद्यच्चाहितानां यशोहंसान्मज्जयति प्रतापदहनं निर्वापयत्याशु यत् । आश्चर्यं नृपनायकस्य भवतो यत्कीर्तिमन्दाकिनी तानारोहति भूधराञ्जलनिधीनुल्लङ्घ्य गच्छत्यपि ॥ ५३ ॥ अर्धाङ्गाहितपौर्वकीर्तिवनितादीव्यत्सितांशुप्रभं कैलासीकृतदिक्करीन्द्रशिरसि न्यस्तस्वपादाम्बुजम् । विश्वव्याप्यविनाशि शंकरपदं पायात्त्वदीयं यशो न स्यादस्य यदि क्षितीश भवतो दानादिकेभ्यो जनिः ॥ ५४ ॥ कृत्वा मेरुमुलूखलं प्रहसता वृन्देन दिग्योषिता स्वर्गङ्गामुशलेन शालय इव त्वत्कीर्तयः कण्डिताः । तासां राशिरसौ तुषारशिखरी तारागणास्तत्कणाः किं चान्यच्छशिखण्डशूर्प-

१ सनद्धम् द्वितीयमाणमित्यर्थः. २ कैलासस्य ३ कैलासशुभ्रादधिकमित्यर्थ. ४ रूपान्तरम् ५ सर्वस्यापि पुनरुक्तिः.

विसरज्ज्योत्स्नाश्च तत्पांशवः ॥ ९५ ॥ वीर क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषस्त्वत्कीर्तेस्तुलनां कलङ्कमालिनो धत्ते कथं चन्द्रमाः । स्यादेवं त्वदरातिसौधशिखरप्रोद्भूतसस्याङ्कुरग्रासव्यग्रमनाः पतेद्यदि पुनस्तस्याङ्कशायी मृगः ॥ ९६ ॥ कैलासीयति कैरवीयति लसत्कर्पूरपुञ्जीयति क्षीरोदीयति मौक्तिकीयति नभोगङ्गातरंगीयति । हंसोद्दीयति मानसीयति शरन्मेघीयति क्षोणिभिन्नार्थीयत्यभृतीयति क्षितितले देव त्वदीयं यशः ॥ ९७ ॥ गङ्गीयत्यसितापगां फणिगणं शेषीयति श्रीपतिं श्रीकण्ठीयति कैरवीयति कुलं नीलोत्पलानवने । कर्पूरीयति कज्जलं पिककुलं लीलामरालीयति स्वःकुम्भीयति कुम्भिनामपि घटत्वत्कीर्तिसंघट्टतः ॥ ९८ ॥ पूर्णेन्दुः करकन्दुको हिमगिरिः क्रीडाविहारस्थली क्षीराब्धिगृहदीर्घिका प्रियसखी वाचां पतिर्देवता । शय्या दिग्गजराजदन्तवलभी त्वत्कीर्तिकन्याकृते पाञ्चालीमिथुनं व्यधायि विधिना गौरीगिरीशावपि ॥ ९९ ॥ शत्रुक्षत्रकलत्रनेत्रसलिलैर्जम्बालजालस्पृशि भ्रान्त्वा भूपतिभालभूषण भवत्कीर्तिर्भुवो मण्डले । यद्यान्ती विबुधालयं प्रति सुधाकुण्डे सुधांशोर्व्यधादङ्घ्रिक्षालनमित्ययं किल मलस्तस्मिन्गतः स्मेरताम् ॥ ६० ॥ एतत्कीर्तिविवर्तधौतनिखिलत्रैलोक्यनिर्वासितैर्विश्रान्तिः कलिता कथासु जरतां श्यामैः समग्रैरपि । जज्ञे कीर्तिमयादहो भयभरैरस्मादकीर्तिः पुनः सा यन्नास्य कथापथेऽपि मलिनच्छाया बबन्ध स्थितिम् ॥ ६१ ॥ धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः । एकोऽपि त्रिकलिङ्गभूमितिलक त्वत्कीर्तिराशिर्ययौ नानामण्डनतां पुरंदरपुरीवामभ्रुवां विग्रहे ॥ ६२ ॥ त्वत्तेजःप्रतिभाभयादपसृताः प्रत्यर्थिभूभृत्स्त्रियः कान्तारे घनकण्टकिद्रुमवनव्यस्तप्रयुक्ताम्बराः । आर्याणां पुरतस्त्रपा परवशा गच्छेयुरेताः कथं क्षौमाकारतया न चेत्परिणयेत्तत्तावकीनं यशः ॥ ६३ ॥ चन्द्रश्चन्दनमिन्दुरिन्दुरमणं पीयूषमीशादयो विश्वस्योपकृता वनेन महता ते तेऽवतारा धृताः । एतद्यत्र न विद्यते त्रिभुवने न स्थानमेवंविधं जाने जङ्गमपारिजातसगुणं ब्रह्मेव पूर्णं यशः ॥ ६४ ॥ चन्द्राद्रूप्यकमण्डलोः समुदयद्धौरांशुगङ्गाजलैर्ज्योत्स्नाचन्दनचर्चनैर्विकसितैस्ताराप्रसूनैरपि । एतद्विष्णुपदं किमश्वति भवत्कीर्तिर्महायोगिनी पूजापूर्तिविधायि लक्ष्म तुलसीदाम्नाकदान्विष्यति ॥ ६५ ॥ गङ्गासागरसंगमे कृतशतस्नाना बदर्याश्रमे स्थित्वासौ परिधाय तद्गुणमयं श्वेतं दुकूलं पुनः । ब्राह्मं वैष्णवमैन्द्रमैश्वरमपि स्थानं स्पृशन्ती मुहुः कीर्तिस्ते पतिदेवतायुगशतं दीर्घायुराकाङ्क्षति ॥ ६६ ॥ अर्घायाम्बुधिरिन्दुमण्डलमपि श्रीचन्दनं तण्डु-

१ सर्वोऽपि जन इत्यध्याहार २ जले. ३ ऐरावणमिवाचरति ४ हस्तिनाम् ५ सरस्वती ६ त्वत्कीर्तिरेव कन्या तदर्थम्. ७ पुत्रिकायुगलम् ८ वैरिराज. ९ कर्दम. १० अत्राय भाव. यच्चन्द्रान्तः कालुष्यमवलोक्यते तत्पङ्किलभूभ्रमणेन कर्दमाङ्कितचरणया त्वत्कीर्त्या चन्द्रामृतकुण्डे स्वमलिनपादक्षालनतो जनितमिति. अन्योऽपि हि यो देवतालयं याति स जलपूर्णकुण्डे चरणौ प्रक्षाल्य याति तथेयमपीति. ११ विलासै.. १२ निष्कासितै. १३ वृद्धानाम् १४ श्यामवस्तुभिः.

लास्तारा बिल्वदलं नभः सुरधुनीधूपः प्रदीपो रविः । खेटाः पञ्चफलानि किंच ककुभस्ताम्बूलमारार्तिकं मेरुः श्रीजगतीपते तव यशो योगेश्वरस्यार्चने ॥ ६७ ॥ देव क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषस्त्वत्कीर्तेस्तुलनां कलङ्कमलिनो धत्ते कथं चन्द्रमाः। स्यादेवं त्वदरातिसौधवलभीप्रोद्भूतदूर्वाङ्कुरग्रासव्यग्रमतिः पतेद्यदि मृगस्तस्याङ्कशायी मृगः ॥ ६८ ॥ भोगीन्द्रः प्रमदोत्तरङ्गमुरगीसंगीतगोष्ठीषु ते कीर्तिं देव शृणोतु विंशतिशती यच्चक्षुषां वर्तते। रक्ताभिः सुरसुन्दरीभिरभितो गीतं च कर्णद्वयीदुःस्थः श्रोष्यति नाम किं स हि सहस्राक्षो न चक्षुःश्रवाः ॥ ६९ ॥ गीयन्ते यदि पन्नगीभिरनिशं त्वत्कीर्तयस्तद्वयं तुष्टा एव परंतु चेतसि चमत्कारोऽयमारोहति । तासां तादृशभावभङ्गचलनासंस्थानसंदर्शिनी व्यालेन्द्रेऽप्यवधूतमूर्धनि महीचक्रं पुनर्भ्राम्यति ॥७०॥ यद्गन्धद्विपदानवारिभिरभूत्सङ्ग्रामभूः पङ्किला तस्यां वैरिकरीन्द्र मौक्तिकमयं बीजं च येनाहितम् । तस्मात्प्रादुरभूद्यशस्तरुरयं तस्योद्गताः कोटरास्तारास्तेषु च पूर्णचन्द्रकपदामेकैक उज्जृम्भते ॥७१॥ शुभ्रापि द्विषतां मुखं मलिनयत्युष्णेतरापि स्वयं तेजास्तिग्मतमं तनोति गुरुरप्यास्ते समस्तोपरि । सर्वाशाः सदिगीश्वराः परिगताः पूरन्त्यशेषा दिशः पृथ्वीशस्य परेशभक्तिकलिता कीर्तिः कथं वर्ण्यताम् ॥ ७२ ॥ यत्कीर्तिर्वलयं भुवः सविमलं संपाद्य संचारतः क्रान्त्वा शीलगिरिं विधाय सरितानाकस्य सख्यं दृढम् । आराध्यामृतभानुशेखरमलं संपाद्य तद्रूपतां गच्छन्ती त्रिदशालयं द्रुतगतिः शीतांशुना स्पर्धते ॥ ७३ ॥ त्वत्कीर्त्या परपाण्डुरीकृतरुचिब्रह्माण्डभाण्डोदरे जम्बालान्विनिहत्य पायसधिया लम्बालका बालकाः । तं दृष्ट्वा मुखकान्तिभाजि कनकानालोक्य लोहानपि संलीहारजतभ्रमेण वणिजः क्रन्दन्ति नन्दन्ति च ॥ ७४ ॥ शैलूषी तव कीर्तिरद्भुतकरी दृष्ट्वा समस्ता दिशो मेरुं वंशवरं परीत्य परितस्तूर्णं समारुह्य तम् । भ्राम्यन्ती परितः प्रनर्तिततनुर्मुक्तावलीमौक्तिकैस्ताराभिस्तरलीकरोति गगनं भूमण्डलाखण्डल ॥ ७५ ॥ त्वत्कीर्तिः शशिनः समीपमगमत्कान्तिप्रातिरपर्यया दृष्ट्वा तं च कलङ्किनं पुनरसौ स्नातुं जगामाम्बुधिम् । श्रुत्वा तं च घटोद्भवेन मुनिना पीतोज्झितं तत्पयः पुण्यं ब्रह्मकमण्डलुं कलयितुं ब्रह्माण्डमन्यं ययौ ॥ ७६ ॥ त्वत्कीर्त्या धवलीकृते त्रिभुवने दामोदराङ्कस्थिता सत्या तं हि विमृश्य लाञ्छनभृतं व्रीडाविनम्रानना । किं चान्यत्कथयामि कौतुकमितः स्वीयाङ्गभैः सर्वतो गुञ्जापुञ्जमुदीक्ष्य मौक्तिकधिया नृत्यन्ति दीनाङ्गनाः ॥ ७७ ॥ कैलासीयति केतकीयति हसत्कुन्दीयति प्रोञ्छलत्क्षीरोदीयति चन्दनीयति लसत्कर्पूरपूरीयति । पीयूषीयति शर्करीयति शरच्चन्द्रीयति क्ष्मापते स्वर्गङ्गीयति शंकरीयति भवत्कीर्तिः करीन्द्रीयति ॥ ७८ ॥ विश्वासो भवता यशस्यपि निजे कार्यो न शौर्याधिके मा कोशादिनदात्रपुंसकमिति ज्ञात्वावहेलां कृथाः । यज्जन्द्वालधुरंधरेण धरणीनाथ द्विषा कूनेना नब्रह्माण्ड विदधेऽमुना भवदरिस्रोणीभुजां निर्गमः ॥ ७९ ॥ सद्दानाद्धि रिपुव्रजा-

म्बुजमुखी दीनेऽब्धियुग्द्वाब्धि सा सद्रोणाब्धि चतुष्कचारुवलया विश्वंभरासौ कृता । शेषे सप्तसु सिन्धुषु प्रतिगतेष्वीश प्रतापेन ते भात्येतेषु यशः सुशुक्तिपुटजश्चन्द्रोडुमुक्ताव्रजः ॥ ८० ॥ रिङ्गत्तुङ्गतरङ्गसुन्दरसुधासिन्धुं तरत्युज्ज्वला रागाच्छर्वपुरःसरानभिसभं देवान्मुदालिङ्गति । क्रूराहीश्वरमाश्लिषत्यधिगृहं याति ध्रुवं भूपते साध्वीशब्दरता तथापि कुतुकं कीर्तिः प्रभक्ता क्षितौ ॥ ८१ ॥ कैलासाद्रितुपारभूधरकुचाहाराम्बरालंकृता सत्कुदायदतिप्रलरिब्बलभिद्दन्तीन्द्रसद्दोर्युतः । चन्द्रास्यासुरनिम्नगा सहचरी नागाधिपोरूत्तमा ब्रह्माण्डाङ्गणकेऽभिलेखतितरां कीर्त्यङ्गना ते प्रभो ॥ ८२ ॥ कस्तूरी सितमानमागतवती शौक्ल्यं गताः कुन्तला नीलं चोलमभूत्सितं धवलिमा जाता मणीनां गणे । ध्वान्तं शान्तमभूत्समं नरपते त्वत्कीर्तिचन्द्रोदये त्रैलोक्येऽप्यभिसारसाहसरसः शान्तः कुरङ्गीदृशाम् ॥ ८३ ॥ स्नातुं वाञ्छसि किं मुधैव धवलक्षीरोदकाच्छच्छयच्छायाहारिणि वारिणि द्युसरितो दिक्पूरविस्तारिणि । आस्ते ते कलिकालकल्मषमपीप्रक्षालनैकक्षमा कीर्तिः संनिहितैव सप्तभुवनस्वच्छन्दमन्दाकिनी ॥ ८४ ॥ क्षीरोदीयन्ति सद्यः सकलजलधयो वासुकीयन्ति नागाः कैलासीयन्ति शैला दिवि च दिविषदः शंकरीयन्ति सर्वे । यौष्माकीणे समन्तात्प्रचलति धवले चारुकीर्तिप्रताने यद्योषाः काचभूषाः किमिति न सहसा मौक्तिकीयन्ति देव ॥ ८५ ॥ उद्यद्वालाङ्कुरश्रीर्दिशि दिशि दशनैरेभिराशागजानां रोहन्मूलासुगौररुरगपतिफणैरत्र पातालकुक्षौ । अस्मिन्नाकाशदेशे विकसितकुसुमा राशिभिस्तारकाणां नाथ त्वत्कीर्तिवल्ली फलति फलमिदं बिम्बमिन्दोः सुधाब्धिम् ॥ ८६ ॥ चन्द्रं चन्द्रार्धचूडं चतुरुदधिचयं चन्द्रिकां चन्द्रकान्तं चार्वङ्गीलोचनान्तं चमरसहचरीबालभारोच्चयं च । खर्वीकुर्वन्ति दर्वीकरतिलकमपि ध्वस्तगुर्वीति भाति स्वर्वीथिप्रस्थितारे दलयति गृहिणी त्वद्यशस्तोमसोमाः ॥ ८७ ॥ वापी पातालमूलं जलमुरगनदीकच्छपः स्वच्छकन्दः शेषो नालं दलानां विततिरपि फणाः कर्णिका शैवशैलः । तारास्तारापरागा मधु च मधुमती केसरा दन्तिदन्तास्तस्मिंस्त्वत्कीर्तिपद्मे भ्रमति मधुकरः शर्वरीसार्वभौमः ॥ ८८ ॥ नेपालीनामराले विरचयति कचे केतकीपत्रकृत्यं कण्ठे मुक्ताकलापान्द्विगुणयति सितान्पाण्ड्यसीमन्तिनीनाम् । कर्णे कर्णाटिकाना प्रकटयतितमां दन्तताटङ्कलक्ष्मीं कार्पूरी पत्रवल्ली भवति तव यशो गण्डयोः केरलीनाम् ॥ ८९ ॥ लग्नं रागावृताङ्ग्या सुदृढमिह यथैवासि यष्ट्यारिकण्ठे मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती । तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं यस्य कीर्तिः ॥ ९० ॥ शक्तिर्निस्त्रिंशजेयं तव भुजयुगलेनाथ दोषाकरश्रीर्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टिनी खड्गयष्टिः । आज्ञेयं सर्वगा ते विलसति च पुनः किं मया त्वद्दया ते प्रोच्ये-

१ 'ग' शौर्यप्रधाना कीर्तिः.

वेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥ ९१ ॥ अन्तः संतोषबाष्पैः स्थगयति दृशस्ताभिराकर्णयिष्यन्नङ्गैर्नास्तिलोमा रचयति पुलकश्रेणिमानन्दकन्दाम् । न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तन्न विद्मः शृण्वन्नेतस्य कीर्तीः कथमुरगपतिः प्रीतिमाविष्करोति ॥ ९२ ॥ यावत्पौलस्त्यवास्तूभवदुभयहरिद्धोमरेखोत्तरीये सेतुप्रालेयशैलौ चरति नरपतेस्तावदेतस्य कीर्तिः । यावत्प्राक्प्रत्यगाशापरिवृढनगरारम्भणस्तम्भमुद्रावद्री संध्यापताकारुचिरचितशिखाशोणशोभावुभौ च ॥ ९३ ॥ आस्ते दामोदरीयामियमुदरदरीं याधिशय्य त्रिलोकी संमातुं शक्तिमन्ति प्रथिमभरवशादत्र नैतद्यशांसि । तामेतां पूरयित्वा निरगुरिव मधुध्वंसिनः पौण्डुपद्मच्छद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥ ९४ ॥ देव ब्रह्माण्डभाण्डे सदसि विकसितन्यायनान्दीनिनादैर्भूतेशप्रीतिहेतोर्भुवनधवलनं नाटकं नाट्यन्त्याः । त्वत्कीर्तेर्मूर्तयोऽमी कुमुदकुमुदिनीकान्तकर्पूरकुन्दक्षीराब्धिक्षीरमुक्तामणिविबुधसरित्तारकाशेषशङ्खाः ॥ ९५ ॥ बीजं चेदिन्द्रदन्तिस्फुरितगलतटीमुक्तमुक्तामणिः स्याच्चन्द्रश्रेदालवालं यदि भवति सुधावारिसेकीन्दुमौलिः । तत्रोत्पन्ना लता काप्यमृतकरनिभं चेत्प्रसूनं प्रसूते मन्ये तत्स्यात्तदानीमवनिधव भवत्कीर्तिलेशोपमार्थम् ॥ ९६ ॥ दुग्धाम्भोधावगाधे विहरति सुधया क्षालयत्यङ्घ्रियुग्मं कृत्स्नां ज्योत्स्नां दुकूलं कलयति मलयोद्भूतचर्चां तनोति । स्वच्छन्दं नृत्यति द्राग्भुजगपतिशिरस्येव निद्राति चन्द्रे त्वत्कीर्तिः स्वामिनीव त्रिजगति विहरत्येवमुर्वीश गुर्वी ॥ ९७ ॥ स्वर्गे कल्पद्रुमाधस्तव जयति यशःपुञ्जयोगेश्वरोऽयं यं नित्यं देवराजः स्नपयति नियतः कामधुग्दुग्धपूरैः । यन्मौलौ बिल्वपत्रद्युतिमदममलं व्योम धत्तेऽतिनीलं चन्द्रः पाटीरपङ्कं तदुपरि ललितास्तारकाक्षन्दुलानि ॥ ९८ ॥ यत्कीर्तिः कापि गङ्गाखिलमलनिचयं नाशयन्ती गभीरं क्षीराब्धि यत्प्रतापो ज्वलनकरगणैः शोषितं पूरयन्ती । भूलोकस्यान्तरालस्फुरदतुलमहादुःखपापौघपङ्कं भूयः प्रक्षालयन्ती त्रिजगति महिता सौख्यमाविष्करोति ॥ ९९ ॥ तुङ्गब्रह्माण्डसिंहासनमिदमुदयच्चित्रमध्यास्य नित्यन्यञ्चद्दिव्यस्रवन्ती सितचमरचयं लालयन्दिग्वधूभिः । राकाचन्द्रातपत्रं दिनकरमुकुटं ग्राहयँल्लोकपालान्निर्जित्यैन्द्रं करीन्द्रं तव जयति यशश्चक्रवर्ती बघेल ॥ १०० ॥ कालिन्दीनर्मदाम्भः स्रुतमदसलिलोत्सङ्गिनौ पुष्पवन्तौ बिभ्राणः कुम्भयुग्मं गगनतलगतः स्वर्धुनीपूरशुण्डः । घण्टालः साधुवादैरनभिमतयशो मृन्मलं संदधानः कीर्तिस्तोमाभ्रकुम्भी जगदुदरसरःसंभ्रमी बभ्रमीति ॥ १०१ ॥ स्निग्धां सबध्य वेणीं त्वदरिनवयशः-कुन्तलानां ललन्तीं कृत्वा भालोष्ठराजत्पदकरकमले त्वत्प्रतापाय रागम् । शुद्धां जित्वाक्ष्यकीर्त्यञ्जनत

१ आच्छादयति २ दग्भि.. ३ अविद्यमानलोमा ४ विभीषणवैश्रवणयो ५ दक्षिणोत्तरदेशावित्यर्थ ६ प्रभू इन्द्रवरुणावित्यर्थः. ७ उदयास्तशैलावित्यर्थ. ८ वैष्णवीम्. ९ महिमातिशयवशात्. १० विष्णो. ११ नाभिपुण्डरीकव्याजापन्नानि. १२-सूर्याचन्द्रमसौ.

इह विभो कीर्तिकान्ता द्रुतं ते मुक्ताहाराम्बराढ्याभिसरति गणिकेवाशु यं कंचिदेव ॥ १०२ ॥ स्फूर्जद्ब्रह्माण्डशुक्तौ तव भुजजलदोद्दामदानौघवर्षप्रोद्यत्त्वत्कीर्तिमुक्ताफलममल्र्इ महो वामकर्णे निधाय। अन्यं तेनैव तुल्यं धरणिधरसुता प्रार्थयामास पत्यौ तस्यालाभेन मन्ये प्रभुरपि जगतामर्धनारीश्वरोऽभूत् ॥ १०३ ॥

## कीर्तिप्रतापौ।

रात्रौ रवेर्दिवा चेन्दोरभावादिव स प्रभुः। भूमौ प्रतापयशसी सृष्टवान्सततोदिते ॥ १ ॥ मलिनयितुं खलवदनं विमलयति जगन्ति देव कीर्तिस्ते। मित्राह्लादं कर्तुं मित्राय द्रुह्यति प्रतापोऽपि ॥ २ ॥ सिन्दूरं सीमन्तात्स्मितं मुखाद्वैरिराजवनितानाम्। यस्य प्रतापयशसी हरतः स्म सदृग्गुणासहने ॥ ३ ॥ तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा। तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि ॥ ४ ॥ कल्त्यास्य चन्द्रकरकोमलयातिशुभ्रं शोणं नवार्ककिरणप्रतिमप्रतापैः। श्यामद्युतिद्विपदकीर्तिमयीभिरित्थं चित्रं तदाम्बरमराजत दिग्वधूनाम् ॥ ५ ॥ क्षितिप किमपि चित्रं जागरूकेऽपि युष्मद्यशसि शशिकरम्बे त्वत्प्रतापेऽर्कबिम्बे। नयनकुवलयानि त्वद्विषत्कामिनीनामपि च वदनपद्मान्याशु यत्संकुचन्ति ॥ ६ ॥ गुणागारे गौरे यशसि परिपूर्णे विलसति प्रतापो वा भिन्नान्दहति तव भूमीन्द्रतिलक। नवैव द्रव्याणीत्यकथयदहो मूढतमधीश्चतुर्धा तेजोऽपि व्यभजत कणादः कथमसौ ॥ ७ ॥ कीर्तिस्वर्गतरंगिणीभिरभितो वैकुण्ठमाप्लावितं क्षोणीनाथ तव प्रतापतपनैः संतापितः क्षीरधिः। इत्थं दयितायुगेन हरिणा त्वं याचितः स्वाकरातिलकं हरये श्रिये स्वभवनं कंण्ठं गिरे दत्तवान् ॥ ८ ॥ भूशक्रस्य यशांसि विक्रममाः ॥ ८७ ॥ वा क्रमादेतस्य स्तुमहे महेभदशनस्पर्धीनि कैरक्षरैः। लिम्पाद्रिः कृतकं ततिरपि फणाः तं राज्ञां यशःपारदैरस्य स्वर्णगिरिः प्रतापदहनैः स्वर्णं पुनर्निर्मितः ॥ गास्तस्मिंस्त्वत् यति कर्णो

## राज्याधिकारगर्हणम्।

परैः संभुज्यते राज्यं स्वयं पापस्य भाजनम्। धर्मातिक्रमतो राजा सिंहो हस्तिवधादिव ॥ १ ॥ औत्सुक्यमात्रमवसादयति प्रतिष्ठा क्लिश्नाति लब्धपरिपालनवृत्तिरेव। नातिश्रमापनयनाय यथा श्रमाय राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ २ ॥ परार्थानुष्ठाने जडयति नृपं स्वार्थपरता परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः। परार्थश्चेत्स्वार्थादभिमततरो हन्त

१ स्फुरत्. २ सूर्याय. ३ परिधि'. ४ छलात्. ५ कुण्डलाना वैयर्थ्यसूचिका रेखावेष्टनाम्. ६ रजद्भिः. ७ कृत्रिमम् ८ रसलिप्तसुवर्ण रजतसुवर्ण भवति तत्पुनरग्निदाहात्प्रकृतिस्थ भवतीति प्रसिद्धमेव. ९ नाशयति. १० गुरुता.

परवान्परायत्तः प्रीतेः कथमिव रसं वेत्तु पुरुषः ॥ ३ ॥ भयं तावत्सेव्यादभिनिविशते सेवकजनं ततः प्रत्यासन्नाद्भवति हृदयेष्वेव निहितम् । अतोऽध्यारूढानां पदमसुजनद्वेषजननं मतिः सोच्छ्रायाणां पतनमनुकूलं कलयति ॥ ४ ॥ छन्नं कार्यमुपक्षिपन्ति पुरुषा न्यायेन दूरीकृतं स्वान्दोषान्कथयन्ति नाधिकरणे रागाभिभूताः स्वयम् । तैः पक्षापरपक्षवर्धितबलैर्दोषैर्नृपः स्पृश्यते संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥ ५ ॥

---

## राजसेवकः ।

राजसेवा मनुष्याणामसिधारावलेहनम् । व्याघ्रीगात्रपरिष्वङ्गो व्यालीवदनचुम्बनम् ॥ १ ॥ संपत्तयः पराधीनाः सदा चित्तमनिर्वृतम् । स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः ॥ २ ॥ अन्तःपुराणां विहितव्यवस्थः पदे पदेऽहं स्खलितानि रक्षन् । जरातुरः संप्रति दण्डनीत्या सर्वं नृपस्यानुकरोमि वृत्तम् ॥ ३ ॥ राज्ञो विपद्बन्धुवियोगदुःखं देशच्युतिर्दुर्गममार्गखेदः । आस्वाद्यतेऽस्याः कटुनिष्फलायाः फलं मयैतच्चिरजीवितायाः ॥ ४ ॥ अशुभपुषि कलावप्यप्रमत्ताः स्वधर्मादनुदिनमुपकारा नाचरन्ते बुधानाम् । बहुजनपरिपुष्टा बद्धदीक्षास्त एते तनुसुखमपि हित्वा तन्वते राजसेवाम् ॥ ५ ॥ नैषां संध्याविधिरविकलो नाच्युतार्चापि साङ्गा न स्वे काले हवननियमो नापि वेदार्थचिन्ता । न क्षुद्वेलानियतमशनं नापि निद्रावकाशो न द्वौ लोकावपि तनुभृतां राजसेवापराणाम् ॥ ६ ॥ सर्वः कल्ये वयसि यतते लब्धुमर्थान्कुटुम्बी पश्चात्पुत्रैरुपहितभरः कल्पते विश्रमाय । अस्माकं तु प्रतिदिनमियं सादयन्ती प्रतिष्ठां सेवाकाकुः परिणतिरभूत्स्त्रीषु कष्टोऽधिकारः ॥ ७ ॥ नोच्चैः सत्यपि चक्षुषीक्षितुमलं श्रुत्वापि नाकर्णितं शक्तेनाप्यधिकार इत्यधिकृता यष्टिः समालम्ब्यते । सर्वत्र स्खलितेषु दत्तमनमा यातं मया नोद्धतं सेवास्वीकृतजीवितस्य जरसा किं नाम यन्मे कृतम् ॥ ८ ॥ भर्तानृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभादन्येभ्यश्च भवन्ति यस्य भवने लब्धप्रसादाः । दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमापत्स्यतः सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥ ९ ॥ अप्राज्ञेन च कातरेण च गुणः स्याद्भक्तियुक्तेन कः प्रज्ञाविक्रमशालिनोऽपि हि भवेत्किं भक्तिहीनात्फलम् । प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये ते भृत्या नृपतेः कलत्रमितरे संपत्सु चापत्सु च ॥ १० ॥

---

## रथवेगवर्णनम् ।

आलिङ्गन्तो वसुधां निजखुरदलितामिवानुमेतुममी । वदनविगतचरणा इव संलक्ष्यन्ते

---

१ निकटस्थायिजनात्. २ अतिशयप्राप्तमहिम्नाम् ३ दुर्जनस्य. ४ उन्नतानाम् ५ नियतम् ६ सत्यमप्यसत्येनासत्यमपि सत्येन चावृतम् ७ अर्थिप्रत्यर्थिप्रभृतय. ८ खड्गधारा. ९ जिह्वया घट्टनम्. १० सर्पिणी. ११ प्रथमे १२ योग्यो भवति.

जवादश्वाः ॥ १ ॥ उद्धूतपांशुपटलानुमितप्रबन्धधावत्खुराग्रचयचुम्बितभूमिभागाः । निर्मथ्यमानजलधिध्वनिघोरघोषमेते रथं गगनसीम्नि वहन्ति वाहाः ॥ २ ॥ मुक्तेषु रश्मिषु निरायतपूर्वकाया निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः । वातोद्धतैरपि रजोभिरलङ्घनीया धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥ ३ ॥ यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां यदन्तर्विच्छिन्नं भवति कृतसंधानमिव तत् । प्रकृत्या यद्वक्रं तदपि समरेखं नयनयोर्न मे दूरे किंचित्क्षणमपि न पार्श्वे रथजवात् ॥ ४ ॥ विच्छिन्ना रथचक्रपद्धतिरियं हेलाप्लुतैर्वाजिनामायान्तीव जवेन संमुखममी मार्गस्थिताः शाखिनः । खेदं पादतलाहतेरिव पुरो गन्तुं गतो नेहते पादानामनुकूलमारुतभरोद्धूतोऽपि धूलिव्रजः ॥ ५ ॥ अग्रे यान्ति रथस्य रेणुवदमी चूर्णीभवन्तो घनाश्चक्रभ्रान्तिररान्तरेषु जनयत्यन्यामिवारावलिम् । चित्रन्यस्तमिवाचलं हयशिरस्यायामवच्चामरं यष्ट्यग्रे च समं स्थितो ध्वजपटः प्रान्ते च वेगानिलात् ॥ ६ ॥

---

## समुद्रवर्णनम् ।

साक्षात्किलाष्टमूर्तेस्तस्यैषा मूर्तिरम्मयी प्रथमा । गीतः सागर इति नृभिरपरिच्छेद्यात्मगाम्भीर्यः ॥ १ ॥ लक्ष्मीरस्य हि यादः कृष्णोरःस्थापि सुभटभुजवसतिः । इन्दुः स च मृडचूडामणिरपि जगतामलंकारः ॥ २ ॥ आश्लिष्टभूमिं रसितारमुच्चैर्ललद्भुजाकारबृहत्तरङ्गम् । फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥ ३ ॥ नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा । अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते ॥ ४ ॥ स्यादेव तोयममृतप्रकृतिर्यदि स्यान्नैकान्तमद्भुतमिदं पुनरद्भुतं नः । लक्ष्मीतुषारकरकौस्तुभपारिजातधन्वन्तरिप्रभृतयो यदपां विवर्तः ॥ ५ ॥ आकण्ठदष्टशिरसाप्यभिभाव्यपृष्ठपार्श्वोदरेण चिरमृग्भिरुपास्यमानः । नाभीसरोरुहजुषा चतुराननेन शेते किलात्र भगवानरविन्दनाभः ॥ ६ ॥

---

## पर्वतवर्णनम् ।

अयमतिजरठाः[1] प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः[2] । सततमसुगतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति[3] ॥ १ ॥ अयमभिनवमेघश्यामलोत्तुङ्गसानुर्मदमुखरमयूरीमुक्तसंसक्तकेकः[4] । शकुनिशबलनीडानोकहस्निग्धवर्ष्मा[5][6][7] वितरति बृहदश्मा[8] पर्वतः प्रीतिमक्ष्णोः ॥ २ ॥

---

१ (गिरिपक्षे) कठिना ; (वृद्धवेश्यापक्षे) जीर्णाः. २ मेघ ; (पक्षे) कुचाः. ३ परिणतास्तिर्यग्दन्तप्रहारिणो दिग्गजाया सुता ; (पक्षे) परिणते प्रकटे दिक्करिके दिग्वर्तुल दशनक्षतम्, करिका नखक्षतम्, यासां ताः. ४ मिलिता . ५ कर्बुरं . ६ पक्षिवासवृक्षाः. ७ शरीरम्. ८ विपुलशिलः.

दधति कुहरभाजामत्र भल्लूकयूनामनुरसितगुरूणि स्त्यानमम्बूकृतानि । शिशिरकटुकषायः स्त्यायते सल्लकीनामिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ ३ ॥ इह समदशकुन्ताक्रान्तवानीरवीरुत्प्रसवसुरभिशीतस्वच्छतोया वहन्ति । फलभरपरिणामश्यामजम्बूनिकुञ्जस्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ ४ ॥ एते ते गिरिकूटसंघटशिलासंघट्टशीर्णाम्भसः प्रेङ्खच्चामरचारुसीकरकणस्मेरा दरीनिर्झराः । यत्पातेषु निकुञ्जकुञ्जरमुखभ्रश्यन्मृणालाङ्कुरग्रासोद्ग्रन्थितटं रटन्ति परितः कण्ठीरवा भैरवम् ॥ ५ ॥

## सरोवर्णनम् ।

नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः । पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥ १ ॥

## वनश्रीवर्णनम् ।

नीपस्कन्धे निवसति लसद्वर्हभारो मयूरो दीर्घापाङ्गश्चरति च तृणं शाद्वलेऽयं कुरंगः । कुम्भेनोच्चैः स्पृशति विटपे सल्लकीं कुञ्जरोऽसौ कस्मै नायं कमलनयने रोचतेऽरण्यभागः ॥ १ ॥ हरिणचरणक्षुण्णोपान्ताः सशाद्वलनिर्झराः कुसुमललितैर्विष्वग्वातैस्तरङ्गितपादपाः । विविधविहगश्रेणीचित्रध्वनिप्रतिनादिता मनसि न मुदं केषां दध्युः शिवा वनभूमयः ॥ २ ॥ वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः पर्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः । उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनितः प्राग्भारेषु शिखण्डिताण्डवविधौ मेघैर्वितानायते ॥ ३ ॥ जृम्भाजर्जरडिम्भडम्बरघनश्रीमत्कदम्बद्रुमाः शैला भोगभुवो भवन्ति ककुभः कादम्बिनीश्यामलाः । उद्यत्कन्दलकान्तकेतकभृतः कच्छाः सरित्स्रोतसामाविर्भूतशिलीन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः ॥ ४ ॥ निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः । सीमानः प्रदरोदरेषु विलसत्स्वल्पाम्भसो यास्वयं तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥ ५ ॥ छन्नैः क्षुद्रप्रवालस्थगितमिव तलं भाति शेफालिकानां गन्धः सप्तच्छदानां सपदि गजमदामोदमोहं करोति । एते चोन्निद्रपद्मच्युतबहलरजःकाणपिङ्गाङ्गरागा गायन्त्यत्राव्यवाचः किमपि मधुलिहो वारुणीपानमत्ताः ॥ ६ ॥ श्रोत्रं हंसस्वनोऽयं सुखयति दयितानूपुराह्लादकारी दृष्टिं प्रीतिं

---

१ गुहावासिनाम् २ प्रतिरवेण स्थूलानि. ३ घनताम् ४ सश्लेष्मकवूत्कारध्वनय. ५ निविडीभवति ६ वृक्षभेदानाम् ७ खण्डित. ८ विस्तीर्णे ९ सधिपर्व १० वेतसलतानाम् ११ पुष्पै १२ परिपाकेन. १३ लग्नसौरभम्. १४ शिखरेषु. १५ विकासेन. १६ पृथग्भूत १७ गोलक १८ आरम्भेण. १९ मेघमालाश्यामाः २० विकसितै. २१ नवाङ्कुरै. २२ कूलानि. २३ निःशब्दतया गम्भीराः. २४ भीषणाः. २५ वनजन्तूनाम्. २६ भूविदारमध्येषु. २७ कृकलासैः.

विधत्ते तटतरुविवरालक्षिता सौधमाला । गन्धेनाम्भोरुहाणां परिमलपटुना जायते घ्राणसौख्यं गात्राणां ह्लादमेते विदधति मरुतो वारिसंपर्कशीताः ॥ ७ ॥

## मृगयावर्णनम् ।

हिरण्यहरिणग्राममाचक्राम हुताशनः । इन्दोः क्रोडमृगं धर्तुमिव धूमो नभो ययौ ॥ १ ॥ निहत निहत तूर्णं धत्त धत्त त्वराभिर्मिलत मिलत के के कुत्र कुत्र प्रयान्ति । इत इत इत एते यान्ति यान्तीत्यरण्यादतुलकलकलश्रीः सर्वतः प्रादुरासीत् ॥ २ ॥ अनवरतधनुर्ज्यास्फालनक्रूरकर्मा रविकिरणसहिष्णुः स्वेदलेशैरभिन्नः । अपचितमपि गात्रं व्यायतत्वादलक्ष्यं गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ३ ॥ मार्गं देहि पदं निधेहि निभृतं तं शब्दमाकर्णय श्वानं वारय कन्दलात्कलकलः कोऽयं सखे तावकः । इत्यन्योन्यमनेकधा मृगवधव्यापारपारंगमैर्व्याधैः कोऽप्यधिको रसः प्रतिपदं जल्पद्भिरुत्पाद्यते ॥ ४ ॥ क्ष्वेलातर्जितसिंहगर्जितभयभ्राम्यद्गजग्रामणीभीत्कारद्रवदक्षदर्शनकृतभ्रूभङ्गशाखामृगम् । कुन्तक्षुण्णतरक्षुवक्त्रगलितक्षोणीनिषण्णार्भकघ्राणं व्याप्टतरोहिताहितबहूकारं वनाभ्यन्तरम् ॥ ५ ॥ एष क्षुभ्नाति पङ्कं दलति कमलिनीमत्ति गुन्द्राप्ररोहानारान्मुस्तास्थलानि स्थपुटयति जलान्युत्कसेतूनि याति । प्राप्तः प्राप्तः प्रविष्टो वनगहनमयं याति यातीति सैन्यैः पश्चादन्विष्यमाणः प्रविशति विषमान्काननान्तान्वराहः ॥ ६ ॥ आस्तीर्यन्तामुपान्ते वनवृतिनिपुणैर्जालिकैर्जालबन्धा मुच्यन्तां शृङ्खलाभ्यः श्वगणिभिरटवीगह्वरे सारमेयाः । आकीर्यन्तां स्थलानि श्रमशिथिलहयैः सादिभिः पाशहस्तैर्व्याधूयन्तां कृतान्तैरिव महिषचरैर्दण्डिभिः काननानि ॥ ७ ॥ शङ्कुव्याकीर्णरङ्कुद्रुतनिशितशरक्षुण्णदिव्यन्तरक्षुत्याघोषक्षुब्धकण्ठीरवरवचकितव्यस्तमातङ्गयूथम् । खड्गव्यालूनकण्ठं तुमुलकलकलप्रान्तकूजच्छकुन्तं भल्लध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने ॥ ८ ॥

## मृगयानिवृत्तिः ।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु । विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ १ ॥

## ऋष्याश्रमवर्णनम् ।

विष्वक्तपोवनकुमारसमर्प्यमाणश्यामाकतण्डुलहृतां च पिपीलिकानाम् । श्रेणीभिराश्रम-

१ सूर्यमण्डलम्. २ विलोडयति. ३ विमर्दयति. ४ मुस्ताप्ररोहान्. ५ विषमोन्नतानि करोति. ६ उत्का. सशयमारूढा. सेतवो येषा तानि. ७ अरण्यवेष्टनपटुभि.

पथाः प्रथमानचित्रपत्रावलीवलयिनो मुदमुद्वहन्ति ॥ १ ॥ व्याजृम्भमाणवदनस्य हरेः करेण कर्षन्ति केसरसटाः कलभाः किलैके । अन्ये च केसरिकिशोरकपीतमुक्तं दुग्धं मृगेन्द्रवनितास्तनजं पिबन्ति ॥ २ ॥ मधुरमिव वदन्ति स्वागतं भृङ्गनादैर्नतिमिव फलनम्रैः कुर्वतोऽमी शिरोभिः । ननु ददत इवार्घं पुष्पवृष्टिं किरन्तः कथमतिथिसपर्या शिक्षिताः शाखिनोऽपि ॥ ३ ॥ नीपस्कन्धे कुहरिणि शुकाः स्वागतं व्याहरन्ति घ्राणग्राही हरति हृदयं हव्यगन्धः समीरः । एता मृग्यः सलिलपुलिनोपान्तसंसक्तदर्भं पश्यन्त्योऽस्मान्सचकितदृशो निर्झराम्भः पिबन्ति ॥ ४ ॥ कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूला भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन । एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां नष्टातङ्का हरिणशिशवो मन्दमन्दं चरन्ति ॥ ५ ॥ रसालानामन्तर्मदकलरणत्कोकिलकुलं समन्तादुन्मीलद्बकुलमुकुलामोदभरितम् । घनस्निग्धच्छायं क्रमुककदलीशीतलतलं ननु प्रीतिं धत्ते नवमिदमृषेराश्रमपदम् ॥ ६ ॥ नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः । विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगास्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥ ७ ॥ तत्ताढक्तृणपूलकोपनयनक्लेशाच्चिरद्वेषिभिर्मेध्या वत्सतरी विहस्य बटुभिः सोल्लुण्ठमालभ्यते । अप्येष प्रतनूभवत्यतिथिभिः सोच्छ्वासनासापुटैरापीतो मधुपर्कपाकसुरभिः प्राग्वंशजन्मानिलः ॥ ८ ॥ प्रत्यासन्नतुषारदीधितिकरक्लिश्यत्तमोवल्लरीकल्पाभिर्मखधूमवल्लिभिरमी संमीलितव्यञ्जनाः । श्वः संचीवरयिष्यमाणबटुकव्याधौतशुष्यत्त्वचो निद्राणातिथयस्तपोवनगृहाः कुर्वन्ति नः कौतुकम् ॥ ९ ॥ नीवारौदनमण्डमुष्णमधुरं सद्यः प्रसूताप्रियापीतादप्यधिकं तपोवनमृगः पर्याप्तमाचामति । गन्धेन स्फुरता मनागनुसृतो भैक्तस्य सर्पिष्मतः कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥ १० ॥ आमूलं क्वचिदुद्धृता क्वचिदपि च्छिन्ना स्थली बर्हिणामानम्रा कुसुमोच्चयाच्च सदयाकृष्टाग्रशाखा लता । एते पूर्वविलूनवल्कलतया रूढव्रणाः शाखिनः सद्यश्छेदममी वदन्ति समिधां प्रस्यन्दिनः पादपाः ॥ ११ ॥ वासोऽर्थं दययैव नातिपृथवः कृत्तास्तरूणां त्वचो भग्नानेकजरत्कमण्डलु नभः स्वच्छं पयो नैर्झरम् । दृश्यन्ते त्रुटितोज्झिताश्च बटुभिर्मौञ्ज्यः क्वचिन्मेखला नित्याकर्णनया शुकेन च पदं साम्नामिदं गीयते ॥ १२ ॥ क्रीडन्माणवकाङ्घ्रिताडनशतैरुज्जागरस्य क्षणं शार्दूलस्य नखाङ्कुरेषु कुरुते कण्डूविनोदं मृगः । चञ्चच्चन्द्रशिखण्डितुण्डघटनानिर्मोकनिर्मोचितः किं चायं पिबति प्रसुप्तनकुलश्वासानिलं पन्नगः॥ १३ ॥ पक्वानि प्रच्यवन्ते क्रमुकविटपिनामुच्छ्रिताना फलानि स्पन्दन्ते राजरम्भाः फलभरनमिता वाति मन्दानिलोऽपि । संदृश्यन्ते विपाकच्युतमधुरफलव्याप्तमूला रसाला भारेणामी फलानां युवतिकुचभरस्पर्धिनो नालिकेराः ॥ १४ ॥

१ अम्ररसम्. ३ पिबति. २ अन्नस्य. ४ सघृतस.

## राजनीतिः ।

राजा ॥ राजास्य जगतो वृद्धेर्हेतुर्वृद्धाभिसंगतः । नयनानन्दजननः शशाङ्क इव वारिधेः ॥ १ ॥ राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् । राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ॥ २ ॥ धार्मिकं पालनपरं सम्यक्परपुरंजयम् । राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः ॥ ३ ॥ पर्जन्य इव भूतानामाधारः पृथिवीपतिः । विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥ ४ ॥ सदानुरक्तप्रकृतिः प्रजापालनतत्परः । विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥ ५ ॥ सर्वदेवमयो राजा मनुना संप्रकीर्तितः । तस्मात्तमेव सेवेत न व्यलीकेन कर्हिचित् ॥ ६ ॥ सर्वदेवमयस्यापि विशेषो भूपतेरयम् । शुभाशुभफलं सद्यो नृपाद्देवाद्भवान्तरे ॥ ७ ॥ बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः । महती देवता ह्येषा नररूपेण तिष्ठति ॥ ८ ॥ यस्य प्रसादे पद्मास्ते विजयश्च पराक्रमे । मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥९॥ अशुचिर्वचनाद्यस्य शुचिर्भवति पूरुषः । शुचिश्चैवाशुचिः सद्यः कथं राजा न दैवतम् ॥ १० ॥ निकटस्थं दहत्यग्निर्न तु दूरापसर्पितम् । कुलं दहति राजाग्निः सपशुद्रव्यबान्धवम् ॥ ११ ॥ पात्रे त्यागी गुणे रागी भोगी परिजनैः सह । भावबोद्धा रणे योद्धा प्रभुः पञ्चगुणो भवेत् ॥ १२ ॥ आक्षेपवचनं तस्य न वक्तव्यं कदाचन । अनुकूलं प्रियं चास्य वक्तव्यं जनसंसदि ॥१३॥ इन्द्रात्प्रभुत्वं ज्वलनात्प्रताप क्रोधो यमाद्वैश्रवणाच्च वित्तम् । पराक्रमं रामजनार्दनाभ्यामादाय राज्ञः क्रियते शरीरम् ॥ १४ ॥ उत्खातान्प्रतिरोपयन्कुसुमितांश्चिन्वंल्लघून्वर्धयन्नत्युच्चान्नमयन्नतान्समुदयन्विश्लेषयन्संहतान् । हयैः साद... वहिर्नियमयन्म्लानान्पुनः सेचयन्मालाकार इव प्रयोगनिपुणो राजा

शङ्कुव्याकीर्णरङ्कुद्रुतनिं... यूथम् । खड्गव्यालूनकण... गयाकर्म तेन प्रतेने ॥ ८

सभासदः ॥ धर्मशास्त्रार्थकुशलाः कुलीनाः सत्यवादिनः । समाः स्युः सभासदः ॥ १६ ॥ श्रुत्यध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः । ...पौ मित्रे च ये समाः ॥ १७ ॥ पुरोहितः ॥ वेदवेदाङ्गतत्त्वज्ञो ...वादपरो नित्यमेष राजपुरोहितः ॥ १८ ॥ धर्माध्यक्षः ॥ कुल... ...णः । प्रवीणः प्रेषणाध्यक्षो धर्माध्यक्षो विधीयते ॥१९॥ वैद्यः ॥

गाहन्तां महिषा निप... ...प्रियदर्शनः । आर्यशीलगुणोपेत एष वैद्यो विधीयते ॥ २० ॥

भ्यस्तु । विश्रब्धैः क्रियतां ...कालोचितस्थितिः । यश्च राज्ञि भवेद्भक्तः सोऽमात्यः पृ...

थिलज्यावन्धमस्मद्धनुः । ...ह्यमात्यः सदा श्रेयान्काकिर्नी यः प्रवर्धयेत् । कोशः कोशवतः

.. न भूपतेः ॥ २२ ॥ कमण्डलूपमोऽमात्यस्तनुत्यागो बहुग्रहः । नृपतिः

विव्व... दरिद्रः किंवराटकः ॥ २३ ॥ प्राप्तार्थग्रहणं द्रव्यपरिवर्तोऽनुरोधनम् । उ-

१, ...बुद्धिहीनत्व भोगोऽमात्यस्य दूषणम् ॥ २४ ॥ स्वदेशजं कुलाचारं विशुद्धमथवा

६ ... । मन्त्रज्ञमव्यसनिनं व्यभिचारविवर्जितम् ॥ २५ ॥ अधीतव्यवहारज्ञं मौलं ख्यातं

वेपश्रितम्। अर्थस्योत्पादकं चैव विदध्यान्मन्त्रिणं नृपः ॥ २६ ॥ अन्तःसारैरकुटिलैरच्छिद्रैः सुपरीक्षितैः। मन्त्रिभिर्धार्यते राज्य सुस्तम्भैरिव मन्दिरम् ॥ २७ ॥ संग्रहं नाकुलीनस्य सर्पस्येव करोति यः। स एव श्लाघ्यते मन्त्री सम्यग्गारुडिको यथा ॥ २८ ॥ पृष्टो ब्रूते न सत्यं यः परिणामे सुखावहम्। मन्त्री चेत्प्रियवक्ता स्यात्केवलं स रिपुः स्मृतः ॥ २९ ॥ मूर्खं व्यसनिनं लुब्धमप्रगल्भं भयाकुलम्। क्रूरमन्यायकर्तारं नाधिपत्ये नियोजयेत् ॥ ३० ॥ दूरादर्थं घटयति नवं दूरतश्चापशब्दं त्यक्त्वा भूयो भवति निरतः सत्सभारञ्जनेषु। मन्दं मन्दं रचयति पदं लोकचित्तानुवृत्त्या कामं मन्त्री कविरिव सदा खेदभारैरमुक्तः ॥ ३१ ॥ शास्त्रज्ञः कपटानुसारकुशलो वक्ता न च क्रोधनस्तुल्यो मित्रपरस्वकेषु चरितं दृष्ट्वैव दत्तोत्तरः। क्लीबान्पालयिता शठान्व्यथयिता धर्म्येऽतिलोभान्वितो द्वार्भावे परतत्त्वबद्धहृदयो राज्ञश्च कोपापहः ॥ ३२ ॥ **सेनापतिः** ॥ समस्तनीतिशास्त्रज्ञो वाहने पूजितश्रमः। शौर्यवीर्यगुणोपेतः सेनाध्यक्षो विधीयते ॥ ३३ ॥ शूरोऽर्थशास्त्रनिपुणः कृतशास्त्रकर्मा सङ्ग्रामकेलिचतुरश्च तुरंगयुक्तः। भर्तुर्निदेशवशगोऽभिमतश्च तन्त्रे सेनापतिर्नरपतेर्विजयागमाय ॥ ३४ ॥ **गजाः** ॥ यतः सत्यं ततो धर्मो यतो धर्मस्ततो धनम्। यतो रूपं ततः शीलं यतो नागास्ततो जयः ॥ ३५ ॥ यतो गजैर्विना राज्ञां राज्यशोभा न जायते। जयप्रतापौ सैन्यस्य रक्षा तस्मादिहोच्यते ॥ ३६ ॥ यद्वद्वनमसिंहं च यद्वद्राष्ट्रमपार्थिवम्। यद्वच्छौर्यमशस्त्रं तु तद्वत्सैन्यमकुञ्जरम् ॥ ३७ ॥ प्राकारगोपुराट्टालकपाटोद्घाटनादिषु। भञ्जने मर्दने चैव नागा वज्रोपमाः स्मृताः ॥ ३८ ॥ शरजालाञ्चितमुखः कोऽन्यः शक्तः परं गजात्। हन्तुं प्राकारमुन्मथ्य रथांश्च नरकुञ्जरान् ॥ ३९ ॥ एकशक्तिप्रहारेण म्रियतेऽश्वो नरोऽपि च। सहेच्छतं प्रहाराणा महायुद्धेषु वारणः ॥ ४० ॥ क्रीडासु च नरेन्द्राणां जले पुष्पितपङ्कजे। स्नपयन्ति गजा हस्तैर्लग्नपुष्करपुष्करैः ॥ ४१ ॥ स्त्रियोऽवतारयन्त्येते मृण्मया इव निश्चलाः। नास्ति हस्तिसमो बन्धुर्नास्ति हस्तिसमः सखा ॥ ४२ ॥ चलन्ति येषा न शतं गजेन्द्राः पुरः प्रयाणे बत शैलतुल्याः। वाञ्छन्ति नैवं विजयं कथं ते राजेति शब्दं च कथं लभन्ते ॥ ४३ ॥ रक्षन्ति पक्षं मुदिताः स्वकीयं मथ्नन्ति सैन्य कुपिताः परेषाम्। प्राणैरपीच्छन्ति हितं प्रभूणां गजैः समानं क्व बलं बलीयः ॥ ४४ ॥ सैन्योत्तारणतो धुनीषु सततं यो वारिबन्धायते यो मथ्नन्परितः परोद्धृतबलं युद्धेषु योधायते। यः स्वीयक्षितिनाथरक्षणविधौ प्रोच्चैकदुर्गायते स प्राज्ञैर्विजिगीषुभिर्गजगणः कैः पार्थिवैर्नोऽर्थ्यते ॥ ४५ ॥ मातङ्गैरथ यैर्महेन्द्रभवनं पुण्याधिकं जन्यते यैः श्यामैरपि सर्वलोकसहिता कीर्तिः सिता तन्यते। यैर्मत्तैरपि संगरे रिपुमदः शेषं समानीयते तेऽमी भाग्यवतः प्रयान्ति पुरतः स्तम्बेरमा भूपतेः ॥४६ ॥ ची-

---

१ न अकुलीनस; (पक्षे) नाकुर्वल्मीक तत्र लीनस.

त्कारैर्नाशयन्तः स्वपतिभटमनो मोदयन्तो मदाढ्याः प्रौढाः सङ्ग्रामसीम्नि स्वबलबहलतां बाढमाढौकमानाः। शुण्डादण्डप्रहारैः परममपि बलं कम्पयन्तः परेषां येषां सर्वे गजेन्द्रा भुवि विजयविधौ ते मता भूमिपालाः ॥ ४७ ॥ सेतुं संभेदयन्तो बलविकटभटप्रोन्नतिं त्रोटयन्तः प्राकारं दारयन्तः परमनसि परां भीतिमुत्पादयन्तः। व्यूहं विद्रावयन्तः सुघनमपि वनं हेलयोत्पाटयन्तो येषामाजौ गजेन्द्राः खलु धरणिभुजां तज्जयः सिद्ध एव॥४८॥ तावद्गर्जन्ति वीर्यात्परनिधनविधौ युद्धमध्येऽपि धीरास्तावद्धावन्ति वेगं परमपि दधतः संमुखीनास्तुरंगाः। शूरारूढः सुसज्जो मदमुदितमना मानिमानं विधुन्वन्यावन्नायाति कोपात्कृतविविधरवाटोप एकोऽपि नागः ॥ ४९ ॥ तुरगाः ॥ अश्वा यस्य जयस्तस्य यस्याश्वास्तस्य मेदिनी। अश्वा यस्य यशस्तस्य यस्याश्वास्तस्य काञ्चनम् ॥ ५० ॥ निपत्य युधि वेगेन मिषतां सर्वधन्विनाम्। शत्रुं निहत्य यात्येकः शूरो वाजिप्रभावतः ॥ ५१ ॥ शस्त्रास्त्रैर्भिन्नदेहोऽपि श्रान्तोऽपि गुरुभारतः। न मुञ्चति रणे नाथमतः कोऽन्यो हयात्सुहृत् ॥ ५२ ॥ दूरस्थोऽपि बली शत्रुर्न शेते रजनीष्वपि। तस्य भीत्या गृहे यस्य हरयो वेगवत्तराः ॥ ५३ ॥ न गजैर्न नरैः कार्यसिद्धिमभ्येति भूभृताम्। तथा निमेषमात्रेण यथा वाहैः सुसाधितैः ॥ ५४ ॥ राज्यं शतक्रतुसमृद्धिसमानमश्वैरश्वैः श्रियः सकलकामदुघा भवन्ति। अश्वैर्यशांसि विपुलानि समुल्लसन्ति नाश्वैः प्रयान्ति सदृशत्वमिभादयोऽपि ॥५५॥ तीक्ष्णाग्रहेतिहतिभिः सृतलोलदन्तं चञ्चत्करालकरवालविघट्टिताङ्घ्रिम्। कोऽन्यो विहाय हयमावहजातमूर्छप्राणप्रयाणसमयेऽवतुमीशमीशः ॥ ५६ ॥ पादाः कन्दुकवत्स्थितिश्च गिरिवद्धेषारवो मेघवन्नेत्रे नीरजवज्जवः पवनवच्चास्फालनं सिंहवत्। विन्यासो नटवन्मुखं कुलवधूवक्रेन्दुवद्वाजिनो यस्य क्षोणिभुजो विशस्तदितरे साम्राज्यमुर्वीतले ॥ ५७ ॥ खड्गः॥ खड्गाल्लक्ष्मीस्तथा राज्यं यशः खड्गादवाप्यते। खड्गाद्वैरिविनाशं च यत्नात्तमभिदध्महे ॥ ५८ ॥ यं प्राप्य क्षितिपः समग्रधरणीं शास्ति प्रशान्तद्विषत्सार्थः सार्थः कृतार्थीकृतनिखिलकुलः संपदा वर्धमानः। यस्मिल्लक्ष्मीः स्थिरात्मा वसति रतिपतिं सर्वलोकाधिनाथं हित्वा तस्मात्प्रयत्नादयमतुलगुणः पूजनीयो नरेन्द्रैः ॥ ५९ ॥ यस्मिन्खड्गे शरीरं प्रतिफलति यथा खड्गराजोऽभिवन्द्यो वन्द्योऽयं देववृन्दैरपि यदि स भवेदर्धचन्द्रोपपन्नः। नानावर्णैर्युतश्चेत्स भवति नृपतेः शत्रुनाशैकहेतुः सेतुर्लक्ष्मीप्रवाहे निखिलरिपुकुलध्वंसने धूमकेतुः ॥ ६० ॥ सैन्यम् ॥ प्रथमं युद्धकारित्वं समस्तबलपालनम्। दिङ्मार्गयोधशोधित्वं पत्तिकर्म प्रचक्षते ॥ ६१ ॥ स्वभावशूरमस्त्रज्ञमविरक्तं जितश्रमम्। प्रसिद्धक्षत्रियप्रायं बलं श्रेष्ठतमं विदुः ॥ ६२ ॥ वरमल्पबलं सारं न बह्वी मुण्डमालिका। कुर्यादसारभङ्गो हि सारभङ्गमपि स्फुटम् ॥ ६३ ॥ दुर्गाः ॥ न गजानां सहस्रेण न लक्षेण च वाजिनाम्। तथा सिध्यन्ति कार्याणि यथा दुर्गप्रभावतः ॥ ६४ ॥ अदुर्गो विषयः कस्य नारेः परिभवास्पदम्। अदुर्गोऽनाश्रयो राजा

पोतच्युतमनुष्यवत् ॥ ६५ ॥ विषहीनो यथा नागो मदहीनो यथा गजः । सर्वेषां वश्यतां याति दुर्गहीनस्तथा नृपः ॥ ६६ ॥ शतमेकोऽपि संधत्ते प्राकारस्थो धनुर्धरः । तस्माद्दुर्गं प्रशंसन्ति नीतिशास्त्रविदो जनाः ॥ ६७ ॥ एकः शतं योधयते प्राकारस्थो धनुर्धरः । शतं सहस्राणि तथा सहस्रं लक्षमेव च ॥ ६८ ॥ दुर्गाणि राज्ञा कार्याणि सजलानि दृढानि च । द्रव्यमन्नं च तेष्वेव स्थापनीयं प्रयत्नतः ॥ ६९ ॥ दूतः ॥ मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः । धीरो यथोक्तवादी च एष दूतो विधीयते ॥ ७० ॥ उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा । सदैवावध्यभावेन यथार्थस्य हि वाचकः ॥ ७१ ॥ भक्तो गुणी शुचिर्दक्षः प्रगल्भोऽव्यसनी क्षमी । ब्राह्मणः परमर्मज्ञो दूतः स्यात्प्रतिभानवान् ॥७२॥ साकारो निःस्पृहो वाग्मी नानाशास्त्रविचक्षणः । परचित्तावगन्ता च राज्ञो दूतः स इष्यते ॥ ७३ ॥ नियोगिभिर्विना राज्यं नास्ति भूपे हि केवले । तस्मादमी विधातव्या रक्षितव्याः प्रयत्नतः ॥ ७४ ॥ **भाण्डागारी** ॥ प्रवीणो वाक्पटुर्धीमान्स्वामिभक्तश्च नित्यशः । अलुब्धः सत्यवादी च भाण्डागारी स इष्यते ॥ ७५ ॥ **लेखकः** ॥ सकृदुक्तगृहीतार्थो लघुहस्तो जितेन्द्रियः । शब्दशास्त्रपरिज्ञाता एष लेखक इष्यते ॥ ७६ ॥ **प्रतीहारी** ॥ इङ्गिताकारतत्त्वज्ञो बलवान्प्रियदर्शनः । समयज्ञः स्वामिभक्तः प्रतीहारी स इष्यते ॥ ७७ ॥ **सूपकारः** ॥ पुत्रपौत्रगुणोपेतः शास्त्रज्ञो मिष्टपाचकः । शूरश्च कठिनश्चैव सूपकारः स इष्यते ॥ ७८ ॥ **चाराः** ॥ भवेत्स्वपरराष्ट्राणां कार्याकार्यावलोकने । चारचक्षुर्महीभर्तुर्यस्य नास्त्यन्ध एव सः ॥ ७९ ॥ **अन्तःपुरवर्गाः** ॥ काणाः कुब्जाश्च पण्ढाश्च तथा वृद्धाश्च पङ्गवः । एते चान्तःपुरे नित्यं नियोक्तव्याः क्षमाभृता ॥ ८० ॥ **स्त्रियः** ॥ पक्वान्नमिव राजेन्द्र सर्वसाधारणाः स्त्रियः । परोक्षे च समक्षे च रक्षितव्याः प्रयत्नतः ॥ ८१॥ सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो रक्ष्या नार्यो हि सर्वदा । द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥ ८२ ॥ **महिषी** ॥ महिष्या हृष्टया भाव्यं गृहकार्येषु दक्षया । सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ ८३ ॥ **भृत्याः** ॥ बहूनामप्यसाराणां समुदायो हि दारुणः । राज्ञा भृत्याः प्रकर्तव्यास्ते हि सर्वक्रियाक्षमाः ॥ ८४ ॥ तृणैरावेष्ट्यते रज्जुस्तया नागो हि बध्यते । एवं ज्ञात्वा नरेन्द्रेण भृत्याः कार्या विचक्षणाः ॥८५॥ कुलीनाः शौर्यसंपन्ना भक्ताः शस्त्रसमाहताः । महावृष्टि समुदिता तृणराशिर्व्यपोहति ॥ ८६ ॥ न विना पार्थिवो भृत्यैर्न भृत्याः पार्थिवं विना । तेषां च व्यवहारोऽय परस्परनिबन्धनः ॥ ८७ ॥ भृत्यैर्विना स्वयं राजा लोकानुग्रहकार्यपि । मयूखैरिव दीप्तांशुस्तेजस्व्यपि न शोभते ॥८८॥ अरैः संधार्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः । स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्तते ॥८९॥ शिरसा विधृता नित्यं तथा स्नेहेन पालिताः । केशा अपि विरज्यन्ते निःस्नेहाः किं न सेवकाः ॥ ९० ॥ ताडितोऽपि दुरुक्तोऽपि दण्डितोऽपि महीभुजा । न चिन्तयति यः पापं स भृत्योऽर्हो मही-

भुजाम् ॥ ९१ ॥ योऽनाहूतः समभ्येति द्वारे तिष्ठति सर्वदा। पृष्टः सत्यं मितं ब्रूते स भृत्योऽर्हो महीभुजाम् ॥ ९२ ॥ अनादिष्टोऽपि भूपस्य दृष्ट्वा हानिकरं च यः। यतते तस्य नाशाय स भृत्योऽर्हो महीभुजाम् ॥ ९३ ॥ न क्षुधा पीड्यते यस्तु निद्रया न कदाचन। न च शीतातपाद्यैश्च स भृत्योऽर्हो महीभुजाम् ॥ ९४ ॥ श्रुत्वा साङ्ग्रामिकीं वार्तां भविष्यां स्वामिनं प्रति। प्रसन्नास्यो भवेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥ ९५ ॥ सीमा वृद्धिं समायाति शुक्लपक्ष इवोडुराट्। नियोगसंस्थिते यस्मिन्स भृत्योऽर्हो महीभुजाम् ॥ ९६ ॥ सीमा संकोचमायाति वह्नौ चर्म इवाहितम्। स्थिते यस्मिन्स तु त्याज्यो भृत्यो राज्यं समीहता ॥ ९७ ॥ स्वाम्यादिष्टस्तु यो भृत्यः समं विषममेव च। मन्यते न स संधार्यो भूभुजा भूतिमिच्छता ॥ ९८ ॥ स्वाम्यादेशात्सुभृत्यस्य न भीः संजायते क्वचित्। प्रविशेन्मुखमाहेयं दुस्तरं वा महार्णवम् ॥ ९९ ॥ सालसं मुखरं क्रूरं स्तब्धं व्यसनिनं शठम्। असंतुष्टमभक्तं च त्यजेद्भृत्यं नराधिपः ॥ १०० ॥ स्वाम्युक्ते यो न यतते स भृत्यो भृत्यपाशकः। तज्जीवनमपि व्यर्थमजागलकुचाविव ॥ १०१ ॥ द्विजा अपि न गच्छन्ति यां गतिं नैव योगिनः। स्वाम्यर्थं संत्यजेत्प्राणांस्तां गतिं याति सेवकः ॥ १०२ ॥ राजा तुष्टोऽपि भृत्यानां मानमात्रं प्रयच्छति। तेऽपि संमानमात्रेण प्राणैः प्रत्युपकुर्वते ॥ १०३ ॥ सारासारपरिच्छेत्ता स्वामी भृत्यस्य दुर्लभः। अनुकूलः शुचिर्दक्षः प्रभोर्भृत्यो हि दुर्लभः ॥ १०४ ॥ **स्नानम्** ॥ स्नानं नाम मनःप्रसादजननं दुःस्वप्नविध्वंसनं शौचस्यायतनं मलापहरणं संवर्धनं तेजसः। रूपोद्द्योतकरं गदप्रशमनं कामाग्निसंदीपनं नारीणां च मनोहरं श्रमहरं स्नाने दशैते गुणाः ॥ १०५ ॥ **ताम्बूलम्** ॥ ताम्बूलं मुखरोगनाशि निपुणं संवर्धनं तेजसो नित्यं जाठरवह्निवृद्धिजननं दुर्गन्धदोषापहम्। वक्त्रालंकरणं प्रहर्षजननं विद्वन्नृपाग्रे रणे कामस्यायतनं समुद्भवकरं लक्ष्म्याः सुखस्यास्पदम् ॥ १०६ ॥ **शस्त्रधारणम्** ॥ दुष्टाविनीतशत्रूणां भयकृद्बन्धुसंनिभम्। शस्त्रधारणमौजस्यं रक्षोविद्युद्ग्रहापहम् ॥ १०७ ॥ **छत्रधारणम्** ॥ वर्षानिलरजोघर्महिमादीनां निवारणम्। राज्यलक्ष्म्या गृहं धन्यं चक्षुष्यं छत्रधारणम् ॥ १०८ ॥ **चामरम्** ॥ चामरं श्रीकरं दिव्यं राज्यशोभाकरं परम्। **सिंहासनम्** ॥ सिंहासनं सुखैश्वर्यकर लोकानुरञ्जनम् ॥ १०९ ॥ **मालाधारणम्** ॥ सुमनोवररत्नानां धारणं दिव्यरूपकृत्। **चन्दनलेपः** ॥ पापलक्ष्मीप्रशमनं चन्दनाद्यनुलेपनम् ॥ ११० ॥ **मृगया** ॥ मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः। उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ १११ ॥ **कटकप्रयाणम्** ॥ वाजी चारुगतिः शशाङ्कधवलं छत्रं प्रिया पृष्ठतः प्रोत्तुङ्गस्तनमण्डला विजयिनो भृत्याः पुरः पञ्चषाः। ताम्बूलं मधुरं सखा सुचतुरः संपद्यते चेत्पथि प्राहुस्तत्कटकप्रयाणमितरत्प्राणप्रयाणं बुधाः

॥ ११२ ॥ **उपवनानि** ॥ नवं वयो हारि वपुर्वराङ्गनाः सखी कलावित्कलवल्लकीस्वनः। धनं हि सर्वं विफलं सुखैषिणो विना विहारोपवनानि भूपतेः ॥ ११३ ॥ पुंसां सर्वसुखैकसाधनफलाः सौन्दर्यगर्वोद्धुरक्रीडालोलविलासिनीजनमनःस्फीतप्रमोदावहाः। गुञ्जद्भृङ्गविनिद्रपङ्कजभरस्फारोल्लसद्दीर्घिकायुक्ताः सन्ति गृहेषु यस्य विपुलारामाः स पृथ्वीपतिः ॥ ११४ ॥ (तरवः) ॥ बहुभिर्बत किं जातैः पुत्रैर्धर्मार्थवर्जितैः। वरमेकः पथि तरुर्यत्र विश्रमते जनः ॥ ११५ ॥ दशकूपसमा वापी दशवापीसमो ह्रदः। दशह्रदसमः पुत्रो दशपुत्रसमो द्रुमः ॥ ११६ ॥ **नीतिः** ॥ सुलभाः पुरुषा राजन्सततं प्रियवादिनः। अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ११७ ॥ यः कुलाभिजनाचारैरतिशुद्धः प्रतापवान्। धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥ ११८ ॥ प्रजां संरक्षति नृपः सा वर्धयति पार्थिवम्। वर्धनाद्रक्षणं श्रेयस्तन्नाशेऽन्यत्सदप्यसत् ॥ ११९ ॥ आत्मानं प्रथमं राजा विनयेनोपपादयेत्। ततोऽमात्यांस्ततो भृत्यांस्ततः पुत्रास्ततः प्रजाः ॥ १२० ॥ राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः। लोकास्तमनुवर्तन्ते यथा राजा तथा प्रजाः ॥ १२१ ॥ नृपाणां च नराणां च केवलं तुल्यमूर्तिता। आधिक्यं तु क्षमा धैर्यमाज्ञा दानं पराक्रमः ॥ १२२ ॥ प्रजां न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः। अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ १२३ ॥ अजामिव प्रजां हन्याद्यो मोहात्पृथिवीपतिः। तस्यैका जायते तृप्तिर्द्वितीया न कथंचन ॥ १२४ ॥ प्रजापीडनसंतापात्समुद्भूतो हुताशनः। राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्तते ॥ १२५ ॥ यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिवर्धितः। फलप्रदो भवेत्काले तद्वल्लोकाः सुरक्षिताः ॥ १२६ ॥ निजवर्षा इति स्नेहा बहुभक्तजनान्विताः। सुकाला इव जायन्ते प्रजाः पुण्येन भूभृतः ॥ १२७ ॥ यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा। अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ १२८ ॥ प्रकृतिः स्वामिनं त्यक्त्वा समृद्धापि न जीवति। अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ॥ १२९ ॥ नरेशे जीवलोकोऽयं न मीलति निमीलति। उदेत्युदीयमाने च रवाविव सरोरुहम् ॥ १३० ॥ हिरण्यधान्यरत्नानि गजेन्द्राश्चापि वाजिनः। तथान्यदपि यत्किंचित्प्रजाभ्यः स्यान्महीपतेः ॥ १३१ ॥ मा तात साहसं कार्षीर्विभवैर्गर्वमागतः। स्वगात्राण्यपि भाराय भवन्ति हि विपर्यये ॥ १३२ ॥ मा त्वं तात बले स्थित्वा बाधिष्ठा दुर्बलं जनम्। न हि दुर्बलदग्धानां काले किंचित्प्ररोहति ॥ १३३ ॥ यानि मिथ्याभिभूतानां पतन्त्यश्रूणि रोदताम्। तानि संतापकान्घ्नन्ति सपुत्रपशुबान्धवान् ॥ १३४ ॥ मा तात संपदामग्रमारूढोऽस्मीति विश्वसीः। दूरारोहपरिभ्रंशविनिपातो हि दारुणः ॥ १३५ ॥ कितवा यं प्रशंसन्ति यं प्रशसन्ति चारणाः। यं प्रशंसन्ति बन्धक्यः स पार्थ पुरुषाधमः ॥ १३६ ॥ राजानो यं

१ हितस्य.

प्रशंसन्ति यं प्रशंसन्ति वै द्विजाः । साधवो यं प्रशंसन्ति स पार्थ पुरुषोत्तमः ॥ १३७ ॥ प्रज्ञागुप्तशरीरस्य किं करिष्यन्ति संहताः । गृहीतहस्तछत्रस्य वारिधारा इवारयः ॥ १३८ ॥ कोऽत्रेत्यहमिति ब्रूयात्सम्यगादेशयेति च । आज्ञामवितथां कुर्याद्यथाशक्ति महीपतेः ॥ १३९ ॥ अल्पेच्छुर्धृतिमान्प्राज्ञश्छायेवानुगतः सदा । आदिष्टो न विकल्पेत स राजवसतौ वसेत् ॥ १४० ॥ अप्राप्तकालवचनं बृहस्पतिरपि ब्रुवन् । प्राप्नुयाद्बुद्ध्यवज्ञानमपमानं च शाश्वतम् ॥ १४१ ॥ आपद्युन्मार्गगमने कार्यकालात्ययेषु च । अपृष्टेनापि वक्तव्यं भृत्येन हितमिच्छता ॥ १४२ ॥ किं भक्तेनासमर्थेन किं शक्तेनापकारिणा । भक्तं शक्तं च मां राजन्नावज्ञातुं त्वमर्हसि ॥ १४३ ॥ जनं जनपदा नित्यमर्चयन्ति नृपार्चितम् । नृपेणावमतो यस्तु स सर्वैरवमन्यते ॥ १४४ ॥ नानिवेद्य प्रकुर्वीत भर्तुः किंचिदपि स्वयम् । कार्यमापत्प्रतीकारादन्यत्र जगतीपतेः ॥ १४५ ॥ अतिव्ययोऽनवेक्षा च तथार्जनमधर्मतः । मोक्षणं दूरसंस्थानं कोषव्यसनमुच्यते ॥ १४६ ॥ क्षिप्रमायमनालोच्य व्ययानश्च स्ववाञ्छया । परिक्षीयत एवासौ धनी वैश्रवणोपमः ॥ १४७ ॥ यो यत्र कुशलः कार्ये तं तत्र विनियोजयेत् । कर्मस्वदृष्टकर्मा यः शास्त्रज्ञोऽपि विमुह्यति ॥ १४८ ॥ एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता । बुद्धिर्बुद्धिमता युक्ता हन्ति राष्ट्रं सनायकम् ॥ १४९ ॥ न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न च पत्तिभिः । कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥ १५० ॥ दुर्योधनः समर्थोऽपि दुर्मन्त्री प्रलयं गतः । राज्यमेकः चकारोच्चैः सुमन्त्री चन्द्रगुप्तकः ॥ १५१ ॥ अशृण्वन्नपि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः । यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥ १५२ ॥ सभा वा न प्रवेष्टव्या वक्तव्यं नासमञ्जसम् । अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥ १५३ ॥ तस्मात्सभ्यः सभां गत्वा रागद्वेषविवर्जितः । वचस्तथाविधं ब्रूयाद्यथा न नरकं व्रजेत् ॥ १५४ ॥ माता पिता गुरुर्भ्राता भार्या पुत्रः पुरोहितः । नादण्ड्यो नाम राज्ञोऽस्ति स्वधर्मे यो न तिष्ठति ॥ १५५ ॥ विशोधयेन्महीपालो मन्त्रिशालामशेषतः । अयुक्तो नार्हति स्थातुमस्यां मन्त्ररहस्यवित् ॥ १५६ ॥ षट्कर्णो भिद्यते[1] मन्त्रश्चतुःकर्णः स्थिरो भवेत् । द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं[3] न गच्छति ॥ १५७ ॥ त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः । नियोजयेत्तथैवैतांस्त्रिविधेष्वपि कर्मसु ॥ १५८ ॥ तुल्यार्थं तुल्यसामर्थ्यं सर्वज्ञं व्यवसायिनम् । अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥ १५९ ॥ निर्विशेषो यदा राजा समं भृत्येषु तिष्ठति । तत्रोद्यमसमर्थानामुत्साहः परिहीयते ॥ १६० ॥ प्रसादो निष्फलो यस्य यस्य क्रोधो निरर्थकः । न तं राजानमिच्छन्ति षण्ढं पतिमिवाङ्गनाः ॥ १६१ ॥ अविवेकिनि भूपाले नश्यन्ति गुणिनां गुणाः । प्रवासरसिके कान्ते यथा साध्व्याः स्तनोन्नतिः ॥ १६२ ॥ न कश्चिच्चण्डकोपानामात्मीयो नाम भूभृताम् । होतारमपि जुह्वन्तं[4] दहत्येव

१ भेद प्राप्नोति सर्वेषां ज्ञानविषयो भवतीति भाव.. २ विचार. ३ पारम्. ४ होमकर्तारम्.

हुताशनः ॥ १६३ ॥ चक्रं सेव्यं नृपः सेव्यो न सेव्यः केवलो नृपः । पश्य चक्रस्य माहात्म्यं मृत्पिण्डः पात्रतां गतः ॥ १६४ ॥ यस्मिन्नेवाधिक चक्षुरारोपयति पार्थिवः । कुलीनो वाकुलीनो वा स श्रियो भाजनं भवेत् ॥ १६५ ॥ राज्ञि मातरि देव्यां च कुमारे मुख्यमन्त्रिणि । पुरोहिते प्रतीहारे समं वर्तेत राजवत् ॥ १६६ ॥ पानमक्षास्तथा नार्यो मृगया गीतवादिते । एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥ १६७ ॥ आयाच्चतुर्थभागेन व्ययकर्म प्रवर्तयेत् । प्रभूततैलदीपो हि चिरं भद्राणि पश्यति ॥ १६८ ॥ अर्थानामर्जनं कार्यं वर्धनं रक्षणं तथा । भक्ष्यमाणो निरादायः सुमेरुरपि हीयते ॥ १६९ ॥ कर्मणा मनसा वाचा चक्षुषापि चतुर्विधम् । प्रसाधयति लोकं यस्तं लोको नु प्रसीदति ॥ १७० ॥ संभोजनं संकथनं संप्रश्नोऽथ समागमः । ज्ञातिभिः सह कार्याणि न विरोधः कदाचन ॥ १७१ ॥ मृदोः परिभवो नित्यं वैरं तीक्ष्णस्य नित्यशः । उत्सृज्य तद्द्वयं तस्मान्मध्यां वृत्तिं समाश्रयेत् ॥ १७२ ॥ अबुद्धिमाश्रितानां च क्षन्तव्यमपराधिनाम् । नहि सर्वत्र पाण्डित्यं सुलभं पुरुषे क्वचित् ॥ १७३ ॥ किमप्यसाध्यं महतां सिद्धिमेति लघीयसाम् । प्रदीपो भूमिगेहान्तर्ध्वान्तं हन्ति न भानुमान् ॥ १७४ ॥ अरावप्युचितं कार्यमातिथ्यं गृहमागते । छेत्तुमप्यागता च्छायां नोपसंहरते द्रुमः ॥ १७५ ॥ हन्तुमेषोऽपसरति मृगेन्द्रः संकुचत्यति । बुद्धिमन्तः सहन्ते च निधाय हृदि कंचन ॥ १७६ ॥ अगाधहृदया भूपाः कूपा इव दुरासदाः । घटका[1] गुणिनो[2] नो चेत्कथं लभ्येत जीवनम्[3] ॥ १७७ ॥ कथं नाम न सेव्यन्ते यत्नतः परमेश्वराः । अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥ १७८ ॥ भोगिनः[4] कञ्चुका[5]सक्ताः क्रूराः कुटिलगामिनः । सुदुष्टा मन्त्र[6]साध्याश्च राजानः पन्नगा[7] इव ॥ १७९ ॥ अकस्माद्द्वेष्टि यो भक्त[8]माजन्मपरिसेवितम् । नव्यंजने[9] रुचिर्यस्य त्याज्यो नृप इवातुरः[10] ॥ १८० ॥ सुगन्धं केतकीपुष्पं कण्टकैः परिवेष्टितम् । यथा पुष्पं तथा राजा दुर्जनैः परिवेष्टितः ॥ १८१ ॥ असत्प्रलापः पारुष्यं पैशुन्यमनृतं तथा । चत्वारि वाचा राजेन्द्र न जल्पेन्नैव चिन्तयेत् ॥ १८२ ॥ प्राज्ञे नियोज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः । यशः स्वर्गनिवासश्च विपुलश्च धनागमः ॥ १८३ ॥ मूर्खे नियोज्यमाने तु त्रयो दोषा महीपतेः । अयशश्चार्थनाशश्च नरके गमनं तथा ॥ १८४ ॥ इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम् । यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥ १८५ ॥ मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि । चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥ १८६ ॥ आत्मोदयः परग्लानिर्द्वयं नीतिरितीयती । तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतीयते ॥ १८७ ॥ तृप्तियोगः परेणापि

१ कार्यसाधका ; (पक्षे) कुम्भा २ गुणवन्त ; (पक्षे) रज्जुयुक्ताः ३ जीवनोपायभूत द्रव्यम्; (पक्षे) उदकम् ४ विलासिन ; (पक्षे) भोगवत ५ कवचम्; (पक्षे) सर्पकञ्चुकम् ६ विचार, (पक्षे) शाबरादि. ७ सर्पा. ८ सेवकम्, (पक्षे) ओदनम्. ९ नवीने जने; (पक्षे) तेमने न १० रोगी

महिम्ना न महात्मनाम्। पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥ १८८ ॥ संपदा सुस्थिरंमन्यो भवति स्वल्पयापि यः। कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ १८९ ॥ बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः। चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ १९० ॥ तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः। नैकमोजः प्रसादो वा रसभावविदः कवेः ॥ १९१ ॥ कृतापचारोऽपि परैरनाविष्कृतविक्रियः। असाध्यः कुरुते कोपं प्राप्ते काले गदो यथा ॥ १९२ ॥ मृदुव्यवहितं तेजो भोक्तुमर्थान्प्रकल्पते। प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया ॥ १९३ ॥ नालम्बते दैष्टिकतां न निषीदति पौरुषे। शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ १९४ ॥ स्थायिनोऽर्थे प्रवर्तन्ते भावाः संचारिणो यथा। रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः ॥ १९५ ॥ तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता। सुनिग्रहा नरेन्द्रेण फणीन्द्रा इव शत्रवः ॥ १९६ ॥ करप्रचेयामुत्तुङ्गः प्रभुशक्तिं प्रथीयसीम्। प्रज्ञाबलबृहन्मूलः फलत्युत्साहपादपः ॥ १९७ ॥ स दोषः सचिवस्यैव यदसत्कुरुते नृपः। याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥ १९८ ॥ न सर्पस्य मुखे रक्तं न दुष्टस्य कलेवरे। न प्रजासु न भूपाले धनं दुरधिकारिणि ॥ १९९ ॥ यद्यपि क्षितिपालानामाज्ञा सर्वत्रगा स्वयम्। तथापि शास्त्रदीपेन चरत्येव मतिः सताम् ॥ २०० ॥ असाध्यमन्यथा दोषं परिच्छिद्य शरीरिणाम्। यथा वैद्यस्तथा राजा शस्त्रपाणिर्विपद्यति ॥ २०१ ॥ जातमात्रं न यः शत्रुं व्याधिं वा प्रशमं नयेत्। अतिपुष्टाङ्गयुक्तोऽपि स पश्चात्तेन हन्यते ॥ २०२ ॥ पातकानां समस्तानां द्वे परे तात पातके। एकं दुःसचिवो राजा द्वितीयं च तदाश्रयः ॥ २०३ ॥ राजा संपत्तिहीनोऽपि सेव्यः सेव्यगुणाश्रयः। भवत्याजीवनं तस्मात्फलं कालान्तरादपि ॥ २०४ ॥ स जयी वरमातङ्गा यस्य तस्यास्ति मेदिनी। कोशो यस्य सुदुर्धर्षो दुर्गस्तस्य सुदुर्जयः ॥ २०५ ॥ सुवर्णैः पट्टचेलैश्च शोभा स्याद्वारयोषिताम्। पराक्रमेण दानेन राजन्ते राजनन्दनाः ॥ २०६ ॥ यं यं नृपोऽनुरागेण संमानयति संसदि। तस्य तस्योत्सारणाय यतन्ते राजवल्लभाः ॥ २०७ ॥ ब्राह्मणः क्षत्रियो बन्धुर्नाधिकारे प्रशस्यते। ब्राह्मणः सिद्धमप्यर्थं कृच्छ्रेणापि न यच्छति ॥ २०८ ॥ नियुक्तः क्षत्रियो द्रव्ये खड्गं दर्शयते ध्रुवम्। सर्वस्वं ग्रसते बन्धुराक्रम्य ज्ञातिभावतः ॥ २०९ ॥ अपराधेऽपि निःशङ्को नियोगी चिरसेवकः। स स्वामिनमवज्ञाय चरेच्च निरवग्रहः ॥ २१० ॥ उपकर्ताधिकारस्थः स्वापराधं न मन्यते। उपकारं ध्वजीकृत्य सर्वमेवावलुम्पति ॥ २११ ॥ आज्ञाभङ्गकरान्राजा न क्षाम्येत्स्वसुतानपि। विशेषः कोऽनुरागस्य राजचित्तगतस्य च ॥ २१२ ॥ तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात्। नृपतिर्निजलोभाच्च प्रजा रक्षेत्पितेव हि ॥ २१३ ॥ भोगस्य भाजनं राजा न राजा कार्यभाजनम्। राजकार्यपरिध्वंसान्मन्त्री दोषेण लिप्यते ॥ २१४ ॥ वरं प्राणपरित्यागः शिरसो वापि कर्तनम्। न तु स्वा-

मिपदावाग्निपातकेच्छोरुपेक्षणम् ॥ २१५ ॥ विषदिग्धस्य भक्तस्य दन्तस्य चलितस्य च । अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ २१६ ॥ यः कुर्यात्सचिवायत्तां श्रियं तद्व्यसने सति । सोऽन्धवज्जगतीपालः सीदेत्संचारकैर्विना ॥ २१७ ॥ सदामात्यो न सिद्धः स्यात्समृद्धः सर्व एव हि । सिद्धानामयमादेश ऋद्धिश्चित्तविकारिणि ॥२१८॥ मूलभृत्यान्परित्यज्य नागन्तून्प्रतिमानयेत् । नातः परतरो दोषो राज्यभेदकरो यतः ॥ २१९ ॥ मन्त्रबीजमिदं गुप्तं रक्षणीयं यथा तथा । मनागपि न भिद्येत तद्भिन्नं न प्ररोहति ॥ २२० ॥ मन्त्रिणा पृथिवीपालचित्तं विघटितं क्वचित् । वलयं स्फटिकस्येव को हि संधातुमीश्वरः॥२२१॥ वज्रं च राजतेजश्च द्वयमेवातिभीषणम् । एकमेकत्र पतति पतत्यन्यत्समन्ततः ॥ २२२ ॥ मृतः प्राप्नोति वा स्वर्गं शत्रुं हत्वा सुखानि वा । उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ ॥ २२३ ॥ यत्रायुद्धे ध्रुवं मृत्युर्युद्धे जीवितसंशयः । तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः ॥ २२४ ॥ अयुद्धे हि यदा पश्यन्न किंचिद्धितमात्मनः । युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥ २२५ ॥ जये च लभते लक्ष्मीं मृते चापि सुराङ्गनाम् । क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे ॥ २२६ ॥ पिता वा यदि वा भ्राता पुत्रो वा यदि वा सुहृत् । प्राणच्छेदकरा राज्ञा हन्तव्या भूतिमिच्छता ॥ २२७ ॥ राज्यलोभादहंकारादिच्छतः स्वामिनः पदम् । प्रायश्चित्तं तु तस्यैकं जीवोत्सर्गो न चापरम् ॥ २२८ ॥ आत्मनश्च परेषां च यः समीक्ष्य बलाबलम् । अन्तरं नैव जानाति स तिरस्क्रियतेऽरिभिः ॥ २२९ ॥ राजा मत्तः शिशुश्चैव प्रमादी धनगर्वितः । अप्राप्यमपि वाञ्छन्ति किं पुनर्लभ्यतेऽपि यत् ॥२३०॥ वर्णाकारप्रतिध्वानैर्नेत्रवक्त्रविकारतः । अप्यूहन्ति धियो धीरास्तस्माद्रहसि मन्त्रयेत् ॥२३१॥ आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च । नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः ॥२३२॥ षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्तया । इत्यात्मना द्वितीयेन मन्त्रः कार्यो महीभृता ॥२३३॥ मन्त्रभेदेऽपि ये दोषा भवन्ति पृथिवीपतेः । न शक्यास्ते समाधातुमिति नीतिविदा मतम् ॥२३४॥ न तथोत्थाप्यते ग्रावा प्राणिभिर्दारुणा यथा । अल्पोपायान्महासिद्धिरेतन्मन्त्रफलं महत् ॥ २३५ ॥ विजेतुं प्रयतेतारीन्न युद्धेन कदाचन । अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः ॥२३६ ॥ साम्ना दानेन भेदेन समस्तैरथवा पृथक् । साधितुं प्रयतेतारीन्न युद्धेन कदाचन ॥ २३७ ॥ बलिना सह योद्धव्यमिति नास्ति निदर्शनम् । तद्युद्धं हस्तिना सार्धं नराणां मृत्युमावहेत् ॥ २३८ ॥ स मूर्खः कालमप्राप्य योऽपकर्तरि वर्तते । कलिर्बलवता सार्धं कीटपक्षोद्गमो यथा ॥ २३९ ॥ महत्यल्पेऽप्युपायज्ञः सममेव भवेत्क्षमः । समुन्मूलयितुं वृक्षांस्तृणानीव नदीरयः ॥ २४० ॥ धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात् । निक्षिप्तं हि मुखे रत्नं न कुर्यात्प्राणधारणम् ॥ २४१ ॥ यथा प्रभुक्तान्मानाद्युध्यन्ते भुवि मानवाः । न तथा बहुभिर्दत्तैर्द्रविणैरपि भूपते ॥ २४२ ॥ अविद्वानपि भूपालो विद्यावृद्धो-

पसेवया। परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥ २४३ ॥ पानं स्त्री मृगया द्यूतमर्थदूषणमेव च। वाग्दण्डयोश्च पारुष्यं व्यसनानि महीभुजाम् ॥ २४४ ॥ शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनायकः। त्यज्यते किं पुनर्नान्यैर्यश्चाप्यात्मंभरिर्नरः ॥ २४५ ॥ सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः। एभिर्मुक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥ २४६ ॥ यो येन प्रतिबुद्धः स्यात्सह तेनोदयी व्ययी। स विश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च
॥ २४७ ॥ धूर्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः। अनीतिपवनाक्षिप्तः कार्याब्धौ
ङ्कुरानिव ॥ ३०१ ॥ ने॥ हर्षक्रोधौ समौ यस्य शास्त्रार्थे प्रत्ययः सदा। नित्यं भृत्यान-
नैव केनचित् ॥ ३०२'दा धरा ॥ २४९ ॥ दाता क्षमी गुणग्राही स्वामी दुःखेन लभ्यते।
चैव लता पुष्पफलप्रदा जाने भृत्योऽपि दुर्लभः ॥ २५० ॥ आहवेषु च ये शूराः स्वाम्यर्थे
याश्चैव क्षयं यान्ति भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ २५१ ॥ कृतकृत्यस्य
समौ हि शिष्टैराम्नातागाशयेत्। फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥ २५२ ॥
नामनुवर्तिनाम्। भं विचिन्वन्ति सेवकाः। आरोहन्ति शनैः पश्चाद्धुन्वन्तमपि पार्थिवम्
गच्छन्ति तां गतिं महेच्छानां शिल्पविक्रमशालिनाम्। सेवावृत्तिविदां चैव नाश्रयः
॥ ३०७ ॥ चाटतस्व ॥ ये जात्यादिमहोत्साहान्नरेन्द्रान्नोपयान्ति च। तेषामामरणं भिक्षा
दिभिस्तथा ॥ ३०८ ॥ २५५ ॥ ये च प्राहुर्दुरात्मानो दुराराध्या महीभुजः। प्रमादाल-
यो न रक्षति ॥ ३०… निजानि तैः ॥ २५६ ॥ सर्पान्व्याघ्रान्गजान्सिंहान्दृष्ट्वोपायैर्वशी-
सर्वेषां न्यायवर्तिन… प्रमादिनाम् ॥ २५७ ॥ राजानमेव संश्रित्य वि-
दुसलिलो दुष्ग्राह… ०३ ॥ राज… न्यत्र चन्दनं न प्ररोहति ॥ २५८ ॥ धवलान्यातप-
रमन्ते …श्च मनोरम… राद… सदा मत्ताश्च नागेन्द्राः प्रसन्ने सति भूपतौ ॥२५९॥ सुवर्णपु-
…ता पृथ्वीं विचिन्वन्ति त्रयो जनाः। शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥२६०॥
सा सेवा या प्रभुहिता ग्राह्या वाक्यविशेषतः। आश्रयेत्पार्थिवं विद्वांस्तद्द्वारेणैव नान्यथा ॥ २६१ ॥ यो न वेत्ति गुणान्यस्य न तं सेवेत पण्डितः। न हि तस्मात्फलं तस्य सुकृष्टादूषरादिव ॥ २६२ ॥ द्रव्यप्रकृतिहीनोऽपि सेव्यः सेव्यगुणान्वितः। भवत्याजीवनं तस्मात्फलं कालान्तरादपि ॥ २६३ ॥ अपि स्थाणुवदासीनः शुष्यन्परिगतः क्षुधा। न त्वेवानात्मसंपन्नाद्वृत्तिमीहेत पण्डितः ॥ २६४ ॥ सेवकः स्वामिनं द्वेष्टि कृपणं परुषाक्षरम्। आत्मानं किं स न द्वेष्टि सेव्यासेव्यं न वेत्ति यः ॥ २६५ ॥ यमाश्रित्य न विश्रामं क्षुधार्ता यान्ति सेवकाः। सोऽर्कवन्नृपतिस्त्याज्यः सदा पुष्पफलोऽपि सन् ॥२६६॥ जीवेति प्रब्रुवन्प्रोक्तः कृत्यं कृत्यविचक्षणः। करोति निर्विकल्पं यः स भवेद्राजवल्लभः ॥ २६७ ॥ प्रभुप्रसादजं वित्तं सुपात्रे यो नियोजयेत्। वस्त्राद्यं विदधात्यङ्गे स भवेद्राजवल्लभः ॥ २६८ ॥ अन्तःपुरचरैः सार्धं यो मन्त्रं न समाचरेत्। न कलत्रैर्नरेन्द्रस्य स

वेद्राजवल्लभः ॥ २६९ ॥ संमतोऽहं प्रभोर्नित्यमिति मत्वा व्यतिक्रमेत् । कृच्छ्रेष्वपि न
र्यादां स भवेद्राजवल्लभः ॥ २७० ॥ द्वेषिद्वेषपरो नित्यमिष्टानामिष्टकर्मकृत् । यो नरो
रनाथस्य स भवेद्राजवल्लभः ॥ २७१ ॥ द्यूतं यो यमदूताभं हालां हालाहलोपमाम् ।
श्येद्दारान्वृथाकारान्स भवेद्राजवल्लभः ॥ २७२ ॥ युद्धकालेऽग्रगो यः स्यात्सदा पृष्ठा-
गः पुरे । प्रभोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभः ॥ २७३ ॥ अप्राप्तकालं वचनं बृहस्प-
तेरपि ब्रुवन् । लभते बुद्ध्यवज्ञानमपमानं च पुष्कलम् ॥ २७४ ॥ दुराराध्या हि राजानः
र्वता इव सर्वदा । व्यालाकीर्णाः सुविषमाः कठिना दुःखसेविताः ॥ २७५ ॥ भोगिनः
कञ्चुकाविष्टाः कुटिलाः क्रूरचेष्टिताः । सुदुष्टा मन्त्रसाध्याश्च राजानः पन्नगा इव
। २७६ ॥ दुरारोहं पदं राज्ञां सर्वलोकनमस्कृतम् । स्वरथपादातं सेनाङ्गं स्याच्चतुष्टयेन
दुष्यति ॥ २७७ ॥ दुराराध्याः श्रियो राज्ञां दुरापा दुष्परितेन दृष्टं न दातव्यं पृष्ठदो
चिरमात्मनि संस्थिताः ॥ २७८ ॥ अनभिज्ञो गुणानां यो न नृ । यदेव कुरुते राजा तत्प्र-
ऽपि कुलीनोऽपि क्रमायातोऽपि भूपतिः ॥ २७९ ॥ सव्यदक्षिणपक्षसहस्रदृक् । न तरया-
भ्यते । कस्तत्र क्षणमप्यार्यो विद्यमानगतिर्वसेत् ॥ २८० ॥ काचे न च्यवन्ते पथः प्रजाः ।
बुद्धिः प्रवर्तते । न तेषां संनिधौ भृत्यो नाममात्रोऽपि तिष्ठति ॥ २८ थिवीपालैश्चारित्रविधयः
शेषं समं भृत्येषु वर्तते । तत्रोद्यमसमर्थानामुत्साहः परिहीयते ॥ २८ पैरपि न योद्धव्यं कि
वेश्य निर्विशङ्केन चेतसा । आस्यते सेवकः स स्यात्कलत्रमिव चाग अभिभूतोऽप्यवज्ञातो
कृत्वा सुकृतं राज्ञो दुष्करं हितमुत्तमम् । लज्जया वक्ति नो किंचि॥३३६॥ अन्तःपुरधना-
॥ २८४ ॥ कुतः सेवाविहीनानां चामरोद्धूतसंपदः । उद्दण्डधवलच्छ३३७॥ जृम्भानिष्ठीवनं
॥ २८५ ॥ अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम् । देवानां चत ॥ ३३८ ॥ स्वयं
सुमहानपि ॥ २८६ ॥ अकुलीनोऽपि मूर्खोऽपि भूपालं योऽत्र सेवते । रद्वारा नियोजयेत्
ऽपि स सर्वत्रापि पूज्यते ॥ २८७ ॥ अपि कापुरुषो भीरुः स्याच्चेन्नृपतिसेवकः तो महाशमैः
फलं लोकात्तस्यांशमपि नो गुणी ॥ २८८ ॥ यत्सकाशान्न लाभः स्यात्केवलाः स्युर्विप-
त्तयः । स स्वामी दूरतस्त्याज्यो विशेषादनुजीविभिः ॥ २८९ ॥ फलहीनं नृपं भृत्याः कु-
लीनमपि चोन्नतम् । संत्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजाः ॥ २९० ॥ भूपः कूप
इवाभाति नमज्जनसुखावहः । ददाति गुणसंबन्धाद्यथापात्रानुरूपतः ॥ २९१ ॥ अपि संमा-
नसंयुक्ताः कुलीना भक्तितत्पराः । वृत्तिभङ्गान्महीपालं त्यक्त्वा यान्ति सुसेवकाः ॥२९२॥
कालातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः । कदाचित्तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः
॥ २९३ ॥ देशानामुपरि क्ष्मापा आतुराणां चिकित्सकाः । वणिजो ग्राहकाणां च मूर्खा-

१ नमन्तो नम्रा ये जनास्तेषां सुखावहः, (पक्षे) मज्जने सुखावहो न भवतीति न मज्जनसुखावहः.
२ विद्याविनयादिः; (पक्षे) रज्जव

णामपि पण्डिताः ॥ २९४ ॥ प्रमादिनां तथा चौरा भिक्षुका गृहमेधिनाम् । गणिका कामु-
कानां च सर्वलोकस्य शिल्पिनः ॥ २९५ ॥ सामादिसाज्जितैः पाशैः प्रतीक्षन्ते दिवानि-
शम् । भुञ्जते च यथाशक्ति जलजाञ्जलजा यथा ॥ २९६ ॥ शनैः शनैश्च यो राज्यमुप-
भुङ्क्ते यथावलम् । रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत् ॥ २९७ ॥ विधिना मन्त्रयु-
क्तेन रूक्षापि मथितापि च । प्रयच्छति फलं भूमिररणीव हुताशनम् ॥ २९८ ॥ प्रजानां
पालनं सस्यं स्वर्गकोशस्य वर्धनम् । पीडनं धर्मनाशाय पापायायशसे स्थितम् ॥ २९९ ॥
गोपालेन प्रजाधेनोर्वित्तदुग्धं शनैः शनैः । पालनात्पोषणाद्ग्राह्यं न्याय्यां वृत्तिं समाचरेत्
॥ ३०० ॥ फलार्थी नृपतिर्लोकान्पालयेद्यत्नमास्थितः । दानमानादितोयेन मालाकारो-
लता पुष्पफलप्रदा ॥ ने भृत्यो धनस्नेहं प्रजाभ्यः संहरन्नपि । अन्तरस्थैर्गुणैः शुभ्रैर्लक्ष्यते
याश्चैव क्षयं यान्ति भर्तृभक्ताः था गौर्दुह्यते काले पाल्यते च तथा प्रजाः । सिच्यते चीयते
समौ हि शिष्टैराम्नात ाशये ३०३ ॥ लोकानुग्रहकर्तारः प्रवर्धन्ते नरेश्वराः । लोकानां संक्ष-
नामनुवार्तिनाम् । भं सिंशयः ॥ ३०४ ॥ उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
गच्छन्ति तां गतिं : वत्स्यन्तावामयः स च ॥ ३०५ ॥ मृतानां स्वामिनः कार्ये भृत्या-
॥ ३०७ ॥ चाटतस्व स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले ॥ ३०६ ॥ न यज्वानोऽपि
दिभिस्तथा ॥ ३०८ व योगिनः । यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः
यो न रक्षति ॥ ३ रदुर्वृत्तैस्तथा साहसिकादिभिः । पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मा-
सर्वेषां न्यायवर्तिनां प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः । अधर्मादपि षड्भागो जायते
दुःसलिलो दुष्प्र ॥ राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् । राजा पिता च माता च
रमन्ते श्च मतम् ॥ ३१० ॥ गुणालयोऽप्यसन्मन्त्री नृपतिर्नाधिगम्यते । प्रसन्नस्वा-
पृथ्वीं विच्छिद्रो यथा ह्रदः ॥ ३११ ॥ चित्रास्वादकथैर्भृत्यैरनायासितकार्मुकैः । ये
सा सेवा नृपे तेषां रमन्ते रिपवः श्रिया ॥ ३१२ ॥ यः संमानं समाधत्ते भृत्यानां क्षितिपो-
ऽधिकम् । वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥ ३१३ ॥ विश्वासः संपदां
मूलं तेन यूथपतिर्गजः । सिंहो मृगाधिपत्येऽपि न मृगैरुपयुज्यते ॥ ३१४ ॥ कारुण्यं सं-
विभागश्च यस्य भृत्येषु सर्वदा । संभवेत्स महीपालस्त्रैलोक्यस्यापि रक्षणे ॥ ३१५ ॥
अपृष्टस्तु नरः किंचिद्यो ब्रूते राजसंसदि । न केवलमसंमानं लभते च विडम्बनम् ॥ ३१६ ॥
अजन्मा पुरुषस्तावद्गतासुस्तृणमेव वा । यावन्नेषुभिरादत्ते विलुप्तमरिभिर्यशः ॥ ३१७ ॥
विपाकदारुणो राज्ञां रिपुरल्पोऽप्यरुंतुदः । उद्वेजयति सूक्ष्मोऽपि चरणं कण्टकाङ्कुरः ॥ ३१८
निर्विषोऽपि यथा सर्पः फटाटोपैर्भयंकरः । तथाडम्बरवान्राजा न परैः परिभूयते ॥ ३१९ ॥
भूमिर्मित्रं हिरण्यं वा विग्रहस्य फलत्रयम् । नास्त्येकमपि यद्येषां न तत्कुर्यात्कथंचन
॥ ३२० ॥ सामैव हि प्रयोक्तव्यमादौ कार्यं विजानता । सामसिद्धानि कार्याणि विक्रियां

यान्ति न क्वचित् ॥ ३२१ ॥ शपथैः संधितस्यापि न विश्वासं व्रजेद्रिपोः । राज्यलोभो-द्यतो विप्रः शक्रेण शपथैर्हतः ॥ ३२२ ॥ उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् । पादलग्न-करस्थेन कण्टकेनेव कण्टकम् ॥ ३२३ ॥ नोपेक्षितव्यो विद्वद्भिः शत्रुरल्पोऽप्यवज्ञया । व-ह्निरल्पोऽपि संवृद्धः कुरुते भस्मसाद्वनम् ॥ ३२४ ॥ कौर्मं संकोचमास्थाय प्रहारानपि मर्षयेत् । प्राप्ते काले च मतिमानुत्तिष्ठेत्क्रूरसर्पवत् ॥ ३२५ ॥ स्वाम्यमात्यश्च राज्यं च कोशो दुर्गबलं सुहृत् । एतावदुच्यते राज्यं सत्त्वबुद्धिव्यपाश्रयम् ॥ ३२६ ॥ संधि-विग्रहयानानि संस्थितिः संश्रयस्तथा । द्वैधीभावश्च भूपानां षड्गुणाः परिकीर्तिताः ॥३२७॥ उत्साहस्य प्रभोर्मन्त्रस्यैवं शक्तित्रयं मतम् । आत्मनः सुहृदश्चैव तन्मित्रस्योदयास्त्रयः ॥ ३२८ ॥ सामदाने भेददण्डावित्युपायचतुष्टयम् । हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ३२९ ॥ क्षत्रियस्योरसि क्षत्रं पृष्ठे ब्रह्म व्यवस्थितम् । तेन पृष्ठं न दातव्यं पृष्ठदो ब्रह्महा भवेत् ॥३३०॥ रक्षाधिकारादीशत्वाद्भूतानुग्रहकारणात् । यदेव कुरुते राजा तत्प्र-माणमिति स्थितिः ॥ ३३१ ॥ राजा नाम चरत्येष भूमौ साक्षात्सहस्रदृक् । न तस्या-ज्ञामतिक्रम्य संतिष्ठेरन्निमाः प्रजाः ॥ ३३२ ॥ राज्ञामाज्ञाभयाद्यस्मान्न च्यवन्ते पथः प्रजाः । व्यवहारस्ततो ज्ञेयः शान्तितो राजशासनम् ॥ ३३३ ॥ नित्यार्यपृथिवीपालैश्चारित्रविधयः कृताः । चारित्रेभ्यस्ततः प्राहुर्गरीयो राजशासनम् ॥ ३३४ ॥ पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः । जये भवति संदेहः प्रधानपुरुषक्षयः ॥ ३३५ ॥ अभिभूतोऽप्यवज्ञातो यो राज्ञां द्वारि तिष्ठति । स तु राज्ञां श्रियं भुङ्क्ते नाभिमानी कदाचन ॥३३६॥ अन्तःपुरधना-ध्यक्षैर्वैरीभूते निराकृते । संसर्गं न व्रजेल्लोके विना पार्थिवशासनात् ॥३३७॥ जृम्भानिष्ठीवनं कार्श्यं कोपं पर्यङ्किकां श्रमम् । भ्रुकुटिं वातमुद्रां च तत्समीपे विवर्जयेत् ॥ ३३८ ॥ स्वयं तथा न वक्तव्यं स्वगुणाख्यापनं पुनः । स्वगुणाख्यापनं युक्त्या परद्वारा नियोजयेत् ॥३३९॥ राज्ञस्तु दर्शनं कुर्याज्ज्ञात्वावसरसौष्ठवम् । गुणादिख्यापनात्पूर्वमुपनीतो महाशमैः ॥ ३४० ॥ दर्शनं नाधमद्वाराद्राज्ञः कार्यं विपश्चिता । गरिष्ठोऽप्यतिनीचः स्यादुपनीतो लघुर्भवेत् ॥ ३४१ ॥ प्रस्ताववाक्ये मुदितो न च संभाव्यते तथा । आराधनासु सर्वासु प्रसुप्त इव चेष्टते ॥ ३४२ ॥ कथासु दोषं क्षिपति काव्यभङ्गं करोति च । लक्ष्यते विमुखश्चैव गुणसंकीर्तने कृते ॥ ३४३ ॥ शत्रोरत्यन्तमित्रं यत्तेन मैत्रीं विवर्जयेत् । अर्द-येत्तद्विरोधेन प्रतिष्ठा घातकारिणा ॥ ३४४ ॥ यत्रात्मीयो जनो नास्ति भेदस्तत्र न विद्य-ते । कुठारैर्दण्डनिर्मुक्तैर्भिद्यन्ते तरवः कथम् ॥ ३४५ ॥ मन्त्राणां बालिशैः सार्धं स्त्रीणां युवतिभिः समाः । पुरः स्तुतिरसाधूनामेता राज्ञां विभूतयः ॥ ३४६ ॥ एतदर्थं कुलीनानां नृपाः कुर्वन्ति संग्रहम् । आदिमध्यावसानेषु न ते यास्यन्ति विक्रियाम् ॥ ३४७ ॥ सर्व एव जनः शूरो ह्यनासादितसंगरः । अदृष्टपरसामर्थ्यः सदर्पः को भवेन्नति ॥ ३४८ ॥

रुष्टोऽपि राजा यद्दद्यान्न तत्तुष्टो वणिग्जनः । अतो भूमिपतिः सेव्यस्त्याज्यो दूरतरेण १ ॥ ३४९ ॥ नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत् । विसृजेन्नैव लुब्धेभ्यो विश्वसे न्नापकारिषु ॥ ३५० ॥ चरेद्धीमानकटुको युञ्जेत्स्नेहं न नास्तिकः । अनृशंसश्चरेदर्थं चो त्कायमनुद्धतः ॥ ३५१ ॥ संदधीत न चानार्यैर्विगृह्णीयान्न बन्धुभिः । नाभक्तश्चारयेच्चारं कुर्यात्कार्यमपीडया ॥ ३५२ ॥ सुमन्त्रिते सुविक्रान्ते सत्कृते सुविचारिते । प्रारम्भे कृतबु द्धीनां सिद्धिरव्यभिचारिणी ॥ ३५३ ॥ सर्वे यत्र विनेतारः सर्वे यत्राभिमानिनः । सर्वे महत्त्वमिच्छन्ति कुलं तदवलीयति ॥ ३५४ ॥ मृतः प्राप्नोति वा स्वर्गं शत्रुं हत्वा सुखानि च । उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ ॥ ३५५ ॥ अकृत्वा निजदेशस्य रक्षां यो विजिगीषते । स नृपः परिधानेन वृतमौलिः पुमानिव ॥३५६॥ विजिगीषुररिर्मित्रं पार्ष्णि ग्राहोऽप्यमध्यमः । उदासीनोऽन्तरान्तर्धिरित्येषा नृपतेः स्थितिः ॥३५७॥ गृध्राकारोऽपि सेव्यः स्याद्धंसाकारैः सभासदैः । हंसाकारोऽपि संत्याज्यो गृध्राकारैः सभासदैः ॥३५८॥ ये ह्याहवेषु वध्यन्ते स्वाम्यर्थमपराङ्मुखाः । विकटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥ ३५९ ॥ पदानि क्रतुतुल्यानि आहवेष्वनिवर्तिनाम् । राजा सुकृतमादत्ते हतानां विपलायिनाम् ॥ ३६० ॥ तवाहं वादिनं क्लीबं निर्हेतिं परमां गतिम् । न हन्याद्विनिवृत्तं च युद्धप्रेक्षणमागतम् ॥ ३६१ ॥ सुतभृत्यसुहृद्वैरिस्वामिसद्गुरुदैवते । एकैकोत्तरतो वृद्ध्या श्रीकारो यत्र मूर्धनि ॥ ३६२ ॥ सपक्षो लभते काको वृक्षस्य विविधं फलम् । पक्षहीनो मृगेन्द्रोऽपि भूमिसंस्थो निरीक्षते ॥ ३६३ ॥ सपक्षो लभते लक्षं गुणमुक्तोऽपि मार्गणः । न लक्षस्थो विपक्षः स्याद्गुणैरापूर्यते यदि ॥ ३६४ ॥ अलब्ध्वापि धनं राज्ञः संश्रिता यान्ति संपदः । महाह्रदसमीपस्थां पश्य नीलां वनस्थलीम् ॥ ३६५ ॥ परस्परानुरक्ता ये योधाः शार्ङ्गधनुर्धराः । सन्नद्धास्तुरगारूढास्ते जयन्ति रणे रिपून् ॥३६६॥ जिते लक्ष्मीर्मृते स्वर्गः कीर्तिश्च धरणीतले । तस्माद्धैर्यं विधातव्यं हतव्यापारवाहिनी ॥ ३६७ ॥ विधाय वैरं सामर्षे नरोऽरौ य उदासते । प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥ ३६८ ॥ सद्वंशसंभवः शुद्धः कोटिदोऽपि गुणान्वितः । कामं धनुरिव क्रूरो वर्जनीयः सतां प्रभुः ॥ ३६९ ॥ असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः । अनाक्रम्य जगत्कृत्स्नं नो संध्यां भजते रविः ॥ ३७० ॥ चिन्त्यते नय एवादावमन्दं समुपेप्सुभिः । विनम्य पूर्वं सिंहोऽपि हन्ति हस्तिनमोजसा ॥ ३७१ ॥ स्वजातीयं विना वैरी न जय्यः स्यात्कदाचन । विना वज्रमणिं मुक्तामणिर्भेद्यः कथं भवेत् ॥ ३७२ ॥ युक्त्या परोक्षं बाधेत विपक्षक्षपणक्षमः । शोषयत्यचिरेणैव प्रान्तरस्थमलं पयः ॥ ३७३ ॥ दुर्गदेशप्रविष्टोऽपि शूरोऽभ्येति पराभवम् । गाढपङ्कनिमग्नाङ्गो मातङ्गोऽप्यवसीदति ॥ ३७४ ॥ नयेनाङ्कुरितं

१ अग्निम्. २ तृणे.

शौर्यं जयाय न तु केवलम् । अन्यमुक्तं विषं भुक्तं पथ्यं स्यादन्यथा मृतिः ॥ ३७५ ॥ मृदुभिर्बहुभिः शूरः पुंभिरेको न बाध्यते । कपोतपोतकैरेकः श्येनो जातु न बाध्यते ॥३७६॥ विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा । अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥३७७॥ ध्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम् । पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम् ॥ ३७८ ॥ रिक्ताः कर्मणि पटवस्तृप्तास्त्वलसा भवन्ति भृत्या ये । तेषां जलौकसामिव पूर्णानां रिक्तता कार्या ॥ ३७९ ॥ गन्तव्या राजसभा द्रष्टव्या राजपूजिता लोकाः । यद्यपि न भवन्त्यर्थास्तथाप्यनर्था विनश्यन्ति ॥ ३८० ॥ अतितेजस्व्यपि राजा पानासक्तो न साधयत्यर्थान् । तृणमपि दग्धुमशक्तो वडवाग्निः संपिबन्नब्धिम् ॥ ३८१ ॥ अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् । नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ ३८२ ॥ सप्रतिबन्धं कार्यं प्रभुरधिगन्तुं सहायवानेव । दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ ३८३ ॥ अभिमुखनिहतस्य सतस्तिष्ठतु तावज्जयोऽथवा स्वर्गः । उभयबलसाधुवादः श्रवणसुखस्यैव तात्पर्यम् ॥ ३८४ ॥ स्पृहयति भुजयोरन्तरमायतकरवालकररुहविदीर्णम् । विजयश्रीर्वीराणां व्युत्पन्नप्रौढवनितेव ॥ ३८५ ॥ अविवेकमतिर्नृपतिर्मन्त्रिषु गुणवत्सु वक्रितग्रीवः । यत्र खलाश्च प्रबलास्तत्र कथं सज्जनावसरः ॥३८६॥ अतिगम्भीरे भूपे कूप इव जनस्य दुरवतारस्य । दधति समीहितसिद्धिं गुणवन्तः पार्थिवा घटकाः ॥ ३८७ ॥ सेवनमसदनुशासनमाश्रितभरणं च राजचिह्नानि । अभिषेकः पटबन्धो वालव्यजनं व्रणस्यापि ॥ ३८८ ॥ यदि तव हृदयं विद्वन्सुनयं स्वप्नेऽपि मा स्म सेविष्ठाः । साचिवजितं षण्ढजितं युवतिजितं चैव राजानम् ॥ ३८९ ॥ आश्रयितव्यो नरपतिरार्जयितव्यानि भूरि वित्तानि । आरब्धव्यं वितरणमानेतव्यं यशो दशापि दिशः ॥ ३९० ॥ असमैः समीयमानः समैश्च परिहीयमाणसत्कारः । धुरि यो न युज्यमानस्त्रिभिरर्थपतिं त्यजति भृत्यः ॥ ३९१ ॥ अनुयातानेकजनः परपुरुषैरुह्यतेऽस्य निजदेहः । अधिकारस्थः पुरुषः शव इव न शृणोति वीक्षते कुमतिः ॥ ३९२ ॥ न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् । धर्मः स नो यत्र न सत्यमस्ति सत्यं न तद्यच्छलमभ्युपैति ॥ ३९३ ॥ स क्षत्रियस्त्राणसहः सतां यस्तत्कार्मुकं कर्मसु यस्य शक्तिः । वहन्द्वयीं यद्यफलेऽर्थजाते करोत्यसंस्कारहतामिवोक्तिम् ॥ ३९४ ॥ क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः । राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥ ३९५ ॥ अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः । सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति ॥ ३९६ ॥ यः काकिनीमप्यपथप्रपन्नां समुद्धरेन्निष्कसहस्रतुल्याम् । कालेषु कोटिष्वपि मुक्तहस्तस्तं राजसिंहं न जहाति

१ [illegible]

लक्ष्मीः ॥ ३९७ ॥ उपेक्षितः क्षीणबलोऽपि शत्रुः प्रमाददोषात्पुरुषैर्मदान्धैः । साध्योऽपि भूत्वा प्रथमं ततोऽसावसाध्यतां व्याधिरिव प्रयाति ॥ ३९८ ॥ मित्राणि शत्रुत्वमिवानयन्ती मित्रत्वमप्यर्थवशाच्च शत्रून । नीतिर्निमत्यस्मृतपूर्ववृत्तं जन्मान्तरं जीवत एव पुंसः ॥ ३९९ ॥ सन्मन्त्रिणा वर्धयते नृपाणां लक्ष्मीमहीधर्मयशःसमूहः । दुर्मन्त्रिणा नाशयते तथैव लक्ष्मीमहीधर्मयशःसमूहः ॥ ४०० ॥ नियुक्तहस्तार्पितराज्यभारास्तिष्ठन्ति ये सौधविहारसाराः । बिडालवृन्दार्पितदुग्धपूराः स्वपन्ति ते मूढधियः क्षितीन्द्राः ॥४०१॥ यस्मिन्कुले यः पुरुषः प्रधानः स सर्वयत्नेन हि रक्षणीयः । तस्मिन्विनष्टेऽखिलसारभूते न नाभिभङ्गानरा वहन्ति ॥ ४०२ ॥ सुहृदामुपकारकारणाद्द्विषतामप्यपकारकारणात् । नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति केवलम् ॥ ४०३ ॥ नयनाद्धितथप्रमाथिनः समुपेक्षेत समुन्नतिं द्विषः । सुजयं खलुतागतान्तरे विपदन्ता ह्यनिवृत्तसंपदः ॥ ४०४ ॥ विषमोऽपि[1] विगाह्यते[2] नयः कृततीर्थः[3] पयसामिवाशयः । स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म[4] यः[5] ॥ ४०५ ॥ द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः[7] सुमर्षणः । न महानपि भूतिमिच्छता फलसंपत्प्रवणः[8] परिक्षयः ॥ ४०६ ॥ अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः । क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥ ४०७ ॥ अनुपालयतामुदेष्यतीं प्रभुशक्तिं द्विषतामनीहया[9] । अपयान्त्यचिरान्महीभुजां जननिर्वादभयादिव श्रियः ॥ ४०८ ॥ क्षययुक्तमपि स्वभावजं दधतं धाम[10] शिवं समृद्धये । प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥ ४०९ ॥ प्रभवः खलु कोशदण्डयोः[11] [12] कृतपञ्चाङ्गविनिर्णयो[13] नयः । स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥ ४१० ॥ अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः । विनिपातनिवर्तनक्षमं तममालम्बनमात्मपौरुषम् ॥ ४११ ॥ विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः । नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ ४१२ ॥ चञ्चलं वसु नितान्तमुन्नता मेदिनीमपि हरन्त्यरातयः । भूधरस्थिरमुपेयमागतं मावमंस्त सुहृदं महीपतिम् ॥ ४१३ ॥ आज्ञा कीर्तिः पालनं ब्राह्मणानां दानं भोगो मित्रसंरक्षणं च । येषामेते षड्गुणा न प्रवृत्ताः कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ४१४ ॥ स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते

---

१ दुर्बोधोऽपि; (पक्षे) दुःप्रवेशोऽपि २ विगृह्यते; (पक्षे) प्रविश्यते. ३. कृताभ्यासाद्युपायः सन्; (पक्षे) कृतजलावतारः सन् ४ देशकालाद्यविरुद्धम्. यथार्थमित्यर्थः; (पक्षे) गर्तग्राहपाषाणादिरहितम् ५ संधिविग्रहादिकार्यम्; ( पक्षे ) स्नानादिकम्. ६ यथा केचित्कृततीर्थे पयसि गम्भीरेऽपि प्रवेष्टारः सन्ति तीर्थंकरस्तु विरलस्तद्वन्नीतावपि निगूढमपि तत्त्वं सति वक्तरि बोद्धारः सन्ति वक्ता तु न सुलभ इत्यर्थः. ७ अत्यन्तदुरन्त. क्षयोन्मुख इत्यर्थः. ८ फलसिद्ध्युन्मुखः ९ अनुत्साहेन. १० क्षात्रं तेजः, (पक्षे) प्रकाशम्. ११ अर्थराशिः. १२ तुरगसैन्यम्. १३ "सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारः सिद्धिः पञ्चाङ्ग इष्यते" इति.

स किंप्रभुः। सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसंपदः ॥ ४१५ ॥ नराधिपा नीचजनानुवर्तिनो बुधोपदिष्टेन न यान्ति ये पथा। विशन्त्यतो दुर्गममार्गनिर्गमं समन्तसंबाधमनर्थपञ्जरम् ॥ ४१६ ॥ नृपोऽपकृष्टः सचिवात्तदर्पणस्तनंधयोऽत्यन्तशिशुः स्तनादेव। अदृष्टलोकव्यवहारमूढधीर्मुहूर्तमप्युत्सहते न वर्तितुम् ॥ ४१७ ॥ व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः। प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ॥ ४१८ ॥ क्रतौ विवाहे व्यसने रिपुक्षये यशस्करे कर्मणि मित्रसंग्रहे। प्रियासु नारीष्वधनेषु बन्धुषु धनव्ययस्तेषु न गण्यते बुधैः ॥ ४१९ ॥ परं विनीतत्वमुपैति सेवया महीपतीनां विनयो हि भूषणम्। प्रवृत्तदानो मृदु संचरत्करः करीव भद्रो विनयेन शोभते ॥ ४२० ॥ अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः। अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः ४२१ ॥ यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम्। अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिन यशः क्रियेत ॥ ४२२ ॥ आसन्नमेव नृपतिर्भजते मनुष्यं विद्याविहीनमकुलीनमसंगतं वा। प्रायेण भूमिपतयः प्रमदा लताश्च यः पार्श्वतो भवति तं परिवेष्टयन्ति ॥ ४२३ ॥ सत्यानृता च परुषा प्रियवादिनी च हिंस्रा दयालुरपि चार्थपरा वदान्या। नित्यव्यया प्रचुरनित्यधनागमा च वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ ४२४ ॥ सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः संभावनागुणमवेहि तमीश्वराणाम्। किं प्राभविष्यदरुणस्तमसां वधाय तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४२५ ॥ तातार्यमन्त्रिसुतसोदरपण्डितानां नित्यं भजन्ति विभजीकृतभव्यभोगान्। तस्मात्कदाचन रहस्यपि तद्विधानामाज्ञा विभज्य न दिशन्ति महीं महीशाः ॥ ४२६ ॥ ये बाहवो न युधि वैरिकठोरकण्ठपीठोच्छलद्रुधिरराजिविराजितांसाः। नापि प्रियापृथुपयोधरपत्रभङ्गसंक्रान्तकुङ्कुमरसाः खलु निष्फलास्ते ॥ ४२७ ॥ नरपतिहितकर्ता द्वेष्यतां याति लोके जनपदहितकर्ता त्यज्यते पार्थिवेन। इति महति विरोधे विद्यमाने समाने नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥ ४२८ ॥ नियतविषयवर्ती प्रायशो दण्डयोगाज्जगति परवशेऽस्मिन्दुर्लभः साधुवृत्तः। कृशमपि विकलं वा व्याधितं वाधनं वा पतिमिव कुलनारी दण्डभीत्याभ्युपैति ॥ ४२९ ॥ नृपः कामासक्तो गणयति न कार्यं न च हितं यथेच्छं स्वच्छन्दश्चरति किल मत्तो गज इव। ततो मानध्मातः पतति तु यदा शोकगहने तदा भृत्ये दोषान्क्षिपति न निजं वेत्त्यविनयम् ॥ ४३० ॥ अवज्ञानात्प्राज्ञो भवति मतिहीनः परिजनस्ततस्तत्प्रामाण्याद्भवति न समीपे बुधजनः। बुधैस्त्यक्ते राज्ये न हि भवति नीतिर्गुणवती विपन्नायां नीतौ सकलमवशं सी-

१ जातस्नेहेन. २ कर्कशा. ३ घातुका. ४ दानशौण्डा. ५ भृत्याः ६ राज्ञाम्. ७ सूर्यसारथिं. ८ सूर्य..

दति जगत् ॥ ४३१ ॥ अयुक्तं युक्तं वा यदभिहितमज्ञेन विभुना स्तुयादेतन्नित्यं जडमपि गुरुं तस्य विनुयात् । विवत्सुर्नैस्पृह्यं कथमपि सभायामभिनयेत्स्वकार्यं संतुष्टे क्षितिभृति रहस्येव कथयेत् ॥ ४३२ ॥ मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना मुहुः संपूर्णाङ्गी मुहुरति-कृशा कार्यवशतः । मुहुर्भ्रश्यद्बीजा मुहुरपि बहुप्रापितफलेत्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ॥ ४३३ ॥ इच्छेद्यस्तु सुखं निवस्तुमवनौ गच्छेत्स राज्ञः सभां कल्याणीं गिरमेव संसदि वदेत्कार्यं विदध्यात्कृती । अक्लेशाद्धनमर्जयेदधिपतेरावर्जयेद्वल्लभान्कुर्वीतो-पक्रीतिं जनस्य जनयेत्कस्यापि नापक्रियाम् ॥ ४३४ ॥ अज्ञो वा यदि वा विपर्ययगते ज्ञानेऽथ संदेहभृद्दृष्टादृष्टविरोधि कर्म कुरुते यस्तस्य गोप्ता गुरुः । निःसंदेहविपर्यये सति पुनर्ज्ञाने विरुद्धक्रियं राजा चेत्पुरुषं न शास्ति तदयं प्राप्तः प्रजाविप्लवः ॥ ४३५ ॥ सूचीमात्रविभेदसंभ्रमगुणः क्षोणीशवामभ्रुवामुत्तुङ्गस्तनमण्डलेषु लभते लीलारतिं कञ्चुकः । नाराचैर्निबिडैर्विभिन्नवपुषां पुंसां महायोधने स्वर्गस्त्रीकुचकुम्भसंभ्रमपरीरम्भः कथं दुर्लभः ॥ ४३६ ॥ एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा तं मोहाच्छ्रयते मदः स च मदालस्येन निर्भिद्यते । निर्भिन्नस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणान्तिकं द्रुह्यति ॥ ४३७ ॥ ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया । भर्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया भक्त्या कार्यधुरां वहन्ति कृतिनस्ते दुर्लभास्तादृशाः ॥ ४३८ ॥ दूरे रुद्धम-पेक्षते कथमपि प्राप्तं पुरो नेक्षते विज्ञप्तौ सुखमुन्नता तदपि नो वार्तां वदेच्चावरे । निर्यातीव तदीयदोषकथनं तद्द्विषामग्रतः स स्वामी यदि सेव्यते कुमतिभिः किं नः पिशाचीकृतम् ॥ ४३९ ॥ वृत्तिश्छेदविधौ द्विजातिमरणे मित्राय संप्रेषणे संप्राप्ते मरणे कलत्रहरणे स्वामिग्रहे गोग्रहे । प्राणत्राणपरायणैकमनसां येषां न शस्त्रग्रहस्तानालोक्य विलोकते च मनसा सूर्योऽपि सूर्यान्तरम् ॥ ४४० ॥ धर्मः प्रागेव चिन्त्यः सचिवगतिमती भावनीये सदैव ज्ञेया लोकानुवृत्तिर्वरचरनयनैर्मण्डलं वीक्षणीयम् । प्रच्छाद्यौ रागरोषौ मृदुपरुषयुतौ वर्जनीयौ च काले स्वात्मा यत्नेन रक्ष्यो रणशिरसि पुनः सोऽपि नापेक्षणीयः ॥ ४४१ ॥ कोऽहं कौ देशकालौ समविषमगुणाः केऽरयः के सहायाः का शक्तिः कोऽभ्युपायः फलमिह च कियत्कीदृशी दैवसंपत् । संपत्तौ को निबन्धः प्रविदितवचनस्योत्तरं किं नु मे स्यादित्येवं कार्यसिद्धाववहितमनसो हस्तगाः संपदः स्युः ॥ ४४२ ॥

## सामान्यनीतिः ।

अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते । स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति

१ उक्तम्. २ तद्गुरो स्तवन कुर्यात्. ३ निस्पृहताम्. ४ अभिनयपूर्वकं दर्शयेत्. ५ एकान्ते. ६ पृथिव्याम्. ७ मनोज्ञाम्. ८ सभायाम्. ९ प्रियान्. १० अपकारम्.

॥ १ ॥ प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः । किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥ २ ॥ सद्भिरेव सहासीत सद्भिः कुर्वीत संगतिम् । सद्भिर्विवादं मैत्रीं च नासद्भिः किंचिदाचरेत् ॥ ३ ॥ न द्विषन्ति न याचन्ते परनिन्दां न कुर्वते । अनाहूता न चायान्ति तेनाश्मानोऽपि देवताः ॥ ४ ॥ पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम् । मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥ ५ ॥ गतेऽपि वयसि ग्राह्या विद्या सर्वात्मना बुधैः । यद्यपि स्यान्न फलदा सुलभा सान्यजन्मनि ॥ ६ ॥ यस्य चाप्रियमन्विच्छेत्तस्य कुर्यात्सदा प्रियम् । व्याधा मृगवधं कर्तुं सम्यग्गायन्ति सुस्वरम् ॥ ७ ॥ प्रहरिष्यन्प्रियं ब्रूयात्प्रहृत्यापि प्रियोत्तरम् । अपि चास्य शिरश्छित्त्वा रुद्याच्छोचेत्तथापि च ॥ ८ ॥ सुमन्त्रिते सुविक्रान्ते सुकृते सुविचारिते । प्रारम्भे कृतबुद्धीनां सिद्धिरव्यभिचारिणी ॥ ९ ॥ नालसाः प्राप्नुवन्त्यर्थान्न शठा न च मायिनः । न च लोकरवाद्भीता न च संपत्प्रतीक्षिणः ॥१० ॥ नोदन्वानर्थितामेति सदाम्भोभिः प्रपूर्यते । आत्मानुपात्रतां नेयः पात्रमायान्ति संपदः ॥ ११ ॥ काकतालीययोगेन यदनात्मवती क्षयम् । करोति प्रणयं लक्ष्मीस्तदस्याः स्त्रीत्वचापलम् ॥ १२ ॥ यो यमर्थं प्रार्थयते यदर्थं घटतेऽपि च । अवश्यं तदवाप्नोति न चेच्छ्रान्तो निवर्तते ॥ १३ ॥ केचिदज्ञानतो नष्टाः केचिन्नष्टाः प्रमादतः । केचिज्ज्ञानावलेपेन केचिन्नष्टैस्तु नाशिताः ॥ १४ ॥ मित्रस्वजनबन्धूनां बुद्धेर्धैर्यस्य चात्मनः । आपन्निकषपाषाणे नरो जानाति सारताम् ॥ १५ ॥ दुःखैरपि निजैरेव प्रावृतं सर्वमुत्तमम् । वरं जीर्णाम्बरे वापि हृष्टे कर्पटमर्हति ॥ १६ ॥ चिन्तनीया हि विपदामादावेव प्रतिक्रियाः । न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ १७ ॥ वरं दारिद्र्यमन्यायप्रभवाद्विभवादिह । कृशताभिमता देहे पीनता न तु शोभते ॥ १८ ॥ अपरीक्ष्य न कर्तव्यं कर्तव्यं सुपरीक्षितम् । पश्चाद्भवति संतापो ब्राह्मणी नकुले यथा ॥ १९ ॥ स्त्री विनश्यति रूपेण ब्राह्मणो राजसेवया । गावो दूरप्रचारेण हिरण्यं लोभलिप्सया ॥ २० ॥ अतिदानाद्बलिर्बद्धो ह्यतिमानात्सुयोधनः । विनष्टो रावणो लौल्यादति सर्वत्र वर्जयेत् ॥ २१ ॥ धनमस्तीति वाणिज्यं किंचिदस्तीति कर्षणम् । सेवा न किंचिदस्तीति भिक्षा नैव च नैव च ॥ २२ ॥ स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः । हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥ २३ ॥ जानन्ति पशवो गन्धाद्वेदाज्जानन्ति पण्डिताः । चाराज्जानन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ २४ ॥ युक्तियुक्तं प्रगृह्णीयाद्बालादपि विचक्षणः । रवेरविषयं वस्तु किं न दीपः प्रकाशयेत् ॥ २५ ॥ वृथा वृष्टिः समुद्रेषु वृथा तृप्तस्य भोजनम् । वृथा दानं समर्थस्य वृथा दीपो दिवापि च ॥ २६ ॥ अजायुद्धमृषिश्राद्धं प्रभाते मेघडम्बरम् । दंपत्योः कलहश्चैव परिणामे न किंचन ॥ २७ ॥ अर्थनाशं मनस्तापं गृहे दुश्चरितानि च । वञ्चनं चापमानं

१ धृत्वेऽपि.

च मतिमान्न प्रकाशयेत् ॥ २८ ॥ अवृत्तिकं त्यजेद्देशं वृत्तिं सोपद्रवां त्यजेत् । याविनं मित्रं धनं प्राणहरं त्यजेत् ॥ २९ ॥ सौहृदेन परित्यक्तं निःस्नेहं खलवत्त्यजेत् । भ्रातरमपि किमुतान्यं पृथग्जनम् ॥ ३० ॥ यन्निमित्तं भवेच्छोको दुःखं वा त्रास एव च । आयासो वा यतः शूलस्तदेकाङ्गमपि त्यजेत् ॥ ३१ ॥ त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे ह्यात्मार्थे पृथिवीं त्यजेत् ॥ ३२ ॥ न गणस्याग्रतो गच्छे- त्सिद्धे कार्ये समं फलम् । यदि कार्यविपत्तिः स्यान्मुखरस्तत्र हन्यते ॥ ३३ ॥ धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः । पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥ ३४ ॥ चलत्येकेन पादेन तिष्ठत्येकेन पण्डितः । नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ ३५ ॥ अनायके न वस्तव्यं न वसेद्बहुनायके । स्त्रीनायके न वस्तव्यं न वसेद्बालनायके ॥ ३६ ॥ सर्वथा संत्यजेद्वादं न कंचिन्मर्मणि स्पृशेत् । सर्वान्परित्यजेदर्थान्स्वाध्यायस्य विरोधतः ॥ ३७ ॥ अनभिज्ञा परस्वेषु सर्वसत्त्वेषु सौहृदम् । कर्मणां फलमस्तीति मनसा त्रितयं चरेत् ॥ ३८ ॥ प्राणातिपातः स्तैन्यं च परदाराभिमर्शनम् । त्रीणि पापानि कायेन नित्यशः परिवर्जयेत् ॥ ३९ ॥ न कश्चिदपि जानाति किं कस्य श्वो भविष्यति । अतः श्वः करणीयानि कुर्यादद्यैव बुद्धिमान् ॥ ४० ॥ अनेन मर्त्यदेहेन यल्लोकद्वयशर्मदम् । विचिन्त्य तदनुष्ठेयं कर्म हेयं ततोऽन्यथा ॥ ४१ ॥ उपकारः परो धर्मः परार्थं कर्म नैपुणम् । पात्रे दानं परः कामः परो मोक्षो वितृष्णता ॥ ४२ ॥ अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु संचयम् । अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ ४३ ॥ परदारा न गन्तव्याः सर्व- वर्णेषु कर्हिचित् । न हीदृशमनायुष्यं त्रिषु लोकेषु विद्यते ॥ ४४ ॥ मात्रा स्वस्रा दुहित्रा वा नैकशय्यासनो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ ४५ ॥ परदारपर- द्रव्यपरद्रोहपराङ्मुखः । गङ्गा ब्रूते कदागत्य मामयं पावयिष्यति ॥ ४६ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुस्तत्संसर्गी च पञ्चमः ॥ ४७ ॥ स्त्रीबालस्वामिमित्रघ्नो गोघ्नो विश्वासघातकः । सुरापो ब्रह्महा चोरो यान्त्येते सर्वनारकान् ॥ ४८ ॥ अकृतज्ञमकार्यं च दीर्घरोषमनार्जवम् । चतुर्विधा हि चाण्डाला जन्मना सह पञ्चमः ॥ ४९ ॥ कूटसाक्षी मृषावादी यश्चासदनुशास्ति वै । ते मोहमृत्यवः सर्वे तथा ये वेदनिन्दकाः ॥ ५० ॥ घटं भिन्द्यात्पटं छिन्द्यात्कुर्याद्रासभरोहणम् । येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत् ॥ ५१ ॥ न हीदृशं संवलनं त्रिषु लोकेषु विद्यते । दया मैत्री च भूते[illegible] मधुरा च वाक् ॥ ५२ ॥ विवादो धनसंबन्धो याचनं स्त्रीषु संगतिः । आदानमग्रतः [illegible]भङ्गस्य हेतवः ॥ ५३ ॥ दर्शितानि कलत्राणि गृहे भुक्तमशङ्कितम् । कथितानि रहस्[illegible] कृत्स्नं सौहृदं किमतःपरम् ॥५४॥ दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते । भिन्नश्लिष्टा तु या प्रीतिः सा दुःखैकप्रदायिनी ॥५५॥ ययोरेव समं वित्तं ययोरेव

समं कुलम् । तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥५६॥ दाने तपसि शौर्ये च यस्य न प्रथितं यशः । विद्यायामर्थलाभे वा तस्य जन्म निरर्थकम् ॥ ५७ ॥ उत्तमा आत्मना ख्याताः पितुः ख्याताश्च मध्यमाः । अधमा मातुलात्ख्याताः श्वशुराच्चाधमाधमाः ॥ ५८ ॥ ऋणशेषश्चाग्निशेषः शत्रुशेषस्तथैव च । पुनः पुनः प्रवर्तन्ते तस्माच्छेषं न रक्षयेत् ॥५९॥ कुभोज्येन दिनं नष्टं कुकलत्रेण शर्वरी । कुपुत्रेण कुलं नष्टं तन्नष्टं यन्न दीयते ॥ ६० ॥ बर्बरश्च तपस्वी स्याच्छूरश्चाप्यकृतव्रणः । मद्यपा स्त्री सती राजन्निति न श्रद्दधामहे ॥६१॥ नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः । नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥ ६२ ॥ सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः । तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ ६३ ॥ व्रजत्यधः प्रयात्युच्चैर्नरः स्वैरेव चेष्टितैः । अधः कूपस्य खनक ऊर्ध्वं प्रासादकारकः ॥ ६४ ॥ कुर्यान्न परदारेच्छां विश्वासं स्त्रीषु वर्जयेत् । हतो दशास्यः सीतार्थी हतः पत्न्या विदूरथः ॥ ६५ ॥ न मद्यव्यसने क्षीबः कुर्याद्वेतालविप्लवम् । वृष्णयो हि ययुः क्षीबास्तृणैः प्रहरणैः क्षयम् ॥ ६६ ॥ दानं सत्त्वाश्रितं कुर्यान्न पश्चात्तापवान्भवेत् । बलिनात्मार्पितो बन्धे दानशेषस्य शुद्धये ॥६७॥ न स्त्रीजितः प्रमूढः स्याद्गाढरागवशीकृतः । पुत्रशोकाद्दशरथो जीवं जायाजितोऽत्यजत् ॥ ६८ ॥ क्षिपेद्वाक्यशरान्घोरान्न पारुष्यविषप्लुतान् । वाक्पारुष्यरुषा चक्रे भीमः कुरुकुलक्षयम् ॥ ६९ ॥ परेषां क्लेशदं कुर्यान्न पैशुन्यं प्रभुप्रियम् । पैशुन्येन गतौ राहोश्चन्द्रार्कौ भक्षणीयताम् ॥ ७० ॥ कुर्यान्नीचजनाभ्यस्तां न याच्ञां मानहारिणीम् । बलिप्रार्थनया प्राप लघुतां पुरुषोत्तमः ॥ ७१ ॥ वक्रैः क्रूरतरैर्लुब्धैर्न कुर्यात्प्रीतिसंगतिम् । वसिष्ठस्याहरद्धेनुं विश्वामित्रो निमन्त्रितः ॥ ७२ ॥ तीव्रे तपसि लीनानामिन्द्रियाणां न विश्वसेत् । विश्वामित्रोऽपि सोत्कण्ठं कण्ठे जग्राह मेनकाम् ॥ ७३ ॥ भक्तं रक्तं सदासक्तं निर्दोषं न परित्यजेत् । रामस्त्यक्त्वा सतीं सीतां शोकशल्याकुलोऽभवत् ॥ ७४ ॥ वर्जयेदिन्द्रियजयैर्निर्जने जननीमपि । पुत्रीकृतोऽपि प्रद्युम्नः कामितः शम्बरस्त्रिया ॥ ७५ ॥ प्रभुप्रसादे विश्वासं न कुर्यात्स्वप्नसंनिभे । नन्देन मन्त्री निक्षिप्तः शकटारोपि बन्धने ॥ ७६ ॥ अप्युन्नतपदारूढः पूज्यान्नैवापमानयेत् । नहुषः शक्रतां प्राप्य च्युतोऽगस्त्यावमाननात् ॥ ७७ ॥ हितोपदेशं शृणुयात्कुर्वीत च यथोदितम् । विदुरोक्तमकृत्वाभूत्कौरवः शोकशल्यभाक्[1] ॥ ७८ ॥ न पुत्रायत्तमैश्वर्यं कुर्यादार्यः कथंचन । पुत्रार्पितप्रभुत्वोऽभूद्धृतराष्ट्रस्तृणोपमः ॥ ७९ ॥ श्रुतिस्मृत्युक्तमाचारं न त्यजेत्साधुसेवितम् । दैत्यानां श्रीवियोगोऽभूत्सत्यधर्मक्रियामुचाम् ॥ ८० ॥ नदीनां नखिनां चैव शृङ्गिणां शस्त्रपाणिनाम् । विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ॥ ८१ ॥ न कुर्यादभिचारोग्रवश्यादिकुहकक्रियाम् । लक्ष्मणेनेन्द्रजित्कृत्याभि-

---

१ भत्त.

चारसमये हतः ॥ ८२ ॥ व्याकुलोऽपि विपत्पातैः स्मरेद्विष्णुं सदा हृदि। शरतल्पगतो भीष्मः सस्मार गरुडध्वजम् ॥ ८३ ॥ चिन्ता जरा मनुष्याणामनध्वा वाजिनां जरा। असंभोगो जरा स्त्रीणां वस्त्राणामातपो जरा ॥ ८४ ॥ प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः। तस्मात्तदेव वक्तव्यं वचने का दरिद्रता ॥ ८५ ॥ पञ्चभिः सह गन्तव्यं स्थातव्यं पञ्चभिः सह। पञ्चभिः सह वक्तव्यं न दुःखं पञ्चभिः सह ॥ ८६ ॥ यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्। अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ ८७ ॥ विद्याभ्यासो विचारश्च समयोरेव शोभते। विवाहश्च विवादश्च समयोरेव शोभते ॥ ८८ ॥ लक्ष्मीर्वसति जिह्वाग्रे जिह्वाग्रे मित्रबान्धवाः। जिह्वाग्रे बन्धनं प्राप्तं जिह्वाग्रे मरणं ध्रुवम् ॥ ८९ ॥ यस्मिन्देशे न संमानो न प्रीतिर्न च बान्धवाः। न च विद्यागमः कश्चिन्न तत्र दिवसं वसेत् ॥ ९० ॥ वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः। अथैवमागते काले भिन्द्याद्घटमिवाश्मनि ॥ ९१ ॥ सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः। अर्धेन कुरुते कार्यं सर्वनाशो न जायते ॥ ९२ ॥ मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च। द्विषतां संप्रयोगेण पण्डितोऽप्यवसीदति ॥ ९३ ॥ मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च। चतुर्णामपि चैतेषां निष्कृतिर्नैव विश्रुता ॥ ९४ ॥ गतश्रीर्गणकान्द्वेष्टि गतायुश्च चिकित्सकान्। गतश्रीश्च गतायुश्च ब्राह्मणान्द्वेष्टि भारत ॥ ९५ ॥ आत्मबुद्धिः सुखायैव गुरुबुद्धिर्विशेषतः। परबुद्धिर्विनाशाय स्त्रीबुद्धिः प्रलयावहा ॥ ९६ ॥ विस्मयः सर्वथा हेयः प्रत्यूहः सर्वकर्मणाम्। तस्माद्विस्मयमुत्सृज्य साध्यसिद्धिर्विधीयताम् ॥ ९७ ॥ विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम्। नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ ९८ ॥ लुब्धमर्थेन गृह्णीयात्क्रुद्धमञ्जलिकर्मणा। मूर्खं छन्दानुवृत्त्या च तत्त्वार्थेन च पाण्डितम् ॥ ९९ ॥ जानीयात्संगरे भृत्यान्बान्धवान्व्यसनागमे। आपत्कालेषु मित्राणि भार्यां च विभवक्षये ॥ १०० ॥ खरं श्वानं गजं मत्तं रण्डां च बहुभाषिणीम्। राजपुत्रं कुमित्रं च दूरतः परिवर्जयेत् ॥ १०१ ॥ दूरस्थं जलमध्यस्थं धावन्तं धनगर्वितम्। क्रोधवन्तं मदोन्मत्तं नमस्कारोऽपि वर्जयेत् ॥ १०२ ॥ पिपीलिकार्जितं धान्यं मक्षिकासंचितं मधु। लुब्धेन संचितं द्रव्यं समूलं च विनश्यति ॥ १०३ ॥ न सारणीया धीरेण रसना नीरसे जने। को नाम कुरुते फेरौ नायकः सायकक्षतिम् ॥ १०४ ॥ धातुवादेषु वित्ताशा मोक्षाशा कौलिके मते। जामातरि च पुत्राशा त्रयमेतन्निरर्थकम् ॥ १०५ ॥ द्वाविमौ पुरुषौ लोके सुखिनौ न कदाचन। यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ १०६ ॥ द्वाविमौ पुरुषौ लोके परप्रत्ययकारकौ। स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥ १०७ ॥ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ १०८ ॥ द्वाविमौ

---

१ न्यायमार्गानुसारिणः. २ तिर्यग्जातीया.. पशव इत्यर्थ. ३ त्याज्यः. ४ विघ्नरूपः. ५ क्रोष्टरि.

पुरुषौ लोके स्वर्गस्योपरि तिष्ठतः । प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ १०९ ॥ द्वाविमौ पुरुषौ लोके न भूतौ न भविष्यतः । प्रार्थितं यश्च कुरुते यश्च नार्थयते परम् ॥ ११० ॥ द्वाविमौ पुरुषौ लोके शिरःशूलकरावुभौ । गृहस्थश्च निरारम्भो यतिश्च सपरिग्रहः ॥ १११ ॥ शत्रुर्दहति संयोगे वियोगे मित्रमप्यहो । उभयोर्दुःखदायित्वं को भेदः शत्रुमित्रयोः ॥ ११२ ॥ दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः । ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ ११३ ॥ ददतो युध्यमानस्य पठतः पुलको न चेत् । आत्मनश्च परेषां च धिक्त्यागं पौरुषं श्रुतम् ॥ ११४ ॥ न तद्भुक्तं न तत्पीतं न तत्सुप्तं न तद्गतम् । यन्मांसमाहिपक्षीरललनावाजिवर्जितम् ॥ ११५ ॥ निःसारस्य पदार्थस्य प्रायेणाडम्बरो महान् । न सुवर्णे ध्वनिस्तादृग्यादृक्कांस्ये प्रजायते ॥ ११६ ॥ मासि मासि समा ज्योत्स्ना पक्षयोरुभयोरपि । तत्रैकः शुक्लपक्षोऽभूद्यशः पुण्यैरवाप्यते ॥ ११७ ॥ मत्स्यादयोऽपि जानन्ति नीरक्षीरविवेचनम् । प्रसिद्धिरेव हंसस्य यशः पुण्यैरवाप्यते ॥ ११८ ॥ पञ्चभिः कामिता कुन्ती तद्वधूरथ पञ्चभिः । सतीं वदति लोकोऽयं यशः पुण्यैरवाप्यते॥११९॥सौभाग्यं विरलस्य स्यात्समकर्णगुणेष्वपि । षड्विंशदायुधा पृथ्वी खड्गायत्तेव दृश्यते ॥ १२० ॥ हस्तादपि न दातव्यं गृहादपि न दीयते । परोपकरणार्थाय वचने किं दरिद्रता ॥ १२१ ॥ वनानि दहतो वह्नेः सखा भवति मारुतः । स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ १२२ ॥ भोज्यं भोजनशक्तिश्च रतिशक्तिर्वरस्त्रियः । विभवो दानशक्तिश्च नाल्पस्य तपसः फलम् ॥ १२३ ॥ जानन्ति हि गुणान्वक्तुं तद्विधा एव तादृशम् । वेत्ति विश्वंभरा भारं गिरीणा गरिमाश्रयम् ॥ १२४ ॥ जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः । दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥ १२५ ॥ अत्यासन्ना विनाशाय दूरतश्च फलप्रदाः । मध्यभावेन सेव्यन्ते राजा वह्निर्गुरुः स्त्रियः ॥ १२६ ॥ अमृतं दुर्लभं नृणां देवानामुदकं तथा । पितॄणां दुर्लभः पुत्रस्तक्रं शक्रस्य दुर्लभम् ॥ १२७ ॥ शनैः पन्था शनैः कन्था शनैः पर्वतमस्तके । शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः ॥ १२८॥ अन्वयागतविद्यानामन्वयागतसंपदाम् । विदुषां च प्रभूणां च हृदयं नावलिप्यते ॥ १२९ ॥ मक्षिका मशको वेश्या मूषिको याचकस्तथा । ग्रामणीर्गणकश्चैव सप्तैते परभक्षकाः ॥ १३० ॥ अकृतोपद्रवः कश्चिन्महानपि न पूज्यते । अर्चयन्ति नरा नागं न तार्क्ष्यं न गजादिकम् ॥ १३१ ॥ शोभन्ते विद्यया विप्राः क्षत्रिया विजयश्रिया । श्रियोऽनुकूलदानेन लज्जया च कुलाङ्गनाः ॥ १३२ ॥ ब्राह्मणा गणका वेश्याः सारमेयाश्च कुक्कुटाः । दृष्ट्वान्येषु कुप्यन्ति न जाने तस्य कारणम् ॥ १३३ ॥

१ स्त्री. २ अश्व ३ मित्रभाव' ४ पञ्चसु वाक्येषु अतिवाह्यते सिध्यति आरोहति प्राप्यते वर्धते इति पञ्चक्रियाध्याहार ५ मार्गातिवाहनादीनि ६ एतानि त्वरया न भवन्तीत्यर्थ. ७ वृशपरपरागतविद्यानाम् ८ सगर्व न भवति. ९ कुलस्त्रिय. १० श्वान .

पुत्रपौत्रवधूभृत्यैः संपूर्णमपि सर्वदा । भार्याहीनगृहस्थस्य शून्यमेव गृहं मतम् ॥ १३४ ॥ एकं दृष्ट्वा शतं दृष्ट्वा दृष्ट्वा पञ्चशतान्यपि । अतिलोभो न कर्तव्यश्चक्रं भ्रमति मस्तके ॥ १३५ ॥ अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा । तदिदं देहि देहीति विपरीतमुपस्थितम् ॥ १३६ ॥ नवे वयसि यः शान्तः स शान्त इति मे मतिः । धातुषु क्षीयमाणेषु शान्तिः कस्य न जायते ॥ १३७ ॥ धिग्गृहं गृहिणीशून्यं धिक्कलत्रमपुत्रकम् । धिक्पुत्रमविनीतं च धिग्ज्योतिषमजातकम् ॥ १३८ ॥ अश्वं नैव गजं नैव व्याघ्रं नैव च नैव च । अजापुत्रं बलिं दद्याद्देवो दुर्बलघातकः ॥ १३९ ॥ दुर्मन्त्री राज्यनाशाय ग्रामनाशाय कुञ्जरः[१] । श्यालको गृहनाशाय सर्वनाशाय मातुलः ॥ १४० ॥ जले तैलं खले गुह्यं पात्रे दानं मनागपि[२] । प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः[३] ॥ १४१ ॥ उद्योगः कलहः कण्डूर्द्यूतं मद्यं परस्त्रियः । आहारो मैथुनं निद्रा सेवनात्तु विवर्धते ॥ १४२ ॥ कृतार्थः स्वामिनं द्वेष्टि कृतदारस्तु[४] मातरम् । जातापत्या पतिं द्वेष्टि गतरोगश्चिकित्सकम्[५] ॥ १४३ ॥ चक्षुःपूतं[६] न्यसेत्पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतां वदेद्वाणीं मनःपूतं समाचरेत् ॥ १४४ ॥ नास्ति यज्ञः स्त्रियः किंचिन्न व्रतं नोपवासकम् । या तु भर्तरि शुश्रूषा तया स्वर्गं जयत्यसौ ॥ १४५ ॥ शुचिर्भूमिगतं तोयं शुचिर्नारी पतिव्रता । शुचिः क्षेमकरो राजा संतोषी ब्राह्मणः शुचिः ॥ १४६ ॥ नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने । वत्सोऽपि स्तनपाने स्याच्छ्वा मृगग्रहणे शुचिः ॥ १४७ ॥ भर्ता देवो गुरुर्भर्ता धर्मतीर्थव्रतानि च । तस्मात्सर्वं परित्यज्य पतिमेकं भजेत्सती ॥ १४८ ॥ असारे खलु संसारे सारमेतच्चतुष्टयम् । काश्यां वासः सतां सङ्गो गङ्गाम्भः शंभुसेवनम् ॥ १४९ ॥ उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् । विरक्तस्य तृणं भार्या निःस्पृहस्य तृणं जगत् ॥ १५० ॥ क्षान्तितुल्यं[७] तपो नास्ति न तोषात्परमं सुखम् । नास्ति तृष्णापरो व्याधिर्न च धर्मो दयापरः ॥ १५१ ॥ सप्तैतानि न पूर्यन्ते पूर्यमाणान्यनेकशः । ब्राह्मणोऽग्निर्यमो राजा पयोधिरुदरं गृहम् ॥ १५२ ॥ कल्पान्तवाससंक्षोभलङ्घिताशेषभूभृतः । स्थैर्यप्रसादमर्यादास्ता एव हि महोदधेः ॥ १५३ ॥ संपत्सरस्वती सत्यं संतानं सदनुग्रहः । सत्ता सुकृतसंभारः सकाराः सप्त दुर्लभाः ॥ १५४ ॥ अभ्रच्छाया खलप्रीतिर्नवसस्यानि योषितः । किंचित्कालोपभोग्यानि यौवनानि धनानि च ॥ १५५ ॥ परोऽपि हितवान्बन्धुर्बन्धुरप्यहितः परः । अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ १५६ ॥ जलबिन्दुनिपातेन क्रमशः पूर्यते घटः । स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥ १५७ ॥ सौवर्णानि सरोजानि निर्मातुं सन्ति शिल्पिनः । तत्र सौरभनिर्माणे चतुरश्चतुराननः ॥ १५८ ॥ साक्षरं पुरुषं दृष्ट्वा यो नरो नाभिमन्यते । बलीवर्दसमो लोके खुरशृङ्गविवर्जितः ॥ १५९ ॥ को न याति वशं लोके मुखे पिण्डेन

१ गज॰. २ स्वल्पमपि. ३ वस्तुमाहात्म्येन ४ कृता दाराः स्त्री येन सः ५ वैद्यम् ६ पवित्रम्. ७ क्षमा.

पूरितः । मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ १६० ॥ लुब्धानां याचकः शत्रुश्चोराणां चन्द्रमा रिपुः । जारस्त्रीणां पतिः शत्रुर्मूर्खाणां बोधको रिपुः ॥ १६१ ॥ अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम् । अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ॥ १६२ ॥ परोपदेशवेलायां शिष्टाः सर्वे भवन्ति वै । विस्मरन्तीह शिष्टत्वं स्वकार्ये समुपस्थिते ॥ १६३ ॥ गुणिनां निर्गुणानां च दृश्यते महदन्तरम् । हारः कण्ठगतः स्त्रीणां नूपुराणि च पादयोः ॥ १६४ ॥ अलभ्यं लब्धुकामस्य जनस्य गतिरीदृशी । अलभ्येषु मनस्तापः संचितार्थो विनश्यति ॥ १६५ ॥ शत्रुवाक्यामृतं श्रुत्वा तेन सौहार्दमार्जवम् । न हि धीरेण कर्तव्यमात्मनः शुभमिच्छता ॥ १६६ ॥ शूरश्च कृतविद्यश्च रूपवत्यश्च योषितः । यत्र यत्र गमिष्यन्ति तत्र तत्र कृतादराः ॥ १६७ ॥ चत्वारो धनदायादा धर्माग्निनृपतस्कराः । तेषां ज्येष्ठावमानेन त्रयः कुप्यन्ति बान्धवाः ॥ १६८ ॥ शीलभारवती कान्ता पुष्पभारवती लता । अर्थभारवती वाणी भजते कामपि श्रियम् ॥ १६९ ॥ पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया । शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥ १७० ॥ उपभोक्तुं न जानाति श्रियं प्राप्यापि मानवः । आकण्ठजलमग्नोऽपि श्वा लिहत्येव जिह्वया ॥ १७१ ॥ आर्ता देवान्नमस्यन्ति तपः कुर्वन्ति रोगिणः । निर्धना दानमिच्छन्ति वृद्धा नारी पतिव्रता ॥ १७२ ॥ जामाता जठरं जाया जातवेदा जलाशयः । पूरिता नैव पूर्यन्ते जकाराः पञ्च दुर्भराः ॥ १७३ ॥ जननी जन्मभूमिश्च जाह्नवी च जनार्दनः । जनकः पञ्चमश्चैव जकाराः पञ्च दुर्लभाः ॥ १७४ ॥ सा श्रीर्या न मदं कुर्यात्स सुखी तृष्णयोज्झितः । तन्मित्रं यस्य विश्वासः पुरुषः स जितेन्द्रियः ॥ १७५ ॥ सुलभं वस्तु सर्वस्य न यात्यादरणीयताम् । स्वदारपरिहारेण परदारार्थिनो जनाः ॥ १७६ ॥ एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम् । गतानुगतिको लोको न लोकः पारमार्थिकः ॥ १७७ ॥ क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणे क्षणे । अव्यवस्थितचित्तस्य प्रसादोऽपि भयंकरः ॥ १७८ ॥ गुरुपत्न्यां निशाधीशो ब्राह्मण्यां पाकशासनः । गतः पञ्चेपुलक्ष्यत्वं का कथान्यस्य देहिनः ॥ १७९ ॥ यस्मिन्रुष्टे भयं नास्ति तुष्टे चैव धनागमः । निग्रहानुग्रहौ न स्तः स रुष्टः किं करिष्यति ॥ १८० ॥ आलस्योपहता विद्या परहस्तंगताः स्त्रियः । अल्पबीजं हतं क्षेत्रं हतं सैन्यमनायकम् ॥ १८१ ॥ निर्विषेणापि सर्पेण कर्तव्या महती फणा । विषमस्तु न चाप्यस्तु फटाटोपो भयंकरः ॥ १८२ ॥ एक एव पदार्थस्तु त्रिधा भवति वीक्षितः । कुणपं कामिनी मांसं योगिभिः कामिभिः श्वभिः ॥ १८३ ॥ नारी परमुखद्रष्ट्री कविरव्यवहारवित् । अपथ्यसेवी रोगी च कियद्भिर्नोपहस्यते ॥ १८४ ॥ अन्यदा भूषणं पुंसां क्षमा लज्जेव योषिताम् । पराक्रमः परिभवे वैयात्यं सुरतेष्विव

१. एतावत्र २ अनित्याम्. ३ शोभाम् ४ प्रवहणम्. ५ उपायः ६. निन्दम्. ७ भवम्

॥ १८५ ॥ सांसारिकसुखासक्तं ब्रह्मज्ञोऽस्मीति वादिनम् । कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं
यथा ॥ १८६ ॥ शैले शैले न माणिक्यं मौक्तिकं न गजे गजे । साधवो नहि सर्वे
चन्दनं न वने वने ॥ १८७ ॥ प्रीतिर्लक्ष्मीर्व्ययः क्लेशः सा किं सा कि स किं स किम् ।
या लोभाद्या परद्रोहात्परार्थे यः परार्थकृत् ॥ १८८ ॥ मनो मधुकरो मेघो मानिनी मदनो
मरुत् । मा मदो मर्कटो मत्स्यो मकारा दश चञ्चलाः ॥ १८९ ॥ सुवर्णपुष्पितां पृथ्वीं
चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ १९० ॥ यावज्जीवं
सुखं जीवेदृणं कृत्वा घृतं पिबेत् । भस्मीभूतस्य जीवस्य पुनरागमनं कुतः ॥ १९१ ॥
असार एष संसारः सारं सारङ्गलोचनाः । तदर्थं धनमिच्छन्ति न त्यागेन धनेन
किम् ॥ १९२ ॥ सत्यानुसारिणी लक्ष्मीः कीर्तिस्त्यागानुसारिणी । अभ्याससारिणी
विद्या बुद्धिः कर्मानुसारिणी ॥ १९३ ॥ उपाध्यायश्च वैद्यश्च ऋतुकाले वरस्त्रियः ।
सूतिका दूतिका नौका कार्यान्ते ते च शष्पवत् ॥ १९४ ॥ विशाखान्ता गता मेघाः
प्रसूतान्तं च यौवनम् । प्रणामान्तः सतां कोपो याचनान्तं हि गौरवम् ॥ १९५ ॥
कृतान्तपाशबद्धानां दैवोपहतचेतसाम् । बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥१९६॥
सदयं हृदयं यस्य भाषितं सत्यभूषितम् । कायः परहितो यस्य कलिस्तस्य करोति किम्
॥ १९७ ॥ अपत्यदर्शनस्यार्थे दारानपि च या त्यजेत् । त्यजन्ति तामपि क्रूरा मातरं दार-
हेतवे ॥ १९८ ॥ पुत्रसूः पाककुशला पवित्रा च पतिव्रता । पद्माक्षी पञ्चभिर्नारी भुवि संयाति
गौरवम् ॥ १९९ ॥ दातुरुन्नतचित्तस्य गुणयुक्तस्य चार्थिनः । दुर्लभः खलु संयोगः सद्बीज-
क्षेत्रयोरिव ॥ २०० ॥ आज्ञामात्रफलं राज्यं ब्रह्मचर्यफलं तपः । परिज्ञानफलं विद्या
दत्तभुक्तफलं धनम् ॥ २०१ ॥ आयुर्वित्तं गृहच्छिद्रं मन्त्रमौषधमैथुने । दानं मानापमानौ च
नव गोप्यानि कारयेत् ॥तृणं ॥ अग्नौ दग्धं जले मग्नं हृतं तस्करपार्थिवैः । तत्सर्वं दान-
नास्ति न दि क्लैव्यं न भार्या ॥ २०३ ॥ पात्रे त्यागी गुणे रागी भोगी परिजनैः सह ।
सप्तैतानि न रणे योद्धा पुरुषः पञ्चलक्षणः ॥ २०४ ॥ संभ्रमः स्नेहमाख्याति वपुराख्याति
॥ १९२ ॥ नयो वंशमाख्याति देशमाख्याति भाषितम् ॥ २०५ ॥ किं विद्यया किं
दधेः ॥ १९ ॥ श्रुतेन च । किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ २०६ ॥
दुर्लभाः ॥ १५४ ॥ श्च बुद्धेः परं गतः । तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥२०७॥
यौवनानि धनानि च ॥ त्कृपणं त्यजेत् । कृपणादविशेषज्ञं तस्माच्च कृशशासनम् ॥२०८॥
जो व्याधिर्हितमारण्यमौषधम् गयोरिव । तृणात्संजायते क्षीरं क्षीरात्संजायते विषम् ॥२०९॥
सर्वविद्यानां धर्मस्य च धनस्य च ॥ नैः । शनैरध्वसु वर्तेत योजनान्न परं व्रजेत् ॥ २१० ॥
तत्र सौरभनिर्माणे चतुरश्चतुराननः ॥ गलिका । अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति
बलीवर्दसमो लोके खुरशृङ्गविवर्जितः ॥ पृच सक्तिना । स्त्रियस्तन्द्री च निद्रा च विद्या-

१ गजः. २ स्वल्पमपि. ३ वस्तुमाहात्म्येन ४

विघ्नकराणि षट् ॥ २१२ ॥ अतिथिर्बालकश्चैव जननी जनकस्तथा। पञ्चैते गृहिणः पोष्या
न्तरे च स्वशक्तितः ॥ २१३ ॥ गाढं गुणवतीं विद्या न मुदे विनयं विना । मूर्खतापि
ऽधे भूयान्महत्तु विनयान्विता ॥ २१४ ॥ अहो साहजिकं प्रेम दूरादपि विराजते ।
चकोरनयनद्वन्द्वमाह्लादयति चन्द्रमाः ॥ २१५ ॥ साक्षरा विपरीताश्चेद्राक्षसा एव
केवलम् । सरसो विपरीतश्चेत्सरसत्वं न मुञ्चति ॥ २१६ ॥ यदीच्छसि वशीकर्तुं जगदे-
केन कर्मणा । परापवादसस्येभ्यो गां चरन्तीं निवारय ॥ २१७ ॥ एकस्तपो द्विरध्यायी
त्रिभिर्गीतं चतुः पथम् । सप्त पञ्च कृषीणां च सङ्ग्रामो बहुभिर्जनैः ॥ २१८ ॥ काकः
पक्षिषु चाण्डालः स्मृतः सर्वेषु निन्दकः । नराणां को?ऽपि चाण्डालः स्मृतः सर्वेषु निन्दकः
॥ २१९ ॥ दातृत्वं प्रियवक्तृत्वं धीरत्वमुचितज्ञता । अभ्यासेन न लभ्येयुश्चत्वारः सहजा
गुणाः ॥ २२० ॥ लोभमूलानि पापानि रसमूलानि व्याधयः । इष्टमूलानि शोकानि त्रीणि
त्यक्त्वा सुखी भव ॥ २२१ ॥ प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः । त्रैलोक्ये
दीपको धर्मः सुपुत्रः कुलदीपकः ॥ २२२ ॥ सुखार्थी त्यजते विद्यां विद्यार्थी त्यजते
सुखम् । सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥ २२३ ॥ अन्नं दानात्परं दानं
विद्यादानमतः परम् । अन्नेन क्षणिका तृप्तिर्यावज्जीवं च विद्यया ॥ २२४ ॥ दूरस्थाः
पर्वता रम्या वेश्या च मुखमण्डने । युद्धस्य वार्ता रम्या च त्रीणि रम्याणि दूरतः ॥ २२५ ॥
माता यदि विषं दद्याद्विक्रीणाति पिता सुतम् । राजा हरति सर्वस्वं तत्र का परिदेवना
॥ २२६ ॥ अहेरिव गुणाद्भीतः परान्नाच्च विषादिव । राक्षसीभ्य इव स्त्रीभ्यः स विद्या-
मधिगच्छति ॥ २२७ ॥ अवज्ञात्रुटितं प्रेम नवीकर्तुं क ईश्वरः । संधिं न याति स्फुटितं
लाक्षालेपेन मौक्तिकम् ॥ २२८ ॥ संनिकर्षोऽत्र मर्त्यानामनादरणकारणम् । गाङ्गं हित्वा
यथान्याम्भस्तत्रत्यो याति शुद्धये ॥ २२९ ॥ लेखनी पुस्तकं रामा परहस्ते गता गता ।
कदाचित्पुनरायाता भ्रष्टा मुष्टा च चुम्बिता ॥ २३० ॥ पूर्वदत्तेषु या विद्या न?ऽदत्तेषु
यद्धनम् । पूर्वदत्तेषु या भार्या अग्रे धावति धावति ॥ २३१ ॥ क्षमातुल्यं तपो नास्ति
संतोषान्न परं सुखम् । न दयासदृशं ज्ञानं नास्ति प्राणसमं भयम् ॥ २३२ ॥ श्रुत्वा धर्मं
विजानाति श्रुत्वा त्यजति दुर्मतिम् । श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षं च विन्दति ॥ २३३ ॥
मनो धावति सर्वत्र मदोन्मत्तगजेन्द्रवत् । ज्ञानाङ्कुशसमा बुद्धिस्तस्य निश्चलते मनः ॥ २३४ ॥
इच्छेच्चेद्विपुलां मैत्रीं त्रीणि तत्र न कारयेत् । वाग्वादमर्थसम्बन्धं तत्पत्नीपरिभाषणम्
॥ २३५ ॥ अयुक्तं स्वामिनो युक्तं युक्तं नीचस्य दूषणम् । अमृतं राहवे मृत्युर्विषं रुद्रस्य
भूषणम् ॥ २३६ ॥ पण्डिते चैव मूर्खे च बलवत्यपि दुर्जने । ईश्वरे च दरिद्रे च मृत्योः
सर्वत्र तुल्यता ॥ २३७ ॥ सङ्ग्रामे सुभटेन्द्राणां कवीनां कविमण्डले । दीप्तिर्वा दीप्तिहा-
निर्वा मुहूर्तादेव जायते ॥ २३८ ॥ विषस्य विषयाणां हि दृश्यते महदन्तरम् । उपभुक्तं

विषं हन्ति विषयः स्मरणादपि ॥ २३९ ॥ पुराणान्ते श्मशानान्ते मैथुनान्ते च या मतिः । सा मतिः सर्वदा चेत्स्यात्को न मुच्येत बन्धनात् ॥ २४० ॥ आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम् । गर्भस्थं केतकीपुष्पमामोदेनैव षट्पदाः ॥ २४१ ॥ न ज्ञातुं नाप्यनुज्ञातुं नेक्षितुं नाप्युपेक्षितुम् । स्वजनः स्वजने जातं विपत्पातं समीहते ॥ २४२ ॥ प्रायो दुरन्तपर्यन्ताः संपदोऽपि दुरात्मनाम् । भवन्ति हि सुखोदर्का विपदोऽपि महात्मनाम् ॥ २४३ ॥ उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते । चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका ॥२४४॥ अकाण्डपातजातानामार्द्राणां मर्मभेदिनाम् । गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥२४५॥ अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा । निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥ २४६ ॥ शंभुः श्वेतार्कपुष्पेण च[illegible] वस्त्रतन्तुना । अच्युतः स्मृतिमात्रेण साधवः करसंपुटैः ॥ २४७ ॥ अकृत्वा पौरुषं या श्रीर्विकासिन्यपि किं तया । जरद्गवोऽपि चाश्नाति दैवादुपगतं तृणम् ॥ २४८ ॥ मन्दाकिनीपयःपानं मन्दाक्षीमुखचुम्बनम् । मन्दरोपवनक्रीडा मन्दानुष्ठानतः कुतः ॥ २४९ ॥ दीपो भक्षयते ध्वान्तं कज्जलं च प्रसूयते । यदन्नं भक्षयेन्नित्यं जायते तादृशी प्रजा ॥ २५० ॥ मौनं कालविलम्बश्च प्रयाणं भूमिदर्शनम् । भ्रुकुट्यन्यमुखी वार्ता नकारः षड्विधः स्मृतः ॥ २५१ ॥ अक्षराणि परीक्ष्यन्तामम्बराडम्बरेण किम् । शंभुरम्बरहीनोऽपि सर्वज्ञः किं न जायते ॥ २५२ ॥ दोषोऽपि गुणतां याति प्रभोर्भवति चेत्कृपा । अङ्गहीनोऽपि सूर्येण सारथ्ये योजितोऽरुणः ॥ २५३ ॥ उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् । नीचमल्पप्रदानेन इष्टं धर्मेण योजयेत् ॥ २५४ ॥ अकुले पतितो राजा मूर्खपुत्रो हि पण्डितः । निर्धनस्य धनप्राप्तिस्तृणवन्मन्यते जगत् ॥ २५५ ॥ लोकेषु निर्धनो दुःखी ऋणग्रस्तस्ततोऽधिकम् । ताभ्यां रोगयुतो दुःखी तेभ्यो दुःखी कुभार्यकः ॥ २५६ ॥ आज्ञाभङ्गो नरेन्द्राणां विप्राणां मानखण्डनम् । पृथक्शय्या च नारीणामशस्त्रवध उच्यते ॥ २५७ ॥ प्रस्तावसदृशं वाक्यं सद्भावसदृशं[illegible]यम् । आत्मशक्तिसमं कोपं कुर्वाणो न विनश्यति ॥ २५८ ॥ पठकः पाठकश्चैव ये चान्ये [illegible]स्त्रपाठकाः । सर्वे व्यसनिनो ज्ञेया यः क्रियावान्स पण्डितः ॥ २५९ ॥ पण्डितैः [illegible]ांगत्यं पण्डितैः सह संकथाः । पण्डितैः सह मित्रत्वं कुर्वाणो नावसीदति ॥ २६० [illegible]लं शैलमनालस्यं पाण्डित्यं मित्रसंग्रहम् । अचोरहरणीयानि पञ्चैतानि क्षयोनिधिः ॥ २६१ ॥ मातृवत्परदाराणि परद्रव्याणि लोष्टवत् । आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ २६२ ॥ धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते । अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ २६३ ॥ स जीवति गुणा यस्य धर्मो यस्य स जीवति । गुणधर्मविहीनो यो निष्फलं तस्य जीवितम् ॥ २६४ ॥ गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नोपलभ्यते ॥ २६५ ॥ षट्पदः पुष्पमध्यस्थो

यथा सारं समुद्धरेत्। तथा सर्वेषु शास्त्रेषु सारं गृह्णन्ति पण्डिताः ॥ २६६ ॥ गुणान्भूषयते रूपं शीलं भूषयते कुलम्। सिद्धिर्भूषयते विद्यां भोगो भूषयते धनम् ॥ २६७ ॥ अगुणस्य हतं रूपमशीलस्य हतं कुलम्। असिद्धेस्तु हता विद्या अभोगस्य हतं धनम् ॥ २६८ ॥ दिवा पश्यति नोलूको काको नक्तं न पश्यति। अपूर्वः कोऽपि कामान्धो दिवा नक्तं न पश्यति ॥ २६९ ॥ यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता। एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ २७० ॥ मुख्यमेकं पुरस्कृत्य शून्यात्मानोऽपि साधकाः। भवन्ति तं विना नैव यथा संख्याङ्कबिन्दवः ॥ २७१ ॥ वचस्तत्रैव वक्तव्यं यत्रोक्तं सफलं भवेत्। स्थायीभवति चात्यन्तं रङ्गः शुक्लपटे यथा ॥२७२॥ पिण्डे पिण्डे मतिर्भिन्ना कुण्डे कुण्डे नवं पयः। जातौ जातौ नवाचारा नवा वाणी मुखे मुखे ॥ २७३ ॥ गान्धर्वं गन्धसंयुक्तं ताम्बूलं भारती कथा। इष्टा भार्या प्रियं मित्रमपूर्वाणि दिने दिने ॥ २७४ ॥ विद्यया सह मर्तव्यं कुशिष्याय न दापयेत्। तथापि दीयते विद्या पश्चात्संजायते रिपुः ॥ २७५ ॥ मर्कटस्य सुरापानं तस्य वृश्चिकदंशनम्। तन्मध्ये भूतसंचारो यद्वा तद्वा भविष्यति ॥ २७६ ॥ पुस्तकेषु च या विद्या परहस्तेषु यद्धनम्। संग्रामे च गृहे सैन्यं तिस्रः पुंसां विडम्बनाः ॥२७७॥ असावधाने पाण्डित्यं क्रयक्रीतं च मैथुनम्। भोजनं च पराधीनं त्रयः पुंसां विडम्बनम् ॥ २७८ ॥ पादेन क्रम्यते पन्था मानहीनं च भोजनम्। अविवेकिप्रभोः सेवा पातकं किमतः परम् ॥ २७९ ॥ तुष्यन्ति भोजनैर्विप्रा मयूरा घनगर्जितैः। साधवः परसंतोषैः खलाः परविपत्तिषु ॥ २८० ॥ प्रत्यक्षे गुरवः स्तुत्या परोक्षे मित्रबान्धवाः। कर्मान्ते दासभृत्याश्च पुत्रा नैव तथा स्त्रियः ॥ २८१ ॥ विनयं राजपुत्रेभ्यः पण्डितेभ्यः सुभाषितम्। अनृतं द्यूतकारेभ्यः स्त्रीभ्यः शिक्षेत कैतवम् ॥ २८२ ॥ धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च। आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ॥ २८३ ॥ मुहूर्तमपि जीवेत नरः शुक्लेन कर्मणा। न कल्पमपि कृष्णेन लोकद्वयविरोधिना ॥ २८४ ॥ गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत्। वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ॥ २८५ ॥ स्वभावेन हि तुष्यन्ति देवाः सत्पुरुषाः पिता। ज्ञातयस्त्वन्नपानेन वाक्प्रदानेन पण्डिताः ॥ २८६ ॥ नराणां नापितो धूर्तः पक्षिणा चैव वायसः। चतुष्पदां शृगालस्तु स्वेच्छाचारी तपस्विनाम् ॥ २८७ ॥ चाण्डालः पक्षिणां काकः पशूनां चैव कुक्कुटः। कोपो मुनीनां चाण्डालः सर्वचाण्डालनिन्दकः ॥ २८८ ॥ भ्रमन्संपूज्यते चक्रं भ्रमन्संपूज्यते द्विजः। भ्रमन्संपूज्यते राजा स्त्री भ्रमन्ती विनश्यति ॥ २८९ ॥ न पश्यति च जन्मान्धः कामान्धो नैव पश्यति। न पश्यति मदोन्मत्तो ह्यर्थी दोषं न पश्यति ॥ २९० ॥ स्वयं कर्म करोत्यात्मा स्वयं तत्फलमश्नुते। स्वयं भ्रमति संसारे स्वयं तस्माद्विमुच्यते ॥ २९१ ॥ खड्गमूलं भवेद्राज्यमस्त्रीमूलं स्थिरं भवेत्। प्रजामूलं

भवेदर्थो वैरमूलं विनश्यति ॥ २९२ ॥ ऋणकर्ता पिता शत्रुर्माता च व्यभिचारिणी। अविनीता रिपुर्भार्या पुत्रः शत्रुरपण्डितः ॥ २९३ ॥ नास्ति कामसमो व्याधिर्नास्ति मोहसमो रिपुः । नास्ति क्रोधसमो वह्निर्नास्ति ज्ञानात्परं सुखम् ॥ २९४ ॥ विद्या मित्रं प्रवासेषु भार्या मित्रं गृहेषु च । व्याधितस्यौषधं मित्रं धर्मो मित्रं मृतस्य च ॥ २९५ ॥ नास्ति मेघसमं तोयं नास्ति चात्मसमं बलम् । नास्ति चक्षुःसमं तेजो नास्ति धान्यसमं प्रियम् ॥ २९६ ॥ अधना धनमिच्छन्ति वादमिच्छन्ति गर्विताः । मानवाः स्वर्गमिच्छन्ति मोक्षमिच्छन्ति देवताः ॥ २९७ ॥ सत्येन धार्यते पृथ्वी सत्येन तपते रविः । सत्येन वायवो वान्ति सर्वं सत्ये प्रतिष्ठितम् ॥ २९८ ॥ हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम् । श्रोत्रस्य भूषणं शास्त्रं भूषणै किं प्रयोजनम् ॥ २९९ ॥ युक्तमुक्तं पुराविद्भिश्चिन्ता मूर्तिः सुदारुणा । न भेषजैर्लङ्घनैर्वा न चान्यैरुपशाम्यति ॥ ३०० ॥ आवासः क्रियतां गाङ्गे पापहारिणि वारिणि । स्तनमध्ये तरुण्या वा मनोहारिणि हारिणी ॥ ३०१ ॥ अगाधजलसंचारी न गर्वं याति रोहितः । अङ्गुष्ठोदकमात्रेण शफरी फर्फरायते ॥ ३०२ ॥ सुभाषितरसास्वादः प्रौढस्त्रीसंगमस्तथा । सेवा विवेकिनो राज्ञो दुःखनिर्मूलनं त्रयम् ॥ ३०३ ॥ ईर्ष्यी घृणी त्वसंतुष्टः क्रोधनो नित्यशङ्कितः । परभाग्योपजीवी च षडेते दुःखभागिनः ॥ ३०४ ॥ नवं वस्त्रं नवं छत्रं नव्या स्त्री नूतनं गृहम् । सर्वत्र नूतनं शस्तं सेवकान्ने पुरातने ॥ ३०५ ॥ वृद्धस्य वचनं ग्राह्यमापत्काले ह्युपस्थिते । सर्वत्रैवं विचारेण नाहारे न च मैथुने ॥ ३०६ ॥ अतिदूरपथश्रान्ताश्छायां यान्ति च शीतलाम् । शीतलाश्च पुनर्यान्ति का कस्य परिदेवना ॥ ३०७ ॥ अपमानं पुरस्कृत्य मानं कृत्वा च पृष्ठके । स्वकार्यमुद्धरेत्प्राज्ञः कार्यध्वंसो हि मूर्खता[1] ॥ ३०८ ॥ कृतस्य करणं नास्ति मृतस्य मरणं तथा । गतस्य शोचनं नास्ति ह्येतद्वेदविदां मतम् ॥ ३०९ ॥ नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि । कुशकण्टकविद्धोऽपि प्राप्तकालो न जीवति ॥ ३१० ॥ निमग्नस्य पयोराशौ पर्वतात्पतितस्य च । तक्षकेनापि दष्टस्य आयुर्मर्माणि रक्षति ॥ ३११ ॥ नानृषिः कुरुते काव्यं नारुद्रः क्रमपाठकः । नादेवांशो ददात्यन्नं नाविष्णुः पृथिवीपतिः ॥ ३१२ ॥ कवयः किं न पश्यन्ति किं न भक्षन्ति वायसाः । मद्यपाः किं न जल्पन्ति किं न कुर्वन्ति योषितः ॥ ३१३ ॥ वह्निज्वालेव गृहिणी रक्षणीया प्रयत्नतः । वृद्धिक्षयविकाराभ्यां स्वाश्रयक्षेममिच्छता ॥३१४॥ ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्॥३१५॥अस्थिरं जीवितं लोके अस्थिरे धनयौवने । अस्थिराः पुत्रदाराश्च धर्मः कीर्तिर्द्वयं स्थिरम् ॥ ३१६ ॥ लालयेत्पञ्च वर्षाणि दश वर्षाणि ताडयेत् । प्राप्ते षोडशवर्षाणि

१ मूर्ख॰.

पुत्रे मित्रवदाचरेत् ॥३१७॥ गणेशः स्तौति मार्जारं स्ववाहस्याभिरक्षणे । महानपि प्रसङ्गेन नीचं सेवितुमिच्छति ॥ ३१८ ॥ श्यामा मन्थरगामिन्यः पीनोन्नतपयोधराः । महिष्यश्च महिष्यश्च सन्ति पुण्यवतां गृहे ॥ ३१९ ॥ पदे पदे च रत्नानि योजने रसकूपिका । भाग्यहीना न पश्यन्ति बहुरत्ना वसुंधरा ॥ ३२० ॥ राजा वेश्या यमो वह्निः प्राघूर्णो बालयाचकौ । परदुःखं न जानाति ह्यष्टमो ग्रामकण्टकः ॥ ३२१ ॥ क्रोधो मूलमनर्थानां क्रोधः संसारबन्धनम् । धर्मक्षयकरः क्रोधस्तस्मात्क्रोधं विवर्जयेत् ॥ ३२२ ॥ प्रेम सत्यं तयोरेव ययोर्योगवियोगयोः । वत्सरा वासरीयन्ति वासरीयन्ति वत्सराः ॥ ३२३ ॥ यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावतोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ३२४ ॥ किं धनेन कुबेरस्य सुभाषितगुणेन किम् । वाचस्पतेश्च दीपेन रवेः सिन्धोश्च बिन्दुना ॥ ३२५ ॥ मधुना सिञ्चयेन्निम्बं निम्बः किं मधुरायते । जातिस्वभावदोषोऽयं कटुकत्वं न मुञ्चति ॥ ३२६ ॥ शक्यते येन केनापि जीवनेनैव जीवितुम् । किंतु कौलव्रतोद्गङ्गप्रसङ्गः परदुःसहः ॥ ३२७ ॥ कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि । अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ॥ ३२८ ॥ अग्निहोत्रं गृहं क्षेत्रं सखाभार्यासुतं शिशुम् । रिक्तपाणिर्न पश्येत राजानं देवतां गुरुम् ॥ ३२९ ॥ उत्तमं स्वार्जितं भुक्तं मध्यमं पितुरर्जितम् । कनिष्ठं भ्रातृवित्त च स्त्रीवित्तमधमाधमम् ॥ ३३० ॥ अलसस्य कुतो विद्या अविद्यस्य कुतो धनम् । अधनस्य कुतो मित्रममित्रस्य कुतः सुखम् ॥ ३३१ ॥ अनर्घ्यमपि माणिक्यं हेमाश्रयमपेक्षते । अनाश्रया न शोभन्ते पण्डिता वनिता लताः ॥ ३३२ ॥ विप्रार्थेषु धनं क्षीणं स्वदारागतयौवनम् । स्वामिकार्ये हतप्राणा मन्ते तिष्ठन्ति माधव ॥ ३३३ ॥ न विश्वसेदमित्रस्य मित्रस्यापि न विश्वसेत् । कदाचित्कुपिते मित्रे सर्वं गुह्यं प्रकाशयेत् ॥ ३३४ ॥ चापल्यं लोलुपं कोपं मिथ्या पैशुन्यतत्परम् । द्वेषं परगृहे वासं त्यजेदेतानि बुद्धिमान् ॥ ३३५ ॥ अभ्रच्छाया तृणाग्निश्च खले प्रीतिः स्थले जलम् । वेश्यासक्तिः कुमित्रं च षडेते बुद्बुदोपमाः ॥ ३३६ ॥ प्रमदा मदिरा लक्ष्मीर्विज्ञेया त्रिविधा सुरा । दृष्ट्वैवोन्मादयत्येका पीता चान्यातिसंचयात् ॥ ३३७ ॥ राजपत्नी गुरोः पत्नी भ्रातृपत्नी तथैव च । पत्नीमाता स्वमाता च पञ्चैता मातरः स्मृताः ॥ ३३८ ॥ अल्पोदकचलत्कुम्भि अल्पक्षीरगवाम्बुधिः । अल्पविद्या महागर्वी कुरूपी बहुचेष्टिकः ॥ ३३९ ॥ पुनर्देहं पुना राज्यं यौवनं न पुनः पुनः । पुनर्दाराः पुनर्वित्तं न शरीरं पुनः पुनः ॥ ३४० ॥ इक्षुदण्डास्तिलाः शूद्राः कामिनी हेम मेदिनी । दधिचन्दनताम्बूलमर्दनं गुणवर्धनम् ॥ ३४१ ॥ पराधीनं वृथा जन्म परस्त्रीषु वृथा सुखम् । परगृहे वृथा लक्ष्मीर्विद्या या पुस्तके वृथा ॥ ३४२ ॥ सत्य जनविरोधाय असत्यं जनरञ्जनम् । विक्रीयते सुरा स्थाने दधि क्षीरं गृहे गृहे ॥ ३४३ ॥ असंमाने तपोवृद्धिः संमानाच्च तपःक्षयः । पूजया

पुण्यहानिः स्यान्निन्दया सद्गतिर्भवेत् ॥ ३४४ ॥ ध्यानशस्त्रं बकानां च वेश्यानां मोहशस्त्रकम् । साधुत्वशस्त्रं मैन्दानां परप्राणार्थहारकम् ॥ ३४५ ॥ कृतेऽभिगम्यते दानं त्रेतामाहूय दीयते । द्वापरे याचितादानं सेवादानं कलौ युगे ॥ ३४६ ॥ मक्षिका मारुतो योर्षा धेनुरग्निर्महानदी । पन्था नावा धनं धान्यं विप्रो रत्नं सदा शुचि ॥३४७॥ ललितान्तानि गीतानि प्रसूतान्तं च यौवनम् । विशाखान्तानि मेघानि तक्रान्तं खलु भोजनम् ॥ ३४८ धातुः परीक्षा दुर्भिक्षे स्त्रीपरीक्षा च निर्धने । युद्धे शूरपरीक्षा च मृत्योरत्यन्तमापदि ॥३४९ अन्यमाश्रयते लक्ष्मीस्त्वन्यमन्यं च मेदिनी । अनन्यगामिनी पुंसां कीर्तिरेका पतिव्रता ॥ ३५० ॥ न कालः खड्गमुद्यम्य शिरः कृन्तति कस्यचित् । कालस्य बलमेतावद्विपरीतार्थदर्शनम् ॥ ३५१ ॥ जानन्नपि जनो दैवात्प्रकरोति विगर्हितम् । न कर्म गर्हितं लोके कस्यचिद्रोचते कृतम् ॥ ३५२ ॥ सद्भावेन जयेन्मित्रं सद्भावेन च बान्धवान् । स्त्रीभृत्यान्दानमानाभ्यां दाक्षिण्येनेतरं जनम् ॥ ३५३ ॥ संतोषस्त्रिषु कर्तव्यः स्वदारे भोजने धने त्रिषु चैव न कर्तव्यो दाने तपसि पाठने ॥ ३५४ ॥ न पुत्रात्परमो लाभो न भार्यायाः परं सुखम् । न धर्मात्परमं मित्रं नानृतात्पातकं परम् ॥ ३५५ ॥ ज्यायांसमपि शीलेन विहीनं नैव पूजयेत् । अपि शूद्रं च धर्मज्ञं सद्वृत्तमभिपूजयेत् ॥ ३५६ ॥ शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि । सर्वदा सर्वयत्नेन पुत्रे शिष्यवदाचरेत् ॥ ३५७ ॥ सुकुले योजयेत्कन्यां पुत्रं विद्यासु योजयेत् । व्यसने योजयेच्छत्रुमिष्टं धर्मेण योजयेत् ॥ ३५८ नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः । पृथिवीभूषणं राजा विद्या सर्वस्य भूषणम् ॥ ३५९ ॥ लालने बहवो दोषास्ताडने बहवो गुणाः । तस्मात्पुत्रं च शिष्यं च ताडयेन्न तु लालयेत् ॥ ३६० ॥ [illegible]रतः शोभते मूर्खो ल[illegible]पटावृतः । तावच्च शोभते मूर्खो यावत्किंचिन्न भाषते ॥३६१॥ सकृद्दुष्टं च मित्रं यः पुनः संधातुमिच्छति । स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ३६२ ॥ जानीयात्प्रेषणे भृत्यान्बान्धवान्व्यसनागमे । व्यवहारेण मित्राणि भार्यां च विभवक्षये ॥ ३६३ ॥ न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः । कारणेन हि जायन्ते मित्राणि रिपवस्तथा ॥ ३६४ ॥ हस्ती हस्तसहस्रेण शतहस्तेन वाजिनः । शृङ्गिणो दशहस्तेन स्थानत्यागेन दुर्जनः ॥ ३६५ ॥ आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि । आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ३६६ ॥ परदारं परद्रव्यं परीवादं परस्य च । परीहासं गुरोः स्थाने चापल्यं च विवर्जयेत् ॥ ३६७ ॥ अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम् । यच्च बाहुबलं भीरोर्व्यर्थमेतत्त्रयं भुवि ॥ ३६८ ॥ शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः । बुद्धिप्रारब्धकार्यस्य नास्ति किंचन दुष्करम् ॥ ३६९ ॥ असूयया हतेनैव पूर्वोपायोद्यमैरपि । कर्तॄणां गृह्यते संपत्सुहृद्भिर्मन्त्रिभिस्तथा ॥ ३७० ॥

१ वरिष्ठम्

-तैर्दाक्षिण्ययुक्तानां शङ्कितानां पदे पदे । परापवादभीरूणां दूरतो यान्ति संपदः ॥३७१॥ दानस्य प्रदानस्य कर्तव्यस्य च कर्मणः । क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥३७२॥ न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः । एतदेव हि पाण्डित्यं न स्वल्पाद्भूरिनाशनम् ॥ ३७३ ॥ अफलानि दुरन्तानि समव्ययफलानि च । अशक्यानि च वस्तूनि नारभेत विचक्षणः ॥ ३७४ ॥ किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः । इति संचिन्त्य मनसा प्राज्ञः कुर्वीत वा न वा ॥ ३७५ ॥ देहे पातिनि का रक्षा यशो रक्ष्यमपातवत् । नरः पतितकायोऽपि यशःकायेन जीवति ॥ ३७६ ॥ निमेषमात्रमपि ते वयो गच्छन्न तिष्ठति । तस्माद्देहेष्वनित्येषु कीर्तिमेकामुपार्जयेत् ॥ ३७७ ॥ बुधाग्रे न गुणान्ब्रूयात्साधु वेत्ति यतः स्वयम् । मूर्खाग्रेऽपि च न ब्रूयाद्बुधप्रोक्तं न वेत्ति सः ॥ ३७८ ॥ यावत्स्वस्थमिदं देहं यावन्मृत्युश्च दूरतः । तावदात्महितं कुर्यात्प्राणान्ते किं करिष्यसि ॥ ३७९ ॥ यः करोति वधोदर्का निःश्रेयसकरीः क्रियाः । ग्लानिदोषच्छिदः स्वच्छाः स मूढः पङ्कलेपः ॥ ३८० ॥ मूलं दोषस्य हिंसादेरर्थकामौ स्म मा पुषः । तौ हि तत्त्वावबोधस्य दुरुच्छेदावुपप्लवौ ॥ ३८१ ॥ अभिद्रोहेण भूतानामर्जयन्गत्वरीः श्रियः । उदन्वानिव सिन्धूनामापदामेति पात्रताम् ॥ ३८२ ॥ या गम्याः सत्सहायानां यासु खेदो भयं यतः । तासां किं यन्न दुःखाय विपदामिव संपदाम् ॥ ३८३ ॥ दुरासदानरीनुग्रान्धृतेर्विश्वासजन्मनः । भोगान्भोगानिवाहेयानध्यास्यापन्न दुर्लभा ॥ ३८४ ॥ नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते । आसक्तास्तास्वमी मूढा वामशीला हि जन्तवः ॥ ३८५ ॥ कोऽपवादः स्तुतिपदे यदशीलेषु चञ्चलाः । साधुवृत्तानपि क्षुद्रा विक्षिपन्त्येव संपदः ॥ ३८६ ॥ कृतवानन्यदेहेषु कर्ता च विधुरं मनः । अप्रियैरिव संयोगो विप्रयोगः प्रियैः सह ॥३८७॥ शून्यमाकीर्णतामेति तुल्यं व्यसनमुत्सवैः । विप्रलम्भोऽपि लाभाय सति प्रियसमागमे ॥ ३८८ ॥ तदा रम्याण्यरम्याणि प्रियाः शल्यं तदासवः । तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा ॥ ३८९ ॥ युक्तः प्रमाद्यसि हितादपेतः परितप्यसे । यदि नेष्टात्मनः पीडा मा सञ्जि भवता जने ॥ ३९० ॥ जन्मिनोऽस्य स्थितिं विद्वांल्लक्ष्मीमिव चलाचलाम् । भवान्मा स्म वधीन्न्याय्यं न्यायाधारा हि साधवः ॥ ३९१ ॥ अविज्ञातप्रबन्धस्य वचो वाचस्पतेरिव । व्रजत्यफलतामेव नयद्रुह इवेहितम् ॥ ३९२ ॥ कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी । तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ३९३ ॥ मनसा चिन्तितं कर्म वचसा न प्रकाशयेत् । अन्यलक्षितकार्यस्य यतः सिद्धिर्न जायते ॥ ३९४ ॥ कुदेशं च कुवृत्तिं च कुभार्यां कुनदीं तथा । कुद्रव्यं च कुभोज्यं च वर्जयेत्तु विचक्षणः ॥३९५॥ अस्ति पुत्रो वशे यस्य भृत्यो भार्या तथैव च । अभावे सति संतोषः स्वर्गस्थोऽसौ महीतले ॥ ३९६ ॥ माता यस्य गृहे नास्ति भार्या च प्रियवादिनी । अरण्यं तेन गन्तव्यं

यथारण्यं तथा गृहम् ॥ ३९७ ॥ कोकिलानां स्वरो रूपं नारीरूपं पतिव्रतम्। विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥३९८॥ अविद्याजीवनं शून्यं दिक्शून्या चेदबान्धवा। पुत्रहीनं गृहं शून्यं सर्वशून्या दरिद्रता ॥ ३९९ ॥ अदाता वंशदोषेण कर्मदोषाद्दरिद्रता। उन्मादो मातृदोषेण पितृदोषेण मूर्खता ॥ ४०० ॥ अतिदर्पे हता लङ्का अतिमाने च कौरवाः। अतिदाने बलिर्बद्धः सर्वमत्यन्तगर्हितम् ॥४०१॥ वस्त्रहीनस्त्वलंकारो घृतहीनं च भोजनम्। स्तनहीना च या नारी विद्याहीनं च जीवनम् ॥ ४०२ ॥ पुत्रप्रयोजना दाराः पुत्रः पिण्डप्रयोजनः। हितप्रयोजनं मित्रं धनं सर्वप्रयोजनम् ॥४०३॥ दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत्सुतः। दुर्लभा सदृशी भार्या दुर्लभः स्वजनः प्रियः ॥ ४०४ ॥ अशोच्यो निर्धनः प्राज्ञोऽशोच्यः पण्डितबान्धवः। अशोच्या विधवा नारी पुत्रपौत्रप्रतिष्ठिता ॥ ४०५ ॥ अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम्। निराहाराः प्रजाः शोच्याः शोच्यं राज्यमराजकम् ॥ ४०६ ॥ कुलीनैः सह संपर्क पण्डितैः सह मित्रताम्। ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति ॥ ४०७ ॥ कष्टा वृत्तिः पराधीना कष्टो वासो निराश्रयः। निर्धनो व्यवसायश्च सर्वकष्टा दरिद्रता ॥ ४०८ ॥ तस्करस्य कुतो धर्मो दुर्जनस्य कुतः क्षमा। वेश्यानां च कुतः स्नेहः कुतः सत्यं च कामिनाम् ॥ ४०९ ॥ प्रेषितस्य कुतो मानं कोपनस्य कुतः सुखम्। स्त्रीणां कुतः सतीत्वं च कुतो मैत्री खलस्य च ॥ ४१० ॥ दुर्बलस्य बलं राजा बालानां रोदनं बलम्। बलं मूर्खस्य मौनित्वं चौराणामनृतं बलम् ॥ ४११ ॥ यो ध्रुवाणि परित्यज्य अध्रुवं परिषेवते। ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ ४१२ ॥ शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि। प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥४१३॥ सद्योमांसं नवान्नं च बाला स्त्री क्षीरभोजनम्। घृतमुष्णोदकं चैव सद्यः प्राणकराणि षट् ॥ ४१४ ॥ सिंहादेकं बकादेकं षट् शुनस्त्रीणि गर्दभात्। वायसात्पञ्च शिक्षेच्च चत्वारि कुक्कुटादपि ॥ ४१५ ॥ प्रभूतमल्पकार्यं वा यो नरः कर्तुमिच्छति। सर्वारम्भेण तत्कुर्यात्सिंहादेकं प्रकीर्तितम् ॥४१६॥ सर्वेन्द्रियाणि संयम्य बकवत्पतितो जनः। कालदेशोपपन्नानि सर्वकार्याणि साधयेत् ॥ ४१७ ॥ बह्वाशी स्वल्पसंतुष्टः सुनिद्रः शीघ्रचेतनः। प्रभुभक्तश्च शूरश्च ज्ञातव्याः षट् शुनो गुणाः ॥ ४१८ ॥ अविश्रामं वहेद्भारं शीतोष्णं च न विन्दति। ससंतोषस्तथा नित्यं त्रीणि शिक्षेत गर्दभात् ॥ ४१९ ॥ गूढमैथुनधार्ष्ट्यं च काले चालयसंग्रहम्। अप्रमादमनालस्यं पञ्च शिक्षेत वायसात् ॥ ४२० ॥ युद्धं च प्रातरुत्थानं भोजनं सह बन्धुभिः। स्त्रियमापद्गतां रक्षेच्चतुः शिक्षेत कुक्कुटात् ॥ ४२१ ॥ कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम्। को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ ४२२ ॥ आपदां कथितः पन्था इन्द्रियाणामसंयमः। तज्जयः संपदां मार्गो येनेष्टं तेन गम्यताम् ॥ ४२३॥ न च वि-

द्यासमो बन्धुर्न च व्याधिसमो रिपुः। न चापत्यसमः स्नेहो न च दैवात्परं बलम्॥४२४॥समुद्रावरणा भूमिः प्राकारावरणं गृहम्। नरेन्द्रावरणा देशाश्चारित्रावरणाः स्त्रियः ॥ ४२५ ॥ घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान्। तस्माद्घृतं च वह्निं च नैकत्र स्थापयेद्बुधः॥४२६॥ आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा। षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ ४२७ ॥ जीर्णमन्नं प्रशंसीयाद्भार्यां च गतयौवनाम्। रणात्प्रत्यागतं शूरं सस्यं च गृहमागतम्॥ ४२८ ॥ असंतुष्टा द्विजा नष्टाः संतुष्टाश्च महीभुजः। सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः ॥ ४२९ ॥ अवंशपतितो राजा मूर्खपुत्रश्च पण्डितः। अधनेन धनं प्राप्य तृणवन्मन्यते जगत् ॥ ४३० ॥ पुस्तकस्था तु या विद्या परहस्तगतं धनम्। कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ॥ ४३१ ॥ पादपानां भयं वातात्पद्मानां शिशिराद्भयम्। पर्वतानां भयं वज्रात्साधूनां दुर्जनाद्भयम् ॥ ४३२ ॥ यस्य क्षेत्रं नदीतीरे भार्या ऽपि परप्रिया। पुत्रस्य विनयो नास्ति मृत्युरेव न संशयः ॥ ४३३ ॥ असंभाव्यं न वक्तव्यं प्रत्यक्षमपि दृश्यते। शिला तरति पानीयं गीतं गायति वानरः ॥ ४३४ ॥ सुभिक्षं कृषके नित्यं नित्यं सुखमरोगिणि। भार्या भर्तुः प्रिया यस्य तस्य नित्योत्सवं गृहम् ॥ ४३५ ॥ हेला स्यात्कार्यनाशाय बुद्धिनाशाय निर्धनम्। याचना माननाशाय कुलनाशाय भोजनम् ॥ ४३६ ॥ प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम्। तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ॥ ४३७ ॥ नदीकूले च ये वृक्षाः परहस्तगतं धनम्। कार्यं स्त्रीगोचरं यत्स्यात्सर्वं तद्विफलं भवेत् ॥४३८॥ कूपोदकं वटच्छाया श्यामा स्त्री चेष्टकालयम्। शीतकाले भवेदुष्णं ग्रीष्मकाले च शीतलम् ॥ ४३९ ॥ विषं चङ्क्रमणं रात्रौ विषं राज्ञोऽनुकूलता। विषं स्त्रियोऽप्यन्यहृदो विषं व्याधिरवीक्षितः ॥ ४४० ॥ दुरधीता विषं विद्या अजीर्णे भोजनं विषम्। विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम्॥४४१॥ प्रदोषे निहतः पन्थाः पतिता निहताः स्त्रियः। अल्पबीजं हतं क्षेत्रं भृत्यदोषाद्धतः प्रभुः ॥ ४४२ ॥ हतमश्रोत्रियं श्राद्धं हतो यज्ञस्त्वदक्षिणः। हता रूपवती वन्ध्या हतं सैन्यमनायकम् ॥ ४४३ ॥ किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते। नग्नक्षपणके देशे रजकः किं करिष्यति ॥ ४४४ ॥ अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत्। गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ४४५ ॥ आयुः कर्म च वित्तं च विद्या निधनमेव च। पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ ४४६ ॥ यदभावि न तद्भावि भावि चेन्न तदन्यथा। इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥ ४४७ ॥ नाद्रव्ये निहिता काचित्क्रिया फलवती भवेत्। न व्यापारशतेनापि शुकवत्पाठ्यते बकः ॥ ४४८ ॥ शोकस्थानसहस्राणि भयस्थानशतानि च। दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥४४९॥ उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम्। मरणव्याधिशोकानां किमद्य निपतिष्यति

॥ ४५० ॥ अनिष्टादिष्टलाभेऽपि न गतिर्जायते शुभा । यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे ॥ ४५१ ॥ न संशयमनारुह्य नरो भद्राणि पश्यति । संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ४५२ ॥ गतानुगतिको लोकः कुट्टिनीमुपदेशिनीम् । प्रमाणयति नो धर्मे यथा गोघ्नमपि द्विजम् ॥ ४५३ ॥ प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥ ४५४ ॥ प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये । आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ ४५५ ॥ अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया । दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना ॥ ४५६ ॥ शङ्काभिः सर्वमाक्रान्तमन्नं पानं च भूतले । प्रवृत्तिः कुत्र कर्तव्या जीवितव्यं कथं नु वा ॥ ४५७ ॥ सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः । छेत्तारः संशयानां च क्लिश्यन्ते लोभमोहिताः ॥ ४५८ ॥ षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता । निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ४५९ ॥ माता मित्रं पिता चेति स्वभावात्त्रितयं हितम् । कार्यकारणतश्चान्ये भवन्ति हितबुद्धयः ॥ ४६० ॥ जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् । व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत् ॥ ४६१ ॥ तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ ४६२ ॥ आपत्सु मित्रं जानीयाद्युद्धे शूरमृणे शुचिम् । भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान् ॥ ४६३ ॥ सुहृदां हितकामानां यः शृणोति न भाषितम् । विपत्संनिहिता तस्य स नरः शत्रुनन्दनः ॥ ४६४ ॥ अपराधो न मेऽस्तीति नैतद्विश्वासकारणम् । विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥ ४६५ ॥ दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुंधतीम् । न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः ॥ ४६६ ॥ मार्जारो महिषो मेषः काकः कापुरुषस्तथा । विश्वासात्प्रभवन्त्येते विश्वासस्तत्र नो हितः ॥ ४६७ ॥ यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत् । नोदके शकटं याति न च नौर्गच्छति स्थले ॥ ४६८ ॥ द्रवत्वात्सर्वलोहानां निमित्तान्मृगपक्षिणाम् । भयाल्लोभाच्च मूर्खाणां संगतं दर्शनात्सताम् ॥ ४६९ ॥ पटुत्वं सत्यवादित्वं कथायोगेन बुध्यते । अस्तब्धत्वमचापल्यं प्रत्यक्षेणावगम्यते ॥ ४७० ॥ लोकयात्रा भयं लज्जा दाक्षिण्य त्यागशीलता । पञ्च यत्र न विद्यन्ते न कुर्यात्तत्र संस्थितिम् ॥ ४७१ ॥ अपुत्रस्य गृहं शून्यं सन्मित्ररहितस्य च । मूर्खस्य च दिशः शून्याः सर्वशून्या दरिद्रता ॥ ४७२ ॥ परिच्छेदो हि पाण्डित्यं यदापन्ना विपत्तयः । अपरिच्छेदकर्तॄणां विपदः स्युः पदे पदे ॥ ४७३ ॥ पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम् । विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥ ४७४ ॥ जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः । निमित्तं किंचिदासाद्य देही प्राणान्विमुञ्चति ॥ ४७५ ॥ नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् । आपत्स्वपि न मुह्यन्ति नराः पण्डितबुद्धयः ॥ ४७६ ॥ सुखमाप

तितं सेव्यं दुःखमापतितं तथा। चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च ॥४७७॥ वृत्त्यर्थं नातिचेष्टेत सा हि धात्रैव निर्मिता। गर्भादुत्पतिते जन्तौ मातुः प्रस्रवतः स्तनौ ॥४७८॥ येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः। मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति ॥ ४७९ ॥ धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ ४८० ॥ जन्मनि क्लेशबहुले किं नु दुःखमतः परम्। इच्छासंपद्यतो नास्ति यच्चेच्छा न निवर्तते ॥ ४८१ ॥ यद्यदेव हि वाञ्छेत ततो वाञ्छा प्रवर्तते। प्राप्त एवार्थतः सोऽर्थो यतो वाञ्छा निवर्तते ॥ ४८२ ॥ अम्भांसि जलजन्तूनां दुर्गं दुर्गनिवासिनाम्। स्वभूमिः श्वापदादीनां राज्ञां मन्त्री परं बलम् ॥ ४८३ ॥ कायः संनिहितापायः संपदः पदमापदाम्। समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ ४८४ ॥ अधोऽधः पश्यतः कस्य महिमा नोपचीयते। उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥ ४८५ ॥ अलब्धं चैव लिप्सेत लब्धं रक्षेदवेक्षया। रक्षितं वर्धयेत्सम्यग्वृद्धं तीर्थेषु निक्षिपेत् ॥ ४८६ ॥ शीतवातातपक्लेशान्सहन्ते यान्पराश्रिताः। तदंशेनापि मेधावी तपस्त्यक्त्वा सुखी भवेत् ॥४८७॥ एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता। ये पराधीनतां यातास्ते वै जीवन्ति के मृताः ॥ ४८८ ॥ आश्रितानां भृतौ स्वामिसेवायां धर्मसेवने। पुत्रस्योत्पादने चैव न सन्ति प्रतिहस्तकाः ॥ ४८९ ॥ पृष्ठतः सेवयेदर्कं जठरेण हुताशनम्। स्वामिनं सर्वभावेन परलोकममायया ॥ ४९० ॥ पञ्चभिर्याति दासत्वं पुराणैः कोऽपि मानवः। कोऽपि लक्षैः कृती कोऽपि लक्षैरपि न लभ्यते ॥ ४९१ ॥ वाजिवारणलोहानां काष्ठपाषाणवाससाम्। नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ ४९२ ॥ आरोप्यते शिला शैले यत्नेन महता यथा। निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः ॥ ४९३ ॥ प्रस्तावसदृशं वाक्यं सद्भावसदृशं प्रियम्। आत्मशक्तिसमं कोपं यो जानाति स पण्डितः ॥ ४९४ ॥ अनाहूतो विशेद्यस्तु अपृष्टो बहु भाषते। आत्मानं मन्यते प्रीतं भूपालस्य स दुर्मतिः ॥ ४९५ ॥ किमप्यस्ति स्वभावेन सुन्दरं वाप्यसुन्दरम्। यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम् ॥ ४९६ ॥ यस्य यस्य हि यो भावस्तेन तेन हि तं नरम्। अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥४९७॥ दोषभीतेरनारम्भस्तत्कापुरुषलक्षणम्। कैरजीर्णभयाद्भ्रातर्भोजनं परिहीयते ॥ ४९८ ॥ स्थान एव नियोज्यन्ते भृत्याश्चाभरणानि च। न हि चूडामणिः पादे नूपुरं मूर्ध्नि धार्यते ॥ ४९९ ॥ मुकुटे रोपितः काचश्चरणाभरणे मणिः। न हि दोषो मणेरस्ति किंतु साधोरविज्ञता ॥ ५०० ॥ बालादपि गृहीतव्यं युक्तमुक्तं मनीषिभिः। रवेरविषये किं न प्रदीपस्य प्रकाशनम् ॥ ५०१ ॥ बन्धुस्त्रीभृत्यवर्गस्य बुद्धेः सत्त्वस्य चात्मनः। आपन्निकषपाषाणे नरो जानाति सारताम् ॥ ५०२ ॥ आज्ञाभङ्गो नरेन्द्राणां ब्राह्मणानामनादरः। पृथक्शय्या च नारीणामशस्त्रविहितो वधः ॥ ५०३ ॥ आपद्युन्मार्गगमने कार्यकालात्ययेषु च ... ज्यते।

येषु च । कल्याणवचनं ब्रूयादपृष्टोऽपि हितो नरः ॥ ९०४ ॥ कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः । अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः ॥ ९०५ ॥ अप्रियाण्यपि कुर्वाणो यः प्रियः प्रिय एव सः । दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः ॥९०६॥ अप्रियस्यापि वश्यस्य परिणामः सुखावहः । वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ॥ ९०७ ॥ न परस्यापराधेन परेषां दण्डमाचरेत् । आत्मनावगतं कृत्वा बध्नीयात्पूजयेच्च वा ॥ ९०८ ॥ गुणदोषावनिश्चित्य विधिर्न ग्रहनिग्रहे । स्वनाशाय यथा न्यस्तो दर्पात्सर्पमुखे करः ॥ ९०९ ॥ पराभवं परिच्छेत्तुं योग्यायोग्यं न वेत्ति यः । अस्तीह यस्य विज्ञानं स कृच्छ्रेऽपि न सीदति ॥ ९१० ॥ द्वयोरेव समं वित्तं द्वयोरेव समं बलम् । तयोर्विवादो मन्तव्यो नोत्तमाधमयोः क्वचित् ॥ ९११ ॥ बलवानपि निस्तेजाः कस्य नाभिभवास्पदम् । निःशङ्कं दीयते लोकैः पश्य भस्मचये पदम् ॥ ९१२ ॥ बन्धुः को नाम दुष्टानां कुप्येत्को नातियाचितः । को न तृप्यति वित्तेन कुकृत्ये को न पण्डितः ॥९१३॥ धर्मार्थकामतत्त्वज्ञो नैकान्तकरुणो भवेत् । न हि हस्तस्थमप्यन्नं क्षमावान्भक्षितुं क्षमः ॥ ९१४ ॥ क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् । अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥ ९१५ ॥ सेवितव्यो महावृक्षः फलच्छायासमन्वितः । यदि दैवात्फलं नास्ति छाया केन निवार्यते ॥ ९१६ ॥ हीनसेवा न कर्तव्या कर्तव्यो महदाश्रयः । पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते ॥ ९१७ ॥ महानप्यल्पतां याति निर्गुणे गुणविस्तरः । आधाराधेयभावेन गजेन्द्र इव दर्पणे ॥ ९१८ ॥ वैद्यानामातुरः श्रेयान्व्यसनीशो वियोगिनाम् । विदुषां जीवनं मूर्खः सद्वर्णो जीवनं सताम् ॥ ९१९ ॥ तावद्भयाद्धि भेतव्यं यावद्भयमनागतम् । आगतं तु भयं वीक्ष्य प्रहर्तव्यमभीतवत् ॥ ९२० ॥ सुपूरा स्यात्कुनदिका सुपूरो मूषिकाञ्जलिः । सुसंतुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ ९२१ ॥ अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः । पैशुन्याद्भिद्यते स्नेहो वाचा भिद्येत कातरः ॥ ९२२ ॥ अन्यप्रतापमासाद्य यो दृढत्वं न गच्छति । जतुजाभरणस्येव रूपेणापि हि तस्य किम् ॥ ९२३ ॥ भये वा यदि वा हर्षे संप्राप्ते यो विमर्शयेत् । कृत्यं न कुरुते वेगान्न स संतापमाप्नुयात् ॥ ९२४ ॥ न वध्यन्ते ह्यविश्वस्ता बलिभिर्दुर्बला अपि । विश्वस्तास्त्वेव वध्यन्ते बलिनो दुर्बलैरपि ॥ ९२५ ॥ महामतिरपि प्राज्ञो न विश्वासं व्रजेद्रिपौ । विश्वासात्त्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ९२६ ॥ न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न पदातिभिः । कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥ ९२७ ॥ मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके । कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ ९२८ ॥ अमृतं शिशिरे वह्निरमृतं प्रियदर्शनम् । अमृतं राजसंमानममृतं क्षीरभोजनम् ॥ ९२९ ॥ सर्पाणां च खलानां च परद्रव्यापहारिणाम् । अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत् ॥ ... सुखमाप-

वर्तते जगत् ॥ ५३० ॥ नाविदग्धः प्रियं ब्रूयात्स्फुटवक्ता न वञ्चकः । निःस्पृहो नाधिकारी स्यान्नाकामी मण्डनप्रियः ॥ ५३१ ॥ औषधार्थसुमन्त्राणां बुद्धेश्चैव महात्मनाम् । असाध्यं नास्ति लोकेऽत्र यद्ब्रह्माण्डस्य मध्यगम् ॥ ५३२ ॥ न यस्य चेष्टितं विद्यान्न कुलं न पराक्रमम् । न तस्य विश्वसेत्प्राज्ञो यदीच्छेच्छ्रियमात्मनः ॥ ५३३ ॥ नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः । पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥५३४॥ अशोच्यानीह भूतानि यो मूढस्तानि शोचति । स दुःखे लभते दुःखं द्वावनर्थौ निषेवते ॥ ५३५ ॥ स सुहृद्व्यसने यः स्यात्स पुत्रो यस्तु भक्तिमान् । स भृत्यो यो विधेयज्ञः सा भार्या यत्र निर्वृतिः ॥ ५३६ ॥ यत्र देशेऽथवा स्थाने भोगान्भुक्त्वा स्ववीर्यतः । तस्मिन्विभवहीनो यो वसेत्स पुरुषाधमः ॥ ५३७ ॥ येनाहंकारयुक्तेन चिरं विलसितं पुरा । दीनं वदति तत्रैव यः परेषां स निन्दितः ॥ ५३८ ॥ मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः । व्रतिनः पापशीलानामसतीनां कुलस्त्रियः ॥ ५३९ ॥ मित्रद्रोही कृतघ्नश्च तथा विश्वासघातकः । ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ५४० ॥ जिह्वालौल्यप्रसक्तानां जलमध्यनिवासिनाम् । अचिन्तितो वधोऽज्ञानां मीनानामिव जायते ॥ ५४१ ॥ कृतान्तपाशबद्धानां दैवोपहतचेतसाम् । बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥५४२॥ व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते । स तेषां पारमभ्येति तत्प्रभावादसंशयम्॥५४३॥ मित्रवान्साधयत्यर्थान्दुःसाध्यानपि वै यतः । तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः ॥ ५४४ ॥ अपि संपूर्णतायुक्तैः कर्तव्याः सुहृदो बुधैः । नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते ॥ ५४५ ॥ यो मित्रं कुरुते मूढ आत्मनोऽसदृशं कुधीः । हीनं वाप्यधिकं वापि हास्यतां यात्यसौ जनः ॥ ५४६ ॥ कारणान्मित्रतां याति कारणाद्याति शत्रुताम् । तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता ॥ ५४७ ॥ उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम् । भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात्सताम् ॥ ५४८ ॥ ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ ५४९ ॥ यस्य न ज्ञायते वीर्यं न कुलं न विचेष्टितम् । न तेन संगतिं कुर्यादित्युवाच बृहस्पतिः ॥ ५५० ॥ शनैः शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम् । रसायनमिव प्राज्ञैर्हेलया न कदाचन ॥ ५५१ ॥ मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम् । मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ ५५२ ॥ गुरोः सुतां मित्रभार्यां स्वामिसेवकगेहिनीम् । यो गच्छति पुमांल्लोके तमाहुर्ब्रह्मघातिनम् ॥ ५५३ ॥ अयशः प्राप्यते येन येन चापगतिर्भवेत् । स्वर्गाच्च भ्रश्यते येन तत्कर्म न समाचरेत् ॥ ५५४ ॥ यः स्तोकेनापि संतोषं कुरुते मन्दधीर्जनः । तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥ ५५५ ॥ कृतनिश्चयिनो वन्द्यास्तुङ्गिमा नोपभुज्यते । चातकः को वराकोऽयं यस्येन्द्रो वारिवाहकः ॥ ५५६ ॥ तावत्स्यात्सर्वकृत्येषु

पुरुषोऽत्र स्वयं प्रभुः। स्त्रीवाक्याङ्कुशविक्षुण्णो यावन्नो ध्रियते बलात् ॥ ५५७ ॥ अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगम्। अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः॥ ५५८ अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम्। रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ ५५९ ॥ आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः। न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥ ५६० ॥ व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत्। क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति ॥ ५६१ ॥ केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः। तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ ५६२ ॥ नदीनां च कुलानां च मुनीनां च महात्मनाम्। परीक्षा न प्रकर्तव्या स्त्रीणां दुश्चरितस्य च ॥ ५६३ ॥ सद्भिः संबोध्यमानोऽपि दुरात्मा पापपौरुषः। घृष्यमाण इवाङ्गारो निर्मलत्वं न गच्छति ॥ ५६४ ॥ जनिता[१] चोपनेता[२] च यश्च विद्यां प्रयच्छति। अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ ५६५ ॥ वरं वरयते कन्या माता वित्तं पिता श्रुतम्। बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥ ५६६ ॥ यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान्स्वान्हितान्गुरून्। न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि ॥ ५६७ ॥ कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदम्। कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥ ५६८ ॥ कृते प्रतिकृतिं कुर्याद्धिंसिते प्रतिहिंसितम्। न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत् ॥ ५६९ ॥ सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये। सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ ५७० ॥ योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम्। एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते ॥ ५७१ ॥ मर्तव्यमिति यद्दुःखं पुरुषस्योपजायते। शक्यते नानुमानेन परेण परिवर्णितुम् ॥ ५७२ ॥ स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते। अस्य दग्धोदरस्यार्थे कः कुर्यात्पातकं महत् ॥ ५७३ ॥ विद्यया विनयावाप्तिः सा चेदविनयावहा। किं कुर्मः कं प्रति ब्रूमो गरदायां[३] स्वमातरि ॥ ५७४ ॥ वीणेव श्रोत्रहीनस्य लोलाक्षीव[४] विचक्षुषः[५]। व्यसोः[६] कुसुममालेव विद्या स्तब्धस्य निष्फला ॥ ५७५ ॥ वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च। तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥ ५७६ ॥ द्विः शरं नाभिसंधत्ते द्विः स्थापयति नाश्रितान्। द्विर्ददाति न चार्थिभ्यो रामो द्विर्नैव भाषते ॥ ५७७ ॥ केतकीकुसुमं भृङ्गः खण्ड्यमानोऽपि सेवते। दोषाः किं नाम कुर्वन्ति गुणापहृतचेतसाम् ॥ ५७८ ॥ मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः। तत्रापि संभवन्त्येते मित्रोदासीनशत्रवः ॥ ५७९ ॥ पञ्चैतानि विलिख्यन्ते गर्भस्थस्यैव देहिनः। आयुः कर्म च विद्या च वित्तं निधनमेव च ॥ ५८० ॥ नास्ति सत्यं द्यूतकारे न शौचं वृषलीपतौ। मद्यपे सौहृदं नास्ति धूर्तेषु त्रितयं नहि ॥ ५८१ ॥ कि-

१ उत्पादकः. २ उपनयनकर्ता. ३ विषदायिन्याम्. ४ चञ्चलाक्षी. मृगनयनेति यावत्. ५ अन्धस्य. ६ प्राणरहितस्य. प्रेतस्येति यावत्

णीत यथासुयात् ॥ ६०८ ॥ रागे द्वेषे च माने च द्रोहे पापे च कर्मणि । अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ॥ ६०९ ॥ बन्धूनां सुहृदां चैव भृत्यानां स्त्रीजनस्य च । अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ॥ ६१० ॥ चिरेण मित्रं संधीयाच्चिरेण न कृतं त्यजेत् । चिरेण विहितं मित्रं चिरं वा रणमर्हति ॥ ६११ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥ ६१२ ॥ धनाशा जीविताशा च गुर्वी प्राणभृतां सदा । वृद्धस्य तरुणी भार्या प्राणेभ्योऽपि गरीयसी ॥ ६१३ ॥ चित्रास्वातिगता वर्षाः प्रसूता गतयौवना । प्रवासी गतसौख्यश्च याचना गतगौरवा ॥ ६१४ ॥ अज्ञानिकर्मकर्तृत्वमसिधाराविलोडनम् । पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम् ॥ ६१५ ॥ शाखामृगस्य शाखायाः शाखां गन्तुं पराक्रमः । उल्लङ्घितो यदम्भोधिः प्रभवः प्राभवो हि सः ॥ ६१६ ॥ राः पुण्यं च कलत्राणि पुत्रोत्पत्तिर्निधिस्तथा । सुकृतादपि लभ्यन्ते नैव पार्थ पराक्रमात् ॥ ६१७ ॥ धर्महान्यर्जितं वित्तंऽनुभवन्ति सुखं परम् । स्वयं पापस्य पात्रं स्यात्सिंहो गजवधादिव ॥ ६१८ ॥ यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः । तथा वेदं विना विप्रस्त्रयस्ते नामधारकाः ॥ ६१९ ॥ वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान् । प्रकृत्या ह्यगुणः श्रेयान्नालंकारच्युतोपलः ॥ ६२० ॥ दूरस्थोऽपि समीपस्थो यो यस्य हृदि वर्तते । यो यस्य हृदये नास्ति समीपस्थोऽपि दूरतः ॥ ६२१ ॥ मद्यपाः किं न जानन्ति किं न भक्षन्ति वायसाः । कवयः किं न पश्यन्ति किं न कुर्वन्ति योषितः ॥ ६२२ ॥ अशक्तः सततं साधुः कुरूपा च पतिव्रता । व्याधितो देवभक्तश्च निर्धना ब्रह्मचारिणः ॥ ६२३ ॥ तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता । यावज्ज्वलति नाङ्गेषु स्वतः पञ्चेषुपावकः ॥ ६२४ ॥ वाहितं चाश्ववाणिज्यं राजसेवा तपोवनम् । धीराश्चत्वारि कुर्वन्ति कृषिं कुर्वन्ति कातराः ॥ ६२५ ॥ न देवो विद्यते काष्ठे न पाषाणे न मृण्मये । भावेषु विद्यते देवस्तस्माद्भावो हि कारणम् ॥ ६२६ ॥ अन्यायोपार्जितं द्रव्यं दशवर्षाणि तिष्ठति । प्राप्ते चैकादशे वर्षे समूलं च विनश्यति ॥ ६२७ ॥ तृप्त्यर्थं भोजनं येषां संतानार्थं च मैथुनम् । वाक्सत्यवचनार्थाय दुर्गाण्यतितरन्ति ते ॥ ६२८ ॥ नित्यं क्रोधाच्छ्रियं रक्षेत्तपो रक्षेच्च मत्सरात् । विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ॥ ६२९ ॥ क्षमातुल्यं तपो नास्ति न संतोषात्परं सुखम् । न च तृष्णापरो व्याधिर्न च धर्मो दयापरः ॥ ६३० ॥ दानेन भोगी भवति मेधावी वृद्धसेवया । अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ॥ ६३१ ॥ यच्छक्यं ग्रसितुं ग्रासं ग्रस्तं परिणमेच्च यत् । हितं च परिणामे स्यात्तत्कार्यं भूतिमिच्छता ॥ ६३२ ॥ बुद्धौ कलुषिभूतायां विकारे प्रत्युपस्थिते । अनयोर्नयसंकाशो हृदयान्नापसर्पति ॥ ६३३ ॥ यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम् । उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव ॥ ६३४ ॥ न क्रोधाद्यातुधानस्य भीमामिच्छेद्विधेयताम् । निपीतभ्रातृरुधिरः प्राप निन्दां वृकोदरः

॥ ६३५ ॥ न लोकायत्तवादेन नास्तिकः स्याददैवतः। हरिर्हिरण्यकशिपुं जघान स्तम्भनिर्गतः ॥ ६३६ ॥ संदेहो वैष्णवे मार्गे न कार्योऽन्यैः कुदर्शनैः। रामप्रभावमद्यापि पयोध्धौ पश्य सेतुना ॥ ६३७ ॥ गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः। दुःप्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥ ६३८ ॥ कृतेऽन्यस्यासतोऽप्यार्यो गुणान्दोषांस्तु दुर्जनः। तुल्येऽप्यसत्त्वे तत्रैको गच्छत्यूर्ध्वमधोऽपरः ॥ ६३९ ॥ दीधीङ्वेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम्। क्किप्प्रत्ययनिभः कश्चिद्यत्र संनिहितो न ते ॥ ६४० ॥ न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ६४१ ॥ नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः। जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ ६४२ ॥ धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा। तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ॥ ६४३ ॥ विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना। आपद्यपि हि घोरायां न त्वेमाभरणे वपेत् ॥ ६४४ ॥ सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः। नायन्त्रितश्चतुर्वेदः सर्वाशी सर्वविक्रयी ॥ ६४५ ॥ न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः। ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ६४६ ॥ नारुंतुदः स्यादार्तोऽपि न परद्रोहकर्मभिः। यथास्योद्विजते वाचा नालोक्यां तामुदीरयेत् ॥६४७॥ यथा खनन्खनित्रेण नरो वार्यधिगच्छति। तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥६४८॥ यं मातापितरौ क्लेशं सहेते संभवे नृणाम्। न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥६४९॥ तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा। तेषु हि त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ ६५० ॥ श्रद्दधानः शुभां विद्यामाददीतावरादपि। अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥ ६५१ ॥ विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम्। अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् ॥ ६५२ ॥ यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत्। यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥ ६५३ ॥ यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः। तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥ ६५४ ॥ न द्रव्याणामविज्ञाय विधिं धर्म्यं प्रतिग्रहेत्। प्राज्ञः प्रतिग्रहं कुर्यादवसीदन्नपि क्षुधा ॥ ६५५ ॥ सर्वेषामेव शौचानामन्तः शौचं परं स्मृतम्। योऽन्तः शुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः ॥ ६५६ ॥ नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः। नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ ६५७ ॥ न देवसेवया याति कर्मबन्धः परिक्षयम्। जघास घासमेवासौ बलीवर्दः कपर्दिनः ॥ ६५८ ॥ न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह। पयोऽपि शौण्डिकीहस्ते[1] मदिरा[2] मन्यते जनः ॥ ६५९ ॥ न गुणाः क्वापि पूज्यन्ते सत्स्वीकारो हि गौरवम्। पीतिमागुणसाम्येऽपि हरिद्रास्वर्णयोरिव ॥ ६६० ॥ अकिंचिदपि कुर्वाणः सौख्यै दुःखान्यपोहति। तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो

१ मद्यविक्रयकर्त्री. २ मद्यम्

जनः ॥ ६६१ ॥ अत्युष्णात्सघृतादन्नादच्छिद्राच्चैव वाससः । अपरप्रेष्यभावाच्च भूय इच्छन्पतत्यधः ॥ ६६२ ॥ आपदामापतन्तीनां हितोऽप्यायाति हेतुताम् । मातृजङ्घैव वत्सस्य स्तम्भो भवति बन्धने ॥ ६६३ ॥ भवत्येकस्थले जन्म गन्धस्तेषां पृथक्पृथक् । उत्पलस्य मृणालस्य मत्स्यस्य कुमुदस्य च ॥ ६६४ ॥ तत्र मित्र न वस्तव्यं यत्र नास्ति चतुष्टयम् । ऋणदाता च वैद्यश्च श्रोत्रियः सजला नदी ॥६६५॥ सच्छिद्रनिकटे वासो न कर्तव्यः कदाचन । घटी पिबति पानीयं ताड्यते झल्लरी यथा ॥ ६६६ ॥ यस्य यो दुर्लभो भोगस्तस्य तद्यत्नतः क्षतिः । वाप्यां यथोष्ट्रयोगेन यतिः सशिबिकोऽपतत् ॥ ६६७ ॥ तृणं ब्रह्मविदः स्वर्गस्तृणं शूरस्य जीवितम् । जिताक्षस्य तृणं नारी निस्पृहस्य तृणं जगत् ॥६६८॥ गुरोरप्यवलिप्तस्य[1] कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य[2] न्याय्यं भवति शासनम् ॥ ६६९ ॥ मनसैव कृतं पापं न शरीरकृतं कृतम् । येनैवालिङ्गिता कान्ता तेनैवालिङ्गिता सुता ॥ ६७० ॥ भिन्ने चित्ते कुतः प्रीतिः स्याद्वा प्रीतिः कुतः सुखम् । त्वं च स्मरसि तं पुत्रं पुच्छच्छेदं स्मराम्यहम् ॥ ६७१ ॥ जिह्वायाश्छेदनं नास्ति न तालुपतनाद्भयम् । निर्विशङ्केन वक्तव्यं निर्लज्जः को नु पण्डितः ॥६७२॥ या लोभाद्या परद्रोहाद्यः पात्रे यः परार्थके । प्रीतिर्लक्ष्मीर्वयः क्लेशः सा कि सा किं स किं स किम् ॥ ६७३ ॥ [illegible] व्रणमिच्छन्ति धनमिच्छन्ति पार्थिवाः । नीचाः कलहमिच्छन्ति शान्तिमिच्छ[illegible]न्ति साध[illegible] ॥ ६७४ ॥ हस्ती चाङ्कुशहस्तेन कशाहस्तेन वाजिनः । शृङ्गी ल[illegible]गुडहस्तेन खड्गहस्तेन दुर्जनः ॥ ६७५ ॥ देशानुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा [illegible]जाः । तत्रैव निधनं यान्ति काकाः कापुरुषा मृगाः ॥ ६७६ ॥ वाग्वादमर्थ[illegible]संबन्धं परोक्षे दारदर्शनम् । यदीच्छेद्विपुलां प्रीतिं त्रीणि तत्र न कारयेत् ॥ ६७७ ॥ अर्थानामर्जनं कार्यं वर्धनं रक्षणं तथा । भक्ष्यमाणो निरादायं सुमेरुरपि क्षीयते ॥ ६७८ ॥ आपदर्थं धनं रक्षेन्महतां कुत आपदः । कदाचित्कुपितो देवः संचितं चापि नश्यति ॥ ६७९ ॥ युध्यन्ति पशवः सर्वे पठन्ति शुकसारिकाः । दातुं न तिथयो वित्तं स शूरः स च पण्डितः ॥ ६८० ॥ ज्ञातव्याः प्रेषणे भृत्या बान्धवा व्यसनागमे । मित्रं चापत्तिकाले च भार्यां च विभवक्षये ॥ ६८१ ॥ नदीतीरेषु ये वृक्षा यस्य नारी निरङ्कुशा । मन्त्रिहीनो भवेद्राजा तस्य राज्यं विनश्यति ॥ ६८२ ॥ गुणं पृच्छस्व मा रूपं शीलं पृच्छस्व मा कुलम् । सिद्धिं पृच्छस्व मा विद्यां भोगं पृच्छस्व मा धनम् ॥ ६८३ ॥ गुणो भूषयते रूपं शीलं भूषयते कुलम् । सिद्धिर्भूषयते विद्यां भोगो भूषयते धनम् ॥ ६८४ ॥ यस्य न ज्ञायते शीलं कुलं विद्या नरस्य च । कस्तेन सह विश्वासं पुमान्कुर्याद्विचक्षणः ॥ ६८५ ॥ का प्रीतिः सह मार्जारैः का प्रीतिरवनीपतौ । गणिकाभिश्च का प्रीतिः का प्रीतिर्भिक्षुकैः सह ॥ ६८६ ॥ धीराणां भू-

१ सगर्वस्य. २ उन्मार्गप्रवर्तिनः.

गं विद्या मन्त्रिणां भूषणं नृपः। भूषणं च पतिः स्त्रीणां शीलं सर्वस्य भूषणम् ॥६८७॥
ज्ञानदीप्तरणं महापुरुषविग्रहम् । महाजनविरोधं च दूरतः परिवर्जयेत् ॥ ६८८ ॥
रुहेद्विषमं वृक्षं जीर्णां नावं न चारुहेत् । कूपे नालोकयेत्तोयं न वात्मानं विनाश-
१ ॥ ६८९ ॥ संकटे न च गन्तव्यं विषमे न कदाचन । महापथे न गन्तव्यं गन्तव्यं
त्मनः पथम् ॥ ६९० ॥ अनादायी व्ययं कुर्यादसहायी रणप्रियः । आतुरः सर्व-
ी च नरः शीघ्रं विनश्यति ॥ ६९१ ॥ सुसंदिग्धस्य भक्तस्य दन्तस्य चलितस्य
। अमात्यस्य च दुष्टस्य मूलादुद्धरणं वरम् ॥ ६९२ ॥ दीर्घशृङ्गमनड्वाहं रण्डां च
ुभाषिणीम् । शूद्रमक्षरसंयुक्तं दूरतः परिवर्जयेत् ॥ ६९३ ॥ सिद्धमन्त्रौषधं धर्मं गृ-
च्छिद्रं च मैथुनम् । कुभुक्ति कुश्रुतं चैव वचनं न प्रकाशयेत् ॥ ६९४ ॥ धनेषु जी-
तव्येषु स्त्रीषु भोजनवृत्तिषु । अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति च ॥ ६९५ ॥
च्छिद्रेण समीपेन न स्थातव्यं कदाचन । हारिवारिघटी तेन ताडिता भ्रूलता यथा
६९६ ॥ संगतानि मृगाक्षीणां ताडिद्विलसितान्यपि । क्षणद्वयं न तिष्ठन्ति घनारब्धा-
पि स्वयम् ॥ ६९७ ॥ सौहार्दस्वर्णरेखाणामुच्चावचभिदाजुषाम् । परोक्षमिति कोप्यऽस्ति
ेक्षानिकषोपलः ॥ ६९८ ॥ अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः । केसरी निष्ठुर-
क्षिप्तमृगयूथो मृगाधिपः ॥ ६९९ ॥ परापकारनिरतैर्दुर्जनैः सह संगतिः । वदामि भवत-
स्तत्त्वं न विधेया कदाचन ॥ ७०० ॥ गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते ।
असंजातकिणस्कन्धः सुखं स्वपिति गौर्गडिः ॥ ७०१ ॥ नरत्वं दुर्लभं लोके विद्या तत्र
सुदुर्लभा । कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ॥ ७०२ ॥ वारिजेनेव सरसी शशि-
नेव निशीथिनी । यौवनेनेव वनिता नयने श्रीर्मनोहरा ॥ ७०३ ॥ दानं वित्ताद्धृतं वाचः
कीर्तिधर्मौ तथायुषः । परोपकरणं कायादसारात्सारमाहरेत् ॥ ७०४ ॥ श्रुतं कृतधियां
सङ्गाज्जायते विनयः श्रुतात् । लोकानुरागो विनयान्न किं लोकानुरागतः ॥ ७०५ ॥
सरो विकसिताम्भोजमम्भोजं भृङ्गसंगतम् । भृङ्गा यत्र ससगीताः संगीतं सस्मरोदयम्
॥ ७०६ ॥ किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः । को ध्येयो भगवान्विष्णुः किं
काम्यं परमं पदम् ॥ ७०७ ॥ एकामिषाभिलाषो हि बीजं वैरमहातरोः । तिलोत्तमा-
भिलाषो हि यथा सुन्दोपसुन्दयोः ॥ ७०८ ॥ परस्त्रीकुचकुम्भेषु कुम्भेषु परदन्तिनाम् ।
निपतन्ति न भीरूणां दृष्टयः शरवृष्टयः ॥ ७०९ ॥ आचान्तकान्तिसन्निद्रैर्मयूखैराहि-
मत्विपः । धूसरापि कला चान्द्री किं न वध्नाति लोचनम् ॥ ७१० ॥ हेतुर्नैसर्गिकः
कोऽपि प्रीतेर्यद्धि न वर्तते । मालती मधुरास्तीति मधुपः केन शिक्ष्यते ॥ ७११ ॥

१ " परस्त्री सङ्कट प्रोक्त रण्डा च विषम पथम् । वेश्या महापथं प्रोक्त स्वपर्यायः पिता श्रुत. ", २ नि॰
निरम, ( पक्षे ) मेघं..

चलाञ्चित्तं चलद्वित्तं चलज्जीवनयौवनम् । चलाचलमिदं सर्वं कीर्तिर्यस्य स जीवा
॥ ७१२ ॥ देवे तीर्थे द्विजे मन्त्रे दैवज्ञे भेषजे गुरौ । यादृशी भावना यस्य सिद्धिर्भवति
तादृशी ॥ ७१३ ॥ न माता शपते पुत्रं न दोषं लभते मही । न हिंसां कुरुते साधुर्न
देवः सृष्टिनाशकः ॥ ७१४ ॥ प्रायः सन्त्युपदेशार्हा धीमन्तो न जडाशयाः । तिलाः
कुसुमसौगन्ध्यवाहिनो न यवाः क्वचित् ॥ ७१५ ॥ संस्थितस्य गुणोत्कर्षः प्रायः प्रस्फुरति
स्फुटम् । दग्धस्यागुरुखण्डस्य स्फारीभवति सौरभम् ॥ ७१६ ॥ उपकर्तुं यथा स्वल्पः
समर्थो न तथा महान् । प्रायः कूपस्तृषां हन्ति सततं न तु वारिधिः ॥ ७१७ ॥ जडे
प्रभवति प्रायो दुःखं बिभ्रति साधवः । शीतांशावुदिते पद्माः संकोचं यान्ति वारिणि ॥७१८॥
कश्चित्कस्यचिदेव स्यात्सुहृद्विस्रम्भभाजनम् । पद्मं विकासयत्यर्कः संकोचयति कैरवम्
॥ ७१९ ॥ ईश्वराः पिशुनाञ्शश्वद्विषन्तीति किमद्भुतम् । प्रायो निधय एवाहीन्द्विजिह्वा
न्दधतेतराम् ॥ ७२० ॥ संपद्यास्ते परैः साकं विपदि स्वजनैर्जडः । जृम्भत्यम्भोरुहे भृङ्गः
शुष्यत्युदकशैवलैः ॥ ७२१ ॥ नीचावमानमलिनां प्रभुङ्क्ते संपदं पुमान् । लशुनाक्तां स
कर्पूरचर्चां वितनुते तनौ ॥ ७२२ ॥ व्यसनानन्तरं सौख्यं स्वल्पमप्यधिकं भवेत् । काषाय-
रसमास्वाद्य स्वादुतीवाम्बु विन्दते ॥ ७२३ ॥ गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः
मालतीमल्लिकामोदं घ्राणं वेत्ति न लोचनम् ॥ ७२४ ॥ प्रभूतवयसः पुंसो धियः पाकः
प्रवर्तते । जीर्णस्य चन्दनतरोरामोद उपजायते ॥ ७२५ ॥ घनागमेऽधिकं पुंसां लोभम-
भ्येति मानसम् । निदाघकाले प्रालेयः प्रायः शैत्यं वहत्यलम् ॥ ७२६ ॥ सहजोऽपि गुणः
पुंसां साधुवादेन वर्धते । कामं सुरसलेपेन कान्तिं वहति काञ्चनम् ॥ ७२७ ॥ निन्दां यः
कुरुते साधोस्तथा स्वं दूषयत्यसौ । खे भूतिं यस्त्यजेदुच्चैर्मूर्ध्नि तस्यैव सा पतेत् ॥७२८॥
शुभं वाप्यशुभं कर्म फलकालमपेक्षते । शरद्येव फलत्याशु शालिर्न सुरभौ क्वचित् ॥७२९॥
भोगेच्छा नोपभोगेन भोगिनां जातु शाम्यति । लवणेनान्तरालेन तृष्णा प्रत्युत जायते
॥ ७३० ॥ दुर्लभोऽप्युत्तमः प्रायः स्वजातीयेन लभ्यते । कर्णकोटरगं वारि वारिणैवाव-
कृष्यते ॥ ७३१ ॥ जन्तोर्निरुपभोगस्य दृश्यते भुवि रूक्षता । वाताशिनो द्विजिह्वत्वं
विहितं पश्य वेधसा ॥ ७३२ ॥ आकरः कारणं जन्तोर्दौर्जन्यस्य न जायते । कालकूटः
सुधासिन्धोः प्राणिनां प्राणहारकः ॥ ७३३ ॥ गुणदोषाववाप्येते पुंसां संशीलनाद्बुधैः ।
लेभे पीयूषगरले मन्थनादम्बुधेः सुरैः ॥ ७३४ ॥ न व्यासिरेषा गुणिनो गुणवाञ्जायते
ध्रुवम् । चन्दनोऽनलसंदग्धो न भस्म सुरभि क्वचित् ॥ ७३५ ॥ कार्यापेक्षी जनः प्रायः
प्रीतिमाविष्करोत्यलम् । लोभार्थी शौण्डिकः शष्पैर्मेषं पुष्णाति पेशलैः ॥ ७३६ ॥ दुर्ज-
नो जीयते युक्त्या विग्रहेण न धीमता । निपात्यते महावृक्षस्तत्समीपक्षितिक्षयात् ॥ ७३७ ॥
सुखदुःखे समे स्यातां जन्तूनां क्लेशहेतुके । मूर्ध्नि स्थितानां केशानां भवेतां स्नेहछेदने

॥ ७३८ ॥ स्वभावसुन्दरं वस्तु न संस्कारमपेक्षते । मुक्तारत्नस्य शाणाशाघर्षणं नोपयुज्यते ॥ ७३९ ॥ येनात्मा पण्यतां नीतः स एवान्विष्यते जनैः । हस्ती हेमसहस्रेण क्रीयते न मृगाधिपः ॥ ७४० ॥ सुलभं वस्तु सर्वस्य न यात्यादरणीयताम् । स्वदारपरिहारेण परदारार्थिनो जनाः ॥ ७४१ ॥ विक्रीतं निजमात्मानं वस्त्रैः संस्कुरुते जडः । परेभ्यः स्वशरीरस्य के वा भूषां वितन्वते ॥ ७४२ ॥ असंभवगुणस्तुत्या जायते स्वात्मनस्त्रपा । कर्णिकारं सुगन्धीति वदन्को नोपहास्यते ॥ ७४३ ॥ तटस्थैः ख्यापिताश्चेतो विशन्ति गुणिनां गुणाः । उत्कोचितानां पद्मानां गन्धो वायुभिराहृतः ॥ ७४४ ॥ निजाशयवदाभाति पुंसां चित्ते पराशयः । प्रतिमा मुखचन्द्राभे कृपाणे याति दीर्घताम् ॥ ७४५ ॥ अधमं बाधते भूयो दुःखवेगो न तूत्तमम् । पादद्वयं व्रजत्याशु शीतस्पर्शो न चक्षुषी ॥ ७४६ ॥ गुणवान्सुचिरस्थायी देवोऽपि नाभिनायते । तिष्ठत्येकां निशां चन्द्रः श्रीमान्संपूर्णमण्डलः ॥ ७४७ ॥ यत एवागतो दोषस्तत एव निवर्तते । अग्निदग्धस्य विस्फोटशान्तिः स्यादग्निना ध्रुवम् ॥ ७४८ ॥ स्वधियो निश्चयो नास्ति यस्य स भ्रमते स्वयम् । प्रवातवालपत्रस्थः पटस्तत्र निदर्शनम् ॥ ७४९ ॥ बुद्धिमत्त्वाभिमानः को भवेत्प्रज्ञोपजीविनाम् । अन्यदेयैरलंकारैर्नाहंकारो विभूषणे ॥ ७५० ॥ उत्तमोऽप्यधमस्य स्याद्याच्ञानम्रकरः क्वचित् । कौस्तुभादीनि रत्नानि ययाचे हरिरम्बुधिम् ॥ ७५१ ॥ प्रयत्ने समके केचिदेव स्युः फलभागिनः । क्षीरोदमथनाद्देवैरमृतं प्रापि नासुरैः ॥ ७५२ ॥ भोगः परोपतापेन पुंसां दुःखाय न स्थिरः । पानमप्यसृजः क्षिप्रं स्वपीडायै जलौकसाम् ॥ ७५३ ॥ नोपभोगपरानर्थान्कोऽपि संचिनुते चिरम् । आखवः किमलंकारानात्मन्याहृत्य कुर्वते ॥ ७५४ ॥ विवर्णवचनैर्मृत्युर्गूढोऽप्यन्तः प्रकाशते । इन्धनान्तरसंस्थैश्च ज्वलत्यग्निः पयःकणैः ॥ ७५५ ॥ निकटस्थं गरीयांसमपि लोको न मन्यते । पवित्रामपि यन्मर्त्या न नमस्यन्ति जाह्नवीम् ॥ ७५६ ॥ स्वगात्म एवात्मवज्जन्तुर्ज्ञायते गुणवान्परैः । गोपैर्गोपवदाज्ञापि हरिर्देवो जगत्पतिः ॥ ७५७ ॥ उत्तमस्तोषमायाति तदङ्गो पोष्यते यदि । वृक्षः प्रसीदति प्रायः पादाभ्यङ्गेन न स्वयम् ॥ ७५८ ॥ न भाति वाञ्छा वैजात्ये न देवा भान्ति वादिनि । अञ्जनं दूषणं वक्रे भूषणं किल लोचने ॥ ७५९ ॥ दुर्भगः स्यात्प्रकृत्या यो विभूत्यापि स तादृशः । गोमयं श्रीनिवासोऽस्ति न तथापि मनोहरम् ॥ ७६० ॥ आगच्छदुत्सवो भाति यथैव न तथा गतः । हिमांशोरुदयः सायं चकास्ति न तथोषसि ॥ ७६१ ॥ संतोषक्षतये पुंसामाकस्मिकधनागमः । सरसां सेतुभेदाय वर्षौघः स च न स्थितः ॥ ७६२ ॥ जीयते भूगतोऽप्यात्मा कालेनात्यायि स्वर्गतः । भवेच्छ्मशानमुद्यानमुद्यानं च श्मशानभम् ॥ ७६३ ॥ उच्चशेखरणं वस्तु शुभं स्यात्सुखकारणम् । उपशामयते वाद्यं यथैवामृतसंस्कृतम् ॥ ७६४ ॥ संतुष्यत्युत्तमः स्तुत्या धनेन महताधमः । प्रसीदन्ति जयै-

र्देवा बलिभिर्भूतविग्रहाः ॥ ७६५ ॥ स्वजातीयविघाताय माहात्म्यं दृश्यते नृणाम् श्येनो विहंगमानेव हिनस्ति न भुजंगमान् ॥ ७६६ ॥ गुरुप्रयोजनोद्देशादर्चयन्ति न भक्तितः । दुग्धदात्रीति गौर्गेहे पोष्यते न तु धर्मतः ॥ ७६७ ॥ गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः । पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः ॥७६८॥ बहुभिर्मूर्खसंघातैरन्योन्यपशुवृत्तिभिः । प्रच्छाद्यन्ते गुणाः सर्वे मेघैरिव दिवाकरः ॥ ७६९ ॥ ग्रसमानमिवौजांसि सदसा गौरवेरितम् । नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान्पुमान् ॥ ७७० ॥ मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी । क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ॥७७१॥ भूमिपतावर्थपतौ बाले वृद्धे तपोनिधौ विदुषि । योषिति मूर्खे गुरुषु च विदुषा नैवोत्तरं देयम् ॥ ७७२ ॥ कटुकं वा मधुरं वा प्रस्तुतवाक्यं मनोहारि । वामे गर्दभनादश्चित्तप्रीत्यै प्रयाणेषु ॥ ७७३ ॥ अतिपरिचयादवज्ञा संततगमनादनादरो भवति । लोकः प्रयागवासी कूपे स्नानं समाचरति ॥ ७७४ ॥ अतिपरिचयादवज्ञा संततगमनादनादरो भवति । मलये[1] भिल्लपुरंध्री[2] चन्दनतरुकाष्ठमिन्धनं कुरुते ॥ ७७५ ॥ अतिपरिचयादवज्ञा इति यद्वाक्यं मृषैव तद्भाति । अतिपरिचितेऽप्यनादौ संसारेऽस्मिन्न जायतेऽवज्ञा ॥ ७७६ ॥ अविधेयो भृत्यजनः शठानि मित्राण्यदायकः स्वामी । अविनययुवर्ता च भार्या मस्तकशूलानि चत्वारि ॥ ७७७ ॥ वैद्यस्तर्कविहीनो निर्लज्जा कुलवधूर्यतिर्मूर्खः कटके च प्राहुणिको[3] मस्तकशूलानि चत्वारि ॥ ७७८ ॥ शक्तिरहितोऽपि कुप्यति सेवासक्तोऽपि मानमुद्वहति । अधनोऽपि हि कामयते जानाति विधिर्विडम्बयितुम् ॥ ७७९ ॥ त्यजति भयमकृतपापं सुमित्रमयशः प्रमादिनं विद्या । ह्रीः कामिनमलसं श्रीः क्रूरं स्त्री दुर्जनं लोकः ॥ ७८० ॥ अनुचितकर्मारम्भः स्वजनविरोधो बलीयसा[4] स्पर्धा[5] । प्रमदाजनविश्वासो[6] मृत्युद्वाराणि चत्वारि ॥ ७८१ ॥ अन्यमुखे दुर्वादो[7] यः प्रियवचने स एव परिहासः । इतरेन्धनजन्मा यो धूपः सोऽगुरुभवो धूपः ॥७८२॥ अशठमलोभमजिह्मं त्यागिनमनुरागिणं विशेषज्ञम् । यदि नाश्रयति नरं श्रीः श्रीरेव हि वञ्चिता तस्य ॥ ७८३ ॥ व्यथयतितरामुपेतः स्वस्थप्रकृतिर्नवद्यलेशोऽपि । भृशमुद्विजते चक्षुः सक्तेन रजःकणेनापि ॥ ७८४ ॥ शरदि समग्रनिशाकरकरशतहततिमिरसंचया रजनी । जलदान्तरितार्कामपि दिवसच्छायां न पूरयति ॥ ७८५ ॥ यत्र न फलितास्तरवो विकसितसरसीरुहाः सरस्यो वा । न च सज्जनाः स देशो गच्छतु निधनं श्मशानसमः ॥ ७८६ ॥ गुणमधिगतमपि धनवानचिरान्नाशयति रक्षति दरिद्रः । मज्जयति रज्जुमम्भसि पूर्णः कुम्भः सखि न खलु तुच्छः ॥ ७८७ ॥ अबुधा अजंगमा अपि कयापि गत्या परं पदमवाप्ताः । मन्त्रिण इति

---

१ मलयपर्वते. २ भिल्लस्त्री. ३ आगन्तुकः. ४ बलवद्विषये. ५ विग्रहः. ६ स्त्रीषु विश्वासः. ७ दुष्टभाषणम्. ८ काष्ठम् ९ सरलम्. १० दानशीलम्.

कीर्त्यन्ते न यवलगुटिका इव जनेन ॥ ७८८ ॥ स्वल्पा अपि रामबलैर्ये न्यस्ता नाशये पयोराशेः । ते शैलाः स्थितिमन्तो हन्त लघिम्नैव बहुमानः ॥ ७८९ ॥ यत्रार्जवेन लघिमा परिमाणं वक्रता तनुते । छन्दःशास्त्र इवास्मिँल्लोके सरलः सखे किमसि ॥ ७९० ॥ सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियासु नारीषु । स्वामिनि शक्तिसमेते निवेद्य दुःखं जनः सुखी भवति ॥ ७९१ ॥ प्राप्य चलानधिकाराञ्शत्रुषु मित्रेषु बन्धुवर्गेषु । नापकृतं नोपकृतं न सत्कृतं किं कृतं तेन ॥ ७९२ ॥ वित्तं परिमितमधिकव्ययशीलं पुरुषमाकुलीकुरुते । ऊनांशुकमिव पीनस्तनजघनायाः कुलीनायाः ॥ ७९३ ॥ अप्रतिबुद्धे श्रोतरि वक्तुर्वाक्यं प्रयाति वैफल्यम् । नयनविहीने भर्तरि लावण्यमिवेह खञ्जनाक्षीणाम् ॥ ७९४ ॥ बहुतर-हिते रसातल उत्तिष्ठन्ते हि सुमनसस्तपसि । कान्तारैजनवेगं विषह्य सद्रसफलास्तु विरलाः स्युः ॥ ७९५ ॥ प्रतिगृहकोणं गुणिनो लूताकीटा इव स्फुरन्ति शतम् । तद्भासकः स्वगोभिः को वा रविरिव गुणज्ञोऽस्ति ॥ ७९६ ॥ रमणीयः स हि पुरुषो रमणी यत्रैव रज्यति विदग्धा । श्लोकः स एव सुभगश्चित्तं सक्तं हि यत्र रसिकस्य ॥ ७९७ ॥ आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् । बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ ७९८ ॥ अबला यत्र प्रबला शिशुरवनीशो निरक्षरो मन्त्री । नहि नहि तत्र धनाशा जीविते आशापि दुर्लभा भवति ॥ ७९९ ॥ ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते । प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते जन्तुः ॥८००॥ राजनि विदुषां मध्ये वरसुरतानां समागमे स्त्रीणाम् । साध्वसदूषितहृदयो वाक्पटुरपि कातरो भवति ॥ ८०१ ॥ अलिरनुसरति परिमलं लक्ष्मीरनुसरति नयगुणसमृद्धिम् । निम्नमनुसरति सलिलं विधिलिखितं बुद्धिरनुसरति ॥ ८०२ ॥ स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति । संपूर्णेऽपि तडागे काकः कुम्भोदकं पिबति ॥ ८०३ ॥ किं क्रूरं फणिहृदयं पुनरपि किं क्रूरमङ्गनाहृदयम् । क्रूरात्क्रूरतरं किं पतिसुतधनहीनमङ्गनाहृदयम् ॥ ८०४॥ अनुकूलां विमलाङ्गीं कुलजां कुशलां सुशीलसंपन्नाम् । पञ्चलकारां भार्यां पुरुषः पुण्योदयाल्लभते ॥ ८०५ ॥ अरसिकजनभाषणतो रसिकजनैः सह वरं कलहः । लम्बकुचालिङ्गनतो लिकुचकुचापादताडनं श्रेयः ॥ ८०६ ॥ आपदि मित्रपरीक्षा शूरपरीक्षा रणाङ्गणे भाति । विनये वंशपरीक्षा स्त्रियः परीक्षा तु निर्धने पुंसि ॥ ८०७ ॥ अनवसरे च यदुक्तं सुभा-

१ अल्प वस्त्रम्. २ मूर्खे ३ खञ्जरीटनयनानाम् ४ त-रहिते रसातले. रसाल आम्रवृक्षे इत्यर्थः. ५ पुष्पाणि, (पक्षे) शोभनमनस. सुनय इत्यर्थं ६ माघमासे; (पक्षे) तपश्चर्यायाम्. ७ कान्तारमरण्यम्. दुर्गममार्ग इति यावत् तरसबन्धि एजनवेग कम्पनवेग विषह्य सहित्वा सद्रसानि फलानि येषामेवविधा विरलाः स्यु ; (पक्षे) कान्ता स्त्री रा द्रव्य जनवेगो जनसतापः एतान्मर्षयित्वा सद्रसो. मोक्षरसः स एव फल येषामे तादृशा विरला' स्युः. ८ प्रकाशक.. ९ स्वेन्द्रियै , (पक्षे) स्वकिरणै.. १० चतुरा. ११ अविश्वस्तम्. १२ जीवने. १३ भयम्. १४ वाग्मी.

षितं तच्च भवति हास्याय । रहसि प्रौढवधूनां रतिसमये वेदपाठ इव ॥ ८०८ ॥ मूर्खोऽपि न द्रष्टव्यो द्रष्टव्यश्चेन्न तेन सह तिष्ठेत् । यदि तिष्ठेन्न तु कथयेद्यदि कथयेन्मूर्खवत्कथयेत् ॥ ८०९ ॥ आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म । स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः ॥ ८१० ॥ अवसरपठिता वाणी गुणगणरहितापि शोभते पुंसाम् । रतिसमये युवतीनां भूषाहानिर्विभूषणं भवति ॥ ८११ ॥ अव्याकरणमधीतं भिन्नद्रोण्या तरंगिणीतरणम् । भेषजमपथ्यसहितं त्रयमिदमकृतं वरं न कृतम् ॥ ८१२ ॥ यः पठति लिखति पश्यति परिपृच्छति पण्डितानुपासयति । तस्य दिवाकरकिरणैर्नलिनीदलमिव विकास्यते बुद्धिः ॥ ८१३ ॥ विरला जानन्ति गुणान्विरलाः कुर्वन्ति निर्धनस्नेहान् । विरलाः परकार्यरताः परदुःखेनापि दुःखिता विरलाः ॥ ८१४ ॥ सरलो न कुटिलसङ्गं कुरुते यदि सद्गुणी भवेत्कुटिलः । कुरुते गुणोऽपि यावद्गुणो न भवेद्यथा शरो धनुषः ॥ ८१५ ॥ अनवसरे याचितमपि सत्पात्रमपि प्रकुप्यते दाता । रतिसमये च रुदन्तं प्रियमपि पुत्रं प्रकुप्यते माता ॥ ८१६ ॥ उद्वेजयति दरिद्रं परमुद्राया झणत्कारः । गृहपतिरातिमिलितायाः कङ्कणनादो यथा जारम् ॥ ८१७ ॥ कोऽन्धो योऽकार्यरतः को बधिरो यः शृणोति नैतानि । को मूको यः काले प्रियाणि वक्तुं न जानाति ॥८१८॥ कुत्र विधेयो ~~यत्नो वि~~द्याभ्यासे सदौषधे दाने । अवधीरणा क्व कार्या खलपरयोषित्परधनेषु ॥ ८१९ ॥ कुः विधेयो वासः सज्जनकण्ठे यथा काश्याम् । कः परिहार्यो देशः पिशुनयुतो लुब्धभूपश्च ॥ ८२० ॥ दधि मधुरं मधु मधुरं द्राक्षा मधुरा सुधापि मधुरैव । तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम् ॥८२१॥ अविदितपरमानन्दो वदति जनो विषयमेव रमणीयम् । तिलतैलमेव मिष्टं येन न दृष्टं घृतं क्वापि ॥ ८२२ ॥ रोगी चिरप्रवासी परान्नभोजी परावसथशायी । यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥ ८२३ ॥ को धर्मो भूतदया किं सौख्यं नित्यमरोगिता जगति । क स्नेहः सद्भावः किं पाण्डित्यं परिच्छेदः ॥ ८२४ ॥ दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् । वित्तं त्यागनियुक्तं दुर्लभमेतच्चतुष्टयं लोके ॥ ८२५ ॥ कल्पयति येन वृत्तिं येन च लोके प्रशस्यते सद्भिः । स गुणस्तेन च गुणिना रक्ष्यः संवर्धनीयश्च ॥ ८२६ ॥ दुर्जनगम्या नार्यः प्रायेणापात्रभृद्भवति राजा । कृपणानुसारि च धनं मेघो गिरिजलधिवर्षी च ॥ ८२७ ॥ कृतशतमसत्सु नष्टं सुभाषितशतं च नष्टमबुधेषु । वचनशतमवचनकरे बुद्धिशतमचेतने नष्टम् ॥ ८२८ ॥ चन्दनतरुषु भुजङ्गं जलेषु कमलानि तत्र च ग्राहाः । गुणघातिनश्च खला भोगेष्वलं सुखान्यविघ्नानि ॥ ८२९ ॥ दक्षः श्रियमधिगच्छति पथ्याशी कल्यतां सुखमरोगी । उद्युक्तो विद्यान्तं धर्मार्थयशांसि च विनीतः ॥८३०॥ निरतिशयं गरिमाणं तेन जनन्याः स्मरन्ति विद्वांसः । यत्कमपि वहति गर्भं महतामपि यो गुरुर्भवति ॥ ८३१ ॥ अप्रकटीकृतशक्तिः

शङ्कोऽपि जनस्तिरस्क्रियां लभते । निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः ॥८३२॥ विषमस्थस्वादुफलग्रहणव्यवसायनिश्चयो येषाम् । उष्ट्राणामिव तेषां मन्येऽहं शंसितं जन्म ॥ ८३३ ॥ दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम् । जयति तुलामधिरूढो भास्वानपि जलदपटलानि ॥ ८३४ ॥ आपदि येनोपकृतं येन च हसितं दशासु चान्त्यासु । उपकृदपकृदपि च तयोर्यस्तं पुरुषं परं मन्ये ॥ ८३५ ॥ असतो भवति सलज्जा क्षारं नीरं च शीतलं भवति । दम्भो भवति विवेकी प्रियवक्ता भवति धूर्तजनः ॥ ८३६ ॥ पश्यति परस्य युवतिं सकाममपि तन्मनोरथं कुरुते । ज्ञात्वैव तदप्राप्तिं व्यर्थं मनुजो हि पापभाग्भवति ॥ ८३७ ॥ स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि । मधुरापि हि मूर्छयते विषविटपिसमाश्रिता वल्ली ॥ ८३८ ॥ सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य । हस्ततुलयापि निपुणाः पलप्रमाणं विजानन्ति ॥ ८३९ ॥ कविहृदयेष्वनसूया कस्तूरीकर्दमेष्वमालिन्यम् । अक्षारता पयोधाववनीपालेषु पाण्डित्यम् ॥ ८४० ॥ वस्तुनि चिराभिलषिते कथमपि दैवात्प्रसक्तसंघटने । प्राक्प्राप्तान्यपि बहुशो दुःखानि परं सुखानि जायन्ते ॥ ८४१ ॥ विस्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकरः । नवतरुभङ्गध्वनिरिव हरिनिद्रातस्करः करिणः ॥ ८४२ ॥ सत्यपि च सुकृतकर्मणि दुर्नीतिश्चेच्छ्रियं हरत्येव । तैलैः सम्प्रयुक्तां दीपशिखां विदलयति हि वातालिः ॥ ८४३ ॥ उपचारः कर्तव्यो यावदनुत्पन्नसौहृदाः पुरुषाः । उत्पन्नसौहृदानामुपचारः कैतवं भवति ॥ ८४४ ॥ स्नेहो हि वरमघटितो न संजातविघटितस्नेहः । हृतनयनो हि विषादी न विषादी भवति स खलु जात्यन्धः॥८४५॥ नलिनीदलगतजलवत्तरलं किं यौवनं धनं चायुः । के शशधरकरनिकरानुकारिणः सज्जना एव ॥ ८४६ ॥ किं क्रूरं स्त्रीहृदयं किं गृहिणः प्रियहिताय दारगुणाः । कः कामः संकल्पः किं दुष्करसाधनं प्रज्ञा ॥ ८४७ ॥ दुश्चरितैरेव निजैर्भवति दुरात्मातिशङ्कितो नियतम् । दर्शनपथमापन्नं पन्नगकुलमाकुलीभवति ॥ ८४८ ॥ वितरति यावद्दाता तावत्सकलोऽपि भवति कलभाषी । विरते पयसि घनेभ्यः शाम्यन्ति शिखण्डिनां ध्वनयः ॥ ८४९ ॥ व्यसने मित्रपरीक्षा शूरपरीक्षा रणाङ्गणे भवति । विनये मित्रपरीक्षा दानपरीक्षा च दुर्भिक्षे ॥ ८५० ॥ आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम् । संतोषो भीरुत्वं षड् व्याघाता महत्त्वस्य ॥ ८५१ ॥ अप्येकवंशजनुषोः पश्यत पूर्णत्वतुच्छभाजोः । ज्याकार्मुकयोः कश्चिद्गुणभूतः कश्चिदपि भर्ता ॥ ८५२ ॥ अन्धत्वमन्धसमये बधिरत्वं बधिरकाल आलम्ब्य । श्रीकेशवयोः प्रणयी परमेष्ठी नाभिवास्तव्यः ॥ ८५३ ॥ नियतैः पदैर्निषेव्यं स्खलितेऽनर्थावहं समाश्रयति । संभवदन्यगतिः कः संक्रमकाष्ठं दुरीशं च ॥८५४॥ सम्यगनिष्पन्नः सन्योऽर्थस्त्वरया स्फुटीक्रियते । स व्यङ्ग्य एव भवति प्रथमो विनता-

१ विषवृक्षाश्रिता. २ लता. ३ विश्वस्त. ४ निद्रापहारी. ५ स्वदेशलोभः.

तनूज इव ॥ ८५५ ॥ अधरस्य मधुरिमाणं कुचकाठिन्यं दृशोस्तथा तैक्ष्ण्यम् । कविताया: परिपाकाननुभवरसिको विजानाति ॥ ८५६ ॥ सैव परं न विनश्यति तनुरपि या श्रीर्निवेदिता सत्सु । अविशिष्यति हिमांशोः सैव कला या स्थिता शंभोः ॥ ८५७ ॥ सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः । यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥ ८५८ ॥ निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् । पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥ ८५९ ॥ राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम् । सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥ ८६० ॥ वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु । कमलेषु पतन्त्यलयः करोति संगीतमलिषु पदम् ॥ ८६१ ॥ संनिहितेऽपि दुरापे वस्तुनि मनसोऽनवाप्तविषयस्य । भवति न संशयनाशो बहुशोऽप्याश्वास्यमानस्य ॥ ८६२ ॥ भोगाक्षमस्य रक्षां दृङ्मात्रेणैव कुर्वतोऽतिमुग्धस्य । वृद्धस्य प्रमदापि श्रीरपि भृत्यस्य भोगाय ॥ ८६३ ॥ सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः । विद्यते नहि स कश्चिदुपायः सर्वलोकपरितोषकरो यः ॥ ८६४ ॥ कस्यचित्किमपि नो हरणीयं मर्मवाक्यमपि नोच्चरणीयम् । श्रीपतेः पदयुगं स्मरणीयं लीलया भवजलं तरणीयम् ॥ ८६५ ॥ आसुरं कुलमनादरणीयं चित्तमेतदमलीकरणीयम् । रामधाम शरणीकरणीयं लीलया भवजलं तरणीयम् ॥ ८६६ ॥ जीवितं तदपि जीवितमध्ये गण्यते सुकृतिभिः किमु पुंसाम् । ज्ञानविक्रमकलाकुललज्जात्यागभोगरहितं विफलं यत् ॥ ८६७ ॥ लोक एष गतलोचनत्रयः कस्य वा न विवृणोति वाच्यताम् । लोचनोत्सवमशेषजीवनं यत्कलङ्कयति चन्द्रमण्डलम् ॥ ८६८ ॥ यः परस्य विषमं विचिन्तयेत्प्राप्नुयात्स कुमतिः स्वयं हि तत् । पूतना हरिवधार्थमाययौ प्राप सैव वधमात्मनस्ततः ॥८६९॥ राजमन्त्रिकविवैद्यदुर्जनद्वारपालवनिविप्रशस्त्रिणः । स्वाङ्गनाप्रबलपुत्रमर्मगा वैरिणां न सुखदास्त्रयोदश ॥८७०॥ शक्तिरर्थपतिषु स्वयंग्रहं प्रेम कारयति वा निरत्ययम् । कारणद्वयमिदं निरस्यतः प्रार्थनाधिकबले विपत्फला ॥८७१॥ काके शौचं द्यूतकारे च सत्यं सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः । क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता राजा मित्रं केन दृष्टं श्रुतं वा॥८७२॥ एको देवः केशवो वा शिवो वा एकं मित्रं भूपतिर्वा यतिर्वा । एका भार्या सुन्दरी वा दरी वा एको वासः पत्तने वा वने वा ॥ ८७३ ॥ चित्तायत्तं धातुबद्धं शरीरं नष्टे चित्ते धातवो यान्ति नाशम् । तस्माच्चित्तं सर्वदा रक्षणीयं स्वस्थे चित्ते बुद्धयः संभवन्ति ॥८७४॥ शुक्ले पक्षे शीतरश्मिर्बलीयान्न प्राधान्यं तारकायास्तु दृष्टम् । शक्त्या युक्ते विद्यमानेऽपि कान्ते न प्राधान्यं योषितां क्वापि दृष्टम् ॥ ८७५ ॥ दाता दानस्यान्तरा स्यात्पृथिव्यां गेहे गेहे याचकानां समूहः । चिन्तारत्नस्यास्ति सत्त्वे विवादो मार्गे मार्गे रेणवः सन्त्यसंख्याः

॥ ८७६ ॥ मांसं मृगाणां दशनौ[1] गजानां मृगद्विषां[2] चर्म फलं द्रुमाणाम्। स्त्रीणां स्वरूपं च नृणां हिरण्यमेते गुणा वैरकरा भवन्ति ॥ ८७७ ॥ शाठ्येन धर्मं कपटेन मित्रं परोपतापेन समृद्धिभावम्। सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये व्यक्तमपण्डितास्ते ॥८७८॥ राजा घृणी ब्राह्मणः सर्वभक्षी स्त्री चावशा दुष्टबुद्धिः सहायः। प्रेष्यः प्रतीपोऽधिकृतः प्रमादी त्याज्या इमे यश्च कृतं न वेत्ति ॥८७९॥ मूर्खो द्विजातिः स्थविरो गृहस्थः कामी दरिद्रो धनवांस्तपस्वी। वेश्या कुरूपा नृपतिः कदर्यो लोके षडेतानि विडम्बितानि ॥ ८८० ॥ दानं दरिद्रस्य प्रभोश्च शान्तिर्यूना तपो ज्ञानवता च मौनम्। इच्छानिवृत्तिश्च सुखान्वितानां दया च भूतेषु दिवं नयन्ति ॥ ८८१ ॥ अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च। वश्यश्च पुत्रोऽर्थकरी च विद्या षड्जीवलोकेषु सुखानि राजन् ॥ ८८२ ॥ आरोग्यमानृण्यमविप्रवासः संप्रत्यया वृत्तिरभीतिवासः। सद्भिर्मनुष्यैः सह संप्रयोगः षड्जीवलोकेषु सुखानि राजन् ॥ ८८३ ॥ मृतस्य लिप्सा[3] कृपणस्य दित्सा[4] विमार्गगायाश्च रुचिः स्वकान्ते। सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ न हि दृष्टपूर्वा ॥ ८८४ ॥ आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात्। दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥ ८८५ ॥ भार्यावियोगः स्वजनापवादो ऋणस्य शेषं कृपणस्य सेवा। दारिद्र्यकाले प्रियदर्शनं च विनाग्निना पञ्च दहन्ति कायम् ॥ ८८६ ॥ अश्वप्लुतं वासवगर्जितं च स्त्रीणा च चित्तं पुरुषस्य भाग्यम्। अवर्षणं चाप्यतिवर्षणं च देवो न जानाति कुतो मनुष्यः ॥ ८८७ ॥नृपस्य चित्तं कृपणस्य वित्तं मनोरथं दुर्जनमानुषाणाम्। स्त्रियश्चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्यः ॥ ८८८ ॥ किं पौरुषं रक्षति यो न वार्तान्कि वा धनं नार्थिजनाय यत्स्यात्। सा कि क्रिया या न हितानुबद्धा कि जीवितं साधुविरोधि यद्वै ॥ ८८९ ॥ अन्यायवित्तेन कृतोऽपि धर्मः सव्याज इत्याहुरशेषलोकाः। न्यायार्जितार्थेन स एव धर्मो निर्व्याज इत्यार्यजना वदन्ति ॥ ८९० ॥ यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा। निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ८९१ ॥ शास्त्रेषु निष्ठा सहजश्च बोधः प्रागल्भ्यमभ्यस्तगुणा च वाणी। कालानुरोधः प्रतिभानवत्त्वमेते गुणाः कामदुघाः क्रियासु ॥ ८९२ ॥ न स्वल्पमप्यध्यवसायभीरोः करोति विज्ञानविधिर्गुणं हि। अन्धस्य कि हस्ततलस्थितोऽपि प्रकाशयत्यर्थमिह प्रदीपः ॥ ८९३ ॥ न कस्यचित्कश्चिदिह स्वभावाद्भवत्युदारोऽभिमतः खलो वा। लोके गुरुत्वं विपरीततां वा स्वचेष्टितान्येव नरं नयन्ति ॥ ८९४ ॥ अपायसंदर्शनजां विपत्तिमुपायसदर्शनजा च सिद्धिम्। मेधाविनो नीतिविधिप्रयुक्तां पुरः स्फुरन्तीमिव दर्शयन्ति ॥ ८९५ ॥ दन्तस्य निर्घर्षणकेन

१ दन्तौ. २ सिंहव्याघ्रादीनाम्. ३ लोभ.. ४ दानेच्छा.

राजन्कर्णस्य कण्डूयनकेन वापि । तृणेन कार्यं भवतीश्वराणां किमङ्ग वाक्पाणिमता नरेण ॥ ८९६ ॥ त्यजेत्क्षुधार्ता महिलां स्वपुत्रं खादेत्क्षुधार्ता भुजगी स्वमण्डम् । बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति ॥ ८९७ ॥ दारेषु किंचित्स्वजनेषु किंचिद्गोप्यं वयस्येषु सुतेषु किंचित् । युक्तं न वा युक्तमिदं विचिन्त्य वदेद्विपश्चिन्महतोऽनुरोधात् ॥ ८९८ ॥ मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरंगैः । मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम् ॥ ८९९ ॥ त्याज्यं न धैर्यं विधुरेऽपि काले धैर्यात्कदाचिद्गतिमाप्नुयात्सः । यथा समुद्रेऽपि च पोतभङ्गे सांयात्रिको वाञ्छति तर्तुमेव ॥ ९०० ॥ दानेन तुल्यो विधिरस्ति नान्यो लोभाच्च नान्योऽस्ति परः पृथिव्याम् । विभूषणं शीलसमं न चान्यत्संतोषतुल्यं धनमस्ति नान्यत् ॥ ९०१ ॥ एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य । तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥ ९०२ ॥ क्षते प्रहारा निपतन्त्यभीक्ष्णं धनक्षये वर्धति जाठराग्निः । आपत्सु वैराणि समुद्भवन्ति छिद्रेष्वनर्था बहुलीभवन्ति ॥ ९०३ ॥ अर्थातुराणां न गुरुर्न बन्धुः कामातुराणां न भयं न लज्जा । विद्यातुराणां न सुखं न निद्रा क्षुधातुराणां न रुचिर्न वेला ॥ ९०४ ॥ विवाहकाले ऋतुसंप्रयोगे प्राणात्यये सर्वधनापहारे । विप्रस्य चार्थेऽप्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि ॥ ९०५ ॥ यत्रास्ति लक्ष्मीर्विनयो न तत्र अभ्यागतो यत्र न तत्र लक्ष्मीः । उभौ च तौ यत्र न तत्र विद्या नैकत्र सर्वो गुणसंनिपातः ॥ ९०६ ॥ द्वारि प्रविष्टः सहसा ततः किं दृष्टः प्रभुः स्मेरमुखस्ततः किम् । कथा श्रुता श्रोत्ररमा ततः किं व्यथा न शान्ता यदि जाठरीया ॥ ९०७ ॥ सुपात्रदानाच्च भवेद्धनाढ्यो धनप्रभावेण करोति पुण्यम् । पुण्यप्रभावात्सुरलोकवासी पुनर्धनाढ्यः पुनरेव भोगी ॥ ९०८ ॥ कुपात्रदानाच्च भवेद्दरिद्रो दारिद्र्यदोषेण करोति पापम् । पापप्रभावान्नरकं प्रयाति पुनर्दरिद्रः पुनरेव पापी ॥ ९०९ ॥ प्रभुर्विवेकी धनवांश्च दाता विद्वान्विरागी प्रमदा सुशीला । तुरंगमः शस्त्रनिपातधीरो भूमण्डलस्याभरणानि पञ्च ॥ ९१० ॥ स्वदेशजातस्य नरस्य नूनं गुणाधिकस्यापि भवेदवज्ञा । निजाङ्गना यद्यपि रूपराशिस्तथापि लोकः परदारसक्तः ॥ ९११ ॥ गन्धः सुवर्णे फलमिक्षुदण्डे नाकारि पुष्पं खलु चन्दनेषु । विद्वान्धनाढ्यो न तु दीर्घजीवी धातुः पुरा कोऽपि न बुद्धिदोऽभूत् ॥ ९१२ ॥ सर्पस्य रत्ने कृपणस्य वित्ते सत्याः कुचे केसरिणश्च केशे । मानोन्नताना शरणागते च मृतौ भवेदन्यकरप्रचारः ॥ ९१३ ॥ श्रुतिर्विभिन्ना स्मृतयश्च भिन्ना नैको मुनिर्यस्य वचः प्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥ ९१४ ॥ प्रागल्भ्यहीनस्य नरस्य विद्या शस्त्रं यथा कापुरुषस्य हस्ते । न तृप्तिमुत्पादयते शरीरे वृद्धस्य दारा इव दर्शनीयाः ॥ ९१५ ॥ राजाश्रयस्तस्करताश्वपण्यमाथर्वणं चापि समुद्रयानम् । एतानि सिध्यन्ति

महाफलानि विपर्यये प्राणहराणि पञ्च ॥ ९१६ ॥ स्वर्गच्युतानामिह भूमिलोके चत्वारि चिह्नानि वसन्ति देहे । दानप्रसङ्गो मधुरा च वाणी सुरार्चनं ब्राह्मणतर्पणं च ॥ ९१७ ॥ निरक्षरे वीक्ष्य महाधनत्वं विद्या न हेया विदुषा कदापि । रत्नावतंसाः कुलटाः समीक्ष्य किमार्यनार्यः कुलटा भवन्ति ॥ ९१८ ॥ गीर्भिर्गुरूणां परुषाक्षराभिस्तिरस्कृता यान्ति नरा महत्त्वम् । अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो वसन्ति ॥ ९१९ ॥ किमिष्टमन्नं खरसूकराणां किं रत्नहारो मृगपक्षिणां च । अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं शास्त्रकथाप्रसङ्गः ॥ ९२० ॥ ये शान्तदान्ताः श्रुतिपूर्णकर्णा जितेन्द्रियाः स्त्रीविषये निवृत्ताः । प्रतिग्रहे संकुचिताभिहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ ९२१ ॥ पतिव्रतायाः कुचकुम्भयुग्ममत्युग्रशार्दूलनखावलिश्च । वीरस्य शस्त्रं कृपणस्य वित्तं लभ्यानि चत्वारि तदन्तकाले ॥ ९२२ ॥ देशाटनं पण्डितमित्रता च वाराङ्गना राजसभाप्रवेशः । अनेकशास्त्रार्थविलोकनं च चातुर्यमूलानि भवन्ति पञ्च ॥ ९२३ ॥ न वेत्ति यो यस्य गुणप्रकर्षं स तं सदा निन्दति नात्र चित्रम् । यथा किराती करिकुम्भजातां मुक्तां परित्यज्य बिभर्ति गुञ्जाम् ॥ ९२४ ॥ गिरौ मयूरा गगने पयोदा लक्षान्तरेऽर्कश्च जलेषु पद्मम् । इन्दुर्द्विलक्षं कुमुदस्य बन्धुर्यो यस्य मित्रं न हि तस्य दूरम् ९२५ ॥ सुभाषितज्ञेन जनेन सार्कं संभाषणं सुप्रभुसेवनं च । आलिङ्गनं तुङ्गपयोधराणां प्रत्यक्षसौख्यं त्रयमेव लोके ॥ ९२६ ॥ अर्थो नराणां पतिरङ्गनानां वर्षा नदीनामृतुराट् तरूणाम् । स्वधर्मचारी नृपतिः प्रजानां गतं गतं यौवनमानयन्ति ॥ ९२७ ॥ जितेन्द्रियत्वं विनयस्य कारण गुणप्रकर्षो विनयादवाप्यते । गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागः प्रभवो हि संपदः ॥ ९२८ ॥ मनः पवित्रं सदनं विचित्रं स्तुत्य कलत्रं स्मरणीयगोत्रम् । आरोग्यगात्रं ध्रुवभाविपात्रं पुत्राः पवित्राः फलमीशभक्तेः ॥ ९२९ ॥ संपूर्णकुम्भो न करोति शब्दमर्धो घटो घोषमुपैति नूनम् । विद्वान्कुलीनो न करोति गर्वं गुणैर्विहीना बहु जल्पयन्ति ॥ ९३० ॥ अक्रोधवैराग्यजितेन्द्रियत्व क्षमादयाशान्तिजनप्रियत्वम् । निर्लोभदाता भयशोकहीनं ज्ञानस्य चिह्नं दशलक्षणानि ॥ ९३१ ॥ धिग्जीवितं शास्त्रकलोज्झितस्य धिग्जीवितं चोद्यमवर्जितस्य । धिग्जीवितं व्यर्थमनोरथस्य धिग्जीवितं ज्ञातिपराजितस्य ॥ ९३२ ॥ रूपं जरा सर्वसुखानि तृष्णा खलेषु सेवा पुरुषाभिमानम् । याच्ञा गुरुत्वं गुणमात्मपूजा चिन्ता बलं हन्त्यदया च लक्ष्मीम् ॥ ९३३ ॥ शुष्केन्धने वह्निरुपैति वृद्धिं बालेषु शोकश्चपलेषु कोपः । कान्तासु कामो निपुणेषु चित्तं धर्मो दयावत्सु महत्सु धैर्यम् ॥ ९३४ ॥ निर्वाणदीपे किमु तैलदानं चौरे गते वा किमु सावधानम् । वयोगते किं वनिताविलासः पयोगते किं खलु सेतुबन्धः ॥ ९३५ ॥ त्रिविक्रमोऽभूदपि वामनोऽसौ स शूकरश्चेति स वै नृसिंहः । नीचैरनीचैरतिनीचनीचैः सर्वैरुपायैः फलमेव

साध्यम् ॥ ९३६ ॥ कुग्रामवासः कुजनस्य सेवा कुभोजनं क्रोधमुखी च भार्या । मूर्खश्च पुत्रो विधवा च कन्या विनाग्निना संदहते शरीरम् ॥ ९३७ ॥ अल्पीयसामेव निवासभूमिं त्यागाद्विपत्तिर्महतां न जातु । रत्नाकरात्सन्मणयोऽभियान्ति राज्ञां शिरः काकमुखास्तु भेकाः ॥ ९३८ ॥ अनेकशास्त्रं बहु वेदितव्यमल्पश्च कालो बहवश्च विघ्नाः यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमध्यात् ॥ ९३९ ॥ अनन्तपारं किल शब्दशास्त्रं स्वल्पं तथायुर्बहवश्च विघ्नाः । सारं ततो ग्राह्यमपास्य फल्गु हंसो यथा क्षीरमिवाम्बुमध्यात् ॥ ९४० ॥ क्रोधो हि शत्रुः प्रथमो नराणां देहस्थितो देहविनाशनाय । यथा स्थितः काष्ठगतो हि वह्निः स एव वह्निर्दहते शरीरम् ॥ ९४१ ॥ यथा विहंगास्तरुमाश्रयन्ति नद्यो यथा सागरमाश्रयन्ति । यथा तरुण्यः पतिमाश्रयन्ति सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ९४२ ॥ यती व्रती चापि पतिव्रताश्च वीराश्च शूराश्च दयापराश्च । त्यागी च भोगी च बहुश्रुताश्च सुसङ्गमात्रेण दहन्ति पापम् ॥ ९४३ ॥ वसन्त्यरण्येषु चरन्ति दूर्वाः पिबन्ति तोयान्यपरिग्रहाणि । तथापि वध्या हरिणा नराणां को लोकमाराधयितुं समर्थः ॥ ९४४ ॥ न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् । धर्मो न वै यत्र च नास्ति सत्यं सत्यं न तद्यच्छलनानुविद्धम् ॥ ९४५ ॥ गुणेषु रज्यन्ति जगन्ति येषां स्वीयेषु तेषामवलेपमेव । पश्यन्ति रामाः स्तनं शातकुम्भं गिरिशदेहान्तरनिर्विशेषम् ॥ ९४६ ॥ वरं सखे सत्पुरुषायमाणो न नीचसंसर्गगुणैरलंकृतः । वरोऽश्वपादेन हतो विराजते न रासभस्योपरि संस्थितो नरः ॥९४७॥ आदित्यचन्द्रावनलानिलौ च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ ९४८ ॥ उपाधिभिः संततसंगतोऽपि नहि स्वभावं विजहाति भावः । आजन्म उन्मज्जति दुग्धसिन्धौ तथापि काकः किल कृष्ण एव ॥ ९४९ ॥ किं वा समस्तत्र विचारणीयं वासः प्रधानं खलु योग्यतायाः । पीताम्बरं वीक्ष्य ददौ स्वकन्यां चर्माम्बरं वीक्ष्य विषं समुद्रः ॥ ९५० ॥ श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव । आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥ ९५१ ॥ करोति कोऽशेषजनातिरिक्तां संभावनामर्थवतीं क्रियाभिः । संसत्सु जाते पुरुषाधिकारे न पूरणी तं समुपैति संख्या ॥ ९५२ ॥ श्रियः प्रदुग्धे विपदो रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि । संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः ॥ ९५३ ॥ नरस्य चिह्नं नरकागतस्य विरोधिता बन्धुजनेषु नित्यम् । सरोगता नीचजनेषु सेवा ह्यतीव दोषः कटुका च वाणी ॥ ९५४ ॥ लोलायताक्षीमवलेहिनीं च व्यये च शौचां कलहप्रियां च । निद्राभिभूतां सततं शयानामेवंविधां स्त्रीं परिवर्जयन्ति ॥९५५॥ स्थितो न खादामि हसन्न जल्पे गतं न शोचामि कृतं न मन्ये । द्वयोस्तृतीयो न भवामि

राजन्केनास्मि मूर्खो वद कारणेन ॥ ९५६ ॥ यस्मिन्कुले यः पुरुषः प्रधानः स सर्वयत्नेन हि रक्षणीयः । तस्मिन्विनष्टे कुलसारभूते तं नाभिमङ्गानपरे वहन्ति ॥ ९५७ ॥ पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् । सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥ ९५८ ॥ संचिन्त्य संचिन्त्य जगत्समस्तं त्रयः पदार्था हृदयं प्रविष्टाः । इक्षोर्विकाराः कृतयः कवीनां मुग्धाङ्गनापाङ्गतरङ्गितानि ॥९५९॥ वरं न राज्य न कुराजराज्यं वरं न मित्रं न कुमित्रमित्रम् । वरं न दारा न कुदारदारा वरं न शिष्यो न कुशिष्यशिष्यः ॥९६०॥ बालसखित्वमकारणहास्यं स्त्रीषु विवादमसज्जनसेवा । गर्दभयानमसंस्कृतवाणी षट्सु नरो लघुतामुपयाति ॥९६१॥ वयसि गते कः कामविकारः क्षीणे वित्ते कः परिवारः । शुष्के तीरे कः कासारो ज्ञाते तत्त्वे कः संसारः ॥ ९६२ ॥ जवो हि सप्तेः परमं विभूषणं त्रपाङ्गनायाः कृशता तपस्विनः । द्विजस्य विद्या नृपतेरपि क्षमा पराक्रमः शस्त्रबलोपजीविनाम् ॥ ९६३ ॥ धनेन किं यो न ददाति याचके बलेन किं यश्च रिपुं न बाधते । श्रुतेन किं यो न च धर्ममाचरेत्किमात्मना यो न जितेन्द्रियो भवेत् ॥ ९६४ ॥ श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा । निशा शशाङ्केन धृतिः समाधिना नयेन चालंक्रियते नरेन्द्रता ॥ ९६५ ॥ प्रकीर्णकेशामनवेक्ष्यकारिणीं सदा च भर्तुः प्रतिकूलभाषिणीम् । परस्य वेश्माभिरतामपत्रपामेवंविधां योषितमाशु वर्जयेत् ॥ ९६६ ॥ सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्तृमतीं विशङ्कते । अतः समीपे परिणेतुरिष्यते प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥ ९६७ ॥ मनीषिणः सन्ति न ते हितैषिणो हितैषिणः सन्ति न ते मनीषिणः । सुहृच्च विद्वानपि दुर्लभो नृणां यथौषधं स्वादु हितं च दुर्लभम् ॥ ९६८ ॥ परोऽवजानाति यदज्ञताजडस्तदुन्नतानां न विहन्ति धीरताम् । समानवीर्यान्वयपौरुषेषु यः करोत्यतिक्रान्तिमसौ तिरस्क्रिया ॥ ९६९ ॥ यदा विगृह्णाति हतं तदा यशः करोति मैत्रीमथ दूषिता गुणाः । स्थितिं समीक्ष्योभयथा परीक्षकः करोत्यवज्ञोपहतं पृथग्जनम् ॥ ९७० ॥ वनेषु दोषाः प्रभवन्ति रागिणां गृहेषु पञ्चेन्द्रियनिग्रहस्तपः । अकुत्सिते कर्मणि यः प्रवर्तते निवृत्तरागस्य गृहं तपोवनम् ॥ ९७१ ॥ सुजीर्णमन्नं सुविचक्षणः सुतः सुशासिता स्त्री नृपतिः सुसेवितः । सुचिन्त्य चोक्तं सुविचार्य यत्कृतं सुदीर्घकालेऽपि न याति विक्रियाम् ॥ ९७२ ॥ तृणानि नोन्मूलयति प्रभञ्जनो मृदूनि नीचैः प्रणतानि सर्वतः । समुच्छ्रितानेव तरून्प्रबाधते महान्महत्स्वेव करोति विक्रमम् ॥ ९७३ ॥ निमित्तमुद्दिश्य हि यः प्रकुप्यति ध्रुवं स तस्यापगमे प्रसीदति । अकारणद्वेषि मनस्तु यस्य वै कथं जनस्तं परितोषयिष्यति ॥ ९७४ ॥ न साहसैकान्तरसानुवर्तिना न चाप्यपायोपहतान्तरात्मना । विभूतयः शक्यमवाप्तुमूर्जिता नये च शौर्ये च वसन्ति संपदः ॥ ९७५ ॥ मुदं विषादः शरदं हिमागमस्तमो विवस्वान्सु-

कृतं कृतघ्नता । प्रियोपपत्तिः शुचमापदं नयः श्रियः समृद्धा अपि हन्ति दुर्णयः ॥ ९७६ ॥ उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति चोदिताः । अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥ ९७७ ॥ असत्यता निष्ठुरताकृतज्ञता भयं प्रमादोऽलसता विषादिता । वृथाभिमानो ह्यतिदीर्घसूत्रता तथाङ्गरौक्ष्यादिवि नाशनं श्रियः ॥ ९७८ ॥ दरिद्रता धीरतया विराजते कुरूपता शीलतया विराजते । कुभोजनं चोष्णतया विराजते कुवस्त्रता शुभ्रतया विराजते ॥ ९७९ ॥ यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः । तथा चतुर्भिः पुरुषः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा ॥ ९८० ॥ कुदेशमासाद्य कुतोऽर्थसंचयः कुपुत्रमासाद्य कुतो जलाञ्जलिः । कुगेहिनीं प्राप्य गृहे कुतः सुखं कुशिष्यमध्यापयतः कुतो यशः ॥ ९८१ ॥ मातासमं नास्ति शरीरपोषणं चिन्तासमं नास्ति शरीरशोषणम् । भार्यासमं नास्ति शरीरतोषणं विद्यासमं नास्ति शरीरभूषणम् ॥ ९८२ ॥ गुणी गुणं वेत्ति न वेत्ति निर्गुणो बली बलं वेत्ति न वेत्ति निर्बलः । पिको वसन्तस्य गुणं न वायसः करी च सिंहस्य बलं न मूषिकः ॥ ९८३ ॥ सुखं हि दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम् । सुखाच्च यो याति नरो दरिद्रतां धृतः शरीरेण मृतः स जीवति ॥ ९८४ ॥ स दीक्षितो यः सकलं सदीक्षते स पण्डितो यः करणैरखण्डितः । स तापसो यः परतापकर्षणः स धार्मिको यः परमर्म न स्पृशेत् ॥ ९८५ ॥ न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् । न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः ॥ ९८६ ॥ यशस्करे कर्मणि मित्रसंग्रहे प्रियासु नारीष्वधनेषु बन्धुषु । कृतौ विवाहे व्यसने रिपुक्षये धनव्ययस्त्वेषु न गण्यते बुधैः ॥ ९८७ ॥ विवादशीलां स्वयमर्थचोरिणीं परानुकूलां बहुपाकपाकिनीम् । सक्रोधिनीं चान्यगृहेषु वासिनीं त्यजन्ति भार्यां दशपुत्रमातरम् ॥ ९८८ ॥ तथारिभिर्न व्यथते शिलीमुखैः क्षितैर्दिगन्तैर्हृदयेन दूयता । स्वान्तं यथावक्रधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडितम् ॥ ९८९ ॥ अतिप्रचण्डा बहुदुःखभागिनी विवादशीला परगेहगामिनी । भर्तुः स्वयं निन्दति या च तस्करी त्यजेत्स्वभार्यां दशपुत्रपुत्रिणीम् ॥ ९९० ॥ कुले कलङ्कः कवले कदन्नता सुतः कुबुद्धिर्भवने दरिद्रता । रुजः शरीरे कलहप्रिया प्रिया गृहागमे दुर्गतयः षडेते ॥९९१॥ कुराज्यराज्येन कुतः प्रजासुखं कुमित्रमित्रेण कुतोऽस्ति निर्वृतिः । कुदारदारेषु कुतो गृहे रतिः कुशिष्यमध्यापयतः कुतो यशः ॥९९२॥ प्रकटं मृदु नाम जल्पतः परुषं सूचयतोऽर्थमन्तरा । शकुनादिव मार्गवर्तिभिः पुरुषादुद्विजितव्यमीदृशात् ॥९९३॥ मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा । इति घोषयतीव डिण्डिमं करिणो हस्तिपकाहतः क्वणन् ॥९९४॥ महतां यदि निन्दने रतिर्गुणसंख्यैव तदा विधीयताम् । असतामपि चेत्स्तवे रतिर्ननु तद्दूषणमेव गण्यताम् ॥९९५॥ अवगच्छति मूढचेतन

प्रियनाशं यदि शल्यमर्पितम् । स्थिरधीस्तु तदेव मन्यते कुशलद्वारतया समुद्धृतम् ॥ ९९६ ॥ महतस्तरसा विलङ्घयन्निजदोषेण कुधीर्विनश्यति। कुरुते न खलु स्वयेच्छया शलभानिन्धनमिद्धदीधितिः ॥ ९९७ ॥ क्रियते धवलः खलूच्चकैर्धवलैरेव सितेतरैरधः। शिरसौघमधत्त शंकरः सुरसिन्धोर्मधुजित्तमङ्घ्रिणा ॥ ९९८ ॥ कृतिर्नामकृती कथं कथं वा तुलनां यातु कृतैर्वचःप्रपञ्चैः। बहुभिर्विधृतैः कचैः कलापैर्विधवा किं सधवोपमानमेति ॥ ९९९ ॥ विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः । नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ १००० ॥ अरुचिर्निशया विना शशी शशिना सापि विना महत्तमः। उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥ १००१ ॥ मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः। अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥ १००२ ॥ उपकारकमायतेर्भृशं प्रशमः कर्मफलस्य भूरिणः। अनपायिनिबर्हणं द्विषां न तितिक्षासममस्ति साधनम् ॥ १००३ ॥ जरा रूपं हरति हि धैर्यमाशा मृत्युः प्राणान्धर्मचर्यामसूया। कामो ह्रियं वृत्तमनार्यसेवा क्रोधः श्रियं सर्वमेवाभिमानः ॥ १००४ ॥ मणिना वलयं वलयेन मणिर्मणिना वलयेन विभाति करः। कविना च विभुर्विभुना च कविः कविना विभुना च विभाति सभा ॥ १००५ ॥ शशिना च निशा निशया च शशिः शशिना निशया च विभाति नभः। पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः ॥ १००६ ॥ गुणवानपि नोपयाति पूजां पुरुषः सत्पुरुषैरकत्थ्यमानः । न हि सौरमणिः स्वभावकान्तिं रविपादैरनधिष्ठितः करोति ॥ १००७ ॥ सहसा विदधीत न क्रियामविवेकः परमापदां पदम्। वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥ १००८ ॥ विना गोरसं को रसो भोजनानां विना गोरसं को रसो भूपतीनाम्। विना गोरसं को रसः कामिनीनां विना गोरसं को रसः पण्डितानाम् ॥ १००९ ॥ सकलापि कला कलावतां विकला पुण्यकलां विना खलु। सकला नयना वृथा यथा तनुभाजां हि कनीनिका विना ॥ १०१० ॥ सुकुलजन्म विभूतिरनेकधा प्रियसमागमसौख्यपरंपरा। नृपकुले गुरुता विमलं यशो भवति पुण्यतरोः फलमीदृशम् ॥ १०११ ॥ कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रणिधीयते। न स विरौति न चापि हि शोभते भवति योजयितुर्वचनीयता ॥ १०१२ ॥ सहजमलिनवक्रभावभाजां भवति भवः प्रभवात्मनाशहेतुः। जलधरपदवीमवाप्य धूमो ज्वलनविनाशमनुप्रयाति नाशम् ॥ १०१३ ॥ परिहरत पराङ्गनानुषङ्गं बत यदि जीवितमस्ति वल्लभं वः। हरहर हरिणीदृशो निमित्तं दश दशकन्धरमौलयो लुठन्ति ॥१०१४॥ शिशुरपि निपुणो गुरोर्गरीयान्न तु वपुषैव महान्महत्प्रतिष्ठः। मणिरणुरपि भूषणाय पुंसां न तु पृथुलैव

१ ऐश्वर्यम् २ गौरवम् ३ सुवर्णालंकारसंग्रहयोग्य., ४ हीरकादि. ५ वङ्गे ६ निन्दा. ७ शास्त्रवेत्ता. ८ श्रेष्ठ.. ९ महत्सु प्रतिष्ठा यस्य.

शिला विलासहेतुः ॥१०१५॥ अनुदिनमनुकूलमाचरन्तं विहितमतिः प्रतिकूलमाचरेत्कः। शमितगरलजातकण्ठदाहः शितिकण्ठः शशिनं शिरःसु धत्ते ॥१०१६॥ नितम्बो विशालः कटिर्मध्यसूक्ष्मा कुचद्वन्द्वमत्यन्तभव्यं मुखं च। वचश्चेन्न किंचिद्रसालं रमण्यास्ततः किं ततः किं ततः किं ततः किम् ॥ १०१७॥ स्तब्धस्य नश्यति यशो विषमस्य मैत्री नष्टक्रियस्य कुलमर्थपरस्य धर्मः। विद्याफलं व्यसनिनः कृपणस्य सौख्यं राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ १०१८ ॥ दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः संतापयन्ति कमपथ्यभुजं न रोगाः। कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः कं स्वीकृता न विषया ननु तापयन्ति ॥ १०१९॥ वित्तेन किं वितरणं यदि नास्ति दीने किं सेवया यदि परोपकृतौ न यत्नः। किं संगमेन तनयो यदि नेक्षणीयः किं यौवनेन विरहो यदि वल्लभायाः ॥ १०२० ॥ किं भूषणं सुदृढमत्र यशो न रत्नं किं कार्यमार्यचरितं सुकृतं न दोषः। किं चक्षुरप्रतिहतं धिषणा न नेत्रं जानाति कस्त्वदपरः सदसद्विवेकम् ॥ १०२१ ॥ प्राप्ताः श्रियः सकलकामदुघास्ततः किं दत्तं पदं शिरसि विद्विषतां ततः किम्। संप्रीणिताः प्रणयिनो विभवैस्ततः किं कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ १०२२ ॥ आदौ न वा प्रणयिनां प्रणयो विधेयो दत्तोऽथवा प्रतिदिनं परिपोषणीयः। उत्क्षिप्य यत्क्षिपति तत्प्रकरोति लज्जां भूमौ स्थितस्य पतनाद्भयमेव नास्ति ॥ १०२३ ॥ वाञ्छैव सूचयति पूर्वतरं भविष्यं पुंसां यदन्यतनुजं त्वशुभं शुभं वा। विज्ञायते शिशुरजातकलापचिह्नः प्रत्युद्गतैरपसरन्सरसः कलापी ॥ १०२४ ॥ शस्त्रैर्हतास्तु रिपवो न हता भवन्ति प्रज्ञाहतास्च नितरां सुहता भवन्ति। शस्त्रं निहन्ति पुरुषस्य शरीरमेकं प्रज्ञा कुलं च विभवं च यशश्च हन्ति ॥ १०२५ ॥ स्थानेषु शिष्यनिवहैर्विनियुज्यमाना विद्या गुरुं हि गुणवत्तरमातनोति। आदाय शुक्तिषु बलाहकविप्रकीर्णै रत्नाकरो भवति वारिभिरम्बुराशिः ॥१०२६॥ वार्ता[1] च कौतुककरी[2] विमला च विद्या लोकोत्तरः परिमलश्च कुरंगनाभेः। तैलस्य बिन्दुरिव वारिणि दुर्निवारमेतत्त्रयं प्रसरति स्वयमेव भूमौ ॥ १०२७ ॥ अत्यन्तमन्थनकदर्थनमुत्सहन्ते मर्यादया नियमिताः किमु साधवोऽपि। लक्ष्मीसुधाकरसुधाद्युपनीय शेषे रत्नाकरोऽपि गरलं किमु नोज्जगार ॥ १०२८ ॥ अर्था हसन्त्युचितदानविहीनलुब्धं भूम्यो हसन्ति मम भूमिरिति ब्रुवाणम्। जारा हसन्ति तनयानुपलालयन्तं मृत्युर्हसत्यवनिपं रणरङ्गभीरुम् ॥ १०२९ ॥ वैद्या वदन्ति कफपित्तमरुद्विकाराञ्ज्योतिर्विदो ग्रहगतिं परिवर्तयन्ति। भूताभिषङ्ग[3] इति भूतविदो वदन्ति प्राचीनकर्म बलवन्मुनयो वदन्ति ॥ १०३० ॥ कस्यापि कोऽप्यतिशयोऽस्ति स तेन लोके ख्यातिं प्रयाति न हि सर्वविदस्तु सर्वे। किं केतकी फलति किं पनसः सुपुष्पः किं नागवल्ल्यपि च पुष्पफलैरुपेता ॥ १०३१ ॥ शी-

१ वृत्तान्त २ कुतूहलकारी. ३ भूतबाधा.

लावलम्बनमहर्निशमिष्टचिन्तावित्तानुरूपमशनाभरणादि कार्यम् । वार्यं च दुर्जनसमाजनिजप्रशंसाहास्यादि सज्जनवचो हृदये निधेयम् ॥ १०३२ ॥ पश्यन्ति नैव कवयो निजकाव्यदोषं भक्षन्ति नो बलिभुजो निजजातिमांसम् । जल्पन्ति नैव मधुपा निजमर्मवाक्यं कुर्वन्ति नो युवतयः पुरुषेषु बीजम् ॥ १०३३ ॥ कीर्तिं मृणालकमनीयभुजामनिन्द्रचन्द्राननां स्मितसरोरुहचारुनेत्राम् । ज्योत्स्नास्मितामपहृतां दयितामिव स्वां लब्धुं न कः परमुपक्रममातनोति ॥ १०३४ ॥ शास्त्रं सुनिश्चलधिया परिचिन्तनीयं सेव्यो नृपोऽपि सततं परिसेवनीयः । अङ्के स्थितापि युवतिः परिरक्षणीया शास्त्रे नृपे च युवतौ च कुतः स्थिरत्वम् ॥ १०३५ ॥ हंसो विभाति नलिनीदलतालमध्ये सिंहो विभाति गिरिगह्वरकन्दरासु । जात्यो विभाति तुरगो रणयुद्धमध्ये विद्वान्विभाति पुरुषेषु विचक्षणेषु ॥ १०३६ ॥ हंसो न भाति बलिभोजनवृन्दमध्ये गोमायुमण्डलगतो न विभाति सिंहः । जात्यो न भाति तुरगः खरयूथमध्ये विद्वान्न भाति पुरुषेषु निरक्षरेषु ॥ १०३७ ॥ विश्वेश्वररतु सुधिया गलितेऽपि भेदे भावेन भक्तिसहितेन समर्चनीयः । प्राणेश्वरश्चतुरया मिलितेऽपि चित्ते चैलाञ्चलव्यवहितेन निरीक्षणीयः ॥ १०३८ ॥ किं कोकिलस्य विरुतेन गते वसन्ते किं कातरस्य बहुशस्त्रपरिग्रहेण । मित्रेण किं व्यसनकालपराङ्मुखेन किं जीवितेन पुरुषस्य निरक्षरेण ॥ १०३९ ॥ हारः प्रलम्बितपयोधरमध्यवर्ती शुष्कस्तनान्तरगतो वरकञ्चुकश्च । काणेक्षणाञ्जनममूर्ध्नि च पुष्पमाला दीनाश्रयो बुधजनः खलु पञ्च दुःखम् ॥ १०४० ॥ नीचं समृद्धमपि सेवति नीच एव तं दूरतः परिहरन्ति पुनर्महान्तः । शाखोटकं मधुरपक्वफलैरुपेतं सेवन्ति वायसगणा न तु राजहंसः ॥ १०४१ ॥ दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रावसानसमये विहितोदयोऽपि । चन्द्रस्तथापि हरवल्लभतामुपैति नाङ्गीकृतेषु गुणदोषविचारणा स्यात् ॥१०४२॥ माकन्दराजपरिरम्भणलालितापि मल्लीवधूर्मधुपरागवती बभूव । दृष्ट्वापि तत्कुटिलतां न जहाति चूतः प्रायः कुजातिनिवहेषु कुतोऽभिमानः ॥ १०४३ ॥ कालक्रमेण परिणामवशादनव्या भावा भवन्ति खलु पूर्वमतीव तुच्छाः । मुक्तामणिर्जलदतोयकणोऽप्यणीयान्संपद्यते च चिरकीचकरन्ध्रमध्ये ॥ १०४४ ॥ यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसापि न कृतं तदिहाभ्युपैति । इत्थं विधेर्विधिविपर्ययमाकलय्य सन्तः सदा सुरसरित्तटमाश्रयन्ति ॥१०४५॥ अन्तःप्रतप्तमरुसैकतदह्यमानमूलस्य चम्पकतरोः क्व विकाशचिन्ता । प्रायो भवत्यनुचितस्थितिदेशभाजां श्रेयः स्वजीवपरिपालनमात्रमेव ॥ १०४६ ॥ उचितमनुचितं वा कुर्वता कार्यजातं परिणतिरवधार्या यत्नतः पण्डितेन । अतिरभसकृतानां कर्मणामा विपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १०४७ ॥ व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न

१ कार्यसमूहम् २ परिणाम.

खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते । विकसति हि पतङ्गस्योदये पुण्डरीकं द्रवति हिमरश्मावुद्गते चन्द्रकान्तः ॥ १०४८ ॥ प्रथमदिवसचन्द्रः सर्वलोकैकवन्द्यः स सकलकलाभिः पूर्णचन्द्रो न वन्द्यः । अतिपरिचयदोषात्कस्य नो मानहानिर्नवनवगुण प्रायशः सर्वलोकः ॥ १०४९ ॥ शशिनि खलु कलङ्कः कण्टकः पद्मनाले जलधिजलमपेयं पण्डिते निर्धनत्वम् । दयितजनवियोगो दुर्भगत्वं स्वरूपे धनवति कृपणत्वं रत्नदोषी विधाता ॥ १०५० ॥ भवति हृदयहारी कोऽपि कस्यापि हेतुर्न खलु गुणविशेषः प्रेमबन्धप्रयोगे । किसलयितवनान्ते कोकिलारावरम्यो विकसति न वसन्ते मालती कोऽत्र हेतुः ॥ १०५१ ॥ परीवादस्तथ्यो भवतु वितथो वापि भुवने तथाप्युच्चैर्धाम्नो हरति महिमानं जनरवः । तुलोत्तीर्णस्यापि प्रकटनिहताशेषतमसो रवेस्तादृक्तेजो न हि भवति कन्यागत इव ॥ १०५२ ॥ बहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति । जनं विद्वानेकः सकलमभिसंधाय कपटैस्तटस्थैः स्वानर्थान्घटयति च मौनं च भजते ॥ १०५३ ॥ कलारत्नं गीतं गगनतलरत्नं दिनमणिः सभारत्नं विद्वाञ्श्रवणपटुरत्नं हरिकथा । निशारत्नं चन्द्रः शयनतलरत्नं शशिमुखी महीरत्नं श्रीमाञ्जयति रघुनाथो नृपवरः ॥ १०५४ ॥ परिच्छिन्नः स्वादोऽमृतगुडमधुक्षौद्रपयसां कदाचिद्वाभ्यासाद्भजति खलु वैरस्यमधिकम् । प्रियाबिम्बोष्ठे वा रुचिरकविवाक्येष्वनवधिर्नवानन्दः कोऽपि स्फुरति तु रसोऽसौ निरुपमः ॥ १०५५ ॥ नराः संस्कारार्हा जगति किल केचित्सुकृतिनः समानायां जात्यामपि वयसि सत्यां परधियः । अयं दृष्टान्तोऽत्र स्फुटकरगतोऽत्यभ्यसनतः शुकः श्लोकान्वक्तुं प्रभवति न काकः क्वचिदपि ॥ १०५६ ॥ वरं तुङ्गाच्छृङ्गाद्गुरुशिखरिणः क्वापि पुलिने पतित्वायं कायः कठिणदृषदन्तर्विदलितः । वरं न्यस्तो हस्तः फणिपतिमुखे तीव्रदशने वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ १०५७ ॥ विदैवज्ञं ग्रामं विबुधविधुरां भूपतिसभां मुखं श्रुत्या हीनं मनुजपतिशून्यं च विषयम् । अनाचारान्दारानपहरिकथं काव्यमपि च प्रवक्तृत्वापेतं गुरुमपि सुबुद्धिः परिहरेत् ॥ १०५८ ॥ मणिः शाणोल्लीढः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः । कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥ १०५९ ॥ परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये स पश्चात्संपूर्णः कलयति धरित्रीं तृणसमाम् । अतश्चानैकान्त्याद्गुरुलघुतयार्थेषु धनिनामवस्था वस्तूनि प्रथयति च संकोचयति च ॥ १०६० ॥ किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः । किमाराध्यं पुण्यं किमभिलषणीयं च करुणा यदासक्त्या चेतो निरवधि विमुक्तौ प्रभवति ॥ १०६१ ॥ वरं मौनं कार्यं न च

१ दहिताम्. २ देशम्. ३ निकषपाषाणेनोल्लिखिता. ४ आयुधैः कृतक्षत.. ५ हस्ती. ६ शुष्क.

वचनमुक्तं यदनृतं वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् । वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचिर्वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥ १०६२ ॥ वरं शून्या शाला न च खलु वरो दुष्टवृषभो वरं वेश्या पत्नी न पुनरविनीता कुलवधूः । वरं वासोऽरण्ये न पुनरविवेकाधिपपुरे वरं प्राणत्यागो न पुनरधमानामुपगमः ॥१०६३॥ दृढः प्रेमा भग्नः सदसिरिव संधिं न भजते भजेतापि प्रायः स्खलति खलु यत्नैरपि धृतः । स्खलेन्नो चेत्साम्यं भजति न भजेद्वा न भवति च्युताशङ्कश्चेत्स्यात्स्मृतिमुपगतस्तु व्यथयति ॥१०६४॥ इयं प्रीतिर्वल्ली हृदयभुवि दैवात्समुदिता तथा यत्नाद्रक्ष्या प्रकृतिमृदुलापायबहुला । यथा नैनां स्फीतां पिशुनजनदुर्वाक्यदहनो दहत्यन्तः शोषं व्रजति न पुनः सौहृदनिधे ॥ १०६५ ॥ न रम्यं नारम्यं प्रकृतिगुणतो वस्तु किमपि प्रियत्वं यत्र स्यादितरदपि तद्ग्राहकवशात् । रथाङ्गाह्वानानां भवति विधुरङ्गारशकटी पटीरम्भः कुम्भः स भवति चकोरीनयनयोः ॥ १०६६ ॥ अरण्यं सारङ्गैर्गिरिकुहरगर्भाश्च हरिभिर्दिशो दिङ्मातङ्गैः सलिलमुषितं पङ्कजवनैः । प्रियाचक्षुर्मध्यस्तनवदनसौन्दर्यविजितैः सतां माने म्लाने मरणमथवा दूरगमनम् ॥ १०६७ ॥ नभोभूषा पूषा कमलवनभूषा मधुकरो वचोभूषा सत्यं वरविभवभूषा वितरणम् । मनोभूषा मैत्री मधुसमयभूषा मनसिजः सदोभूषा सूक्तिः सकलगुणभूषा च विनयः ॥ १०६८ ॥ कलासीमा काव्यं सकलगुणसीमा वितरणं भये सीमा मृ-सकलसुखसीमा सुवदना । तपःसीमा मुक्तिः सकलकृतिसीमा धृतिभृतिः प्रिये सीमाह्लश्रवणसुखसीमा हरिकथा ॥ १०६९ ॥ शशी दिवसधूसरो गलितयौवना कामिनी सविगतवारिजं मुखमनक्षरं स्वाकृतेः । प्रभुर्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गणगतखलो मनसि सप्त शल्यानि मे ॥ १०७० ॥ प्रसरति मनः कार्यारम्भे दृढीभवति स्पृहा स्वयमुपनयन्नर्थान्मन्त्रो न गच्छति विप्लवम् । फलति सकलं कृत्यं चित्तं समुन्नतिमश्नुते भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ १०७१ ॥ सरसि बहुशस्ताराच्छाये क्षणात्परिवञ्चितः कुमुदविटपान्वेषी हंसो निशासु विचक्षणः । न दशति पुनस्ताराशङ्की दिवापि सितोत्पलं कुहकचकितो लोकः सत्येऽप्यपायमपेक्षते ॥ १०७२ ॥ स्वफलनिचयः शाखाभङ्गं करोति वनस्पतेर्गमनमलसं बर्हाटोपः करोति शिखण्डिनः । चतुरगमनो जात्यो योऽश्वः स गौरिव वाह्यते गुणवति जने प्रायेणैते गुणाः खलु दूषणम् ॥ १०७३ ॥ कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं निरुपमरसप्रीत्या खादन्नरास्थि निरामिषम् । सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते नहि गणयति क्षुद्रो जन्तुः परिग्रहफल्गु-

---

१ नपुंसकत्वम्. २ दुश्चरिता. ३ मृगैः. ४ सिंहै. ५ दिग्गजै. ६ सूर्य.. ७ सभा. ८ दरिद्रः. ९ कीटकसमूहैर्व्याप्तम्. १० लालयार्द्रम्. ११ आमगन्धि. १२ गर्हितम्. १३ निर्मांसम् १४ इन्द्रम्. १५ क्षुद्रकत्वम्.

ताम् ॥ १०७४ ॥ अविनयभुवामज्ञानानां शमाय भवन्नपि प्रकृतिकुटिलाद्विद्याभ्यासः खलत्वविवृद्धये। फणिभयभृतामस्तु च्छेदक्षमस्तमसामसौ विपधरफणारत्नालोको भयं तु भृशायते ॥ १०७५ ॥ यदि परगुणा न क्षम्यन्ते यतस्व गुणार्जने न हि परयशो निन्दाव्याजैरलं परिमार्जितुम्। विरमसि न चेदिच्छाद्वेषप्रसक्तमनोरथो दिनकरकरान्पाणिच्छत्रैर्नुदञ्छ्रममेष्यसि ॥ १०७६ ॥ मधुकरगणश्चूतं त्यक्त्वा गतो नवमल्लिकां पुनरपि गतो रक्ताशोकं कदम्बवनं ततः। तदपि सुचिरं स्थित्वा तेभ्यः प्रयाति सरोरुहं परिचितजनद्वेषी लोको नवं नवमीहते ॥ १०७७ ॥ दद्यात्साधुर्यदि निजपदे दुर्जनाय प्रवेशं तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः। तस्माद्देयो विपुलमतिभिर्नावकाशोऽधमानां जारोऽपि स्याद्गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥ १०७८ ॥ मौने मौनी गुणिनि गुणवान्पण्डिते पण्डितोऽसौ दीने दीनः सुखिनि सुखवान्भोगिनि प्राप्तभोगः। मूर्खे मूर्खो युवतिषु युवा वाग्मिषु प्रौढवाग्मी धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः ॥ १०७९ ॥ विद्यातीर्थे जगति विबुधाः साधवः सत्यतीर्थे गङ्गातीर्थे मलिनमनसो योगिनो ध्यानतीर्थे। धारातीर्थे धरणिपतयो दानतीर्थे धनाढ्या लज्जातीर्थे कुलयुवतयः पातकं क्षालयन्ति ॥ १०८० ॥ नूर्वीस्त्रीणां दयिते विरहे मानिनां मानभङ्गे सच्छोकानामपि जनरवे निग्रहे पण्डितानाम्। खल्योद्रेके कुटिलमनसां निर्गुणानां विदेशे भृत्याभावे भवति मरणं किं तु संभावितानाम् ॥ १०८१ ॥ शीतेऽतीते वसनमशनं वासरान्ते निशान्ते क्रीडारम्भः कुवलयदृशां यौवनान्ते विवाहः। सेतोर्बन्धः पयसि चलिते वार्धके तीर्थयात्रा वित्तेऽतीते वितरणमतिं कर्तुमिच्छन्ति मूढाः ॥ १०८२ ॥ श्रेयो नूनं व्रजति स पुमाञ्शिक्षया वर्धितो यः स्वच्छन्दं यश्चरति स पराभूतिमाप्नोति काले। पूज्यो वेणुर्भवति च नतिं प्रापितो भूपतीनामन्यं नृत्तोचितमिति खरे नर्तकाः कल्पयन्ति ॥ १०८३ ॥ बाले बाला विदुषि विबुधा गायके गायकेशाः शूरे शूरा निगमविदि चाम्नायलीलागृहाणि। सिद्धे सिद्धा मुनिषु मुनयः सत्सु सन्तो महान्तः प्रौढे प्रौढाः किमिति वचसा तादृशा यादृशेषु ॥ १०८४ ॥ चान्द्रीं लेखां दशति दशनैर्दारुणः सैंहिकेयो नव्यां वल्लीं दवदहनकश्चान्दनीं दंदहीति। अत्युन्मत्तः कुवलयमयीं मालिकामालुनीते मूलादुन्मूलयति नलिनीं दुष्टहस्ती करेण ॥१०८५॥ यावत्स्वस्थमिदं शरीरमरुजं[1] यावज्जरा दूरतो यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः। आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्संदीप्ते भवने तु कूपखननं प्रत्युद्यमः[2] कीदृशः ॥ १०८६ ॥ पाथोधिं विनिधाय पाणिपुटके कुम्भोद्भवः पीतवान्विन्ध्याद्रिं नमयांचकार चपणां वृद्धेर्मतिं कुण्ठवान्। नायं कुम्भगुणः कदापि घटते नो वा कुलालात्मनां श्रीमन्माधवपादपद्ममहिमा सोऽयं समुज्जृम्भते ॥ १०८७ ॥ निर्वृत्ताध्वरकृत्य[3] ऋत्विज-

१ रुजारहितम्. २ प्रतीकारार्थमुद्योगः. ३ संपादितयज्ञकृत्य.

महोत्तीर्णापगो[1] नाविकं युद्धान्ते सुभटं च सिद्धविजयो वोढारमाप्तस्थलः[2] । वृद्धं वारवधूजनं च कितवो[3] निर्वृष्टतद्यौवनो ध्वस्ततातङ्कचयश्चिकित्सकमपि[4] द्वेष्टि मदेयार्थिनम् ॥ १०८८ ॥ मित्रं स्वच्छतया रिपुं नयबलैर्लुब्धं[6] धनैरीश्वरं कार्येण द्विजमादरेण युवतिं प्रेम्णा शमैर्बान्धवान् । अत्युग्रं स्तुतिभिर्गुरुं प्रणतिभिर्मूर्खं कथाभिर्बुधं विद्याभी रसिकं रसेन सकलं शीलेन कुर्याद्वशम् ॥ १०८९ ॥ दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालनाद्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् । ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयान्मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ १०९० ॥ कोऽर्थान्प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गताः स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः । कः कालस्य न गोचरान्तरगतः कोऽर्थी गतो गौरवं को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥ १०९१ ॥ वैद्यं[5] पानरतं नटं कुपठिनं स्वाध्यायहीनं द्विजं योधं कापुरुषं हयं गतरयं मूर्खं परिव्राजकम् । राजानं च कुमन्त्रिभिः परिवृतं देशं च सोपद्रवं भार्यां यौवनगर्वितां पररतां मुञ्चन्ति ते पण्डिताः ॥ १०९२ ॥ वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं मन्त्रिणः । पुष्पं पर्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः सर्वे कार्यवशाज्जनोऽभिरमते तत्कस्य को वल्लभः ॥ १०९३ ॥ सन्तश्चेदमृतेन किं यदि खलस्तत्कालकूटेन कि दातारो यदि कल्पशाखिभिरल यद्यर्थिनः किं तृणैः । किं कर्पूरशलाकया यदि दृशः पन्थानमेति प्रिया संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ॥ १०९४ ॥ लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् । सौजन्यं यदि किं गुणैः स्वमहिमा यद्यस्ति किं मण्डनैः सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ १०९५ ॥ स्वर्गः किं यदि वल्लभा निजवधूः किं वा विभूषाविधिर्लावण्यं यदि किं सुधाकरकरैः शृङ्गारगर्भा गिरः । मृत्युः किं यदि दुर्जनेष्ववनतिः किं धिग्यदि प्रार्थना प्राप्तेष्टः कारिकेतनो यदि भवेत्किं कल्पभूमीरुहैः ॥ १०९६ ॥ राजा धर्मविना द्विजः शुचिविना ज्ञानं विना योगिनः कान्ता सत्यविना हयो गतिविना भूषा च ज्योतिर्विना । योद्धा शौर्यविना तपो व्रतविना छन्दोविना गायनं भ्राता स्नेहविना नरो हरिविना मुञ्चन्ति शीघ्रं बुधाः ॥ १०९७ ॥ छेदश्चन्दनचूतचम्पकवने रक्षापि शाखोटके हिंसा हंसमयूरकोकिलकुले काकेषु नित्यादरः । मातङ्गेन खरक्रयः समतुला कर्पूरकार्पासयोरेषा यत्र विचारणा गुणिगणे देशाय तस्मै नमः ॥ १०९८ ॥ या राका शशिशोभना गतघना सा यामिनी यामिनी या सौन्दर्यगुणा-

१ उत्तीर्णा नदी येन स.. २ योढारम्. ३ धूर्तं. ४ निरस्तरोगसचय.. ५ वैद्यम्. ६ नीतिशक्तिभिः. ७ दुष्टता.

न्विता पतिरता सा कामिनी कामिनी । या गोविन्दरसप्रमोदमधुरा सा माधुरी माधुरी या लोकद्वयसाधनी तनुभृतां सा चातुरी चातुरी ॥ १०९९ ॥ किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोदयः । किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे कः शत्रुर्वद खेददानकुशलो दुर्वासनासंचयः ॥ ११०० ॥ क्षान्तिश्चेद्वचनेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् । किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्यानवद्या यदि व्रीडा चेत्किमु भूषणैः सुकविता यद्यास्ति राज्येन किम् ॥ ११०१ ॥ सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः स्निग्धं मित्रमवञ्चकः परिजनो निःक्लेशलेशं मनः । आकारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखं तुष्टे विष्टपहारिणीष्टदहरौ संप्राप्यते देहिना ॥ ११०२ ॥ का श्लाघ्या गुणिनां क्षमा परिभवः को यः स्वकुल्यैः कृतः किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते । को मृत्युर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः कैर्विज्ञातमिदं विराटनगरे छन्नास्थितैः पाण्डवैः ॥ ११०३ ॥ स स्निग्धोऽकुशलान्निवारयति यस्तत्कर्म यन्निर्मलं सा स्त्री यानुविधायिनी स मतिमान्यः सद्भिरभ्यर्च्यते । सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया मुच्यते तन्मित्रं यदकृत्रिमं स पुरुषो यः खिद्यते नेन्द्रियैः ॥ ११०४ ॥ प्रायेणात्र कुलान्वितं कुकुलजाः श्रीवल्लभं दुर्भगा दातारं कृपणा ऋजूननृजवो वित्तान्वितं निर्धनाः । वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनो नानाशास्त्रविचक्षणं च पुरुषं निन्दन्ति मूर्खा जनाः ॥ ११०५ ॥ पौलस्त्यः[1] कथमन्यदारहरणे दोषं न विज्ञातवान्रामेणापि कथं न हेमहरिणस्यासंभवो लक्षितः । अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥ ११०६ ॥ सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान्पाणिनेर्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम् । छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलमज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ॥ ११०७ ॥ शक्तेनापि सता जनेन विदुषा कालान्तरप्रेक्षिणा वस्तव्यं खलु वज्रपातविषमे क्षुद्रेऽपि पापे जने । दर्व्या व्यग्रकरेण धूममलिनेनायासयुक्तेन किं भीमेनातिबलेन मत्स्यभवनेऽपूपा न संघट्टिताः ॥ ११०८ ॥ सिद्धिं वाञ्छयता जनेन विदुषा तेजो निगृह्य स्वकं सत्त्वोत्साहवतापि दैवगतिषु स्थैर्यं प्रकार्यं क्रमात् । देवेन्द्रद्रविणोपमैर्बहुगुणैरभ्यर्चितो भ्रातृभिः किं क्लिष्टः सुचिरं विराटभवने पूर्वं न धर्मात्मजः ॥ ११०९ ॥ रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना गन्तव्यानि दिनानि दैववशतो भूयो धनं वाञ्छता । सैरन्ध्रीति विगर्हिता युवतिभिः साक्षेपमाज्ञाभयाद्द्रौपद्या[2] किल मत्स्यराजभवने घृष्टं न किं चन्दनम् ॥ १११० ॥ किं चित्रं यदि

१ रावणः. २ पार्श्व.

राजनीतिकुशलो राजा भवेद्धार्मिकः किं चित्रं यदि वेदशास्त्रनिपुणो विप्रो भवेत्पण्डितः । तच्चित्रं यदि रूपयौवनवती साध्वी भवेत्कामिनी तच्चित्रं यदि निर्दयोऽपि पुरुषः पापं न कुर्यात्क्वचित् ॥ ११११ ॥ वासांसि व्रजचारिवारिजदृशां हृत्वा हठादुच्चकैर्यः प्राग्भूरुहमारुरोह स पुनर्वस्त्राणि विस्तारयन् । व्रीडाभारमपाचकार सहसा पाञ्चालजायाः स्वयं को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी ॥ १११२ ॥ अर्थी लाघवमुच्छ्रितो निपतनं कामातुरो लाञ्छनं[1] निःस्वो[2] वञ्चनमुन्मना[3] विकलतां दोषाकुलः संशयम् । लुब्धोऽकीर्तिमसंगरः[4] परिभवं दुष्टोऽन्यदोषे रतिं दुर्वागप्रियतां[5] दुरोदरवशः[6] प्राप्नोति कष्टं मुहुः ॥ १११३ ॥ नीतिर्भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां[7] रतिर्दम्पत्योः शिशवो गृहस्य कविता बुद्धेः प्रसादो[8] गिराम् । लावण्यं वपुषः श्रुतं सुमनसः शान्तिर्द्विजस्य क्षमा शक्तस्य द्रविणं गृहाश्रमवतां स्वास्थ्यं सतां मण्डनम् ॥ १११४ ॥ कार्पण्येन यशः क्रुधा[9] गुणचयो[10] दम्भेन सत्यं क्षुधा मर्यादा व्यसनैर्धनं च विपदा स्थैर्यं प्रमादैर्द्विजः । पैशुन्येन कुलं मदेन विनयो दुश्चेष्टया पौरुषं दारिद्र्येण जनादरो ममतया चात्मप्रकाशो हतः ॥ १११५ ॥ चन्द्रे लाञ्छनता हिमं हिमगिरौ क्षारं जलं सागरे बद्धश्चन्दनपादपो विषधरैः रत्नेषु काठिन्यता । स्त्रीरत्नेषु जरा कुचेषु पतनं विद्वत्सु दारिद्र्यता सर्वं रत्नमुपद्रवेण सहितं निर्दोषमेकं यशः ॥ १११६ ॥ पुण्यं स्वातिजलं सरित्सु पतितं शुक्तौ च मुक्ताफलं कर्पूरं कदलीवनेषु गरलं व्याले स्थले कर्दमः । क्षीरं क्षीरनिधौ तदम्बुपतितं क्षारोदकं सागरे इच्छादानपरोपकारकरणं पात्रानुरूपं फलम् ॥ १११७ ॥ तारुण्यं तरुणीजने विकचता पुष्पे विधौ चन्द्रिका कासारे कुमुदं वने पिचुवनं दानं द्विपेऽनर्गले । आनृण्यं गृहिणां गृहस्य गृहिणीपित्रोः शुभा संततिर्लावण्यं तनुते द्विजेऽतिपलिते विद्वच्चतुर्थाश्रमः ॥१११८॥ माधुर्यं प्रमदाजनेषु ललितं दाक्षिण्यमार्ये जने शौर्यं शत्रुषु नम्रता गुरुजने धर्मिष्ठता साधुषु । मर्मज्ञेष्वनुवर्तनं बहुविध मानं जने पण्डिते शाठ्यं पापिजने नरस्य कथिताः पर्यन्तमष्टौ गुणाः ॥ १११९ ॥ इन्दुं निन्दति तस्करो गृहपतिं जारो सुशीलं खलः साध्वीमप्यसती कुलीनमकुलो जह्याज्जरत्वं युवाम् । विद्यावन्तमनक्षरो धनपतिं नीचश्च रूपोज्ज्वलं वैरूप्येण हतः प्रबुद्धमबुधो कृष्ट निकृष्टो जनः ॥ ११२० ॥ विद्वान्संसदि[11] पाक्षिकः[12] परवशो मानी दरिद्रो गृही[13] द्रव्याढ्यः कृपणो यतिर्वसुमना वृद्धोऽपि वाहोद्यतः । राजा दुःसचिवप्रियः सुकुलजो मूर्खः पुमान्स्त्रीजितो[14] वेदान्ती हतसत्क्रियः किमपरं हास्यास्पदं[15] भूतले ॥ ११२१ ॥ का विद्या कविता विनार्थिनि जने त्यागं विना

१ कलङ्कम्. २ निर्धन. ३ अस्वस्थान्तःकरण ४ अदृष्टगुरुप्रसरः ५ दुर्वचनशीलः ६ द्यूतवशः. ७ लज्जा. ८ प्रसन्नता. ९ क्रोधेन. १० गुणसमुदाय., ११ सभायाम्. १२ पक्षधारी. १३ गृहस्थाश्रमी. १४ संगः १५ हास्यस्थानम्.

श्रीश्च का को धर्मः कृपया विना क्षितिपतिः को नाम नीतिं विना । कः सूनुर्विनयं विना कुलवधूः का स्वामिभक्तिं विना भोग्यं किं रमणीं विना क्षितितले किं जन्म कीर्तिं विना ॥ ११२२ ॥ स्वाधीना दयिता सुतावधि सुतोऽसौ षोडशाब्दावधि स्यात्कन्या करपीडनावधि सुतस्त्रीस्तद्वशत्वावधि । जामाता बहुलार्पितावधि सखा साधुप्रलापावधि शिष्यो गुह्यनिरूपणावधि परे चैते धनत्वावधि ॥ ११२३ ॥ स्त्रीणां यौवनमर्थिनामनुगमो राज्ञां प्रतापः सतां स्वास्थ्यं स्वल्पधनस्य संहतिरसद्वृत्तेश्च वाग्डम्बरः । स्वाचारस्य सदर्चनं परिणतेर्विद्या कुलस्यैकता प्रज्ञाया धनमुन्नतेरतिनतिः शान्तेर्विवेको बलम् ॥ ११२४ ॥ नागो भाति मदेन [१]कं जलरुहैः पूर्णेन्दुना शर्वरी शीलेन प्रमदा [२]जवेन तुरगो नित्योत्सवैर्मन्दिरम् । वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः सत्पुत्रेण कुलं नृपेण वसुधा लोकत्रयं विष्णुना ॥ ११२५ ॥ एहि स्वागतमाविशासनमिदं कस्माच्चिराद्दृश्यसे का वार्ता [३]परिदुर्बलोऽसि नितरां प्रीतोऽस्मि ते दर्शनात् । इत्येवं समुपागतं द्विजवरं संभावयन्त्याद[४]रात्तेषां युक्तमशङ्कितेन मनसा गेहेषु गन्तुं सदा ॥ ११२६ ॥ स्याद्त्यन्तनिरक्षरः क्षितिपतिः श्रीकारमात्राश्रयान्मन्त्री तत्कथितार्थलेखनपरस्तत्सेवको जायते । अध्येता तदगारमेव भजते विद्वांस्तु तं याचते यावान्यस्य गिरा समं परिचयस्तावान्[५]विदूरे श्रियः ॥११२७॥ को लाभो गुणिसंगमः किमसुखं प्राज्ञेतरैः संगतिः का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः । कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥ ११२८ ॥ सस्यानि स्वयमत्ति चेद्वसुमती माता सुतं हन्ति चेद्वेलामम्बुनिधिर्विलङ्घयति चेद्भूमिं दहेत्पावकः । आकाशं जनमस्तके पतति चेदन्नं विषं चेद्भवेदन्यायं कुरुते यदि क्षितिपतिः कस्तं निरोद्धुं क्षमः ॥ ११२९ ॥ आक्रान्तं मरणेन जन्म जरया विद्या बलं यौवनं संतोषो धनलिप्सया दमसुखं प्रौढाङ्गनाविभ्रमैः । लोलैर्मत्सरिभिर्गुणास्तु तरवो व्यालैर्नृपो दुर्जनैरस्थैर्येण धृतिर्मही च दृषदा ग्रस्तं न किं केन वा ॥ ११३० ॥ हस्ती स्थूलतरः स चाङ्कुशवशः किं हस्तितुल्योऽङ्कुशो दीपे प्रज्वलिते विनश्यति तमः किं दीपतुल्यं तमः । वज्रेणाभिहताः पतन्ति गिरयः किं वज्रतुल्यो गिरिर्बुद्धिर्यस्य गरीयसी स बलवान्स्थूलेषु कः प्रत्ययः ॥ ११३१ ॥ वासः शुभ्रमृतुर्वसन्तसमयः पुष्पं शरन्मालती धानुष्कः कुसुमायुधः परिमलः कस्तूरिकोऽस्त्रं धनुः । वाणी तर्करसोज्ज्वला प्रियतमा श्यामा वयो नूतनं मार्गो वैष्णव एव पञ्चमलया गीतिः कविर्बिह्लणः ॥ ११३२ ॥ [६]रोलम्बैर्न विलम्बितं[७] विघटितं धूमाकुलैः कोकिलैर्मायूरैश्चलितं पुरेव रभसात्कीरैरधीरैर्गतम्[८] । एकेनापि सुपल्लवेन तरुणा दावानलोपप्लवः सोढः को न

१ उदकम्. २ वेगेन. ३ कृश.. ४ अत्यन्तदूरे. ५ मूर्खैः. ६ भ्रमरैः. ७ विलम्बो न कृतः. ८ शुकैः.

विपत्सु मुञ्चति जनो मूर्धापि यो लालितः ॥ ११३३ ॥ क्षोणीशाश्रयिणां परोपकरणाभावाद्देवात्तश्रियां कार्पण्यात्सुधियामनध्ययनतो यूनां प्रवासाश्रयात् । ज्ञातॄणां जगदीशभक्तिरिहादायुर्वृथा गच्छतीत्येवं कांस्यसमुद्भवः प्रतिदिनं नादो वदत्युच्चकैः ॥ ११३४ ॥ नुष्ये सति दुर्लभा पुरुषता पुंस्त्वे पुनर्विप्रता विप्रत्वे बहुविद्यतातिगुणता विद्यावतोऽर्थता । अर्थज्ञस्य विचित्रवाक्यपटुता तत्रापि लोकज्ञता लोकज्ञस्य समस्तशास्त्रविदुषो र्मे मतिर्दुर्लभा ॥ ११३५ ॥ आयाते च तिरोहितो यदि पुनर्दृष्टोऽन्यकार्ये रतो वाचि मेरमुखो विषण्णवदनः स्वक्लेशवादी मुहुः । अन्तर्वेश्मनि वासमिच्छति भृशं व्याधीति ो भाषते भृत्यानामपराधकीर्तनपरः स्वं मन्दिरं न व्रजेत् ॥ ११३६ ॥ नन्दी विन्दति चेमात्यपदवीं शिष्टैरलं भूरिभिः पुंसिश्चेत्प्रतिपाद्यते रतिकला केलीदृशामादरः । विश्रान्ता यदि वाखरीपु कविता काव्येन भव्येन किं भूपाले यवने समस्तभुवने वैदग्ध्यमस्तं गतम् । ११३७ ॥ आहूतेपु विहंगमेषु मशको नायान्पुरो वार्यते मध्येवारिधि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम् । खद्योतोऽपि न कम्पते प्रचलितं मध्येऽपि तेजस्विनां धिक्सामान्यप्रचेतसं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥ ११३८ ॥ मूर्खोऽशान्तस्तपस्वी क्षितिपतिरलसो मत्सरो धर्मशीलो दुःस्थो मानी गृहस्थः प्रभुरतिकृपणः शास्त्रभृद्धर्महीनः । आज्ञाहीनो नरेन्द्रः शुचिरपि सततं यः परान्नोपभोजी वृद्धो रोगी दरिद्रः स च युवतिपतिर्धिग्विडम्बप्रकारान् ॥ ११३९ ॥ ख्यातः शक्रो भगाङ्को विधुरपि मलिनो माधवो गोपजातो वेश्यापुत्रो वसिष्ठो रतिपतिरतनुः सर्वभक्षी हुताशः । व्यासो मत्स्योदरीयो लवणजलनिधिः पाण्डवा जारजाता रुद्रो प्रेतास्थिधारी त्रिभुवनविषये कस्य दोषो न चास्ति ॥ ११४० ॥ प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् । तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ ११४१ ॥ आशीःपूर्वं सुहृत्ताद्यलस उपचितोऽप्यज्ञ सत्सु द्विजेषु क्षीणत्वे तु द्विजेषु व्यसनिषु पतितेष्वद्य याद्यादरस्ते । किं स्यादस्यां दशायां तव हितमुचितं किंचिदाख्याय सख्यान्मन्त्रं सप्ताक्षरं त्वं जय सुगममुं पाहि भो मामुमाप ॥ ११४२ ॥ आविर्भूतानुरागः क्षणमुदयगिरेरुज्जिहानस्य भानोः पत्रच्छायैः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा । एते तस्मिन्निवृत्ताः पुनरितरककुप्प्रान्तपर्यस्तबिम्बे प्रायो भृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः ॥ ११४३ ॥

इति श्रीसुभाषितरत्नभाण्डागारे तृतीयं प्रकरणं समाप्तम् ।

---

१ राजाश्रयवताम्. २ धनिनाम्

# प्रकरणम् ४।

## चित्रप्रकरणम्।

### समस्याख्यानम्।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। दलितश्चकितश्छन्नस्तव सैन्ये विसर्पति ॥१॥ कामं कामदुघं धुङ्क्ष्व मित्राय वरुणाय च। वयं धीरेश दानेन सर्वान्कामानशीमहि ॥ २ ॥ असमाने समानत्वं भविता कलहे मम। इति मत्वा ध्रुवं मानी मृगात्सिंहः पलायते ॥ ३ ॥ हीनहत्या दधात्येव लाघवं महतामपि। इति मत्वा द्विपद्वेषी मृगात्सिंहः पलायते ॥ ४ ॥ तिष्ठार्जुनाद्य सङ्ग्रामे त्वां हनिष्याम्यहं शरैः। तिष्ठामि कर्ण किं मूढ मृगात्सिंहः पलायते ॥ ५ ॥ ऋषेरस्याश्रमे पुण्ये शापसंत्रस्तमानसः। मुद्धोघतापि प्रायोऽयं मृगात्सिंहः पलायते ॥ ६ ॥ अयं मृगः समायाति त्वरितैस्त्वरितैः पदैः। ततो वेगात्पलायस्व मृगात्सिंहः पलायते ॥ ७ ॥ विद्यायां दुर्मदो येषां कार्पण्यं विभवे सति। तेषां दैवाभिशप्तानां सलिलादग्निरुत्थितः ॥ ८ ॥ सीतासमागमोत्कण्ठाकर्णान्ताकृष्टधन्वनः। राघवस्य शराङ्गारैः समुद्रादग्निरुत्थितः ॥ ९ ॥ दामोदरकराघातविह्वलीकृतचेतसा। दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥ १० ॥ चलत्तरङ्गरङ्गायां गङ्गायां प्रतिबिम्बितम्। सचन्द्रं शोभतेऽत्यर्थं शतचन्द्रं नभस्तलम् ॥ ११ ॥ विधे पिधेहि शीतांशुं यावन्नायाति मां प्रियः। आगते दयिते कुर्याः शतचन्द्रं नभस्तलम् ॥ १२ ॥ सुमेरुशिखरप्रान्तस्फुरद्दिव्यवधूमुखैः। परितः स्फुरितैः शङ्के शतचन्द्रं नभस्तलम् ॥ १३ ॥ घृतं न श्रूयते कर्णे दधि स्वप्नेऽपि दुर्लभम्। मुग्धे दुग्धस्य का वार्ता तक्रं शक्रस्य दुर्लभम् ॥ १४ ॥ अकृत्वङ्गमतस्तक्रं न शतक्रतुना हुतम्। नादत्तमिति वाक्यार्थात्तक्रं शक्रस्य दुर्लभम् ॥१५॥ भीष्मग्रीष्मर्तुसंतप्तशून्यरथ्यान्तरस्थयोः। अन्योन्यालापसुखिनोर्यूनोश्चन्द्रायते रविः ॥ १६ ॥ स्वस्ति क्षत्रियदेवाय जगद्देवाय भूभुजे। यद्यशःपुण्डरीकान्तर्गगनं भ्रमरायते ॥ १७ ॥ स्फुरिते जठरे विष्णोर्नवनीतभुजः शिशोः। मक्षिकापादघातेन कम्पितं भुवनत्रयम् ॥ १८ ॥ अतसीपुष्पसंकाशं खं

(१) "सहस्रशीर्षा पुरुष सहस्राक्ष सहस्रपात्" इति समस्या. (२) "काम कामदुघं धुङ्क्ष्व", "मित्राय वरुणाय च", "सर्वान्कामानशीमहि" इति समस्या. (३, ४, ५, ६, ७) "मृगात्सिंहः पलायते" इति समस्या. (८) "सलिलादग्निरुत्थितः" इति समस्या (९) "समुद्रादग्निरुत्थितः" इति समस्या. (१० ११, १२, १३) "शतचन्द्रं नभस्तलम्" इति समस्या. (१४, १५) "तक्र शक्रस्य दुर्लभम्" इति समस्या (१६) "यूनोश्चन्द्रायते रविः" इति समस्या. (१७) "गगनं भ्रमरायते" इति समस्या. (१८) "मक्षिकापादघातेन कम्पित भुवनत्रयम्" इति समस्या.

१ शरा एवाङ्गाराः. २ अयत्नाद्गम्. ३ इन्द्रेण. ४ दारुण. ५ अन्योन्यभाषणेन जाताह्लादयोः.

वीक्ष्य जलदागमे । ये वियोगेऽपि जीवन्ति न तेषां विद्यते भयम् ॥ १९ ॥ वागर्थाविव संपृक्तौ शतकोटिप्रविस्तरम् । तुरासाहं[1] पुरोधाय नेमुः सर्वे सुराः शिवौ[2] ॥ २० ॥ आषाढी[3] कार्तिकी माघी वचा शुण्ठी हरीतकी । गयायां पिण्डदानेन पुण्या श्लेष्महरानृणी ॥ २१ ॥ जम्बूफलानि पक्वानि पतन्ति विमले जले । कपिकम्पितशाखाभ्यो गुलुगुग्गुलुगुग्गुलू ॥ २२ ॥ विदग्धे सुमुखे रक्ते नितम्बोपरि संस्थिते । कामिन्याश्लिष्टसुगले कूजितं रतिकूजितम् ॥ २३ ॥ प्रलयसहायकरा इति गोलानाचम्य सकलभूमिरुहाम् । विलसति दवदहनावलिरिह जलवाहः परं शरणम् ॥ २४ ॥ निजपतिराद्यः प्रणयी हरिर्द्वितीयः करोमि किं गोपि । शृणु सखि पाणिनिसूत्रं विप्रतिषेधे परं कार्यम् ॥ २५ ॥ दैत्यानां मनसि दया जाता कृष्णं हि रक्षितुं कस्मात् । द्रष्टुं देवमजस्रं दैत्यस्त्रीणामपि प्रीतिः ॥ २६ ॥ श्रीनाथ नः श्रुतमिति बहुधा भ्रमता मया नृलोकेषु । शीलं वारवधूनां दैत्यस्त्रीणामपि प्रीतिः ॥ २७ ॥ रामाभिषेके मदविह्वलाया हस्ताच्च्युतो हेमघटस्तरुण्याः । सोपानमासाद्य करोति शब्दं ठठंठठंठठठठंठठंठः ॥ २८ ॥ कर्पूरपूरच्छविवादविद्यासंवावदूकद्युतिशुक्ति ताम्रे । इन्दो नृपद्वेषि तमो वितान सूर्योदये रोदिति चक्रवाकी ॥ २९ ॥ विलोक्य बालामुखचन्द्रबिम्बं कण्ठे च मुक्तावलिहारताराः । पुनर्निशाया भयभीतभीता सूर्योदये रोदिति चक्रवाकी ॥३०॥ सर्वस्य जन्तोर्भवति प्रमोदो विरोधिवर्गे परिभूयमाने । तिरोहिते त्वद्यशसा नरेन्द्र चन्द्रोदये नृत्यति चक्रवाकी ॥ ३१ ॥ न क्वापि रामाहितसंशयो या विना न नात्वं जनकात्मजायाः । पुरः सुराणाङ्कपुरःसराणामङ्गारपूर्णं कमलं प्रफुल्लम् ॥ ३२ ॥ पुञ्जायमानारुणरत्नहारे कान्तोरसि स्वावदनङ्ग भाति । सिध्येदमुष्योपमितिर्यदि स्यादङ्गारपूर्णं कमलं प्रफुल्लम् ॥ ३३ ॥ रे पुत्र सत्सङ्गमवाप्नुहि त्वमसत्प्रसङ्गं त्वरया विहाय । धन्योऽपि निन्दां लभते कुसङ्गात्सिन्दूरबिन्दुर्विधवाललाटे ॥ ३४ ॥ सुतं पतन्तं प्रसमीक्ष्य पावके न बोधयामास पतिं पतिव्रता । तदा ह्यसौ तद्व्रतशक्तिपीडितो हुताशनश्चन्दनपङ्कशीतलः ॥ ३५ ॥ उन्नमय्य सकचग्रह[4]मास्यं[5] चुम्बति[6] प्रियं[7]-

(१९) "अतसीपुष्पसकाशम्", "न तेषां विद्यते भयम्" इति समस्या. (२०) 'वागर्थाविव संपृक्तौ', "शतकोटिप्रविस्तरम्" इति समस्या. (२१) "पुण्या श्लेष्महरानृणी" इति समस्या. (२२) "गुलुगुग्गुलुगुग्गुलू" इति समस्या. (२३) "कूजितं रतिकूजितम्" इति समस्या. (२४) "प्रलयसहायकरा इति गोलानाचम्य" इति समस्या. (२५) "विप्रतिषेधे परं कार्यम्" इति समस्या (२६, २७,) "दैत्यस्त्रीणामपि प्रीतिः" इति समस्या. (२८) "ठठठठठठठठंठठठ." इति समस्या. (२९, ३०) "सूर्योदये रोदिति चक्रवाकी" इति समस्या (३१) "चन्द्रोदये नृत्यति चक्रवाकी" इति समस्या. (३२, ३३) 'अङ्गारपूर्णं कमलं प्रफुल्लम्" इति समस्या. (३४) "सिन्दूरबिन्दुर्विधवाललाटे" इति समस्या. (३५) 'हुताशनश्चन्दनपङ्कशीतल." इति समस्या.

१ इन्द्रम्. २पार्वतीशंकरौ ३आषाढी कार्तिकी माघी एकादशी पुण्या. वचा शुण्ठी हरीतकी श्लेष्महरा. गयायां पिण्डदानेनानृणी पित्रृणान्मुक्त इति योजना. ४ केशग्रहसहितम्. ५ मुखम्. ६ चुम्बन कुर्वति सति. ७ कान्ते.

तमे हठवृत्त्या । कूजितं भवति मानधनाया हूंहुहूंहुहुहुहूंहुहुहूंहू ॥ ३६ ॥ मम णाय पणीकृतं न यदि राघवतोऽप्याधिरोहति । सखि तदैवमभून्मम जीवितं शशकशृङ्गमयं क० धनुः ॥ ३७ ॥ नीलाब्जद्युतिनयनं नितान्तवृत्तमास्यश्रीपरिचितचन्द्रिकाविलासम् । स्नाता याः सरसि विलोक्य वक्त्रचन्द्रं मध्याह्ने मुकुलितमम्बुजं वनान्ते ॥ ३८ ॥ कांचिद्दिनार्धसमये रविरश्मितप्तां नीलांशुकाञ्चलनिलीनमुखेन्दुबिम्बाम् । तां तादृशीं समनुवीक्ष्य कविर्जगाद राहुर्दिवा ग्रसति पर्व विना किलेन्दुम् ॥ ३९ ॥ बहलबलसमर्था मेघनादादयो मे सपदि युधि विशन्तः कीटहस्ते निपेतुः । इति वदति दशास्ये हस्ततालं वितत्य मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम् ॥ ४० ॥ मृगशिशुनयनाया अक्षिपक्ष्मप्रकोणे विलसति तरलाया तारका तारकेव । प्रतिफलित इहोष्ठे भ्रान्तिरास्ते जनानां तिलतुषपुटकोणे मक्षिकोष्ट्रं प्रसूता ॥ ४१ ॥ मधौ मन्दं मन्दं मरुति शिशिरे वाति रुचिरे कुलस्त्रीभिः कृष्णे विहरति तथा वृष्णिनिकरे । उषा योषा तोषाद्वदनमनिरुद्धस्य मिषतो पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती ॥ ४२ ॥ स्वयं संराध्येशं पुरभिदमनल्पेन तपसा महेन्द्रं संतोष्य त्रिदशरिपुनाशादमुकरात् । समायाते पार्थे द्रुपदतनया क्लेशविकला पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती ॥ ४३ ॥ कदाचित्पाञ्चाली विपिनभुवि भीमेन बहुशः कृशाङ्गि श्रान्तासि क्षणमिह निषीदेति गदिता । शनैः शीतच्छायं तटविटपिनं प्राप्य मुदिता पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती ॥ ४४ ॥ तपापाये गोदापरतटभुवि स्थातुमनसि प्रविष्टे तत्पूरं भगवति मुनौ कुम्भजनुषि । द्रुतं लोपामुद्रा स्वयमविकलं गन्तुमुदितात्पुरं पत्युः कामाच्छ्वशुरमियमालिङ्गति सती ॥ ४५ ॥ सर्वस्य द्वे सुमतिकुमती संपदापत्तिहेतू एको गोत्रे प्रभवति पुमान्यः कुटुम्बं बिभर्ति । वृद्धो यूना सह परिचयात्त्यज्यते कामिनीभिः स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम् ॥ ४६ ॥ ये[१०] पापं शमयन्ति संगतिभृतां ये दानशृङ्गारिणो येषां चित्तमतीव निर्मलतरं येषां न भग्नं व्रतम् । ये सर्वान्सुखयन्ति हि प्रतिदिनं ते साधवो दुर्लभा गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत् ॥ ४७ ॥

( ३६ ) "हूहुहूहुहुहुहूहुहुहूहू" इति समस्या. ( ३७ ) "शशकशृङ्गमय कठिन धनुः" इति समस्या. ( ३८ ) "मध्याह्ने मुकुलितमम्बुजं वनान्ते" इति समस्या. ( ३९ ) "राहुर्दिवा ग्रसति पर्व विना किलेन्दुम्" इति समस्या ( ४० ) "मशकगलकरन्ध्रे हस्तियूथ प्रविष्टम्" इति समस्या. ( ४१ ) "तिलतुषपुटकोणे मक्षिकोष्ट्र प्रसूता" इति समस्या. ( ४२, ४३, ४४, ४५ ) "पुर. पत्युः कामाच्छ्वशुरमियमालिङ्गति सती" इति समस्या. ( ४६ ) "सर्वस्य द्वे", "एको गोत्रे", "वृद्धो यूना", "स्त्रीपुवच्च" इति चत्वारि पाणिनेः सूत्राणि समस्या. ( ४७ ) "गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत्" इति समस्या.

१ बलात्कारेण. २ कण्ठेऽव्यक्तशब्दः. ३ मान एव धन यस्या.. मानिन्या इत्यर्थः. ४ मध्याह्ने. ५ सूर्यकिरणसंतप्ताम्. ६ नीलवस्त्राञ्चलपिहितमुखचन्द्राम्. ७ स्वर्भानुः. ८ द्रौपद्या श्वशुरो वायुः ९ लोपामुद्रायाः श्वशुर पूरतरणसाधन कुम्भः. १० ये गङ्गावत्संगतिभृतां पाप शमयन्ति, ये गजगण्डवद्दानशृङ्गारिणः, येषां चित्त गगनवदतीव निर्मलतरम्, येषा मतं गाङ्गेयवन्न भग्नम्, ये गेयवत्सर्वान्सुखयन्ति, इति योजना.

दासो भाति कुचद्वयं तव शुभे मध्ये वपुः सद्वचः केशा नासिकमौक्तिकं सुवदनं दर्पाङ्गरागो दृशः । गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवज्जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालव[1]ज्जालवत् ॥ ४८ ॥ यत्कण्ठे गरलं विराजतितरां शीर्षे च मन्दाकिनी उत्सङ्गे च शिवामुखं कटितटे शार्दूलचर्माम्बरम् । माया यस्य रुणद्धि विश्वमखिलं तस्मै नमः शंभवे जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ४९ ॥ ख्यातस्त्वं फलवृष्टिपुष्टिसुमनस्वाधीनजाम्बूनदः शीर्णास्ते रिपुसंपदः प्रतिदिनं मित्रोदये मोदसे । पान्थानां कुरुषे विलम्बनमहो दत्तान्तरस्तेजसा जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५० ॥ सङ्ग्रामे रिपुभूभुजां मुखरुचिर्जीवश्च देवाङ्गनाचक्षुः प्रोल्लसदस्त्रमांसनिवहैस्तन्मेदिनीमण्डलम् । त्वच्चापोद्गतबाणसंहतिरभूच्छ्रीराम भूमीपते जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५१ ॥ वैदेहीं समवाप्य दाशरथिनारब्धे प्रयाणेऽग्रतो दृष्टाः पुष्पकसंस्थितेन रभसादाकाशमारोहता । लङ्कासागरजानकीवनरणक्षौण्यश्चमत्कारिका जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५२ ॥ यो द्रोणाचलमादधौ करतले योऽतीतरत्सागरं यश्चोत्खातितर्वास्तरूनुदवहत्पुच्छेन दावानलम् । यो रक्षान्समरेऽरुणत्कपिवरः पायाद्धनूमान्नतौ जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५३ ॥ कस्तूरीतिलकं ललाटरचितं नासामणिं निस्तलं वक्रं कुञ्चितकेशपाशमनिशं दृष्टिं निसृष्टां पुरः । पुंसां मानसमत्स्यबन्धनविधौ धत्सेऽत्र वत्से स्वयं जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५४ ॥ विद्धि श्रीहृदयं सदान्तमलिनं भीमं भवाम्भोनिधिं विज्ञाने सुरतं महीशभवनं गूढं दृढं कण्टकैः । दारागारसमागमं सुविषमं मोहं परं दुस्तरं जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५५ ॥ शुण्ठी गोक्षुरयोर्विचार्य मनसा कल्काशनं यन्मया प्रोक्तं तद्विपरीतकं कृतमहो गोः खूरमात्रं ददौ । नार्थो मूर्खजनालये न च सुखं नो वा यशो लभ्यते सद्वैद्ये कविभूपतौ हरिहरे लाभः परं गोवधः ॥ ५६ ॥ पञ्चास्यस्य पराभवाय भषको मांसेन गोर्भूयसा दध्यन्नैरपि पायसैः प्रतिदिनं संवर्धितो यो मया । सोऽयं सिंहरवाद्गुहान्तरगमद्भीत्याकुलः संभ्रमाद्धन्ताशा विलयं गता हतविधेर्लाभः परं गोवधः ॥ ५७ ॥ पारीन्द्रस्य पराभवाय सुरभीमांसेन दुर्मेधसा मुष्यन्ते किल पीवराः कटुगिरः श्वानः प्रयत्नादमी । न त्वेतन्मदमत्तवारणचमूविद्रावणः केसरी जेतव्यो भवता किरातनृपते लाभः परं गोवधः ॥ ५८ ॥ अस्माकं जलजीविनां[2] जलमिदं सैद्धाजिराजिव्रजैः[3] पातव्यं पररक्तसक्तमनसां तृप्तिः पतीनां क्षयः । स-

(४८) " गङ्गावदजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत्", "जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्" इति समस्या. (४९, ५०, ५१, ५२, ५३, ५४, ५५) " जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्" इति समस्या (५६, ५७, ५८) " लाभः परं गोवधः " इति समस्या.

१ कर्दमवत्. २ जलकजीवितानाम्. ३ तुरगपङ्क्तिसमूहैः.

त्वैवं किल राजदेव नृपते त्वज्जैत्रयात्रोत्सवे मत्स्यी रोदिति मक्षिका च हसति ध्यायन्ति वामभ्रुवः ॥५९॥ श्रुत्वा सागरबन्धनं दशशिराः सर्वैर्मुखैरेकदा तूर्णं पृच्छति वार्तिकान् भयरसप्रीत्या परं संभ्रमात् । बद्धः सत्यमपांनिधिर्जलनिधिः कीलालधिस्तोयधिः पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥६०॥ पाषाणाः पयसि प्रबद्धवपुषस्तिष्ठन्ति सेतुं गताः श्रुत्वैवं वदतां दशाननधरः क्रुद्धः समुद्रं प्रति । धिक्त्वां नाम तवाम्बुधिः सलिलधिः पानीयधिस्तोयधिः पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ ६१ ॥ अम्बा कुप्यति तात मूर्ध्नि विधृता गङ्गेयमुत्सृज्यतां विद्वन्षण्मुख का गतिर्मम चिरं मूर्ध्नि स्थिताया वद । कोपावेशवशादशेषवदनैः प्रत्युत्तरं दत्तवान्पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ ६२ ॥ माध्वीके विधुमण्डले वरवधूवक्त्रे च गीतान्तरे सक्ते वक्त्रचतुष्टये दशमुखो विज्ञापितस्तच्चरैः । बद्धोऽसाविति चेतरैर्भयवशादूचे वचःसंभ्रमात्पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ ६३ ॥ पीतस्त्वं कलशोद्भवेन मुनिना ध्वस्तोऽसि देवासुरैराबद्धोऽसि च राघवेण मृदुना शाखामृगैर्लङ्घितः । नाम्नामारभटी तथैव भवतो लोकैरियं घुष्यते पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ ६४ ॥ तर्तुं पर्वतसंनिभेन कपिना लीलाकृतां वक्षसि क्षिप्तं वीक्ष्य निमज्जतीमथ तव स्पष्टास्तरन्तीः शिलाः । लोके नृत्यपरे विभीषणजने सेत्याह सेतूद्यमे तुम्बी मज्जति संतरन्ति दृषदः प्रेतो दिवा नृत्यति ॥ ६५ ॥ त्वं नो गोत्रपतिरतवेन्दुरधिपस्तस्यामृतं त्वत्करे तेन व्याधशराहतां प्रणयिनीमेनां पुनर्जीवय । इत्यूर्ध्वं गगने निशापतिमृगे कारुण्यमातन्वतः शृङ्गाग्रादपतन्मृगस्य रुदतो बाष्पाम्बु भूमण्डले ॥ ६६ ॥ उन्नादाम्बुदवर्धितान्धतमसि प्रभ्रष्टदिङ्मण्डले काले यामिकजाग्रदुग्रसुभटव्याकीर्णकोलाहले । कर्णस्यासुहृदर्णवाम्बुवडवावह्नेर्यदन्तःपुरादाभातासि तदम्बुजाक्षि कृतकं मन्ये भयं योषितम् ॥ ६७ ॥ उग्रग्राहमुदन्वतो जलमतिक्रामत्यनालम्बने व्योम्नि भ्राम्यति दुर्गमक्षितिभृतां मूर्धानमारोहति । व्याप्तं याति विषाकुलैरहिकुलैः पातालमेकाकिनी कीर्तिस्ते मदनाभिराम कृतकं मन्ये भयं योषितम् ॥ ६८ ॥ चित्रं नर्तनमम्बरं शिखरिणौ शीतांशुबिम्बे तमः संचारं जलजं कपोतरणितं कामागमप्रक्रिया । मीनौ विद्युति तारकं

(५९) "मत्स्यी रोदिति मक्षिका च हसति ध्यायन्ति वामभ्रुवः" इति समस्या. (६०) "अपांनिधिर्जलनिधिः कीलालधिस्तोयधि पाथोधिर्जलधिः पयोधिरुदधिर्वारानिधिर्वारिधिः" इति समस्या. (६१) "अम्बुधि. सलिलधिः पानीयधिस्तोयधिः पाथोधिर्जलधि. पयोधिरुदधिर्वारानिधिर्वारिधिः" इति समस्या. (६२, ६३, ६४) "पाथोधिर्जलधि· पयोधिरुदधिर्वारानिधिर्वारिधिः" इति समस्या. (६५) "तुम्बी मज्जति संतरन्ति दृषदः प्रेतो दिवा नृत्यति" इति समस्या. (६६) "शृङ्गाग्रादपतन्मृगस्य रुदतो बाष्पाम्बु भूमण्डले" इति समस्या. (६७, ६८) "कृतकं मन्ये भय योषितम्" समस्या.

१ विजययात्रोत्सवे. २ चिन्तयन्ति. ३ सेतुबन्धम्. ४ रावणः. ५ झटिति. ६ वृत्तान्तज्ञापकान्. ७ माता. ८ मरतके. ९ त्यज्यताम्. १० क्रोधपरत्वेन. ११ षड्भिर्मुखैरित्यर्थः.

विहरणं ज्योत्स्नापि कोशाम्बुजे कुर्वाते कुरुते करोति कुरुतः कुर्वत्यलंकुर्वते ॥ ६९ ॥ यस्य द्वारि सदा समीरवरुणौ संमार्जनं हव्यवाट् पाकं शीतगुरातपत्रकरणं दस्रौ प्रतीहारताम्। देवौ लास्यविधिं च दास्यममरा वर्ण्यो दशास्यः कथं कुर्वाते कुरुते करोति कुरुतः कुर्वन्ति कुर्वन्ति च ॥ ७० ॥ कश्चित्पान्थस्तृपार्तः पथि तपनऋतौ गम्यमानोऽन्यपान्थं पप्रच्छानन्दलीनो वद पथिक कुतो जह्नुकन्याप्रवाहः। तेनासौ शीघ्रवाचा प्रचलितमनसा विप्रवर्येण वाचा सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः ॥ ७१ ॥ राम त्वत्कीर्तिवृक्षाद्बहुतरममलादुत्थिताः कोरका ये तन्मध्ये रुद्ररूपोऽप्यजनि खलु यशःकोरकस्तस्य चाग्र्ये। अस्य श्रोताक्षिकूपास्तदुपरि च शिरस्तत्र चास्ति स्रवन्ती सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः ॥ ७२ ॥ उद्दामार्कांशुदीप्यद्दिनमणिमणिभिर्भस्मितान्ते समन्ताद्वायुव्याधूयमानज्वलनकणगणाकीर्णधूलिप्रकीर्णे। कान्तारेऽस्मिन्नृपार्ते पथि पथिकभवे कापि पाथोथतेना सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः ॥ ७३॥ मां साक्षीकृत्य मुग्धे विजयमभिलषंल्लेखयामास शंभुर्भूत्या मन्मौलिमालां सदशनवशतीमक्षपातान्विजित्य। गौर्यप्यानैञ्जदृष्टीर्जितनखनवभूस्तन्वि शेषा तदित्थं शीर्षाणां सैव वन्ध्या मम नवतिरभूल्लोचनानामशीतिः ॥ ७४ ॥ प्रत्येकं दिक्पतीशानिलतपनवसून्सन्नतस्त्वं यथा भूरश्रौपीस्त्वं यथा च स्वरसहितलसन्मूर्छनागानतानात्। कृष्णन्यस्तान्यमौलीक्षणवदवसरे सा च सा च प्रसादाच्छीर्षाणां शेष वन्ध्या तव नवतिरभूल्लोचनानामशीतिः ॥ ७५ ॥ इन्द्राद्या लोकपाला हरिविधुतपना नागविद्याधराद्या द्वेष्याः सर्वेऽपि देवाः प्रिय तव वरदः कोऽस्ति वन्द्यो गरीयान्। श्रुत्वा वाचं प्रियाया इति दशमुखतः प्राह वाक्यं दशास्यः शूली शंभुः पिनाकी शिवभवपशुपाः शर्व ईशश्च भर्गः ॥ ७६ ॥

---

## प्रहेलिकाः।

अपदो दूरगामी च साक्षरो न च पण्डितः। अमुखः स्फुटवक्ता च यो जानाति स पण्डितः ॥ १ ॥ वैने जाता वैने त्यक्ता वने तिष्ठति नित्यशः। पैण्यस्त्री न तु सा वेश्या यो

---

(६९) "कुर्वाते कुरुते करोति कुरुत· कुर्वत्यलकुर्वते" इति समस्या (७०) "कुर्वाते कुरुते करोति कुरुत कुर्वन्ति कुर्वन्ति च" इति समसा. (७१, ७२, ७३) "सूच्यग्रे कूपषट्क तदुपरि नगरी तत्र गङ्गाप्रवाह" इति समस्या. (७४) "शीर्षाणा सैव वन्ध्या मम नवतिरभूल्लोचनानामशीति" इति समस्या (७५) "शीर्षाणा शेष वन्ध्या तव नवतिरभूल्लोचनानामशीति." इति समस्या. (७६) "शूली शभु. पिनाकी शिनभवपशुपा. शर्व ईशश्च भर्ग." इति समस्या.

(१) लेखापत्रम्.

---

१. १९२०. २ सहस्रशीर्षो द्विसहस्राक्षस्य स्वभार्यां प्रति गौरीगिरीशद्यूतक्रीडोपन्यासः. ३ अरण्ये काष्ठरूपेणोत्पन्ना. ४ उदके. ५ मूल्य दत्त्वा भोग्या स्त्री. गणिका यथा द्रव्यदानेन भोग्या तथेयमपीत्यर्थः.

जानाति स पण्डितः ॥ २ ॥ गोपालो[1] नैव गोपालस्त्रिशूली[2] नैव शंकरः । चक्रपाणिः[3] नो विष्णुर्यो जानाति स पण्डितः ॥ ३ ॥ उच्छिष्टं शिवनिर्माल्यं वमनं शवकर्पटम् । काकविष्ठासमुत्पन्नः पञ्चैतेऽतिपवित्रकाः ॥ ४ ॥ अनेकसुषिरं[4] वाद्यं[5] कान्तं[6] च ऋषिसंज्ञितम् । चक्रिणा[7] च सदाराध्यं यो जानाति स पण्डितः ॥ ५ ॥ वने वसति को वीरो योऽस्थिमांसविवर्जितः । असिवत्कुरुते कार्यं कार्यं कृत्वा वनं गतः ॥ ६ ॥ रविजा शशिकुन्दाभा तापहारी जगत्प्रिया । वर्धते वनसङ्गेन न तापी यमुनापि न ॥ ७ ॥ तरुण्यालिङ्गितः[8] कण्ठे नितम्बस्थलमाश्रितः[9] । गुरूणां[10] संनिधानेऽपि कः कूजति[11] मुहुर्मुहुः ॥ ८ ॥ अवलोक्य स्तनौ वध्वा गुञ्जाफलविभूषितौ । निःश्वस्य रोदितुं लग्ना कुतो व्याधकुटुम्बिनी ॥ ९ ॥ आपाण्डु पीनकठिनं वर्तुलं सुमनोहरम् । करैराकृष्यतेऽत्यर्थं किं वृद्धैरपि[12] सस्पृहम् ॥ १० ॥ एकचक्षुर्न काकोऽयं बिलमिच्छन्न पन्नगः । क्षीयते वर्धते चैव न समुद्रो न चन्द्रमाः ॥ ११ ॥ छत्रधारी न राजासौ जटाधारी न चेश्वरः । सृष्टिकर्ता न स ब्रह्मा छिद्रकर्ता न तस्करः ॥ १२ ॥ अस्थि नास्ति शिरो नास्ति बाहुरस्ति निरङ्गुलिः । नास्ति पादद्वयं गाढमङ्गमालिङ्गति स्वयम् ॥ १३ ॥ अस्ति ग्रीवा शिरो नास्ति द्वौ भुजौ करवर्जितौ । सीताहरणसामर्थ्यो न रामो न च रावणः ॥ १४ ॥ नरैर्नारी[13]समुत्पन्ना सा स्त्री देहविवर्जिता । अमुखी कुरुते शब्दं जातमात्रा विनश्यति ॥ १५ ॥ दन्तैर्हीनः शिलाभक्षी निर्जीवो बहुभाषकः । गुणस्यूतिसमृद्धोऽपि परपादेन गच्छति ॥ १६ ॥ न तस्यादिर्न तस्यान्तो मध्ये यस्तस्य तिष्ठति । तवाप्यस्ति ममाप्यस्ति यदि जानासि तद्वद ॥ १७ ॥ य एवादिः स एवान्तो मध्ये भवति मध्यमः । य एतन्नाभिजानीयात्तृणमात्रं न वेत्ति सः ॥ १८ ॥ पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः । चलते वायुवेगेन पदमेकं न गच्छति

---

( २ ) नौका. ( ३ ) महोक्षा. ( ४ ) दुग्ध गङ्गा मधु पट्टाम्बर पिप्पलश्च. ( ५ ) वल्मीकम्. ( ६ ) कुलालदोरक. ( ७ ) तक्रम्. ( ८ ) कलशः. ( ९ ) शवरस्त्री पुत्रजायायाः स्तनौ गुञ्जाफलालंकृतौ दृष्ट्वा कुतो निःश्वस्य रोद. यतो मत्पुत्र एतामनुरक्तस्तथा क्षीणतां गतो यथा गजान्विनिहत्य तद्गण्डस्थलमुक्ताफलहारैः स्तनौ विभूषयितुं नालम्, अतो निःप्रयासलभ्यैर्गुञ्जाफलैर्विभूषयति. क्षीणे च सति पुत्रे तदर्जितधननिर्वाह्यवृत्तिकस्य सर्वस्यापि कुटुम्बस्य जीवितसंदेहः. अतो व्याधकुटुम्बिनी दुःखान्निःश्वस्य रोदितुं लग्ना. ( १० ) पक्वबिल्वफल कुचयुगल च. ( ११ ) सूचिका. ( १२ )² ( १३, १४ ) कञ्चुकः. ( १५ ) छोटिका. ( १६ ) उपानत्. ( १७ ) नयनम्. ( १८ ) यवसम्

---

१ धेनूनां पतित्वात्पालकः. २ तप्तत्रिशूलाङ्कितत्वात्तच्चिह्नवान्. ३ बाहौ तप्तचक्राङ्कितत्वात्तच्चिह्नवान्. ४ बिलम्. ५ वकार आद्यो यस्य. ६ ककारोऽन्ते यस्य. ७ सर्पेण. ८ कुम्भः कूपसरोवरादौ जलेन भृत्वा शिरस्यारोपणसमये तरुण्या हस्ताभ्यामालिङ्ग्यते भर्तापि तरुण्या सोत्कण्ठमालिङ्ग्यते. ९ कुम्भो नितम्बस्थाने गृह्यते भर्तापि नितम्बस्थाने गुह्यप्रदेशे तिष्ठेत्. १० कुम्भो गुरूणां वृद्धघटानामुपर्युपविश्य कूजति वज्वडायते भर्तापि गुरूणां मातृपितृश्वश्रूश्वशुरजनानामग्रे स्त्रियं कामयते. ११ शब्दं करोति. १२ नासिकाचूर्णनिक्षेपणार्थं वृद्धैरपि म्रियत इति प्रसिद्धिः. १३ अङ्गुष्ठमध्यमाङ्गुली.

॥ १९ ॥ श्यामं च वर्तुलाकारं पुंनाम चतुरक्षरम्। शकारादि मकारान्तं यो जानाति स पण्डितः ॥ २० ॥ अर्धचन्द्रवदाकारं स्त्रीनामाथ च त्र्यक्षरम्। नकारादि रिकारान्तं यो जानाति स पण्डितः ॥ २१ ॥ अष्टपादश्चतुःकर्णो द्विमुखी द्विमुखस्तथा। राजद्वारे पठेद्धोरो न च देवो न राक्षसः ॥ २२ ॥ वृक्षस्याग्रे फलं दृष्टं फलाग्रे वृक्ष एव च। अकारादि सकारान्तं यो जानाति स पण्डितः ॥ २३ ॥ चतुर्मुखो न च ब्रह्मा वृषारूढो न शंकरः। निर्जीवी च निराहारी अजस्रं धान्यभक्षणम् ॥ २४ ॥ कृष्णमुखी न मार्जारी द्विजिह्वा न च सर्पिणी। पञ्चभर्ता न पाञ्चाली यो जानाति स पण्डितः ॥ २५ ॥ अपूर्वोऽयं मया दृष्टः कान्तःकमललोचने। शोऽन्तरं यो विजानाति स विद्वान्नात्र संशयः ॥२६॥ पर्वताग्रे रथारूढो भूमौ तिष्ठति सारथिः। चक्रवद्भ्रमते पृथ्वी तस्याहं कुलबालिका ॥२७॥ अर्धचन्द्रसमायुक्तं पुनाम चतुरक्षरम्। ककारादि लकारान्तमिह जानाति पण्डितः ॥२८॥ अनुनेतुं मानिन्या दयितश्चरणे सरागचरणायाः। यावत्पतितः स तया तत्क्षणमवतारितः कस्मात् ॥ २९ ॥ गीत्वा कि[1]मपि व्याधः शृङ्गं जग्राह तरुणहरिणस्य। तमथ समीक्ष्योद्यतकरमेणीमपि लज्जिता व्याधी ॥ ३० ॥ काचिन्मृगाक्षी प्रियविप्रयोगे निशीथिनीपारमपारयन्ती। आगातुमादाय करेण वीणामुद्वीक्ष्यमालोक्य शनैरहासीत् ॥ ३१ ॥ सदारि[2]मध्यापि न वैरियुक्ता नितान्तरक्तापि सितैव[3] नित्यम्। यथोक्तवादिन्यपि नैव दूती का नाम कान्तेति[4] निवेदयाशु ॥ ३२ ॥ वृक्षाग्रवासी न च पक्षिराजस्त्रिनेत्रधारी न च

(१९,२०, २१, २२) ? (२३) अननस (२४) ? (२५) लेखनी. (२६) अशोकः. (२७) कुम्भकारस. (२८)? (२९) रजस्वला यतः. (३०) व्याध किमप्यद्भुत गीत गीत्वा गीतविमूर्छितविलीनचित्तस्य तरुणहरिणस्य शृङ्ग जग्राह. किमर्थम्. यतो मद्गीतसुखितस्त्व याचकस्य मह्य शिरो दान देहीति. अथ त च हरिण शिरोदानायोद्यतकरं समीक्ष्य तज्जाया हरिणीमपि पत्युर्भक्त्या निजशिरोदानायोद्यतकरा समीक्ष्य धर्मार्थिचारिणी व्याधी लज्जिता. केन हेतुना. यतोऽय हरिणो दाता य च हरिणी पतिभक्ता दातृजाया, मत्कान्तस्तु याचकः. अह च याचकजाया. वरमेते पशवो न वय मनुष्या.. इत्यभिप्रेत्य लज्जितेति प्रथमोऽर्थः ॥ अथवा व्याधजायायाः पूर्वपरिणीतपुरुषो मृतः. स च विद्यमान सगृहीतो द्वितीय पुरुषः. त च विलोक्य चिन्तितवती यतो निजकान्तवियोगासहिष्णुः शिरोदानायोद्यतकरा पतिभक्ता वरमिय हरिणी. अह च परिणीतप्रियमरणेऽपि जीविता संगृहीतभर्तृका चासती मानुषी. इति लज्जितेति द्वितीयोऽर्थः ॥ अथवा इति चिन्तित तया. यतो येन कर्णेन गीत श्रुतं तस्य दातु कर्णस्य पुरो याच्ञायै करो न प्रसारितो व्याधेन नीरसकठिनकुटिलस्य शृङ्गस्य तु पुर प्रसारित इत्यनुचित कृत मूढेन कृतेऽप्यनौचित्ये स्वय मृगयूथपतिर्गीतरसज्ञोऽकृतपात्रविचारः स्वभावकृपण याचक जानन्निजशिरोदानायोद्यतकरो जातः. अतो व्याधी त हरिण चतुर ज्ञात्वा त च व्याध मूर्ख ज्ञात्वैणी चैतादृशचतुरपतिपत्नीत्वेन सुभगां सभाव्य लज्जितेति तृतीयोऽर्थः. (३१) यतोऽय गीतप्रियो मृगाङ्के मृगो मत्प्रयुक्त गीतमाकर्णयितु चन्द्राद्यदवतरेत्तदा चन्द्रो निःकलङ्क स्यात्. तेन मन्मुखसाम्य च लभेत. प्रियविप्रयोगे च सतापकरो मे हिमांशुः. अतोऽस्य शत्रोश्चन्द्रमसो मन्मुखसाम्य मा भूयादित्याशयेन वीणामहासीदित्यर्थ. (३२) सारिका.

१ अद्भुतम्. २ रिकारो मध्ये यस्या.. ३ सकारेणेता युक्ता. ४ ककारोऽन्ते यस्याः.

शूलपाणिः । त्वग्वस्त्रधारी न च सिद्धयोगी जलं च बिभ्रन्न घटो न मेघः ॥ ३३ ॥ वृक्षाग्रवासी न च पक्षिजातिस्तृणं च शय्या न च राजयोगी । सुवर्णकाया न च हेमधातुः पुंसश्च नाम्ना न च राजपुत्रः ॥ ३४ ॥ नाहं मनुष्यो न च देवयक्षो न ब्राह्मणक्षत्रियवैश्यशूद्रः । न ब्रह्मचारी न गृही वनस्थो भिक्षुर्न चाहं निजबोधरूपः ॥ ३५ ॥ चक्री त्रिशूली न हरो न विष्णुर्महान्बलिष्ठो न च भीमसेनः । स्वच्छन्दचारी नृपतिर्न योगी सीतावियोगी न च रामचन्द्रः ॥ ३६ ॥ आद्येन हीना जलधावदृश्यं मध्येन हीनं भुवि वर्णनीयम् । अन्तेन हीनं ध्वनते शरीरं हेमाभिधाः स श्रियमातनोतु ॥ ३७ ॥ सर्वस्वापहरो न दस्युकुलजः खट्वाङ्गभृन्नेश्वरो दोषानिष्टकरो न धर्मनिरतः कीलालपो नासुरः । नृणां पृष्ठपलायनो न पिशुनः शीघ्रंगमो नो हयः शश्वद्रात्रिचरो न राक्षसगणः कोऽयं सखि ब्रूहि मे ॥ ३८ ॥ सर्वस्वापहरो न तस्करगणो रक्षो न रक्ताशनः सर्पो नैव बिलेशयोऽखिलनिशाचारी न भूतोऽपि च । अन्तर्धानपटुर्न सिद्धपुरुषो नाप्याशुगो मारुतस्तीक्ष्णास्यो न तु सायकस्तमिह ये जानन्ति ते पण्डिताः ॥ ३९ ॥ जाता शुद्धकुले जघान पितरं हत्वापि शुद्धा पुनः स्त्री चैषा वनिता पितैव सततं विश्वस्य या जीवनम् । सङ्गं प्राप्य पितामहेन जनकं प्रासूत या कन्यका सा सर्वैरपि वन्दिता क्षितितले सा नाम का नायिका ॥ ४० ॥

---

## अपह्नुतयः ।

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया । पतिं बुद्ध्वा सखि ततः प्रबुद्धास्मीत्यपूरयत् ॥ १ ॥ रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति । तत्किं तरुणी नहि नहि वाणी बाणस्य मधुरशीलस्य ॥ २ ॥ मधुसीत्कारं संजनयति व्रणयत्यधरं तनोति रोमाञ्चम् । नागरिकः किं मिलितो नहि नहि सखि हैमनः[1] पवनः ॥ ३ ॥ काले पयोधराणामपतितया[2] नैव शक्यते स्थातुम् । उत्कण्ठितासि तरले नहि नहि सखि पिच्छिलः[3] पन्थाः ॥ ४ ॥ प्रहरति न पञ्चबाणः केवलमबले निमेषोऽपि । वर्षति परं न देवः क्षणदायी विप्रयोगं ते ॥ ५ ॥ मधुरस्वना धूर्तोर्णा[4] मण्याभरणा सुशोभना सुदती[5] । मत्स्कन्धोचितदण्डा भिक्षो दयितास्ति किं न मे वीणा ॥ ६ ॥ रागी[6] भिनत्ति निद्रां तल्पं न जहाति निष्ठुरं दशति । चतुरे किं प्राणेशो नहि नहि सखि मत्कुणव्रातः ॥७॥ आदौ गृहीतपाणिः पश्चादारूढजघनकटिभागा । नखमुखलालनसुखदा[7] या किं रामास्ति नैव भो पामा ॥८॥ नाथ विलोकय

---

(३३) नारिकेरफलम् (३४) आम्र (३५)? (३६) वृषभ. (३७) करज.. (३८, ३९) मत्कुण. (४०)?

१ हेमन्तसबन्धी. २ पतिं विना; (पक्षे) पतनाभावेन. ३ पङ्किलः. ४ धृतोर्णादिदशा; (पक्षे) धृतोर्णावस्त्रा. ५ शोभना दन्ता यस्या सा; (पक्षे) हस्तिदन्तनिर्मितालकारवती. ६ अनुरक्तः; (पक्षे) रक्तवर्ण.. ७ कण्डूः.

मेघं[1] नहि नहि पापं तवातिपुण्यायाः । नहि कथयामि पयोधरमपसारय[2] कञ्चुकीमुरसः ॥ ९ ॥ पञ्चदशीरजनिसमा तारामणिभूषणापि कोकिलवाक् । चन्द्रसमा गतवसना हस्तगता स्त्री न मे वीणा ॥ १० ॥ नाथ मयूरो[3] नृत्यति तुरगाननवक्षसः कथं नृत्यम् । नहि कथयामि कलापिनमिह सुकलापी प्रिये कोऽस्ति ॥ ११ ॥ अक्षरमैत्रीभाजः सालंकारस्य चारुवृत्तस्य । किं ब्रूमो सखि यूनो नहि नहि सखि पद्यबन्धस्य ॥ १२ ॥ इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता । स्मरसि किं सखि कान्तरतोत्सवं न हि घनागमरीतिरुदाहृता ॥ १३ ॥ तन्वी चारुपयोधरा सुवदना श्यामा मनोहारिणी नीता निष्करुणेन केनचिदहो देशान्तरादागता । उत्सङ्गोचितया[4] तया रहितया किं जीवनं प्रेक्षसे भिक्षो ते दयितास्ति किं नहि नहि प्राणप्रिया तुम्बिका ॥ १४ ॥ या पाणिग्रहलालिता[5] सुसरला तन्वी सुवंशोद्भवा[6] गौरी स्पर्शसुखावहा गुणवती नित्यं मनोहारिणी । सा केनापि हृता तया विरहितो गन्तुं न शक्तोऽस्म्यहं रे भिक्षो तव कामिनी नहि नहि प्राणप्रिया यष्टिका ॥ १५ ॥

---

## कूटानि ।

केशवं[7][8] पतितं दृष्ट्वा द्रोणो[9] हर्षमुपागतः । रुदन्ति कौरवाः[10] सर्वे हा केशव कथं गतः ॥ १ ॥ पानीयं पातुमिच्छामि त्वत्तः कमललोचने । यदि[11] दास्यसि नेच्छामि नो दास्यसि पिबाम्यहम् ॥ २ ॥ [12]विषं भुङ्क्ष्व महाराज स्वजनैः परिवारितः । विना केन[13] विना नाभ्यां[14] कृष्णाजिनम्[15] अकण्टकम्[16] ॥ ३ ॥ अर्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः । सीदन्ति मम गात्राणि माघमासे[17] गवा इव ॥ ४ ॥ यस्य षष्ठी चतुर्थी च विहस्य च विहाय च । अहं कथं द्वितीया स्याद्वितीया[18] स्यामहं कथम् ॥ ५ ॥ समरे हेमरेखाङ्कं बाणं मुञ्चति राघवे । सरावणोऽपि मुमुचे मध्येरीतिं[19] परं शरम् ॥ ६ ॥ शिलार्पितपदद्वन्द्वा[20] नासार्पितकरद्वया[21] । अभूदुच्चकस्तनी नारी कथमेतां विवेक्ष्यति ॥ ७ ॥ सुवर्णस्य[22] सुवर्णस्य[23]

---

१ अम्बुदम्, (पक्षे) मेऽघ पापम् २ मेघम्, (पक्षे) स्तनम्. ३ 'मे उर' इति पदच्छेद ४ समीपे स्थातु योग्यया, (पक्षे) अङ्कमारोढु योग्यया. ५ विवाह, (पक्षे) पाणौ धारणम् ६ कुलम्; (पक्षे) वेणुः. ७ जले ८ मृतकम् ९ कृष्णकाकः. १० शृगाला. ११ यदि दासी असि नेच्छामि नो दासी असि तदा पिबाम्यहमिति पदच्छेद. १२ विगत पकारो यस्मात् १३ ककारेण विना १४ नकारद्वयरहितम् १५ कृष्णाजिनम्. अत्र ककार-पकार-णकार-नकाराणा निष्कासने ऋ आ जि अम् इति स्थिते संधौ कृते "राज्यम्". १६ शत्रुरहितम्. १७ "माघमा कर्कटी प्रोक्ता तदपत्यानि सेगवा" इत्युक्तेः कर्कट्या अपत्यानि यथा जन्मसमये तस्या अङ्गानि विदार्य बहिर्यान्ति तद्वदिमे बाणा ममाङ्गानि विदारयन्तीत्यर्थ. १८ सहधर्मिणी. १९ मध्यभागे रीतिः पित्तल तद्विशिष्टम्, (पक्षे) मध्ये रीकारविशिष्ट शरम् शरीरमित्यर्थ. २० "अधस्ताद्दारुणि शिला." २१ "नासा दारुपरि स्थितम्." २२ उज्ज्वलवर्णस्य. २३ शोभना वर्णा नामाक्षराणि यत्र तस्य.

[1]सुवर्णस्य च जानकि । प्रेषिता तव रामेण [2]सुवर्णस्य च मुद्रिका ॥ ८ ॥ निश्चितं [3]ससुरः कोऽपि न [4]कुलीनः [5]समे मतिः । सर्वथा [6]सुरसंबद्धं [7]काव्यं यो नाभिनन्दति ॥९॥ येनाकारि [8]पराभूतिर्दि[9]ननायकसूनवे । यद्गो[10]त्रात्मभवाकान्तं तन्म[11]हः श्रेयसेऽस्तु वः ॥ १० ॥ विजितो[12]त्मभवद्वेषिगुरुपादहतो जनः । हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥ ११ ॥ [13]शंकरं पतितं दृष्ट्वा [14]पार्वती हर्षनिर्भरा । रुरुदुः पन्नगाः सर्वे हा हा शंकर शंकर ॥ १२ ॥ हनुमन्ते [15]हतारामे वानरा हर्षनिर्भराः । रुदन्ति राक्षसाः सर्वे हाहाराम हता हताः ॥ १३ ॥ वि[16]रञ्जिराजपुत्रारेर्यन्नाम चतुरक्षरम् । पूर्वार्धं तव शत्रूणां परार्धं तव संगरे ॥ १४ ॥ [17]अष्टशूला जनपदाः शिवशूलाश्चतुष्पथाः । प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे ॥ १५ ॥ कुन्दकुञ्जममुं पश्य सरसीरुहलोचने । [18]अमुना कुञ्जेन सखि मे किं प्रयोजनम् ॥ १६ ॥ राजन्कमलपत्राक्ष तत्ते भवतु चाक्षयम् । आसादयति यद्रूपं करे[19]णुः करणैर्विना ॥ १७ ॥ [20]स्तनमण्डलमाश्रित्य नखस्य वरयोषिताम् । कदाकर्णयते गीतं रमया सह रङ्गराट् ॥ १८ ॥ [21]एकोना विंशतिः स्त्रीणां स्नानार्थं सरयूं गता । विंशतिः पुनरायाता एको व्याघ्रेण भक्षितः ॥ १९ ॥ [22]त्रैलोक्ये नोपमैतस्याः सखे किमिति भाषसे । अनन्तरा सा नादिर्वा न तृतीयेति मे मतिः ॥ २० ॥ [23]सुवर्णालंकृता कन्या हेमालंकारवर्जिता । [24]सा कन्या वि[25]धवा जाता

१ अशीतिरक्तिकापरिमितस्य. २ काञ्चनस्य. ३ सुरया सहितः. मद्यप इत्यर्थः, (पक्षे) सः सुरः इति पदच्छेदे सुरो देवः. ४ सत्कुलप्रसूतः; (पक्षे) कौ[illegible] ५ समे साधौ अमतिः. श्रद्धारहित इति यावत्; (पक्षे) समे विष्णौ मतिर्यस्य सः. ६ शोभनरसै[illegible] अ[illegible] रचितम्; (पक्षे) असुरैः संबद्ध युक्तम्. ७ कविकृतिम्; (पक्षे) शुक्रम् ८ पराजयः; (पक्षे) परा उ[illegible]त्तरैश्वर्यम्. ९ कर्णाय सुग्रीवाय यमाय च. १० गास्त्रायन्ते ते गोपास्तेषामात्मभवा गोपिकास्तासां कान्तो[illegible] सखीरम्. अथ च गोत्रायाः पृथ्व्या आत्मभवा सीता सा कान्ता यस्य तत्. अथ च गोत्रस्य हिमालयस्यात्मभ[illegible]वती सा कान्ता यस्य तत्. ११ कृष्णाख्य रामाख्य शिवाख्य च. १२ विना गरुडेनामृताहरणस[illegible] जित इन्द्रस्तदात्मभवोऽर्जुनस्तद्द्वेषी कर्णस्तद्गुरुः पिता सूर्यस्तत्पादहतस्तत्किरणसतप्तः. हिमापहोऽग्निस्त[illegible] मित्रं पानीयं तद्धरो मेघः सूर्यकिरणसंतप्तो जनो मेघाच्छन्नमाकाशमभिनन्दतीति तात्पर्यार्थः. १३. श्रेष्ठचन्दन[illegible]. १४ पर्वतवासिनी स्त्री. भिल्ली. १५ हते आरामे. रावणस्योद्याने दाहिते सतीत्यर्थः. १६ वयः पक्षिणस्तेषां राजा गरुडस्तद्राजा विष्णुस्तत्पुत्रो मदनस्तदरिः शिवस्तस्य चतुरक्षर नाम "मृत्युजयः" इति. तत्पूर्वार्धं मृत्युरिति सगरे तव शत्रूणाम्. उत्तरार्ध जय इति तव. १७ "अष्टमन्न शिवो वेदो ब्राह्मणश्च चतुष्पथः । केशो भग इति प्रोक्तः शूलो विक्रय उच्यते" इति. १८ मुकाररहितेन. मुकुन्दकुञ्जेनेति यावत्. १९ करेणुः करणैर्विना ककार-रेफ-णकारैर्विना यद्रूपमासादयति प्राप्नोति तत्तेऽक्षय भवत्वित्यन्वयः. उक्तव्यञ्जनत्रयरहितम् अ ए उः इति स्वरत्रयम्. तत्र अ ए इत्यत्र वृद्धौ ऐ उः इत्यत्र आयादेशे "आयुः" इति सिद्धम्. २० खस्याकाशस्य मण्डलमाश्रित्य हे कद मेघ मा स्तन गर्जित मा कुरु. यतो रङ्गराड्रङ्गनाथो रमया सह वरयोषितां गीतमाकर्णयत इत्यन्वयः. २१ एकोना इति विंशतेर्विशेषणेन विरोधः. एको ना नरः इति पदच्छेदेन परिहारः. २२ कश्चित्स्वनायिका स्तौति. त प्रति अन्य प्रतिभाषते. हे सखे एतस्यास्त्रैलोक्ये उपमा नास्तीति किमिति कुतो भाषसे. यत. सा उपमैव अनन्तरा मध्यवर्णरहिता. उमेति यावत् अथवा सैव उमा अनादिः आद्यवर्णरहिता. मा लक्ष्मीरिति यावत्. उपमा उपमानमस्तीति भावः. तृतीया नास्तीति मे बुद्धिः २३ सुष्ठुवर्णेन कान्त्यालंकृता. २४ विद्युदित्यर्थः. २५ विविधा धवाः पतयो यस्याः सा. जारिणीत्यर्थः..

गृहे रोदिति तत्पतिः ॥ २१ ॥ अहं च त्वं च राजेन्द्र लोक[1]नाथावुभावपि । बहुव्रीहिरहं राजन्षष्ठीतत्पुरुषो भवान् ॥ २२ ॥ [2]अपः पिबन्प्रपापालीमनुरक्तो विलोकयन् । अगस्त्यं चिन्तयामास चतुरः सापि सागरान् ॥ २३ ॥ ब्रह्म [3]नान्तमपि क्लीबं मनः [4]सान्तं न पश्यति। किं चित्रं लोकजनकं वाक्[5]कान्ता नैत्यक[6]न्तिकम् ॥ २४ ॥ [7]अर्धरात्रे दिनस्यार्धे अर्धचन्द्रेऽर्ध-भास्करे । रावणेन हृता सीता कृष्णपक्षे सिताष्टमी ॥ २५ ॥ [8]शमीगर्भस्य यो गर्भस्तस्य गर्भस्य यो रिपुः । रिपुगर्भस्य यो भर्ता स मे विष्णुः प्रसीदतु ॥ २६ ॥ [9]केहमस्मि गुहा-वक्ति प्रश्नेऽमुष्मिन्किमुत्तरम् । कथमुक्तं न जानासि कदर्थयसि यत्सखि ॥ २७ ॥ वि[10]षादी भैक्ष्यमश्नाति [11]सदारोगं न मुञ्चति । रुष्टेनापि त्वया वीर शंभुनारिः समः कृतः ॥ २८ ॥ [12]विहंगो वाहनं यस्य त्रिकं[13]चैधरपाणयः । [14]पासालसाहृता देवी सदा तिष्ठतु ते गृहे॥२९॥ शस्त्रं [15]न खलु कर्तव्यमिति पित्रा नियोजितः । तदेव शस्त्रं कृतवान्पितुराज्ञा न लङ्घिता॥३०॥ कान्ते धावय मे पादाविति भर्त्रा निवेदिता । [16]नतया धाविर्तौ पादौ भर्तुराज्ञा न लङ्घिता॥३१॥ देव[17]राजो मया दृष्टो वारि[18]वारणमस्तके । भक्षयित्वार्कपर्णानि विषं[19] पीत्वा क्षयं[20] गतः ॥ ३२ ॥ [21]कुमारसंभवं दृष्ट्वा रघुवंशे मनोऽदधत् । राक्षसानां कुलश्रेष्ठो रामो राजीवलोचनः ॥ ३३ ॥ विना[22]यौवनमार्गेण गच्छन्तौ लपितं मया । हरेः कृत्यं दर्शयतां पश्येत्युक्ते न दृश्यते ॥ ३४ ॥ विना[23]यकपतिशत्रुस्तस्य नाम षडक्षरम् । पूर्वार्धं तव राजेन्द्र उत्तरार्धं तु वैरिणाम् ॥ ३५ ॥ कोला[24]कृतिरपारेवो मोरोहंसो जलोदरी । कंसारिरात्तलीलो वो वाघलो

---

१ (बहुव्रीहिपक्षे) लोका जना नाथाः स्वामिनो यस्यैवंविधोऽहम्. याचकत्वात्. (षष्ठीतत्पुरुषपक्षे) लोकाना जनाना नाथ एवंविधस्त्वम्. राजत्वेन पालकत्वात्. २ समुद्रमपि करे चुलुकयतो मुने. सामर्थ्य मम चेत्स्या-त्तर्हि झटिति तृट्शान्त्यभावाच्चिरमेना पश्यामीति पान्थाभिप्रायः. यदि चतुर सागरा. सनिहिता. स्युस्तदानव-रत जलधारा विसृजन्ती चिरमेतद्दर्शनसुखमनुभवेयमिति प्रपापाल्यभिप्राय . ३ न विद्यतेऽन्तो यस्य तत्, (पक्षे) नकारान्तम्. ४ अन्तेन सहितम्, (पक्षे) सकारान्तम्. ५ ककारोऽन्ते यस्याः; (पक्षे) कान्ता रमणी ६ अकस्य दु खस्यान्तक नाशकम्, (पक्षे) ककारान्त न भवतीति तत्. सान्त मनो नान्त ब्रह्म न पश्यतीति युक्तमेव पर स्वयं कान्ता वाक् अकान्तकमपि लोकजनकत्वात्कान्त ब्रह्म नैतीति चित्रमिति भावः. ७ कृष्ण-पक्षे याष्टमी तस्य दिनस्यार्धे रावणेन सीता हृता किलक्षणाष्टमी. अर्धरात्रे सिता. पु० किं० अर्धचन्द्रे. किंभूतेऽर्धचन्द्रे अर्ध भाः करोति अर्धभास्करास्तस्मिन् ८, ९ ?. १० खिन्न , (पक्षे) विषमत्तीति स.. ११ सदा सर्वदा रोग व्याधिम्; (पक्षे) सदार सस्त्रीक अग शैलम्. १२ वि गरुड , हस , गो वृषभः. १३ त्रिशूलः, कम्बुः, चक्रम् १४ पार्वती, सावित्री, लक्ष्मी.. १५ नखाल्लुनातीति नखलु नखच्छेदकम् १६ न-तया नम्रीभूतया. १७ हे देवर अजो मेष. १८ सेतुः. १९ पानीयम्. २० वास . २१, २२, २३ ?. २४ कंसारिः श्रीकृष्णो वो युष्मानवतु रक्षतु. कथंभूत कंसारिः कोलाकृति.. कोलस्य सूकरस्य रूप यस्य स . पु० क०. अपारेव . अपारे संसारे अवति रक्षति तथा. यद्वा अपारे समुद्रे वसतीति स . क्षीरसमुद्रशायीत्यर्थः. पु० क०. मोरोहसः मायाः लक्ष्म्या उरो वक्षस्तत्र हस इव हंसः. पु० क० जलोदरी. जले उदके उदरं गृहं यस्यास्तीति स.. पु० क०. आत्तलीलः. आत्ता अङ्गीकृता लीला विलासो येन स.. पु० क०. वाघलः. वा नि-श्चयेन अघ लुनातीति स.. पु० क०. भूकलः. भुव कलयति उद्धरति सः.

भूकलोऽवतु ॥ ३६ ॥ [1]सुरारिरिपुभृत्यस्य तस्य तातस्य वाहनम् । अन्त्याक्षरविहीनस्य तस्य कान्ता स्थिरा भव ॥ ३७ ॥ [2]नागवल्लिरिपोः कन्या सा कन्या यस्य वल्लभा । तस्य हाररिपुस्वामी तस्य कान्ता स्थिरा भव ॥ ३८ ॥ [3]केष्ठामानगजायुक्ता वार्चवीश्वरगोजगाः । शं वो ददतु काजेशा वेदेलास्वर्धुनीधराः ॥ ३९ ॥ [4]रामरा मेऽतिरामेऽतिरमे रामे मनोरमे । सहस्रनामतत्तुल्यं रामनाम वरानने ॥ ४० ॥ [5]बन्धनान्मोचितो येन दैत्यसूनुतनूद्भवः । तमनोङ्ककरमहं श्रीश्रं श्रराद्दते भजे ॥ ४१ ॥ [6]अर्जुनान्ते वरारोहे भीमान्ते च वरानने । पाण्डवैः सह योद्धव्यं रक्षणीयो धनंजयः ॥ ४२ ॥ [7]चेतनं पुष्करं कोशैः क्षुधाध्मातैः समन्ततः । न घृणीनामरम्याणां विवेकं यान्ति दृष्टयः ॥ ४३ ॥ [8]शब्दस्य तुरीयभागे पव्यान्ते राजवर्जिते । वाजं देयं यत्नेन कविभ्यो वज्रनिर्मितम् ॥ ४४ ॥ [9]बृहद्व्यसहस्राणि द्वारि तिष्ठन्तु भूपते । [10]पिशंगिले सुखं यान्तु स्थिरा भूयात्पिलिप्पिला[11] ॥ ४५ ॥ [12]यथा नयति कैलासं नगं गानसरस्वती । तथा नयति कैलासं न गङ्गा न सरस्वती ॥४६॥ [13]मोमारामममादन्द्रे हयागदलनंभपः । यस्यैतानि न विद्यन्ते स याति परमां गतिम् ॥४७॥

---

१ सुरारी रावणस्तस्य रिपू रामस्तस्य भृत्यः सेवको हनूमांस्तस्य तातो वायुस्तस्य वाहनं हरिणस्तस्यान्त्याक्षरविहीनस्य. लुप्तणकारस्येत्यर्थः. ततश्च हरिरिति जातम्. तस्य हरेः कान्ता लक्ष्मीर्भवतो गृहे स्थिरा भवेति. २ नागवल्ली नाम उत्तमवल्ली तद्रिपुर्हिमाचलस्तत्कन्या पार्वती तत्स्वामी रुद्रस्तद्धारः सर्पस्तद्रिपुर्गरुडस्तत्स्वामी विष्णुस्तत्कान्ता लक्ष्मीः सा भवतो गेहे स्थिरा भवेति. ३ केष्ठा ब्रह्माणी च मा रमा च नगजा गिरिजा च ताभिर्युक्तास्तथा. वार्चो हंसो वीश्वरो गरुडो गोजो वृषभस्तैर्गच्छन्ति तथा. वेदाश्च इला पृथ्वी च स्वर्धुनी स्वर्णदी च ता धरन्ति एवंविधाः. कश्च अजश्च ईशश्च काजेशास्ते वो युष्माकं शं सुखं ददतु. ४ हे वरानने अहं रामे अतिरमे. कथंभूते रामे. अतिरामे. अतिक्रान्ता रामा येनासौ तस्मिञ्शुद्धे ब्रह्मणि. पु० क०. मनोरमे. मनो रमयतीति तस्मिन्. कथंभूतः अहम्. रामरा राम एव रा द्रव्यं यस्य सः. यतः कारणान्मे मम सहस्रनामभिस्तुल्यं रामनाम अत इति कारणात् ॥ अथवा अहं रामे अतिरमे. कथंभूते रामे. वरानने वरमाननं यस्यासौ तस्मिन्. उत पार्वत्याः संबोधनं वा. कथंभूतं रामनाम्. सहस्रनामतत्. सहस्रनाम तनोतीति सहस्रनामतत्. "रमन्ते योगिनो यत्र परानन्दे चिदात्मनि । अतो रामपदेनासौ परं ब्रह्माभिधीयते" इति. ५ दैत्यो हिरण्याक्षस्तस्य सूनुरनुजो हिरण्यकशिपुस्तस्य तनूद्भवः प्रह्लादो येन बन्धनान्मोचित. तम्. अनः शकटं तस्याङ्गं चक्रं करे यस्य तं श्रीश्रं श्रीनारसिंहमहं भजे इत्यन्वय.. श्री इत्यत्र श्रकाराद्दते विना ई अवशेषः. श्रमित्यत्र राद्दते रेफं विना. ततः शकारः शेषः. तेन 'ईशम्" इति जातम्. ६ अर्जुनो दिवसस्तदन्ते भीमा रात्रिस्तदन्ते च. सायंप्रातरित्यर्थं. धनंजयो वह्निः रक्षणीयः. ७ पुष्करमाकाशं चेतनम्. इवेति शब्दोऽध्याहार्यः. दृश्यते इति शेषः. क्षुधा निर्जलत्वेन ध्मातैः शब्दायमानैः. शारदत्वात्समन्ततः परितः कोशैर्मेघैरुपलक्षितम्. अत एव दृष्टयः कृषीवलाना पामरजनानां न घृणीनामरम्याणां विवेकं न यान्ति. वियतोऽभ्राच्छन्नत्वेन किमिदानीं दिनमस्ति रात्रिर्वेति निश्चयं न प्राप्नुवन्तीत्यर्थः. ८ शब्दोऽहं. तस्य तुरीये भागे चतुर्थे भागे पव्यो मासस्तस्यान्तेऽमावस्यायां राजा चन्द्रस्तेन वर्जिते वाजं अन्नं कविभ्यो ब्राह्मणेभ्यो वज्रेण घृतेन निर्मितं युक्तं देयम्. ९ अश्वाः १० अहोरात्रे. ११ लक्ष्मी.. १२ गानसरस्वती यथा कैलासं नगं नयति तथा न गङ्गा न सरस्वती प्रापयति. १३ मोहः माया रागः मदः मलः मानः दम्भः द्वेषः इति प्रथमाद्यक्षरानुक्रमेण ग्रहणम्.

[1]मा तीराण्ड जने हीनां गीर्यावच्चोदयते रविः । उदिते च दिवानाथे संगमः पुनरावयोः ॥ ४८ ॥ तातेन कथितं पुत्र लेखं लिख ममाज्ञया । न[2] तेन लिखितो लेखः पितुराज्ञा न लोपिता ॥ ४९ ॥ [3]वासनावासुदेव स्य वासितं भुवनत्रयम् । सर्वभूतनिवासीनां वासुदेव नमोऽस्तु ते ॥ ५० ॥ [4]आटवी कोटवीचीश्च गाढवीचिकवाहिनी । तव रक्षतु राजेन्द्र गाढवाचा प्रजापतिः ॥ ५१ ॥ [5]त्रिलोचनसंभूतज्योतिरुद्गमभासिभिः । सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥ ५२ ॥ मुद्गदाली धृतव्याली कवीन्द्रवितुपा कथम् । भक्तवच्छभसंयोगाज्जाता विगतकञ्चुकी ॥ ५३ ॥ [6]भ्राभ्राड्[7]ङ्[8]णुधामाप्य विर्षमाश्वः करोत्ययम् । [9]निद्रां [10]सहस्रपर्णानां पलायनपरायणाम् ॥ ५४ ॥ [11]कंति ते कवरीभारः [12]सुमनःसङ्गात्प्रियेऽति[13] नीलत्वात् । [14]भवति च [15]कलापवत्त्वान्निर्जरसे[16]व्यः कथं न स्यात् ॥ ५५ ॥ यामि वि[17]धौवभ्युदिते पुनरेष्यामीति यदुदितं भवता । जानात्यु[18]दन्तमेतं नेदं [19]तत्त्वेन मुग्धवधूः ॥ ५६ ॥ अ[20]धुना म[21]धुकरपतिना गिलितोऽप्य[22]पकारदंपती येन । त्रातः स पालयेत्त्वां वि[23]गतविकारो विनायको लक्ष्म्याः ॥ ५७ ॥ [24]उपरिगतं हि सवर्णं हृत्वा करतो ददासि रन्तुं मे । धन्यः सरोजयु-

१ हे तीराण्ड चक्रवाक जन तावत् हीना गी मा वद शेष स्पष्टम्) २ नतेन नम्रीभूतेन. ३ हे वासन वासयतीति वासनस्तस्य सबुद्धौ. त्व भुवनत्रय अव रक्ष पालय. कथभूत भुवनत्रयम् सर्वभूतनिवासि. सर्वाणि भूतानि निवसन्त्यस्मिस्तत्. हे असुदेव प्राणेश्वर इना कामादीना वासित स्य अन्त कुरु हे वासुदेव ते तुभ्य नमः अस्तु ॥ अथवा अस्तुते न स्तौतीति अस्तुत् तस्मै स्तोतुमशक्याय. वसुभिर्दिव्यतीति वासुदेव. तस्य सबुद्धौ हे वासुदेव. अथवा वसुदेवशब्दित शुद्ध सत्त्व तत्रभवो वासुदेवस्तस्य सबुद्धौ ते तुभ्य नमः अस्तु. असून्ददातीति असुदेव . यद्वा असूना देवः असुदेव.. हे असुदेव ॥ गणेशपक्षे—हे सर्वभूतनिवासीनः सर्वभूते सह निवासकारी रुद्रः स इनः पितृत्वात्स्वामी यस्येति तथोक्तस्तथा. हे अम्बासुद अम्बा पार्वती माता तस्यै सुख ददाति तथोक्त. हे पार्वतीनन्दनेत्यर्थः. तथा हे इव इ मही वाति भक्तानतुग्रहीतु प्राप्नोतीति तत्संबुद्धौ. ते तुभ्यं नमो नतिरस्तु त्व भुवनत्रय त्रिलोकी अवसि पालयसि कथभूत भुवनत्रयम्. अवासितम्. वास आश्रयो जातो यस्येति वा सितम्. न वासित अवासितम्. निराश्रयमित्यर्थं . कया अवासि. वास एवाश्रय-एव नौः दु.खसागरतरणाय हेतुभूता तरी तया कि० सुदे शोभनप्रदे वरदानपरायणे वरदसमूहे श्रेष्ठे इति शेष ॥ हरिपक्षे—हे इन स्वामिन् तथा हे अम्बासुद अम्बावन्मातृवत् सु शोभनं ददातीति हे तथोक्त तथा हे इव इ लक्ष्मी वाति प्राप्नोति स इवः तत्सबुद्धौ यद्वा हे अम्बासुदेव इत्येक सबोधनपदम् अम्बा माता असुद प्राणदाता पिता कथ्यते तयैव लक्ष्मी वाति प्राप्नोतीति हे तथोक्त. जगता मातृत्व पितृत्व वेति सबोधनाभिप्रायः ते नमोऽस्तु . ४ गाढा या वाक् तया कृत्वा प्रजापतिः. अटव्या अरण्ये गच्छति सा आटवी कोटयो वीचयो यस्या. सा गाढाभिर्निबिडाभिर्वीचिभि. क जल वहते सा गङ्गा तव त्वा रक्षतु ५ कमलैरित्यर्थं . ६ जलदे भ्राजमान. ७ आकाशम् ८ सप्ताश्व.. सूर्य इत्यर्थ . ९ सकोचम्न् १० पद्मानाम् ११ क इव ब्रह्मेव आचरति. १२ पुष्पाणाम्, (पक्षे) देवानाम् १३ अ इव विष्णुरिवाच॰. १४ भव इव शिव इवाचरति. १५ कलापो भूषण तद्वत्त्वात्, (पक्षे) कलापश्चन्द्रस्तद्वत्त्वात् १६ जरारहितैस्तरुणैः सेव्य , (पक्षे) निर्जरैर्देवैः सेव्यः १७ देवे, (पक्षे) चन्द्रे १८ वृत्तान्तम्; (पक्षे) उकारान्तम्. १९ इद तत्त्वेन सत्यत्वेन; (पक्षे) इदन्तत्त्वेन इकारान्तत्वेन. २० अपगतो धुकारो यस्मात्तेन. २१ मधुकरपतिर्मकरपतिस्तेन. २२ पकारशून्यो दपती. दन्तीत्यर्थः. २३ विगतो विकारो यस्मात्स विनायकः. नायक इत्यर्थ.. २४ कृष्णो राधिका पृच्छति. उपरिगत सवर्ण समानवर्ण सरोजयुगल करतो हृत्वा स्वहस्तेन आहृत्य मे रन्तु ददासि. ततो राधया तस्मिन्दातु गृहीते सति उवर्णेन

गलं त्यक्त्वा स्तनयुगमथास्पृशत्कृष्णः ॥ ५८ ॥ [1]अच्युतभक्तिवशादिह समभावस्तत्प्रसङ्गेन । सारमतेरभ्युदयति रतिरिति नैवाद्भुतं किंचित् ॥ ५९ ॥ [2]मञ्जुलघौ संभावितगुणे क्वचिन्नाप-दाधारे । अयि सखि तत्रोपपतौ मम चेतो न त्वनीदृशे पत्यौ ॥ ६० ॥ [3]अयि सखि शस्तः सखिवत्पतिरिति किं त्वं न जानासि । शस्तोऽतिसखिवदुपपतिरित्यालि कथं त्वयापि नाबोधि ॥ ६१ ॥ [4]द्वन्द्वो [5]द्विगुरपि चाहं मद्गेहे नित्यम[6]व्ययीभावः । [7]तत्पुरुष कर्म धारय येनाहं स्यां बहुव्रीहिः ॥ ६२ ॥ [8]त्वद्विरहमसहमाना निन्दति बाला दिवानिशं शंभुम् । राहुमपि रामचन्द्रं रामानुजमपि च पन्नगारातिम् ॥ ६३ ॥ स जयति चित्रचरित्रो यस्य हि [9]वैरच-रणपुष्करकरेणुः । [10]महिषीमृषिसिंहस्य प्राजीजनदपि [11]वृषोदये हेतुः[12] ॥ ६४ ॥ रविसुतक-तगोकर्णः श्रुतिविषयगुणाम्बरो भुवनात्मधरः । नरकशिरा जगदखिलं चिरमव्याद[13]समरु-क्पाणिः ॥ ६५ ॥ सा[14]यकसहायबाहो म[15]करध्वजनियमितक्षमाधिपते । अ[16]ब्जरुचिभास्वरस्ते भातितरामवनिप श्लो[17]कः ॥ ६६ ॥ वाताच्छीतिररिध्रोऽरं वो हरतान्म[18]हासुरीदयितः । व्रीडव्राज्यानौकाः वार्वाहाभो सप्रस्तानाः ॥ ६७ ॥ लम्बोदर तव चरणावादरतो यो न

---

परिगतं युक्त सवर्णरहित एतादृशं सरोजयुगल उरोजयुगलमेव इति धिया कमलयुग त्यक्त्वा स्तनयुगलमेव कृष्णोऽस्पृशत्. १ इह संसारे अच्युतभक्तिवशात्समभाव समत्व शत्रुमित्रादिषु. तत्प्रसङ्गेन भक्तिप्रसङ्गेन सारमतेः श्रेष्ठबुद्धे पुंसः रति प्रीतिः अभ्युदयति इति न किंचिदत्याद्भुतम् ॥ व्याकरणपक्षे—भो अच्युतभ च्युत अहीना भा प्रतिभा यस्य. क्तिवशात् क्तिप्रत्ययवशात् स प्रसिद्धो मभावः मकारस्याभावो लोपः. भवतीति शेषः. तत्प्रसङ्गेन क्तिप्रत्ययप्रसङ्गेन रमतेर्धातोः सा रतिः अभ्युदयतीत्यपि नाद्भुतम्. रमु क्रीडायामित्यस्माद्धातोः क्तिनि अनुदात्तोपदेशेति मलोपे रतिरिति रूप सिद्ध्यति. २ कापि विदुषितरा नायिका सखीं प्रति वदति. अयि सखि तत्र तस्मिन्नुपपतौ मम चेत. अस्तीति शेषः कीदृशे. मञ्जुलघौ. मञ्जुः सुन्दरः स चासौ लघुरिष्टश्च. पुं घौ०. संभावितगुणे. संभाविता गुणाः सौन्दर्यादयो यत्र. पुं० कीं०. क्वचित्कदाचिदपि न आपदाधारे आपद्रहिते इत्यर्थः अनीदृशे उक्तगुणरहिते पत्यौ मम चेतो नास्तीति ॥ व्याकरणपक्षे—उपपतौ उपपतिशब्दे मम मनोऽस्ति. कीं०. मञ्जुला घिसंज्ञा यस्मिन् संभावितः 'घेर्ङिति' इति गुणो यस्य. ना इति पदस्य 'आङो ना स्त्रियाम्' इति सूत्रविहितस्याधारे आश्रये. अनीदृशघिसंज्ञागुणनादेशरहिते केवले पतिशब्दे. ३ अयि सखि पति सखिवत् शस्तः मित्रवद्विश्वसनीय इति त्व किं न जानासि. सखी प्रत्याह. हे आलि उपपतिः जारः अतिसखिवत् अतिशयितमित्रवत् शस्त इति त्वयापि कथ नाबोधि ॥ व्याकरणपक्षे—पतिशब्द शस्तः शस इति शस्तः पञ्चम्यन्तात्तसि. द्वितीयाबहुवचनात्पर सखिवत्सखितुल्यरूपो ज्ञेयः. नादेशाभावेन कार्यैक्यात्. उपपतिशब्दः शस्तः द्वितीयाबहुवचनात्पर अतिसखिशब्दवत् नादेशभाक्. ४ यतः स्त्रीपुरुषरूपव्यक्तिद्वयात्मकः. ५ द्वौ गावौ यस्य ६ भावो वस्तुमात्रम्. अव्ययो व्ययाभाववान्. मद्गेहे कस्यापि वस्तुनो व्ययो नास्तीत्यर्थः. यद्वा अव्ययीभवन अव्ययीभाव. ७ तत्तस्माद्धे पुरुष येनाह बहुव्रीहिर्बहुधान्यविशिष्टः स्या तत्कर्म धारयेत्यन्वय. समासषट्कप्रतिपादनमत्र चित्रम्. ८ मन्मथावशेषणाच्छंभुम्, चन्द्रावशेषणाद्राहुम्, मलयाद्यवशेषणात्रामचन्द्रम्, मन्मथजनकत्वाद्बलरामानुजम्, वायुभक्षिसर्पहननात्पन्नगारातिं गरुड निन्दितवतीति भावः. ९ वरः श्रेष्ठो यश्चरणकमलमकरन्दलोलरेणु १० ऋषिश्रेष्ठस्य गौतमस्य पत्नीम् ११ वृषः सुकृतम्. १२ उत्कृष्टचरणशुण्डाभो गज सिंहस्य महिषी जनयामास वृषो वृषभस्तस्योदये हेतुरिति चित्रम्. १३ न समोऽसमो विषमः स चासौ रुक् च समरुक् शूलरोगः. त्रिशूलमित्यायुधविशेषः स पाणौ हस्ते यस्य सः शूलपाणिः. शिव इत्यर्थः. १४ खड्गः. १५ समुद्रः. १६ चन्द्रः. १७ यश. १८ महासुरीदयित इत्यस्मात् ईदयित इति विशेष्यपदमत्र धृतमस्ति.

पूजयर्ति । स भवति विश्वामित्रो दुर्वासा गौतमश्चेति ॥ ६८ ॥ [4]अम्बरमम्बुनि पत्रमरातिः पीतमहीनगणस्य ददाह । यस्य वधूस्तनयं गृहमब्जा पातु स वो हरलोचनवह्निः ॥ ६९ ॥ [5]वायुमित्रसुतबन्धुवाहनारातिभूषणशिरोवलम्बिनी । तज्जवैरिभगिनीपतेः सखा पातु मां कमललोचनो हरिः ॥ ७० ॥ [6]तनुज्वरपीडितासि बाले तव सौख्याय मतो ममोपवासः । [8]समर्पय वैद्यनाथ नाहं भवदावेदितलङ्घने समर्था ॥ ७१ ॥ [10]कुबेरपुरीविलोकनं न [11]धरासूनुकरं कदाचन । अथ तत्प्रतिकारहेतवेऽ[12]दमयन्तीपतिलोचनं भज ॥ ७२ ॥ [13]रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग्धिक् । अस्मिन्पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग्धिक् ॥ ७३ ॥ गो[14]र्गजवाहनभोजनभक्षोद्भूतपमित्रसपत्नजशत्रोः । वाहनवैरिकृतासनजुष्टा मामिह पातु जगत्रयतुष्टा ॥ ७४ ॥ [15]नदीज लङ्केशवनारिकेतुर्नगाह्वयो नाम नगारिसूनुः । एषोऽङ्गनावेषधरः प्रमाथी जित्वा वयं नेष्यति चाद्य गावः ॥७५॥ श्रुत्वा प्रदग्धं तनयं सशोका पुनर्निशम्याप्तशरीरभावम् । पश्यत्सु देवेषु च धावमाना रमा मुदा [16]शंकरमालिलिङ्ग ॥ ७६ ॥ [17]गोकर्णराडाभरणं यदीयं यद्गव्यहव्यादजमाददाह । कुंभेनचूडामणिरादिगन्तात्पायादपायादुरगात्मजार्धः ॥ ७७॥ विलासिनीं काञ्चनपट्टिकायां [18]पाटीरपङ्कैर्विरही विलिख्य । तस्याः [19]कपोले व्यलिखत्[20]पवर्गं [21]तवर्गमोष्ठे चरणे [22]टवर्गम् ॥ ७८ ॥

१ गर्दभ . २ दुष्टः. ३ पशु . ४ स कृष्णो वो युष्मान्पातु. यस्याम्बर पीतम्. यस्य गृहमम्बुनि. यस्य पत्र वाहन अहीनगणस्यारातिर्गरुड यस्य वधूरब्जा कमला. यस्य तनय हरलोचनवह्नि. ददाह. ५ वायुमित्रमग्निस्तत्सुत षण्मुखस्तद्बन्धुर्गजाननस्तद्वाहन मूषिकस्तदरातिः सर्पस्तद्भूषण· शिवस्तच्छिरोवलम्बिनी गङ्गा तज्जो भीष्मस्तद्वैरी शिखण्डी तद्भगिनी द्रौपदी तस्या पतिरर्जुनस्तत्सखा कृष्ण. ६ महान्, (पक्षे) काम.. ७ लङ्घनम्, (पक्षे) समीपस्थिति. ८ भेषजम्, (पक्षे) प्रीतिम् ९ उपवासे, (पक्षे) उल्लङ्घने. १० अनलका. निधवेत्यर्थ . ११ मङ्गलकारकम् १२ अनललोचन शिवम्. १३ "जीविकार्थे चापण्ये" इत्यत्र अपण्ये इत्युक्तत्वाद्धस्तिकान्विक्रीणीते इत्यत्रैव रामक सीतका लक्ष्मणक इति प्रयोगा एव साधवः. १४ गवा गच्छतीति गोगः शिवस्तज्जः कार्तिकेयस्तस्य वाहन मयूरस्तस्य भोजन भक्ष्य सर्पस्तस्य भक्ष्य वायुस्तदुद्भूतो हनूमास्तं पातीति स तत्र सुग्रीवस्तस्य मित्र रामस्तस्य सपत्नो रावणस्तज्ज इन्द्रजित्तस्य शत्रुरिन्द्रस्तस्य वाहन ऐरावतस्तस्य वैरी सिंहस्तेनोपविष्टा अत एव सर्वोपरि तुष्टा अम्बिका मा पातु रक्षतु १५ भो नदीज गङ्गातनय भीष्म, एष दृश्यमानः अङ्गनावेषधर. स्त्रीरूपधारी लङ्केशवनारिकेतुः रावणवनभञ्जकहनूमद्ध्वज नगाह्वयोऽर्जुननामा नगारिसूनुरिन्द्रपुत्र.. भो भो कौरवा., अय प्रमाथी हन्ता अद्य वो युष्माञ्जित्वा गाश्च नेष्यतीत्यर्थ . १६ श्रेष्ठचन्दनम् १७ उ शिव. कु धरणि अपायान्नाशात्पायाद्रक्षतु स क . गोकर्णा सर्पास्तेषा राट् वासुकि यदीय आभरणम् हूयते यद्धव्यम् गोरिद गव्य च तद्धव्य च गव्यहव्यम्. गव्यहव्यमत्तीति गव्यहव्याद् वह्नि यस्य शिवस्य गव्यहव्याद्वह्निरित्यनेन त्र्यम्बकस्य तृतीयनेत्रोत्थवह्निरित्यर्थ.. स अज अनङ्ग आददाह. यस्य तृतीयनेत्रोत्थो गव्यहव्याद्वह्नि मदन भस्मीचकारेत्यर्थ किंभूत भाना ऋक्षाणां इन. स्वामी चन्द्र. स एव चूडामणिर्मुकुटरत्न यस्य स . पु० कु० अगात्मजा पार्वती अर्धे अर्ध वा यस्य स . आदिगन्ताद्दिगन्तेभ्य आ इति दिगामन्त मर्यादीकृत्य आदिगन्त तस्मात् १८ चन्दनद्रवं . १९ गल्ले २० पवर्गस्य ओष्ठस्थानीयत्वात् ओष्ठाभ्या तव चुम्बन करिष्यामीति सूचितम् २१ तवर्गस्य दन्तस्थानत्वाद्दन्तैस्तवाधरं खण्डयिष्यामीति सूचितम्. २२ टवर्गस्य मूर्धस्थानत्वाद्यदि त्व रुष्टासि तर्हि त्वा शिरसा नमामीति सूचितम्.

काचिद्वियोगानलतप्तगात्री प्राणान्समाधारयितुं लिलेख । बाह्वोर्भुजंगं हृदि राहुबिम्बं नाभौ च कर्पूरमयं महेशम् ॥ ७९ ॥ नेतुः प्रयाणोन्मुखतां समीक्ष्य नक्षत्रमुक्तावलिमस्य कण्ठे । अधारयत्सा स तु वासराणां संख्यापरोऽभूत्सखि कोऽत्र भावः ॥ ८० ॥ गौरीक्षणं भूधरजाहिनाथः पत्रं तृतीयं दयितोपवीतम् । यस्याम्बरं द्वादशलोचनाख्यः काष्ठा सुतः पातु सदाशिवो वः ॥ ८१ ॥ पुंष्पेषुमाता पुरुषायमाणा लज्जावती विश्वसृजं विलोक्य । नाभीसरोजे नयनं मुरारेर्वामेतरं वारयति स्म चित्रम् ॥ ८२ ॥ मृगत्रयं भाति वपुष्यवेषे फलानि चत्वारि सुमानि पञ्च । कपोलपट्टं प्रमदालतायाः पृच्छन्ति मध्यं विदुषः कवीन्द्राः ॥८३॥ इन्दीवराक्ष्याः स्फुटविद्रुमोष्ठ्याः संकेतमुद्दिश्य वने चरन्त्याः । चोरैः समस्ताभरणानि हृत्वा नासामणिर्नोऽपहृतः किमेतत् ॥ ८४॥ नृसिंहदेवे चलिते भरेण प्रत्यर्थिभूतैः क्रियते भरेण । कण्ठे कुठारः कमठे ठकारः शेषे ढकारस्तपने चकारः ॥ ८५ ॥ कुध्रेनसुप्रीनयनाश्रयाशादग्धोन्मदा दर्दुरहर्षकाले । स्वजन्मभक्षप्रियभोजनाशा नृत्यन्ति भीमानुजगोजभाजः॥८६॥ शिरसि देवनदीं पुरवैरिणः सपदि वीक्ष्य धराधरकन्यका । निबिडमानवती रमणाङ्गकं क्वचन चुम्बनमारभत स्म सा ॥ ८७ ॥ काचिद्विलोलनयना रमणे स्वकीये दूरं गते सति मनोभवबाणखिन्ना । त्यक्तुं शरीरमचिरान्मलयाद्रिवायुं सौरभ्यशालिनमहो पिबति स्म चित्रम् ॥ ८८ ॥ कान्ता रुचिं मुनिजनस्तरुणो वियोगी कामश्च रत्नमणिमुज्ज्वलकङ्कणेन । धत्ते पयोधरयुगे कुचभूषणेन हारे हरे हिमकरे मकरे करेषु ॥८९॥ विकसति नयनाभ्यां कैरवं

१ सर्पग्रासभीत्या प्राणा. स्वतो न निर्गमिष्यन्तीत्याशयेन बाह्वोर्भुजग लिलेख. चन्द्रश्च स्वभागतया श्रुतिसिद्ध मृताना मनो ग्रहीतुमागच्छेदित्याशयेन हृदि राहुम्, मन्मथत्रासाय शिव च लिलेखेति भावः. २ नक्षत्रमालाधारणेन नक्षत्रोदयवेलायामागमन कर्तव्यमिति तया सूच्यते. वासरसख्याकरणेन सप्तदिनमध्य एव मयागम्यत इति तेन सूचितम् ३ स सदाशिवो वो युष्मान्पातु _सः क . यस्य गौ' वृषभः पत्र रथ.. तथा ईक्षण तृतीय यस्य भूधरजा पार्वती दयिता यस्य 'अहिनाथः शेषः उपवीत यस्य. अम्बर वस्त्रं काष्ठा. दिशो यस्य. द्वादशलोचनाख्यः कुमार' सुतः यस्य इत्यन्वय. ४ पुष्पेषोर्मदनस्य माता लक्ष्मीः पुरुषायमाणा पुरुषवदाचरन्ती. विपरीतरतं कुर्वतीत्यर्थः. विश्वसृज भगवन्नाभिसरोजस्थ ब्रह्माण विलोक्य लज्जावती सती मुरारेर्दक्षिण नयन वारयति स्म यतो भगवन्नेत्रे हि सूर्यचन्द्रात्मके, तत्र दक्षिणस्य सूर्यात्मकत्वात्तद्वारणेन सरोज मुकुलितं भवेत् ततश्च ब्रह्मापि सरोजकोशेऽन्तर्हितो भवेत्. इति मनसि कृत्वा तद्वारयामासेति भाव.. ५ ? ६ उपरि अक्ष्णो नीलच्छाया. अधस्तात् ओष्ठस्य रक्तवर्णच्छाया. तयो प्रतिबिम्बित नासामौक्तिक गुञ्जाफलमिति मनसि कृत्वा चोरैर्न हृतम् इत्यभिप्राय'. ७ ? ८ कु पृथ्वी धरन्ति ते कुध्राः पर्वतास्तेषामिनः स्वामी हिमाचलस्तस्य सू' पुत्री पार्वती ता प्रीणातीति प्रीर्महादेवस्तस्य नयनस्य आश्रयाशो नेत्रवह्निस्तेन दग्धो य कामस्तेन उन्मदा उन्मत्ता. ९ दर्दुराणा मण्डूकाना हर्षकालो वर्षाकालस्तस्मिन्. १० स्वस्माज्जन्म येषा तानि स्वजन्मानि स्वापत्यानि तानि भक्षयन्ति ते स्वजन्मभक्षा सर्पास्त एव प्रियो भोजनस्य आशा येषा ते ईदृशा . मयूरा इत्यर्थ . ११ सविषं गलम्. १२ मलयस्थचन्दनेष्वनिश सर्पनिवासात्तच्छ्वाससपृक्तस्य वायो. सविषत्वात्तत्पानेन झटिति मे मरणं स्यादिति बुद्ध्या त पपाविति गूढाशयः. १३ ? १४ स पद्मनाभ पद्मया सह फणिनं शेषमधिशेते. यस्य नयनाभ्या चन्द्रसूर्यलक्षणाभ्या कैरव पङ्कज न विकसति. यस्य चरणाम्बु गङ्गाजल पयोधेः ब्रह्मचर्यं श्लथयति दूरीकरोति. यस्योरसि श्रेयसा सम्पदायः

पङ्कजं च श्लथयति चरणाम्बु ब्रह्मचर्यं पयोधेः । उरसि लसति यस्य श्रेयसां संप्रदायः स फणिनमधिशेते पद्मया पद्मनाभः ॥९०॥ [1]अहिरिपुपतिकान्तातातसंबद्धकान्ताहरतनयनिहन्तृप्राणदातृध्वजस्य । सखिसुतसुतकान्तातातसंपूज्यकान्तापितृशिरसि पतन्ती जाह्नवी नः पुनातु ॥ ९१ ॥ उदितवति परस्मिन्प्रत्यये शास्त्रयोनौ गतवति विलयं च प्राकृतेऽतिप्रपञ्चे । सपदि पदमुदीतं केवलः प्रत्ययो यस्तदियदिति च वक्तुं कः क्षमः पण्डितोऽपि ॥ ९२ ॥ वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा पुरारे न प्रायः क्षणमपि भवन्तं प्रणतवान् । न मन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिमान्महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥ ९३ ॥ इदं तावच्चित्रं यदवनितले पार्वणशशी कलङ्कान्निर्मुक्तः किमपि च तदन्तर्विलसति । [5]प्रवालं [6]माणिक्यं [7]कुवलययुगं [8]मन्मथधनुर्मनोहारी [9]वीणाध्वनिरिति महच्चित्रमपरम् ॥ ९४ ॥ [10]हरिद्रायां राहुप्रसरपिहितेच्छापरिषदि प्रयुक्तालंकृत्यै वियुतगरुतां दुर्गकुरटीम् । वयं सार्कोपेताः प्रहर इति सेनाधिपकृताममात्येभ्यो लेखां प्रति दिशति सिंहक्षितिपतिः ॥ ९५ ॥ [11]गता सा किं स्थानं पथि सह तया का स्थितवती नृपेणेत्थं पृष्टा सखि चतुरदूती स्थितवती । विलोक्यालंकारं निजमथ च शाकं नरपतिं निराकाङ्क्षं चक्रे कथय कथमेतत्प्रभवति ॥ ९६ ॥ [12]रतेनान्ते नो हारो रजतगिरिमूले न धनदः सुकेशीनां मध्ये विहरति न कामो नवयुवा । रसान्ते नैवाब्धिर्विबुधनगरीसीम्नि न सुरस्तथान्यस्मिन्पद्ये स्फुटमवतु दैवं किमपि नः ॥ ९७ ॥ काचि-

कौस्तुभमणिर्लसति. एवंविधः पद्मनाभः फणिनमधिशेते. १ अहिः सर्पस्तद्रिपुर्गरुडस्तत्पतिर्विष्णुस्तत्कान्ता लक्ष्मीस्तत्तात' समुद्र स सम्यग्बद्धो येन स' रामस्तत्कान्ता जानकी तस्या हरो हर्ता रावणस्तत्तनय इन्द्रजित्तन्निहन्ता लक्ष्मणस्तत्प्राणदाता हनूमान्स ध्वजे यस्यैतादृशोऽर्जुनस्तस्य सखा कृष्णस्तत्सुतो मदनस्तत्सुतोऽनिरुद्धस्तत्कान्ता उखा तत्तातो बाणासुरस्तस्य सम्यक्पूज्य शिवस्तत्कान्ता पार्वती तत्पिता हिमालयस्तच्छिरसि पतन्ती जाह्नवी भागीरथीत्यर्थ. २ इयदित्यर्थ.. ३ ? ४ मुखमित्यर्थः. ५ ओष्ठ इत्यर्थ. ६ नासामौक्तिकमित्यर्थ. ७ नेत्रे इत्यर्थः ८ भ्रुकुट्यो इत्यर्थः. ९ कण्ठध्वनिरित्यर्थः. १० सिंहक्षितिपति सेनाधिपकृता लेखा अमात्येभ्यः प्रधानेभ्य प्रति दिशति कथयति इति. लेखा प्रतीति किम् वय सार्कोपेता अर्कशब्देन इन लक्ष्यते सयुक्त. इन.. सेनोपेताः. हरिद्राया निशाया राहुप्रसरपिहितेच्छापरिषदि सत्याम्. राहुशब्देन तम , पिहितशब्देनाच्छादनम्, इच्छाशब्देन आशा दिशा, परिषच्छब्देन मण्डलम्. प्रयुक्तो योऽलकार हार तस्य कृत्यै प्रहारार्थम् वियुतगरुताम् गरुत्पक्ष उच्यते, विकारयुक्ताना पक्षाणा विपक्षाणाम्. दुर्गकुरटीम्. कुरटीशब्देन नगरी लक्ष्यते, दुर्गनगरी प्रहर इत्यर्थ. ११ कश्चिद्राजा काचिन्नायिका स्वगृहमानयत् ततश्च तद्भर्तारमागत दृष्ट्वा ता स्वगृह प्रापयितु दूतीमाज्ञापयति स्म सा च दूती ता स्वगृह प्रापय्य पुना राजनिकटे आगत्य स्थितवती ता प्रत्याह राजा. सा किं स्वस्थान गता गतवत्या तया सह पथि मार्गे का स्थितवती एव राज्ञा पृष्टा चतुरा दूती स्थितवती सती निजमलकार 'पोहोची' इति भाषाप्रसिद्ध तथा शाकं 'मेथी' इति भाषाप्रसिद्ध शाकविशेषं चावलोक्य तावन्मात्रेणैव नरपति निराकाङ्क्षमुत्तरविषये आकाङ्क्षारहित चक्रे. एतदलकारशाकावलोकन कथ प्रभवति राज्ञो नैराकाङ्क्ष्यसंपादने कथ समर्थ भवतीति कथयेति कविप्रश्न अत्र प्रथमप्रश्नस्य प्राप्तेत्यर्थक 'पोहोची' इति भाषयोत्तरम्. द्वितीयप्रश्नस्य तु अहमासमित्यर्थक 'मे थी' इति भाषयोत्तरमिति तात्पर्य बोध्यम्. १२ ?.

द्वाला [1]रमणवसतिं [2]प्रेषयन्ती करण्डं सा तन्मूले सभयमलिखद्व्यालमस्योपरिष्टात्। [3]गौरी-
नाथं [4]पवनतनयं [5]चम्पकं चास्य भावं पृच्छत्यार्यान्प्रति कथमिदं मल्लिनाथः कवीन्द्रः॥९८॥
[6]सर्वज्ञः सन्वदसि बहुधा दीयते दीयते वै दाधातूनां भवति सदृशं रूपमेषां चतुर्णाम्।
द्वौ दानार्थौ भवति च तथा पालने खण्डने वा नो जानीमः कथयति भवान्कस्य धातोः
प्रयोगम् ॥ ९९ ॥ [7]चञ्चद्द्वादशनीलनीरजयुतं सप्ताम्बुजोद्भासितं नित्यं षोडशशोणपद्म-
रुचिरं धात्रानिशं सेवितम्। क्षीराम्भोधिगृहं सहस्रदलसत्पर्यङ्कविश्रान्ति यत्पायाद्वः
कमलाङ्गसङ्गिशयनं तन्नीलरोचिर्महः ॥ १०० ॥ [8]रामं वानरवाहिनीं पुररिपुं राहुं रवेः
सारथिं कुम्भीगर्भसमुद्भवं मुररिपुं मारस्य मौर्वीरवम्। तन्वी नूतनपल्लवैर्विरचिते श-
य्यातले शायिनी सख्या वीजिततालवृन्तपवना बाला मुहुर्निन्दति ॥ १०१ ॥ [9]सं-
त्यासक्तमनाः प्रवृद्धनरकच्छेदी द्विजेन्द्राश्रयो युक्तानेकमुखोद्भवास्पदमलं श्रीर्यत्र

---

१ प्रियनिवासम्. २ करण्डस्थितपुष्पसौरभ गन्धवाहो हरेदिति तद्भक्षक सर्पम् ३ पुष्पवाणो वाणार्थ हरे-दिति तद्वैरिण शिवम्. ४ सूर्यः पुष्प स्वकरैः शोषयेदिति जन्मकाले एव भक्ष्यबुद्ध्या हर्तुं प्रवृत्त भयजननाय हनूमन्तम्. ५ तन्मकरन्द भृङ्गो हरेदिति चम्पकमलिखदिति भाव.. चम्पके भृङ्गा न गच्छन्तीति प्रसिद्धे.. ६ त्व सर्वज्ञ· सन् बहुधा वारवार दीयते दीयते इति वदसि. दीयते इति रूप चतुर्णामपि दाधातूना सदृश भवति. तन्मध्ये द्वो दानार्थौ. दाण् दाने, डुदाञ् दाने इति. एकः पालने. देङ् रक्षणे इति. एकः खण्डने, दोऽवखण्डने इति एतन्मध्ये भवान्कस्य धातो. प्रयोग कृत्वा वदति त न जानीमः. ७ तन्नीलरोचिः श्याम-प्रभं महस्तेज. कृष्णलक्षण वो युष्मान्पायात्. तत्किंभूतम् कमलाङ्गसङ्गिशयन लक्ष्मीसनाथ प्राप्यम्. पु० किं०. सहस्रदलसत्पर्यङ्कविश्रान्ति सहस्रफणदिव्यशयनशेषस्थितम्. पु० किं०. क्षीराम्भोधिगृह दुग्धसमु-द्रनिवासम्. पु० किं०. धात्रा नाभिसरोरुहस्थेन ब्रह्मणा अनिश सेवितमध्यासितम्. पु० किं०. षोड-शशोणपद्मरुचिर षोडशारुणकमलमनोहरम्. षोडशशोणपद्माना विवृत्तिः—विष्णोश्चत्वारो हस्ताः. द्वौ च-रणौ. तावन्त एव ब्रह्मणः. द्वौ करौ द्वौ चरणौ लक्ष्म्याः. इत्येव षोडशशोणपद्मरुचिरम्. पु० किं०. नित्यमविनाशि. पु० किं०. सप्ताम्बुजोद्भासित सप्तकमलशोभितम्. सप्ताम्बुजाना विवृत्तिः—चत्वारि मुखा-नि ब्रह्मण. एक नाभिसरोरुहम् एक विष्णोर्मुखम्. एकं लक्ष्मीमुखम् इत्येव सप्ताम्बुजोद्भासितम्. पु० किं०. चञ्चद्द्वादशनीलनीरजयुत शोभमानद्वादशनीलोत्पलयुक्तम् द्वादशनीलनीरजाना विवृत्तिः—अष्टौ नयनानि ब्रह्मणः. द्वे विष्णोः. द्वे लक्ष्म्याः. इत्येव द्वादशनीलनीरजयुतम्. ८ कोकिलरक्षककाकावशे-षकत्वाद्रामम्. मलयाद्र्यवशेषणाद्वानरवाहिनीम् मन्मथावशेषणात्पुररिपुम्. चन्द्रावशेषणाद्राहुम् रवेः शीघ्रमस्ताद्रिप्रापणेन रात्रिसपादनादनूरुम्. चन्द्रोत्पादकसमुद्रावशेषणादगस्त्यम्. मन्मथोत्पादनान्मुररिपुं नि-न्देति भाव. कोकिलादीना कामोद्दीपकत्व रसशास्त्रे प्रसिद्धम्. ९ अय भवता सङ्गः कृष्णेन रुद्रेण वा साम्य प्रयातु प्राप्नोतु किंभूतेन कृष्णेन. अर्थवशाद्विपरिणाम.. किंभूत·. सत्यासक्तमनाः सत्यभामायामा-सक्त मनो यस्यासौ नामैकदेशे नामग्रहणम् प्रवृद्धो नरकासुरस्तं छिनत्तीति. द्विजाना पक्षिणामिन्द्रो गरुड-स्तस्याश्रयः सेवा यस्य स.. युक्तान्यनेकमुखानि यस्य ब्रह्मणस्तस्य उद्भवो यस्मात्कमलात्तत् यस्यास्पदम्. अल-मत्यर्थ यत्र श्रीर्लक्ष्मी राजते. योऽग गोवर्धन गा पृथ्वी च विभर्ति. शिवेन सह वर्तमानः “विष्णोश्च हृदय शिवः” इति वचनात् य. कामदेह. प्रद्युम्नस्तस्याश्रयः॥ किंभूतो रुद्र.. सत्यामासक्त चित्त यस्य “उमा गौरी सती चण्डी” इत्यभिधानात्. प्रवृद्ध यन्नरस्य ब्रह्मण. क शिरस्तस्य छेत्ता. द्विजानां ब्राह्मणानामिन्द्र-श्चन्द्रस्तस्याश्रय.. अनेकमुखानामुद्भवो यस्य कार्तिकेयस्य तदास्पदम् श्रीर्यत्र सराजते निधिपतित्वात्. यो

संराजते। यो गंगां च बिभर्ति यश्च सशिवो यः कामदेहाश्रयः सङ्गः साम्यमयं प्रयातु भवता कृष्णेन रुद्रेण वा ॥ १०२ ॥ येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो यो गंगां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः। यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः सोऽव्यादिष्टभुजंगहारवलयस्त्वां सर्वदोमाधवः ॥ १०३ ॥ यो व्योमाडिनगोऽहरीडुडुपगोयुग्मः कुगृध्रापभीर्भीमभ्र्वर्यसुकी रमारतरसो नाभ्यब्जुडासीनकः। द्योपच्च- म्ववनम्यपत्सलिलजो वार्धिस्वपोष्टार्धदोराद्यो गद्यासि वाडवादमृतपाः पायात्स वः कंदभाः ॥१०४॥ लक्ष्मीवन्कृतकूरसू रणदहिन्दूधक्क्षमः पापडीलाडूढोऽकलघी वडांछन वडी खाजा-

---

गङ्गा बिभर्ति. य शिवया पार्वत्या सह वर्तमान. यः काम यति खण्डयति एवविधा या ईहा तस्या आश्रयः ॥ किंभूतः सङ्ग. सत्या सूनृता वाक् तत्र लग्न मनो यस्य सः. प्रवृद्ध यन्नरक दुःख तस्य नाशक. द्विजेन्द्रा ब्राह्मणास्तेषामाश्रयः. युक्तानि योग्यानि यानि अनेकमुखानि तेभ्य उद्भवो यस्या धर्मवार्तायाः तस्या आस्पदम् यत्र श्री. शोभा राजते यो गा वाणी धत्ते. य. काम ददातीति कामदा इच्छा तदाश्रयः. १ त्वा सर्वदा स उमाधवोऽव्याद्रक्षतु. स क.. येन वलि जितवानिति वलिजिद्विष्णुस्तस्य काय शरीर पुरा त्रिपुरवधकालेऽस्त्रीकृतोऽस्त्रत्वे सपादित. किंभूतेन ध्वस्तो मनोभवो मारो येन ध्वस्तमदन. पु० स कः यो गङ्गा दधे. पु० की०. अन्धकनामा दैत्यस्तस्यान्तकरः. पु० की०. यो बर्ही मयूर एव पत्र रथो यस्य स स्कन्दः प्रियो यस्य सः. पु० की० स्तुत्यमीड्य नाम यस्य अमरा इति आहुः. इतीति किम् हर इति. किंभूत' शशिमच्छिर. शशिरस्ति यस्मिंस्तच्छशिमत् तादृश शिरो यस्य स हाराश्च वलयानि च हारवलयम् इष्टाश्च ते भुजगाश्च इष्टभुजगा. ते हारवलयानि यस्य स.. इष्टा वल्लभा भुजगा. सर्पा हारः कण्ठभूषण वलय कटक बाहुभूषणमित्यर्थ.. यद्वा इष्टानि भुजगा एव हारवलयानि यस्येति ॥ हरिपक्षे—सर्व ददातीति सर्वद. स माधवो लक्ष्मीपतिः मा लक्ष्मीस्तस्या धवो भर्ता माधव त्वामव्यात्. सः कः येन भवेनेत्युत्पन्नमात्रेण धृतविग्रहेणेत्यर्थः अनो ध्वस्तं शकटाकृतिं दनुज हतवानित्यर्थ अथवा अभवेनेति घोरससारसागरे प्राक्तनकर्मानुसारेण विद्यते भवो जन्म यस्य सः. तेन कृष्णलीलामृतविग्रह इति. पु० स क. येनामृतविभागार्थं रुद्रमोक्षार्थं वा वलिजिच्चासौ कायश्चेति पुरा स्त्रीकृत. स्त्रीभाव प्रापित.. पु० की० य. अग गोवर्धन गा पृथ्वी च दधे. पु० की०. य' अन्धे अगाधे के जले क्षय गृह करोतीति. विष्णुस्तु जलशायीति. पु० की०. बर्हिणो मयूरस्य पत्राणि बर्हाणि पिच्छानि प्रियाणि वल्लभानि यस्य सः पु० की०. अमरा यस्य इति स्तुत्य नाम आहु' इतीति किम् शशिमच्छिरोहर इति. शशिन चन्द्र मथ्नातीति शशिमत् राहुः तस्य शिरः हरतीति स. तथा इष्टः भुजगहा गरुडो यस्य स. तथा अर सुदर्शन वलय यस्य स. तथा रवे परब्रह्मणि लयो यस्य स रवलय इति २ क जल ददातीति कदास्तेषा भा इव भा यस्य सः श्रीकृष्णो वो युष्मान्पायाद्रक्षतु स क. य व्योमाडिनग. व्योमाटा पक्षिणा इनो गरुडस्तेन गच्छतीति स.. तथा अह ईट् अहरीट् सूर्य' उडुपश्चन्द्रस्तौ गोयुग्म नेत्रद्वय यस्य स. तथा कु' पृथ्वी अगाः गिरय. तान्धरतीति तथा अपगता भीर्भयं यस्मात्स तथा पु० क०. भीमभ्र्वर्यसुकी. ऋभूणा देवाना अरय ऋभ्वरय भीमाश्च ते ऋभ्वरयश्च भीमर्भ्वरयः भीमर्भ्वरीणा असून् प्राणान् किरतीति स ऋभव. अमराश्च तेषामरयो दैत्या भीमाश्च ते भीमर्भ्वर्यश्च तेषामसून् किरति कलेवराद्वियोजयति तथा. तथा रमा लक्ष्मीः तस्या रते क्रीडाया रस आसक्तिर्यस्य स अप्सु रुहति इति अब्रुट् कमल नाभावब्रुटि आसीन. क ब्रह्मा यस्येति तथा आद्य. अनादिरित्यर्थ गदी गतश्रा असि खड्ग वहति मोक्ष ददाति. ३ हे लक्ष्मीवन्, त्व मा सेवक अव्या रक्ष. कथंभूतस्त्वम् कृतकू. कृतं कोः पृथिव्या. कु अवन रक्षण येनासौ. पु० क०. असू. सूयते उत्पद्यते असौ सू.. न सू असू. अज इत्यर्थः. पु० क०. रणदहिन्. रण सग्राम

म्बुदालीरुचिः । मङ्गाशाकरखण्डनो विविभुना क्षीरावसातुल्य मां सासुं हालितडिन्निभाङ्गवसनो ऽव्याः सेवकं सारवान् ॥ १०५ ॥ खाटीच्छाशिपलेहपापडवडीर्ष्यारोडभाजी गणो यद्भक्तोऽनिमिषीव वाकुलचणा ध्यायन्ति यां योगिनः । कालाभीलकरालभूखलमहादैत्येन्द्रमाथार्थिनी सा सासूयरसा तवाघतटये स्तात्कर्ममोटी चिरम् ॥ १०६ ॥ सूदारा उलपाडिमेखलतटी कच्छोटजा बिभ्रती पूता रेभरडीननीलजसभा नागीव पातालगा । खाधोऽसावजकालियारिहरिणव्याधैः समं पीडिता मामोघोघरवोऽघवारणपदं मन्दाकिनी वः क्रियात् ॥ १०७ ॥ जायन्ते नव सौ तथामि च नव भ्याम्भिस्भ्यसां संगमे षट्संख्यानि पदेव सुप्यथ शासि त्रीण्येव

ददति ते रणदाः शत्रवस्तान्हिर्नास्ति असौ. शत्रुहा इत्यर्थः पु० क०. दूधक् दुव दुःख दहतीति दूधक् पु० क०. क्षम.. क्षमास्यास्तीति. स.. पु० क०. पापडी. डलयोरभेदात् पापली. पापं लुनातीति सः. पु० क०. इलाट् इलाया पृथिव्या अटतीति इलाट् पुरा वामनादिरूपेण बले. सकाश प्राप्तः. उक्तं च " बहवो मा न जानन्ति मम मायाविमोहिताः । सदाहं द्विजरूपेण विचरामि महीतले " इति भारतवचनात्. पु० क० विविभुना ऊढ . वीना पक्षिणा विभुर्गरुडस्तेन ऊढः. वाह्यमान इत्यर्थः. पु० क०. अकलघीः. अक दुःख लङ्घयतीति अकलघी. पु० क०. अवलाञ्छन अवगत लाञ्छन यस्य सः अवलाञ्छनस्तस्य सबुद्धौ हे अवलाञ्छन. अवाप्योरुपसर्गयोरकारलोपः. पु० क०. वडी. बवयो. डलयोश्च सावर्ण्यात् वली. बलमस्यास्तीति सः. पु० क०. खाजाम्बुदालीरुचिः. खे आकाशे अजन्ति गच्छन्ति ते खाजाः गगनचराः. ते च ते अम्बुदाश्च तेषामालि. पङ्क्तिस्तस्या रुचिरिव रुचिर्यस्यासौ. घनश्याम इत्यर्थ. पु० क०. मङ्गाशाकरखण्डनः. मङ्गाश्चाण्डरादयस्तेषामाशा वाञ्छा तस्या आकर. समूहः त खण्डयतीति स.. मङ्क्षेच्छासमूहनाशन इत्यर्थः. पु० क०. क्षीरावसः. क्षीरे क्षीरसमुद्रे आसमन्ताद्भावेन वसतीति तस्य सबुद्धौ हे क्षीरावसः. हे अतुल्य. नास्ति तुल्यो यस्य स. तस्य संबोधने. कीदृश माम्. सासुम्. असवः प्राणास्तै. सह वर्तमानम्. पु० क०. अलितडिन्निभाङ्गवसन.. अङ्ग च वसन च अङ्गवसने. अलिश्च तडिच्च अलितडितौ तयोर्निभेव निभा ययोस्ते. अलितडिन्निभे अङ्गवसने यस्यासौ अलितडिन्निभाङ्गवसनः. पु० क०. सारवान्. सारो बलमस्यास्तीति सः. पालनसमर्थ इत्यर्थः.. १ सा कर्णमोटी चामुण्डा तवाघतटये अघहरणाय स्तात् अस्तु कथभूता सा. सासूयरसा. असूया कोपस्तस्य रसः तेन सहवर्तमाना कथभूता सा. काला. कृष्णवर्णा भीला भीषणाः तेभ्योऽपि करालाः. अतिरौद्रा इत्यर्थ . भुवि खला. भूखला दुर्जना. ते च ते महादैत्याश्च तेषा माथो मथन तमर्थयतीति एवविधा तथा वाकुलचणा कुलख्याताः योगिन. ध्यायन्ति तथा. यद्भक्तो गणः यस्या सेवको गणः यत्प्रसादेनानिमिषीव देवराज इव वर्तते इति वाक्यशेष . तामेव विशिनष्टि. खे वियत्यटतीति खाटी. इच्छया अश्नातीति इच्छाशी. पले आमिषे ईहा स्पृहा यस्येति पलेहः. तथा डलयोरैक्यात् पाप लुनातीति पापड.. बवयोस्तथैक्यात् बलमस्यास्तीति बली तथा ईर्ष्यया रोल लोल भजते इति स चासौ स च इति कर्मधारयः २ उलपानि हरिततृणानि तेषामालि. पङ्क्ति. सैव मेखला काञ्ची यस्यास्तद्विधा तटी भूर्यस्याः सा. तथा कच्छे जलप्राये देशे उटजानि पर्णकुटीः बिभ्रती बिभ्राणा तथा पूता पावना. तथा रेभ शब्दः त राति अङ्गीकरोति इति रेभरासशब्दा मुखरा इत्यर्थ. तथा लीनाना एकान्तगताना नीरजाना पङ्क्तिरथाना हसचक्रवाककलहसादीनामित्यर्थ . सभा परिषत् सभा यस्या सा. तथा खाध अम्बरादधः नागीव पातालगा. भोगवती इत्यर्थ.. तथाजो ब्रह्मा कालियारि. हरिणव्याधो रुद्र. तै. समं सहैव. युगपदित्यर्थः पीडितावगाहितेत्यर्थ.. तथा मा मीयते इति मा बुद्धिरुद्धा. इयता शून्या इत्यर्थ.. अमोघा नेतॄणा मोक्षप्रद ओघरवो स्रोतोध्वनिर्यस्याः सा. तथा एवगुणविशिष्टा मन्दाकिनी सूदारा सुतरा उदारा वो युष्माक इति शेष . अघवारणपद अघवारणस्य पद अवस्थितिं क्रियात् करोतु. यद्वा वो युष्मान् अघवारणपद अघवारणसमर्थानित्यर्थ..

तद्गृज्जसि । चत्वार्यन्यवचःसु यस्य विबुधा शब्दस्य रूपाणि तज्जानन्ते यदि शक्तिरस्तु गदितुं षाण्मासिकोऽत्रावधिः ॥ १०८ ॥ मुंद्रीदालिमुशालितूअरतणीगावं सुदुग्धं घृत नीकादूहपलेहपापडवडी कोरीवधारीवडा । मूलाकोठकुठीवडा च कपिटाटीटीदुराचीभडा आदासूरणरायताद्यदिवडा कुर्वन्तु वो मङ्गलम् ॥ १०९॥ वाश्चारेड्ध्वजधग्धृतोड्वधिपतिः कुध्रेड्जजानिर्गणेड्गोराडारुडुरःसरेडुरुतरग्रैवेयकभ्राडरम् । उड्वीड्रुड्नरकास्थिधृक्त्रिदृगिभेडार्द्राजिनाच्छच्छविः स स्तादम्बुमदम्बुदालिगलरुग्देवो मुदे वो मृडः॥११०॥ ब्रध्नोड्वीड्ढव्यवाड्ढक्श्वसनभुगधिराड्भूक्कुभृद्राड्भभ्राट्व्रदृग्भाभृत्स्फुटत्विड्जलधिभवद्दृथुक्श्वेडभृक्ष्माध्रचापः । भूभृज्जाभृज्जगत्सृट्कमठभिदिभराट्सकपटभ्राड्स्मरद्विट् स्वर्गौड्विण्मुड्भराड्भृद्गवगुरुभिषक्पातु वः पञ्चवक्त्रः ॥ १११ ॥

---

## क्रियागुप्तादयः ।

**क्रियागुप्तम्** ॥ आगतः पाण्डवाः सर्वे दुर्योधनसमीहया । तस्मै गां च सुवर्णं च रत्नानि विविधानि च ॥ १ ॥ निरुद्यमानवद्याङ्क्ष्याचकान्दुःखसंचयान् । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ २ ॥ प्रातः प्रातः समुत्थाय द्वौ मुनी च कमण्डलू । अत्र क्रियापदं वक्तुमवधिर्ब्रह्मणो वयः ॥ ३ ॥ ललाटतिलकोपेतः कृष्णः कमललोचनः । गोकुलेऽत्र क्रियां वक्तुं मर्यादा दशवार्षिकी ॥४॥ पम्पासरसि रामेण सस्नेहं सविलासया । सीतया किं कृतं सार्धमत्रैवोत्तरमीक्ष्यताम् ॥ ५ ॥ राजन्नवघनःश्याम निस्त्रिंशाकर्ष दुर्जय । आकल्पं वसुधामेतां विद्विषोऽद्य रणे बहून् ॥ ६ ॥ कान्तया कान्तसंयोगे किमकारि नवोढया । अत्रापि चोत्तरं वक्तुमवधिर्ब्रह्मणो वयः ॥ ७ ॥ दामोदराय पुण्यात्मन्पुष्पमूलफलान्यपि । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ८ ॥ विराटनगरे राजन्कीच-

---

(१) यः धनसमीहया धनेच्छया आगतस्तस्मै सर्वे पाण्डवाः गां च सुवर्णं च विविधानि रत्नानि च 'अद्दुः' ददति स्म (२)? (३) 'प्रातः' इति क्रिया. प्रा पूरणे. लट् प्रथमपुरुषद्विवचनम् (४) 'ललाट' इति. लट् बाल्ये. लिट् (५) 'सस्ने' इति ष्णा शौचे. कर्मणि लिट् (६) 'अव' इति. अव रक्षणे. 'द्य' इति च दोऽवखण्डने. लोट् (७) 'अत्रापि' इति. त्रपूष् लज्जायाम् कर्मणि लुङ्. (८) हे दामोदर पुष्पमूलफलानि 'आय' आनय 'इटकिटकटि' इत्यत्र प्रश्लिष्टस्य ईधातोराङ्पूर्वस्य लोटो रूपमिदम् उपसर्गसमभिव्याहारेण आनयनार्थकत्वम्

---

१ गवाक्शब्दस्येत्यर्थः २ ? ३ वार्षु चरन्ति तेषा ईट् स्वामी मकर स ध्वजो यस्य त काम दहतीति वाश्चारेड्ध्वजधक् धृत उडूना नक्षत्राणामधिपतिर्येन कु पृथ्वी धरन्ति तेषामीट् हिमालयस्तस्माज्जाता. पार्वती सा जाया यस्य स कुध्रेड्जजानि गणाना प्रमथादीनामीशः गवा राजा नन्दी तमारोहतीति आरुट् उरसा सरन्ति ते भुजगास्तेषामीट् स एवोरुतर ग्रैवेयक कण्ठभूषण तेन अरमन्तन्त भ्राजते तथा उडूणामीशस्य रुक् यस्य सः. नरकपालास्थिधारक त्रिनेत्र इभाना हस्तिनामीट् तस्यार्द्राजिन तेनाच्छा छविर्यस्य स मृडः देव वः मुदे स्तात् आशिषि 'अस् भुवि' इत्यस्य लोटो रूपम्. अम्बु विद्यते येषा ते अम्बुमन्तः एतादृशा अम्बुदा मेघास्तेषामालिर्माला सेव कण्ठच्छविर्यस्य एतादृशः. ४ ?.

काद्रुपक्षीचकम् । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ९ ॥ कान्तं विना नदीतीरं मदमालोक्य केकिनी । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ १० ॥ अम्लानपङ्कजा माला कण्ठे रामस्य सीतया । मुधा बुधा भ्रमन्त्यत्र प्रत्यक्षेऽपि क्रियापदे ॥ ११ ॥ नारसिंहाकृतिं वीक्ष्य वने मत्तमतंगजः । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ १२ ॥ संध्यावन्दनवेलायां तडागान्ते द्विजोत्तमैः । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ १३ ॥ पुंस्कोकिलकुलस्यैते नितान्तमधुरारवैः । सहकारद्रुमा रम्या वसन्ते कामपि श्रियम् ॥ १४ ॥ बिम्बाकारं सुधाधारं कान्तावदनपङ्कजम् । अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ १५ ॥ राघवस्य शरैर्घोरैर्घोरराvणमाहवे । अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ १६ ॥ पामारागाभिभूतस्य श्लेष्मव्याधिनिपीडित । यदि ते जीवितस्येच्छा तदा भोः शीतलं जलम् ॥ १७ ॥ **कर्तृगुप्तम्** ॥ गौरीनखरसादृश्यश्रद्धया शशिनं दधौ । इहैव गोप्यते कर्ता वर्षेणापि न लभ्यते ॥ १८ ॥ अन्नवस्त्रसुवर्णानि रत्नानि विविधानि च । ब्राह्मणेभ्यो नदीतीरे ददाति व्रज सत्वरम् ॥ १९ ॥ राक्षसेभ्यः सुतां हृत्वा जनकस्य पुरीं ययौ । अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥ २० ॥ श्यामौ तव स्तनावेतौ पिबन्ति सततं मुदा । अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥ २१ ॥ व्यवासाः पञ्चशिरा यरिर्वीनारिभूषणः । असिरोमा क्रियादुर्वः शङ्कालायनवीक्षणः ॥ २२ ॥ व्यामोहं तव भिन्दन्तु छिन्दन्तु दुरितानि च । कर्तृगुप्तमिमं श्लोकं ये जानन्ति विचक्षणाः ॥ २३ ॥ न करोति नाम रोषं न वदति परुषं न हन्त्ययं शत्रून् । रञ्जयति महीमखिलां तथापि धीरस्य वीरस्य ॥ २४ ॥ शरदिन्दुकुन्दधवलं नगपतिनिलयं मनोहरं देवम् । यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति ॥ २५ ॥ **कर्मगुप्तम्** ॥ शीकरासारसंवाहिसरोजवनमारुतः । प्रक्षोभयति पान्थस्त्रीनिःश्वासैरिव मांसलः ॥ २६ ॥

(९) वि पक्षी कीचकाद्वेणो कीचकान्तर 'आट' बभ्राम. (१०) केकिनी मयूरी इरमद मेघज्योतिः. विद्युतमिति यावत्. आलोक्य 'विनानदीति.' विशेषेण पुन पुनर्वा शब्द करोतीत्यर्थ'. (११) 'प्रत्यक्षेपि' क्षिप्ता. (१२) गज सिंहस्याकृतिं वीक्ष्य 'नार' न जगाम ऋ गतौ. कर्तरि लिट्. (१३) हे द्विजोत्तम 'ऐ' आगच्छ. (१४) 'अधु' दधति स्म. (१५) पूर्वोक्त कान्तावदन 'दश' चुम्बस्वेति. (१६) हे राघव त्वं रावण आहवे शरैः कृत्वा 'स्य' मारय इति (१७) भो श्लेष्मव्याधिनिपीडित यदि जीवितस्येच्छा तर्हि शीतल जल 'मा पा' मा पिबेति. (१८) इकामस्त हन्तीति 'इहा' ईश्वर इति (१९) हे ब्राह्मण 'इभ्यः' समृद्ध (२०) राक्षसाना 'इभ्य.' स्वामी रावणः जनकस्य सुता सीता हृत्वा पुरी लङ्का ययौ (२१) 'श्यामौतव.' कृष्णमार्जाराः (२२) 'उ' महादेवः. (२३) उः शिवः इः ब्रह्मा अ विष्णु इत्यनेन व्यः इति जातम् तस्य बहुवचने 'व्या' हरविधिहरय. तव मोह भिन्दन्तु दुरितानि छिन्दन्तु. ये कर्तृज्ञास्ते विचक्षणा. (२४) अय पुरुषो रोष न करोति. परुष कठोर न वदति शत्रून्न हन्ति नामेति प्रसिद्धम्. तथापि अस्य वीरस्य 'धी' अखिला महीं रञ्जयति. (२५) यैरनिश सुकृतं कृत तेषामेव 'मन.' शरदिन्दुकुन्दधवल नगपतिनिलयं देव हर प्रसादयति (२६) पान्थस्त्रीनि श्वासैर्मासल. पुष्ट इवेत्युत्प्रेक्षा. शीकरासारसवाहि जवनमारुतो वेगवान्वायु 'सरः' प्रक्षोभयति.

सुभग तवाननपङ्कजदर्शनसंजातनिर्भरप्रीतेः। शमयति कुर्वन्दिवसः पुण्यवतः कस्य रमणीयः॥ २७॥ एहि हे रमणि पश्य कौतुकं धूलिधूसरतनुं दिगम्बरम्। सापि तद्वदनपङ्कजं पपौ भ्रातरुक्तमपि किं न बुध्यते॥ २८॥ **करणगुप्तम्**॥ पूतिपङ्कमयेऽत्यर्थं कासारे दुःखिता अमी। दुर्वारा मानसं हंसा गमिष्यन्ति घनागमे॥ २९॥ अहं महानसायातः कल्पितो नरकस्तव। मया मांसादिकं भुक्तं भीमं जानीहि मां बक॥ ३०॥ **संप्रदानगुप्तम्**॥ अम्भोरुहमये स्नात्वा वापीपयसि कामिनी। ददाति भक्तिसंपन्ना पुष्पसौभाग्यकाम्यया॥ ३१॥ प्रशस्त्यायुक्तमार्गस्य तव संमानितां श्रिताः। स्पृहयन्ति न के नाम गुणरत्नालय प्रभो॥ ३२॥ **अपादानगुप्तम्**॥ शिलीमुखैस्त्वया वीर दुर्वारैर्निर्जितो रिपुः। बिभेत्यत्यन्तमलिनो वनेऽपि कुसुमाकुले॥ ३३॥ सरसीतोयमुद्धृत्य जनः कंदर्पकारकम्। पिबत्यम्भोजसुरभि स्वच्छमेकान्तशीतलम्॥ ३४॥ **संबन्धगुप्तम्**॥ तूणेव मधुमासेऽस्मिन्सहकारद्रुमञ्जरी। इयमुन्निद्रमुकुलैर्भाति न्यस्तशिलीमुखा॥ ३५॥ भानुर्वै जायते लक्ष्म्या सरस्वत्याथवा मता। अत्र षष्ठीपदं गुप्तं मर्यादा दशवार्षिकी॥ ३६॥ प्राप्तमदो मधुमासः प्रबला रुक्प्रियतमोऽपि दूरस्थः। असती संनिहितेयं संहृतशीला सखी नियतम्॥ ३७॥ **अधिकरणगुप्तम्**॥ या कटाक्षच्छटापातैः पवित्रयति मानवम्। एकान्ते रोपितप्रीतिरस्ति सा कमलालया॥ ३८॥ विपद्यमानता सिद्धा सर्वस्यैव निरूष्मणः। यथात्र भस्मपङ्क्त्यां च निर्वाणं हन्त्ययं जनः॥ ३९॥ **आमन्त्रितगुप्तम्**॥ कमले कमले नित्यं मधूनि पिबतस्तव। भविष्यन्ति न संदेहः कुष्ट दोषाकरोदये॥४०॥ सर्वज्ञेन त्वया किंचिन्नास्त्यविज्ञातमीदृशम्। मिथ्यावचस्तथा च त्वमसत्यं वेत्सि न क्वचित्॥ ४१॥ पिबतस्ते शरावेण वारि कह्लारशीतलम्। केनेमौ दुर्विदग्धेन हृदये संनिरोपितौ॥ ४२॥ वटवृक्षो महानेष मार्गमावृत्य तिष्ठति। तावत्त्वया न गन्तव्यं यावन्नान्यत्र गच्छति॥ ४३॥ **कर्तृक्रियागुप्तम्**॥ घनघनाघनकान्तिघनोऽघनुद्दनुजपुञ्जमिनात्रिजगुर्विगः। सकमलोऽपिनड-

---

(२७) दिवस 'श' सुख कुर्वन् अयति गच्छति. (२८) हे रमणि एहि कौ पृथिव्या 'तुक' बालक धूलिधूसरतनु दिगम्बर पश्य. (२९) दुष्ट वा. जल दुर्वां तेन 'दुर्वारा' कलुषितजलेन. (३०) महच्च तत् अनः शकट च महान· तेन 'महानसा' महता शकटेन आयात. आगत.. नरको मृत्यु (३१) अम्भोरुहमये इत्यत्र 'अये' इ काम तस्मै. (३२) प्रशस्त्यायुक्तमार्गस्य इत्यत्र 'प्रशस्त्यै' कल्याणाय उक्तमार्गस्य. (३३) 'अलिन' भ्रमरात् (३४) 'सरसीत' सरोवरात् (३५) उन्निद्रमुकुला 'ए' इति भिन्ने पदे क्रियेते. इ कामस्तस्य ए. (३६) भा कान्ति. 'नु' नरस्य (३७) 'मास' चन्द्रस्य. (३८) 'ए' कृष्णे कान्ते' भर्तरि. (३९) विपद्यमानता इत्यत्र 'विपदि' कष्टे. निर्गतः ऊष्मा द्रव्यरूपो यस्मात्तस्य निरूष्मण·. अमानता आदराभाव शान्तमूष्मरहितमित्यर्थ.. (४०) कमले इत्यत्र 'क अले' इति पदच्छेदः. हे 'अले' क सुखं यथा स्यात्तथा पिबतस्तव. (४१) सर्वं जानातीति सर्वज्ञस्तस्य इनः स्वामी तत्संबोधन हे 'सर्वज्ञेन' हे पण्डितश्रेष्ठ (४२) हे 'एण' मृग कह्लारशीतल वारि उदक पिबत. ते हृदये केन दुर्विदग्धेन इमौ शरौ बाणौ संनिरोपितौ इत्यन्वयः (४३) ववयोरैक्यात् हे 'वटो' ब्राह्मण. ऋक्ष. भल्लूकः. आवृत्य रुद्ध्वा.

र्धसमं क्रियामिह विलोकयितुं च सकर्तृकम् ॥४४॥ **कर्तृकर्मक्रियागुप्तम्** ॥ भवानिशंकरोमेशं प्रति पूजापरायणः । कर्तृकर्मक्रियागुप्तं यो जानाति स पण्डितः ॥ ४५ ॥ वीरमत्यद्भुतं लोके किमहं वच्म्यतः परम् । कर्तृकर्मक्रियागुप्तं मर्यादा ब्रह्मणो वयः ॥ ४६ ॥ **संधिगुप्तम्** ॥ न मया गोरसाभिज्ञं चेतः कस्मात्प्रकुप्यसि । अस्थानरुदितैरेतैरलमालोहितेक्षणे ॥ ४७ ॥ **समासगुप्तम्** ॥ विषादी भैक्ष्यमश्नाति सदारोगं न मुञ्चति । रुष्टेनापि त्वया वीर शंभुनारिः समः कृतः ॥ ४८ ॥ नित्यमाराधिता देवैः कंसस्य द्विषतस्तनुः । मण्डलाग्रे गदाशङ्खं चक्रं जयति बिभ्रती ॥ ४९ ॥ **लिङ्गगुप्तम्** ॥ नितान्तस्वच्छहृदयं सखि प्रेयान्समागतः । त्वां चिराद्दर्शनप्रीत्या यः समालिङ्ग्य रंस्यते ॥ ५० ॥ कलिकालमियं यावदगस्त्यस्य मुनेरपि । मानसं खण्डयत्यत्र शशिखण्डानुकारिणी ॥ ५१ ॥ **सुब्वचनगुप्तम्** ॥ प्रमोदं जनयत्येवं सदारा गृहमेधिनः । यदि धर्मश्च कामश्च भवेतां संगताविमौ ॥ ५२ ॥ **तिङ्वचनगुप्तम्** ॥ कस्मात्त्वं दुर्बलासीति सख्यस्तां परिपृच्छति । त्वयि संनिहिते तासु दद्यात्कथय सोत्तरम् ॥ ५३ ॥

---

## मात्राच्युतकादयः ।

**मात्राच्युतकम्** ॥ महाशयमतिस्वच्छं नीरं संतापशान्तये । खलवासादतिश्रान्ताः समाश्रयत हे जनाः ॥ १ ॥ तुषारधवलः स्फूर्जन्महामणिधरोऽनघः । नागराजो जयत्येकः

(४४) घन सान्द्र. स चासौ घनाघनः पर्जन्यश्च तस्य कान्तिस्तद्वत् घन. सुन्दर.. घनवत्सुन्दर इत्यर्थः. तथा अघनुत् अघहन्ता. इन. सूर्य अत्रिजश्चन्द्रः तावेव गावौ नेत्रयुग्मे यस्य सः. तथा विना गरुडेन गच्छतीति 'विग'. कमलया लक्ष्म्या सह वर्तते इति. अत. विष्णु. रामावतारे कृष्णावतारे च दनुजपुञ्ज दैत्यनिचय 'अपिनद्' चूर्णितवान् अत्र श्लोके सकर्तृका कर्त्रा सह वर्तमाना क्रिया क्रियापद त्रिलोकयितु अर्धसम अर्धवर्ष ददामीति श्लोककर्ता प्रतिज्ञा करोति (४५) हे 'कर' 'उमेश' प्रति अनिशं पूजापरायणो 'भव'. (४६)[१]. (४७) न निषेधः मे मम आगोरसाभिज्ञमिति पदच्छेद· मे चेत आगोरसाभिज्ञ अपराधरसाभिज्ञ नेत्यर्थः. (४८) विषादी खिन्न, (पक्षे) विष कालकूटमत्तीति सः विषादी तत्पुरुषसमास. सदा सर्वदा रोग व्याधि न मुञ्चति; (पक्षे) दारै सहवर्तमान सदार सस्त्रीक अग शैल न मुञ्चति तत्पुरुषसमास (४९) नित्य देवै. आराधिता; (पक्षे) नित्य मा लक्ष्मीर्यस्या सा नित्यमा देवै राधिता. बहुव्रीहिसमास. (५०) अय नितान्तमतिशयेन स्वच्छ निर्मल हृत् हृदय यस्य सः नितान्तस्वच्छहृत् प्रेयान् समागतः पुलिङ्गनिर्देश.. (५१) इय अगस्त्यस्य वृक्षस्य कलिका अलमत्यन्त मुनेर्मन खण्डयति स्त्रीलिङ्गनिर्देश (५२) सदारा· इत्यत्र 'राः' इति प्रथमैकवचन सुबन्तम् गृहमेधिन. इति षष्ठी (५३) अतिशयेन पृच्छतीति परिपृच्छति 'इति यङ्लुगन्ते अन्ति परतो रूपमस्ति इदमेव रूपमेकवचन ज्ञायते नतु बहुवचनेन इत्य. तिङ्वचनगुप्तम्.

(१) एकस्मिन्नर्थे 'नीरं' जलम् द्वितीयेऽर्थे नीरशब्दस्य ईकारस्थाने अकारः क्रियते. तदा 'नरं' पुरु इत्यवशिष्यते

---

१ यत्र प्रश्ने मात्राबिन्दुविसर्गाणा च्युतकेषु कृतेषु सत्सु द्वितीयोऽर्थ. प्रकटो जायते तन्मात्राच्युतकादिकम् च्युतकशब्देन कुत्रचित्स्थाने नाश, कुत्रचिद्विनिमय.

पृथिवीधरणक्षमः ॥ २ ॥ **बिन्दुच्युतकम्** ॥ सुश्यामा चन्दनवती कान्ता तिलकभूषिता । कस्यैषानङ्गभूः प्रीतिं भुजंगस्य करोति न ॥ ३ ॥ यथा सत्प्रसवः स्निग्धः सन्मार्गविहितस्थितिः । तथा सर्वाश्रयः सत्यमय मे वकुलद्रुमः ॥ ४ ॥ **विसर्गच्युतकम्** ॥ महीरुहो विहंगानामेते हृद्यैः कलापिनाम् । विरुतैः स्वागतानीव नीरवाहाय कुर्वते ॥ ५ ॥ अगस्त्यस्य मुनेः शापाद्ब्रह्मस्यन्दनमास्थितः । महासुः खात्परिभ्रष्टो नहुषः सर्पतां गतः ॥ ६ ॥ **अक्षरच्युतकम्** ॥ महानपि सुधीरोऽपि बहुरत्नयुतोऽपि सन् । विरसः कुपरीवारो नदीनः केन सेव्यते ॥ ७ ॥ सुशीलः स्वर्णगौराङ्गः पूर्णचन्द्रनिभाननः । सुगतः कस्य न प्रीतिं तनोति हृदि संस्थितः ॥ ८ ॥ **[1]स्थानच्युतकम्** ॥ तनोतु ते यस्य फणी गरुत्मान्पाणौ मुरारिर्दयिता च शय्या । नाभौ स्फुरन्भद्रमशुभ्रदेहः पद्मागतिश्चक्रमसौ विधाता ॥ ९ ॥ हरः क्षयी तापकरः सुदेशः शान्तो हरिर्गोत्ररिपुर्विवस्वान् । चन्द्रो द्विजिह्वा श्रित इत्युपेक्ष्य लक्ष्म्या वृतः पातु विधिर्जगन्ति ॥ १० ॥ **व्यञ्जनच्युतकम्** ॥ भिक्षवो रुचिराः सर्वे रसाः सर्वजनप्रियाः । क्षमायामभिसंपन्ना दृश्यन्ते मगधे परम् ॥ ११ ॥ सत्यशीलदयोपेतो दातासुचिरमत्सरः । जिनः सर्वात्मना सेव्यः पदमुच्चैरभीप्सता ॥ १२ ॥ **[2]च्युतदत्ताक्षरम्** ॥ सदागतिहयोच्छ्रायस्तमसो वश्यतां गतः । अस्तमेष्यति दीपोऽयं विधुरेकः शिवे स्थितः ॥ १३ ॥ पूर्णचन्द्रमुखी रम्या कामिनी निर्मलाम्बरा । तनोति कस्य न स्वान्तमेकान्तमद-

---

(२) एकस्मिन्नर्थे 'नागराज.' शेष द्वितीयेऽर्थे नागराज इत्यस्य आकारस्थाने अकार क्रियते तदा 'नगराजः' हिमाचल इति स्यात् (३) एकस्मिन्नर्थे 'अनङ्गभू' कामस्य स्थान ईदृशी स्त्री. द्वितीयेऽर्थे अनुस्वारो लुप्यते तदा 'नगभू' पर्वतस्य भूमि इत्यवशिष्यते (४) एकस्मिन्नर्थे 'अय मे' मम 'वकुलद्रुम' ववयोरैक्यात् द्वितीयेऽर्थे अनुस्वारत्यागेन 'अयमेव कुलद्रुम' इति स्थितम् अय पुमान् कुले द्रुम इव द्रुमो वृक्ष. (५) एकस्मिन्नर्थे 'हृद्यैः' मनोहरै विरुतैः शब्दै द्वितीयेऽर्थे विसर्गलोपे कृते 'हृद्यैकलापिनाम्' इति जातम् हृद्य सुन्दर एक अद्वितीय लपन्ति वदन्ति ते हृद्यैकलापिनस्तेषा विहगानाम् (६) एकस्मिन्नर्थे 'महासु' महान्तोऽसव प्राणा यस्य स 'खात्' आकाशात् द्वितीयेऽर्थे विसर्गलोपे 'महासुखात्' महच्च तत्सुख च तस्मात् राज्यात्. (७) एकस्मिन्नर्थे नदीना इन स्वामी 'नदीन.' समुद्र द्वितीयेऽर्थे नदीन इत्यस्मात् नकार सस्वर लुप्यते तदा 'दीन' इति तिष्ठति दीनशब्देन कृपणधनी पुमान् (८) एकस्मिन्नर्थे 'सुगतो' बुद्ध. जिन द्वितीयेऽर्थे सुगत इत्यस्मात् गकार सस्वरो लुप्यते तदा 'सुत' इति स्यात् सुत पुत्र (९, १०) एषा श्लोकाना मध्ये अर्थयोजनिकाया कृताया सत्या योजनिका स्थानान्तरे धृतास्ति. यो यस्य शब्दस्य अन्वयत्वेन लगति स शब्दस्तत्पार्श्वे धृतो नास्ति (११) एकस्मिन्नर्थे 'भिक्षव' श्वेताम्बराः. द्वितीयेऽर्थे भिक्षव इति पदात् भकारलोपः क्रियते तदा 'इक्षव' गुडवृक्षा (१२) एकस्मिन्नर्थे 'जिनो' वीतराग द्वितीयेऽर्थे जिन इत्यस्माज्जकारो लुप्यते तदा 'इन' इति स्थितम्. इन स्वामी राजा वा. (१३) एकस्मिन्नर्थे 'दीप' द्वितीयेऽर्थे दीप इत्यत्र पकार लुप्त्वा तत्स्थाने नकारो दीयते तदा 'दीन' इति अय दीनो विधुश्चन्द्र एक एव शिवे स्थितः

---

१ कर्तृकर्मक्रियापदानि स्थानान्तरे धृतत्वात् अन्वयो दुर्लभो यस्य वृत्तस्य तत् स्थानच्युतकम्. २ "स्फोटयित्वाक्षरं किंचित्पुनरन्यस्य दानतः । यत्रापरो भवेदर्थश्च्युतदत्ताक्षरं हि तत्" इति.

नातुरम् ॥ १४ ॥ कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम् । किं करोतु कुरङ्गाक्षी वदनेन निपीडिता ॥ १५ ॥

---

## अन्तरालापाः ।

कस्तूरी जायते कस्मात्को हन्ति करिणां कुलम् । किं कुर्यात्कातरो युद्धे मृगात्सिंहः पलायनम् ॥ १ ॥ कः खे चरति का रम्या का जप्या किं विभूषणम् । को वन्द्यः कीदृशी लङ्का वीरमर्कटकम्पिता ॥ २ ॥ सीमन्तिनीषु का शान्ता राजा कोऽभूद्गुणोत्तमः । विद्वद्भिः का सदा वन्द्या अत्रैवोक्तं न बुध्यते ॥ ३ ॥ युधिष्ठिरः कस्य पुत्रो गङ्गा वहति कीदृशी । हंसस्य शोभा का वास्ति धर्मस्य त्वरिता गतिः ॥ ४ ॥ भोजनान्ते च किं पेयं जयन्तः कस्य वै सुतः । कथं विष्णुपदं प्रोक्तं तक्रं शक्रस्य दुर्लभम् ॥ ५ ॥ पृथ्वीसंबोधनं कीदृक्कविना परिकीर्तितम् । केनेदं मोहितं विश्वं प्रायः केनाप्यते यशः ॥ ६ ॥ भवत इवातिस्वच्छं कस्याभ्यन्तरमगाधमतिशिशिरम् । काव्यामृतरसमग्नस्त्वमिव सदा कः कथय सरसः ॥ ७ ॥ वीरे सरुषि रिपूणां नियतं का हृदयशायिनी भवति । नभसि प्रस्थितजलदे का राजति हन्त वद तारा ॥ ८ ॥ भ्रमरहितः कीदृक्षो भवतितरां विकसितः पद्मः । ज्यौतिषिकः कीदृक्षः प्रायो भुवि पूज्यते लोकैः ॥ ९ ॥ प्रभवः को गङ्गाया नगपतिरतिसुभगशृङ्गधरः । के सेव्यन्ते सेवकसार्थैरत्यर्थमर्थरतैः ॥ १० ॥ अयमुदितो हिमरश्मिर्वनितावदनस्य कीदृशः सदृशः । नीलादिकोऽपलम्भः स्फुरति प्रत्यक्षतः कस्य ॥ ११ ॥ गैरिकमनःशिलादिः प्रायेणोत्पद्यते कुतो नगतः । यः खलु न चलति पुरुषः स्थानादुक्तः स कीदृक्षः ॥ १२ ॥ कस्य मेरौ[1] दुरधिगमः कमले कः कथय विरचितावासः । कैस्तुष्यति चामुण्डा रिपवस्ते वद कुतो भ्रष्टाः ॥ १३ ॥ कं संजघान कृष्णः का शीतलवाहिनी गङ्गा । के दारपोषणरताः कं

(१४) एकस्मिन्नर्थे 'कामिनी' स्त्री. द्वितीयेऽर्थे 'यामिनी' रात्रि.. (१५) अत्र 'रसाले' इति वक्तव्ये 'साले' इति रश्युत . 'वने' इत्यत्र 'यौवने' इति यौर्दत्तः. 'वदनेन' इत्यत्र "मदनेन" इति मश्युतो वो दत्तः

(१) कस्तूरी कस्मात् जायते—मृगात्. करिणा कुल को हन्ति—सिंह. कातरो युद्धे किं कुर्यात्—पलायनम् इति योजना. (२) खे कः चरति—विः पक्षी. रम्या—रमा. जप्या—ऋक्. विभूषणम्—कटकम् वन्द्यः—पिता. लङ्का—वीरमर्कटैर्हनूमदादिभिः कम्पिता नाशितेत्यर्थः. (३) चरणाद्यन्ताक्षरयोर्मेलनेनोत्तरम्. यथा सीता. राम . विद्या. (४, ५) चतुर्थपादस्थपदत्रयेण प्रश्नत्रयस्योत्तरम्. (६) 'कविना.' हे को हे पृथ्वि. इना कामेन. कविना काव्यकर्त्रा. (७) 'सरस'. तडागस्य. रसेन शृङ्गारादिना सहवर्तमानः. (८) 'तारा.' आरा चर्मप्रभेदिनी शत्रूणा मनसि दुःखरूपा. तारा नक्षत्रम्. (९) 'भ्रमरहितः'. भ्रमराणा भृङ्गाणा हितो हितकृत्. भ्रमेण मिथ्यामत्या रहितः शुद्धज्ञानवान् (१०) 'प्रभव.'. उत्पत्तिस्थानम्. महान्त ईश्वरा.. (११) 'सदृश', समान इव दृश्यतेऽसौ. तुल्य इत्यर्थः. दृशा नेत्रेण सहवर्तमानः सदृक् तस्य सनेत्रस्य मनुष्यस्य. (१२) 'नगत..' नगात्पर्वतात्. न गतः स न जगामेत्यर्थ.. (१३) 'कस्य' क जल तस्य. 'क.' ब्रह्मा. 'कैः' मस्तकैः. 'कुतः' पृथ्व्या सकाशात् पृथ्व्याधिकारात्पतिता इत्यर्थ..

[1] मरुदेशे.

बलवन्तं न बाधते शीतम् ॥ १४ ॥ कः कौ के कं कौ कान् हसति च हसतो हसन्ति हरिणाक्ष्याः । अधरः पल्लवमङ्घ्री हंसौ कुन्दस्य कोरकान्दन्ताः ॥ १५ ॥ का शंभुकान्ता किमु चन्द्रकान्तं कान्तामुखं किं कुरुते भुजंगः । कः श्रीपतिः का विषमा समस्या गौरीमुखं चुम्बति वासुदेवः ॥ १६ ॥ का लोकमाता किमु देहमुख्यं रतेः किमादौ कुरुते मनुष्यः । को दैत्यहन्ता वद वै क्रमेण गौरीमुखं चुम्बति वासुदेवः ॥ १७ ॥ का शैलपुत्री किमु नेत्ररम्यं शुकार्भकः किं कुरुते फलानि । मोक्षस्य दाता स्मरणेन को वा गौरीमुखं चुम्बति वासुदेवः ॥ १८ ॥ के भूषयन्ति स्तनमण्डलानि कीदृश्युमा चन्द्रमसः कुतः श्रीः । किमाह सीता दशकण्ठनीता हारामहादेवरतातमातः ॥ १९ ॥ रवेः कवेः किं समरस्य सारं कृषेर्भयं किं किमुशन्ति भृङ्गाः । खलाद्भयं विष्णुपदं च केषां भागीरथीतीरसमाश्रितानाम् ॥ २० ॥ व्रजन्ति पद्मानि कदा विकासं प्रिया गते भर्तरि किं करोति । रात्रौ च नित्यं विरहाकुला का सूर्योदये रोदिति चक्रवाकी ॥ २१ ॥ सन्तश्च लुब्धाश्च महर्षिसंघा विप्राः कृषिष्ठाः खलु माननीयाः । किं किं समिच्छन्ति तथैव सर्वे नेच्छन्ति किं माधवदाघयानम् ॥ २२ ॥ का पाण्डुपत्नी गृहभूषणं किं को रामशत्रुः किमगस्त्यजन्म । कः सूर्यपुत्रो विपरीतपृच्छा कुन्तीसुतो रावणकुम्भकर्णः ॥ २३ ॥ करोति शोभामलके स्त्रियाः को दृश्या न कान्ता विधिना च कोक्ता । अङ्गे तु कस्मिन्दहनः पुरारेः सिन्दूरबिन्दुर्विधवाललाटे ॥ २४ ॥ किं भूषणं सुन्दरसुन्दरीणां किं दूषणं पान्थजनस्य नित्यम् । कस्मिन्विधात्रा लिखितं जनानां सिन्दूरबिन्दुर्विधवाललाटे ॥ २५ ॥ केनोपमेयं मुखमङ्गनानां किं वर्ण्यते स्त्रीजघनेषु धीरैः । पतत्रिणः कानि वनेचराणि चन्द्रस्य बिम्बे कदलीफलानि ॥ २६ ॥ कीदृक्षा गिरिशतनुर्जये च धातुर्विष्णौ का विबुधजरातमस्तृतीया । मध्यार्णे सति कथमात्मकोऽस्ति देशः सोमाज्यं सकलकला जसातसाहा ॥ २७ ॥ विवाहे पुरंध्रीजनैर्लिप्यते का न के मानमायान्ति गर्वोन्नता का । घने वारिधौ रामतः कम्पते का हरिद्रा दरिद्राः सरिद्रावणश्रीः ॥ २८ ॥ कस्मिन्वसन्ति वद मीनगणा विकल्पं किं वापदं वदति किं कुरुते

---

(१४) कृष्ण क स्रजघान—कसम् शीतलवाहिनी गङ्गा का—काशीतलवाहिनी. दारपोषणरताः के—केदारपोषणरताः शीत वलवन्त क न वाधते—कम्वलवन्तम् (१५) हरिणाक्ष्या कः क हसति—अधर. पल्लवम् कौ कौ हसत —अङ्घ्री हसौ के कान् हसन्ति—दन्ता. कुन्दस्य कोरकान् (१६, १७,१८) गौरी. मुखम्. चुम्बति. वासुदेव.. गौरीमुख चुम्बति वासुदेवः. भुजगो जार.. (१९) हारा.. महादेवरता तमात. रात्रितः हा राम हा देवर हा तात हा मात. (२०) भा कान्तिः. गी. वाणी. रथी योद्धा. ईति अनावृष्ट्यादि. भृङ्गा रस उशन्ति वाञ्छन्ति. आश्रितानाम्. भागीरथीतीरसमाश्रितानाम्. (२१) सूर्योदये रोदिति. चक्रवाकी. (२२) मानम् धनम् वनम्. दानम्. घनम् यानम्. माधवदाघयान माधवे वैशाखे दाघः ऊष्मा तस्मिन् यान गमन नेच्छन्ति. (२३,२४,२५, २६) चतुर्थपादस्थपदे प्रश्नस्योत्तरम्. (२७)? (२८) चतुर्थपादस्थचतुर्भिः-पदैः क्रमेण चत्वारि उत्तराणि.

विवस्वान् । विद्युल्लतावलयवान्पथिकाङ्गनानामुद्वेजको भवति कः खलु वारिवाहः ॥ २९ ॥ शब्दः प्रभूगत इति प्रचुराभिदायी कीदृग्भवेद्वदत शब्दविदो विचिन्त्य । कीदृग्बृहस्पतिमते विदिताभियोगः प्रायः पुमान्भवति नास्तिकवर्गमध्यः ॥ ३० ॥ कः प्रार्थ्यते मदनविह्वलया युवत्या भाति क्व पुण्ड्रकमुपैति कथं बतायुः । कानादरो भवति केन च रज्यतेऽब्जं वाह्यास्थि किं फलमुदाहर नालिकेरम् ॥ ३१ ॥ क्व वसति लघु जन्तुः किं निदानं हि वान्तेर्झटिति वद पशुं कं लम्बकण्ठं वदन्ति । प्रसवसमयदुःखं वेत्ति का कामिनीनां तिलतुषपुटकोणे मक्षिकोष्ट्र प्रसूता ॥ ३२ ॥ को निर्दग्धस्त्रिपुरिपुणा कश्च कर्णस्य हन्ता नद्याः कूलं विघटयति कः कः परस्त्रीरतश्च । कः संनद्धो भवति समरे भूषणं किं कुचानां किं दुःसङ्गाद्भवति महतां मानपूजापहारः ॥ ३३ ॥ कः कान्तारमगात्पितुर्वचनतः संश्लिष्य कण्ठस्थलीं कामी किं कुरुते च गृध्रहठतश्छिन्नं प्ररूढं च किम् । का रक्षःकुलरात्रिरेव ह्यभवच्चन्द्रातपं द्वेष्टि को रामश्रुम्बति रावणस्य वदनं सीतावियोगातुरः ॥ ३४ ॥ कृष्णे क्रीडति कानने निवसति गीः कस्य सीतापहा शीर्षे का धरणीधरस्य हरिभिः क्व[1] स्थीयते का स्थिरा । तस्मिन्नर्थेऽव्ययं किं कलिमलमथने कः समर्थोऽद्भुतं किं गोपीभट्टस्य टोपी तदुपरि नगरी तत्र गङ्गाप्रवाहः ॥ ३५ ॥ कीदृक्त्मत्तमतंगजः कमभिनत्पादेन नन्दात्मजः शब्दः कुत्र हि जायते युवतयः कस्मिन्सति व्याकुलाः । विक्रेतुं दधि गोकुलात्प्रचलिता कृष्णेन मार्गे धृता गोपी काचन तं किमाह करुणं दानी अनोखे भये ॥ ३६ ॥ किं कुर्वन्त्युषसि द्विजाः प्रतिदिनं के माननीयाः प्रभोः का वा साहसिकी निशासु सततं द्यौः कीदृशी वर्तते । कुत्रास्ते मधु नालिकेरजफले कैः स्यात्पिपासाशमः संध्यावन्दनमाचरन्ति विबुधा नारीभगान्तर्जलैः ॥ ३७ ॥ लकाभूपनिशाचरो रघुपतिं युद्धे कथं दृष्टवान्दीनं पाति पितेव यः पशुपतिः कस्तस्य वाहः प्रियः । केनापूर्वफलं नरैः सुकृतिभिः कस्मिन्स्थले भुज्यते जारा ये भुवि तान्प्रशास्ति कतमो ह्येषामिहैवोत्तरम् ॥ ३८ ॥ कुत्रोदेत्युदयाचलस्य तरणी[2] रम्या गतिः कस्य खे कान्त्या भान्ति च किं करोति गणको यष्टि

(२९) 'वारिवाह' ' वारि जले. वा विकल्पार्थे. अह दिनम् वारिवाहो मेघ . (३०) नास्ति कवर्गमध्य' न विद्यते कवर्गो गकारो मध्ये यस्य स प्रभूतशब्द प्रभूत प्रचुरवाची. नास्तिकाना अपुनर्जन्मवादिना वर्गः समूहस्तस्य मध्येऽन्तर्वर्ती. (३१) 'नालिकेरम्' ना पुरुष . अलिके भाले अर शीघ्रम् पुन' प्रतिलोमम् रङ्के क्षुद्रे अलिना भ्रमरेण वाह्येऽस्थि यस्य एवंविध नालिकेरम् ( ३२ ) चतुर्थपादस्थपदचतुष्टयेन प्रश्नचतुष्टयस्योत्तरम् ( ३३ ) मारः मदन . नर . पूर जार . परः हार मानपूजापहार. मानपूजयोरपहारो नाश' ( ३४,३५ ) चतुर्थपादस्थपदैरनुक्रमेण उत्तराणि ( ३६ ) दानी दानमस्यास्तीति अनः शकटम्. खे आकाशे भये सति. दानी अनोखे भये यावनीभाषया प्रत्युत्तरम् ( ३७ ) चतुर्थपादस्थपदैरनुक्रमेणोत्तराणि. ( ३८ ) लका–काल दीन –नदी केन सुखेन–नाके स्वर्गे. जारा.–राजा.

१ कस्मिन्प्रदेशे २ सूर्य .

विधृत्यैति कः । कस्मिञ्जाग्रति जन्तवो न च कदा सूते च का कः प्रियः शृङ्गाग्रे तुरगस्य भानि गणयत्यन्धोऽह्नि वन्ध्यासुतः ॥ ३९ ॥ अन्यस्त्रीस्पृहयालवो जगति के पद्भ्यामगम्या च का को धातुर्दशने समस्तमनुजैः का प्रार्थ्यतेऽहर्निशम् । दृष्ट्वैकां यवनेश्वरो निजपुरे पद्मानननां कामिनीं मित्रं प्राह किमादरेण सहसा यारानदींदंशमा ॥ ४० ॥ कस्मिञ्शेते मुरारिः क्व नु खलु वसतिर्वायसी को निषेधः स्त्रीणां रागस्तु कस्मिन्क्व नु खलु सितिमा शौरिसंबोधनं किम् । संबुद्धिः का हिमांशोर्विधिहरवयसां चापि संबुद्धयः का ब्रूते लुब्धः कथं वा कुरुकुलहननं केन तत्केशवेन ॥ ४१ ॥ गच्छन्ति क्वाजिवह्नौ हुतनिजतनवः का भिनत्ति स्वकूलं किं स्याद्योज्यं विकल्पे क्रकचनिभनखैः किं नृसिंहेन भिन्नम् । कीदृग्दित्याः प्रसूतिः किमनलशमनं का नृपैः पालनीया को वन्द्यः कः प्रमार्ष्टि त्रिभुवनकलुषं स्वर्धुनीवारिपूरः ॥ ४२ ॥ पुंसः संबोधनं किं विदधति करिणां के रुचोऽग्नेर्द्विषत्किं का शून्या ते रिपूणा नरवर नरकं कोऽवधीद्रोचिकं किम् । के वा वर्षासु न स्युर्बिसमिव हरिणा किं नखाग्रैर्विभिन्नं को वा मार्गं विसर्पन्विघटयति तरून्नर्मदावारिपूरः ॥ ४३ ॥ किं तृष्णाकारि कीदृग्रथचरणमहो रौति कः काब्धिकाञ्चिः कोऽपस्मारी भुजगे किमु कलिशमनं त्वार्यसंबोधनं किम् । का सुन्दर्यामपीन्दुः कथमचलभृतः का च सबुद्धिरग्नेर्बीजं किं क्वावनीजारमणमतिहरा हेमसारङ्गलीला ॥ ४४ ॥ ताराविष्णूरणत्विट्खगहृदयरमास्कन्द-संबुद्धयः क्व क्व स्याद्धातुत्रयं लुग्विकरणपठितं कुत्र तत्त्वावबोधः । चत्वारस्तद्धिताः स्युः क्व नु खलु विगतैकैकवर्णस्वरूपाः किं सूत्रं पाणिनीयं विकसति न सह स्त्रोक्तिभिर्भास्वरेऽपि ॥ ४५ ॥

---

( ३९ ) चतुर्थपादस्थपदैरनुक्रमेणोत्तराणि. ( ४० ) यारा जारा. नदी दश मा लक्ष्मी.. यारानदीदशमा हे मित्र एतादृशी दीपकलिका मया कदापि न दृष्टा इत्यर्थक यावनीभाषया उत्तरम् ( ४१ ) के उदके शवे प्रेते न. नवे. शके यवनविशेषे केशव इन क ईश. वे न केशवेन ( ४२ ) स्वः स्वर्गे धुनी नदी वा रिपूर रिपोर्हिरण्यकशिपोरुर स्थलम् स्वर्धुनी स्व स्वर्ग धूनयति कम्पयतीति तादृशी वारि उदकम् पू पुरी. अः विष्णुः स्वर्धुनीवारिपूर. ( ४३ ) न. मदा वारि पू नगरी. अ. विष्णु. नर्म क्रीडानर्म. दावा दावानला. रिपूर हिरण्यकशिपोरुर स्थलम् नर्मदावारिपूर. ( ४४ ) हेम सार अराभि सहितम् गली प्रशस्तकण्ठ इला पृथ्वी लाली लालावान् गर विषम् साम सान्त्वम् हे हेला लीला मली मलवान्. कलङ्कीति यावत् साग अगैर्वृक्षै सहित रम् हेमसारङ्गलीला हेम्नः सुवर्णस्य सारङ्गो मृग. तस्य लीला. ( ४५ ) हे भ हे अ अवे भा वे भाव. इ भावे भा दीप्तौ. वा गतिगन्धनयो. इण् गतौ. भावे भवस्यापत्य भावि. अवस्यावि वस्य वि अस्य इ सश्च रश्च अश्च स्राः तेषामुक्तय स्रोक्तय ताभिः सह 'भास्वरे' इत्यस्मिन्पदे 'भावे' इत्युत्तर स्फुरति. 'भास्वरे' इत्यत्र सकार-अकार-रेफैर्विना 'भावे' इति पाणिनिसूत्रमुद्भवतीत्यर्थः

---

१ श्वेतवस्त्वम् २ संग्रामाग्रा ३ त्यक्तनिजदेहा . ४ करपत्रसदृशनखैः. ५ शोभा . ६ रमणीयम्. ७ गायति. ८ अवनीजा सीता तद्रमणो राम..

## बहिरालापाः ।

पूजायां किं पदं प्रोक्तमस्तनं को बिभर्त्युरः । क आयुधतया ख्यातः प्रलम्बासुरविद्विषः ॥ १ ॥ को दुराढ्यस्य मोहाय का प्रिया सुरविद्विषः । पदं प्रश्नवितर्के किं को दन्तच्छदभूषणम् ॥ २ ॥ पक्षिश्रेष्ठसखीबभ्रूसुरा वाच्याः कथं वद । ज्येष्ठे मासि गताः शोषं कीदृशोऽल्पजला भुवः ॥ ३ ॥ विश्वंभराप्रलम्बघ्नव्रीहिमानुषसंयुगाः । कथं वाच्या भवन्त्येता दिनान्ते विकसन्ति काः ॥ ४ ॥ आनन्दयति कोऽत्यर्थं सज्जनानेव भूतले । प्रबोधयति पद्मानि तमांसि च निहन्ति कः ॥ ५ ॥ अटवी कीदृशी प्रायो दुर्गमा भवति प्रिये । प्रियस्य कीदृशी कान्ता तनोति सुरतोत्सवम् ॥ ६ ॥ कीदृक्किं स्यान्न मत्स्यानां हितं स्वेच्छाविहारिणाम् । गुणैः परेषामत्यर्थं मोदते कीदृशः पुमान् ॥ ७ ॥ अगस्त्येन पयोराशेः कियत्किं पीतमुज्झितम् । त्वया वैरिकुलं वीर समरे कीदृशं कृतम् ॥ ८ ॥ के स्थिराः के प्रियाः स्त्रीणां कोऽप्रियो नक्तमाह्वय । नृत्यभूः कीदृशी रम्या नदी कीदृग्घनागमे ॥ ९ ॥ का कृता विष्णुना कीदृग्योषितां कः प्रशस्यते । असेव्यः कीदृशः स्वामी को निहाता निशातमः ॥१०॥ लक्ष्मणेत्युत्तरं यत्र प्रश्नः स्यात्तत्र कीदृशः । ग्रीष्मे द्विरदवृन्दाय वनाली कीदृशी हिता ॥ ११ ॥ प्रायः कार्ये न मुह्यन्ति नराः सर्वत्र कीदृशाः । नाधा इति भवेच्छब्दो नौवाची वद कीदृशः ॥ १२ ॥ कामुकाः स्युः कया नीचाः सर्वे

---

(१) 'सुनासीरः.' सुः पूजायाम्. ना पुरुषः. सीरो हलम्. (२) 'रामानुरागः.' राः धनम्. मा लक्ष्मीः. नु इति वितर्के. रागः आरक्तत्वम्. (३) 'विवरालीनकुलीरा.' वि. पक्षी. वर श्रेष्ठम्. आली सखी. नकुली नकुलस्त्री इरा मदिरा. विवरेषु छिद्रेषु आलीनाः प्रविष्टाः कुलीराः जलचरजीवविशेषा यासु ताः. (४) 'कुवलयवनराजयः.' कु. पृथ्वी. (बवयोरैक्यात्) बलो बलभद्रः. यवो धान्यभेदः. नरो मनुष्यः आजि सम्रामः. कुवलयाना कमलाना वनाना राजयः पङ्क्तयः. (५) 'मित्रोदयः.' मित्राणा सखीनामुदयो वृद्धि.. मित्रस्य सूर्यस्य उदय उद्गमनम्. (६) 'मदनवती.' मदना मदनवृक्षा विद्यन्ते यस्या सा अतिगहनत्वाद्दुर्गमा. मदनः कामो विद्यते यस्याः सा. सयौवना इत्यर्थः (७) 'विमत्सर.' वयः पक्षिणो विद्यन्ते यस्मिंस्तत् विमत् ईदृश सरस्तडागम् विगतो मत्सरोऽहकारो यस्य सः. (८) 'सकलकम्.' सकलं समस्त क पानीय पीत मूत्रं च. कलङ्केन लाञ्छनेन सहवर्तमान कृतम्. (९) 'अगाधवारिपूरजनिततरगा.' अगा पर्वताः. धवाः भर्तारः. रिपुः शत्रु.. हे. रजनि. ततरङ्गा ततो विस्तीर्णो रङ्गो नर्तनमण्डपो यस्या सा. अगाधेन अतलस्पर्शेन वारिपूरेण जलसमूहेन जनिता उत्पादितास्तरगा लहर्यो यस्या सा. (१०) 'कुमुदवनवान्धवोदय.' कोः पृथिव्या मुत् कुमुत्. पृथिव्याः मध्ये प्रीति कृतेत्यर्थ. अवन रक्षण विद्यते यस्यासौ अवनवान् रक्षाकर. धवो भर्ता. नास्ति दया यस्य सः अदयः दयारहित. कुमुदाना चन्द्रविकाशिकमलाना वनाना वान्धवो भ्राता चन्द्रस्तस्योदय. (११) 'कासारसहिता.' अत्र का सारसहिता इति प्रश्नः प्रथमवारमेव. द्वितीयवार तूत्तरम् सारसस्य पक्षिणो हिता प्रिया का इति प्रश्नः. सारसस्य योषित् लक्ष्मणा. कासारेण अखातसरोवरेण सहिता सहवर्तमाना (१२) 'सावधानाः' सह अवधानेन समाधिना वर्तत इति. अव्यग्रचिन्ना इत्यर्थ. सौ अधा ना स् इति पदच्छेद. अस्यार्थ. औकारेण सहवर्तमानः सौ. न धा अधा धारहित. एवविधः ना इति शब्दः. सकारस्य विसर्गः. 'नौः' इति नौवाची भवेदिति योजना.

स्मिन्प्रमोदते । अर्थिनः प्राप्य पुण्याहं करिष्यध्वे वसूनि किम् ॥ १३ ॥ को दुःखी र्वकार्येषु किं भृशार्थस्य वाचकम् । यो यस्माद्विरतो नित्यं ततः किं स करिष्यति ॥१४॥ ारणेन्द्रो भवेत्कीदृक्प्रीतये भृङ्गसहतेः । यद्यवश्यं तदास्मै किमकरिष्यमहं धनम् ॥१५॥ काले देशे यथायुक्तं नरः कुर्वन्नुपैति काम्। भुक्तवन्तावलप्स्येतां किमन्नमकरिष्यताम् ॥१६॥ हेमानीस्थगिरौ स्यातां कीदृशौ शशिभास्करौ । कः पूज्यः कः प्रमाणेभ्यो न प्रभाकरसंमतः ॥ १७ ॥ के प्रवीणाः कुतो हीनं जीर्णं वासोऽशुमांश्च कः । निराकरिष्णवो बाह्यं योगाचाराश्च कीदृशाः ॥ १८ ॥ न श्लाघते खलः कस्मै सुप्तिङन्तं किमुच्यते । लादेशानां नवानां च तिङां किं नाम कथ्यताम् ॥ १९ ॥ सततं श्लाघते कस्मै नीचो भुवि किमुत्तमम् । कर्तर्यपि रुचादीनां धातूनां किं पदं भवेत् ॥२०॥ किमव्ययतया ख्यातं कस्य लोपो विधीयते । ब्रूत शब्दविदो ज्ञात्वा समाहारः क उच्यते ॥ २१ ॥ कौ विख्यातावहेः शत्रू शोकं वदति किं पदम् । कोऽभीष्टोऽतिदरिद्रस्य सेव्यन्ते के च भिक्षुभिः ॥ २२ ॥ किं मुञ्चन्ति पयोवाहाः कीदृशी हरिवल्लभा । पूजायां किं पदं कोऽग्निः कः कृष्णेन हतो रिपुः ॥ २३ ॥ वद वल्लभ सर्वत्र साधुर्भवति कीदृशः । गोविन्देनानसि क्षिप्ते नन्दवेश्मनि काभवत् ॥ २४ ॥ यत्नादन्विष्य का ग्राह्या लेखकैर्मसिमल्लिका । घनान्धकारनिःशङ्कं मोदते केन वन्धकी ॥२५॥ किमनन्ततया ख्यातं पादेन व्यङ्गमाह्वय । जनानां लोचना-

---

( १३ ) 'दास्यामहे.' दास्या वेश्यया महे महोत्सवे. दास्यामहे दानं दास्यामः. ( १४ ) 'प्रयास्यति.' प्रयास आयासोऽस्यास्तीति प्रयासी अति भृशम् प्रयास्यति प्रकर्षेण तत्स्थानं विमुच्य गमिष्यति. ( १५ ) 'समदास्य.' समद मदसहित आस्य मुख यस्य स समदास्य. भ्रमरा हि गजाना मदमाघ्राय हृष्यन्ति. समदास्यः स्व दान व्यतिरिच्य. ( १६ ) 'अहास्यताम्.' हास्यस्य भावो हास्यता. न हास्यता अहास्यता ताम् युक्तक्रिया कुर्वतो न कश्चिद्धसेदित्यर्थ. ओहाक् त्यागे क्रियातिपत्तौ स्यप्. तदन्नं तावत्त्यक्ष्यतामित्यर्थः.. ( १७ ) 'अभावः' अभौ नास्ति भा दीप्तिर्ययोस्तौ कान्तिरहितौ अ. कृष्णः. अभावः प्रमाणशास्त्रे प्रसिद्धः सप्तमः पदार्थः प्रभाकरास्तु अभावरूप सप्तम पदार्थं प्रमाणत्वेन न मन्यन्ते. (१८) 'विज्ञानवादिनः' विज्ञा विशेषेण जानन्ति ते चतुरा. नवात् नूतनात्. जीर्णं हि वस्त्र नवात् हीनमूल्य स्यादित्यभिप्राय. इन सूर्य. विज्ञानवादिन विशेषेण ज्ञानस्य तत्त्वार्थज्ञानस्य वादो विद्यते येषु ते विज्ञानवादिन इति पद तर्कशास्त्रे प्रसिद्धत्वात्.

नन्दं के तन्वन्ति घनात्यये ॥ २६ ॥ प्रायेण नीचलोकस्य कः करोतीह गर्वताम् । आदौ वर्णद्वयं दत्त्वा ब्रूहि के वनवासिनः ॥ २७ ॥ सानुजः काननं गत्वा नैकषेयाञ्जघान कः मध्ये वर्णत्रयं दत्त्वा रावणः कीदृशो वद ॥ २८ ॥ धत्ते वियोगिनीगण्डस्थलपाण्डुकलानि का । वद वर्णौ विधायान्ते सीता दृष्टा भवेत्कया ॥ २९ ॥ विष्णोः का वल्लभा देवी लोकत्रितयपावनी । वर्णावाद्यन्तयोर्दत्त्वा कः शब्दस्तुल्यवाचकः ॥ ३० ॥ पुरुषः कीदृशो वेत्ति प्रायेण सकलाः कलाः । मध्यवर्णद्वयं त्यक्त्वा ब्रूहि कः स्यात्सुरालयः ॥ ३१ ॥ यजमानेन कः स्वर्गहेतुः सम्यग्विधीयते । विहायाद्यन्तयोर्वर्णौ गोत्वं कुत्र स्थितं वद ॥ ३२ ॥ नीचेषु यावनी वाणी का कः स्याच्छुभदो जने । शंभोरावरणं किं कं भजन्ते व्याधयो जनम् ॥ ३३ ॥ कस्मिन्स्वपिति कंसारिः का वृत्तिरधमा नृणाम् । किं ब्रूते पितरं बालः किं दृष्ट्वा रमते मनः ॥ ३४ ॥ किमिच्छति नरः काश्यां भूपानां को रणे हितः । को वन्द्यः सर्वदेवानां दीयतामेकमुत्तरम् ॥ ३५ ॥ भागीरथी कथंभूता कामिनी प्राह किं प्रियम् । एकमेवोत्तरं देहि शास्त्रलौकिकभाषया ॥ ३६ ॥ बुधः कीदृग्वचो ब्रूते को रोगी कश्च नास्तिकः । कीदृक्चन्द्रं नमस्यन्ति किं सूत्रं पाणिनेर्वद ॥ ३७ ॥ राज्ञः संबोधनं किं स्यात्सुग्रीवस्य तु का प्रिया । अधनास्तु किमिच्छन्ति आर्तैः किं क्रियते वद ॥ ३८ ॥ किमस्ति यमुनानद्यां जारान्किं वक्ति जारिणी । आन्ध्रगीर्वाणभाषाभ्यामेकमेवोत्तरं वद ॥ ३९ ॥ का कान्ता कालियारातेः पुनरर्थे किमव्ययम् । किं वन्द्यं सर्वदेवानां फलेषु किमु सुन्दरम् ॥ ४० ॥ केदारे कीदृशो मार्गः कुत्र शेते जनार्दनः । स्त्रीचित्तं कुत्र रमते स्वामी किं वक्ति चेटिकाम् ॥ ४१ ॥ कः कुर्याद्भुवनं सर्वं कः समुन्मूलयेद्द्रुमान् । कं प्रतीके भवेन्मुख्यं कः परत्रेति पुण्यताम् ॥ ४२ ॥ घनसमये शिखिषु स्यान्नृत्यं कीदृक्षु किं घनात्पतति । प्रावृषि कस्य न गमनं मानसगमनाय कीदृशा हंसाः ॥ ४३ ॥ चादय इति यत्र स्यादुत्तरमथ तत्र कीदृशः प्रश्नः । कथय त्वरितं के स्युर्नौ-

(२६) 'खजना ' ख आकाशम् आकाशस्य सर्वत्र वर्तमानत्वादन्तो नास्ति. हे खञ्ज. खञ्जना' पक्षिविशेषाः (२७) 'शबरा .' रा द्रव्यम्. शबराः भिल्ला . (२८) 'राक्षसोत्तम .' रामः दाशरथिः. राक्षसोत्तमः राक्षसाना मध्ये उत्तमः श्रेष्ठ.. (२९) 'लवलीलया.' लवली लताविशेषः. लवलीलया लवो नाम पुत्रस्तस्य लीला क्रीडा तया. (३०) 'समानः.' मा लक्ष्मीः. समान. तुल्यः. (३१) 'नागरिकः' नागरिक. नगरनिवासी चतुरो वा नाक· स्वर्ग·. (३२) 'यागविधिः.' याग. यजन तस्य विधिः. गविशब्दे गोत्वं वर्तते. (३३) 'अवेलाभोजिनम्.' अवे. लाभ.. अजिनम्. अवेलाभोजिनम्. (३४) 'शेषेसेवावापरस्त्पम्.' शेषे. सेवा. वा· परस्त्पम्. (३५) 'मृत्युंजयः.' मृत्युम्. जयः मृत्युजय. (३६). 'मलापहा.' मलापहा. मला पहा. (३७ 'अर्थवदधातुरप्रत्यय. प्रातिपदिकम्.' अर्थवत्. अधातुः अप्रत्यय.. प्रातिपदिकम्. अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (३८) 'देवताराधनम् ' देव तारा. धनम् देवताराधनम् (३९) ? (४०) 'मातुलिङ्गम्.' मा तु लिङ्गम्. मातुलिङ्गम्. (४१,४२) ?. (४३) 'समुत्सुकमनस .' समुत्सु मुदा हर्षेण सहवर्तमानाः समुदस्तेषु क पानीयम्. अनस शकटस्य. समुत्सुक उत्कण्ठायुक्त मनो येषा ते समुत्सुकमनसः.

काया वाहनोपाया: ॥४४॥ वदतानुत्तमवचनं ध्वनिरुच्चैरुच्यते स कीदृक्षः। तव सुहृदो गुणनिवहे रिपुनिवहं किं नु कर्तारः ॥ ४५ ॥ विद्यन्त इति समानार्थः शब्दः कोऽचिरयति मुद्रां किम्। कथमपि यदि ते कोपः स्यात्त्वां सुजनः किं करोतु वद ॥ ४६ ॥ को माद्यति मकरन्दैस्तनयं कमसूत जनकराजसुता। कथय कृषीवल सस्यं पक्वं किमचीकरस्त्वमपि ॥ ४७ ॥ पृच्छति पुरुषः केऽस्यां समभूवन्वज्रकृत्तपक्षतयः। बहुभयदेशं जिगमिषुरेकाकी वार्यते स कथम् ॥ ४८ ॥ को नयति जगदशेषं क्षयमथ बिभरांबभूव कं विष्णुः। नीचः कुत्र सगर्वः पाणिनिसूत्रं च कीदृक्षम् ॥ ४९ ॥ किं स्याद्विशेष्यनिष्ठं का संख्या वदत पूरणी भवति। नीचः केन सगर्वः सूत्रं चन्द्रस्य कीदृक्षम् ॥ ५० ॥ सुकपरिविन्दः शब्दः सुब्रह्मण्यस्य वाचकः केन। स्तनभरनमिता नारी केनोपायेन रञ्जयेत्कान्तम् ॥ ५१ ॥ कीदृग्गृहं याम्यगृहं गतस्य कास्त्राणमम्भस्तरणे जनानाम्। भूषा कथं कण्ठ न ते नु पृष्टे मुक्ताकलापैरिति चोत्तरं किम् ॥ ५२ ॥ कीदृग्वनं स्यान्न भयाय पृष्टे यदुत्तरं तस्य च कीदृशस्य। वाच्यं भवेदीक्षणजातमम्बु कं चाधिशेते गवि कोऽर्चनीयः ॥ ५३ ॥ दधौ हरिः कं शुचि कीदृगभ्रं पृच्छत्यकः किं कुरुते सशोकः। श्लोकं विधायापि किमित्युदारः कविर्न तोषं समुपैति भूयः ॥ ५४ ॥ लक्ष्मीधरः पृच्छति कीदृशः स्यान्नृपः सपत्नैरपि दुर्निवारः। अकारि किं ब्रूहि नरेण सम्यक्पितृत्वमारोपयितु स्वकीयम् ॥ ५५ ॥ कीदृशं

(४४) 'केनिपाता..' अत्र के निपाता इति प्रश्न. प्रथमवारमेव. द्वितीयवार तूत्तरम् निपाताः के भवन्तीति प्रश्न. चादयो निपातसज्ञाः के पानीये निपतन्ति ते केनिपाताः. (४५) 'अवमतार..' अवम नीचार्थवाचकम्. तार. अत्युच्चैर्ध्वनि. अवमन्तारः अस्मन्मित्राणि रिपूणामपमान करिष्यन्ति इत्यर्थः. (४६) 'सत्यजतु' सन्ति विद्यन्ते अजतु अलाक्षम्. लाक्षाव्यतिरिक्तमन्यत्किंचिदपि मुद्रिकामाणि स्थापयितु न च शक्नोति इति भावः. सत्यजतु स मा सत्यज्य दूरेण गच्छतु. (४७) 'अलीलवम्' अली भ्रमर लवं लवनामान पुत्रम्. अह अलीलव छेदनमकरवम् (४८) 'मानवनगाः.' हे मानव. नगाः पर्वताः. इन्द्रेण हि पर्वताना पक्षच्छेदः कृत इति पौराणिकी कथा, मानवन गाः हे अनवन न विद्यते अवन रक्षण यस्य सः अनवनः तत्सबोधन हे अरक्षक त्व मा गाः गमन मा कुर्या (४९) 'यमोगन्धने.' यम कृतान्तः. अग गोवर्धनम्. धने. यमो गन्धने पाणिनीयव्याकरणमध्ये इदं सूत्रमस्ति. (५०) 'विशेषणमेकार्थेन.' विशेषणम्. एका. शून्याना सख्यापूरक एकेन भवति. एकादि अङ्को लिख्यते तदा बिन्दूना साफल्य स्यादन्यथा शून्यमेव. अर्थेन द्रव्येण. विशेषणमेकार्थेन इद चन्द्रव्याकरणसूत्रमस्ति. (५१) 'उपरिविहरणेन.' आद्ये सुकपरिविन्दशब्दे उ प रि वि इत्येतेषा वर्णाना हरणेन निष्कासनेन स्कन्द इति शब्दः सुब्रह्मण्यस्य षडाननस्य वाचको भवति द्वितीये उपरि विहरणेन इत्यस्य विपरीतरतेनेत्यर्थ. (५२) 'हाराविनाव.' हारावि. हा इति खेदे. हा इति रावः शब्दो विद्यते यस्मिस्तत्. नावः नौका. हे हारा वो युष्मान्विना (५३) 'अहिंस्रमहिमः' अहिंस्रम् न सन्ति हिंस्रा घातका जीवविशेषा यस्मिस्तत्. अहिम न विद्यते हिम् अहिम् तस्य अहिम सत. तोऽर्थः. यदा अहिंस्रशब्दात् हिम् दूरीक्रियते तदा अस्र इति तिष्ठेत् अस्र नेत्रजल अश्रुपात.. आर्हि गोपनाम्. अ. कृष्ण पूज्यः सन् अधिशेते (५४) 'अगमकमकरोदिति.' अग गोवर्धनम्. अक न विद्यते क सुखं यत्र तत् हे अक न विद्यते क सुख यस्य सः हे दुःखिन्. रोदिति रोदन करोति. अगमकमकरोदिति एव गोष्ठ अगम्य अकरोत् इति विचारयन् तुष्टो न भवति. (५५) 'समजनितनयः.' हे सम मा लक्ष्मीस्तया

वद मरुस्थलं मतं द्वारि कुत्र सति भूषणं भवेत् । ब्रूहि कान्त सुभटः सकार्मुकः कीदृशो भवति कुत्र विद्विषाम् ॥ ५६ ॥ का प्रियेण रहिता वराङ्गना धाम्नि केन तनयेन नन्दिता । कीदृशेन पुरुषेण पक्षिणां बन्धनं समभिलष्यते सदा ॥ ५७ ॥ कीदृशं हृदयहारि कूजितं कः सखा यशसि भूपतेर्मतः । कस्तवास्ति विपिने भयाकुलः कीदृशश्च न भवेन्निशाकरः ॥ ५८ ॥ कीदृशी निरयभूरनेकधा सेव्यते परमपापकर्मभिः । प्रेतराक्षसपिशाचसेविता कीदृशी च पितृकाननस्थली ॥ ५९ ॥ केसरद्रुमतलेषु संस्थितः कीदृशो भवति मत्तकुञ्जरः । तत्त्वतः शिवमपेक्ष्य लक्षणैरर्जुनः समिति कीदृशो भवेत् ॥ ६० ॥ निर्जितसकलारातिः पृच्छति को नैको मृत्योर्भयमृच्छति । मेघात्ययकृतरुचिराशायाः किं तिमिरक्षयकारि निशायाः ॥ ६१ ॥ विहगपतिः कं हतवानहितं कीदृग्भवति पुरं जनमहितम् । किं कठिनं विदितं वद धीमन्यादःपतिरपि कीदृग्भयकृत् ॥ ६२ ॥ अनुकूलविधायिदैवतो विजयी स्यान्ननु कीदृशो नृपः । विरहिण्यपि जानकी वने निवसन्ती मुदमादधौ कुतः ॥ ६३ ॥ कुसुमं पतदेत्य नाकतो वद कस्मै स्पृहयन्ति भोगिनः । अधिगम्य रतं वराङ्गना क नु यत्नं कुरुते सुशिक्षिता ॥ ६४ ॥ कवयो वद कुत्र कीदृशाः कठिनं किं विदितं समन्ततः । अधुना तव वैरियोषितां हृदि तापः प्रबलो विहाय काः ॥ ६५ ॥ वसति कुत्र सरोरुहसंततिर्दिनकृतो ननु के तिमिरच्छिदः । पवनभक्षसपत्नरणोत्सुकं पुरुषमाहर को जगति प्रियः ॥ ६६ ॥ न भवति मलयस्य कीदृशी भूः क इह कुचं न बिभर्ति वं

---

सहवर्तमान हे लक्ष्मीधर. जनितनयः कृतो नयो न्यायो येन सः समजनि तनय· तनय. पुत्रः समजनि उत्पादितः. ( ५६ ) 'अवारितोरणे' अवारि न विद्यते वारि जल यस्मिंस्तत्. तोरणे बहिर्द्वारे सति. अवारितरणे रणे समामे अवारितः न वारयितु शक्यते सः. ( ५७ ) 'शकुन्तलाभरतेन.' शकुन्तला नाम्नी ऋषेः पुत्री भरतनाम्ना पुत्रेण. नन्दिता इत्यर्थः. शकुन्ताना पक्षिणा लाभो द्रव्योपार्जन तत्र रत आसक्तस्तेन. व्याधेनेत्यर्थः. ( ५८ ) 'कलकविरहित..' कलं मधुरः शब्दः. कविः काव्यादिकृत्. अहितः शत्रुः.. कलङ्कः मृगरूपाभिज्ञानेन विरहितः. न स्यात् इति भावार्थः. ( ५९ ) 'नरकपालरचिता.' नरकाणा पाला. नारकजीवरक्षका यमास्तै रचिता उपस्कृता. नराणा कपालानि कर्पराणि तैः कृत्वा रचिता. श्मशानभूमिः मनुष्याणा मुण्डै. सहिता भवति. ( ६० ) 'दानवकुलभ्रमरहित..' दानेन मदेन वकुलाना वृक्षाणा भ्रमरेभ्यः सकाशात् हितः हितकृदित्यर्थः. दानवाना दैत्याना कुले यो भ्रमो दानवा अमी युध्यन्तीति मिथ्याज्ञान तेन रहितः. ( ६१ ) 'विधुताराातेज..' हे विधुताराते विधुता· कम्पिताः अरातयः शत्रवो येन सः तत्सबोधनम्. अजः ब्रह्मा. विधुश्चन्द्रः तारा नक्षत्राणि तासा तेजः प्रकाशः. ( ६२ ) 'अहिमकरमय.' अहि सर्पम्. अकर नास्ति करो राजदण्डो यस्मिंस्तत्. अयः लोहम्. अहयः सर्पाः मकरा मत्स्यविशेषास्तन्मयः. ( ६३ ) 'कुशलवर्धितः.' कुशलै शुभसूचकशकुनैर्वर्धितो वर्धापितः. कुशश्च लवश्च कुशलवौ नामानौ पुत्रौ तयोर्ऋद्धिः संपत्तस्मात्. ( ६४ ) 'सुरतरवे.' सुरतरवे कल्पवृक्षाय वाञ्छन्ति. सुरतस्य सभोगस्य रव. शब्दस्तस्मिन्. ( ६५ ) 'गिरिसारमुखा.'. गिरि वाण्या सार प्रधान स्फुटोच्चारवन्मुखं वदन येषा ते. गिरिसार लोहम्. उखा· स्थालीः. ( ६६ ) 'केकिरणोत्करा..' के पानीये. किरणानां उत्करा. समूहा·. हे केकिरणोत्क केका विद्यते येषा ते केकिनः तेषां मयूराणा रणे शब्दे उत्क उत्सुक. तत्संबोधनम्. रा. द्रव्यम्.

गता श्रीः। भवदरिनिवहेषु कास्ति नित्यं बलमथनेन विपद्व्यधायि केषाम् ॥ ६७ ॥ समयमिह वदन्ति कं निशीथं शमयति कान्वद वारिवाहवृन्दम्। वितरति जगतां मनःसु कीदृक्कुमुदमतिमात्रमयं महातडागः ॥ ६८ ॥ किमकरवमहं हरिर्महीध्रं स्वभुजबलेन गवां हितं विधित्सुः। प्रियतमवदनेन पीयते कः परिणतबिम्बफलोपमः प्रियायाः ॥ ६९ ॥ परिहरति भयात्तवाहितः किं कमथ कदापि न विन्दतीह भीतः। कथय किमकरोरिमां धरित्रीं नृपतिगुणैर्नृपते स्वयं त्वमेकः ॥ ७० ॥ पृच्छति शिरसिरुहो मधुमथनं मधुमथनस्तं शिरसिरुहं च। कः खलु चपलतया भुवि विदितः का ननु यानतया गवि गदिता॥७१॥ कीदृक्तोयं दुस्तरं स्यात्तितीर्षोः का पूज्यास्मिन्खड्गमामन्त्रयस्व। दृष्ट्वा धूमं दूरतो मानविज्ञाः किं कर्तास्मि प्रातरेवाश्रयाशम् ॥ ७२ ॥ कीदृक्प्रातर्दीपवर्तेः शिखा स्यादुष्ट्रः पृच्छत्याभजन्ते मृगाः किम्। देवामात्ये किं गते प्रायशोऽस्मिंल्लोकः कुर्यान्नो विवाहं विविक्तः ॥ ७३ ॥ कीदृक्सेना भवति रणे दुर्वारा वीरः कस्मै स्पृहयति लक्ष्मीमिच्छन्। का संबुद्धिर्भवति भुवः संग्रामे किं कुर्वीध्वं सुभटजना भ्रातृव्यान् ॥ ७४ ॥ कंसारातेर्वद गमनं केन स्यात्कस्मिन्दृष्टिं लभते स्वल्पेच्छुः। कं सर्वेषां शुभकरमूचुर्धीराः किं कुर्यास्त्वं सुजन सशोकं लोकम् ॥ ७५ ॥ कीदृक्षो सकलजनो भवेत्सुराज्ञः क कालो विदित इहान्धकारहेतुः। कः प्रेयान्कुमुदवनस्य को निहन्ति भ्रातृव्यं वद शिरसा जितस्त्वया कः ॥ ७६ ॥ संग्रामे स्फुरदसिना हतास्त्वया के दुःखं के बत निरये नरस्य कुर्युः। कस्मिन्नुद्भवति कदापि नैव लोम ज्ञाताः के जगति महालघुत्वभाजः ॥ ७७ ॥ कीदृक्षं समिति बलं निहन्ति शत्रुं विष्णोः का मनसि मुदं सदा तनोति। तुच्छं सच्छरधिमुखं

(६७) 'विपन्नगानाम्.' विगताः पन्नगा सर्पा यस्या. सा विपन्नगा न किंतु पन्नगसहितैव ना पुमान् अ कृष्णम्. विपत्सपत्त्यभावः दरिद्रता. नगाना पर्वतानाम्. (६८) 'अरविंदवान्' अरविं नास्ति रवि सूर्यो यस्मिन्स अरविस्तम्. दवान्दावानलान् अरविन्दवान् अरविन्दानि कमलानि विद्यन्ते यस्मिन्स. (६९) 'अधर..' हे कृष्ण त्व गोवर्धनपर्वत अधर· हस्ते धृतवान् अधर. ओष्ठ. (७०) 'समरजयम्' समरं संग्रामम्, जय जयवादम् अह समरजय रागिणी पृथ्वीमकरवम् (७१) 'केशवनौका' हे केश. वनौकाः वने ओको गृह यस्यासौ वानर· हे केशव नौकाः नाव. (७२) 'अनुमातासे.' अनु न विद्यते नौ. यत्र तत् नौकारहितमित्यर्थ. माता जनित्री. हे असे खड्ग. अनुमातासे त्व अनुमान करिष्यसि (७३) 'विभाकरभवनम्' विभा विगता भा कान्तिर्यस्या सा. हे करभ उष्ट्र. वनम् विभाकरभवन विभाकरस्य सूर्यस्य भवन गृह तत् सिंहराशिं गते जीवे लोका विवाहादिशुभकार्याणि न कुर्वन्ति सिंहस्याधिपति· सूर्य. (७४) 'पराजयेमहि' परा उत्कृष्टा. उत्कृष्टा एव सेना जय प्राप्नुयादित्यर्थ.. आजये सग्रामाय हे महि हे पृथ्वि. वयं पराजयेमहि जयेम· (७५) 'विनोदयेयम्.' विना गरुडेन उदये सति परस्योन्नतौ सत्याम्. अय भाग्यम्. अह त विनोदयेय विनोदेन युक्त कुर्यामित्यर्थ.. (७६) 'विधुरविरहितः' विधुरेण कष्टेन विरहित· सुखीत्यर्थ. विधुश्च रविश्च विधुरवी चन्द्रादित्यौ ताभ्या रहित विधुश्चन्द्र. अवि. ऊर्णायु·. अहित शत्रुः. (७७) 'नरकरेणव' नराश्च करेणवश्च मनुष्यहस्तिन. नरकस्य रेणवो धूल्य अग्निरूपा वालुका इत्यर्थः. नरकरे पुरुषाणा हस्ततले. अणव. परमाणव..

निगद्यते किं पञ्चतनैः सममपमान एव केषु ॥ ७८ ॥ कामारिरहितामिच्छति भूपः कामुद्धरयति शूकररूपः । केनाकारि हि मन्मथजननं केन विभाति च तरुणीवदनम् ॥ ७९॥ हिमांशुखण्डं कुटिलोज्ज्वलप्रभं भवेद्वराहप्रवरस्य कीदृशम् । विहाय वर्णं पदमध्यसंस्थितं न किं करोत्येव जिनः करोति किम् ॥ ८० ॥ वसन्तमासाद्य वनेषु कीदृशाः पिकेन राजन्ति रसालभूरुहाः । निरस्य वर्णद्वयमत्र मध्यमं तव द्विषां कान्ततमा तिथिश्च का ॥ ८१ ॥ उरःस्थलं कोऽत्र विना पयोधरं बिभर्ति संबोधय मारुताशनम् । वदन्ति कं पत्तनसंभवं जनाः फलं च किं गोपवधूकुचोपमम् ॥ ८२ ॥ वसन्तमासाद्य वनेषु राजते विकासि किं वल्लभ पुष्पमुच्यताम् । विहंगमं कं च परिस्फुटाक्षरं वदन्ति कं पङ्कजसंभवं विदुः ॥ ८३ ॥ समुद्यते कुत्र न याति पांसुला समुद्यते कुत्र भयं भवेज्जलात् । समुद्यते कुत्र तवापयात्यरिः प्रहीणसंबोधनवाचि किं पदम् ॥ ८४ ॥ तपस्विनोऽत्यन्तमहासुखाशया वनेषु कस्मै स्पृहयन्ति सत्तमाः । इहापि वर्णद्वितयं निरस्य भोः सदा स्थितं कुत्र च सत्वमुच्यताम् ॥ ८५ ॥ पदमनन्तरवाचि किमिष्यते कपिपतिर्विजयी ननु कीदृशः । परगुणं गदितुं गतमत्सराः कुरुत किं सततं भुवि सज्जनाः ॥ ८६ ॥ वदति राममुष्य जघन्यजो वसति कुत्र सदालसमानसः । अपि च शक्रसुतेन तिरस्कृतो रविसुतः किमसौ विदधे त्वया ॥ ८७ ॥ मेघात्यये भवति कः समदः सुभगं च किं कमधरन्मुरजित् । कटुतैलमिश्रितगुडो नियतं विनिहन्ति कं त्रिगुणसप्तदिनैः ॥ ८८ ॥ वर्षासु का भवति निर्मधु कीदृगब्जं शेषं बिभर्ति वसुधासहितं क एकः । आमन्त्रयस्व धरणीधरराजपुत्रीं को भूतिभस्मनिचिताङ्गजनाश्रयः स्यात् ॥८९॥ कौ शंकरस्य वलयावपयोधरः कः कीदृक्परस्य नियतं वशमेति भूपः । संबोधयोरगपतिं विजयी च कीदृग्दुर्योधनो नहि भवेद्वद कीदृशश्च ॥९०॥ कामुज्जहार हरिरम्बुधिमध्यमग्नां कीदृक्श्रुतं भवति निर्मलमानसानाम् । आमन्त्र-

(७८) 'अभिमानिषु' अभि नास्ति भीर्भयं यस्य तत्. मा लक्ष्मी. अनिषु न विद्यन्ते इषवो बाणा यस्मिंस्तत्. अभिमानिषु गर्ववत्सु. (७९) 'कुकुमेन.' कु पृथ्वीम्. कु धराम्. एन कृष्णेन. कुङ्कुमेन. (८०) 'दंष्ट्राभम्.' दंष्ट्रा दाढा तद्वत् आभा शोभा यस्य तत्. द्वितीयायामुदयं प्राप्तश्चन्द्रो वक्रोज्ज्वलगुणेन सूकरदंष्ट्रया सहोपमीयते दम्भ कपट जिनः न करोति. भन्द कल्याण जिनः करोति. (८१) 'कान्तगिरा.' कान्तगिरा. कान्ता मनोहरा गीर्वाणी यस्यासौ कान्तगीस्तेन. कारा बन्दिगृहम् राका पूर्णमासी. (८२) 'नागरगम्.' ना पुमान्. हे नाग हे सर्प नागरः नगरे भवस्तम्. नागरङ्गं नारङ्गीफलम् (८३) 'किंशुकम्.' किंशुक पलाशम्. शुकं कीरम्. कं ब्रह्माणम् (८४) 'हिमकरे' हिमकरे चन्द्रे उद्गते सति. मकरे मत्स्ये उत्पन्ने सति. करे हस्ते सायुधे उर्ध्वीकृते सति. रे रे दास इति चामन्त्रणे. (८५) 'तपसे.' तपोगुणाय. से सकारभावः सकारे वर्तते. (८६) 'अनुसरामः.' अनु पश्चाद्वाचि. रामेण सहवर्तमानः सरामः अनुसरामः वय परगुण प्रति अनुसरण कुर्म.. (८७) 'अनुजगृहे.' हे अनुज भ्रातः. गृहे मया अनुजगृहे अनुगृहीतः. (८८) 'श्वासरोगम्.' श्वा तेषु दिनेषु मैथुनेच्छो भवेत्. सरस्तडागम् अग गोवर्धनम् श्वासरोगम्. (८९) 'कालिकापालिकमठः.' कालिका श्यामता. अपगता अलयो भ्रमरा यस्मात्तदपालि भ्रमररहितम् कमठः कच्छपः. हे कालि हे पार्वति. कापालिको योगी तस्य मठः. (९०) 'अहीनाक्षतनय.' अही सर्पौ. ना पुमान्. क्षतनयः क्षतः स-

यस्व वनमग्निशिखावलीढं तत्त्रापि को दहति के मदयन्ति भृङ्गान् ॥ ९१ ॥ मेघात्यये भवति किं सुभगावगाहं का वा विडम्बयति वारणमल्लवेश्याः। दुर्वारवीर्यविभवस्य भवे-
:णे कः काः स्मेरवक्त्रसुभगास्तरणिप्रभाभिः ॥ ९२ ॥ कल्याणवाक्त्वमिव किं पदमत्र
ान्तं सद्रूपतेस्त्वमिव कः परितोषकारी। कः सर्वदा वृषगतिस्त्वमिवातिमात्रं भूत्या-
श्रितः कथय पालितसर्वभूतः ॥ ९३ ॥ सूर्यस्य का तिमिरकुञ्जरवृन्दसिंही सत्यस्य का
ुकृतवारिधिचन्द्रलेखा। पार्थश्च कीदृगरिदावहुताशनोऽभूत्का मालतीकुसुमदाम हरस्य
मूर्ध्नि ॥ ९४ ॥ मेघात्यये भवति का सुभगावगाहा वृत्त वसन्ततिलका कियदक्षराणाम्।
भो भोः कदर्यपुरुषा विषुवद्दिने च वित्त च वः सुबहु तत्क्रियतां किमेतत् ॥ ९५ ॥प्राप्ते
वसन्तसमये वद किं तरूणां किं क्षीयते विरहिणामुरगः किमेति। किं कुर्वते मधुलिहो
मधुपानमत्ताः कीदृग्वनं मृगगणास्त्वरितं त्यजन्ति ॥ ९६ ॥ दुर्वारवीर्य सरुषि त्वयि का
प्रसुप्ता [1]श्यामा सपत्नहृदये [2]सुपयोधरा च। तुष्टे पुनः प्रणतशत्रुसरोजसूर्ये सैवाद्यवर्णरहिता
वद नाम का स्यात् ॥९७॥ उरसि मुरभिदः का गाढमालिङ्गितास्ते सरसिजमकरन्दामो-
दिता नन्दने का। गिरिसमलघुवर्णैरर्णवाख्यातिसंख्यैर्गुरुभिरपि कृता का छन्दसां वृत्ति-
रस्ति ॥ ९८ ॥ समरशिरसि सैन्यं कीदृशं दुर्निवारं विगतघननिशीथे कीदृशे व्योम्नि
शोभा। कमपि विधिवशेन प्राप्य योग्याभिमानं जगदखिलमनिन्द्यं दुर्जनः किं करोति
॥ ९९ ॥ भवति गमनयोग्या कीदृशी भू रथाना किमतिमधुरमम्लं भोजनान्ते प्रदेयम्।
प्रियतम वद नीचामन्त्रणे किं पदं स्यात्कुमतिकृतविवादाश्चक्रिरे किं समर्थैः॥१००॥ भवति

---

ण्डितो नयो न्यायो येन सः अन्यायवान् हे अहीन सर्पाणा स्वामिन् अक्षतनय न क्षतो नयो न्यायो येन स अखण्डन्यायवान् हीने अक्षिणी यस्यासो हीनाक्षोऽन्धस्तस्य तनयः पुत्र.. न हीनक्षातनयो अहीनाक्षत-नय. धृतराष्ट्रो हि हीनाक्षोऽन्ध इति पौराणिका. तत्पुत्रो दुर्योधनोऽहीनाक्षतनयो न भवति किंतु अन्धपुत्र इत्यर्थ (९१) 'कुदमकरन्दविन्दव.' कु पृथ्वीम् दमकर शमदमउपशमक्षमायुक्त भवति इत्यर्थ.. हे दविन् दवो विद्यते यस्मिस्तत् दवी तत्सबोधनम् दव. वनाग्नि कुन्दमकरन्दविन्दव कुन्दाना पुष्पविशेषाणा मक-रन्दः पुष्परसो गन्धस्तस्य विन्दव कणा (९२) 'सरोजराजय' सरस्तडागम्. जरा वयोहानि.. जयः. सरोजराजय कमलश्रेणय. (९३) 'शकर' श सुखम् करो राजभाग. शकरो महादेव (९४) 'भागी-रथी.' भा कान्तिः गी वाणी रथी रथो विद्यते यस्य स. भागीरथी गङ्गा (९५) 'नदीयताम्.' नदी. इयता एतावदक्षराणाम् न दीयताम्. (९६) 'दवविकलम्.' दलम् वलम्. विलम्. कल अव्यक्तमधुरम्. दवविकल दावाग्निना व्याकुलम् (९७) 'शस्त्री' आद्यवर्णरहिता 'स्त्री' हे दुर्वारवीर्य त्वयि सरुषि सति सपत्नहृदये का प्रसुप्ता—शस्त्री. प्रणतशत्रुसरोजसूर्ये त्वयि तुष्टे सति सपत्नहृदये प्रसुप्ता सैवाद्यवर्णरहिता का—स्त्री. (९८) 'मालिनी' मा लक्ष्मी अलिनी भ्रमरी मालिनी नाम छन्दोवृत्तम् (९९) 'अभि-भवति' अभि नास्ति भीर्यस्य तत् भयरहितम् भवति भानि नक्षत्राणि विद्यन्ते यस्मिंस्तत् भवत् तस्मि-न्नक्षत्रयुक्ते अभिभवति पराभवति नीचो वृद्धि गतो दुःखदायक एव भवेदिति भावः (१००) 'समाद-

---

१ श्यामवर्णो लोहमयत्वात्, (पक्षे) षोडशवार्षिकी. २. सुष्ठु पय जल धरतीति सुपयोधरा. लोहनिर्मिते शस्त्रे पानीय दीयते- इति प्रसिद्धि., (पक्षे) सुस्तनी. ३ विष्णोः.

जयिनी काञ्चौ सेनाह्वयाधरभूषणं वहति किमहिः पुष्पं कीदृक्कुसुम्भसमुद्भवम्। महति समरे वैरी वीर त्वया वद किं कृतः कमलमुकुले भृङ्गः कीदृक्पिबन्मधु राजते ॥१०१॥ आह्वानं किं भवति हि तरोः कस्यचित्प्रश्नविज्ञाः प्रायः कार्यं किमपि न कलौ कुर्वते के परेषाम्। पूर्णं चन्द्रं वहति ननु का पृच्छति म्लानचक्षुः केनोदन्या जनितमसमं कष्टमाप्नोति लोकः ॥ १०२ ॥ का संबुद्धिः सुभट भवतो ब्रूहि पृच्छामि सम्यक्प्रातः कीदृग्भवति विपिनं संप्रवृद्धैर्विहंगैः। लोकः कस्मिन्प्रथयति मुदं का त्वदीया च जैत्री प्रायो लोके स्थितमिह सुखं जन्तुना कीदृशेन ॥ १०३ ॥ गतक्लेशायासा विमलमनसः कुत्र मुनयस्तपस्यन्ति स्वस्थाः सुररिपुरिपोः का च दयिता। कविप्रेयः[1] किं स्यान्नवलघुयुतैरष्टगुरुभिर्बुधा वृत्तं वर्णैः स्फुटघटितबन्धं कथयत ॥ १०४ ॥ बिभर्ति वदनेन किं क इह सत्त्वपीडाकरं कुलं भवति कीदृशं गलितयौवनं योषिताम्। बभार हरिरम्बुधेरुपरि कां च केन स्तुते हतः कथय कस्त्वया नगपतेर्भयं कीदृशात् ॥ १०५ ॥ हरिर्वहति कां तवास्त्यरिषु का गता कं च का कमर्चयति रोगवान्धनवती पुरी कीदृशी। हरिः कमधरद्बलिप्रभृतयो धरां किं व्यधुः कया सदसि कस्त्वया बुध जितोऽम्बुधिः कीदृशः ॥१०६॥ पवित्रमतितृप्तिकृत्किमिह किं भटामन्त्रणं ब्रवीति धरणीधरश्च किमजीर्णसंबोधनम्। हरिर्वदति को जितो मदनवैरिणा संयुगे करोति ननु कः शिखण्डिकुलताण्डवाडम्बरम् ॥ १०७ ॥ को मोहाय दुरीश्वरस्य विदितः

धिरे.' समा अविषमा. दधि क्षीरजम्. रे इति नीचसंबोधन दीयते. समादधिरे समानत्वेन स्थापिताः. (१०१) 'परागरजित.' परा उत्कृष्टा. हे राग आरक्तत्व. गर गरलम्. रञ्जि रञ्जतीत्येवशील तत्. जितः. परागरञ्जित परागेण केसरेण रञ्जितः प्रीणितमनाः. (१०२) 'नीरापकारेण.' हे नीप वृक्षविशेष. परे अन्ये. आत्मनः कार्याणि सर्वे कुर्वन्ति परकार्यकृत्तु विरलः. राका पूर्णिमा. हे काण एकाक्ष. नीरापकारेण नीरस्य. जलस्य अपकारो अभावस्तेन नीर विना तृषा कष्ट ददाति. (१०३) 'वीहारसेविना.' हे वीर. रवि रव. शब्दो विद्यते यस्मिन् तत् शब्दयुक्तम् हासे हास्ये सेना सैन्यम्. वीहारसेविना वीहार उपवनादिषु खेलन सेवते इत्येवशोलस्तेन (१०४) 'शिखरिणी' शिखराणि विद्यन्ते यस्मिन्नसौ शिखरी पर्वतः तस्मिन् शिखरिणि. ई लक्ष्मीः. शिखरिणी छन्दः. (१०५) 'विषमपाद निकुजगताहित'.' विषं गरलम्. अपात् सर्पः. अनि नास्ति इः कामो यस्मिन् तत् कदर्परहितम्. कुं पृथ्वीम् जगता ससारेण. अहित शत्रुः. विषमपादनिकुञ्जगताहितः. विषमाणा दुर्गमाणा पादाना प्रत्यन्तपर्वताना निकुञ्जेषु गहनस्थानेषु गता अहय. सर्पा यस्मिन्सः विषमपादनिकुञ्जगताहिस्तस्मात्. यत्र पर्वते शिलाया अधस्तात्सर्पा निर्गच्छन्ति ततः पर्वताद्भिभीयते. (१०६) 'कुभीरमीनमकरागमदुर्गवारि.' कु पृथ्वीम्. भीः भयम्. ई लक्ष्मीः. अ विष्णुम्. इन सूर्यम्. अकरा नास्ति करो राजदण्डो यस्या सा. अग गोवर्धनपर्वतम्. अदु ददति स्म. गवा वाण्या वादेन कृत्वा. अरि प्रतिवादी. कुम्भीरमीनमकरागमदुर्गवारि कुम्भीरा नक्राश्च मीना मत्स्याश्च मकराश्च तेषा आगमौ आगमनगमने ताभ्या कृत्वा दुर्ग दुस्तर वारि जल यस्यासौ ईदृश' समुद्रो भवति. (१०७) 'पयोधरसमयः.' पयो जलम्. हे योध हे धर पर्वत. हे रस अजीर्ण पर्वत प्रति अजीर्णसंबोधनम्. हे सम मा लक्ष्मीस्तस्या सहवर्तमान हरे मय मयो नामा कश्चिद्दैत्यविशेषो हरेण हत इति भावार्थ'. पयोधरसमय पयोधरस्य मेघस्य समय काल'. मेघागमे हि मयूर विशेषेण नृत्यन्तीत्यर्थ.

१ 'कविप्रियम्.

संबोधनीयो गुरुः को धात्र्यां विरलः कलौ नवघनः किंवन्न कीदृग्द्विजः। किं लेखावचनं भवेदतिशयं दुःखाय कीदृक्खलः को विद्याधिपतिर्मनोभवसमो मर्त्यो पुमान्कीदृशः ॥१०८॥ कामिन्याः स्तनभारमन्थरगतेर्लीलाचलच्चक्षुषः कंदर्पैकविलासनित्यवसतेः कीदृक्पुमान्वल्लभः। हेलाकृष्टकृपाणपाटितगजानीकात्कुतस्तेऽरयः श्वासायासविशुष्ककण्ठकुहरा निर्यान्ति जीवार्थिनः ॥ १०९॥ दैत्यारातिरसौ वराहवपुषा कामुज्जहाराम्बुधेः का रूपं विनिहन्ति को मधुवधूवैधव्यदीक्षागुरुः। स्वच्छन्दं नवसल्लकीकवलनैः पम्पासरोमज्जनैः के विन्ध्याद्रिवने वसन्त्यभिमतक्रीडाभिरामस्थिताः ॥ ११० ॥ का चक्रे हरिणा धने कृपणधीः कीदृग्भुजंगेऽस्ति किं कीदृक्कुम्भसमुद्भवस्य जठरं कीदृग्वियासुर्वधूः। श्लोकः कीदृगभीप्सितः सुकृतिनां कीदृङ्नभो निर्मलं क्षोणीमाह्वय सर्वगं किमुदितं रात्रौ सरः कीदृशम् ॥ १११ ॥ मुण्डः पृच्छति किं मुरारिशयनं का हन्ति रूपं नृणां कीदृग्वीरजनश्च कोऽतिगहनः संबोधयावस्थितम्। का धात्री जगतो बृहस्पतिवधूः कीदृक्कविः क्वादृतः कोऽर्थः किं भवता कृतं रिपुकुलं कीदृक्सरो वासरे ॥ ११२ ॥ कस्मै यच्छति सज्जनो बहुधनं सृष्टं जगत्केन वा शंभोर्भाति च को गले युवतिभिर्वेण्यां च का धार्यते। गौरीशः कमताडयच्चरणतः का रक्षिता

---

(१०८) 'राजीवसन्निभवदनः'. राः द्रव्यम्. हे जीव हे गुरो. सन् सज्जनः. इभवत् हस्तिवत्. न विद्यते अः कृष्णोऽस्मिन्निति अन.. ब्राह्मणो हि कृष्णरहित' कदाचिन्न स्यादित्यर्थ'. राजी पङ्क्ति. वसन् निवास कुर्वन्. इभवदनः इभवत् हस्तितुल्य वदन मुख यस्यासौ. गणेश इत्यर्थ. राजीवेन कमलेन सन्निभं सदृशं वदनं मुखं यस्यासौ राजीवसन्निभवदन.. (१०९) 'समरतः'. सम तुल्य रत भोगक्रिया यस्य स.. संग्रामात्. (११०) 'कुजराः'. कु पृथ्वीम्. जरा वृद्धत्वम्. अः कृष्णः. कुञ्जरा हस्तिनः. (१११) 'कुमुदवनपरागरजिताम्भो विहितगमागमकोकमुग्धरेखम्'. कुमुद् पृथ्व्या हर्षोऽकारि. पृथ्वी उद्धृता इत्यर्थः. अवनपरा अवन रक्षण धनस्य गोपन तत्र परा सावधाना. गर विषम्. जितानि पीतानि अम्भासि जलानि येन तज्जिताम्भः. विहितगमा विहित. कृतो गमो गमन यया सा. गमकः अर्थाभिप्रायेण गम्यते प्राप्यते सः गमकः. अकमुक् क पानीय मुञ्चन्ति ते कमुचो मेघा न विद्यन्ते कमुचो यस्मिन् तत् अकमुक्. मेघै रहितमित्यर्थः. हे धरे हे पृथ्वि ख आकाशम्. कुमुदवनपरागरञ्जिताम्भो विहितगमागमकोकमुग्धरेख कुमुदाना चन्द्रविकासिकमलाना वनानि तेषा परागेण सुसुगन्धेन किञ्जल्केन वा रञ्जित रङ्गयुक्त कृतं अम्भो जल यस्मिन् तत् ईदृश सर. पुनः कीदृशम्. विहितौ निष्पादितौ गमागमौ गमनागमने याभ्या तौ विहितगमागमौ तौ च तो कोकौ च ताभ्या कृत्वा मुग्धा सुन्दरा रेखा पङ्क्तिर्यस्मिन् तत्. यतस्तौ चक्रवाकीचक्रवाकौ अन्योन्यं वियुक्तौ सन्तौ रात्रौ मिलनाय तीरात्तीर पर्यटतः तयोर्गमनागमनेन जलरेखाया. भवात् रात्रौ सर ईदृश इति भाव.. (११२) 'विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितम्.' हे विकच विगता. कचा. केशा यस्य सः तत्सबोधनम्. हे बालरहित. वारि जलम्. महाप्रलये हरि. शेषशय्याया समुद्रजले शेते. जरा वृद्धत्वम्. आजिसमुद् आजौ संग्रामे समुत् सहर्ष.. भवः ससार. हे अच्छलित हे अवञ्चित. भूः पृथ्वी. इपरा इ कामस्तेन परा उत्कृष्टा नित्ययौवनवती. गवि वाण्याम्. राः द्रव्यम्. जितम्. विकचवारिजराजिसमुद्भवोच्छलितभूरिपरागविराजितं विकचाना प्रफुल्लाना वारिजाना कमलाना राजिः पङ्क्तिस्तस्याः समुद्भव उत्पन्न उच्छलितो यो भूरि प्रचुरः पराग. सौगन्ध्य तेन विराजितं शोभितम्

राक्षसैरारोहादवरोहतः कलयतामेकं द्वयोरुत्तरम् ॥ ११३ ॥ कः स्यादम्बुदयाचको युवतयः कं कामयन्ते पतिं लज्जा केन निवार्यते निकटके दासे कथं यावनी । भाषा दर्शयतेति वस्तुषु महाराष्ट्रे कदा वा भवेदाद्यन्ताक्षरयोर्हि लोपरचना चातुर्यतः पूर्यताम् ॥ ११४ ॥ का मेघादुपयाति कृष्णदयिता का वा सभा कीदृशी कां रक्षत्यहिहा शरद्विकचयेत्कं धैर्यहन्त्री च का । कं धत्ते गणनायकः करतले का चञ्चला कथ्यतामारोहादवरोहतश्च निपुणैरेकं द्वयोरुत्तरम् ॥ ११५ ॥ कुत्र श्रीः स्थिरतामुपैति भुवि को दुःखी किमीषत्पदं धर्मादीन्विनिवारयन्ति पथि के पान्थस्य दीनस्य च । का संबुद्धिरिह श्रियश्च तमसः कौ नाशकौ प्रोच्यतां गच्छन्तं पथिकं किमाह यवनः सङ्गाभिलाषान्वितः ॥ ११६ ॥ कः खे भाति हतो निशाचरपतिः केनाम्बुधौ मज्जति कः कीदृक्तरुणीविलासगमनं को नाम राज्ञां प्रियः । पत्रं किं नृपतेः किमप्सु ललितं को रामरामाहरो मत्प्रश्नोत्तरमध्यमाक्षरपदं यत्तत्तवाशीर्वचः ॥११७॥ किं त्राणं जगतां न पश्यति च कः के देवताविद्विषः किं दातुः करभूषणं निरुदरः कः किं पिधानं दृशाम् । के खे खेलनमाचरन्ति सुदृशां किं चारुताभूषणं बुद्ध्या ब्रूहि विचार्य सूक्ष्ममतिमंस्त्वेकं द्वयोरुत्तरम् ॥ ११८ ॥ कः कर्णारिपिता गिरीन्द्रतनया कस्य प्रिया कस्य तुक्को जानाति परेङ्गितं विषमगुः कुत्रोदभूत्कामिनाम् । भार्या कस्य विदेहजा तुदति का भौमेऽह्नि निन्द्यश्च कस्तत्प्रत्युत्तरमध्यमाक्षरपदं सर्वार्थसंपत्करम् ॥११९॥ कः सौख्यं विदधाति पुष्पसमये सूर्यादिभिः पीडितं किं वा सर्वजनो निषेधसमये वाक्यं जगादोचितम् । शूरः संग्रामभूमावभिलषति कथं कः प्रहर्तीभकुम्भे मत्प्रश्नोत्तरपूर्ववर्णमविदुः सर्वे बुधा दुष्करम् ॥ १२० ॥ लावण्यं क्व नु योषितां नभसि के संचारमातन्वते कासादुच्चतरा भवन्ति निनदाः क्व क्रीडतो दंपती । केषु श्रीः प्रकटीचकार भगवान्सीतापतिः पौरुषं मत्प्रश्नोत्तरमध्यवर्णघटितो देवो मुदे वोऽस्तु वः ॥१२१॥ कः पूज्यो सुजनत्वमेति कतिमः क्व स्थीयते पण्डितैः श्रीमत्या शिवया च केन भुवने युद्धं कृतं दारुणम् । किं वाञ्छन्ति सदा जना युवजना ध्यायन्ति किं मानसे मत्प्रश्नोत्तरमध्यमाक्षरपदं भूयात्तवाशीर्वचः॥१२२॥ क्षोणी कं सहते करोति दिवि का नृत्यं शिवायाः पतिर्भूतानां कमयुङ्क्त जीवहरणे का रामशत्रोः पुरी । कं रक्षन्ति च साधवः पशुपतेः किं वाहनं प्रोच्यतामालोमप्रतिलोमशास्त्रचतुरैरेकं द्वयोरुत्तरम् ॥ १२३ ॥ के शक्ताः खलु भूतले चलसुता किं जीविनां जीवनं

(११३,११४,११५,११६)? (११७) ग्रहेशः रामेण. मैनाक. मंथरम् सचिवः. तुरगः गज.. राजीवम् रावणः. एतन्मध्यमाक्षरघटित वाक्य 'हे मे नाथ चिरं जीव' इति राजान प्रति आशीर्वचनम्. (११८ अन्ध· अत्र दृग्विहीनश्च. दानवाः दैत्या. दानवारि च. दानोदकमित्यर्थः. तमः राहुः अन्धकारश्च. वयः पक्षिणः तारुण्यं च. (११९) वासवः. हरस्य. ह्रस्वस्य. मतिमान्. मनसि. रामस्य. कुस्तुतिः. अभ्यङ्गः. एतन्मध्यमाक्षरघटित वाक्यं 'सरस्वति नमस्तुभ्यम्' इति. तुगागमो 'ह्रस्वस्य पिति कृति तुक्' इति सूत्रेण. विषमाः पञ्चगावो बाणा यस्येति विषमगु. कामः. (१२०,१२१,१२२)?. (१२३) भारं-रंभा. कालं-लंका. दीन-नदी.

किं किं रुद्रकरे हतोऽर्णवसुतानाथेन विज्ञावहा । कः कः कोऽस्ति विपक्षकोऽमरपतेः शास्त्रेण कः कीर्तिमान्प्रश्नस्योत्तरवर्णकैर्भवतु ते आशीर्वचो मध्यगैः ॥ १२४ ॥ साकेताधीशमूर्तिः क्षितिवसनभवा का च शेते युगान्ते कुत्र श्रीभवन्दितो मुररिपुर्वालिप्रियाख्याक्षरम् । आद्यं किं रजतैकदन्तवदना का रत्नसिंहासनेऽयोध्याया मनुजैस्त्रिभिर्हनुमता का सीतया सेविता ॥ १२५ ॥ त्र्यय्याद्याः के धनं किं भवति मृगमदे को गुणः का च माया के गाधाः किं रुषाणां जलमलघु सुखं योषितां केन दीनः । कः के देवारयः किं निमिपुरमदितिर्ब्रूहि केषा जनित्री द्यौः का को वैष्णवास्ये वुध वसति जपो मध्यवर्णैः पदानाम् ॥ १२६ ॥

## प्रश्नोत्तराणि ।

भारतं चेक्षुदण्डं च सिन्धुमिन्दुं च वर्णय । पादमेकं प्रदास्यामि प्रतिपर्वरसोदयः ॥१॥ कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप । तथापीयमवस्था ते न हि सर्वे भवादृशाः ॥ २ ॥ अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता । त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥ ३ ॥ भूरिभारभराक्रान्तो बाधति स्कन्ध एष ते । न तथा बाधते स्कन्धो यथा बाधति बाधते ॥ ४ ॥ निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् । उत्पत्तिरिन्दोरपि निष्फलैव कृता विनिद्रा नलिनी न येन ॥ ५ ॥ अङ्गणं तदिदमुन्मदद्विपश्रेणिशोणितविहारिणो हरेः । उल्लसत्तरुणकेलिपल्लवां सल्लकीं त्यजति किं मतंगजः ॥ ६ ॥ इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि नान्यथा विकाराः । इदमपि न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥ ७ ॥ यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टे लोकः शशक इति नो मां प्रति तथा । अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणीकटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥ ८ ॥ भवित्री रम्भोरु त्रिदशवदनग्लानिरधुना स रामो मे स्थाता न युधि पुरतो लक्ष्मणसखः । इयं यास्यत्युच्चैर्विपदमधुना वानरचमूर्लघिष्ठेदं षष्ठाक्षरपरविलोपात्पठ पुनः ॥ ९ ॥ अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुलाः पञ्चाशन्म-

(१२४,१२५)?. (१२६) ॐ ॐ ॐ. कनकम्. आमोद. शाम्भवी. सागरा. जीवनम्. कातेन. प्रवासी. असुराः. विदेह. देवानाम्. वियति. एषा मध्यवर्णो भाव्यस्तत. ॐ नमो भगवते वासुदेवाय इति मन्त्रो लक्ष्यते.

(१) पूर्वार्धं भोजराजस्योक्तिः. उत्तरार्धं तु कालिदासस्य प्रत्युक्तिः. (२) प्रथमपाद तृतीयपाद च नदीमुत्तितीर्षोर्भोजस्योक्ति. द्वितीयपाद चतुर्थपाद च राजदर्शनार्थं छद्मना काष्ठभारवाहपण्डितस्य प्रत्युक्तिः. (३)?. (४) पूर्वार्धं मृगयाया गृहमागच्छतः शिबिकारूढस्य भोजराजस्योक्तिः उत्तरार्धं च राजदर्शनार्थं गच्छतः शिबिकावाहकस्य पण्डितस्य प्रत्युक्ति. (५) पूर्वार्धं विह्लणस्योक्ति. उत्तरार्धं राजकन्यायाः (६) पूर्वार्धं तच्चित्तपरीक्षिकाया राजकन्याया उक्ति.. उत्तरार्धं तदनुरक्तस्य विह्लणस्य प्रत्युक्ति (७) पूर्वार्धं सारक्रीडा कुर्वत्या. शीलाभट्टारिकाया.. उत्तरार्धं च भोजस्य. (८) पूर्वार्धं रात्रौ चन्द्र वर्णयतो भोजस्योक्ति.. उत्तरार्धं च राजदर्शनार्थं आगतस्य छद्मचौरपण्डितस्य. (९) प्रतिचरणसप्तमाक्षरविलोपात् द्वितीयोऽर्थ उद्भवति.

१ क्रूरा, (पक्षे) काष्ठेन.

धुगन्धमत्तमधुपाः क्रोधोद्धताः सिन्धुराः । अश्वानामयुतं प्रपञ्चचतुरं पण्याङ्गनानां शतं दण्डे पाण्ड्यनृपेण ढौकितमिदं वैतालिकायार्पय ॥ १० ॥

## चित्रम् ।

नमामि मामनोनुन्नमानं मुनिममानिनम् । नानाननममानाममोंनामानमुमेनमुम् ॥ १ ॥ तारतारतरैरेतैरुत्तरोत्तरतो रुतैः । रतार्ता तित्तिरी रौति तीरे तीरे तरौ तरौ ॥ २ ॥ तनुता तनुतां नीता तेन ते नीतनीतिना । नाता नूतनता तान्ति तनौ तेनातनोति नः ॥ ३ ॥ या माता ममता माया मा परोक्षक्षरोपमा । तारोने गगनेऽरो तामक्षगच्छगक्षम ॥ ४ ॥ सर स्वतिप्रसादं मे स्थितिं चित्तसरस्वति । सरस्वति कुरु क्षेत्रकुरुक्षेत्रसरस्वति ॥ ५ ॥ ससार साकं दर्पेण कंदर्पेण ससारसा । शरं नवाना बिभ्राणा नाबिभ्राणा शरन्नवा ॥ ६ ॥ मारा· रिशक्रारामेभमुखैरासाररंहसा । सारारब्धस्तवा नित्यं तदर्तिहरणक्षमा ॥ ७ ॥ माता न तानां संघट्टः श्रियां बाधितसंभ्रमा । मान्याथ सीमा रामाणां शं मे दिश्यादुमाद्रिजा ॥ ८ ॥ क्षैरला बहुलारम्भतरलालिबलारवा । वैरलाबहुलामन्दकैरला बहुलामला ॥ ९ ॥ भासते प्रतिभासार रसाभाताहताविभा । भावितात्मा शुभा वादे देवाभा बत ते सभा ॥ १० ॥ मारमासुषमा चारु-

पूर्वचरणत्रय रावणस्य सीता प्रति उक्तिः. चतुर्थचरणस्तु तस्याः प्रत्युत्तरम्. ( १० ) निखिलमपि पद्य वि· ज्ञापयतो भाण्डागारकस्योक्तिः. वैतालिकायार्पय इति च सप्ताक्षराणि वैतालिकगीतदत्तकर्णस्य विक्रमा- दित्यस्य प्रत्युक्तिः.

( १ ) द्व्यक्षरं पद्यम्. नमामि नमस्करोमि. कम्. उं विष्णुम्. न केवल तमेव अपि तु उमेनं पार्वतीना· थम्. हरिहरमित्यर्थः. किंभूतम्. मामनोनुन्नमानं मा लक्ष्मीस्तस्या मनसो नुन्नोऽपहृतो मानो येन स तथा तं लक्ष्मीचाञ्चल्यगर्वापहारिणम् पु० कि०. मुनिं योगीश्वर अमानिन मानरहितम्. पु० किं०. नानाननं नाना· विधानि आननानि मुखानि यस्यासौ त दशावतारत्वादनेकविधमुखम्. पु० किं०. अमानाम अमानमाकाशम- मति अतिक्रामतीत्यमानामस्तम्. पु० कि०. ओनामानं ब्रह्मस्वरूपम् एवंविध उमेनं हर उ हरिं च नमामि. (२,३) द्व्यक्षरः. (४) उ इति सबोधनम्. हे अक्षगच्छगक्षम अक्षैरिन्द्रियैर्गच्छन्ति प्रतिपद्यन्ते ते अक्षगच्छाः विषया तेषा छगः नाश· तत्र क्षमः समर्थ. तस्य सबोधनम्. हे महायोगिन्. गगने आकाशे ता अर प्राप. किंभूते गगने. तारोने ताराभिः ऊन तस्मिन्. ता काम्. या माता अर्थात् विश्वस्य माता. पु० की०. या ममता ममतास्वरूपेण वर्तते. या वैष्णवी माया. पु० की० या मा लक्ष्मी·. पु० की०. या परोक्षक्षरोपमा परश्चासौ उक्षा च परोक्षा वृषभः तेन क्षरतीति गच्छति स· श्रीमहादेवः तेन उपमीयतेति सा. ( ५ ) स्वतिप्रसाद सु- न्दरातिप्रसन्नता सर प्राप्नुहि. चित्तसरस्वति चित्तसमुद्रे. क्षेत्र शरीरमेव कुरुक्षेत्र तत्र सरस्वत्याख्यनदीरूपे· नद्याः समुद्रस्थितेरौचित्येन मम चित्तसमुद्रे स्थितिं कुरु इत्यर्थः. ( ६ ) नवा शरत् कदर्पस्वरूपेण दर्पेण साकं ससार. किंभूता. ससारसा सारसेन पक्षिविशेषेण पद्मेन वा सहिता. शर काण्ड बिभ्राणा पोषयन्ती. परिपाकं प्रापयन्तीत्यर्थः. नवाना नवमनः शकट कर्दमाभावेन पथि यस्या सा. न अविभ्राणा वीना पक्षिणा भ्राणः शब्द. न तेन रहिता च. (७,८) खड्गबन्ध.. (९) मुरजबन्धः ( १० ) पद्मबन्ध..

१ शिव.. २ गणेश:. ३ शरद्वर्णनमेतत्. शरकाण्डोद्गमवती. ४ हस्यः. ५ कर राजग्राह्यभागं गृह्णन्तीति ते. ६ बहुले कृष्णपक्षेऽप्यमला.

रुचा मारवधूत्तमा । मात्तधूर्ततमावासा सा वामा मेऽस्तु मा रमा ॥११॥ रेसासार रसा सारसा-यताक्ष क्षतायसा । सातावात तवातासा रक्षतस्त्वस्त्वतक्षर ॥१२॥ यदानतोऽयदानतो नयात्ययं न यात्ययम् । शिवे हितां शिवेहितां स्मरामितां स्मरामि ताम् ॥ १३ ॥ आम्नायानामाहान्त्यावागीतिर्नीतिर्भीतिः प्रीतिः । भोगो रोगो मोदो मोहो ध्येयेच्चेच्छेत्क्षेमे देशे ॥ १४ ॥ नागविशेषे शेषे शेषेऽशेषेऽपि संहृते जगति । हंस्यसिकालं कालं का लङ्कालङ्घने स्तुतिर्भवतः ॥ १५ ॥ मधुरया मधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया । मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥ १६ ॥ विनायमेनो नयतासुखादिना विना यमेनोनयता सुखादिना । महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम् ॥१७॥ विश्वस्य हेतुरमरैर्बहु गीयसे त्वं विश्वंभरे शिवशिवे त्रिगुणात्ममूर्ते । चिद्व्योमतोऽपि परमां प्रथमां वदन्ति त्वां योगिनः स्तुतिपराः प्रणिधानदृष्ट्या ॥ १८ ॥ पायाद्वः करणोऽरणो रणरणो राणो रणोवारणो दत्ता येन रमारमारमरमा रामारमाः सा रमा । सः श्रीमानुदयोदयो दयदयो दायोदयोदेदयो विष्णुर्जिष्णुरभीरभीरभिरभीराभीरभीसारभीः ॥ १९ ॥

---

( ११ ) पद्मबन्ध.. ( १२ ) सर्वतोभद्रः. ( १३ ) यस्मामानतोऽय जन' न यात्यय नीतिविक्षेप न याति. कुत. अयदानतः अर्थात् तयैवास्य शुभावहविधिदानात्. शिवे मङ्गले हिता अनुकूलाम्. शिवेन महादेवेन हिताम् प्रार्थनीयाम्. स्मरेण कदर्पेण अमिता मातुमयोग्याम् अनभिभूतामित्यर्थ.. ( १४ ) चतुर्मात्रिको वेद्युन्मालाछन्द'. आम्नायाना वेदानामन्त्या वाक् उपनिषद् आह अकथयत्. किम्. ईतिः नीति. भीतिः प्रीति' भोगः रोग' मोद. मोहः क्षेमे शुभे देशे स्थाने आत्मपरात्मनोः ध्येयेत् इच्छेच्च. ( १५ ) सानुप्रासः हे राम त्वया अशेषे समस्तेऽपि जगति संहृते संहृतवति त्व नागविशेषे शेषनागे शेषे स्वपिषि. तथा असिवत् खड्गवत् काल कृष्ण काल हंसि मारयसि. अतो भवतस्तव लङ्काया लङ्घने पारगमने का स्तुति स्तवन न किमपीत्यर्थ.. ( १६ ) कठिनानुप्रासहित चतुर्थपादान्तयमकम्. ( १७ ) मृत जटायुष दृष्ट्वा राम प्रति लक्ष्मणोक्तिरियम् अय विना पक्षिस्वरूपः पुरुष. जटायुः यमेन यतमानसादर यतमानाना रक्षितुमुद्यता साद विषाद राति ददातीति तत् यथा स्यात्तथा अर शीघ्र मानसात् मानस चित्तमेव मानस मानससरस्तस्मात् अदीयत अखण्ड्यत अय किंभूत.. महाजनः महात्मा महाजनोदी च मह उत्सवमजन्ति क्षिपन्ति ये दुर्जनास्तन्नोदी तदपसारक.. यमेन किंभूतेन. एनो विना अपराधमृते नयता स्वपुरं प्रापयता असुखादिना प्राणभक्षकेण सुखादिना ऊनयता च हीनं कुर्वता च इत्यर्थ. ( १८ ) अस्य वसन्ततिलकाछन्दसो दुर्गास्तुतिरूपस्य पद्यस्य चतुर्णामपि पादाना षष्ठसप्तमाष्टमाक्षरलोपेन इन्द्रवज्रावृत्त शिवस्तुतिश्च जायते. ( १९ ) स पुराणप्रसिद्ध वेवेष्टि व्याप्नोतीति विष्णुर्भगवान्वो युष्मान्पायादित्यर्थः. व इति बहुवचनेन सर्वसमत्व सूचितम् माययास्पृष्टस्य तस्य कथ रक्षकत्व भवत्वित्यत आह. श्रीमानिति. श्रीर्नित्यमस्यास्तीति श्रीमान् माया विनाभूदित्यर्थ. ननु बहूना रक्षणपरिपन्थिना विद्यमानत्वात्कथमस्य रक्षकत्वमित्याह. जिष्णुरिति. जयनशीलः इत्यर्थ. तथा च रक्षणपरिपन्थिनोऽपि तद्वशगा इति भावः. इदानी वः इति बहुवचनोक्त सर्वसमत्व द्रढयितुमवतारविशेषान्विशेषणमुखेनाह करण इति. क जल रणति गच्छतीति करणः मत्स्यकूर्मावतारवानित्यर्थ' पुनः अरणः न विद्यते रणः सङ्ग्रामो यस्य स तथा. अनेन च

---

१ भूमौ मुख्य. २ पृथ्वी. ३ पद्मदी घैलोचन. ४ क्षतायोपचायो येन स क्षतायसा स्यति अन्त प्रापयति तादृशी. ५ साते सुखेऽवात वातवदचञ्चल अलोलुपेत्यर्थ.. ६ अनल्पद.

## भाषाचित्रम् ।

उत्सरङ्गकलितोरुकटारीभाजिरा उत भयंकरभालाः । सन्तु पायकगणा जय तैस्त्वं गामगोहरमिलाव इलावी ॥ १ ॥ हरनयनहुताशज्वालया जो जलाया रतिनयनजलौघे खाक बाकी बहाया । तदपि दहति चित्तं माक क्या मै करोंगी मदनसरसि भूयः क्या बला आग लागी ॥ २ ॥ नूनं बादलशाइ शोहपसरी निःसाणशब्दः खरः शत्रुं पाडि लुटालितो विहणिसो एवं भणन्त्युद्भटाः । रूढे गर्दभरामघालि सहसा रे कं तमेरे कहे कण्ठे पागनिवेशि याहि शरणं श्री मल्लदेवं प्रभुम् ॥ ३ ॥

---

## जातिवर्णनम् ।

सिंहः ॥ गर्जन्हरिः साम्भसि शैलकुञ्जे प्रतिध्वनीनात्मकृतान्निशम्य । पदं बबन्ध क्रमितुं सरोषः प्रतर्कयन्नन्यमृगेन्द्रनादम् ॥ १ ॥ लीढग्रस्तविपाण्डुराग्रनखयोरा कर्णदीर्णं मुखं विन्यस्याग्रिमयोर्युगे चरणयोः सद्यो विभिन्नद्विपः । एतस्मिन्मदगन्धवासितसटः सावज्ञतिर्यक्चलत्सृक्कान्ताहतिधूतलोलमधुपः कुञ्जेषु शेते हरिः ॥ २ ॥ पश्योदश्चदवाञ्चदञ्चितवपुः पश्चार्धपूर्वार्धभाक्स्तब्धोत्तानितपृष्ठनिष्ठितमनाग्भुग्नाग्रलाङ्गूलभृत् । दं

---

ब्रह्मकर्ममात्रप्रणयी वामनावतार उक्तो भवति यस्येति शेषः. स कः. यस्य विष्णोः राण· रणस्यायं राणः रणसम्बन्धीत्यर्थः. रणरणः रणाच्छब्दाज्जायमानो रणः शब्दो रणरणः प्रतिशब्दः रणोवारणः रणस्य उः लक्षण व्रणादिचिह्न येषा ते रणवः वीराः तान् वारयतीति रणोवारणो अभूत्. उकारस्त्विह लक्षणम् अनेन नृसिंहावतार उक्तो भवति. कः स.. येन अरं शीघ्र अरीणा समूहो आर अरिवृन्दं मिनोति हिनस्तीति आरमाः तेन आरमा अरिकुलनिहन्त्रा रमा लक्ष्मीर्विप्रेभ्यो विश्राणिता दत्ता. तया रमया रमते असौ रमा रमो विष्णुस्तस्मिन्रमन्ते ते रमारमरमा. ब्राह्मणास्तान् आरमयति आह्लादयति सः तथा आस बभूवेत्यर्थः अनेन क्षत्रियान्तकारिपरशुरामावतार उक्तो भवति. पु० क०. उदयोदय.. याति प्राप्नोतीति यः न य अयः अप्राप्त. उदयो येन तत् अयोदय भूधरादि. उत् उद्धृत अयोदय अप्राप्तोदय जलनिमग्न भूधरादि येसः तथा. अनेन आदिवराह उक्तो भवति. पु० क०. अदयदयः अदयेषु दयते स तथा क्रूरेष्वपि दयावानित्यर्थः. अनेन बौद्धावतार उक्तो भवति. पु० क०. दायोदयोदेदयः दायार्थं विभागार्थं उद्धृत अयो लोहमय शरा यैस्ते दायोदयाः धार्तराष्ट्राः तान्द्यति खण्डयतीति तथाविधोऽर्जुनः तस्मिन् दयते स तथा. अनेन कृष्णावतार उक्तो भवति. पु० क०. अभीरभीरभि. पराङ्गनाहरणादिभ्यः कृत्येभ्यो अभीरा निर्भयाः रावणादयस्तेभियै भयार्थं रभते रामसेन वर्तते स तथा अनेन रामावतार उक्तो भवति. पु० क०. अभीराभीरभीसारभी अभीरा. शूराः भीराः कातरा. तेष्वपि कोव्या लोभादिवशात् भिय सारयन्ति प्रयच्छन्ति ते दुष्टम्लेच्छास्तेभ्यः भीः यस्मात् स तथा. अनेन कल्क्यवतार उक्तो भवति.

(१) हे राजन् तव पायकगणा. सेवकलोका उत्सरङ्गकलितोरुकटारीभाजिराः उत्सरङ्गा अतिमुदित कलितोरुकटा सज्जितपृथुलकपोला ये अरीभाः शत्रुगजास्तेषा योऽसौ आजि सग्रामः त रान्ति ददतीति सन्तु उत पुनः भयंकरभाला. भ्रुकुटीभीषणललाटाः सन्तु. तैः पायकगणैः इलाव. पृथ्वीरक्षक. इलाविजितक दर्पस्त्वं अगोहर अगोमह यथा स्यात्तथैव गा पृथ्वी जय परदेशानात्मीयान्कुरु.

ष्ट्राकोटिविशङ्कटास्यकुहरः कुर्वन्सटामुत्कटामुत्कर्णः कुरुते क्रमं करिपतौ क्रूराकृतिः केसरी ॥ ३ ॥ उत्कर्णोऽयमकाण्डचण्डिमपटुः स्फारस्फुरत्केसरः क्रूराकारकरालवक्त्रविकटस्तब्धोर्ध्वलाङ्गूलभृत्। चित्रेणापि न शक्यतेऽभिलिखितुं सर्वाङ्गसंकोचनाच्चीत्कुर्वद्द्विरिकुञ्जकुञ्जरशिरःकुम्भस्थलस्थो हरिः ॥ ४ ॥ तरक्षुः ॥ लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्यामात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन्विक्रमेण। स्फूर्जद्धुंकारघोषः प्रतिदिशमखिलान्द्रावयन्नेष जन्तून्कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः ॥५॥ करिणः॥ अम्भोमुचां सलिलमुद्गमतां निशीथे तालीवनेषु निभृतं स्थिरकर्णतालाः। आकर्णयन्ति करिणोऽर्धनिमीलिताक्षा धारारवान्दशनकोटिनिषण्णहस्ताः ॥ ६ ॥ मृगः ॥ ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्। दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ ७ ॥ भल्लः ॥ नयनपथनिरोधाध्वाननिर्धूतमाला भ्रमदविरलरोमस्तोमबद्धान्धकारः। कृमिकवलनलोभोत्खातवल्मीकरन्ध्रोत्थितफणिफणघातैरुच्छलत्येष भल्लः ॥ ८ ॥ हयः ॥ यावच्छकलितो वायुरेकीभवितुमर्हति। तावदेव तुरंगोऽयमाजगाम जगाम च ॥ ९ ॥ मण्डले मण्डलाकारो रेखा वाजीमयी जवे। सव्यापसव्ये द्विमुखे नकुलाधिष्ठितो हयः ॥ १० ॥ पुरो नुन्नः पश्चाद्व्रजति विधृतश्चोच्छ्रिततनुः समुत्पत्योत्तानः पतति पथि लोकान्प्रविशति। हयः किंचिद्गच्छेद्यदि नयति पत्तिः क्वचिदहो कशाघाते तिष्ठत्यथ चरणघातेन खनति ॥ ११ ॥ आकर्षन्निव गां वसन्निव खुरौ पश्चार्धमुद्रन्निव स्वीकुर्वन्निव खं पिबन्निव दिशो वायून्सपुष्णन्निव। साङ्गारप्रकरां स्पृशन्निव भुवं छायाममृष्यन्निव प्रेङ्खच्चामरवीज्यमानवदनः श्रीमान्हयो धावति ॥ १२ ॥ पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चैरासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय। घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥ १३ ॥ कपिः ॥ यदर्कांशुक्रान्तस्फुरदरुणपुण्योदरधिया प्रविष्टो नासान्तः क्वणितमणिडिम्भः प्रकुरुते। कपिः स्थित्वा स्थित्वा तदिदमनुशृण्वन्विचकितो धुनोत्यास्यं रौति प्रचलति चलत्युच्छलति च ॥ १४ ॥ महोक्षः ॥ गर्जित्वा मेघधीरं प्रथममथ शनैर्मण्डलीकृत्य देहं शृङ्गाभ्यां भीषयन्तावभिमुखमवनीं दारयन्तौ खुराग्रैः। मन्दं मन्दं समेत्य स्थिरनिहितपदं दन्तघातौ सरोष युध्येते चालयन्तौ कुटिलितमसकृत्पुच्छमेतौ महोक्षौ ॥ १५ ॥ धेनुः ॥ आहत्याहत्य मूर्ध्ना द्रुतमनुपिबतः प्रस्तुतं मातुरूधः किंचित्कुब्जैकजानोरनवरतचलच्चारुपुच्छस्य धेनुः। उत्तीर्णं तर्णकस्य प्रियतनयतया दत्तहुंकारमुद्रा विस्रंसत्क्षीरधारालवशबलमुखस्याङ्गमातृप्ति लेढि ॥ १६ ॥ रासभः ॥ आघ्रायाघ्राय गन्धं विकटमुखपुटो दर्शयन्दन्तपङ्क्तिं धावत्युन्मुक्तनादो मुहुरपि च रसादंष्ट्रया

पृष्ठलग्नः । गर्दभ्याः पादघातद्विगुणितसुरतप्रीतिराकृष्टशिश्नो वेगादारुह्य मुह्यन्नवतरति खरः खण्डितेच्छश्चिरेण ॥ १७ ॥ अजः ॥ घ्रात्वा श्रोणीमजाया विततमभिमुखं वक्त्रसंकोचभङ्गं स्थित्वा सूर्यं निरीक्ष्य प्रविकसितसटो घट्टयन्क्ष्मां खुरेण । बोबोकारान्प्रकुर्वन्मणिशकलनिभं चालयन्नेत्रयुग्मं छागश्चाटूननेकांश्चतुर इव विटो मन्मथान्धः करोति ॥१८॥ मेषः ॥ पार्श्वास्फालावलेपाच्चटुलितचरणोल्लेखिताकाशदेशः संघट्टाटोपकोपप्रसरितरसनापल्लवालीढसृक्कः । किंचित्साचीकृतास्यः स्फुरदधरपुटः स्फारिताताम्रचक्षुर्घोणाघाताभिलाषादपसरति रुषं दर्शयन्नेष मेषः ॥ १९ ॥ मयूरः ॥ मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः । कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥ २० ॥ चातकः ॥ दम्भोलिस्फूर्जदम्भोधरविपुलतडिद्दम्भगम्भीरनादैरम्भःसंभारसंभावनकुतुकिकुलं चातकानां प्रनृत्यत् । ऊर्ध्वं विन्यस्तचञ्चूपुटमुपरि परिभ्राम्यदुत्पातवातैरम्भोदोन्मुक्तमम्भःकणमपि न चिरात्प्राप्य नम्रं मिथोऽभूत् ॥ २१ ॥ पारावतः ॥ कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः । पारावतः परावृत्य रिरंसुश्चुम्बति प्रियाम् ॥ २२ ॥ बकः ॥ नालेनेव स्थित्वा पादेनैकेन कुञ्चितग्रीवम् । जनयति कुमुदभ्रान्तिं वृद्धबको बालमत्स्यानाम् ॥ २३ ॥ स्थित्वा धैर्याद्दुपाम्भःसमजठरशिराश्चक्रमूर्तिर्मुहूर्तं धूर्तः संत्यक्ततीरः कतिचिदपि पदान्युच्चकैः कुञ्चिताङ्घ्रिः । पश्चाद्ग्रीवां प्रसार्य त्वरितगतिरपां मध्यमाविश्य चञ्च्वा चञ्चन्तीमूर्ध्वकण्ठः कथमपि शफरीं स्फारिताक्षो बकोऽत्ति ॥ २४ ॥ कुक्कुटः ॥ न्यञ्चच्चञ्चलचञ्चुचुम्बनचलच्चूडाग्रमुग्रंपतच्चक्राकारकरालकेसरसटास्फारस्फुरत्कन्धरम् । वारंवारमुदङ्घ्रिचञ्चलघनप्रभ्रश्यन्नखक्षुण्णयोर्दृष्टा कुक्कुटयोर्द्वयोः स्थितिरिरिति क्रूरक्रमं युध्यतोः ॥ २५ ॥ पक्षावुत्क्षिप्य धुन्वन्सकलतनुरुहान्भोगविस्तारितात्मा प्रागेवोड्डीननिद्रः स्फुरदरुणकरोद्भासितं खं निरीक्ष्य । प्रातः प्रोत्थाय नीडे स्थितचपलतनुर्घर्घरध्वानमुच्चैरुद्ग्रीवं पूर्वकायोन्नतविकटसटः कुक्कुटो रारटीति ॥ २६ ॥ कृकलासः ॥ ग्रीष्मादित्यकरप्रतप्तसिकतामध्योपविष्टः सुखं शेते गौरवरो मरुस्थलभुवि प्रोथं निधाय क्षितौ । गुञ्जज्जाहककण्टकाहतमरुद्भूतोत्पतद्धूलिभिश्छिन्नाङ्गः कृकलासकोऽपि निभृतं मार्तण्डमुद्वीक्षते ॥ २७ ॥ सर्पः ॥ आलोकत्रस्तनारीकृतसभयमहानादधावज्जनौघव्याप्तद्वारप्रदेशप्रचुरकलकलाकर्णनस्तब्धचक्षुः । काष्ठं दण्डं गृहाणेत्यतिमुखरजनैस्ताडितो लोष्टघातैर्भीतः सर्पो गृहस्थानधिगतविवरः कोणतः कोणमेति ॥ २८ ॥ पुलिन्दः ॥ वामस्कन्धनिषण्णशार्ङ्गकुटिलप्रान्तार्पिताधोमुखस्पन्दच्छोणितलम्बमानशशकान्वेणीस्खलच्चामरान् । ज्यातप्रोतकपोतपोतनिपनद्रक्ताक्ततूणीरकान्सोऽपश्यत्करिकुम्भभेदजनितास्कन्दान्पुलिन्दान्पुरः ॥ २९ ॥ पथिकः ॥ गायति हसति च नृत्यति हृदयेन धृतां प्रिया विचिन्तयति । समविषमं न च विन्दति गृहगमनसमुत्सुकः पथिकः ॥ ३० ॥ मातर्धर्मपरे दयां कुरु मयि श्रान्तेऽद्य वैदेशिके द्वारालिन्दककोणके सुनिभृतं यास्यामि

सुप्त्वा निशि । इत्युक्ते सहसा प्रचण्डगृहिणीवाक्येन निर्भर्त्सितः स्कन्धं न्यस्य पलालमुष्टिविभवः पान्थः पुनः प्रस्थितः ॥ ३१ ॥ भद्रं ते सदृशं यदध्वगशतैः कीर्तिस्तवालम्ब्यते स्थाने रूपमनुत्तमं सुकृतिना दानेन कर्णो जितः । इत्यालोक्य भृशं दृशा करुणया शीतातुरेण स्तुतः पान्थेनैकपलालमुष्टिरुचिना गर्वायते हौलिकः ॥ ३२ ॥ देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननैर्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि । उद्ग्रीवश्चरणार्धरुद्धवसुधः कृत्वाश्रुपूर्णे दृशौ तामाशां पथिकस्तथापि किमपि ध्यात्वा चिरं तिष्ठति ॥ ३३ ॥ **शूरः** ॥ खड्गहस्तोऽरिमालोक्य हर्षामर्षसमन्वितः । शूरः पुलकितो रक्तनेत्रो हसति जृम्भते ॥ ३४ ॥ **बालाः** ॥ धूलीधूसरतनवो राज्यस्थितिरचनकल्पितैकनृपाः । कृतमुखवाद्यविकाराः क्रीडन्ति सुनिर्भरं बालाः ॥ ३५ ॥ आयातो भवतः पितेति सहसा मातुर्निशम्योदितं धूलीधूसरितो विहाय शिशुभिः क्रीडारसान्प्रस्तुतान् । दूरात्स्मेरमुखः प्रसार्य ललितं बाहुद्वयं बालको धन्यस्यास्य पुरः समेति परया प्रीत्या रटन्घर्घरम् ॥ ३६ ॥ **कुमारः** ॥ अकूर्चारम्भोऽपि प्रतिचुबुकदेशं करतलं प्रतिज्ञायां कुर्वन्युवतिषु दृशं स्निग्धतरलम् । कुमारोऽहंकारात्परिषदि समानानगणयन्भुजौ वक्षः पश्यन्नववयसि कान्तिं वितनुते ॥ ३७ ॥ **नर्तकी** ॥ स्वेदक्लेदितकङ्कणां भुजलतां कृत्वा मृदङ्गाश्रयां चेटीहस्तसमर्पितैकचरणा मञ्जीरसंधित्सया । सा भूयः कुचकम्पसूचितरयं निःश्वासमामुञ्चती रङ्गस्थानमनङ्गसात्कृतवती तालावधौ तस्थुषी ॥ ३८ ॥ **लेखनकर्त्री** ॥ उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः । कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ ३९ ॥ यद्भ्रूलते तरलिते यदुदङ्गुलीकः पाणिः पुरो यदपि चक्षुरलब्धलक्ष्यम् । उन्मुद्रिताधरदलं च यदास्यमस्यास्तत्काव्यकर्मणि निषिक्तमवैमि चेतः ॥ ४० ॥ **कलमकण्डनीगीतयः** ॥ विलासमसृणोल्लसन्मुशललोलदोःकन्दलीपरस्परपरिस्खलद्वलयनिःस्वनोद्बन्धुराः । लसन्ति कलहुंकृतिप्रसभकम्पितोरुःस्थलत्रुटद्गमकसंकुलाः कलमकण्डनीगीतयः ॥ ४१ ॥

इति श्रीसुभाषितरत्नभाण्डागारे चतुर्थं प्रकरणं समाप्तम् ।

---

# प्रकरणम् ५।

## अन्योक्तिप्रकरणम्।

### सूर्यान्योक्तयः।

रवेरेवोदयः श्लाघ्यः कोऽन्येषामुदयग्रहः। न तमांसि न तेजांसि यस्मिन्नभ्युदिते सति ॥ १ ॥ खद्योतो[1] द्योतते तावद्यावन्नोदयते शशी। उदिते तु सहस्रांशौ[2] न खद्योतो न चन्द्रमाः ॥ २ ॥ तस्यैवाभ्युदयो भूयाद्भानोर्यस्योदये सति। विकासभाजो जायन्ते गुणिनः कमलाकराः ॥ ३ ॥ निमीलनाय पद्मानामुदयायाल्पतेजसाम्। तमसामवकाशाय व्रजत्यस्तमसौ रविः ॥ ४ ॥ करस्फोटोऽम्बरत्यागस्तेजोहानिः सरागता। वारुणीसंगतावस्था भानुनाप्यनुभूयते ॥ ५ ॥ अजस्रं लसत्पद्मिनीवृन्दसङ्गं मधूनि प्रकामं पिबन्तं मिलिन्दम्। रविर्मोचयत्यब्जकारागृहेभ्यो दयालुर्हि नो दुष्टवद्दोषदर्शी ॥ ६ ॥ एतावत्सरसिजकुड्मलस्य कृत्यं भित्त्वाम्भः सरसि विनिर्गमो बहिर्यत्। आमोदो विकसनमिन्दिरानिवासस्तत्सर्वं दिनकरकृत्यमामनन्ति ॥ ७ ॥ देवो हरिर्वहतु वक्षसि कौस्तुभं तन्मन्ये च काचन पुनर्द्युमणेः प्रतिष्ठा। यत्पादसंगतिसमर्पितसौरभाणि धत्ते स एव शिरसा सरसीरुहाणि ॥ ८ ॥ उद्यन्त्वमूनि सुबहूनि महामहांसि चन्द्रोऽप्यलं भुवनमण्डलमण्डनाय सूर्योदये न तदुदेति न चास्तमेति येनोदितेन दिनमस्तमितेन रात्रिः ॥ ९ ॥ दिक्श्रीः स्वमोहति जगज्जनरञ्जनादि सर्वं भविष्यति रवेरिव चन्द्रतोऽपि। किं त्वस्तगामिनि रवौ भविता न जाने राजीवजीवनविधौ कतमः प्रकारः ॥ १० ॥ अधिगमनमनेकास्तारका राजमानाः प्रतिगृहमपि दीपाः प्राप्नुवन्ति प्रतिष्ठाम्। दिशि दिशि विकसन्तः सन्ति खद्योतपाताः सवितरि उदितेऽस्मिन्कि नु लोकैरलोकि ॥ ११ ॥ गते तस्मिन्भानौ त्रिभुवनसमुन्मेषविरहव्यथां चन्द्रो नेष्यत्यनुचितमितो नास्ति किमपि। इदं चेतस्तापं जनयतितरामत्र यदमी प्रदीपाः संजातास्तिमिरहतिबद्धोद्धुरशिखाः ॥ १२ ॥ क्षपां क्षामीकृत्य प्रसभमुपहृत्याम्बु सरितां प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम्। क्व संप्रत्युष्णांशुर्गत इति तदन्वेषणपरास्तडिद्दीपालोकैर्दिशि दिशि चरन्तीह जलदाः ॥ १३ ॥ पातः पूष्णो भवति महते नोपतापाय यस्मात्कालेनास्तं क इह न गता यान्ति यास्यन्ति चान्ये। एतावत्तु व्यथयति यदालोकबाह्यैस्तमोभिस्तस्मिन्नेव प्रकृतिमहति व्योम्नि लब्धोऽवकाशः

१ ज्योतिरिङ्गण. २ सूर्ये. ३ किरणाः; (पक्षे) हस्ताः. ४ आकाशम्; (पक्षे) वस्त्रम्. ५ वरुणादिक्; (पक्षे) मद्यविशेषः. ६ रात्रिम्. ७ कृशां कृत्वा. ८ तडिदेव दीपस्तस्यालोकः प्रकाशस्तैः.

॥ १४ ॥ पततु नभसो गच्छत्वस्तं निमज्जतु वारिधौ व्रजतु वरुणागारद्वारं प्रभाभिरनावृतः । तदपि तरणिर्दत्वा पादं[1] शिरःसु महीभृतां[2] दलिततिमिरव्रातः प्रातः पुनः सकृदेष्यति ॥ १५ ॥ येनोन्मथ्य तमांस्यलङ्घनघनस्पर्धीनि सर्वं जगच्चक्षुष्मत्परमार्थतः कृतमिदं देवेन तिग्मत्विषा । तस्मिन्नस्तमिते विवस्वति कियान्क्रूरो जनो दुर्जनो यद्बध्नाति धृतिं शशाङ्कशकला लोके प्रदीपेऽथवा ॥ १६ ॥ यत्पादाः शिरसा न केन विधृताः पृथ्वीभृतां मध्यतस्तस्मिन्भास्वति[3] राहुणा कवलिते[4] लोकत्रयीचक्षुषि । खद्योतैः स्फुरितं तमोभिरुदितं ताराभिरुज्जृम्भितं घूकैरुत्थितमाः[5] किमत्र करवै किं किं न कैश्चेष्टितम् ॥ १७ ॥ पूर्वाह्णे प्रतिबोध्य[6] पङ्कजवनान्युत्सार्य नैशं[7] तमः कृत्वा चन्द्रमसं प्रकाशरहितं निस्तेजसं तेजसा । मध्याह्ने सरितां पयः प्रविततैरापीय दीप्तैः करैः सायाह्ने रविरस्तमेति विवशः किं नाम शोच्यं भवेत् ॥ १८ ॥ दूरं यान्तु निशाचराः शशिकराः क्लेशं लभन्तांतरामुद्योतं कलयन्तु हन्त न चिरं खद्योतका द्योतले । ध्वान्तं ध्वंसमुपैतु हंसनिवहः पद्माकरे शाम्यतु प्राचीपर्वतमौलिमण्डनमणिः सूर्यः समुज्जृम्भते ॥ १९ ॥

---

## चन्द्रान्योक्तयः ।

आलोकवन्तः[8] सन्त्येव भूयांसो[9] भास्करादयः । कलावानेव तु ग्रावद्रावकर्माणि[10] कर्मठः[11] ॥ १ ॥ दैवाद्यद्यपि तुल्योऽभूद्भूतेशस्य परिग्रहः । तथापि किं कपालानि[12] तुलां यान्ति कलानिधेः ॥ २ ॥ अहो नक्षत्रराजस्य साभिमानं विचेष्टितम् । परिक्षीणस्य वक्रत्वं संपूर्णस्य सुवृत्तता ॥ ३ ॥ व्यज्यमानकलङ्कस्य वृद्धौ सति कलानिधेः । आशास्महे वयं पूर्वां सर्वश्लाघ्यां कृशां दशाम् ॥ ४ ॥ क्षीणः क्षीणः समीपत्वं पूर्णः पूर्णोऽतिदूरताम् । उपैति मित्राद्यश्चन्द्रो[13] युक्तं तन्मलिनात्मनः[14] ॥ ५ ॥ निशाचरोऽपि दीनोऽपि सकलङ्कोऽपि चन्द्रमाः । चकोरीनयनद्वन्द्वमानन्दयति चन्द्रमाः ॥ ६ ॥ हरमुकुटे सुरतटिनीनिकटस्थितिलाभतो द्विजेन्द्रेण । अपि गरलं फणिफूत्कृतिरीक्षणतीक्ष्णाशुशुक्षणिः[15] क्षान्तः ॥ ७ ॥ निजकरनिकरसमृद्ध्या धवलय भुवनानि पार्वण शशाङ्क । सुचिरं हन्त न सहते हतविधिरिह सुस्थितं कमपि ॥ ८ ॥ यद्यपि शिरोऽधिरोहति रौद्रः क्रोधेन सिंहिकातनयः । त्यजति न शरणं यातं सागरसूनुर्मृगं तदपि ॥ ९ ॥ प्रोषितवति रजनिकरे बन्धुतया न खलु कैरवाण्येव । म्लायन्ति किंतु सहसा भुवनान्यपि तमसि मज्जन्ति ॥ १० ॥ शंकरशिरसि निवेशितपदेति मा गर्वमुद्वहेन्दुकले । फलमेतस्य भविष्यति तव चण्डीचरणरेणुमृजा ॥ ११ ॥ या महेशशिरसो विभूषणं या त्रिलोकजनलोचनोत्सवः । सेयमिन्दुकलिका दिनात्यये तापिता

---

१ किरणाः, (पक्षे) चरणा  २ शैलानाम्, (पक्षे) राज्ञाम्.  ३ सूर्ये.  ४ ग्रस्ते.  ५ दिवान्धैः.  ६ उन्निद्राणि कृत्वा.  ७ निशासंबन्धि.  ८ प्रकाशवन्त.  ९ बहव.  १० पाषाण.  ११ समर्थः.  १२ कपालास्थीनि.  १३ सूर्यात्; (पक्षे) स्निग्धात्.  १४ कलङ्किन..  १५ तृतीयनेत्रस्थितस्तीक्ष्णाग्निः.

कमिह नातितापयेत् ॥ १२ ॥ रञ्जिता न ककुभो निवेशिता नार्चिषो बत चकोरचञ्चुषु। कष्टमिन्दुरुदये निपीयते दारुणेन तमसा बलीयसा ॥ १३ ॥ किरति प्रकरं गवां प्रकर्षं सुमनः स्वच्छतरं विधौ कलानाम्। कृति चेत्कलयन्ति यत्प्रबोधं कति चेन्नेति स तत्स्वभाव एव ॥ १४ ॥ निधेः कलानामपि रीतिरेषा मर्माणि मे संस्पृशतीव भूयः। कुतो विशेषात्कुमुदेऽनुरागः कुतो विरागश्च कुशेशयेषु ॥ १५ ॥ निष्पीडितो यद्यपि दैवयोगान्निशाकरश्चापि [1]विधुंतुदेन। तथापि पीयूषविशेषवर्षी सुधाकरः कैरवकाननेषु[2] ॥ १६ ॥ वक्रोऽस्तु बाल्ये तदनु प्रवृद्धः कलङ्कवानस्तु जडोऽस्तु चन्द्रः। महेशमौलौ च पदं दधातु जायेत वन्द्यो विविधोपकारात् ॥ १७ ॥ तारागणाश्चन्द्रमसं भजन्ते न जातु नाथं[3] नलिनाकराणाम्। एतावता तस्य किमस्ति हानिर्ज्ञाता तयोरन्तरमेष लोकः ॥ १८ ॥ यस्योदयेनैव दिशां प्रसादस्तापापनोदोऽपि जगत्त्रयस्य। चकोरचञ्चूपुटपारणे तु चन्द्रस्य तस्यास्ति कियान्प्रयासः ॥ १९ ॥ प्रकुर्वता संगतिमिन्दुनाधुना किं किं च लब्धं जगदीश्वरेण वै। कलङ्कहानिः सुरसिन्धुसंगमः कलाक्षयित्वं च पदं तथोच्चकैः ॥ २० ॥ नयनमसि जनार्दनस्य शंभोर्मुकटमणिः सुदृशां त्वमादिदेवः। त्यजसि न मृगमात्रमेकमिन्दो चिरमिति येन कलङ्किनं वदन्ति ॥ २१ ॥ विरम तिमिर साहसा[4]दमुष्माद्यदि रविरस्तमितः स्वतस्ततः किम्। कलयसि[5] न पुरो महोर्मिधाराद्युतिनिधिरभ्युदयत्ययं शशाङ्कः ॥ २२ ॥ आस्ते विधुः परमनिर्वृत एव मौलौ शंभोरिति त्रिजगतीजनचित्तवृत्तिः। अन्तर्निगूढ[6]नयनानलदाहदुःखं जानाति कः परमृते बत शीतरश्मेः ॥ २३ ॥ एकैव सामृतमयी सुतरामनर्घ्या काप्यस्त्यसौ हिमकरस्य कला ययैव। आरोपितो गुणविदा परमेश्वरेण चूडामणौ न गणितोऽस्य कलङ्कदोषः ॥ २४ ॥ श्रेयान्विधोर्बहुलपक्षपरिक्षयोऽपि नो पूर्णतापि जलधेरिह वर्णनीया। यद्वारि न स्पृशति हन्त पृथग्जनोऽपि यस्यामृतैर्मखभुजोऽपि मुदं लभन्ते ॥ २५ ॥ मारस्य[7] मित्रमसि किं च सुधामयूख शंभावपि प्रणयितां प्रकटीकरोषि। विश्वासपात्रमसि यद्द्विषतोस्तयोरप्येतत्तव प्रकृतिशुद्धतनोश्चरित्रम् ॥ २६ ॥ रत्नाकरो जनयिता सहजश्च वर्गः किं कथ्यताममृतकौस्तुभपारिजाताः। किं तैरचिन्त्यमिह तत्पुनरन्यदेव तत्त्वान्तरं कुमुदबन्धुरसौ यदिन्दुः ॥ २७ ॥ नानन्दि कैरवमवर्धि न वाम्बुराशिरादीपि नाम्बरमहारि न वान्धकारः। धिग्दैवदुर्विलसितं यदसौ सुधांशुरभ्युद्यतश्च तमसा कवलीकृतश्च ॥ २८ ॥ चन्द्रं समाश्रयति नाम तिथीस्त्वनेकाः क्षीणस्तु बिम्बपरिपूर्णमपूरणाय। एवं पुनः सकलमण्डलपूर्णवर्णा सा पूर्णिमैव खलु पूरयितुं समर्था ॥ २९ ॥ दिशः कुमुदमञ्जिदुरं पिबन्ति ज्योत्स्नाकरम्भमुदरंभरयश्चकोराः। आः कीदृगत्रिमुनि-

१ राहुणा. २ कुमुदवनेषु. ३ सूर्यम्. ४ अयथाबलमारम्भात्. ५ पश्यसि. ६ गुप्तः. ७ मदनस्य. ८ प्रीतिम्

लोचनदूषिकायां पीयूषदीधितिरिरिति प्रथितोऽनुरागः ॥ ३० ॥ हिमकर परभागं भूषयिष्य-
सुमेरोर्व्रजसि यदि तदाहं न क्षमः संनिरोद्धुम् । इति तु बहुविधाभिः काकुभिः प्रार्थये
त्वां पुनरपि कुमुदानामित्यहार्यो विषादः ॥ ३१ ॥ कलास्तास्ताः सम्यग्वहसि यदसि त्वं द्वि-
जपतिर्द्युतिस्ताद्दृक्पूर्णा जनिरपि च रत्नाकरकुले । बहु ब्रूमः किं वा पुरहरशिरोमण्डनमसि
त्वदीयं तत्सर्वं शशधर कलङ्काद्विफलितम् ॥ ३२ ॥ पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सु-
मेरोः क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः । सोऽयं चन्द्रः पतति गगनादल्पशेषे
मयूखे दूरारोहो भवति महतामप्यपभ्रंशहेतुः ॥ ३३ ॥ त्वं भोः शंभोर्निवससि शिरोदेश-
माश्रित्य नित्यं तत्त्वां याचे जगदुपकृतिव्यापृतिव्यग्रमिन्दो । यः सद्भावस्तव परिणतः कै-
रवे वा चकोरे स्पृश्यस्तेन प्रतिनिशमसौ चक्रवाको वराकः ॥ ३४ ॥ यज्जातोऽसि पयो-
निधौ हरजटाजूटे प्रसिद्धोऽसि यद्विश्वस्योदरदीपकोऽसि विधिना सृष्टोऽसि यच्चामरैः ।
भ्रातः शीतमयूख सर्वमधुना म्लानीकृतं तत्त्वया राजीवं यदपास्य कैरवकुलं नीतं विकासा-
स्पदम् ॥ ३५ ॥ पीयूषं वपुषोऽस्य हेतुरुदयो विश्वस्य नेत्रोत्सवः स्पृष्टं भानुकरैरिदं त्रिभुवनं
ज्योत्स्नाभरैः सिञ्चति । सर्वाशाप्रतिरोधकान्धतमसध्वंसाय बद्धोद्यमो धिग्धातारमिहापि
लक्ष्म लिखितुं यस्य प्रवृत्तं मनः ॥ ३६ ॥ उच्चैःस्थानकृतोदयैर्बहुविधैर्ज्योतिर्भिरुद्यत्प्रभैः
शुक्राद्यैः किममीभिरत्र वितथां प्रौढिं दधानैरपि । यावल्लोकतमोपहेन भवता लक्ष्मीर्न वि-
स्तार्यते तावच्चन्द्र कथं प्रयाति परमां वृद्धिं स रत्नाकरः ॥ ३७ ॥ जन्म क्षीरमहार्णवे
सहभुवः श्रीपारिजातादयो बिम्बं यस्य सुधामयं त्रिभुवनाधीशस्य मूर्ध्नि स्थितिः । इत्थं
सर्वचराचरप्रियकरे यस्योदये चेद्भवेत्संकोचः कमलस्य दुष्कृतिरसौ निन्द्यो न ताराधिपः
॥ ३८ ॥ इन्दुं निन्दतु नाम वाथ नलिनीं निन्दन्तु चक्राह्वया नैवानेन सुधाकरस्य सुषमा
हानिर्न वा दुर्यशः । एतेनैव कृतार्थतास्य जनता यन्मोदमालम्बते यज्ज्योत्स्नासु चिरं च-
कोरपरिपच्चञ्चूपुटं न्यस्यति ॥ ३९ ॥ लक्ष्मीकेलिगृहे कुशेशयदृशां पाणिद्युतिद्रोहिणि
श्यामासूक्तिसुधासहोदरमधुप्रस्यन्दसंदोहिनि। जीवातुस्त्रिदिवौकसां त्रिजगतामाप्यायनं चन्द्र-
मास्त्वं चेदम्बुरुहे न रज्यसि गुणश्लाघा बतास्तं गता ॥ ४० ॥ यातेयं रजनी सहैव भवता
भावी प्रकाशो दिशां सूर्येणापि चिरं चकोरनिचयैः स्थैर्यं क्वचित्कानने । उद्यद्दारुणचण्ड-
भानुजदवज्वाले जगन्मण्डले कस्मै चन्द्र समर्प्य कैरवकुलं व्योमान्तमालम्बसे ॥ ४१ ॥
नक्षत्राणि[1] बहूनि सन्ति परितः पूर्णोदयान्यम्बरे किं तैः शान्तिमुपैति दीर्घतिमिरं किं वाधि[2]-
रुज्जृम्भते । किं स्यादार्तचकोरपारणविधिभ्रांतः सुधादीधिते तन्नूनं भुवनैकतापशमनः
श्लाघ्यस्तवैवोदयः ॥ ४२ ॥ [3]ध्माता भालतलानलैः कवलिता कण्ठस्थहालाहलैरालीढाथ
[4]जटाटवीविलुठितैरा[5]शीविषाणां गणैः । छन्ना भस्मभिराहतास्थिपटलैः क्लि[6]न्नार्द्रचर्माम्बरैः

१ नक्षत्रै.. २ समुद्र.. ३ तापिता. ४ जटारुपा या अटवी अरण्य तस्मिन्विलुठितैः. ५ सर्पाणाम्.
६ क्लेदयुक्ता.

स्वीयां मुञ्चति माधुरीं हरशिरोरत्नं किमिन्दोः कला ॥ ४३ ॥ श्रीमाहेश्वरमौलिमण्डनमणिर्विश्वंभरं मोचनं त्वं रत्नाकरसंभवः किमपरं भूदेवदेवो भवान्। यद्दृग्ज्वालानलसङ्गदोषरभसाद्दन्दह्यसे नोग्रजा व्रातं तत्किमिहास्ति ते सुमनसश्चित्रं कलानां विधेः ॥ ४४ ॥ येनास्यभ्युदितेन चन्द्र गमितः क्लान्तिं रवौ तत्र ते युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः। क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मनागस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विस्फूर्जसे ॥ ४५ ॥ जन्म क्षीरनिधौ तथैव विपुलं पीयूषपूर्णं वपुः संतापार्तिहरं हरस्य शिरसि स्थानं सदा सुन्दरम्। तारानाथ निशामुखैकतिलकं ख्यातौषधीनां पतेश्चन्द्रत्वं वसनाचलस्य दशया संभावयामः कथम् ॥ ४६ ॥ इन्दुर्यन्नुदयाद्रिमूर्ध्नि न भवत्यद्यापि तन्मा स्म भून्नासीरेऽपि तमः समुच्चयममूरुन्मूलयन्ति त्विषः। अप्यक्ष्णोर्मुदमुद्वहन्ति कुमुदैरामोदयन्ते दिशः संप्रत्यूर्ध्वमसौ तु लाञ्छनमभिव्यक्तुं प्रकाशिष्यते ॥ ४७ ॥ पूर्णः पङ्कजलोचनामुखतुलामायासि कालक्रमात्क्षीणोऽपि क्षणदीपते पशुपतेरायासि भूषास्पदम्। एतस्मिन्नथ सैंहिकेयकवलक्लेशे मनाग्वर्तिनि त्वं साधारणवत्सुधाकर मुधा हा हन्त किं ताम्यसि ॥ ४८ ॥ भीतो वाडववासतो जलनिधौ शंभोः शिरः स्वीकृतं तत्र त्र्यम्बकमौलिवासुकिविषज्वालावलीत्रासितः। तस्माल्लोकमगाद्दिवं निपतितस्तत्रैव राहोर्मुखं प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥ ४९ ॥

## मेघान्योक्तयः।

प्रावृषेण्यस्य[1] मालिन्यं[2] दोषः कोऽभीष्टवर्षिणः। शारदाभ्रस्य शुभ्रत्वं वद कुत्रोपयुज्यते ॥ १ ॥ चातकः स्वानुमानेन जलं प्रार्थयतेऽम्बुदात्। स स्वौदार्यतया सर्वां प्लावयत्यम्बुना महीम् ॥ २ ॥ त्वयि वर्षति पर्जन्ये सर्वे पल्लविता द्रुमाः। अस्माकमर्कवृक्षाणां पूर्वपत्रेषु संशयः ॥ ३ ॥ आसन्यावन्ति याच्ञासु चातकाश्रूणि चाम्बुद। तावन्तोऽपि त्वया मेघ न मुक्ता वारिबिन्दवः ॥ ४ ॥ त्वमेव चातकाधार इति केषां न गोचरः। धिगम्भोधर तस्यापि कार्पण्योक्तिं प्रतीक्षसे ॥ ५ ॥ यदम्बुकणमादाय प्राप्तोऽसि जलदोन्नतिम्। तस्योपर्यम्बुधेर्गर्जन्मलिनस्योचितैव ते ॥ ६ ॥ नोपेक्षा न च दाक्षिण्यं न प्रीतिर्न च संगतिः। तथापि हरते तापं लोकानामुद्यतो घनः ॥ ७ ॥ समागमिष्यताम्भोद वेत्ति कः समयं तव। रौति नो यदि सारङ्गस्तदोच्चैः खे पुरःसरः ॥ ८ ॥ आश्रयः कियतामेष तरुः सन्मार्गमाश्रितः। पाथोद सिच्यतां काले नोपेक्ष्यो दूरभावतः ॥ ९ ॥ सन्ति कूपाः स्फुरद्रूपाः सागरः सरितस्तथा। तथापि चातकस्यैको फलदो जलदोदयः ॥ १० ॥ नदेभ्योऽपि ह्रदेभ्योऽपि पिबन्त्यन्ये सदा पयः। चातकस्य तु जीमूत भवानेवावलम्बनम् ॥ ११ ॥ एकस्य तस्य मन्ये धन्यामभ्युन्नतिं जलधरस्य। विश्वं सशैलकाननमाननमवलोकते यस्य

१ प्रावृट्कालिकस्य. २ मलिनताम्.

॥ १२ ॥ संप्रति न कल्पतरवो न सिद्धयो नापि देवता वरदाः । जलद त्वयि विश्राम्यति सृष्टिरियं भुवनलोकस्य ॥ १३ ॥ क्षणदृष्टनष्टतडितो निजसंपत्तेः पयोदनिवहेन। ज्ञातुं साधु यदुचितं भुवनेभ्यो वितरता वारि ॥ १४ ॥ जलधर जलभरनिकरैरपहर परितापमुद्धतं जगतः । नो चेदपसर दूरं हिमकरकरदर्शनं वितर ॥ १५ ॥ अयि जलद यदि न दास्यसि कतिचित्त्वं चातकाय जलकणिकाः । तदयमचिरेण भविता सलिलाञ्जलिदानयोग्यस्ते ॥ १६ ॥ नैताः स्वयमुपभोक्ष्यसि मोक्ष्यसि जलदोखरादिषु क्वापि । तत्किं तत्र न मुञ्चसि मुक्ता मुक्ता भवन्ति यत्रापः ॥ १७ ॥ वरतरुविघटनपटवः कटवः क्रन्दन्ति वायवो बहवः । तत्कुसुमबहुलपरिमलगुणविन्यासे कृती त्वेकः ॥ १८ ॥ धीरैर्ध्वनिभिरलं ते नीरद मे मासिको गर्भः । उन्मदवारणबुद्ध्या मध्ये जठरं समुच्छलति ॥ १९ ॥ अहमस्मि नीलकण्ठस्तुष्येऽहं शब्दमात्रेण । नाहं जलद कदाचिच्चातक इव जीवनं याचे ॥ २० ॥ जलदः समुद्रसेवामाचरति समग्रभुवनभरणाय । कुरुते तामपि हतमतिरात्मंभरिरनिशमौर्वाग्निः ॥ २१ ॥ सर्वं वनं तृणाल्या पिहितं पीताः सितांशुरविताराः । प्रध्वस्ताः पन्थानो मलिनेनोद्गम्य मेघेन ॥ २२ ॥ प्रावृषि शैलश्रेणीनितम्बमुज्झन्दिगन्तरं भ्रमसि । चपलान्तर घन किं तव वचनीयं पवनवश्योऽसि ॥ २३ ॥ यद्यपि सन्ति बहूनि सरांसि स्वादुसुशीतलसुरभिपयांसि । चातकपोतस्तदपि च तानि त्यक्त्वा याचति जलदजलानि ॥ २४ ॥ एतदत्र पथिकैकजीवितं पश्य शुष्यतितरां महत्सरः। धिङ्मुधाम्बुधर रुद्धसद्गतिर्वर्धिता किमिह तेऽद्रिवाहिनी ॥ २५ ॥ मुञ्च मुञ्च सलिलं दयानिधे नास्ति नास्ति समयो विलम्बने। अद्य चातककुले मृते पुनर्वारि वारिधर किं करिष्यसि ॥ २६ ॥ चातकस्य खलु चञ्चुसंपुटे नो पतन्ति किल वारिबिन्दवः । सागरीकृतमहीतलस्य किं दोष एव जलदस्य दीयते ॥ २७ ॥ ऊषरेषु विवरेषु चाम्भसां वीचयोऽपि भवता विनिर्मिताः। क्षेत्रसीम्नि निहितास्तु बिन्दवो वारिवाह भवतो न वो नयः ॥ २८ ॥ आपो विमुक्ताः क्वचिदाप एव क्वचिन्न किंचिद्गरलं क्वचिच्च । यस्मिन्विमुक्ताः प्रभवन्ति मुक्ताः पयोद तस्मिन्विमुखः कुतस्त्वम् ॥ २९ ॥ पानीयमानीय परिश्रमेण पाथोद पाथोनिधिमध्यतस्त्वम् । कल्पद्रुमे सीदति साभिलाषे महोषरे मुञ्चसि किंनिमित्तम् ॥ ३० ॥ पपात पाथःकणिका न भूमाववाप शान्तिं ककुभां न तापः। दृष्ट्वैव जीवातुरयं तडित्वान्कृषीवलानां मुदमुत्ततान ॥ ३१ ॥ प्रथितोऽसि यतस्ततः पृथिव्यामपि जीमूत जनस्य जीवनेन। विषयानपि गच्छतः किमेतान्ध्वनिभिर्भीषयसीह राजहंसान् ॥ ३२ ॥ गर्जितबधिरीकृतककुभा किमपि कृतं नैव घनेन । इयती चातकचञ्चुपुटी सापि भृता नैव जलेन ॥ ३३ ॥ गर्जसि मेघ न यच्छसि तोयं चातकपक्षी

---

१ गम्भीरशब्दैः २ मत्तहस्तिबुद्ध्या. ३ उड्डानं करोति. ४ मयूरः. ५ समुद्रसेवाम्. ६ मन्दमतिः. ७ स्वोदरपूरकः. ८ अहोरात्रम्. ९ वाडवाग्निः

व्याकुलितोऽहम् । दैवादिह यदि दक्षिणवातः क्व त्वं क्वाहं क्व च जलपातः ॥ ३४ ॥ वितर वारिद वारि दवातुरे[1] चिरपिपासितचातकपोतके । प्रचलिते मरुति[2] क्षणमन्यथा क्व च भवान्क्व पयः क्व च चातकः ॥ ३५ ॥ किसलयानि कुतः कुसुमानि वा क्व च फलानि तथा नववीरुधाम् । अयमकारणकारुणिको यदा न तरतीह पयांसि पयोधरः ॥ ३६ ॥ पयोद हे वारि ददासि वा न वा त्वदेकचित्तः पुनरेष याचकः । वरं महत्या म्रियते पिपासया तथापि नान्यस्य करोत्युपासनाम् ॥ ३७ ॥ दीनानामिह परिहाय शुष्कसस्यान्यौदार्थं प्रकटयतो महीधरेषु । औन्नत्यं परममवाप्य दुर्मदस्य ज्ञातोऽयं जलधर तावको विवेकः ॥ ३८ ॥ अन्योऽपि चन्दनतरोर्महनीयमूर्तेः सेकार्थमुत्सहति तद्गुणबद्धतृष्णः । शाखोटकस्य पुनरस्य महाशयोऽयमम्भोद एव शरणं यदि निर्गुणस्य ॥ ३९ ॥ आश्वास्य पर्वतकुलं तपनोष्मतप्तं दुर्दाववह्निविधुराणि च काननानि । नानानदीनदशतानि च पूरयित्वा रिक्तोऽसि यज्जलद सैव तवोत्तमा श्रीः ॥ ४० ॥ एतेषु हा तरुणमारुतधूयमानदावानलैः कवलितेषु महीरुहेषु । अम्भो न चेज्जलद मुञ्चसि मा विमुञ्च वज्रं पुनः क्षिपसि निर्दय कस्य हेतोः ॥ ४१ ॥ शोषं गते सरसि शैवलमञ्जरीणामन्तस्तिमिर्[3] लुठति तापविशीर्णदेहः । अत्रान्तरे यदि न वारिद वारिपूरैराप्लावयेस्तदनु किं मृतमण्डनेन ॥ ४२ ॥ शृण्वन्पुरः परुषगर्जितमस्य हन्त रे पान्थ विह्वलमना न मनागपि स्याः । विश्वार्तिवारणसमर्पितजीवनोऽयं नाकर्णितः किमु सखे भवताम्बुवाहः ॥ ४३ ॥ यत्तादृशेषु सरलेषु न पक्षपातो जातो बत स्फुटमसौ कुटजेषु रागः । विश्वैकजीवनपटोरपि वारिवाह दुर्वारवायुवशगस्य न तद्विचित्रम् ॥ ४४ ॥ यत्पल्लवः समभवत्कुसुमं यदासीत्तत्सर्वमस्य भवतः पयसः प्रसादः । यद्रूरुहे फलविधौ न ददासि वारि प्राचीनमम्बुद यशो मलिनीकरोषि ॥ ४५ ॥ नैवालवालवलयं भरितं द्रुमाणां नार्द्रीकृतापि बत चातकपोतचञ्चुः । दावानलाकुलतरुः शमितो न शीघ्रं भाराय वारिधर वारिपदं तवाभूत् ॥ ४६ ॥ के वा न सन्ति भुवि वारिरुहावतंसा हंसावलीवलयिनो जलसंनिवेशाः । किं चातकः फलमपेक्ष्य च वज्रपातां पौरंदरीं[4] कलयते नववारिधाराम् ॥४७॥ वातैर्विधूनय विभीषय भीमनादैः संचूर्णय त्वमथवा करकाभिघातैः । त्वद्वारिबिन्दुपरिपालितजीवितस्य नान्या गतिर्भवति वारिद चातकस्य ॥ ४८ ॥ व्याजस्तुतिस्तव पयोद मयोदितेयं यज्जीवनाय जगतस्तव जीवनानि । स्तोत्रं तु ते महदिदं घनधर्मराज साहाय्यमर्जयसि यत्पथिकान्निहत्य ॥ ४९ ॥ संपादिताः सपदि दर्दुरदीर्घनादा यत्कोकिलाकलरुतानि निराकृतानि । निष्पीतमम्बु लवणं न तु देव नद्याः पर्जन्य तेन भवता विहितो विवेकः ॥ ५० ॥ यस्योदये गुरुमनोरथमन्थरेण संचिन्तितं किमपि चेतसि चातकेन । आः कष्टमिष्टफलदानविधानहेतोरम्भोधरात्पतति संप्रति वज्रवह्निः[5] ॥ ५१ ॥ दैवदहनजटा-

१ दावानलपीडिते. २ वायौ. ३ मत्स्यविशेषः. ४ शोभया. ५ दावाग्निः.

लज्वालजालाहतानां परिगलितलतानां म्लायतां भूरुहाणाम्। अयि जलधर शैलश्रेणिशृङ्गेषु तोयं वितरसि बहु कोऽयं श्रीमदस्तावकीनः॥ ५२॥ नभसि निरवलम्बे सीदता दीर्घकालं त्वदभिमुखनिषण्णोत्तानचञ्चूपुटेन। जलधर जलधारा दूरतस्तावदास्तां ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन॥ ५३॥ घनतरघनवृन्दच्छादिते व्योम्नि सद्यः सवितुरथ हिमांशोः संकथैव व्यरंसीत्। दिवसरजनिभेदं मन्दवाताः शशंसुः कमलमुदितगन्धानाहरन्तः क्रमेण॥ ५४॥ अये हेलावेलातुलितकुलशैले जलनिधौ कुतो वारामोघं बत जलद मोघं वितरसि। समन्तादुत्तालज्वलदनलकीलाकवलनक्रमोपेतानेतानुपकुरु पयोभिर्विटपिनः॥ ५५॥ अमुं कालक्षेपं त्यज जलद गम्भीरमधुरैः किमेभिर्निर्घोषैः सृज झटिति झाङ्कारि सलिलम्। अये पश्यावस्थामकरुणसमीरव्यतिकरज्वलद्दावज्वालावलिर्जटिलमूर्तेर्विटपिनः॥ ५६॥ अकूपाराद्वारि प्रचुरतरमादाय जलदः स दानाध्यक्षोऽपि प्रकिरति जलं नाद्भुतमिदम्। स मेघो धन्यो यत्परिकिरति मुक्ताफलतया यदीयासौ कीर्तिर्नटति नृपनारीकुचतटे॥ ५७॥ तवैव प्रावीण्यं जलद जगदानन्दकरणं यदम्भःपालीराहरसि खलसत्त्वाज्जलनिधेः। निसर्गात्क्षारास्ता नयसि च कथंचिन्मधुरतामथासारैस्तासां युगपदुपकर्तासि जगतः॥५८॥ विलपति तथा सारङ्गोऽयं भवानयमुन्नतो जलमपि च ते संयोगोऽयं कथंचिदुपस्थितः। उपकुरु कुरु प्रह्वं चेतो न वेत्सि यदग्रतो जलधर पुनः क्व त्वं क्वायं क्व ते जलबिन्दवः॥५९॥ नीरं दूरं तदपि विरसं जंगमा नो लताद्यास्तस्मिन्दातर्यपि जलनिधौ को लभेताम्बुबिन्दुम्। दानाध्यक्षे त्वयि जलधर क्वापि कुत्रापि शैलाः शालावन्तोऽमृतनिभजलैस्तर्पिताः सर्व एते॥ ६०॥ तृष्या नद्यः कमलसरसीराजहंसावतंसाः पुण्यः खेतो हिमगिरिभुवस्त्वत्कृते येन मुक्ताः। सम्प्राप्तेऽस्मिञ्जलद दहनोच्चण्डदाहे निदाघे पर्जन्य स्वीकुरु तमधुना चातकं पातकं वा॥६१॥ शैलेयेषु शिलातलेषु च गिरेः शृङ्गेषु गर्तेषु च श्रीखण्डेषु विभीतकेषु च तथा पूर्णेषु रिक्तेषु च। स्निग्धेन ध्वनिनाखिलेऽपि जगतीचक्रे समं वर्षतो वन्दे वारिद सार्वभौम भवतो विश्वोपकारि व्रतम्॥ ६२॥ नीहाराकरसारसागरसरित्कासारनीरश्रियं त्यक्त्वा तोयद चातकेन महती सेवा समालम्बिता। तस्यैतत्फलितं समुज्झसि शिलासंताडनं मस्तके गाढं गर्जसि वज्रमुज्झसि तडिल्लेखाभिरातर्जसि॥ ६३॥ आरामाभरणस्य पल्लवचयैरापीततिग्मत्विषः पाथोद प्रशमं नयागुरुतरोरेतस्य दावज्वरम्। ब्रूमस्त्वामुपकारकातरगतप्रायाः पयःसंपदो दग्धोऽप्येष तरुर्दिशः परिमलैरापूर्य निर्वास्यति॥६४॥ यावत्तिष्ठति चातकोऽयमसुभिः कण्ठस्थलस्थायिभिस्तावद्देहि पयः पयोद फलतु त्वद्वारि कल्पद्रुमः। नो चेदस्य तृषार्तपीडिततनोः प्राणैः प्रयाणे कृते कस्मै दास्यसि को ग्रहीष्यति पुनस्तापस्तु ते स्थास्यति॥ ६५॥ कूपे पानमधोमुखं भवति मे नद्यो वराक्यः

१ ग्लानि प्राप्नुवताम्. २ व्योमोत्थितैर्मेघगर्जितैः ३ शीघ्रम्. ४ व्याप्तदेहस. ५ वृक्षस्य. ६

स्त्रियः सामान्यं बकटिट्टिभैः सह सरस्येवं समालोकयन्। शुष्यत्तालुगलोऽपि कम्पिततनुः श्रुत्वा गभीरध्वनिं धैर्यादुद्धृतकन्धरो जलधर त्वां याचते चातकः ॥ ६६ ॥ मार्गो भूरि जलं मरुस्थलभुवि स्वप्नेऽपि नो लभ्यते तीव्रो वाति समीरणः क्वचिदपि च्छायाभृतो न द्रुमाः। अङ्गारप्रकरान्किरन्निव रविर्ग्रीष्मे तपत्यम्बरे तद्भोः पान्थहिताय पूरय धरां पाथोद पाथोभरैः ॥ ६७ ॥ भेकैः कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः पाठीनैः पृथुपङ्कपीठलुलितैर्यस्मिन्मुहुर्मूर्च्छितं। तस्मिञ्शुष्कसरस्यकालजलदेनागत्य तच्चेष्टितं यत्राकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते ॥६८॥ कालातिक्रमणं कुरुष्व ताडितां विस्फूर्जितैस्त्रासय स्फारैर्भीषणगर्जितैरतितरां कार्ष्ण्यं मुखे दर्शय। अस्यानन्यगतेः पयोद मनसो जिज्ञासया चातकस्याब्रेहि त्वमिहाखिलं तदपि न त्वत्तः परं याचते ॥ ६९ ॥ भूयो गर्जितमम्बुदे प्रकटिता विद्युत्खमापूरितं दूरावग्रह तिष्ठ तिष्ठ तदलं वृष्ट्या तवातःपरम्। निर्दग्धाखिलशालिहालिकवधूसंनद्धनेत्रैः परं नैराश्यादिह वर्षितव्यमधुना केदारपूरं पयः ॥ ७० ॥ गर्जन्नम्बु ददाति तच्च कणिकारूपेण यत्र क्वचिद्वर्षाकालमपेक्ष्य दानसमये कार्ष्ण्यं[1] विधत्ते मुखे। पश्चात्पाण्डुरतामुपैति लघुतामप्येति भूयस्ततः श्रीमद्राम नृपालशेखरविभो दाता कियान्वारिदः ॥ ७१ ॥ आसक्ताः प्रतिकोटरं विषधरा भानोः करा मूर्धनि ज्वालाजालकरालदावदहनः प्रत्यङ्गमालिङ्गति। सर्वानन्दनचारुचन्दनतरोरेतस्य जीवातवे रे जीमूत विमुञ्च वारि बहुशो युष्मद्यशो जृम्भताम् ॥ ७२ ॥ ते ते चातकपोतका वितृषिता दावाग्निमग्नं वनं संनिर्वापितमुष्णतापितमही निर्वापिता सर्वतः। कासाराः परिपूरिताः पृथुपयोधाराभिरम्भोधर त्वय्येवायमहो महोर्जितमहादानावदानक्रमः ॥ ७३ ॥ तापं लुम्पासि सर्वतो वितरसे मुक्ताफलं शुक्तिषु क्षेत्रं सिञ्चति किं च पल्लवयसि श्रीखण्डमुख्यान्द्रुमान्। क्षारं क्षारमिदं जलं जलनिधेरादाय जीमूत हे विश्वं जीवयसि ब्रवीतु जगति प्रौढोऽपि कस्ते गुणान् ॥ ७४ ॥ संतापं जगतो विलुम्पासि धरां धाराभिरासिञ्चसि क्षेत्राण्यङ्कुरयस्यमून्मुकुलयस्याह्नाय नीपद्रुमान्। सारङ्गस्य नभोनिवेशितदृशश्चञ्चुपुटीपूरणे वैमुख्यं वहसि त्वमम्बुद यदि प्रत्येतु को नाम तत् ॥ ७५ ॥ कूपाम्भासि पिबन्तु कूपरासिका वापीषु वापीजुषो नादेयाश्च पतत्रिणोऽपि मुदितामास्वादयन्तामपः। सारङ्गस्य नभोनिवेशितदृशः किं तेन यावन्महीमम्भोभिः स्नपयन्नसावुदयते न प्रावृषेण्यो घनः ॥ ७६ ॥ कर्तव्यो हृदि वर्तते यदि तरोरस्योपकारस्तदा मा कालं गमयाम्बुवाह समये सिञ्चैनमम्भोभरैः। शीर्णे पुष्पफले दले विगलिते मूले गते शुष्कतां कस्मै किं हितमाचरिष्यासि परीतापस्तु ते स्थास्यति ॥ ७७ ॥ नो चिन्तामणिभिर्न कल्पतरुभिर्नो कामधेन्वादिभिर्नो देवैश्च परोपकारनिरतैः स्थूलैर्न सूक्ष्मैरपि। अम्भोदेह निरन्तरं जलभरैस्तामुर्वरां सिञ्चता धौरेयेण धुरं त्वयाद्य व-

१ कृष्णताम्.

हृता मन्ये जगज्जीवितम् ॥ ७८ ॥ हे पाथोद यथोन्नतं हिमवता दिग्व्यावृता सर्वतो मन्ये धीर तथा करिष्यसि खलु क्षीराब्धितुल्यं सरः। किं त्वेष क्षमते न हि क्षणमपि ग्रीष्मोष्मणा व्याकुलः पाठीनादिगणस्त्वदेकशरणस्तद्वर्ष तावत्कियत् ॥ ७९ ॥ नान्धौ स्कन्धनतिः सरःसु न मनो वापीषु नापीहितं कर्णेऽप्यर्णवसंकथा न च कृता नाद्यापि नद्यां मनः। सारङ्गेण समुत्तरङ्गरसनादण्डेन चण्डातपक्लान्तेनापि निरन्तरं जलद हे त्वय्येव दत्तं मनः ॥ ८० ॥ निःपद्मं शिशिरेण धीवरगणैर्निर्मत्स्यनिःकूर्मकं व्याधैर्निर्विहगं निरम्बु रविणा निर्नालकं दन्तिभिः। निःशालूकमकारि शूकरगणैर्नामैकमात्रं सरो हे जीमूत परोपकारक पयोदानेन मां पूरय ॥ ८१ ॥ कासारेषु सरित्सु सिन्धुषु तथा नीचेषु नीरग्रहं धिक्तत्रापि शिरोनतिः किमपरं हेयं भवेन्मानिनाम्। इत्यालोच्य निमुच्य चातकयुवा तेषु स्पृहामादरादुद्ग्रीवस्तव वारिवाह कुरुते धाराधरालोकनम् ॥ ८२ ॥ रे धाराधर धीरनीरनिकरैरेषा रसा नीरसा शेषा पूषकरोत्करैरतिखरैरापूरि भूरि त्वया। एकान्तेन भवन्तमन्तरगतं स्वान्तेन संचिन्तयन्नाश्चर्यं परिपीडितोऽभिरमते यच्चातकस्तृष्णया ॥ ८३ ॥ आरामाधिपतिर्विवेकविकलो नूनं रसा नीरसा वात्याभिः परुषीकृता दश दिशश्चण्डातपो दुःसहः। एवं धन्वनि चम्पकस्य सकले संहारहेतावपि त्वं सिञ्चन्नमृतेन तोयद कुतोऽप्याविष्कृतो वेधसा ॥ ८४ ॥ ग्रीष्मे ग्रीष्मतरैः करैर्दिनकृता दग्धोऽपि यच्चातकस्त्वां ध्यायन्घन वासरान्कथमपि द्राघीयसो नीतवान्। दैवाल्लोचनगोचरेण भवता तस्मिन्निदानीं यदि स्वीचक्रे करकानिपातनकृपा तत्कं प्रति ब्रूमहे ॥ ८५ ॥ स क्षारो जलधिः सरांसि वितरन्त्यभ्यागतेभ्योऽमितं गृह्यन्ते सरितः श्रमेण परितोऽप्याधारबन्धं बलात्। प्राप्यं कूपकतः कथंचन किमप्यारोप्य कण्ठे पदं तत्त्वां त्यागिनमेकमेव भगवन्पर्जन्य मन्यामहे ॥८६॥ अन्ये ते विहगाः पयोद परितो धावन्ति तृष्णातुरा वापीकूपतडागसिन्धुसरसीतोयेषु मज्जन्ति च। मामद्यापि न वेत्सि चातकशिशुं यः शुष्ककण्ठोऽपि सन्नान्यं याचति नोपसर्पति न च प्रत्तौति न ध्यायति ॥८७॥ हर्षं वर्षन्विधत्से चिरसमयतृषाशुष्यतां चातकानां भूमेस्तापोपशान्तिं वितरसि तरसा लोकशोकं धुनोषि। अम्भोदैतत्तवैकं परममनुचितं यत्पिधत्से सुधांशुं वाचामीशं कविं वा बुधमपि वहसि प्रेम खद्योतवर्गे ॥ ८८ ॥

---

## वाय्वन्योक्तयः।

वायुरेव महाभूतं वदन्तु निखिला जनाः। आयुरेवैष भूतानामिति मन्यामहे वयम्॥१॥ लता पुष्पवती स्पृष्ट्वा सुस्नातश्च महार्णवे। पुनस्तत्स्पर्शभीत्येव वायुर्वाति शनैः शनैः ॥२॥ अलिपटलैरनुयाता स्वहृदयहृद्यज्वरं विलुम्पन्तीम्। मृगमदपरिमललहरीं समीर किं पाम-

१ इतीति शेषः. महाभूतमिति. २ वायुरित्यत्र वाशब्दस्यैवकारार्थत्वादेष भूतानामायुरेवेति भावः.

रेषु रे किरसि ॥ ३ ॥ परमो मरुत्सखाग्नेस्तेजोवृद्धिं तनोतु तं जेतुम् । दीपं हरति तदस्य ज्ञातं प्रतिपत्तिनिर्वहणम् ॥ ४ ॥ प्राथमिकी घनवृष्टिः प्राप्ता शिखिनो निदाघतप्तस्य । आकस्मिकेन सा पुनरपनीता क्वापि पवनेन ॥ ५ ॥ चिरतरुविघटनपटवः कटवश्चञ्चन्ति वायवो बहवः । तत्कुसुमबहलपरिमलगुणविन्यासे कृती त्वेकः ॥ ६ ॥ गन्धवाह गहनानि गाहसे गन्धजातमिह संचिनोषि च । नैपुणच्युतिरियं तु तावकी यत्र तत्र सदसद्विवेचनम् ॥ ७ ॥ अहह चण्डसमीरण दारुणं किमिदमाचरितं चरितं त्वया । यदिह चातकचञ्चुपुटोदरे पतति वारि तदेव निवारितम् ॥ ८ ॥ अनिल निखिलविश्वं प्राणिति त्वत्प्रयुक्तं सपदि च विनिमीलत्याकुलं त्वद्वियोगात् । वपुरसि परमेशस्योचितं नोचितं ते सुरभिमसुरभि वा यत्समं स्वीकरोषि ॥ ९ ॥ राजीविनीविपिनसौरभसारगन्धिर्योऽभूद्वसन्तदिवसेषु जनैकबन्धुः । रथ्यारजांसि विकिरन्विरुजन्नगेन्द्रानुन्मत्तवद्भ्रमति पश्यत सोऽद्य वायुः ॥ १० ॥ ये जात्या लघवः सदैव गणनां याता न ये कुत्रचित्पद्भ्यामेव विमर्दिताः प्रतिदिनं भूमौ विलीनाश्चिरम् । उत्क्षिप्ताश्चपलाशयेन मरुता पश्यान्तरिक्षे सखे तुङ्गानामुपरि स्थितिं क्षितिभृतां कुर्वन्त्यमी पांसवः ॥ ११ ॥ हंहो दग्धसमीर सर्पति भवत्यस्मिन्वने शाखिनां शाखाघर्षणजः स कोऽपि सुचिरं जज्वाल दावानलः । येनादाहि पलायमानहरिणं भस्मीभवद्भूरुहं शुष्यन्निर्झरमुत्पतत्खगकुलं चेष्टद्भुजगं वनम् ॥ १२ ॥ हंहो धीर समीर हन्त जननं ते चन्दनक्ष्माभृतो दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः । प्रत्यङ्गं दहतीह मे त्वमपि चेदुद्दामदावाग्निवन्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः ॥ १३ ॥ हेमाम्भोरुहपत्तने परिमलस्तेनो वसन्तानिलस्तत्रत्यैरिव यामिकैर्मधुकरैरारब्धकोलाहलः । निर्यातस्त्वरया व्रजन्निपतितः श्रीखण्डपङ्कद्रवैर्लिप्ते केरलकामिनीकुचतटे खञ्जः शनैर्गच्छति ॥ १४ ॥ कोऽयं भ्रान्तिप्रकारस्तव पवन पदं लोकपादाहतानां तेजस्विव्रातसेव्ये नभसि नयसि यत्पांशुपूरं प्रतिष्ठाम् । अस्मिन्नुत्थाप्यमाने जननयनपथोपद्रवस्तावदास्तां केनोपायेन सह्यो वपुषि कलुषतादोष एषस्तवैव ॥ १५ ॥

## पर्वतान्योक्तयः ।

नाधन्यानां निवासं विदधति गिरयः शेखरीभूतचन्द्राः शृङ्गैर्ज्योत्स्नाप्रवाहं द्रुतमिव तुहिनं दिङ्मुखेषु क्षिपन्तः । येषामुच्चैस्तरूणामविहतगतिना वायुना कम्पितानामाकाशे विप्रकीर्णः कुसुमचय इवाभाति ताराग्रहौघः ॥ १ ॥ हिमाचलः ॥ तरुकुलसुषमापहरां जनयन्तीं जगति जीवजातार्तिम् । केन गुणेन भवानीतात हिमानीमिमां वहसि ॥ २ ॥ विन्ध्यमन्दरसुमेरुभूभृतां यत्पतिस्तुहिनपर्वतोऽभवत् । ईश्वरश्वशुरताप्रभावतस्तद्ध्रुवं जगति जृम्भते यशः ॥ ३ ॥ क्षीणो यस्य हिरण्मयो मणिमयः प्राकारशिल्पोच्चयः कुञ्जाः कल्पलतामयाः

१ द्वारपाले.

सुरधुनीधारामयो निर्झरः। किं चेन्द्रादिसमस्तदिक्पतिपुरी मज्जन्ति यत्पल्लवाः शैलाः सोऽपि गिरिर्वियं च गिरयस्त्वय्येव मे का मतिः ॥४॥ मेरुः ॥ ये संतोषसुखप्रबोधमनसस्तेषामभिन्ना मुदो येऽप्यन्ये धनलोभसंकुलधियस्तेषां तु दूरे नृणाम्। इत्थं कस्य कृते कृतः स विधिना तादृक्पदं संपदां स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ ५ ॥ विन्ध्यः ॥ आचक्ष्महे तव किमद्यतनीमवस्थां तस्याद्य विन्ध्यशिखरस्य मनोहरस्य। यत्रैव सप्तमुनयस्तपसा निषेदुः सोऽयं विलासवसतिः पिशिताशनानाम्[1] ॥ ६ ॥ मलयः ॥ किं तेन हेमगिरिणा[2] रजताद्रिणा[3] वा यत्राश्रिता हि तरवस्तरवस्त एव। मन्यामहे मलयमेव यदाश्रयेण शाखोटनिम्बकुटजा अपि चन्दनानि ॥ ७ ॥ विद्योतन्ते कति न गिरयस्तेषु किं नोदयन्ते शाखावन्तः खदिरबदरीशालशाखोटकाद्याः। धन्यस्तावन्मलयशिखरी यत्र जातास्त एव स्वैरामोदैस्त्रिभुवनमथ प्रीणयन्तः स्फुरन्ति ॥ ८ ॥ मन्दरः ॥ मुरारातिर्लक्ष्मीं त्रिपुरविजयी शीतकिरणं करीन्द्रं पौलोमीपतिरपि च लेभे जलनिधेः। त्वया किंवा लब्धं कथय मथतो मन्दरगिरे शरण्यः शैलानां यदयमदयद्रत्ननिलयः ॥ ९ ॥ मैनाकः ॥ शक्रादरक्षि यदि पक्षयुगं तथापि मैनाक सन्ति तव नेह गतागतानि। निःसत्वता[4] च निरपत्रपता[5] च किंतु पाथोनिधौ निवसता भवतार्जितात्र ॥ १० ॥ वरं पक्षच्छेदः समदमघवन्मुक्तकुलिशप्रहारैरुद्गच्छद्बहलदहनोद्गारगुरुभिः। तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे न चासौ संपातः पयसि पयसां पत्युरुचितः ॥ ११ ॥ लोकालोकः ॥ एकस्यायमुदेति मूर्धनि गिरेरन्यस्य चैव क्रमादस्तं याति कलानिधिस्तदुभयोरस्तः प्रशस्तोऽचलः। को नामोदयितं करोति न शिरोमाणिक्यमस्त पुनर्यातं यः कुरुते भवानिव स दुःप्रापोऽस्ति पृथ्वीतले ॥ १२ ॥ रोहणः ॥ रोहणाचलशैलेषु कस्तुला तुलयेत्तव। यस्य पाषाणखण्डानि मण्डनानि महीभृताम् ॥ १३ ॥ रत्नानां न किमालयो जलनिधिः किं न स्थिरा मेदिनी किं न व्योम महत्पदं सुकृतिनां किं नाम नैवोन्नतम्। हंहो रोहण किं न याचकचमूर्निःसंकटं काङ्क्षति क्षान्तिस्वीकरणेन गोत्रतिलकस्त्रैलोक्यवन्द्यो भवान् ॥ १४ ॥ यामस्ते शिवमस्तु रोहणगिरे मत्तः स्थितिः प्रच्युता वर्तिष्यन्त इमे कथं कथमपि स्वप्नेऽपि मैवं कृथाः। भ्रातस्ते मणयो वयं यदि भवन्नामप्रसिद्धास्ततः किं शृङ्गारपरायणाः क्षितिभुजो नाङ्गीकरिष्यन्ति नः ॥ १५ ॥ (पर्वतदरी) ॥ यस्यां स केसरियुवा पदमाबबन्ध गन्धद्विपेन्द्ररुधिरारुणिताङ्गणायाम्। तामद्य पर्वतदरीं धुतधूम्रलोमा गोमायुरेष वपुषा मलिनीकरोति ॥१६॥ (गिरिनिर्झरः) ॥ कल्लोलसंचलदगाधजलैरलोलैः कल्लोलिनीपरिवृढैः किमपेयतोयैः। जीयात्स जर्जरतनुर्गिरिनिर्झरोऽयं यद्विप्रुषिपि तृषिता वितृषीभवन्ति ॥ १७ ॥ यद्वैभवाय निजवारिणि वारि सिन्धोः

१ राक्षसानाम्. २ मेरुणा. ३ कलैसेन. ४ निर्बलत्वम्. ५ निर्लज्जत्वम्.

क्षारं विमिश्रयसि निर्झर तद्वृथैव । धिग्वैभवं तु तदभीतृषितास्तवैव नीराप हन्त मधुरा म-
करं किरन्ति ॥ १८ ॥

## समुद्रान्योक्तयः ।

नावज्ञा नाप्यवैदग्ध्यमुदधेर्महिमैव सः । यत्तीरपङ्कमग्नानि महारत्नानि शेरते ॥ १ ॥ य-
द्यपि स्वच्छभावेन दर्शयत्युदधिर्मणीन् । तथापि जानुदघ्नोऽयमिति चेतसि मा कृथाः ॥ २ ॥
रत्नैरापूरितस्यापि मदलेशोऽस्ति नाम्बुधेः । मुक्ताः कतिपयाः प्राप्य मातङ्गा मदविह्वलाः
॥ ३ ॥ अधः करोषि रत्नानि मूर्ध्ना धारयसे तृणम् । दोषस्तवैव जलधे रत्नं रत्नं तृणं
तृणम् ॥ ४ ॥ वातोल्लासितकल्लोल धिक्ते सागर गर्जितम् । यस्य तीरे तृषाक्रान्तः पान्थः
पृच्छति वापिकाम् ॥ ५ ॥ अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया । धनं दूरेऽस्तु वद-
नमपूरि क्षारवारिभिः ॥ ६ ॥ यद्यपि बद्धः शैलैर्यद्यपि गिरिमथनमुषितसर्वस्वः । तदपि
विभीतकभूधररक्षायां दीक्षितो जलधिः ॥ ७ ॥ कि खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा
ते । सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानाम् ॥ ८ ॥ मा कुरु गुरुतागर्वं
लघुरन्यो नास्ति सागर त्वत्तः । जलसंग्रहमन्यस्मात्त्वयि सति कुर्वन्ति पोतस्थाः ॥ ९ ॥
किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र । अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि
॥ १० ॥ लघुरयमाह न लोकः कामं गर्जन्तमपि पतिं पयसाम् । सर्वमलज्जाकरमिह
यत्कुर्वन्तीह परिपूर्णाः ॥ ११ ॥ तृषां धरायाः शमयत्यशेषां यः सोऽम्बुदो गर्जति गर्ज-
तूच्चैः । यस्त्वेष कस्यापि न हन्ति तृष्णां स किं वृथा गर्जति निस्त्रपोऽब्धिः ॥ १२ ॥
त्वमद्य सिन्धो जगदेकबन्धो रत्नानि दातुं विमुखोऽसि कस्मात् । किं वा सुतः कल्पमही-
रुहस्ते दानैः कृतार्थीकुरुते जगन्ति ॥ १३ ॥ अयि रोषमुरीकरोषि नो चेत्किमपि त्वां
प्रति वारिधे वदामः । जलदेन तवार्थिना विमुक्तान्यपि तोयानि महान्न हा जहासि
॥ १४ ॥ तोयानामधिपतिराकरो मणीनां शैलानामभयपदं महान्महद्भ्यः । अग्राह्यो
भवसि यदि त्वमेव तावत्को नु स्याज्जगति तदा जनावलम्बः ॥ १५ ॥ स्वस्त्यस्तु
विद्रुमवनाय नमो मणिभ्यः कल्याणिनी भवतु मौक्तिकशुक्तिमाला । प्राप्तं मया सक-
लमेव फलं पयोधे यद्दारुणैर्जलचरैर्न विदारितोऽस्मि ॥ १६ ॥ आदाय वारि परितः
सरितां मुखेभ्यः किं तावदर्जितमनेन दुरर्णवेन । क्षारीकृतं च वडवादहने हुतं च पाताल-
कुक्षिकुहरे विनिवेशितं च ॥ १७ ॥ निःपीतमीनतिमिराणि मनोहराणि रत्नानि सन्ति न
कियन्ति तवान्तिकेषु । एतस्य कौस्तुभमणेर्व्रजतः परंतु पाथोनिधे स्मरणमान्तरमावहेथाः

१ अवमान. २ अचतुरत्वम् ३ जानुप्रमाणः ४ वायुनोल्लासिता उत्पादिताः कल्लोला महोर्मयो यस्य. ५ गिरिमथनेन हृत सर्व स्व चतुर्दशरत्नात्मक धन यस्य. ६ विशेषेण भीतो यो भूधरो मैनाकस्तद्रक्षाया रक्षणे. इन्द्राद्भीतो मैनाको जलधिं प्रविष्ट इति प्रसिद्धिः. ७ नौकास्थिताः. नाविका इत्यर्थः.

॥ १८ ॥ कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनि मकरालय मावमंस्थाः। किं कौस्तुभेन विहितो भवतो न नाम याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥ १९ ॥ लज्जामहे वयमहो वचनेऽपि हन्त सांयात्रिकाः सलिलराशिममी विशन्ति । अंसाधिरोपिततदीयतटोपकण्ठकौपेयकाम्बुद्दतयो यदुदर्णितृष्णः ॥ २० ॥ चपलतरतरंगैर्दूरमुत्सारितोऽपि प्रथयति तव कीर्तिं दक्षिणावर्तशङ्खः। परिगणय पयोधे पद्मनाभार्घ्ययोग्यस्तव निकटनिषण्णैः क्षुल्लकैः श्लाघ्यता का ॥ २१ ॥ यद्वीचीभिः स्पृशसि गगनं यच्च पातालमूलं रत्नैरुद्यपियासि पयसा यत्पिधत्से धरित्रीम्। धिक्सर्वं तत्तव जलनिधे यद्विमुच्याश्रुधारास्तीरे नीरग्रहणरसिकैरध्वगैरुज्झितोऽसि ॥ २२ ॥ अयं वारामेको निलय इति रत्नाकर इति श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः। क एवं जानीते निजकरपुटीकोटरगतं क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ २३ ॥ अये वारां राशे कुलिशकरकोपप्रतिभयादयं पक्षप्रेम्णा गिरिवरसुतस्त्वामुपगतः। त्वदन्तर्वास्तव्यो यदि पुनरयं वाडवशिखी प्रदीप्तः प्रत्यङ्गं ग्लपयति ततः कोऽस्य शरणम् ॥ २४ ॥ इतः स्वपिति केशवः कुलमितस्तदीयद्विषामितश्च शरणार्थिनः शिखरिपत्रिणः शेरते। इतोऽपि वडवानलः सह समस्तसंवर्तकैरहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ २५ ॥ ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी मुक्तौघाः सिकताः प्रवाललतिकाः शैवालमम्भः सुधा। तीरे कल्पमहीरुहाः किमपरं नाम्नापि रत्नाकरो दूरे कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति ॥ २६ ॥ एतस्मादमृत सुरैः शतमुखेनोच्चैःश्रवाः सद्गुणः कृष्णेनाद्भुतविभ्रमैकवसतिर्लक्ष्मीः समासादिता। इत्यादि प्रचुराः पुरातनकथाः सर्वेभ्य एव श्रुता अस्माभिर्न च दृष्टमत्र जलधौ मिष्टं पयोऽपि क्वचित् ॥ २७ ॥ संख्येया न भवन्ति ते युगशतैर्गाम्भीर्यमुख्या गुणाः सत्य वारिनिधे तथापि तदिदं चित्तं विधत्ते व्यथाम्। स्वच्छन्देन तिमिंगिलान्निजकुलग्रासं मुहुः कुर्वतो यत्ते वारयितुं निजेऽपि विषये न स्वामिता विद्यते ॥ २८ ॥ कल्लोलैः स्थगयन्मुखानि ककुभामभ्रंलिहैरम्भसा क्षारेणापि दिवानिशं जलनिधे गर्जन्न विश्राम्यसि। एतत्ते यदि घोरनक्रनिलयं स्वादु व्यधास्यद्विधिः किं कर्तासि तदा न वेद्मि तरलैः स्वैरेव दुश्चेष्टितैः ॥ २९ ॥ द्यामारोहति वाञ्छति स्थगयितुं तेजोऽपि तेजास्विनामुच्चैर्गर्जति पूरयन्नपि महीमम्भोधिरम्भोधरः। कांश्चिद्वागुपजीव्य तोयचुलुकान्सिन्धो भवत्संनिधौ पानीयप्रचयेषु सत्स्वपि न ते जातो विकारः क्वचित् ॥ ३० ॥ किं वाच्यो महिमा तवात्र जलधे यस्येन्द्रवज्राहतित्रस्तक्ष्माभृदमज्जदम्बुनिचये मज्जत्कलङ्काकृतिः। मैनाकोऽपि गभीरनीरविलसत्पाठीनपृष्ठोल्लसच्छैवालाङ्कुरकोटिकोटरकुटीकुड्यन्तरे निर्वृतः ॥ ३१ ॥

१ दक्षिणभागे आवर्तो यस्यैतादृश शङ्ख. २ जानीहि. ३ विष्णुपूजायोग्यम् ४ क्षुद्रशङ्खै ५ जलानाम्. ६ स्थानम्. ७ पिपासा, (पक्षे) अर्थाभिलाष. ८ अगस्त्य. ९ शिखरिण. पर्वतास्त एव पत्रिण. पक्षिणः. १० सवर्तकसज्ञकैर्मेघै

आस्तां तावदहो समुद्रमहिमा दूरेऽपि कर्णप्रियस्तीरे यस्य पिपासयैव मरणं प्राप्नोति शीघ्रं जनः । तस्मादम्बुनिधेर्वरं लघुसरः कूपोऽथवा वापिका यत्र स्वात्मकरद्वयेन सलिलं पेपीयते स्वेच्छया ॥ ३२ ॥ दैवैर्यद्यपि तक्रवद्विमथितः केदारवद्वानरैर्बद्धः सिद्धवदञ्जनाविजनुषा कुल्यावदुल्लङ्घितः । किं चासीच्चुलकेऽम्बुबिन्दुवदयं द्राक्कुम्भयोनेर्मुनेर्नीतारोपमिति प्रजा जलनिधेरासीदथापि श्लथा ॥ ३३ ॥ पीयूषेण सुराः श्रिया मुररिपुर्मर्यादया मेदिनी शक्रः कल्परुहा शशाङ्ककलया श्रीशंकरस्तोषितः । मैनाकादिनगा निजोदरगताः संस्थानतः स्थापितास्त्वच्चूलीकरणे घटोद्भवमुनिः केनापि नो वारितः ॥ ३४ ॥ हे हेलाजितबोधिसत्व वचसां किं विस्तरैस्तोयधे नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः । तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशोभारप्रोद्वहने करोषि कृपया साहाय्यकं यन्मरोः ॥ ३५ ॥ पीयूषेण कृतार्थिनो दिविषदो लक्ष्म्या हरिः प्रीणितश्चन्द्रार्धेन विभूषितः पशुपतिः कल्पद्रुमैर्वासवः । आत्मानं परिमन्थिनाप्युदधिना किं किं न तेषां कृतं तस्यागस्त्यमुनिप्रपीतपयसो नोच्चैः कृतैकाञ्जलिः ॥ ३६ ॥ लक्ष्म्या श्रीः पुरुषोत्तमो हिमरुचा गौरीप्रियोऽलंकृतो देवेन्द्रोऽपि विमानवारणहयस्त्रीरत्नकल्पद्रुमैः । पीयूषैरमितैस्त्वया दिविषदश्चान्ये कृतार्थीकृताः श्रीमन्वारिनिधे त्वदीयमहिमा नूनं न वाग्गोचरः ॥ ३७ ॥ हंहो वारिनिधे विधेः समुचितं येनासि रत्नाकरा रत्नां चेदयमन्यसे वद विभो नैतत्पदं विन्दति । पश्यालंकरणं पुरंदरपुरे चिन्तामणिः कौस्तुभ विष्णोर्वक्षसि मीनकेतनरिपोः शीर्षे कलानां निधिः ॥३८॥ पीत्वा गर्जन्त्यपस्ते दिशि दिशि जलदास्त्वं शरण्यो गिरीणां सुत्रामत्रासभाजां त्रिदशविटपिनां जन्मभूमिस्त्वमेव । गाम्भीर्यं तच्च तादृक्त्वयि सलिलनिधे किंतु संभावनीयं सर्वोपायेन मैत्रावरुणिमुनिकृपादृष्टयः काङ्क्षणीयाः ॥ ३९ ॥ **क्षीरसागरः** ॥ दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वती तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम् । स परमपरः क्षीरोदन्वान्यदीयमुदीर्यते मथितुरमृतं खेदच्छेदि प्रभोरनमोदनम् ॥ ४० ॥ साकं ग्रावगणैर्लुठन्ति मणयो बालार्कबिम्बोपमा नीरे नीरचरैः समं स भगवान्निद्राति नारायणः । एवं वीक्ष्य तवाविवेकमथ च प्रौढिं परामुन्नतेः किं निन्दाम्यथवा स्तवीमि कथय क्षीरार्णव त्वामहम् ॥ ४१ ॥ **अगस्त्यः** ॥ मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः । येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥ ४२ ॥ अखर्वपर्वगर्तेषु विच्छिन्नो यस्य वारिधिः । हास एव मुनेः पाणिरधस्ताद्विन्ध्यभूभृतः ॥ ४३ ॥ अल्पीयसैव पयसा यत्कुम्भः पूर्यते प्रसिद्धं तत् । ब्राह्मं तेजः पश्यत कुम्भोद्भूतः पपौ वार्धिम् ॥ ४४ ॥ गतोऽस्मि तीरं जलधेः पिपासया स चापि शुष्कश्चुलुकीकृतो मया । न रक्ष्यते दोषलवोऽपि तोयधेर्ममैव तत्कर्मफलं विजृम्भते ॥ ४५ ॥ कम्पन्ते गिरयः पुरंदरभिया मैनाकमुख्याः पुनः क्रन्द-

१ पाषाणसमूहैः. २ ब्राह्मणसामर्थ्यम्. ३ समुद्रम ४

न्यम्बुधराः स्फुरन्ति वडवावक्त्रोद्गता वह्नयः। भो कुम्भोद्भव मुच्यतां जलनिधिः स्वस्त्यस्तु ते सांप्रतं निद्रालुश्लथबाहुवल्लिकमलाश्लेषो हरिः सीदति ॥ ४६ ॥ रत्नानि ॥ मणिर्लुठति पादेषु काचः शिरसि धार्यते। यथैवास्ते तथैवास्तां काचः काचो मणिर्मणिः ॥ ४७ ॥ अप्याकरसमुत्पन्ना मणिजातिरसंस्कृता। जातरूपेण कल्याणि नहि संयोगमर्हति ॥४८॥ अनस्तमितसारस्य तेजसस्तद्विजृम्भितम्। येन पाषाणखण्डस्य मूल्यमल्पं वसुंधरा ॥४९॥ धन्योऽयं मणिरेकश्छिन्नो भिन्नश्च क्रकचनिर्घृष्टः। युक्तस्तेजोनिचयैर्धन्यो दुःखेऽपि योऽधिकाभासः ॥ ५० ॥ भ्रष्टं नृपतिकिरीटाद्भूमौ पतितं [1]तिरोहितं रजसा। [2]विधिविलसितेन रत्नं जनचरणविडम्बनां सहते ॥ ५१ ॥ वपुः[3]परीणाहगुणेन तेभ्यो यशस्विनः किं मणयो भवन्ति। तथापि चूडासु महीपतीनां त एव खेलन्ति न गण्डशैलाः ॥ ५२ ॥ सिन्धुस्तरंगैरुपकल्प्य फेनान्रत्नानि पङ्कैर्मलिनीकरोति। तथापि तान्येव महीपतीनां किरीटकोटीषु पदं लभन्ते ॥ ५३ ॥ विरम रत्न मुधा तरलायसे तव न कश्चिदिहास्ति परीक्षकः। विधिवशेन परिच्युतमाकरात्त्वमपि काचमणिं कृतमीश्वरैः ॥ ५४ ॥ अनमालित एव केवलं खनिगर्भे निधिरेष जीर्यतु। न तु सीदतु मूल्यहानितो वणिजालोकनगोचरीकृतः ॥ ५५ ॥ समुद्रेणान्तस्थस्तटभुवि तरंगैरकरुणैः समुत्क्षिप्तोऽस्मीति त्वमिह परितापं त्यज मणे। अवश्यं क्वापि त्वद्गुणपरिचयाकृष्टहृदयो नरेन्द्रस्त्वां कुर्यान्निजमुकुटकोटिप्रणयिनम् ॥ ५६ ॥ पयोधेः सर्वस्वं शिरसि धृतवान्यं नृपगणः पणो यस्य क्षोणी चेत्तुरुदधिसीमावधिरभूत्। स एवायं दैवाच्छबरवनितापाणिपतितो मणिर्मेषग्रीवाद्विगुणगुणबद्धो विहरति ॥ ५७ ॥ आघ्रातं [4]परिलीढमुग्रनखरैः क्षुण्णं च यच्चर्वितं क्षिप्तं यद्गत नीरसत्वकुपितेनेति व्यथां मा कृथाः। हे सद्रत्न तवैतदेव कुशलं यद्वानरेणाग्रहादन्तःसारविचारणव्यसनिना चूर्णीकृतं [5]नाश्मना ॥ ५८ ॥ उत्तंसेषु न नर्तितः क्षितिभुजां न प्रेक्षकैर्लक्षितः साकाङ्क्षं लुठितो न च स्तनतटे लीलावतीनां क्वचित्। कष्टं भोश्चिरमन्तरेण जलधेर्दैवाद्विशीर्णोऽभवत्खेलव्यालकुलाङ्घ्रिघर्षणपरिक्षीणप्रमाणो मणिः ॥ ५९ ॥ ये गृह्णन्ति हठात्तृणानि मणयो ये चाप्ययःखण्डकं ते दृष्टाः प्रतिधामदग्धमणयो विच्छिन्नसंख्याश्चिरम्। नो जाने किमभावतः किमथवा दैवादहो श्रूयते नामाप्यत्र तु तादृशस्य हि मणे रत्नानि गृह्णाति यः ॥ ६० ॥ यन्मुक्तामणयोऽम्बुधेरुदरतः क्षिप्ता महावीचिभिः पर्यन्तेषु लुठन्ति निर्मलरुचः स्पष्टाट्टहासा इव। तत्तस्यैव परीक्षया जलनिधेर्द्वीपान्तरालम्बिना रत्नाना तु परिग्रहव्यसनिनः सन्त्येव सायात्रिकाः ॥ ६१ ॥ यत्रानुल्लिखिताख्यमेव निखिलं निर्माणमेतद्विधेरुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा। याता. प्राणभृता मनोरथगतीरुल्लङ्घ्य यत्संपदस्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥ ६२ ॥ काचाः काञ्चनभूषिताः कति

१ छादितम्. २ दैवदुर्विपाकेन. ३ विशालता. ४ आस्वादितम्. ५ ...

न वा मुष्णन्ति रत्नश्रियं मौलौ वा कति नोद्वहन्त्यपधियस्तानेव रत्नभ्रमात्। अक्ष्णां ये पुनरुन्मृजन्ति तिमिरं यैर्नाम रत्नाकरः सिन्धुस्ते पृथगेव हन्त मणयस्तेष्वप्यभिज्ञाः पृथक् ॥ ६३ ॥ (वज्रमणिः) ॥ यस्य वज्रमणेर्भेदे भिद्यन्ते लोहसूचयः। करोति तत्र किं नाम नारी नखविलेखनम् ॥ ६४ ॥ (कौस्तुभमणिः) ॥ न श्वेतांशुवदन्धकारदलनादुद्योतिता रोदसी नाप्यैरावतवन्निरस्तदितिजत्रासः कृतो वासवः। नो चिन्तामणिरत्नवत्त्रिभुवने छिन्ना विपद्वार्थिनां भूत्वा तस्य हरेरुरःप्रणयिना किं कौस्तुभेनार्जितम् ॥ ६५ ॥ (सोमकान्त-सूर्यकान्तौ) ॥ सोमकान्तो मणिः स्वच्छः सूर्यकान्तस्तथा न किम्। उद्गारे तु विशेषोऽस्ति तयोरमृतवह्नयः ॥ ६६ ॥ (चन्द्रकान्तः) ॥ सुधाकरकरस्पर्शाद्बहिर्द्रवति सर्वतः। चन्द्रकान्तमणेस्तेन मृदुत्वं लोकविश्रुतम् ॥ ६७ ॥ (स्फटिकः) ॥ स्फटिकस्य गुणो योऽसौ स एवायाति दोषताम्। धत्ते स्वच्छतया छायां यतो मलवतामपि ॥ ६८ ॥ (मरकतः) ॥ त्यज निजगुणाभिमानं मरकत पतितोऽसि पामरे वाणिजि। काचमणेरपि मौल्यं लभसे यत्तदपि ते श्रेयः ॥ ६९ ॥ केनासीनः सुखमकरुणेनाकरादुद्धृतस्त्वं विक्रेतुं वा समभिलषितः केन वास्मिन्कुदेशे। यस्मिन्वित्तव्ययभरसहो ग्राहकस्तावदास्तां नास्ति भ्रातर्मरकतमणे त्वत्परीक्षाक्षमोऽपि ॥ ७० ॥ आसीत्पूर्वं विमलजलधौ मण्डनं भूपतीनां नारीणां च प्रवलमुकुटे काञ्चनेन प्रसङ्गात्। तत्त्रीबद्धः कथमिदमहो काचखण्डेन सार्धं भिल्लीकण्ठे मरकतमणे कामवस्थां गतोऽसि ॥ ७१ ॥ (माणिक्यम्) ॥ पौरस्त्यैर्दाक्षिणात्यैः स्फुरदुरुमतिभिर्मित्रपाश्चात्यसंघैरौदीच्यैर्यत्परीक्ष्य क्षितिपतिमुकुटे न्यासि माणिक्यमेकम्। यद्येतस्मिन्कथंचित्कथयति कृपणः कोऽपि मालिन्यमन्ये प्रेक्षावन्तस्तदा तं निरवधिजडतामन्दिरं संगिरन्ते ॥ ७२ ॥ काचः ॥ अज्ञतया प्रेम्णा वा चूडामणिमाकलय्य काचमणिम्। नृपतिर्वहेत शिरसा तेनासौ न ह्यनर्घ्यमणिः ॥ ७३ ॥ शङ्खः ॥ अन्तः कुटिलतां बिभ्रच्छङ्खः स खलु निष्ठुरः। हुंकरोति यदा ध्मातस्तदैव बहु गण्यते ॥ ७४ ॥ उच्चैरुच्चरतु चिरं झिल्ली वर्त्मनि तरुं समारुह्य। दिग्व्यापिनि शब्दगुणे शङ्खः संभावनाभूमिः ॥ ७५ ॥ कीटगृहं कुटिलोऽन्तः कठिनः क्षाराम्बुसंभवः शून्यः। शङ्खः श्रीपतिनिकटे केन गुणेन स्थितिं लेभे ॥ ७६ ॥ जलनिधौ जननं धवलं वपुर्मुररिपोरपि पाणितले स्थितिः। इति समस्तगुणान्वित शङ्ख भोः कुटिलता हृदये न निवारिता ॥ ७७ ॥ ध्वनिरतिमधुरः शुचित्वमुच्चैर्जनिरपि शङ्ख न दीनतस्तवाभूत्। अवगतमखिलं बहिः सितत्वं कुटिलतरं पुनरन्तरं न विद्मः ॥ ७८ ॥ क्व वाम्भोधौ जन्म क्व च वपुरिदं कुन्दधवलं क्व चावासस्थानं कृतमहह विष्णोः करतलम्। क्व नीचानामास्ये परिणतिरियं चुम्बनविधावि-

---

१ हीरकमणेः. २ नीचे. ३ भूषणम्. ४ काचमणिना. ५ सह. ६ अमूल्य.. ७ कौटिल्यम्. ८ कुन्दपुष्पवच्छुभ्रम्.

तीवायं शङ्खः करुणकरुणं रोदिति मुहुः ॥ ७९ ॥ तातः क्षीरनिधिः स्वसा जलधिजा भ्राता सुरेशद्रुमः सौजन्यं सह कौस्तुभेन शुचिता यस्य द्विजेशादपि । धिक्कर्माणि स एव कम्बुरधुना पाखण्डकान्ताकरे विश्रान्तः प्रतिवासरं प्रतिगृहं भैक्ष्येण कुक्षिंभरिः ॥ ८० ॥ ( पाञ्चजन्यः ) ॥ सर्वाशापरिपूरिहुंकृतिमदो जन्मापि दुग्धोदधेर्गोविन्दाननचुम्बि सुन्दरतरं पूर्णेन्दुबिम्बाद्वपुः । श्रीरेखाः सहजा गुणाः किमपरं भण्यन्त एते हि यत्कौटिल्यं हृदि पाञ्चजन्य भवतस्तेनातिलज्जामहे ॥ ८१ ॥ शङ्खाः सन्ति सहस्रशो जलनिधेर्वीचिच्छटाघट्टिताः पर्यन्तेषु लुठन्ति ये दलशतैः कल्माषितक्ष्मातलाः । एकः कोऽपि स पाञ्चजन्य उदभूदाश्चर्यधामा सतां यः संवर्तभरक्षमैर्मधुरिपोः श्वासानिलैः पूर्यते ॥ ८२ ॥

---

## नद्यन्योक्तयः ।

तटिनि चिराय विचारय विन्ध्यभुवस्तव पवित्रायाः । शुष्यन्त्या अपि युक्तं किं खलु रथ्योदकादानम् ॥ १ ॥ कतिपयदिवसस्थायी पूरो दूरोन्नतोऽपि भविता ते । तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥ २ ॥ यास्यति जलधरसमयस्तव च समृद्धिर्लघीयसी भविता । तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥ ३ ॥ कुरु गम्भीराशयतां कल्लोलैर्जनय लोकविभ्रान्तिम् । वीतपयोधरलक्ष्मीः कस्य न चरणैर्विलङ्घ्यासि ॥ ४ ॥ मलयस्य गिरेरपत्यमादौ तदनु भ्रातृमती पटीरवृक्षैः । किमु चित्रमपांनिधेः कलत्रं तटिनी काचन मौक्तिकानि सूते ॥ ५ ॥ नावर्ता न च तरलास्तरंगमाला नेदानीं जलनिधिमा रवाः करालाः । सैव त्वं तटिनि तटद्रुमान्विपात्य प्रौढानामपयशसामिवासि पात्रम् ॥ ६ ॥ छायां प्रकुर्वन्ति नमन्ति पुष्पैः फलानि यच्छन्ति तटद्रुमा ये । उन्मूल्य तानेव नदी प्रयाति तरंगिणा क्व प्रतिपन्नमस्ति ॥ ७ ॥ न वारयामो भवतीं विशन्ती वर्षानदि स्रोतसि जह्नुजायाः । न युक्तमेतत्तु पुरो यदस्यास्तरंगभङ्गान्प्रकटीकरोषि ॥ ८ ॥ गङ्गा ॥ यद्यपि दिशि दिशि सरितः परितः परिपूरिताम्भसः सन्ति । तदपि पुरंदरतरुणीसंगतिसुखदायिनी गङ्गा ॥ ९ ॥ स किमु सहेति सुधांशुः स्मरहरभालानलज्वालः । शिशिरैः शीकरलिप्तैः सिञ्चति सुरनिम्नगा नो चेत् ॥ १० ॥ शोणः ॥ आजन्मस्थितयो महीरुह इमे कामं समुन्मीलिताः कल्लोलाः क्षणभङ्गुराः पुनरमी नीताः परामुन्नतिम् । अन्तर्ग्राहपरिग्रहो बहिरपि भ्राम्यन्ति गन्धद्विपा भ्रातः शोण न सोऽस्ति यो न सहते त्वत्संपदा विह्वलान् ॥ ११ ॥

---

## तडागान्योक्तयः ।

आगन्तानामपूर्णाना पूर्णानामप्यगच्छताम् । यदध्वानि न संघटा घटानां तत्सरोवरम् ॥ १ ॥

---

१ [illegible] २ [illegible] ३ [illegible] दर्शनार्थं. ४ [illegible] ५ [illegible]
६ [illegible]

अयमवसरः सरस्ते सलिलैरुपकर्तुमर्थिनामनिशम्। इदमतिसुलभितमम्भो भवति पुरा जलधराभ्युदये ॥ २ ॥ कस्य तृषं न क्षपयति पिबति न कस्तव पयः प्रविश्यान्तः। यदि सन्मार्गसरोवर नक्रो न क्रोडमधिवसति ॥ ३ ॥ तानि तानि कमलानि तज्जलं तानि षट्पदकुलानि ते खगाः। सर्वमेकसमये तु विच्युतं पङ्कशेषमचिराद्भूत्सरः ॥ ४ ॥ अमरैर्गतं मधुकरैश्चलितं प्रकरैः प्रयातमपि पद्मदृशाम्। विभवे गते सकलमेव गतं ध्रुवमेकमश्चति यशः सरसः ॥ ५ ॥ आपेदिरेऽम्बरपथं परितः पतङ्गा भृङ्गा रसालमुकुलानि समाश्रयन्ति। संकोचमञ्चति सरस्त्वयि दीनदीनो मीनो नु हन्त कतमां गतिमभ्युपैतु ॥ ६ ॥ इयत्यां संपत्तावपि च सलिलानां त्वमधुना न तृष्णामार्तानां हरसि यदि कासार सहसा। निदाघे चण्डांशौ किरति परितोऽङ्गारनिकरं कृशीभूतः केषामहह परिहर्तासि खलु ताम् ॥ ७ ॥ विपन्नं पद्मिन्या द्रुतमनिमिषैर्यातमलिभिः खगैरप्युड्डीनं रथचरणहंसप्रभृतिभिः। दशा दीना लेभे सरसि विषमैर्ग्रीष्मदिवसैः कुलीनत्वादास्ते तटरुहतरुः कोऽपि तदपि ॥ ८ ॥ क्रौञ्चः क्रीडतु कूर्दतां च कुररः कङ्कः परिष्वज्यतां मद्गुर्माद्यतु सारसश्च रसतु प्रोड्डीयतां टिट्टिभः। भेकाः सन्तु बका वसन्तु चरतु स्वच्छन्दमाटिस्तटे हंहो पद्मसरः कुतः कतिपयैर्हंसैर्विना श्रीस्तव ॥ ९ ॥ एतस्मिन्मरुमण्डले परिचलत्कल्लोलकोलाहलक्रीडत्कङ्कमपङ्कमङ्कविलसन्नक्रशङ्कमत्स्यव्रजम्। केनेदं विकसत्कुशेशयकुटीकोणक्वणत्षट्पदं स्त्रैणप्रीणितपान्थमुज्ज्वलजलं चक्रे विशालं तमणे ॥ १० ॥ स्तोकाम्भःपरिवर्तिताङ्गशफरीग्रासार्थिनः सर्वतो लप्स्यन्ते बकटिट्टिभप्रभृतयस्तल्पेषु साधु स्थितम्। सद्यः शोषमुपागतेऽद्य सरसि श्रीपद्मपद्माकरे तत्पङ्कजिनीविलासरुचयो हंसाः क्व धास्यन्त्यमी ॥ ११ ॥ माद्यद्दिग्गजदानलिप्तकरटप्रक्षालनक्षोभिता व्योम्नः सीम्नि विचेरुरप्रतिहता यस्योर्मयो निर्मलाः। कष्टं भाग्यविपर्ययेण सरसः कल्पान्तरस्थायिनस्तस्याप्येकबकप्रचारकलुषं कालेन जातं जलम् ॥ १२ ॥ रे पद्माकर यावदस्ति भवतो मध्ये पयः पूरितं तावच्चक्रचकोरकङ्ककुररश्रेणीं समुल्लासय। पश्चात्त्वं समटङ्कोटचटुलत्रोटीपुटव्याहतित्रुट्यत्कर्कटकर्परव्यतिकरैर्निन्दास्पदं यास्यसि ॥ १३ ॥ याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां गन्ता कं प्रति पान्थसंततिरसौ संतापमालाकुला। एवं यस्य निरन्तराधिपटलैर्नित्यं वपुः क्षीयते धन्यं जीवनमस्य मार्गसरसो धिग्वारिधीनां जनुः ॥ १४ ॥ सोपानानि तिरोहितानि पदवी च्छन्ना तृणैर्नूतनैः कालुष्यं पयसां विलोक्य शनकैरुड्डीय हंसा गताः। माधुर्यं न मधुव्रतोन्नतगिरा पद्मानि मग्नानि के भेकानामिह गर्जितं परमहो दृष्ट्वैव नष्टं सरः ॥ १५ ॥ आपूर्येत पुनः स्फुरच्छफरिकासारोर्मिभिर्वारिभिर्भूयोऽपि प्रविजृम्भमाणनलिनं पश्येम तोयाशयम्। इत्याशा-

१ आकाशमार्गम्. २ प्राप्नुवति सति. ३ हे सर.. ४ ग्रीष्मे. ५ सूर्ये. ६ शब्द करोतु. ७ जलकाकः. ८ सूर्यः. ९ गमिष्यति. १० मनोव्यथापरंपराभि.. ११ मार्गे यत्सरस्तस्य.

ततन्तुबद्धहृदयो नक्तंदिवं दीनधीः शुष्यत्यातपशोषितस्य सरसस्तीरे जरत्सारसः ॥ १६ ॥ उद्दामाम्बुदवर्धमानशिखिनीकेकातिरकाकुले संप्राप्यं सलिलं स्थलेष्वपि सदा निस्तर्षे वर्षागमे। भीष्मग्रीष्मभटे परस्परभयादालोच्यमानं मुहुर्दीनं मीनकुलं न पालयासि चेत्कासार का सारता ॥ १७॥ सौवर्णः कमलाकरः शशिशिलासोपानबन्धक्रमो वारिक्षीरसहोदरं तटतरुश्रेणीसुखाः क्षोणयः। सर्वं ते रुचिरं सरोवर परं निन्द्यः कुतोऽयं विधिः कूटग्राहभयात्प्रयान्ति विमुखाः पान्था निदाघेऽप्यमी ॥ १८ ॥ उड्डीनं विहगैर्मृतं जलचरैः क्षमान्तर्गतं कच्छपैः पाठीनैः पृथुपङ्कपीठलुठनाद्यस्मिन्मुहुर्मूर्च्छितम्। तस्मिन्नेव सरस्यकालजलदो नागत्य तच्चेष्टितं येनाकुम्भनिमग्नवत्यकरिणां यूथैः पयः पीयते ॥ १९ ॥ हंसैर्लब्धप्रशंसैस्तरलितकमलस्त्वस्तरङ्गैस्तरंगैर्नीरैरन्तर्गभीरैश्चपलबककुलत्रासलीनैश्च मीनैः। पालीरूढद्रुमालीतलसुखशयितस्त्रीप्रणीतैश्च गीतैर्भ्रान्तिप्रक्रीडदातुः स्ववसलिलचलच्चक्रवाकस्तडागः ॥ २० ॥ **मानसम्** ॥ नो वा कियन्तः परितः स्फुरन्ति जलाशया निर्मलभूरितोयाः। सदावदात परमेक एव हंसस्य विश्रामपदं वदन्ति ॥ २१ ॥

---

## कूपान्योक्तयः।

हे कूप त्वं चिरं जीव स्वल्पतोये बहुव्ययः। गुणवद्रिक्तपात्राणि प्राप्नुवन्ति हि पूर्णताम् ॥ १ ॥ रे कूप जीवनागार यदि दातृत्वमिच्छसि। तदा त्वं गुणवत्पात्रमेकं वा संनिधौ कुरु ॥ २ ॥ अमुना मरुकूपेन के के नाम न वञ्चिताः। रुदत्पथिकनेत्राम्बुपिच्छिलप्रान्तभूमिना ॥ ३ ॥ संगुणैः सेवितोपान्तो विनतैः प्राप्तदर्शनः। नीचोऽपि कूपः सत्पात्रैर्जीवनार्थं समाश्रितः ॥ ४ ॥ न यत्र गुणवत्पात्रमेकमप्यस्ति संनिधौ। कस्तत्र भवतः पान्थ कूपेऽम्बुग्रहणादरः ॥ ५ ॥ यद्यपि बहुगुणगम्यं जीवनमेतस्य कूपमुख्यस्य। जयति तथापि विवेको दानं पात्रानुमानेन ॥ ६ ॥ नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः। अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीतासि ॥ ७ ॥ चित्रं न तद्यदयमम्बुधिरम्बुदौघासिन्धुप्रवाहपरिपूरणया महीयान्। त्वं त्वर्थिनामुपकरोषि यदल्पकूप निष्पीड्य कुक्षियुगलं हि महत्त्वमेतत् ॥ ८ ॥ दिनमवसितं विश्रान्ताः स्म त्वया मरुकूप हे परमुपकृतं शेषं वक्तुं वयं न पुनः क्षमाः। भवति सुकृतैरध्वन्यानामशेषजलो भवानियमपि घनच्छाया भूयात्तवोपतटं शमी ॥ ९ ॥ भीमश्यामप्रतनुवदन क्रूरपातालकुक्षिक्रोडप्रान्तोपहितविभवस्याथ किं ते ब्रवीमि। येन त्वत्तः समभिलषितं वाञ्छितं क्षुद्र कूप क्राम्यन्मूर्तेर्भवति सहसा कस्य नाधोमुखत्वम् ॥ १० ॥

---

१ रज्जुसहिते. २ उदकार्थम्. ३ अत्यन्तम् ४ निम्नः. ५ रसयुक्तं हृदयं यस्य. ६ भीमं भयंकर श्याम अन्धकारयुक्तत्वात् प्रतनु सङ्कुचितं मुखं यस्य

## मरुस्थलान्योक्तयः ।

मरौ नास्त्येव सलिलं कृच्छ्राद्यदपि लभ्यते । तत्कटु स्तोकमुष्णं च न करोति वितृष्णताम् ॥ १ ॥ सत्पादपान्विपुलपल्लवपुष्पपुञ्जसंपत्परीतवपुषः फलभारनम्रान् । यो मार्गसिञ्जितशकुन्तसमाश्रितोरुशाखान्मरौ मृगयते न ततोऽस्ति मुग्धः ॥ २ ॥ पायं पायं पिब पिब पयः सिञ्च सिञ्चाङ्गमङ्गं भूयो भूयः कुरु कुरु सखे मज्जनोन्मज्जनानि । एषोऽशेषश्रमशमपटुर्दुःखिताध्वन्यबन्धुः सिन्धुर्दूरीभवतु भवतो मारवः पान्थ पन्थाः ॥ ३ ॥ कल्याणं नः किमधिकमितो जीवनार्थं यतस्त्वं छित्त्वा वृक्षानहह दहसि भ्रातरङ्गारकार । नन्वेतास्मिन्नशनिपिशुनैरातपैराकुलानामध्वन्यानामशरण मरुप्रान्त रे कोऽभ्युपायः ॥ ४ ॥ किमसि विमनाः किं चोन्मादी क्षणादपि लक्ष्यसे पुनरपि पयः प्रेक्ष्यापूर्वा न काश्चन ताः क्रियाः । स्वयमजलदां जानानोऽपि प्रविश्य मरुस्थलीं शिशिरमधुरं वारि प्राप्तुं यदध्वग वाञ्छसि ॥ ५ ॥ भो भोः किं किमकाण्ड एव पतितस्त्वं पान्थ कान्या गतिस्तत्ताद्दक्तृषितस्य मे खलमतिः सोऽयं जलं गूहते । अस्थानोपगतामकालसुलभां तृष्णां प्रति क्रुध्यते त्रैलोक्यप्रथितप्रभावमहिमा मार्गोऽप्यसौ मारवः ॥ ६ ॥

## दावानलान्योक्तयः ।

हे दावानल[४] शैलाग्रवासिनः साधुशाखिनः । मुग्ध व्यर्थं त्वया दग्धाः प्रेरितेन प्रभञ्जनैः[१] ॥ १ ॥ यस्यां[२] महत्त्वभाजो भवन्ति गुणिनोऽमिता धनुर्दण्डाः । दहतस्तां वंशालिं[३] को वनवह्ने विवेकस्ते ॥ २ ॥ दवदहनादुत्पन्नो धूमो घनतामवाप्य वर्षैस्तम् । यच्छमयति तद्युक्तं सोऽपि च दवमेव निर्दहति ॥ ३ ॥ अभ्युन्नतेऽपि जलदे जगदेकसार साधारणप्रणयहारण हा यदेते । उल्लासलास्यललितं तरवो न यान्ति हे दावपावक स तावक एव दोषः ॥ ४ ॥ छायाफलानि मुकुलानि च यस्य विश्वमाह्लादयन्ति सहकारमहीरुहस्य । आमृश्य तस्य शिखया नवपल्लवानि मश्नासि रे दवहुताश हताश कष्टम् ॥ ५ ॥ दुर्दैवप्रभवप्रभञ्जनभयादुद्भूतभूमीरुहानेतान्सत्त्वगुणाश्रयानकरुणः शुष्यान्किमुन्माद्यसि । ब्रूमस्त्वां वनहव्यवाह यदमी दग्धाधंदग्धा अपि द्रष्टव्यास्तव तत्क्षणाद्विलयिनो नामापि न ज्ञायते ॥ ६ ॥ विध्वस्ता मृगपक्षिणो विधुरतां नीताः स्थलीदेवता धूमैरन्तरिताः स्वभावमलिनैराशा मही तापिता । भस्मीकृत्य सपुष्पपल्लवफलैर्नम्रान्महापादपानुद्धृत्तेन दवानलेन विपिनं वल्मीकशेषं कृतम् ॥ ७ ॥ दिक्चक्रं तृणभस्मना कवलितं मूलान्यपि क्ष्मारुहां निर्दग्धानि न चार्भकोऽपि हरिणीयूथस्य शेषीकृतः । आः कष्टं विपिनौकसोऽपि मुनयः प्लुष्टाः कृतान्तक्रिया कृत्वेत्थं वनवह्निना किमधुना शान्तेन दीप्तेन वा ॥ ८ ॥ वाडवानलः ॥ तेजांसि यस्य प्रशमं प्रयान्ति वारां प्रवाहेण स वह्निरन्यः । अयं पुनर्वाडवनामधेयः समुद्रमापीय बिभर्ति तेजः ॥ ९ ॥

१ वायुभिः. २ असंख्या.. ३ वेणुपङ्क्तिम्. ४ वनानल.

# व्योमचरान्योक्तयः।

गरुडः ॥ दामोदरमुंदराहितभुवनं यो वहति लीलया गरुडः। कस्य तरोरुपरिष्टात्खिन्नोऽसौ श्रान्तिमपनयतु ॥ १ ॥ अहिरहिरिति संभ्रमपदमितरजनः किमपि कातरो भवतु। विहंगपतेराहारे स तु सरलमृणालदलरुचिरः ॥ २ ॥ हंसः ॥ कंसारिचरणोद्भूतसिन्धुकल्लोललालितम्। मन्ये हंस मनो नीरे कुल्यानां रमते न ते ॥ ३ ॥ अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम्। रमते न मरालस्य मानसं मानसं विना ॥ ४ ॥ एकेन राजहंसेन या शोभा सरसो भवेत्। न सा बकसहस्रेण परितस्तीरवासिना ॥ ५ ॥ हंसः श्वेतो बकः श्वेतो को भेदो बकहंसयोः। नीरक्षीरविभागेन हंसो हंसो बको बकः ॥ ६ ॥ बककोयष्टिभिर्जुष्टे पल्वले मानसं कुतः। मोदते हि मरालस्य सन्मानसविहारिणः ॥ ७ ॥ अपसरणमेव शरणं मौनं वा तत्र राजहंसस्य। कटु रटति निकटवर्ती वाचालष्टिट्टिभो यत्र ॥ ८ ॥ यदि नाम दैवगत्या जगदसरोजं कदाचिदपि जातम्। अवकरनिकरं विकिरति तत्किं कृकवाकुरिव हंसः ॥ ९ ॥ नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत्। विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥ १० ॥ सैव सैव सरसी रमणीया यत्र यत्र रज्यते तव रागः। राजहंस रसिक स्मरणीया श्रीमता तदपि मानसकेलिः ॥ ११ ॥ गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः। राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥ १२ ॥ कंचिदेव समयं समागता त्वां न विस्मरति शश्वदम्बुजम्। मानसे विहर हंस मानसे मा विमुञ्च पुनरस्य सौहृदम् ॥ १३ ॥ यत्रापि कुत्रापि भवन्ति हंसा हंसा महीमण्डलमण्डलानि। हानिस्तु तेषां हि सरोवराणां येषां मरालैः सह विप्रयोगः ॥ १४ ॥ अम्भोजिनीवनविलासनमेव हन्त हंसस्य हन्तु नितरां कुपितो विधाता। न त्वस्य दुग्धजलभेदविधिप्रसिद्धां वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ १५ ॥ भृङ्गाङ्गनाजनमनोहरहारिगीतराजीवरेणुकणकीर्णपिशङ्गतोयम्। रम्या हिमाचलनदी प्रविहाय हंस देहे हताश वद कां दिशमुत्सुकोऽसि ॥ १६ ॥ स्थित्वा क्षणं विततपक्षतिनान्तरिक्षे मातङ्गसङ्गकलुषां नलिनीं विलोक्य। उत्पन्नमन्युपरिघर्घरनिःस्वनेन हंसेन साश्रु परिवृत्त्य गतं नलिन्याम् ॥ १७ ॥ रे राजहंस किमिति त्वमिहागतोऽसि योऽसौ बकः स इह हंस इति प्रतीतः। तद्गम्यतामनुपदेन पुनः स्वभूमौ यावद्वदन्ति न बकं खलु मूढलोकाः ॥ १८ ॥ ये वर्धिताः कनकपङ्कजरेणुमध्ये मन्दाकिनीविमलनीरतरंगभङ्गैः। ते सांप्रतं विधिवशात्खलु राजहंसाः शैवालजालजटिलं जलमाश्रयन्ति ॥ १९ ॥ हा हन्त मानससरःसलिलावतंस रे राजहंस पयसोः प्रविवेचनाय। चेच्छक्तिमान्खलु भवान्न तदा किमु स्यात्किंवा कपोत उत वा क-

१ उदरे आहित स्थापित भुवन ब्रह्माण्ड येन. २ श्रान्त.. ३ गरुडस्य. ४ विष्णु.. ५ कृत्रिमसरिताम्. ६ मानससरोवरम्. ७ संकरसचयम्. ८ ताम्रचूडः. ९ चातुर्यम्.

लविंकपोतः ॥ २० ॥ नेदं सरः सरसवारि न वारिजं वा नैतन्मधूनि मधुपाः सहवासिनो वा । हेमारविन्दवनवासविलासभाजो रे हंस मानसजुषस्तव मानसेऽपि ॥ २१ ॥ हंसः प्रयाति शनकैर्यदि यातु तस्य नैसर्गिकी गतिरियं नहि तत्र चित्रम् । गत्या तया जिगमिषुर्बक एव मूढश्चेतो दुनोति सकलस्य जनस्य नूनम् ॥ २२ ॥ भुक्ता मृणालपटली भवता निपीतान्यम्बूनि यत्र नलिनानि निषेवितानि । रे राजहंस वद तस्य सरोवरस्य कृत्येन केन भवितासि कृतोपकारः ॥ २३ ॥ तरौ तीरोद्भूते क्वचिदपि दलाच्छादिततनुः पतद्धारासारां गमय विषमां प्रावृषमिमाम् । निवृत्तायां तस्यां सरसि सरसोत्फुल्लनलिने स एव त्वं हंसः पुनरपि विलासास्त इह ते ॥ २४ ॥ गतं तद्गाम्भीर्यं तटमपि चितं जालिकशतैः सखे हंसोत्तिष्ठ त्वरितममुतो गच्छ सरसः । न यावत्पङ्कान्तःकलुषिततनुर्भूरि विलसद्बकोऽसौ वाचालश्चरणयुगलं मूर्ध्नि कुरुते ॥ २५ ॥ पुरा सरसि मानसे विकचसारसालिस्खलत्परागसुरभीकृते पयसि यस्य यातं वयः । स पल्वलजलेऽधुना मिलदनेकभेकाकुले मरालकुलनायकः कथय रे कथं वर्तताम् ॥ २६ ॥ वातान्दोलितपङ्कजस्थितरजःपुञ्जाङ्गरागोज्ज्वलो यः शृण्वन्कलकूजितं मधुलिहां संजातहर्षः पुरा । कान्ताचञ्चुपुटापवर्जितबिसग्राहग्रहेऽप्यक्षमः सोयं संप्रति हंसको मरुगतः कौपं पयो याचते ॥ २७ ॥ यो दिव्याम्बुजलोलमत्तमधुपप्रोद्गीतरम्यं सरस्त्यक्त्वा मानसमल्पवारिणि रतिं बध्नाति कैदारिके । तस्यालीकसुखाशया परिभवक्रोडीकृतस्याधुना हंसस्योपरि टिट्टिभो यदि पदं धत्तेऽत्र को विस्मयः ॥ २८ ॥ अन्या सा सरसी मरालमुनिभिर्यत्तीरसोपानिकाविन्यस्तांस्तिलतण्डुलान्कवलयन्दृष्टोऽसि हृष्टैर्मुखैः । एषा पक्कणवापिका कमलिनीखण्डेन गुप्तात्मभिर्व्याधैस्त्वद्विधमुग्धबन्धनविधौ को नाम नो सूच्यते ॥ २९ ॥ कस्त्वं रोहितलोचनास्यचरणो हंसः कुतो मानसात्किं तत्रास्ति सुवर्णपङ्कजवनान्यम्भः सुधासंनिभम् । रत्नानां निचयाः प्रवालमणयो वैडूर्यरोहः क्वचिच्छम्बूका न वसन्ति नेति च बकैराकर्ण्य हीहीकृतम् ॥ ३० ॥ यः संतापमपाकरोति जगतां यश्चोपकारक्षमः सर्वेषाममृतात्मकेन वपुषा प्रीणाति नेत्राणि यः । तस्याप्युन्नतिमम्बुदस्य सहसे यन्न त्वमेतावता वर्णेनैव परं मराल धवलः कृष्णश्चरित्रैरसि ॥ ३१ ॥ आकारः कमनीयता कुलगृहं लीलालसा सा गतिः संपर्कः कमलालयैः कलतया लोकोत्तरं कूजितम् । यस्येयं गुणसंपदस्ति महती तस्यातिभव्यस्य ते संरब्धत्वमसद्गुमद्गुकलहं नाहं सहे हंस हे ॥ ३२ ॥ नद्यो नीचगता दुरापपयसः कूपाः पयोराशयः क्षारा दुष्टनक्रकोटसंकटतटोद्देशास्तडागादयः । इत्थं भूतलमाकलय्य सकलानम्भोनिवेशानिति त्वां भो मानस संस्मरन्पुनरसौ हंसः समभ्यागतः ॥ ३३ ॥ हंसी वेत्ति परागपिञ्जरतनुः कुत्रापि पद्माकरे प्रेयान्मे बिसकन्दलीकिसलयं भुङ्क्ते ह्ययं निर्वृतः । नो जानाति तपस्वि-

नी यदनिशं जम्बालमालोडयञ्शैवालाङ्कुरमप्यसौ न लभते हंसो विशीर्णच्छदः ॥ ३४ ॥ प्रम्लाना नलिनी जलानि किरणैः सूर्यस्य शोषं ययुर्नाशं प्राप विहंगमावलिरियं तृष्णाविदीर्णेक्षणा। एते तीरमहीरुहा अपि पतत्पत्रश्रियोऽद्यापि रे कोऽयं राजमरालशुष्कसरणीतीरे रतिप्रक्रमः ॥ ३५ ॥ एषा पुष्करिणी मराल मलिनैश्छन्ना कुवीथीजलैर्यस्यामज्ञतया विधेरकृपया चेद्वस्तुमाकाङ्क्षसे। विश्रम्भो बकमण्डलेषु विनयो भेकेषु संबन्धिता रात्र्यन्धेषु विधीयतां कृपणता कोयष्टिकश्रेणिषु ॥ ३६ ॥ पीतं येन पुरा पुरंदरपुरे रम्भोरुकेलिस्खलन्मन्दाराङ्कुरकर्णपूरसुरभि स्वर्गापगायाः पयः। सोऽयं मारववारि पामरवधूपादार्पणप्रोच्छलत्पङ्कातङ्कितभेकभिन्नमघृणो हंसः समाशंसते ॥ ३७ ॥ काके कार्ष्ण्यमलौकिकं धवलिमा हंसे निसर्गस्थितो गाम्भीर्ये महदन्तरं वचसि यो भेदः स किं कथ्यते। एतावत्सु विशेषणेष्वपि सखे यत्रेदमालोक्यते के काकाः खलु के च हंसशिशवो देशाय तस्मै नमः ॥ ३८ ॥ क्रुद्धोलूकनखप्रयागविगलत्पक्षा अपि स्वाश्रयं ये नोज्झन्ति पुरीषपुष्टवपुषस्ते केचिदन्ये द्विजाः। ये तु स्वर्गतरंगिणीविसलतालेशेन संवर्धिता गाङ्गं तीरमपि त्यजन्ति कलुषं ते राजहंसा वयम् ॥ ३९ ॥ भो हंसास्तावदम्भोरुहकुहररजोरञ्जिताङ्गाः सहेलं हंसीभिः पद्मखण्डे मधुरमधुकरारावरम्ये रमध्वम्। यावन्नायं दुरन्तो हरगलगरलव्यालजालालिनीलप्रोन्मीलन्मेघमालामलिनसकलदिङ्मण्डलोऽभ्येति कालः ॥ ४० ॥

**मधुकरः** ॥ [1]सरजस्का पाण्डुवर्णा कण्टक[2]प्रकराङ्किताम्। केतकीं सेवसे हन्त कथं रो[3]लम्ब नि[4]स्त्रप ॥ ४१ ॥ फलाना च दलानां च सन्तु ते ते विवेकिनः। मकरन्दविशेषज्ञो मिलिन्दमपहाय कः ॥ ४२ ॥ पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः। सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति ॥ ४३ ॥ क्वचित्क्वचिदयं यातु स्थातुं प्रेमवशंवदः। न विस्मरति तत्रापि राजीवनलिनं हृदि ॥ ४४ ॥ भ्रम भ्रमर यूथीषु मालतीषु चिरं मिल। मा पुनः पङ्कजारण्यस्नेहशून्यं मनः कृथाः ॥ ४५ ॥ मधुपे मालतीपुष्पं सतृष्णं यातुमुद्यते। हन्त दैवादुपागम्योपात्तमारण्यकेन तत् ॥ ४६ ॥ मधुकर तव करनिकरैः किं किं क्रान्तं वनं न कुसुमानाम्। तद्वद सरसिजकमले लब्धं किंचिद्यदन्यतस्तत्किम् ॥ ४७ ॥ [6]गौरी चम्पककलिकामपहाय भ्रान्तदुर्बुद्धे। शाल्मलिकुसुमदलेषु स्वैरं गुञ्जन्न लज्जसे मधुप ॥ ४८ ॥ [7]मदनमवलोक्य निष्फलमनित्यता बन्धुजीवकुसुमानाम्। वनमुपगम्य भ्रमरः संप्रति जातो [8]जपासक्तः ॥ ४९ ॥ [9]अपसर मधुकर दूरं परिमलबहुलेऽपि केतकीकुसुमे। इह न हि मधुलवलाभो भवति परं धूलिधूसर वदनम् ॥ ५० ॥ कृत्वापि कोशपानं भ्रम-

१ रजोयुक्ताम्. २ समूह. ३ भ्रमर. ४ निर्लज्ज. ५ भ्रमर. ६ पीतवर्णाम्. ७ मदनबाणाख्य पुष्पम्. ८ जपापुष्पे सक्त; (पक्षे) जपे जपन आसक्त.. ९ दूर गच्छ.

रयुवा पुरत एव कमलिन्याः । अभिलषति बकुलकलिकां मधुलिहि मलिने कुतः सत्यम् ॥ ५१ ॥ येना[1]मन्दमरन्दे दलदरविन्दे[2] दिनान्य[3]नायिषत । कुटजे खलु तेनेहा[4] तेने[5] हा मधुकरेण कथम् ॥ ५२ ॥ अमरतरु[6]कुसुमसौरभ[7]सेवनसंपूर्णकामस्य । पुष्पान्तरसेवेयं भ्रमरस्य विडम्बना महती ॥ ५३ ॥ इह रूपमात्रसारे चित्रगते कनककह्लारे । न रसो नापि च गन्धो मधुकर बन्धो मुधा भ्रमसि ॥ ५४ ॥ अपनीतपरिमलान्तरकथे पदं न्यस्य देवतरुकुसुमे । पुष्पान्तरेऽपि गन्तुं वाञ्छसि चेद्भ्रमर धन्योऽसि ॥ ५५ ॥ मलिनेऽपि रागपूर्णां विकसितवदनामनल्पजल्पेऽपि । त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि ॥ ५६ ॥ नन्दनजन्मा मधुपः सुरतरुकुसुमेषु पीतमकरन्दः । दैवादवनिमुपेतः कुटजे कुटजे समीहते वृत्तिम् ॥ ५७ ॥ दूरतया स्थूलतया नीलतया दानलोलुपैर्मधुपैः । भ्रामितमिभराजधिया हन्ताभूदन्ततो महिषः ॥ ५८ ॥ नष्टे वारिजविपिने कष्टे नष्टेऽथ मालतीनिकरे । तात्किं जीवति लोके मूलकमकरन्दबिन्दुना यदलिः ॥ ५९ ॥ पवनापनीतसौरभदूरोदकपूरपद्मिनीलुब्धः । अपरिक्षतस्वपक्षो गन्ता हन्तापदं मधुपः ॥ ६० ॥ कति कति नलिताः कलिताः संचरता चञ्चरीकरसिकेण । नलिनि भवन्मधु मधुरं यत्पीतं तदेव परिपीतम् ॥ ६१ ॥ मधुकर मा कुरु शोकं विचर करीरद्रुमस्य कुसुमेषु । घनतुहिनपातदलिता कथं नु सा मालती मिलति ॥ ६२ ॥ यस्तोषं न गतः कमलेषु बकुलदले चम्पककुसुमेषु । तस्यालेर्यदि निम्बे वासः कथय कथं न भवत्युपहासः ॥ ६३ ॥ आलिङ्गसे चारुलतां लवङ्गीमाचुम्बसे चाम्बुजिनीं क्रमेण । तां चूतवल्लीं मधुप प्रकामं संताडयस्येव पदैः किमेतत् ॥ ६४ ॥ वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि । भृङ्गाः सहेलं यदि नापतिष्यन्को वेदयिष्यन्नवचम्पकानि ॥ ६५ ॥ किं न पश्यसि महेन्द्रदिङ्मुखे शीतदीधितिरसावुदञ्चति । मीलितैव नलिनीह मा कृथास्तन्मधुव्रत मुधा गतं गतम् ॥ ६६ ॥ चञ्चरीकचतुरोऽसि चन्द्रिकावैभवे कुमुदिनीं निषेवसे । भास्करे जयिनि पुष्करैर्नवैरुन्मिषन्नवदलेऽनुरज्यसि ॥ ६७ ॥ नीरजान्यपि निषेव्य निर्भरं नीरसानि कुटजानि वाञ्छसि । चञ्चलत्वमिह चञ्चरीक ते साहसं कथमिदं विमोक्ष्यसि ॥ ६८ ॥ पीतमत्र मधु यापिताः क्षपा भृङ्ग सर्वमचिरेण विस्मृतम् । हीनमानसुषमां हिमागमे पद्मिनी यदिह नावलोकसे ॥ ६९ ॥ कुन्दकुड्मलमुपास्यता त्वया यत्र शीतसमयोऽतिवाहितः । चञ्चरीक परिहीनसौरभा रोचते न भवते सरोजिनी ॥ ७० ॥ भ्रमर भ्रमता दिगन्तराणि क्वचिदासादितमीक्षितं श्रुतं वा । वद सत्यमपास्य पक्षपातं यदि जातीकुसुमानुकारि पुष्पम् ॥ ७१ ॥ अभिनवनलिनीविनोदलुब्धो मुकुलितकैरविणीवियोगभीरुः । भ्र-

१ प्रचुरपुष्परसे. २ विकसितकमले. ३ नीतानि. ४ इच्छा. ५ विस्तारिता. कृतेति यावत्. ६ कल्पवृक्ष. ७ सौगन्ध्य.

मति मधुकरोऽयमन्तराले श्रयति न पङ्कजिनीं कुमुद्वतीं वा ॥ ७२ ॥ अलिरयं नलिनीदलमध्यगः कमलिनीमकरन्दमदालसः । विधिवशात्परदेशमुपागतः कुटजपुष्परसं बहु मन्यते ॥ ७३ ॥ अपि दलन्मुकुले बकुले यया पदमधायि कदापि न हेलया । अहह सा सहसा विधुरे विधौ मधुकरी बदरीमनुसेवते ॥ ७४ ॥ यदपि भेकगणेन निषेवितं प्रकटकण्टककोटिसमन्वितम् । तदपि पङ्कजमेति मधुव्रतः सुरससौरससुन्दरताश्रयम् ॥ ७५ ॥ आनम्राः स्तबकभरेण पल्लविन्यः शोभन्ते कति न लताः परागपूर्णाः । आमोदे मधुनि च मार्दवे च तासां यो भेदः स खलु मधुव्रतैकवेद्यः ॥ ७६ ॥ निःशङ्कं गजपतिगण्डदानधारामाराध्य भ्रमर दिनान्यमून्यनैषीः । यावन्न स्फुरति करालकर्णतालस्तावत्त्वं नय नलिनीवनीमुपेत्य ॥ ७७ ॥ रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः । इत्थं विचिन्तयति कोशगते द्विरेफे हा मूलतः कमलिनीं गज उज्जहार ॥ ७८ ॥ अन्यासु तावदुपमर्दसहासु[1] भृङ्ग लोलं[2] विनोदय मनः सुमनोलतासु । मुग्धामजातरजसं[3] कलिकामकाले[4] बालां कदर्थयसि[5] किं नवमल्लिकायाः ॥ ७९ ॥ फुल्लेषु यः कमलिनीकमलोदरेषु चूतेषु यो विलसितः कलिकान्तरस्थः । पश्याद्य तस्य मधुपस्य शरद्व्यपाये कृच्छ्रेण वेणुविवरे दिवसाः प्रयान्ति ॥ ८० ॥ ये वर्धिताः करिकपोलमदेन भृङ्गाः प्रोत्फुल्लपङ्कजरजःसुरभीकृताङ्गाः । ते सांप्रतं प्रतिदिनं क्षपयन्ति कालं निम्बेषु चार्ककुसुमेषु च दैवयोगात् ॥ ८१ ॥ एणीदृशः श्रवणसीम्नि यदा नयन्ति तेनैव तस्य महिमा नवचम्पकस्य । त्वं तत्र नो विहरसे यदि भृङ्ग तेन नैतस्य किंचिदपि तत्तु तवैव हानिः ॥ ८२ ॥ सानन्दमेष मकरन्दमिहारविन्दे विन्देत षट्पदयुवेति जनैरटङ्कि । दैवादकाण्डपरिमुद्रितपुण्डरीककोषादभूदहह निःसरणं पुमर्थः ॥ ८३ ॥ आजन्मकल्पतरुकाननकामचारी यत्कौतुकादुपगतः कुटजं मिलिन्दः । तत्कर्मणः सुसदृशं फलमेतदेव यत्प्राप साम्यमधुना मधुमक्षिकाभिः ॥ ८४ ॥ मा गा विषादमलिपोतक केतकीनामन्तर्निगूढमनवाप्य मधुप्रकर्षम् । लाभः स एव परमो ननु कण्टकानां श्रेणीभिरक्षतशरीरतया प्रयासि ॥८५॥ नालिङ्गिता नवलवङ्गलता न वापि सभाविता विटपिनः कलगुञ्जितेन । आसादिता सपदि काचन रीतिरन्या माकन्दकोरकमुदीक्ष्य मधुव्रतेन ॥ ८६ ॥ मन्दारमेदुरमरन्दरसालत्यागः स्वर्नागरीनयननन्दन एष भृङ्गः । दैवादुपेत्य जगतीमगतिर्विषीदन्छाखोटकोटरकुटीषु निलीय शेते ॥ ८७ ॥ किं केतकीपरिमलोत्थितगन्धलुब्धो गुञ्जन्भ्रमन्भ्रमर वाञ्छसि रन्तुमेताम् । यत्कण्टकैः परिवृतामतुलामगम्या संरक्षिता व्रज निकुञ्जलतां सपुष्पाम् ॥ ८८ ॥ इह सरसि सहर्षं मञ्जु[6] गुञ्जाभिरामं मधुकर कुरु केलिं[7] सार्धमम्भोजिनीभिः ।

---

१ उपमर्दं सहन्ते ताः २ सतृष्णम्. लुब्धमिति यावत्. ३ अनुत्पन्नपरागाम्. ४ अयोग्ये काले. ५ दूषयसि. ६ मधुरम्. ७ रव कुरु.

अनुपममकरन्दामोददत्तप्रमोदा त्यजति बत न निद्रां मालती यावदेषा ॥ ८९ ॥ भ्रमर म-रणभीतिं मुञ्च चाम्पेयपुष्पे विहर हर तदीयं सौरभं सौहृदेन । मधुकर सुकरं चेद्धस्तु ह-स्तेन लब्धुं भवतु तदुपभोगेऽनिष्टमिष्टं फलं वा ॥ ९० ॥ गन्धैराढ्या जगति विदिता केतकी स्वर्णवर्णा पुष्पभ्रान्त्या क्षुधितमधुपः पुष्पमध्ये पपात । अन्धीभूतस्तदनु रजसा क-ण्टकैश्छिन्नपक्षः स्थातुं गन्तुं क्षणमपि सखे नैव शक्तो द्विरेफः ॥ ९१ ॥ दृष्ट्वा स्फीतो-ऽभवदलिरसौ लेख्यपद्मं विशालं चित्रं चित्रं किमिति किमिति व्याहरन्निष्पपात । नास्मि-न्गन्धो न च मधुकणा नास्ति तत्सौकुमार्यं घूर्णन्मूर्धा बत नतशिरा व्रीडया निर्जगाम ॥ ९२ ॥ सदम्भोजाम्भोजं परिवृषति संभोगरहितो गतोऽमन्दे कुन्दे वहति मकरन्दं न हि मनः । ततो मन्येऽरण्ये क्वचिदधिकपुण्येऽपि ललितां लवङ्गीमासङ्गीं भजति नवभृङ्गीप-रिवृढः ॥ ९३ ॥ निरानन्दः कौन्दे मधुनि विधुरो बालबकुले रसाले सालम्बो लवमपि ल-वङ्गे न रमते । प्रियङ्गौ नासङ्गं रचयति न चूतेऽपि रमते स्मरंल्लक्ष्मीलीलाकमलमधुपानं मधु-करः ॥ ९४ ॥ श्रियो वासाम्भोजे त्रिदिवसरिदम्भोजकुहरे हरेर्नाभ्ये पद्मे मधु मधुकरो यः किल पपौ । स दैवादुन्मीलत्तपनकरतापव्यतिकरव्यथाकम्पः संप्रत्यतरुमरुभूमौ विचरति ॥ ९५ ॥ लतास्तास्तास्ताढ्ञ्मधुरसवतीः पङ्कजवनीः समालिङ्गंश्चुम्बन्नयमगमयद्दूरितिन-यम् । इदानीं चेन्नीचे विचरति रुचेरेष लकुचे कुचेष्टेयं धातुर्भवति नहि वाच्यो मधुकर ॥९६॥ मधूके माध्वीकं पिबसि शतपत्रेऽभिरमसे मधूलीभिश्रान्तर्मधुप सहकारेऽपि रमसे वसन्ते वासन्ती मधु मधुरमश्नासि बहुशो दुरावेशोऽयं ते तदपि कुटजे यद्विचरसि ॥९७॥ भ्रमन्स्वैरं भ्रातर्भ्रमर नवयूथेषु बहुशो मधूलीमन्विष्यन्कुमुदवनवीथीषु विचर । वसन्तप्रारम्भ-स्फुरितमधुसंभारसुभगो न ते विस्मर्तव्यः क्वचन सहकारव्यतिकरः ॥ ९८ ॥ अये मधुप मा कृथा बत वृथा मनोदीनतां तुषारसमये लताशत निषेव्य न व्याकुलः । इयं पुरत एव ते सरसपुष्पमासोदये रसालनवमञ्जरी मधुदरी जरीजृम्भते ॥ ९९ ॥ तापो नाप-गतस्तृषा न च कृशा धूता न धूली तनोर्न स्वच्छन्दमकारि कन्दकवलः का नाम केली-कथा । दूरान्मुक्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी प्रारब्धं मधुपैरकारणमहो झ-ङ्कारकोलाहलः ॥ १०० ॥ नो मल्लीमयमीहते[1] न भजते मत्तेभकुम्भस्थलीं वासन्तीं[2] सहते न चन्दनवनीमालम्बते न क्वचित् । जातीमेव हृदीश्वरीमिव महानन्दैककन्दाङ्कुरां ध्याय-न्निर्वृतिमेति षट्पदयुवा योगीव वीतभ्रमः[3] ॥ १०१ ॥ किं क्वापि मलयानलैर्विटपिनो निर्दह्य भस्मीकृताः किंस्विद्देवगजेन पङ्कजवनं निष्कन्दमुन्मूलितम् । किंवा हन्त कृतान्तकेसरि[4]भ-याच्यक्तो मदः कुञ्जरैर्येनास्मिन्विरसे करीरकुसुमे हा भृङ्ग विश्राम्यसि ॥१०२॥ यस्याः संगमवाञ्छया न गणिता वाप्यो विनिद्रोत्पला यामालिङ्ग्य समुत्सुकेन मनसा यातः परां

---

१ इच्छा करोति. २ माधवीलताम्. ३ गतभ्रम . ४ कृतान्त. कालः स एव केसरी सिंहः.

निर्वृतिम् । भग्नां तामवलोक्य चन्दनलतां भृङ्गेण यज्जीव्यते धैर्यं नाम तदस्तु तस्य न पुनः स्नेहानुरूपं कृतम् ॥१०३॥ दग्धा सा बकुलावलीकवलितास्ते ते रसालद्रुमाः क्लुष्टास्तेऽपि विनिद्रपुष्पपटलीपीतातपाः पादपाः । भ्रातर्भृङ्ग दवाग्निना वनमिदं वल्मीकशेषं कृतं किं त्वं संप्रति काननान्तरपरिस्पन्दाय मन्दायसे ॥ १०४ ॥ दूरादुज्झति चम्पकं न च भजत्यम्भोजराजीरजो नो जिघ्रत्यपि पाटलापरिमलं धत्ते न चूते रतिम् । मन्दारे यदनादरोऽपि च किलोपान्ते न संतृप्यते तन्मन्ये क्वचिदङ्ग भृङ्गतरुणेनास्वादिता मालती॥१०५॥ येनामोदिनि केसरस्य मुकुले पीतं मधु स्वेच्छया नीता येन निशा शशाङ्कधवला पद्मोदरे शारदी[1] । भ्रान्त येन मदप्रवाहमलिने गण्डस्थले दन्तिनां सोऽयं भृङ्गयुवा करीरविटपे बध्नाति तुष्टिं कुतः ॥ १०६ ॥ भ्रातर्भ्राम्य लवङ्गवल्लिषु पिब स्वैरं नवाम्भोरुहं माध्वीमाधविकामधूनि मधुराण्याकण्ठमास्वाद्य । कस्मादापतितोऽसि केतकमिदं यस्मिन्न दीर्घं रजो दृष्टिं लुम्पति सूचयः प्रविचिताः कृन्तन्ति मर्माण्यपि ॥ १०७ ॥ आस्वाद्यात्र मधूनि षट्पद मदं मा गाः कषायाङ्कुरैर्माकन्दस्य पिकान्प्रतारितवतो मूर्धानमध्यासितः । प्रत्यासन्नतमे पिकेऽपि भवते येनार्पिता तादृशी माध्वी तस्य विवेकविच्युतिरियं षाड्गुण्यमेतन्न ते ॥ १०८ ॥ नीतं जन्म नवीननीरजवने पीतं मधु स्वेच्छया मालत्याः कुसुमेषु येन सततं केली कृता हेलया । तेनेयं मधुगन्धलुब्धमनसा गुञ्जालता सेव्यते हा धिग्दैवकृतं स एव मधुपः कां कां दशां नागतः ॥ १०९ ॥ प्रारम्भे कुसुमाकरस्य परितो यस्योल्लसन्मञ्जरीपुञ्जे मञ्जुलगुञ्जितानि रचयंस्तानातनोरुत्सवान् । तस्मिन्नद्य रसालशाखिनि दृशां दैवात्कृशामञ्चति त्वं चेन्मुञ्चसि चञ्चरीक विनयं नीचस्त्वदन्योऽस्ति कः ॥ ११० ॥ सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं[2][3] दृष्टिः सा मदविस्मृतस्वपरदिक्किं[4][5] भूयसोक्तेन वा । सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसावन्तःशून्यकरो[6][7] निषेव्यत इति भ्रातः क एष ग्रहः ॥ १११ ॥ केतक्यः कटुकण्टकाः कुमुदिनी दोषोदयान्मोदते जायन्ते विकलाः कलावति पुनः पङ्केरुहा पङ्क्तयः । अन्यानि प्रसवानि षट्पदपदन्यासैरवाञ्चि क्वचिद्भृङ्गो भ्राम्यति कल्पवृक्षविपदामन्तर्भवं तं विना ॥ ११२ ॥ यद्यप्याम्रतरोरमुष्य वनितां वर्णावतंसोचितामाजिघ्रन्नवमञ्जरीं मधुप हे जातोऽसि पूर्णोत्सवः । विस्मर्तुं भवतस्तथाप्यनुचितं तद्गन्धमिन्दीवर यस्यास्वाद्य मधूनि चानतशिरो मञ्जु त्वयोद्गुञ्जितम् ॥ ११३ ॥ माकन्दे मधुपानमस्तु नकुले क्रीडा कदम्बे द्रुमे दोलाखेलनकौतुकं कुवलये कः को न वा विभ्रमः । येनाकारि मधुव्रतेन सहसा सोऽयं मधूके मधौ माध्वीकं परिपीय पीवरतनुर्जीवत्यहो जी-

१ शरत्सवन्धिनी २ अग्निशापात्करिणा जिह्वापरिवृत्ति ; ( पक्षे ) पूर्व विपरीताभिधानम्. ३ कर्णचापल प्रसिद्धम्, ( पक्षे ) पिशुनप्रतार्यत्व च ४ मद प्रसिद्ध , ( पक्षे ) गर्व.. ५ स्वपरयोर्दिङ्मार्गः; ( पक्षे ) आप्तानाप्तविभागः. ६ गज ; ( पक्षे ) वारक . ७ सरन्ध्र · प

वनम् ॥ ११४ ॥ पीतं पङ्कजकानने मधु मया नीपेऽपनीतं वयो बन्धूके वरबन्धुता विरचिता रक्तं रसालद्रुमे । किं चाकारि कुमुद्वतीपरिकरे क्रीडाकलाकौशलं कस्तद्धेत्तु विधीयतेऽद्य बदरीवृन्दस्य यद्वन्दनम् ॥ ११५ ॥ कोकिलः ॥ समुद्गिरसि किं वाचः पुंस्कोकिल सुकोमलाः । श्वभ्रेऽस्मिञ्जडपाषाणगुरुनिर्घोषभैरवे ॥ ११६ ॥ तवैतद्वाचि माधुर्यं जाने कोकिल कृत्रिमम् । प्रपोषितो यैस्तानेव जातपक्षो जहासि[१] यत् ॥ ११७ ॥ रसालशिखरासीनाः शतं सन्तु पतत्रिणः । तन्मञ्जरीरसामोदं विदुरेव कुहूमुखाः ॥ ११८ ॥ भद्रं भद्रं कृतं मौनं कोकिलैर्जलदागमे[२] । वक्तारो दर्दुरा[३] यत्र तत्र मौनं समाचरेत् ॥ ११९ ॥ शृगालशशशार्दूलदूषितं दण्डकावनम् । पञ्चम गायतानेन कोकिलेन प्रतिष्ठितम् ॥ १२० ॥ काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः । वसन्तसमये प्राप्ते काकः काकः पिकः पिकः ॥ १२१ ॥ तावन्मौनेन नीयन्ते कोकिलैश्चैव वासराः । यावत्सर्वजनानन्ददायिनी वाक्प्रवर्तते ॥ १२२ ॥ कोकिलोऽहं भवान्काकः समानः कालिमावयोः । अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः ॥ १२३ ॥ सहकारे चिरं स्थित्वा सलीलं बालकोकिल । तं हित्वाद्यान्यवृक्षेषु विचरन्न विलज्जसे ॥ १२४ ॥ कलकण्ठ यथा शोभा सहकारे भवद्गिरः । खदिरे वा पलाशे वा कि तथा स्याद्विचारय ॥ १२५ ॥ कोकिल कलमालापैरलमलमालोकसे रसालं किम् । शरनिकरभरितशराधिः शबरः संरतीह[४] परिसरे[५] सधनुः ॥ १२६ ॥ तत्किं स्मरसि न भुक्त यत्पिक[६] रे काकमन्दिरे पूर्वम् । सहकारकुसुमकाले हठेन कुरुषेऽधुना रावम् ॥ १२७ ॥ तावत्कोकिल विरसान्यापय[७] दिवसान्वनान्तरे निवसन् । यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥ १२८ ॥ एकस्त्वं गहनेऽस्मिन्कोकिल न कलं कदाचिदपि कुर्याः । साजात्यशङ्कयामी न त्वां निघ्नन्तु निर्दयाः काकाः ॥ १२९ ॥ अथ कोकिल कुरु मौनं जलधरसमयेऽपि पिच्छिला भूमिः । विकसति कुटजकदम्बे वक्तरि भेके कुतस्तवावसरः ॥ १३० ॥ मलिनात्मना विरागः प्रकटीकृत एव कोकिलखलेन । जीवनदानामुन्नतिसमये वाचंयमीभवता ॥ १३१ ॥ रे रे कोकिल मा भज मौनं किंचिदुदञ्चय पञ्चमरागम् । नो चेत्त्वामिह को जानीते काककदम्बकपिहिते चूते ॥ १३२ ॥ अस्यां सखे बधिरलोकनिवासभूमौ कि कूजितेन खलु कोकिल कोमलेन । एते हि दैवहतकास्तदभिन्नवर्णं[८] त्वा काकमेव कलयन्ति कलानभिज्ञाः ॥ १३३ ॥ रे बालकोकिल करीरमरुस्थलीषु किं दुर्विदग्धमधुरध्वनिमातनोषि । अन्यः स कोऽपि सहकारतरुप्रदेशो राजन्ति यत्र तव विभ्रमभाषितानि ॥ १३४ ॥ कि कोमलैः कलरवैः पिक तिष्ठ तूष्णीमेते तु पामरनराः स्वरमाकलय्य । को वा रट-

---

१ त्यजसि २ वर्षाकाले. ३ भेकाः. ४ सचरति. ५ आसमन्ताद्भागे. ६ कोकिल. ७ नय. ८ काकसमानवर्णम्. ९ आम्रः.

त्ययमये निकटे कटूनि रे वध्यतामिति वदन्ति गृहीतदण्डाः ॥ १३५ ॥ तावच्चकोरचरणायुधचक्रवाकपारावतादिविहगाः कलमालपन्तु । यावद्वसन्तरजनीघटिकावसानमासाद्य कोकिलयुवा न कुहूकरोति ॥ १३६ ॥ येनोषितं रुचिरपल्लवमञ्जरीषु श्रीखण्डमण्डलरसालवने सदैव । दैवात्स कोकिलयुवा निपपात निम्बे तत्रापि रुष्टबलिपुष्टकुलैर्विवादः ॥ १३७ ॥ हे कोकिलाखिललतासु फलानि सन्ति संत्यज्य तानि ननु चूतलतां सपुष्पाम् । किं काङ्क्षसीह रमितुं फलभोक्तुकामो न ज्ञायसे नृपतिसेवकभीषणीयाम् ॥ १३८ ॥ परभृतशिशो मौनं तावद्विधेहि नभस्तलोत्पतनविधये पक्षौ स्यातां न यावदिमौ क्षमौ । ध्रुवमपरथा द्रष्टव्योऽसि स्वजातिविलक्षणध्वनितकुपितध्वाङ्क्षत्रोटीपुटाहतिजर्जरः ॥ १३९ ॥ अहंयुवरवर्णिनीजनमदायतोदञ्चतस्फुरच्चतुरपञ्चमस्वराजितान्यपक्षिव्रजः । रसालतरुणा कृतामसमतुल्यतामात्मनो विहन्तुमिह कोकिलः फलिनमन्यमुद्वीक्षते ॥ १४० ॥ क्वचिज्झिल्लीनादः क्वचिदतुलकाकोलकलहः क्वचित्कङ्कारावः क्वचिदपि कपीनां कलकलः। क्वचिद्घोरः फेरुध्वनिरयमहो दैवघटनात्कथंकारं तारं रसति चकितः कोकिलयुवा ॥ १४१ ॥ मूकीभूय तमेव कोकिल मधुं वन्धुं प्रतीक्षस्व हे हेलोल्लासितमल्लिकापरिमलामोदानुकूलानिलम् । यत्रैतास्तव सूक्तयः सफलतामायान्त्यमी तूल्लसत्पांशूत्तसमृतो निदाघदिवसाः संतापसंदायिनः ॥ १४२ ॥ येनानन्दमये वसन्तसमये सौरभ्यहेलामिलद्भृङ्गालीमुखरे रसालशिखरे नीताः पुरा वासराः । आः कालस्य वशेन कोकिलयुवा सोऽप्यद्य सर्वा दिशः खेलद्वायसचञ्चुघातविदलन्मूर्धा मुहुर्वीक्षते ॥ १४३ ॥ दात्यूहाः सरसं रसन्तु सुभगं गायन्तु केकाभृतः कादम्बाः कलमालपन्तु मधुरं कूजन्तु कोयष्टयः । दैवाद्यावदसौ रसालविटपिच्छायामनासादयन्निर्विण्णः कुटजेषु कोकिलयुवा संजातमौनव्रतः ॥ १४४ ॥ भ्रातः कोकिल कूजितेन किमलं नाद्याप्यनर्घ्यो गुणस्तूष्णीं तिष्ठ विशीर्णपर्णपटलच्छन्नः क्वचित्कोटरे । प्रोद्दामद्रुमसंकटे कटुरटत्काकावलीसंकुलः काकोऽयं शिशिरस्य संप्रति सखे नायं वसन्तोत्सवः ॥ १४५ ॥ अम्भोजप्रकरोऽथ केतककुलं कुन्दोत्करः कैरवव्रातो मल्लिगणोऽथ चम्पकचयो जातीसमूहोऽथवा । नो चेदादरमातनोति पिक ते खेदं वृथा मा कृथा यस्मात्क्वापि कदापि कोऽपि भविता यस्त्वद्गुणाञ्ज्ञास्यति ॥ १४६ ॥ आसाद्याम्रवनीमिमा प्रति नवामास्वाद्य तन्मञ्जरी मैवं पञ्चममञ्च नन्दनवनभ्रान्त्या तया कोकिल । एषा वायसमण्डली घनशिरःशूलाहतिव्याकुला कुध्वानैर्बधिरीकरिष्यति वृथा श्रोत्राणि सत्पत्त्रिणाम् ॥ १४७ ॥ चातकः ॥ एक एव खगो मानी चिरं जीवतु चातकः । म्रियते वा पिपासाया याचते वा पुरंदरम् ॥ १४८ ॥ पिपासाक्षामकण्ठेन याचितं चाम्बु पक्षिणा ।

१ द्रोणकाक'. २ जम्बुकध्वनि.. ३ अत्युच्च यथा तथा. ४ कूजति. ५ कालकण्टक.. जलकाक इति प्रसिद्ध ६ मयूरा . ७ कलहसा. ८ अव्यक्तमधुरम्. ९ टिट्टिभा..

नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥ १४९ ॥ शक्यते येन केनापि जीवनेनैव जीवितुम् । किंतु कौलव्रतोल्लङ्घप्रसङ्गः परदुःसहः ॥ १५० ॥ अवश्यकारणैः प्राणान्धारयत्येव चातकः । प्रार्थनाभङ्गभीतोऽपि शक्रादपि न याचते ॥ १५१ ॥ चातक धूमसमूहं दृष्ट्वा मा धाव वारिधरबुद्ध्या । इह हि भविष्यति भवतो नयनयुगादेव वारिणां पूरः ॥ १५२ ॥ यद्यपि चातकपक्षी क्षपयति जलधरमकालवेलायाम् । तदपि न कुप्यति जलदो गतिरिह नान्या यतस्तस्य ॥ १५३ ॥ दीनोन्नतचलपक्षतया बह्वपि लब्धमवस्तु । चातक सत्संभावनया किमपि यदस्ति तदस्तु ॥ १५४ ॥ विश्वोपजीव्येन पिबत्यथोऽयं पद्माकरे यद्यपि चातकश्चेत् । स्वार्थक्षतिस्तस्य तृषातुरस्य लघुत्वमेवास्ति न किंचिदस्य ॥ १५५ ॥ ऊर्ध्वीकृतग्रीवमहो मुधैव किं याचसे चातकपोत मेघम् । अत्यूर्जितं गर्जितमात्रमस्मिन्नम्भोधरे बिन्दुलवस्तु दूरे ॥ १५६ ॥ वृथा कथं नृत्यसि चातक त्वं न नीलमेघोऽथ गजो मदान्धः । स त्वादृशेभ्यो न ददाति नूनं मातङ्गदानं मधुपेभ्य एव॥१५७॥ आत्मानमम्भोनिधिरेतु शोषं ब्रह्माण्डमासिञ्चतु वा तरंगैः । नास्ति क्षतिर्नोपचितिः कदापि पयोदवृत्तेः खलु चातकस्य ॥ १५८ ॥ रक्ताब्जपुञ्जरजसारुणितान्विमुच्य स्वच्छान्सुधासमरसानपि वारिराशीन् । यच्चातकः पिबति वारिधरोदबिन्दून्मन्ये तदा नतिभयाच्छिरसोऽभिमानी ॥ १५९ ॥ अन्येऽपि सन्ति बत तामरसावतंसा हंसावलीवलयिनो जलसंनिवेशाः । कोऽप्याग्रहो गुरुरयं बत चातकस्य पौरंदरीं यदभिवाञ्छति वारिधाराम्॥१६०॥ धिग्वारिदं परिहृतान्यजलाशयस्य यच्चातकस्य कुरुते न तृषाप्रशान्तिम् । धिक्चातकं तमपि योऽर्थितयास्तलज्जस्तं तादृशं च यदुपैति पिपासितोऽपि ॥ १६१ ॥ बीजैरङ्कुरितं लताभिरुदितं वल्लीभिरुज्जृम्भितं कन्दैः कन्दलितं जनैः प्रमुदितं धाराधरे वर्षति । भ्रातश्चातक पातकं किमपि ते सम्यङ् न जानीमहे येनास्मिन्न पतन्ति चञ्चुपुटके छिन्नाः पयोबिन्दवः ॥ १६२ ॥ अन्ये ते जलदायिनो जलधरास्तृष्णां विनिघ्नन्ति ये भ्रातश्चातक किं वृथा विरुदितैः खिन्नोऽसि विश्रम्यताम् । मेघः शारद एव काशधवलः पानीयरिक्तोदरो गर्जत्येव हि केवलं भृशतरं नो बिन्दुमप्युज्झति ॥ १६३ ॥ यः कृष्णं कुरुते मुखं जनयति त्रासं तडिद्भिस्तु यो यश्च प्रार्थयते परं दलयति श्रोत्रं निजैर्गर्जितैः । सत्यं चातक ते तथाविधमपि भ्रातस्त्वया याचता जीमूतं कृतमेव तुल्यमनयोरर्थित्वतिर्यक्त्वयोः ॥१६४॥ रे रे चातक सावधानमनसा मित्र क्षणं श्रूयतामम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः । केचिद्वृष्टिभिरार्द्रयन्ति धरणीं गर्जन्ति केचिद्वृथा यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥ १६५ ॥ वापी स्वल्पजलाशयो विषमयो नीचापगाहो ह्रदः

१ नमनभयात्. २ ऐन्द्रीम्. मेघोत्पन्नामित्यर्थः. ३ परिहृतास्त्यक्ता अन्ये जलाशयाः समुद्रादयो येन. ४ गतलज्जः. निर्लज्ज इत्यर्थः. ५ काशपुष्पवत्पाण्डुरः.

क्षुद्रात्क्षुद्रतरो महाजलनिधिर्गण्डूषमेकं मुनेः। गङ्गाद्याः सरितः पयोनिधिगताः संत्यज्य तस्मादिमान्संमानी खलु चातको जलमुचामुच्चैः पयो वाञ्छति ॥ १६६ ॥ अन्ये ते विहगाः पयोद परितो धावन्ति तृष्णातुरा वापीकूपतडागसागरजले मज्जन्ति दत्तादराः। मामद्यापि न वेत्सि चातकशिशु यच्छुष्ककण्ठोऽपि सन्नान्यं वाञ्छति नोपसर्पति न च प्रस्तौति न ध्यायति ॥ १६७ ॥ उत्कूजन्तु वटे वटे बत बकाः काका वराका अपि क्रांकुर्वन्तु सदा निनादपटवस्ते पिप्पले पिप्पले। सोऽन्यः कोऽपि रसालपल्लवलवग्रासोल्लसत्पाटवक्रीडत्कोकिलकण्ठकूजनकलालीलाविलासक्रमः ॥ १६८ ॥ मयूरः ॥ अहमस्मि नीलकण्ठस्तव खलु तुष्यामि शब्दमात्रेण। नाहं जलधर भवतश्चातक इव जीवनं याचे ॥ १६९ ॥ यत्नादपि कः पश्यति शिखिनामाहारनिर्गमस्थानम्[1]। यदि जलदनिनदमुदितास्त[2] एव मूढा न नृत्येयुः ॥ १७० ॥ वेगज्वलद्विटपिपुञ्जमहारयोऽयं गर्जन्न तीव्रतरहेतिरियं न शंथाः। दावाग्निधूमनिवहोऽयमये न मेघः किं नृत्यसि द्रुतमितो व्रज तत्कलापिन् ॥ १७१ ॥ अस्मान्विचित्रवपुषस्तव पृष्ठलग्नान्कस्माद्विमुञ्चति भवान्यदि वा विमुञ्च। रे नीलकण्ठ गुरुहानिरियं तवैव मौलौ पुनः क्षितिभृतो भविता स्थितिर्नः ॥ १७२ ॥ अये नीलग्रीव क्व नु खलु सखे तेष्वनुनयः परं तोषं येषां तव रवविलासो वितनुते। अमी दूरात्क्रूराः क्वणितमिदमाकर्ण्य सहसा त्वरन्ते हन्तुं त्वामहह शबराः पुङ्खितशराः ॥१७३॥ समन्तादाक्रान्ता दवदहनसंघैः शिखरिणः किरातैराकीर्णाः करकलितकाण्डैर्वनभुवः। बिडालैरालीढाः सपदि सरसीनां परिसराः शिखण्डी पाण्डित्यं निजमहह कुत्र प्रकटतु ॥ १७४ ॥ एतस्मिन्मलयाचले बहुविधैः किं तैरकिंचित्करैः काकोलूककपोतकोकिलकुलैरेकोऽपि पार्श्वस्थितः। केकी[3] कूजति चेत्तदा विघटितव्यालावलीबन्धनः[4] सेव्यः स्यादिह सर्वलोकमनसामानन्दनश्चन्दनः ॥ १७५ ॥ हारीताः सरसं रसन्तु मधुरं कूजन्तु पुंस्कोकिलाः सानन्दं गिरमुद्गिरन्तु च शुकाः किं तैः शिरस्थैरपि। एकेनापि तलस्थितेन वदनाच्छ्रीखण्डनिस्तर्जनाद्व्यालानां च शिखण्डिना न तु महत्पाण्डित्यमुद्दण्डितम् ॥ १७६ ॥ किं दूरेण पयोधरा उपरि किं नान्यैरटन्तः श्रुता निर्व्यापारतया च पक्षिषु गताः किं वानपेक्षा वृथा। रम्यं वा गगनेन किं विहरणं किं तूग्रकाकावलीपर्यायप्रतिपत्तिलाघवभयाद्भूमौ स्थिता बर्हिणः ॥ १७७ ॥ केकी कर्णामृतं ते सकुसुमकवरीकान्तिहाराः कलापाः कण्ठच्छाया पुरारेर्गलरुचिरुचिरा सौहृदं मेघसंघैः। विश्वद्वेषी द्विजिह्वः स्फुरदुरुपिशितैर्नित्यमाहारवृत्तिः कैः पुण्यैः प्राप्तमेतत्सकलमपि सखे चित्रवृत्तं मयूर ॥ १७८ ॥ चक्रवाकः ॥ त्यज चक्रवाकि शोकं बधान धैर्यं सहस्व समयममुम्। अयमेव वासरमणिर्हरिष्यते शापमूर्छां ते ॥ १७९ ॥ अस्तं गतोऽयमरविन्दवनैकबन्धुर्भास्वान्न लङ्घयति

१ गुदस्थानम्. २ मेघनादेन सजातानन्दाः. ३ मयूरः. ४ विघटित व्यालावलीना बन्धनं यस्य.

कोऽपि विधिप्रणीतम् । हे चक्र धैर्यमवलम्ब्य विमुञ्च शोकं धीरास्तरन्ति विपदं न तु दीनचित्ताः ॥ १८० ॥ शुकः ॥ अखिलेषु विहंगेषु हन्त स्वच्छन्दचारिषु । शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥ १८१ ॥ किंशुके[1] शुक मा तिष्ठ चिरं भाविफलेच्छया। बाह्यरङ्गप्रसङ्गेन के के नानेन वञ्चिताः ॥ १८२ ॥ काकाः किं किं न कुर्वन्ति क्रोङ्कारं यत्र यत्र वा। शुक एव परं वक्ति नृपहस्तोपलालितः ॥ १८३ ॥ शुक तव पठनं व्यसनं[2] नैव गुणः किंतु सद्गुणाभासः। समजनि येनामरणं[3] शरणं ते पञ्जरे वासः ॥ १८४ ॥ कीर नीरसकरीरपादपे किं स्थितोऽसि कथयामि धीरतः। मामकीनसहकारपादपा दुःसमीरलहरीभिराहताः ॥ १८५ ॥ सुभाषितस्याध्ययनानुसक्तं शुकं वराकाः प्रहसन्ति काकाः। तमेव संसत्सु गिरं किरन्तं दृष्ट्वा भवन्ति त्रपयानतास्याः ॥ १८६ ॥ द्राक्षां प्रदेहि मधु वा वदने निधेहि देहे विधेहि किमु वा करलालनानि। जातिस्वभावचपलः पुनरेष कीरस्तत्रैव यास्यति कृशोदरि मुक्तबन्धः ॥ १८७ ॥ हे कीर कैरवसुगीरिति संकलय्य मा मात्र संरससि सज्जनरञ्जनाय। बालोऽपि यत्र कलकण्ठसुकण्ठपीठः संलेढि कोमलकुहूकृतपूर्णकर्णः ॥ १८८ ॥ इदमपटु कपाटं जर्जरः पञ्जरोऽयं विरमति न गृहेऽस्मिन्क्रूरमार्जारयात्रा। शुक मुकुलितजिह्वः स्थीयतां किं वचोभिस्तव वचनविनोदैर्नादरः पामराणाम् ॥१८९॥ अमृतवचनलीलाविभ्रमैरन्नपानं रचय चतुर कीर भ्रान्तचित्तेषु तेषु। अकलितपरसेवातापपापः पिकोऽसौ भजतु विपिनवाटीमेष पीयूषकण्ठः ॥ १९० ॥ अमुष्मिन्नुद्याने विहगखल एष प्रतिकलं विलोलः कौकोलः[4] क्वणति खलु यावत्कटुतरम् । सखे तावत्कीर द्रढय हृदि वाचं च सकलां न मौनेन न्यूनो भवति गुणभाजां गुणगणः ॥१९१॥ इयं पल्लीभिल्लैरनुचितसमारम्भरसिकैः समन्तादाक्रान्ता विषविषमबाणप्रणयिभिः। तरोरस्य स्कन्धे गमय समयं कीर निभृतं न वाणी कल्याणी तदिह मुखमुद्रैव शरणम्॥१९२॥ अमुष्मिन्नारामे तरुभिरभिरामे विटपिनः स्फुटं नृत्यद्भृङ्गीविविधनवसंगीतकलनात्। परानन्दैः पूर्णाः क इव तव वर्णावलिपदक्रमश्रोता वेत्ता द्विजवर शुक श्राम्यसि कुतः ॥ १९३ ॥ अये कीर श्रेणीपरिवृढ वृथा वासरशतं किमर्थं त्वं व्यर्थं क्षपयसि पलाशे रभसतः। यदा पुष्पारम्भे मुखमलिनिमा किंशुकतरोस्तदैवेदं ज्ञातं फलपरिचयो दुर्लभतरः ॥ १९४ ॥ अपारः पाथोधिः पुलिनपदवी योजनशतं निरालम्बो मार्गो वियति किल शून्या दश दिशः। इतीवायं कीरः कतिपयपदान्येव गगने मुहुर्भ्राम्यन्भ्रान्त्यन्पतति गुणवृक्षे पुनरपि ॥ १९५ ॥ द्विजकुलपते मेधासिन्धो सुभाषितकोविद त्वयि गृहमुपायाते जातं बहूपकृतं मम। यदिह नियतं बाला वृद्धाः स्त्रियः परिचारिकाः शुक न भवतो नाम प्रीतं गृणन्ति मुहुर्मुहुः ॥ १९६ ॥ वासः काञ्चनपिञ्जरे नृपकराम्भोजैस्तनूमार्जनं भक्ष्यं स्वादुर-

---

१ पलाशवृक्षे. २ दोष.. ३ मरणपर्यन्तम्. ४ द्रोणकाक.

सालदाडिमफलं पेयं सुधाभं पयः । पाठः संसदि रामनाम सततं धीरस्य कीरस्य मे हा हा हन्त तथापि जन्मविटपिक्रोडं मनो धावति ॥ १९७ ॥ सत्सांगत्यमवाप्य यः पुरवने नानारसास्वादवत्कीरः शास्त्रविचारचारुवचनैरानन्दकारी जने । दैवेनास्फुटवाक्प्रपञ्चपिहितं श्रोत्रस्य तस्याटवीं प्राप्तस्यात्मसभाप्रगल्भकपिषु स्यान्मौनमेवोचितम् ॥ १९८ ॥ प्रातः कीर कठोरचञ्चुकषणक्रोधायितैः कूजितैः किं माधुर्यनिषिक्तसूक्तिविशदः कण्ठावटुः शोष्यते । सेयं दैववशाद्दशा परिणता राजन्यपात्रस्य ते भिद्भैश्छिद्रितभित्तिमुद्रितघटः प्राप्तो यतः पञ्जरः ॥ १९९॥ माणिक्यद्रवलिप्तमौक्तिकतुलां बिभ्रन्ति नो दाडिमीबीजान्येष निरीक्षते न रमते हैमेऽप्यहो पञ्जरे । तत्ताद्दग्वनवाससंमदमहामोदैकमेदस्विनी वृत्तिर्मे गलितानया हतगिरेत्येव शुकः शोचति ॥ २०० ॥ याते यातमधःस्थिते स्थितमुपर्यालोकिते लोकितं यच्चुद्यानशुकोऽयमाकलयते शुद्धान्तहस्तस्थितः । तत्सर्वं मणिभित्तिमेत्य भवतां छाया शुकाङ्गीकृतं तस्मिन्कर्णसुधां वितन्वति गिरं तूष्णीं किमु स्थीयते ॥ २०१ ॥ स्वस्वव्यापृतिमग्नमानसतया मत्तो निवृत्ते जने चञ्चूकोटिविघट्टितारपुटो यास्याम्यहं पञ्जरात् । इत्थं कीरवरे मनोरथमयं पीयूषमास्वादयत्यन्तः संप्रविवेश वारणकराकारः फणिग्रामणीः ॥ २०२ ॥ दृष्ट्वा शाखावकीर्णं फलभरनमितं भूमिभागावनद्धं त्यक्त्वा शालप्रकाण्डं पनसमुपगतश्चिन्तयित्वेति कीरः । हत्वा चञ्चुं प्रहर्षाद्विगलितपयसा संभृताशेषपक्षो भिन्नश्चोड्डीय गन्तुं गगनपरिचिता या गतिः सापि नष्टा ॥ २०३ ॥ काकः ॥ वयं काका वयं काका जल्पन्तीति प्रगे[1] द्विकाः[2] । तिमिरारिस्तमो हन्यादिति शङ्कितमानसाः ॥ २०४ ॥ तुल्यवर्णच्छदः कृष्णः कोकिलैः सह संगतः । केन विज्ञायते काकः स्वयं यदि न भाषते ॥ २०५ ॥ अहो मोहो वराकस्य[3] काकस्य यदसौ पुरः । सरीसर्ति नरीनर्ति यदयं शिखिहंसयोः ॥ २०६ ॥ आमरणादपि विरुतं कुर्वाणाः स्पर्धया सह मयूरैः । किं जानन्ति वराकाः काकाः केकारवं कर्तुम् ॥ २०७ ॥ तत्काक त्वयि युक्ताः कटुवाग्वैवर्ण्यधूर्तताशुचिताः । यदि विष्ठाकृमिपुष्टे तत्र न दोषा हि तच्चित्रम् ॥ २०८ ॥ विधिरेव विशेषगर्हणीयः करट[4] त्वं रट[5] कस्तवापराधः । सहकारतरौ चकार यस्ते सह वासं सरलेन कोकिलेन ॥ २०९ ॥ काकस्य गात्रं यदि काञ्चनस्य माणिक्यरत्नं यदि चञ्चुदेशे । एकैकपक्षे ग्रथितं[6] मणीनां तथापि काको न तु राजहंसः ॥२१०॥ करालदेहेन विभीषणेन दिवाभितेनोल्कृतपक्षसंघाः । पुरीषपुष्टा अपि न त्यजन्ति स्वमाश्रयं ते किल युक्तमेतत् ॥ २११ ॥ त्रोटीपुटं करट कुड्मलयाद्य तात यावत्प्रतिव्रजति नाकमयं मरालः । नो चेदमङ्गलकठोररवा विहगाः सर्वे भुवीति निजसंसदि शंसिता नः ॥ २१२ ॥ प्रत्यङ्गणं प्रतितरुं प्रतिवारितीरं काकाश्चरन्ति चलचञ्चुपुटा रटन्तः । नो यान्ति तृप्तिमथ मण्डितपुण्डरीकखण्डे वसन्निह तृप्यति राजहंसः ॥ २१३ ॥ कृष्णं व-

---

१ प्रात काले. २ द्वौ ककारौ नाम्नि विद्येते येषा ते ३ निन्द्य . ४ काक. ५ शब्द कुरु. ६ ग्रथनम्.

पुर्वहतु चुम्बतु सत्फलानि रम्येषु संवसतु चूतवनान्तरेषु। पुंस्कोकिलस्य चरितानि करोतु कामं काकः कलध्वनिविधौ स तु काक एव ॥ २१४ ॥ पथि निपतितां शून्ये दृष्ट्वा निरावरणाननां दधिभृतघटीगर्वोन्नद्धः समुद्धृतकन्धरः। निजसमुचितास्तास्ताश्चेष्टा विकारशताकुल यदि न कुरुते काणं काकः कदा नु करिष्यति ॥ २१५ ॥ गात्रं ते मलिनं तथा श्रवणयो रुद्वेगकृत्केङ्कृतं भक्ष्यं सर्वमपि स्वभावचपलं दुश्चेष्टितं ते सदा। एतैर्वायससंगतोऽस्य विन यैर्दोषैरमीभिः परं यत्सर्वत्र कुटुम्बवत्सलमतिस्तेनैव धन्यो भवान् ॥ २१६ ॥ रूक्षस्यामधुरस्य चातिमलिनच्छायस्य धृष्टस्य च क्षुद्रस्य क्षतकारिणोऽतिचपलस्याह्लादविच्छेदिनः येयं निम्बफलेषु काक भवतस्तिक्तेषु नैसर्गिकी प्रीतिस्तत्सदृशं विधेर्विलसितं निष्पन्नमेतच्चिरा ॥ २१७ ॥ कर्णारुंतुदम[1]न्तरेण रणितं[3] गाहस्व काक स्वयं माकन्दं[4] मकरन्दशालिनमिह त्व मन्महे कोकिलम्। धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां नेपालक्षितिपालफाल पतिते पङ्के न शङ्केत कः ॥२१८॥ काक त्वं फलनम्रमाम्रविपिनं दैवात्समासादयन्किं कर्णं बधिरीकरोषि परुषक्रेङ्कारकोलाहलैः। मौनं चेदवलम्बसे रतभरप्रक्रान्तपुंस्कोकिलभ्रान्त्या त्वयि संचरन्ति न कथं मुग्धाः कटाक्षच्छटाः ॥२१९॥ नो चारू चरणौ न चापि चतुरा चञ्चूर्न वाच्यं वचो नो लीलाचतुरा गतिर्न च शुचिः पक्षग्रहोऽयं तव। क्रूरक्रेङ्कृतिनिर्भरां गिरमिह स्थाने वृथैवोद्गिरन्मूर्ख ध्वाङ्क्ष न लज्जसेऽप्यसदृशं पाण्डित्यमुन्नाटयन् ॥ २२० ॥ यस्याकर्ण्य वचः सुधाकवलितं वाचंयमानाम[5]पि व्यग्राणि व्यथयन्ति मन्मथकथाश्चेतांसि चैत्रोत्सवे। रे रे काकवराक साकम[6]मुना पुंस्कोकिलेनाधुना स्पर्धाबन्धमुपेयुषस्तव तु किं लज्जापि नोज्जागरा ॥ २२१ ॥ आलापं कलकण्ठिका न कुरुते कीरा न धीरध्वनिं व्याहारं कलयन्ति कोमलगिरः कूजन्ति नो बर्हिणः। नीराडम्बरदुर्दिनाम्बरतले दूरे द्विरेफध्वनिः काकाः केवलमेव केङ्कृतरवैः[7] कुर्वन्ति कर्णज्वरम् ॥ २२२ ॥ बन्धं लब्धवतः परस्य वदनं भिक्षाशया पश्यतः स्वावासच्युतिवेदनां विदधतः कान्तां विना सीदतः। भ्राम्यन्तः सह भार्यया प्रतिदिशं प्रत्यापगं प्रत्यगं कीरस्याध्ययनं हसन्ति विविधक्रीडालसा वायसाः॥२२३॥ किं केकीव शिखण्डमण्डिततनुः किं कीरवत्पाठकः किं वा हंस इवाङ्गनागतिगुरुः सारीव किं सुस्वरः। किं वा हन्त शकुन्तबालपिकवत्कर्णामृतं स्यन्दते काकः केन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥ २२४ ॥ अत्रस्थः सखि लक्षयोजनगतस्यापि प्रियस्यागमं वेत्त्याख्याति च धिक्शुकादय इमे सर्वे पठन्तः स्थिताः। मत्कान्तस्य वियोगतापदहनज्वालावलीवारिदः काकस्तेन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥ २२५ ॥ अस्मिन्नम्भोदवृन्दध्वनिजनितरुषि प्रेक्षमाणेऽन्तरिक्षं मा काक व्याकुलो भूस्तरुशिखरशवक्रव्यलेशानशान। धत्ते मत्तेभकुम्भव्यतिकरकरनग्रामव्यग्राग्रजाग्रद्ग्रासव्यासक्तमुक्ताधवलितकवलो न स्पृहा-

१ पीडाजनकम्. २ विना. ३ शब्दितम् ४ आम्रवृक्षम्. ५ मौनिनाम् ६ सह. ७ पक्षिविशेष..

मत्र सिंहः ॥ २२६ ॥ बकः ॥ अम्भसि लीनान्दीनान्मीनान्कीनाशवन्नयासि । धिग्धिक्च-लतां तव तां कुटिलद्विजलं बकोट बककोट ॥ २२७ ॥ एष बकः सहसैव विपन्नः श्लाघ्य-महो क्व नु तद्व्रतमस्य । साधु कृतान्त न कश्चिदपि त्वां वञ्चयितुं सुशठोऽपि समर्थः ॥२२८॥ न कोकिलानामिव मञ्जु गुञ्जितं न लब्धलास्यानि गतानि हंसवत् । न बर्हिणानामिव चित्र-पक्षिता गुणस्तथाप्यस्ति बके बकव्रतम् ॥ २२९ ॥ बकोट ब्रूमस्त्वां लघुनि सरसि क्वापि शफरैस्तव न्याय्या वृत्तिर्न पुनरवगाढं समुचितः । इतश्चेतश्चाभ्रंलिहलहरिहेलातरालितक्षि-तिग्रग्रासैकग्रहिलतिमिपोतः परिरपाम् ॥ २३० ॥ नैर्मल्यं वपुषस्तवास्ति वसतिः पद्माकरे जायते मन्दं याहि मनोरमां वद गिरं मौनं च संपादय । धन्यस्त्व बक राजहंसपदवीं प्रा-प्तोऽसि किं तैर्गुणैर्नीरक्षीरविभागकर्मनिपुणा शक्तिः कथं लभ्यते ॥ २३१ ॥ जातिस्तस्य[1] न मानसेन शुचिभिर्[2] वृत्तिर्[3] मृणालाङ्कुरैर्न ब्रह्मोद्वहनेन[4] निर्मलयशः प्राप्ता न वाचः कलाः । जीवत्सत्त्वधनेन[5] बाह्यधवलो भ्राम्यन्सगर्वं पुनर्मिथ्यैवोन्नतकन्धरः शठबको हंसैः सह स्पर्धते ॥ २३२ ॥ रे रे शिष्टबकोट नाकतटिनीतीरे तपस्विव्रतं ध्यानेनानिमिषोपभोगमनसा युक्तं करोषीदृशम् । एवं यत्किल मानसस्य पदवीं काङ्क्षस्ययुक्तं हि तन्नीरक्षीरविवेकनिर्मलधियो हंसस्य नान्यस्य वा ॥ २३३ ॥ न भ्रूणां स्फुरणं न चञ्चुचलनं नो चूलिकाकम्पनं न ग्री-वाचलनं मनागपि न यत्पक्षद्वयोत्क्षेपणम् । नासाग्रे क्षणमेकपाददमनं कष्टैकनिष्ठं परं याव-त्तिष्ठति हीनमीनवदनस्तावद्बकस्तापसः ॥ २३४ ॥ घूकः ॥ यद्यपि तरणेः किरणैः सक-लमिदं विश्वमुद्यतं विदधे । तदपि न पश्यति घूकः पुराकृतं भुज्यते कर्म ॥ २३५ ॥ सारङ्गः ॥ अये वापी हंसान्निजवसतिसंकोचपिशुनां कुरुध्वं मा चेतो वियति वहतोर्वीक्ष्य विहगान् । अमी सारङ्गास्ते भुवनमहनीयव्रतभृतो निरीहाणा येषां तृणमिव भवन्त्यम्बुनि-धयः ॥ २३६ ॥ खद्योतः ॥ जर्जरतृणाग्रमदहन्सर्षपकणवत्प्रकाशयन्नूनम् । कीटत्वमा-त्मतत्त्वात्खद्योत ख्यापयस्यवनिम् ॥ २३७ ॥ घनसन्तमसमलीमस दशदिशि निशि यद्वि-राजसि तदन्यत् । कीटमणे दिनमधुना तरणिकरान्तरितसितकिरणम् ॥ २३८ ॥ क्वापि गतः पतिरह्नां जलदान्तरितः शशी सनक्षत्रः । शून्ये तमसि भवानपि खद्योत द्योततां नाम ॥ २३९ ॥ इन्दुः प्रयास्यति विनश्यति तारकश्रीः स्थास्यन्ति लीढतिमिरा न मणि-प्रदीपाः । अन्ध समग्रमपि कीटमणे भविष्यत्युन्मेषमेष्यति भवानपि दूरमेतत् ॥ २४० ॥ भ्राजिष्णवो नभसि मेघकृतान्तराले स्वल्पप्रभा अपि परैरनिरस्तभासः । खद्योतकाः प्रक-टितोरुतरुप्रभावास्तावन्न सप्ततुरगः समुदेति यावत् ॥ २४१ ॥ अदृष्टव्यापारं[6] गतवति दि-

---

१ जन्म. २ शुभ्रैः ३ जीवनम् ४ ब्रह्मण उद्वहनेन वाहनतया पृष्ठे धारणेन. ५ जीवन्तो ये सत्त्वा मत्स्यादयस्तद्रूपेण धनेन हेतुना. ६ दर्शनव्यापाररहित यथा स्यात्तथा.

नानामधिपतौ [1]यशःशेषीभूते शशिनि [2]गतधाम्नि ग्रहगणे । तथा ध्वान्तं जातं जगदुपगते मेघसमये यथामी गण्यन्ते तमसि पटवः कीटमणयः ॥ २४२ ॥

---

## स्थलचरान्योक्तयः ।

**सिंहः** ॥ एकोऽहमसहायोऽहं कृशोऽहम[3]परिच्छदः । स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥ १ ॥ मृगेन्द्र वा मृगारिं वा सुखं व्याहरतां जनः । तस्योभयमपि श्लाघ्यं क्रीडादलितदन्तिनः ॥ २ ॥ मृगेभ्यो रक्ष्यते क्षेत्रं नरैस्तृणमयैरपि । सिंहाक्रान्तं पुनर्मूढ न हयैर्न च दन्तिभिः ॥ ३ ॥ मृगैर्नष्टं शशैर्लीनं वराहैश्चलितं स्थलात् । हयानां हेषितं श्रुत्वा सिंहैः पूर्ववदासितम् ॥ ४ ॥ खनन्नाखुबिलं सिंहः पाषाणशकलाकुलम् । प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥ ५ ॥ जीर्णोऽपि [4]क्रमहीनोऽपि कृशोऽपि यदि केसरी । तथापि यूथनाथस्य शङ्कातङ्काय कल्पते ॥ ६ ॥ नाभिषेको न संस्कारः सिंहस्य क्रियते वने । विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ ७ ॥ वे[5]तण्डगण्डकण्डूतिपाण्डित्य[6]परिपन्थिना । हरिणा [7]हरिणालीषु कथ्यतां कः पराक्रमः ॥ ८ ॥ उत्तुङ्गमत्तमातङ्गमस्तकन्यस्तलोचनः । आसन्नेऽपि च [8]सारङ्गे न वाञ्छां कुरुते [9]हरिः ॥ ९ ॥ जातः स्तन्यं न जग्राह कण्ठीरवकिशोरकः । चक्षुर्व्यापारयामास कुञ्जे कुञ्जरशालिनि ॥ १० ॥ वरमुन्नत[10]लाङ्गूलात्सदा[11]धूननभीषणात् । सिंहात्पादप्रहारोऽपि न शृगालाधिरोहणम् ॥ ११ ॥ शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक । कुले तस्मिन्प्रजातोऽसि गजो यत्र न हन्यते ॥ १२ ॥ यस्मिञ्जीवति सिंहे वनमिदमासीद्दुरासदं द्विरदैः । घटयन्ते कटिसूत्रं तस्य खराभिः शबरशिशवः ॥ १३ ॥ एकाकिनि वनवासि[12]न्यराजलक्ष्मण्यनीतिशास्त्रज्ञे । [13]सत्त्वोच्छ्रिते मृगपतौ राजेति गिरः परिणमन्ति ॥ १४ ॥ अनिशं मतंगजाना बृंहित[14]माकर्ण्यते यथा विपिने । मन्ये तथा न जीवति [15]गजेन्द्रपलकवलनः सिंहः ॥ १५ ॥ यद्यपि च दैवयोगात्सिंहः पतितोऽतिदुस्तरे कूपे । तदपि च वाञ्छति सततं करिकुम्भविदारणं मनसि ॥ १६ ॥ यद्यपि रटति सरोषं मृगपतिपुरतोऽपि मत्तगोमायुः । तदपि न कुप्यति सिंहोऽप्यसदृशपुरुषेषु कः कोपः ॥ १७ ॥ जठरज्वलनज्वलताप्यपगतशङ्कं समागतापि पुरः । करिणामरिणा हरिणा हरिणाली हन्यतां नु कथम् ॥ १८ ॥ हेलाविदलितकरिकुल कण्ठीरव कीदृशः प्रकोपोऽयम् । लोले बालशृगाले केवलकोलाहलाधारे ॥ १९ ॥ गर्जितमाकर्ण्य मनागङ्के मातुर्निशार्धजातोऽपि । हरिशिशुरुत्पतितुं द्रागङ्गान्याकुञ्च्य लीयते निभृतम् ॥ २० ॥ वयोऽभिमानादपमानता चेद्वि-

---

१ यशोमात्रावशिष्टे २ गततेजसि. ३ परिवारहीन. ४ पराक्रमरहितः. ५ मत्तगजानाम्. ६ वैरिणा. ७ मृगपङ्क्तिषु. ८ मृगे ९ सिंह. १० पुच्छम्. ११ कम्पनम्. १२ राजचिह्नरहिते. १३ बलोन्नते. १४ गर्जितम्. १५ हस्तिमासग्रासकः.

धीयते फेरुजरत्तरेण । हेलाहतानेककरीन्द्रयूनोर्हरीन्द्रसूनोरपि कापि हानिः ॥ २१ ॥ भिनत्ति भीमं करिराजकुम्भं बिभर्ति वेगं पवनादतीव । करोति वासं गिरिगह्वरेषु तथापि सिंहः पशुरेव नान्य. ॥ २२ ॥ गम्यते यदि मृगेन्द्रमन्दिरे लभ्यते करिकपोलमौक्तिकम् । जम्बुकालयगतेन लभ्यते वत्सपुच्छखुरचर्मखण्डनम् ॥ २३ ॥ येन भिन्नकरिकुम्भविस्खलन्मौक्तिकावलिभिराञ्चिता मही । अद्य तेन हरिणान्तिके कथं कथ्यतां न हरिणा पराक्रमः ॥ २४ ॥ हरिरलसविलोचनः सहेल बकमवलोक्य पुनर्जगाम निद्राम् । अधिगतपतिविक्रमास्तभीतिर्न तु वनितास्य विलोकयांचकार ॥ २५ ॥ उत्तुङ्गशैलशिखरास्थितपादपस्य काकोऽपि पक्वफलमालभते सपक्षः । सिंहो बली गजविदारणदारुणोऽपि सीदत्यहो तरुतले खलु हीनपक्षः ॥ २६ ॥ अन्तर्वलान्यहममुष्य मृगाधिपस्य वाचा निवेद्य कथमद्य लघूकरोमि । जानन्ति किं तु करजक्षतकुम्भिकुम्भनिर्मुक्तमौक्तिकमयानि वनान्तराणि ॥२७॥ आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा । मत्तेभकुम्भतटपाटनलम्पटस्य नादं करिष्यति कथं हरिणाधिपस्य ॥ २८ ॥ भिन्ना महागिरिशिलाः करजाग्रजाग्रदुद्दामशौर्यनिकरैः करटिभ्रमेण । दैवे पराञ्चि करिणामरिणा तथापि कुत्रापि नापि खलु हा पिशितस्य लेशः ॥ २९ ॥ पारीन्द्रशावक न तावकरीतिरेषा वेषान्तरैर्विहरसि श्वशृगालशावैः । कुम्भीन्द्रकुम्भदलनोत्पतनाक्रमेच्छां वंशोचितं न खलु रीतिमुरीकरोषि ॥ ३० ॥ उत्प्लुत्य यः शिखरिणं मदकुम्भिकुम्भमुद्भिद्य सानुशतमायतमुच्छलङ्घे । पञ्चाननो नियतया जरयाभिभूतः सोऽयं करौ लिहति बृंहितलोहिताक्षः ॥ ३१ ॥ दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः । इदानीं लोकेऽस्मिन्ननुपमशिखाना पुनरयं नखाना पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥ ३२ ॥ न यत्र स्थेमानं दधुरतिभयभ्रान्तनयनागलद्दानोद्रेकभ्रमदलिकदम्बाः करटिनः । लुठन्मुक्ताहारे भवति परलोकं गतवतो हरेरद्य द्वारे शिव शिव शिवानां कलकलः ॥ ३३ ॥ कुरङ्गीणां यूथं निभृतमिदमङ्गीकृतभयं निरातङ्को यन्निर्दयहृदयभावोऽर्दयतु तत् । निवेद्यो वा कस्मिन्नयमविनयः केसरियुवा हठान्मत्तेभानां युवतिषु विधत्ते नखपदम् ॥ ३४ ॥ स्थितिं नो रे दध्याः क्षणमपि मदान्धेक्षण सखे गजश्रेणीनाथ त्वमिह जटिलाया वनभुवि । असौ कुम्भिभ्रान्त्या खरनखरविद्रावितमहागुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपतिः ॥ ३५ ॥ पिब स्तन्यं पोत त्वमिह मददन्तावलधिया दृगन्तानाधत्से किमिति हरिदन्तेषु परुषान् । त्रयाणां लोकानामपि हृदयतापं परिहरन्नयं धीरं धीरं ध्वनति नवनीलो जलधरः ॥ ३६ ॥ क्षुद्राः सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्धतास्तस्यैकस्य पुरस्तवी माहिमहः सिंहस्य विश्वोत्तरम् । केलिः कोलकुलैर्मदो मदकलैः कोलाहलो नाहलैः सहर्षो महिषैश्च यस्य

---

१ गजा.. २ स्थितिम्. ३ सिंहस्य. ४ कोष्ट्रीनाम्. ५ नीचा .

मुमुचे साहंकृते हुंकृते ॥ ३७ ॥ कोलः केलिमलंकरोतु करिणः क्रीडन्तु कान्तासखाः कासारे वनकासराः सरभसं मज्जन्त्विह स्वेच्छया। अभ्यस्यन्त्विभयोषितश्च हरिणा भूयोऽपि रूपां गतिं कान्तारान्तरसंचरिष्णुरधुना पञ्चाननो वर्तते ॥ ३८ ॥ नास्योच्छ्रायवती तनुर्न दशनौ नो दीर्घदीर्घः[1] करः सत्यं वारण नैष केसरिशिशुस्त्वाडम्बरैः स्पर्धते। तेजोबीजमजेयमस्य हृदये न्यस्तं पुनर्वेधसा तादृक्तादृशमेव येन सुतरां भोज्यं पशुं मन्यते॥३९॥ क्षुत्क्षामोऽपि[2] जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशामापन्नोऽपि विपन्नदीधितिरपि[3] प्राणेषु गच्छत्स्वपि। मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ ४० ॥ येनानर्गलकालकेलिकलितप्रत्यग्रकादम्बिनी[4]धाराधोरणिधौतधातुषु पुरा शैलेषु लीलायितम्। सोऽयं शृङ्गनिपातभग्नचरणः स्फारस्फुरत्फेरवी[5]फूत्कारैः कुपितोऽद्य खादति मुहुः पाणी मृगग्रामणीः ॥ ४१ ॥ ग्रामाणामुपशल्यसीमनि मदोद्रेकस्फुरत्सौष्ठवाः फेत्कारध्वनिमुद्गिरन्ति बहवः संभूय गोमायवः। सोऽन्यः कोऽपि घनाघनध्वनिघनः पारीन्द्रगुञ्जारवः शुष्यद्दण्डमलोलशुण्डमचलत्कर्णं गतैर्यैः श्रुतः ॥ ४२ ॥ एणः क्रीडति शूकरश्च खनति द्वीपी च गर्वायते क्रोष्टा क्रन्दति वल्गते च शशको वेगाद्वुरुर्धावति। निःशङ्कः करिपोतकस्तरुलतामुन्मोटते लीलया हंहो सिंह विना त्वयाद्य विपिने कीदृग्दशा वर्तते ॥ ४३ ॥ हे मातङ्ग मदाम्बुडम्बरतया रोलम्बरोलं वहद्वन्यानामवलम्बनं वनमिदं भुक्तं यदुत्कण्ठसे। दृष्टस्तत्किमहो महोन्नतधराधौरेयधात्रीधरप्रस्थप्रस्थितमेघयूथमथ नोत्कण्ठेन कण्ठीरवः ॥ ४४ ॥ यस्याँवन्ध्यरुषः प्रतापवसतेर्नादेन धैर्यद्रुहः शुष्यन्ति स्म मदप्रवाहसरितः सद्योऽपि दिग्दन्तिनाम्। दैवात्कष्टदशावशंगतवतः सिंहस्य तस्याधुना कर्षन्त्येव करेण केसरसटाभारं जरत्कुञ्जराः ॥ ४५ ॥ यः शौर्यावधिरेव यस्य सहसा दिग्दन्तिनोऽप्यन्तिकं नायाताः किल येन विन्ध्यवसुधा गम्या न कस्याप्यभूत्। तस्मिन्कौतुकिना त्वया करिपतौ लुप्ते कपोलस्थलीभृङ्गः केसरिवीर संप्रति पुनः कुत्रैष विश्राम्यतु ॥ ४६ ॥ यूना येन विभिन्नवारणघटाकुम्भोच्छलन्मौक्तिकश्रेणीभिः परिपूरितास्तटभुवो भूमीभृतां कोटिशः। तस्यैवाद्य निवाससीम्नि कलभाः क्रीडन्ति निःसाध्वसं पारीन्द्रस्य जरातुरस्य तदहो जीर्णो जिगीषारसः ॥ ४७ ॥ कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेच्छूकरः कः कः कं कमलाकरं विमलकं कर्तुं करी नोद्यतः। के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥ ४८ ॥ मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः सारङ्गा महिषा मदं व्रजत किं शून्येषु शूरा न के। कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुरः सिन्धुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम्

१ शुण्डादण्डः २ क्षुधया कृशः. ३ क्षीणतेजाः. ४ नूतनमेघमाला. ५ जम्बुकी. ६ सफलकोपस्य. ७ वृद्धगजा.

मृगराजरणाभिलाषम् ॥ ६८ ॥ भो भोः करीन्द्र दिवसानि कियन्ति तावदस्मिन्मरौ[1] समतिवाहय[2] कुत्रचित्त्वम् । रेवाजलैर्निजकरेणुकरप्रयुक्तैर्भूयः शमं गमयितासि निदाघदाहम् ॥ ६९ ॥ दानार्थिनो[3] मधुकरा यदि कर्णतालैर्दूरीकृताः करिवरेण मदान्धबुद्ध्या । तस्यैव गण्डयुगमण्डनहानिरेषा भृङ्गाः पुनर्विकचपद्मवने[4] चरन्ति ॥ ७० ॥ लाङ्गूलचालनम[5]धश्चरणावपातं भूमौ निपत्य वदनोदरदर्शनं च । श्वा पिण्डदस्य कुरुते गजपुंगवस्तु[6] धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ७१ ॥ गण्डस्थले हि मदवारिजलौघलुब्धमत्तभ्रमद्भ्रमरपादतलाहतोऽपि । कोपेन गच्छति नितान्तबलोऽपि नागस्तुल्ये बले हि बलवान्परिकोपमेति ॥ ७२ ॥ न स्वां करेणुमपि नापि निजान्किशोरान्नात्मानमेष परिशोचति वारणेन्द्रः । दावाग्निमग्नतनुरत्र यथोपसन्नान्दानार्थिनो मधुकरानधिरूढभावान् ॥ ७३ ॥ दानं[7] ददत्यपि जलैः[8] सहसाधिरूढे[9] को विद्यमानगतिर[10]ासितु[11]मुत्सहेत[12] । यद्दन्तिनः कटकटा[13]हतटान्मिमङ्क्षो[14]र्मङ्क्षू[15]दपाति परितः पटलैरलीनाम् ॥ ७४ ॥ न गृह्णाति ग्रासं न च कमलकिञ्जल्किनि जले न पङ्कैर्वाह्लादं विशति बिसभङ्गार्धशबलैः । ललन्तीं प्रेमार्द्रामपि विपहते नान्यकरिणीं स्मरन्दावभ्रष्टां हृदयदयितां वारणपतिः ॥ ७५ ॥ गले पाशस्तीव्रश्चरणयुगले गाढनिगडो दृढं स्कन्धे बद्धः शिरसि सृणिपातः[16] खरतरः । नरः स्कन्धारूढो बत रमणयोग्येऽपि विषये न जानीमोऽत्यर्थं द्विरद वद कस्मात्तव मदः ॥ ७६ ॥ निषेवन्तामेते वृषमहिषमेषाश्च हरिणा गृहाणि क्षुद्राणां कतिपयतृणैरेव सुखिनः । गजानामास्थानं मदसलिलजस्वालितभुवां तदेकं विन्ध्याद्रेर्विपिनमथवा भूपसदनम् ॥ ७७ ॥ न कुर्याः प्राखर्यं किमपि करिपोत प्रतिभिया हरीणां हेलेयं यदिह बहुवेलं ... । अकस्मादेतेषां कुटिलदृशि रोषस्पृशि ... भाविन्यो मदकरिरिद्रा वनभुवः ॥ ७८ ॥ जहीहि गुरुगर्जितं विजहि शुण्डया सीत्कृतं परिभ्रमशतैर्वनं किमु गजेन्द्र गर्वायसे । यथा न किल केसरी गिरिदरीषु निद्रां त्यजन्विमूर्च्छयति जृम्भया सुभग तावकीनं मनः ॥ ७९ ॥ रे चाञ्चल्यजुषो मृगाः श्रितनगाः कल्लोलमालाकुलामेतामम्बुधिगामिनीं व्यवसिताः संगाहितुं वा कथम् । अत्रैवोच्छलदम्बुनिर्भरमहावर्तैः समावर्तितो यद्वावेव रसातलं पुनरसौ यातो गजग्रामणीः ॥ ८० ॥ नीवारप्रसवाग्रमुष्टिकवलैर्यो वर्धितः शैशवे पीतं येन सरोजपत्रपुटके होमावशेषं पयः । तं पश्चान्मदमन्थरालिवलयव्यालुप्तगण्डं गजं सानन्दं सभयं च पश्यति मुहुर्दूरे स्थितस्तापसः[17] ॥ ८१ ॥ कर्णे चामरचारुचञ्चुकलिकाः कण्ठे मणीनां गणाः सिन्दू-

---

१ मरुदेशे २ यापय. ३ दानोदकार्थिनः. ४ प्रफुल्लकमलवने. ५ पुच्छविक्षेपणम् ६ गजश्रेष्ठ. ७ वितरणम्, (पक्षे) मदजलम्. ८ उदकैः; (पक्षे डलयोरभेदात्) जडैः ९ आक्रान्ते. १० सगतिकः; (पक्षे) बुद्धिमान्. ११ स्थातुम्. १२ शक्नुयात्. १३ गण्ड. १४ मज्जन कर्तुमिच्छोः. १५ शीघ्रम् १६ अङ्कुशपातः. १७ तृणधान्यानि

रत्नकरः शिरःपरिसरे पार्श्वान्तिके किङ्किणी। लब्धश्रेन्नृपवाहनेन करिणा बद्धेन भूषाविधिस्तत्कि भूधरधूलिधूसरतनुर्मान्यो न वन्यः करी ॥ ८२ ॥ पीतं यत्र हिमं पयः कवलिता यस्मिन्मृणालाङ्कुरास्तापार्तेन निमज्ज्य यत्र सरसो मध्ये विमुक्तः श्रमः। धिक्तस्यैव जलानि पङ्किलयतः पाथोजिनीं मथ्नतो मूलान्युत्खनतः करीन्द्र भवतो लज्जापि नो जायते ॥ ८३ ॥ तापो नापगतस्तृषा न च कृशा धौता न धूली तनोर्न स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा। दूरोत्क्षिप्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी प्रारब्धो मधुपैरकारणमहो झाङ्कारकोलाहलः ॥ ८४ ॥ नाभूवन्भुवि यस्य कुत्रचिदपि स्पर्धाकराः कुञ्जराः सिंहेनापि न लङ्घिता किमपरं यस्योद्धता पद्धतिः। कष्टं सोऽपि कदर्थ्यते[1] करिवरः स्फारारवैः फेरवैरापातालगभीरपङ्कपटलीमग्नोऽद्य भग्नोद्यमः[2] ॥ ८५ ॥ पादाघातविघूर्णिता वसुमती त्रासाकुलाः पक्षिणः पङ्काङ्कानि सरांसि गण्डकषणक्षोदक्षताः शाखिनः। प्राप्येदं करिपोतकैर्विधिवशाच्छार्दूलशून्यं वनं तत्तन्नाम कृतं विशृङ्खलतया वक्तुं न यत्पार्यते ॥ ८६ ॥ आरामोऽयमनर्गलेन बलिना भग्नः समग्रो मयेत्यन्तः संभृतहर्षवर्धितमदोदग्रः किमुन्माद्यसि। मातङ्ग प्रतिवर्षमेव भवतो भावी निदाघज्वरस्तत्रापि प्रतिकारमर्हसि सखे सम्यक्समालोचितुम् ॥ ८७ ॥ कौपं वारि विलोक्य वारणपते किं विस्मितेनास्यते प्रायो भाजनमस्य[3] संप्रति भवांस्तत्पीयतामादरात्। उन्मज्जच्छफरीपुलिन्दललनापीनस्तनास्फालनस्फारीभूतमहोर्मिनिर्मलजला दूरेऽधुना नर्मदा ॥ ८८॥ नो मन्ये दृढबन्धनात्क्षतमिदं नैवाङ्कुशाघातनं स्कन्धारोहणताडनात्परिभवं नैवान्यदेशागमम्। चिन्ता मे जनयन्ति चेतसि यथा स्मृत्वा स्वयूथ्या वने सिंहत्रासितभीतभीरुकलभा यास्यन्ति कस्याश्रयम् ॥ ८९ ॥ पत्युर्यत्पतितावशेषकवलग्रासेन वृत्तिः कृता पीतं यच्च करान्मग्राहकलुषं तत्पीतशेषं पयः। प्राणान्पूर्वतरं विहाय तदिदं प्राप्तं करिण्या फलं यद्बन्धव्रणकातरस्य करिणः क्लिष्टं न दृष्टं मुखम् ॥ ९० ॥ क्रीडाकारि तडागवारिणि गतातङ्कं न पङ्केरुहैर्वल्ली काचन शल्लकी तरुगतानाकर्षिता हर्षतः[4]। नाश्लिष्टा करिणी करेण करिणा कामातुरेणामुना दंष्ट्राभिर्विकटाननः शिव शिव व्यालोकि पञ्चाननः ॥ ९१ ॥ सान्द्रामोदवतीः स्वकीयवसतीः पङ्केरुहाणा ततीस्त्यक्त्वायं भ्रमरः करीन्द्र भवतामभ्याशमभ्यागतः। एतच्चेतसि संप्रधार्य जगतीविख्यातदानैस्तथा युष्माभिः क्रियतां यथोपरमते हास्याय नास्यागमः॥९२॥ त्यक्तो विन्ध्यगिरिः पिता भगवती माता च रेवोज्झिता त्यक्ताः स्नेहनिबद्धबन्धुरधियस्तुल्योदया दन्तिनः[5]। त्वल्लोभान्ननु हस्तिनि प्रतिदिन बन्धाय दत्त वपुस्त्वं दूरीक्रियसे लुठन्ति च शिरःपीठे कठोराङ्कुशाः ॥ ९३ ॥ स्पर्धन्तां सुखमेव कुञ्जरतया दिक्कुञ्जरैः कुञ्जरा ग्राम्या वा वनवासिनो मदजलप्रस्निग्धगण्डस्थलाः। आः कालस्य कुतूहलं शृणु

१ धिक्क्रियते. २ हतप्रयत्न.. ३ पात्रम्. ४ शबरस्त्री. ५ करिशावकाः.

सखे प्राचीनपालीमलैः प्रायः स्निग्धकपोलपालिरधमः कोलोऽपि संस्पर्धते ॥ ९४ ॥ यत्प्रत्यग्रदलावलीकवलनैर्जातोऽसि शैलोपमो यच्छायासु कदर्थितोऽसि च कदाप्यर्कांशुभिः कर्कशैः । घोराघातकिरातपत्रिपतने यैर्वारबाणायितं तन्मातङ्ग मदान्ध पारयसि किं विन्ध्याटवीपादपान् ॥ ९५ ॥ ऊर्णा नैष दधाति नापि विषयो वाहस्य दोहस्य वा तृप्तिर्नास्य महोदरस्य बहुशो घासैः [1]पलालैरपि । हा कष्टं चिरमस्य पृष्ठशिखरे गोणीसमारोपणे को गृह्णाति कपर्दकैरयमिति ग्राम्यैर्गजो हस्यते ॥ ९६ ॥ घासग्रासं गृहाण त्यज करिकलभ प्रीतिबन्धं करिण्याः पाशग्रन्थिव्रणानामविरलमधुना देहि पङ्कानुलेपम् । दूरीभूतास्तवैते शबरवरवधूविभ्रमोद्भ्रान्तदृश्या रेवातीरोपकण्ठच्युतकुसुमरजोधूसरा विन्ध्यपादाः ॥ ९७ ॥ यूथान्यग्रेगतानि प्रबलबलभृतो बद्धवैरा मृगेन्द्रा मूलादाकृष्यमाणाः सपदि तटरुहो भूरुहा निष्पतन्ति । दृष्ट्वा हृष्यन्ति हन्त प्रतिदिनमखिला भिल्लपल्ल्या अधीशा हस्तालम्बाय केषां कलयतु वदनं पङ्कमग्नः करीन्द्रः ॥९८॥ **मृगः** ॥ दूर्वाङ्कुरतृणाहारा धन्यास्तात वने मृगाः । विभवोन्मत्तचित्तानां न पश्यन्ति मुखानि यत् ॥ ९९ ॥ इह किं कुरंगशावक केदारे कलममञ्जरीं त्यजसि । तृणधन्वा तृणबाणस्तृणघटितः कपटपुरुषोऽयम् ॥ १०० ॥ तृणमुखमपि न खलु त्वां त्यजन्ति हे हरिण वैरिणः शबराः । यशसैव जीवितमिदं त्यज योजितशृङ्गसङ्ग्रामः ॥ १०१ ॥ विद्धा मृगी व्याधशिलीमुखेन मृगस्तु तत्कातरमीक्षितेन । विहाय देहं विगतव्यथैका परस्य जीवावधिराधिरासीत् ॥ १०२ ॥ कति कति न मदोद्धताश्चरन्ति प्रतिशिखरं प्रतिकाननं कुरंगाः । क्वचिदपि पुनरुत्तमा मृगास्ते मदयति यन्मद एव मेदिनीशान् ॥ १०३ ॥ अयि कु[2]रंगि त[3]पोवनविभ्रमादुपगतासि किरातपुरीमिमाम् । इह न पश्यसि दारय मारय ग्रस पिबेति शुकानपि जल्पतः ॥ १०४ ॥ अयि कुरङ्गि तुरङ्ग[illegible] [illegible]ज वनं जवनं गमनं कुरु । इह वने विचरन्ति हि नायकाः सु[illegible]लोहितलोहितसायकाः ॥ १०५ ॥ सेयं स्थली वनतृणाङ्कुरजालमेतत्सेयं मृगीति हृदि जातमुदः कुरंगः । नैवं तु वेत्ति यदिहान्तरितो लताभिरायाति सज्जितकठोरशरः किरातः ॥ १०६ ॥ रो[4]मन्थमारचय मन्थरमेत्य निद्रां मुञ्च श्रमं तदनु संचर रे यथेच्छम् । दूरे स पामरजनो मुनयः किलैते निष्कारणं हरिणपोत बिभेषि कस्मात् ॥ १०७ ॥ ऐ[5]णीगणेषु गुरुगर्वनिमीलिताक्षः किं कृष्णसार खलु खेलसि काननेऽस्मिन् । सीमामिमां क[6]लय भिन्नकरीन्द्रकुम्भमुक्तामयीं ह[7]रिविहारवसुंधरायाः ॥ १०८ ॥ कस्तूरिकां हरिण मुञ्च वनोपकण्ठं मा सौरभेण ककुभः सुरभीकुरुष्व । आस्तां यशो ननु किरातशराभिघाता भ्रातापि हन्त भविता भयतो दुरापः ॥ १०९ ॥ द्रुततरमितो गच्छ

१ धान्यस्तम्भि°. २ हरिणि. ३ तपोवनभ्रान्त्या. ४ चर्वितस्य पुनश्चर्वणम्. ५ हरिणीसंघेषु. ६ जानीहि. ७ सिंहविहारस्थानस्य.

प्राणैः कुरंग वियुज्यसे किमिति वलितग्रीवं स्थित्वा मुहुर्मुहुरीक्षसे । विदधति हतव्याधानां ते मनागपि नार्द्रता कठिनमनसामेषामेते विलोकितविभ्रमाः ॥ ११० ॥ स्थलीनां दग्धानामुपरि मृगतृष्णामुपसरंस्तृपार्तः सारङ्गो विरमति न खिन्नेऽपि मनसि । अजानानस्तत्त्वं न स मृगपतेऽन्यत्र सरसीमभूमौ प्रत्याशा न च फलति विघ्नं च कुरुते ॥ १११ ॥ पुरो रेवापारे गिरिरतिदुरारोहशिखरो धनुष्पाणिः पश्चाच्छबरनिकरो धावति पुनः । सरः सव्येऽसव्ये दवदहनदाहव्यतिकरो क्व यामः किं कुर्मो हरिणशिशुरेवं विलपति ॥ ११२ ॥ अग्रे व्याधः करधृतशरः पार्श्वतो जालमाला पृष्ठे वह्निर्दहति नितरां संनिधौ सारमेयाः । एणी गर्भादलसगमना बालकै रुद्धपादा चिन्ताविष्टा वदति हि मृगं किं करोमि क्व यामि ॥ ११३ ॥ सौरभ्येण त्रिभुवनमनोहारिणा काननेऽस्मिन्सत्कस्तूरीहरिण भवता वासितो दिग्विभागः । तस्यैतत्ते फलमुपगतं पत्रिभिर्लुब्धकाना विद्धः प्राणांस्त्यजसि न गुणः श्रेयसे निर्गुणेषु ॥ ११४ ॥ अल्पायासबलेन यत्र पतनं कृच्छ्रेण यत्रोन्नतिर्द्वारे वेत्रलतावितानगहने कष्टप्रवेशक्रमः । हे सारंग मनोरमा वनभुवस्त्यक्त्वा विशेषार्थिना किं भूभृत्कटकास्थितव्यसनिना व्यर्थं खुराः शातिताः ॥ ११५ ॥ सारंगो न लतागृहेषु रमते नो पाशुले भूतले नो रम्यासु वनोपकण्ठहरितच्छायासु [1]शीतास्वपि । तामेवायतलोचनामनुदिनं ध्यायन्मुहुः प्रेयसी शैलेन्द्रोदरकन्दरासु गतधीः शृङ्गावशेषः स्थितः ॥ ११६ ॥ आः कष्टं वनवाससाम्यकृतया सिद्धाश्रमश्रद्धया पल्ली बालकुरंग संप्रति कुतः प्राप्तोऽसि मृत्योर्मुखम् । यत्रानेककुरंगकोटिकदनक्रीडोल्लसल्लोहितस्रोतोभिः परिपूरयन्ति परिखामुड्डामराः पामराः ॥ ११७ ॥ स्वच्छन्द हरिणेन या विरहिता दैवात्समासादिता भङ्गप्रस्नुतदुग्धबिन्दुमधुरा शालेर्नवा मञ्जरी । निःश्वासानलदग्धकोमलतृणप्रख्यापितान्तर्व्यथस्तामेव प्रतिवासरं मुनिरिव ध्यायन्वने शुष्यति ॥ ११८ ॥ त्यक्तं जन्मवनं तृणाङ्कुरवती मातेव मुक्ता स्थली विश्रान्तिस्थितिहेतवो न गणिता बन्धूपमाः पादपाः । बालापत्यवियोगकातरमुखी त्यक्तार्धमार्गे मृगी मृग्यन्तः पदवी तथाप्यकरुणा व्याधा न मुञ्चन्ति माम् ॥ ११९ ॥ यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्[2]मृषा नैषां गर्वगिरः शृणोषि न च तान्प्रत्याशया धावसि । [3]काले बालतृणानि खादसि परं निद्रासि निद्रागमे तन्मे ब्रूहि कुरंग कुत्र भवता किं नाम तप्तं तपः ॥ १२० ॥ नात्र व्याधशराः पतन्ति परितो नैवात्र दावानलो नाप्युच्चावचभीतिरस्ति कुहचिन्नो वागुरा भङ्गुराः । पर्यालोच्य कुरंगकेन विहितो नक्षत्रनाथाश्रयो नो जानाति यदत्र दास्यति विधिः स्वर्भानुदन्तव्रणम् ॥ १२१ ॥ व्योमार्धे ज्वलितो रविः कवलितं दावानलैः काननं धूम्याभिर्निदिशः स्फुरन्ति परितः पन्थाः शिलादन्तुरः । इत्थं लोहितसिक्तसृक्कणि यथाप्राणं मृगे धावति व्याधेनापि शरासने

१ श्वानः. २ मिथ्या. ३ क्षुधासमये.

करुणया नारोपिताः पत्रिणः ॥ १२२ ॥ भुक्त्वा भव्यतृणानि नव्यसलिलान्यापीय वापी-
तलान्निःशङ्कं परिशील्य शीतलतरून्रोमन्थमभ्यस्यति । या सैवाद्य मृगी मृगादनुमुखप्राप्ता
शिशुं शोचते ते द्वेधा बहुधा विपद्भिरचने बीजानि नापेक्षते ॥ १२३ ॥ पाशक्षुण्णखुरस्य
बाणपतनप्रव्यक्तरक्तच्छटाछत्राङ्गस्य दवाग्निदाहविकलस्यासेदुषोऽप्याश्रमम् । धिग्दैवं वि-
षमा मृगस्य दिवसाः सर्वानुकम्पामयो मा भैषीरिति भाषणेऽपि यदभूद्वाचंयमोऽयं मुनिः
॥ १२४ ॥ शृङ्गं कन्दाशनानां नयनमृगदृशां कर्णयुग्मं च गीते व्याधे जीवोऽर्पिता त्व-
ग्वसनमिव मुनेर्जिह्वलौल्ये हि मांसम् । चन्द्रे दत्तः कलङ्कस्त्वरितपदगतिः कातराणां हि
दत्ता सारंगैर्नैव तुल्या बलिसगरनलाः कर्णजीमूतकाद्याः ॥ १२५ ॥ अग्रे कुग्रामवर्गः
पिशितरसलसच्चन्द्रचण्डायमानः पश्चाद्व्याधो वधार्थी निशितशिरकरः पादमुद्रानपायी ।
चातुर्दिक्षुर्दवाग्निः परिमितपुरुषाश्छन्नधूमान्धकारे कान्तारे कान्दिशीको हारि हरि हरिणः
कं शरण्यं प्रयातु ॥ १२६ ॥ **करभः** ॥ वपुर्विषमसंस्थानं कर्णज्वरकरो रवः । करभ[1]-
स्याशु[2]गत्यैव छादिता दोषसंहतिः ॥ १२७ ॥ दासेरको रसत्येष युक्तं भारेऽधिरोहति ।
उत्तार्यमाणोऽपि पुनर्यत्तत्र किमु कुर्महे ॥ १२८ ॥ तुभ्यं दासेर दासीयं बदरी यदि
रोचते । एतावत्तर्हि किं द्राक्षा न साक्षादमृतप्रिया ॥ १२९ ॥ दुःप्रापमम्बु पवनः परु-
षोऽतितापी छायाभृतो न तरवः फलभारनम्राः । इत्थं सखे करभ वच्मि भवन्तमुच्चैः का
संगतिः खलु मरौ रमणीयतायाः ॥ १३० ॥ अस्याननस्य भवतः खलु कोटिरेषा कण्टा-
रिका यदि भवेदविशीर्णपर्णा । योग्याः कथं करभ कल्पतरोर्लतायास्ते पल्लवा विमलवि-
द्रुमभङ्गभाजः ॥ १३१ ॥ रूक्षं वपुर्न च विलोचनहारि रूपं न श्रोत्रयोः सुखदमारटितं
कदापि । इत्थं न साधु तव किंचिदिदं च साधु तुच्छे रतिः करभ कण्टकिनि द्रुमे यत्
॥ १३२ ॥ कुमुदशबलैः फुल्लाम्भोजैः सरोभिरलंकृतां मरकतमणिश्यामां शै[3]ष्पैर्विहाय व-
नस्थलीम् । स्मरति करभो यद्वृक्षाणां चरन्मरुधन्वनां परिचयरतिः सा दुर्वारा न सा गु-
णवैरिता ॥ १३३ ॥ करभदयिते योऽसौ पीलु[4]स्त्वया मधुलुब्धया व्यपगतघनच्छाय-
स्त्यक्तो न सादरमीक्षितः । चलकि[5]सलयः सोऽपीदानीं प्ररूढनवाङ्कुरः करभदयितावृन्दै-
रन्यैः सुखं परिभुज्यते ॥ १३४ ॥ करभदयिते यत्तत्पीतं सुदुर्लभमेकदा मधुवनगतं त-
स्यालाभे विरौषि किमुत्सुका । कुरु परिचितैः पीलोः पत्रैर्धृतिं मरुगोचरैर्जगति सकले
कस्यावाप्तिः सुखस्य निरन्तरम् ॥ १३५ ॥ यस्मिन्नुच्चैर्विषमगहनान्तर्गता स्वादुवल्ली स्वे-
च्छं भुक्ता सरलितगते नात्मचेतोऽनुलग्ना । तत्तारुण्यं करभ गलितं कुत्र ते प्राग्विलासा
यत्स्वाधीनं तदपि सुलभं तेन तुष्टिं विधेहि ॥ १३६ ॥ चिन्तां मुञ्च गृहाण पल्लवमिदं ल-
क्षस्य शालस्य वा गाङ्गस्यास्य जलस्य चन्द्रवपुषो गण्डूषमेकं पिब । जीवन्द्रक्ष्यसि ताः

---

१ उष्ट्रस्य. २ शीघ्रगमनेन. ३ बालतृणैः. ४ पीलुवृक्षः. ५ पल्लवः.

पुनः करभ हे दासेरकीया भुवो रम्याः पीलुशमीकरीरबदरीकूजत्कपोताकुलाः ॥ १३७ ॥ यस्यासीन्नवपीलुपत्रबदरग्रासोऽपि संतुष्टये दीर्घाध्वन्यनुगम्यते न पदवी यस्यास्य यूथै-रपि । सोऽयं संप्रति याति बालकरभः क्षीणोद्यमः क्षामतां मन्ये नूनमनेन दैवहतकेना-स्वादितं तन्मधु ॥ १३८ ॥ पीलूनां फलवल्कषायमधुरं रोमन्थयित्वा मरौ शाखाग्रं यदखादि चारुकरभो वक्रार्पितं प्रेमतः । तत्स्मृत्वा करभेण खेदविधुरं दीर्घं तथा फूत्कृतं प्राणानाम-भवत्तदेव सहसा प्रस्थानतूर्यं यथा ॥ १३९ ॥ यस्याः संभृतमालवालवलयं भूपालशृङ्गा-रिणी शृङ्गारोदरविप्रलम्भविधुरैर्नारैः सुधाबन्धुभिः । तामेता मृदुलप्रवालललितां द्राक्षाल-तामारटन्नुन्नग्रीवः प्रकटीकृतार्धदशनो दासेरकः कृन्तति ॥ १४० ॥ रासभः ॥ रे रे रा[१]-सभ वस्त्रभारवहनात्कुग्रासमश्नासि किं राजा[२]श्वावसथं प्रयाहि चैणका[३]भ्यूषान्सुखं भक्षय । सर्वान्पुच्छवतो हया इति वदन्त्यत्राधिकारे स्थिता राजा तैरुपदिष्टमेव मनुते सत्यं तै-टस्थाः[४] परे ॥ १४१ ॥ वृषभः ॥ नास्य भारग्रहे शक्तिर्न च वाहगुणः क्वचित् । देवागारे बलीवर्दस्तथाप्यश्नाति भोजनम् ॥ १४२ ॥ गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते । असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥ १४३ ॥ जाल्मो गुरुः सुघृष्टो वामेतरचरणभेद-उपदेशः । ख्यातिर्गुणधवल इति सुख भ्रम वृषभ रथ्यासु ॥ १४४ ॥ अनसि[५] सीदति सै-कतवर्त्मनि[६] प्रचुरभारभरक्षपितोदके । गुरुभरोद्धरणोद्धुरकन्धरं स्मरति सारथिरेष धुरंधरम् ॥ १४५ ॥ एतानि बालधवल प्रविहाय कामं गोष्ठाङ्गणे तरलतर्णकचेष्टितानि । स्कन्धं निधेहि धुरि पूर्वधुरीणमुक्ते नेतव्यतामुपगतोऽस्ति तवैव भारः ॥ १४६ ॥ गुरुर्नायं भारः क्वचिदपि न पन्थाः स्थपुटितो न ते कुण्ठा शक्तिर्वहनमपि तेऽङ्गेन विकलम् । इह त्वङ्के नान्यस्तव गुणसमानस्तदधुना धुनानेन स्कन्धं धवल किमु मुक्तः पथि भरः ॥ १४७ ॥ मार्गे कर्दमदुर्गमे जलभृते गर्ताशतैराकुले खिन्ने शाकटिके भरेऽतिविषमे दूरं गते रोधसि । शब्देनैतदहं ब्रवीमि महता कृत्वोच्छ्रितां तर्जनीमीदृक्षे विषमे विहाय धवलं वोढुं क्षमः को धुरम् ॥ १४८ ॥ दत्ताः सप्तबलं विषाणयुगलं मुञ्चाञ्चलः कर्बुरः कुक्षिश्चन्द्रकितो वपुः कुसुमितं संघूर्णितं चेष्टितम् । अस्मिन्दुष्टवृषे मृषा मितगुणग्रामानभिज्ञात्मनो ग्रामीणस्य तथापि चेतसि चिरं धुर्यभ्रमः स्फूर्जति ॥ १४९ ॥ केषाचिद्धवलाश्चिरं निवसिताश्चित्ते परेषां पुनर्नीलो वा कपिलोऽथवा वरवृषो रक्तोऽथवा मेचकः । ग्रामीणैरवधीरितोऽपि शि-थिलस्कन्धोऽप्यनुच्चैःश्रवाः स्वान्ते मे परतन्त्रतुन्दिलतनुर्जागर्त्ययं कर्बुरः ॥ १५० ॥ न ध्वानं कुरुषे न यासि विकटं नोच्चैर्वहस्याननं दर्पान्नोल्लिखसि क्षितिं खुरपुटैर्नावज्ञया वीक्षसे । किंतु त्वं वसुधातलैकधवलः स्कन्धाधिरूढे भरे तीराण्युच्चतटीविटङ्कविषमान्यु-

१ गर्दभ २ अश्वशालाम्. ३ अपक्वचणकान्. ४ उदासीना ५ शकटे. ६ वालुकामयमार्गे. ७ श्वभ्रम्. ८ शकटस्वामिनि.

छङ्घयन्क्षीयसे ॥ १५१ ॥ यस्यादौ व्रजमण्डनस्य वहतो गुर्वीं धुरं धैर्यतो धौरेयैः प्रगुणीकृतस्य युगपत्स्कन्धैः समस्तैरपि । तस्यैवं श्लथकम्बलस्य धवलस्योत्थापने सांप्रतं द्रागत्रैव जरावसादिततनोर्गोपुण्यमुद्धोष्यते ॥ १५२ ॥ कपिः ॥ हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः । लेढि जिघ्रति संक्षिप्य करोत्युन्नतमाननम् ॥ १५३ ॥ कपिरपि च कापिशायनमदमत्तो वृश्चिकेन संदष्टः । अपि च पिशाचग्रस्तः किं ब्रूमो वैकृतं तस्य ॥ १५४ ॥ वृक्षान्दोलनमद्य ते क नु गतं घर्मस्य यूथस्य वा मूकान्वेषणरोषसौख्यबहुलाश्रेष्टा मुखोत्थाः कुतः । क्कारण्ये फलपूर्णगह्लकुहरस्थानेषुताभीषिका भीतः संप्रति कौशिकाद्गलचलद्धचालः कपे नृत्यसि ॥ १५५ ॥ वराहः ॥ सर्वलोकपरितोपकारिणि स्वर्धुनीविमलवारिणि स्थिते । पूतिगन्धवति[1] पल्वलोदके[2] सूकरः सुखमतीव मन्यते ॥ १५६ ॥ आकर्ण्य गर्जितरवं घनगर्जतुल्यं सिंहस्य यान्ति वनमन्यदिभा भयार्ताः । तत्रैव पौरुषनिधिः स्वकुलेन सार्धं दर्पोद्धुरो वसति वीतभयो वराहः ॥ १५७ ॥ (आदिवराहः) ॥ निःकन्दामरविन्दिनीं स्थपुटितोद्देशां[3] कसेरुस्थलीं[4] जम्बालाविलमम्बु[5] कर्तुमितरा सूते वराही सुतान् । दंष्ट्रायां प्रलयार्णवोर्मिसलिलैराछाविताया मियं यस्या एव शिशोः स्थिता विपा भूः सा पुत्रिणी पौत्रिणी ॥ १५८ ॥ श्वा ॥ पिब पयः प्रसर क्षितिपान्तिकं कलय क चन काञ्चनशृङ्खलाम् । इदमवद्यतमं हि यदीहसे भषक संप्रति केसरिणस्तुलाम् ॥ १५९ दूरतमा स्थूलतया नीलतया दानलोलुपैर्मधुपैः । धावितमिभराजधिया हन्ताभूदन्ततो महि ॥ १६० ॥ वृश्चिकः ॥ विषभारसहस्रेण गर्वं नायाति वासुकिः । वृश्चिको बिन्दुमात्रे ऊर्ध्वं वहति कण्टकम् ॥१६१॥ भेकः ॥ दिव्यं चूतरसं पीत्वा गर्वं नो याति कोकिलः पीत्वा कर्दमपानीयं भेको रटरटायते ॥ १६२ ॥ गङ्गादीनां सकलसरितां प्राप्य तो समुद्रः किंचिद्गर्वी न भवति वपुर्दिव्यरत्नाकरोऽपि । एको भेकः परममुदितः प्राप्य गं ष्पादनीरं को मे को मे रटति बहुधा स्पर्धया विश्वमुच्चैः ॥ १६३ ॥ जम्बुकः ॥ उ स्योच्चैः पुच्छ शिरसि निहितं जीर्णजटिलं यदृच्छाव्यापन्नद्विपपिशितलेशाः कवलिताः गुहागर्ते शून्ये सुचिरमुषितं जम्बुक सखे किमेतस्मिन्कुर्मो यदसि न गतः सिंहसमता ॥ १६४ ॥ सर्पः ॥ तावद्गर्जन्ति मण्डूकाः कूपमाश्रित्य निर्भयाः । यावत्करिकराका कृष्णसर्पो[6] न विद्यते ॥ १६५ ॥ यस्मै ददाति विवरं भूमिः फूत्कारमात्रभीतेव । आशी विषः स दैवाडौम्बकरण्डे[7] स्थितिं सहते ॥ १६६ ॥ मौलौ सन्मणयो गृहं गिरिगुहा त्याग किलात्मत्वचो[8] निर्यत्नोपनतैश्च वृत्तिरनिलैरेकत्रचर्ये[9] दृशी । अन्यत्रानृजुवर्त्मता[10] द्विरसन[11] वक्के विषं वीक्षणं सर्वामङ्गलसूचकं कथय भो भोगिन्सखे किं त्विदम् ॥ १६७॥ (शेषः)॥

---

१ दुर्गन्धवन्ति २ अल्पजलाशयोदके. ३ विषमोन्नतदेशाम्. ४ कन्दविशेषवतीम्. ५ पङ्क . ६ सर्पः. ७ गारुडिकाकरण्डे. ८ आत्मभोगकञ्चुकस्य. ९ वर्तनम्. १० वक्रमार्गता. ११ द्विरावृत्ता रसना. रसनाद्वयमित्यर्थः.

अनेके फणिनः सन्ति भेकभक्षणतत्पराः । एक एव हि शेषोऽयं धरणीधरणक्षमः ॥ १६८ ॥ युक्तोऽसि भुवनभारे मा वक्रां वितनु कन्धरां शेष । त्वय्येकस्मिन्दुःखिनि सुखितानि भवन्ति भुवनानि ॥ १६९ ॥ सर्पाः सन्तु परे शतं प्रतिदिनं वल्मीकरन्ध्रं गताः श्रेणीभूतपिपीलिकाजलधरा हारा धरामण्डले । ते सर्वे निजभोगशायिमुरजिन्नाभीसरोजोद्गतं निःश्वासामृतपारणीपरिणमद्वेषो हि शेषोरगः ॥ १७० ॥

## जलचरान्योक्तयः ।

मत्स्यः ॥ क्षारं वारि न चिन्तितं न गणिताः क्रूराश्च नक्रादयश्चञ्चद्वीचिकदम्बदम्बरमिलत्त्रासोऽपि दूरीकृतः । मध्येऽम्भोनिधि मत्स्यरङ्क भवता झम्पः कृतो लीलया संपत्तिर्मकरार्जनं विपदिह प्राणप्रयाणावधिः ॥ १ ॥ ( रोहितः ) ॥ अगाधजलसंचारी न गर्वं याति रोहितः । अङ्गुष्ठोदकमात्रेण शफरी फुर्फुरायते ॥ २ ॥ ( राघवः ) ॥ यस्मिन्वेल्लति सर्वतः परिचलत्कल्लोलकोलाहलैर्मन्थाद्रिभ्रमणभ्रमं हृदि हरिद्दन्तावलाः पेदिरे । सोऽयं तुङ्गतिमिंगिलाङ्गकवलीकारक्रियाकोविदः क्रोडे क्रीडतु कस्य केलिकलहत्यक्तार्णवो राघवः ॥ ३ ॥ कूर्मः ॥ भ्रमति गिरिराट् पृष्ठे गर्जत्युपर्यति सागरो दहति विततज्वालाजालो जगन्ति विषानलः । स तु विनिहितग्रीवाकाण्डः कटाहकठोदरे स्वपिति भगवान्कूर्मो निद्राभरालसलोचन. ॥ ४ ॥ पुत्रिण्यः कति नात्र सन्ति भुवनेऽभूवन्कियन्तोऽथवा सौभाग्यैकमठी तथादिकमठी स्त्रीषु प्रशंसास्पदम् । भग्ने भोगिनि मङ्गुरेषु करिषु भ्रष्टोत्सवे दंष्ट्रिणि क्षोणीं साहसिकाग्रणीस्तुलयितुं जागर्ति यस्याः सुतः ॥ ५ ॥

## वृक्षान्योक्तयः ।

अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् । धन्या महीरुहा येभ्यो निराशा यान्ति नार्थिनः ॥ १ ॥ पत्रपुष्पफलच्छायामूलवल्कलदारुभिः । गन्धनिर्याসभस्मास्थितोक्मैः कामान्वितन्वते ॥ २ ॥ प्रत्यग्रैः पत्रनिचयैस्तरुर्यैरेव शोभितः । जहाति जीर्णांस्तानेव किंवा चित्रं कुजन्मनः ॥ ३ ॥ छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे । फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव ॥ ४ ॥ परोपसर्पणानन्तचिन्तानलशिखाशतैः । अचुम्बितान्तःकरणाः साधु जीवन्ति पादपाः ॥ ५ ॥ मुखेन गरलं मुञ्चन्मूले वसति चेत्फणी । फलसंदोहैर्गुरुणा तरुणा किं प्रयोजनम् ॥ ६ ॥ शाखाशतचितवियतः सन्ति कियन्तो न कानने तरवः । परिमलभरमिलदलिकुलदलितदलाः शाखिनो विरलाः ॥ ७ ॥ तीव्रो निदाघसमयो बहुपथिकजनश्च मारवः पन्थाः । मार्गस्थिततरुरेकः कियतां संतापमपहरति ॥ ८ ॥

१ दिग्गजेषु २ नूतनै.. ३ कुः पृथ्वी तस्या जन्म यस्य; ( पक्षे ) कुत्सितं जन्म यस्य. ४ समूहः. ५ मरुदेशसंबन्धी.

हिमसमयो वनवह्निर्जवनः पवनस्तडिल्लताविभवः । हन्त सहन्ते यावत्तावद्द्रुम कुरु परोपकृतिम् ॥ ९ ॥ कलमाः पाकविनम्रा मूलतलाघ्राणसुरभिकह्लाराः । पवनाकम्पितशिरसः प्रायः कुर्वन्ति परिमलश्लाघाम् ॥ १० ॥ अध्वन्यध्वनि तरवः पथि पथि पथिकैरुपास्यते छाया । विरलः स कोऽपि विटपी यमध्वगो गृहगतः स्मरति ॥ ११ ॥ यद्यपि पथि पथि तरवः प्रीतस्तस्यैव जायते पथिकः । तदपि स धन्यो विटपी यं गृहयाताः खगाः स्मरन्ति ॥ १२ ॥ कश्चिन्नवं पल्लवमादधाति कश्चित्प्रसूनानि फलानि कश्चित् । परं करालेऽस्य निदाघकाले मूलेन दाता सलिलस्य कश्चित् ॥ १३ ॥ व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतान्याकर्ण्य श्रुतिमदजाल्लयातिरेकात् । आभूमीतलनतकन्धराणि मन्येऽरण्येऽस्मिन्नवनिरुहां कुटुम्बकानि ॥ १४ ॥ भुक्तानि यैस्तव फलानि पचेलिमानि[1] क्रोडास्थितैरहह वीतभयैः प्रसुप्तम् । ते पक्षिणो जलरयेण विकृष्यमाणं पश्यन्ति पादप भवन्तममी तटस्थाः ॥ १५ ॥ धत्ते भरं कुसुमपत्रफलावलीनां घर्मव्यथां वहति शीतभवां रुजं च । यो देहमर्पयति चान्यसुखस्य हेतोस्तस्मै वदान्यगुरवे[2] तरवे नमस्ते ॥ १६ ॥ इहोद्याने संप्रत्यहह परिशिष्टाः क्रमवशादमी वल्मीकास्ते भुजगकुललीलावसतयः । गतास्ते विस्तीर्णस्तबकभरसौरभ्यलहरीपरीत[3]व्योमानः प्रकृतिगुरवः[4] केऽपि तरवः ॥ १७ ॥ विपन्नं पद्मिन्या मृतमनिमिषैर्यातमलिभिः खगैरप्युड्डीनं रथचरणहंसप्रभृतिभिः । दशां दीनां नीते सरसि विषमग्रीष्मदिवसैः कुलीनत्वादास्ते तटरुहतरुः कोऽपि तदपि ॥ १८ ॥ इयं बाला वल्ली मृदुकिसलयं तापविलयं घनच्छायं शालं नवमतिविशालं परिगता । परं त्वस्याभ्यन्तर्गरललवभस्मीकृतवनं भुजंगं[5] प्रोत्तुङ्गं कथमिव वराकी कलयतु ॥१९॥ किं जातोऽसि चतुष्पथे घनतरं छन्नोऽसि किं छायया छन्नश्चेत्फलितोऽसि किं फलभरैराढ्योऽसि किं संनतः । हे सद्वृक्ष सहस्व संप्रति सखे शाखाशिखाकर्षणक्षोभामोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥ २० ॥ छायासुप्तमृगः शकुन्तनिवहैर्विष्वग्विलुप्तच्छदः कीटैरावृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः । विश्रब्धं मधुपैर्निपीतकुसुमः श्लाघ्यः स एकस्तरुर्यत्राङ्गीकृतसत्त्वसंप्लवभरे भग्नापदोऽन्ये द्रुमाः॥२१॥ भुक्त्वा स्वादुफलं कृतं च शयनं शाखाग्रजैः पल्लवैस्त्वच्छायापरिशीतलं सुसलिलं पीतं व्यपेतश्रमैः । विश्रान्ताः सुचिरं परं सुमनसः प्रीतिः किमत्रोच्यते त्वं सन्मार्गतरुर्वयं च पथिका यामः पुनर्दर्शनम् ॥ २२ ॥ पान्थाधार इति द्विजाश्रय इति श्लाघ्यस्तरूणामिति स्निग्धच्छाय इति प्रियो दृश इति स्थानं गुणानामिति । पर्यालोच्य महातरो तव घनच्छायां वयं संश्रितास्तत्त्वत्कोटरवासिनो द्विरसना दूरीकरिष्यन्ति नः ॥ २३ ॥ मूलं स्थूलमतीव बन्धनदृढं शाखाः शतं मांसला[6] वासो दुर्गमहीधरे तरुपते कुत्रास्ति भीतिस्तव ।

१ पक्वानि. २ दानशौण्डाना गुरवे. ३ व्याप्तम्. ४ स्वभावतो महान्तः. ५ सर्पः; (पक्षे) पिशुनाः. ६ पुष्टाः.

एकः किंतु मनागयं जनयति स्वान्ते ममाधिज्वरं ज्वालाली वलयीभवन्नकरुणो दावानलो घस्मरः ॥ २४ ॥ ये पूर्वं परिपालिताः फलभरच्छायादिभिः प्राणिनो विश्रामद्रुम कथ्यतां तव विपत्काले क्व ते सांप्रतम् । एताः संगतिमात्रकल्पितपुरस्कारास्तु धन्यास्त्वचो यासां छेदनमन्तरेण पतितो नायं कुठारस्त्वयि ॥२५॥ वाद्धिर्यस्य तरोर्मनोरथशतैराशावता प्रार्थिता जातोऽसौ सरसप्रकामफलदः सर्वाश्रितोपाश्रयः । नानादेशसमागतैरविदितैराक्रान्तमन्यैः खगैस्तं लब्धावसरेऽपि वृद्धशकुनिर्दूरे स्थितो वीक्ष्यते ॥ २६ ॥ छायाभिः प्रथमं ततस्तु कुसुमैः पश्चात्फलैः स्वादुभिः प्रीणात्येव तरुः पथीति पथिकैः श्रान्तैः सुखं स्थीयते । को जानाति यदत्र कोटरगतः प्रत्युग्रहालाहलज्वालाजालकरालकाष्ठकुहरः कृष्णः फणी वर्तते ॥ २७ ॥ आमोदैर्मरुतो मृगाः किसलयोल्लासैस्त्वचा तापसाः पुष्पैः षट्चरणाः फलैः शकुनयो घर्मार्दितश्छायया । स्कन्धैर्गन्धगजास्त्वयेव विहिताः सर्वे कृतार्थास्ततस्त्वं विश्वोपकृतिक्षमोऽसि भवता भग्नापदोऽन्ये द्रुमाः ॥ २८ ॥ रोलम्बैर्निमितं गृहं विघटितं धूमाकुलैः कोकिलैर्मायूरैश्चलितं पुरैव रभसा कीरैरधीरैर्गतम् । एकेनापि सपल्लवेन तरुणा दावानलोपप्लवः सोढः को न विपत्सु मुञ्चति जनो मूर्ध्नापि यो लालितः ॥ २९ ॥ एकस्त्वं मरुभूरुहेन्द्र विततैः शाखाशतैरञ्चितः पुष्यत्पुष्पफलान्वितैरमृदितैर्जीव्यः सहस्रं समाः । आश्रान्तं श्रमरुग्ण पान्थजनता सर्वार्थनिर्वाहनं कस्त्वां सात्विकमन्तरेण भुवने निर्मातुधर्माशयः ॥ ३० ॥ धत्से मूर्धनि दुःसहान्दिनमणेरुद्दामधामच्छतश्छायाभिः पथिकान्निदाघमथितान्पुष्णासि पुष्पैः फलैः । धैर्यं मुञ्चसि नैव येन भवतः शाखा सुविस्तारिता तेनाशासु वनस्पते तव यशस्तोमः समुज्जृम्भते ॥ ३१ ॥ तीव्रोऽयं नितरां निदाघसमयः प्रोद्यत्प्रचण्डद्युतिर्मार्गो मारव एष तत्र पथिकाः संचारिणः कोटिशः । तेषां कश्चिदिहाश्रयस्तरुवरो दैवेन संपादितः सोऽप्येकः सुकृती करोतु कियता संतापनिर्वापणम् ॥ ३२ ॥ कल्पद्रुमः ॥ कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः । को विशेषस्तदा तस्य वन्यैरन्यैर्महीरुहैः ॥ ३३ ॥ न मया रचितं तवालवालं पयसा वा विहितस्तवाभिषेकः । अयि कल्पतरो परोपकारे भवतो विश्वविलक्षणः प्रकारः ॥ ३४ ॥ कि न द्रुमा जगति जाग्रति लक्षसंख्यास्तुल्योपनीतपिककाकफलोपभोगाः । धन्यस्तु कल्पविटपी फलसंप्रदानं कुर्वन्सदैव विबुधानमृतैकवृत्तीन् ॥ ३५ ॥ स्वर्णैः स्कन्धपरिग्रहो मरकतैरुल्लासिताः पल्लवा मुक्ताभिः स्तवकश्रियो मधुलिहां वृन्दानि नीलोत्पलैः । सकल्पानुविधायि यस्य फलितं कस्तस्य धत्ते तुला धिग्जातु द्रुमसंकथासु यदयं कल्पद्रुमोऽपि द्रुमः ॥ ३६ ॥ औदार्यं भुवनत्रयेऽपि विदितं [1]संभूतिरम्भोनिधेर्वासो [2]नन्दनकानने [3]परिमलो [4]गीर्वाणचेतोहरः । एवं दातृगुणोत्करः सुरतरोः सर्वोऽपि लोकोत्तरः स्यादर्थिप्रवरार्थितार्पणविधावेको

---

१ संभव. २ वसति.. ३ इन्द्रवने. ४ आमोद..

विवेको यदि ॥ ३७ ॥ न द्वारि द्विरदावली न परितो वानायुजश्रेणयः किंवा शौक्तिकमौक्तिकैर्मृगदृशां तारा न हारावलिः । हे कल्पद्रुम दूरतोऽस्तु भवतः सेवाभवं वैभवं तुष्यामि त्वयि तावतापि यदि न स्मेरा भवन्ति द्विषः ॥ ३८ ॥ जन्माभूदुदधौ विधौ सहजता वृन्दारकैर्वन्द्यता तत्तत्कामफलाय शक्तिरतुला यस्यास्ति वश्यानिशम् । विश्रामाय चिराय कल्पलतिका भूयोऽयमालम्बते कस्त्वां स्तोतुमपि क्षमोऽस्ति तदपि त्वं जल्प कल्पद्रुम ॥३९॥ **पारिजातः** ॥ पारिजाततरुं यावन्न लभेत मधुव्रतः । भ्रमणं तावदेवास्य कुञ्जे कुञ्जे तरौ तरौ ॥ ४० ॥ परिमलसुरभितनभसो बहवः कनकाद्रिपरिसरे तरवः । तदपि सुराणां चेतसि निवसितमिव पारिजातेन ॥ ४१ ॥ **चन्दनः** ॥ सन्त्येव मिलिताकाशा महीयांसो महीरुहः । तथापि [1]जनताचित्तानन्दनश्चन्दनद्रुमः ॥ ४२ ॥ यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो विहितः । निजवपुषैव परेषां तथापि संतापमपहरति ॥ ४३ ॥ अयि मलयज महिमायं कस्य गिरामस्तु विषयस्ते । उद्गिरतो यद्गरलं फणिनः पुष्णासि परिमलोद्गारैः ॥ ४४ ॥ [2]पाटीर तव [3]पटीयान्कः [4]परिपाटीमिमामु[5]रीकर्तुम् । यत्[6]पिंषतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् ॥ ४५ ॥ यैस्त्वं गुणगणवानपि सतां [7]द्विजिह्वैरसेव्यतां नीतः । तानपि वहसि पटीरज किं कथयामस्त्वदीयमौन्नत्यम् ॥ ४६ ॥ जनकः सानुविशेषो जातिः काष्ठं भुजंगमैः सङ्गः । स्वगुणैरेव पटीरज यातोऽसि तथापि महिमानम् ॥ ४७ ॥ मूलं भुजंगैः शिखरं [8]प्लवङ्गैः शाखा विहंगैः कुसुमानि भृङ्गैः । नास्त्येव तच्चन्दनपादपस्य यन्नाश्रितं सत्त्वभरैः समन्तात् ॥ ४८ ॥ कति न सन्ति महीषु महीरुहः सुरभिपुष्परसालफलालयः । सुरभयन्ति न केऽपि च भूरुहानिति यशोऽस्ति परं तव चन्दन ॥ ४९ ॥ धिक्चेष्टितानि परशोपरि शोचनीयबालप्रवालमलयाद्रिरुहद्रुहस्ते । निर्भिद्यमानहृदयोऽपि महानुभावः स त्वन्मुखं पुनरभिः सुरभीकरोति ॥ ५० ॥ कालागरौ सुरभितातिशयेऽपि सङ्गादारभ्यते सुरभितापरपादपेऽपि । पाटीर पाटवमिदं तव सङ्गिवातैस्तादात्म्यमेति कतरो न तरोः समूहः ॥ ५१ ॥ उपानीतं दूरात्परिमलमुपाघ्राय मरुता समायासीदस्मिन्मधुरमधुलोभान्मधुकरः । परो दूरे लाभः कुपितफणिनश्चन्दनतरोः पुनर्जीवन्यायाद्यदि तदिह लाभोऽयमतुलः ॥ ५२ ॥ कान्ताकेलिं कलयतु तरुः कोऽपि कश्चित्प्रभूणामत्यानन्दं जनयतु फलैः कोऽपि लोकान्[9]धिनोतु । धन्यं मन्ये मलयजमहो यः प्रभूतोपतापं [10]संसारस्य द्रुतमपनयत्यात्मदेहव्ययेन ॥ ५३ ॥ आमोदैस्ते दिशि दिशि गतैर्दूरमाकृष्यमाणाः साक्षाल्लक्ष्मीं तव मलयज द्रष्टुमभ्यागताः स्मः । किं पश्यामः सुभग भवतः क्रीडति क्रोड एव व्यालस्तुभ्यं भवतु कुशलं मुञ्च नः साधु यामः ॥ ५४ ॥ के-

---

१ जनसमूहः. २ चन्दन. ३ अतिशयेन पटुः समर्थः. ४ रीतिम्. ५ अङ्गीकर्तुम्. ६ पेषणं कुर्वताम्. ७ सर्पैः. ८ वानरैः. ९ प्रीणयतु. १० संसारे स्थितस्य जनस्य.

चिल्लोचनहारिणः कतिपये सौरभ्यसंभारिणः केऽप्यन्ये फलधारिणः प्रतिदिनं ते सन्तु हन्त द्रुमाः । धन्योऽयं हरिचन्दनः परिसरे यस्य स्थितैः शाखिभिः शाखोटादिभिरप्यहो मृगदृशामङ्गेषु लीलायितम् ॥ ९५ ॥ भ्रातश्चन्दन किं ब्रवीमि विटपस्फूर्जत्फणाभीषणा गन्धस्यापि महाविषाः फणभृतो गुप्त्यै पदे ते कृताः । दैवात्पुष्पफलान्वितो यदि भवानत्राभविष्यत्तदा नो जाने किमकल्पयिष्यदधिकं रक्षार्थमस्यात्मनः ॥ ९६ ॥ एतैर्दक्षिणगन्धवाहचलनैः श्रीखण्ड किं सौरभं ब्रूमस्ते परितो मधुव्रतयुवा येनायमानीयते । माकन्दादपहृत्य पङ्कजवनादुद्धूय कन्दोदरादुद्भ्राम्याद्द्विपगण्डमण्डलदलादाकृष्य हृष्यन्मनाः ॥९७॥ वासः शैलशिलान्तरेषु सहजः सङ्गो भुजंगैः सह प्रेङ्खत्क्षारपयोधिवीचिभिरभूदुद्भूतसेकक्रिया । जानीमो न वयं प्रसीदतु भवाञ्श्रीखण्ड तत्कथ्यतां कस्मात्ते परतापखण्डनमहो पाण्डित्यमप्यागतम् ॥ ९८ ॥ लोकानन्दन चन्दनद्रुम सखे नास्मिन्वने स्थीयतां दुर्वंशैः परुषैरसारहृदयैराक्रान्तमेतद्वनम् । ते ह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुला न स्वान्येव कुलानि केवलमिदं सर्वं दहेयुर्वनम् ॥ ९९ ॥ सौरभ्यं भुवनत्रयेऽपि विदितं शैत्यं नु लोकोत्तरं कीर्तिः किं च दिगङ्गनाङ्गनगता किं त्वेतदेकं शृणु । सर्वानेव गुणानियं निगिरति श्रीखण्ड ते सुन्दरानुज्झन्ती खलु कोटरेषु गरलज्वाला द्विजिह्वावली ॥ ६० ॥ श्रीमच्चन्दनवृक्ष सन्ति बहवस्ते शाखिनः कानने येषां सौरभमात्रकं निवसति प्रायेण पुष्पश्रिया । प्रत्यङ्गं सुकृतेन तेन शुचिना ख्यातः प्रसिद्धात्मना योऽसौ गन्धगुणस्त्वया प्रकटितः क्कासाविह प्रेक्ष्यते ॥ ६१ ॥ जातः केलिकलावतीकुचतटीसौभाग्यमासादितुं त्रैलोक्याधिपतेर्यशः कथयितुं भाले विपद्व्यापितुम् । किं वाच्यं गुणगौरवस्य महिमा ख्यातोऽखिले भूतले धिग्दैवं कलये यदत्र मलये भग्नः पटीरद्रुमः ॥ ६२ ॥ एकस्मिन्मलयाचले बहुविधैः किं तैरकिंचित्करैः काकोलूककपोतकोकिलकुलैरेकोऽपि पार्श्वस्थितः । केकी कूजति चेत्तदा विघटते व्यालावलीबन्धनः सेव्यः स्यादिह सर्वलोकमनसामानन्दनश्चन्दनः ॥ ६३ ॥ अगुरुः ॥ अगुरुरिति वदतु लोको गौरवमत्रैव पुनरहं मन्ये । दर्शितगुणैव वृत्तिर्यस्य जने जनितदाहेऽपि ॥ ६४ ॥ एणाद्याः पशवः किरातपरिषन्नैषा गुणग्राहिणी संचारोऽस्ति न नागरस्य विषयोच्छिन्नं मुनीनां मनः । धूमेनातिसुगन्धिनात्र विपिने दिक्चक्रमामोदयन्नामूलं परिदह्यतेऽगुरुतरुः कस्मै किमाचक्ष्महे ॥ ६५ ॥ चम्पकः ॥ साधारणतरुबुद्ध्या न मया बद्धस्तवालवालोऽपि । लज्जयसि मामिदानीं चम्पक भुवनाधिवासिभिः कुसुमैः ॥६६॥ यद्यपि खदिरारण्ये गुप्तौ वस्ते हि चम्पको वृक्षः । तदपि च परिमलमतुलं दिशि दिशि कथयेत्समीरणस्तस्य ॥ ६७ ॥ रूपसौरभसमृद्धिसमेतं चम्पकं प्रति ययुर्न मिलिन्दाः । कामिनस्तु जगृहुस्तदशेषा ग्राहका हि गुणिनां कति न स्युः ॥ ६८ ॥ केनात्र चम्पकतरो

१ दुष्टवेणुभि.; ( पक्षे ) दुष्टकुलै. २ यूथानि. ३ नाम्ना; ( पक्षे ) लघु.

बत रोपितोऽसि कुग्रामपामरजनान्तिकवाटिकायाम् । यत्र प्रवृद्धवनशाकविवृद्धिलोभाद्गोमयावाटघटनोचितपल्लवोऽसि ॥६९॥ उद्यानपालकलशाम्बुनिषेचनानामेतस्य चम्पकतरोरयमेव कालः । अस्मिन्निदाघनिहते घनवारिणा वा संवर्धितस्तव वृथोभयथोपयोगः ॥७०॥ यन्त्राहतस्त्वमलिना मलिनाशयेन किं तेन चम्पक विषादमुरीकरोषि । विश्वाभिरामनवनीरदनीपवेषाः केशाः कुशेशयदृशः कुशलीभवन्तु ॥ ७१ ॥ अनाहूतेवैत्य प्रगुणगुणलोभेन भवतः समीहे सौभाग्यं तदिदमुपहासं प्रथयति । विदग्धं तामेवं तदपि कथयाम्याचर तथा यथा न स्यादाली कपटकरतालीपटरवः ॥ ७२ ॥ कोपं चम्पक मुञ्च याचकजनैरायासि नस्त्वं सखे मा म्लासीः परितो विलोकय तरुः कस्तेऽधिरूढस्तुलाम् । कोपश्चेन्नियतस्तवास्ति हृदये धात्रे तथा कुप्यतां येन त्वं हि सुवर्णवर्णकुसुमामोदो द्वितीयः कृतः ॥ ७३॥ सन्त्येकेऽपि महीरुहाः प्रतिदिनं संसक्तमत्तालयस्तत्ताहग्गुणिनो लवङ्गलवलीमाकन्दकुन्दादयः । आशास्यं जनुरस्य चम्पकतरो यत्कोरकान्तर्दलं स्वैरङ्गैरुपमाय राजरमणी सासूयमालोकते ॥ ७४ ॥ बकुलः ॥ निसर्गादारामे तरुकुलसमारोपसुकृती कृती मालाकारो बकुलमपि कुत्रापि निदधे। इदं को जानीते यदयमिह कोणान्तरगतो जगज्जालं कर्ता कुसुमभरसौरभ्यभरितम् ॥७५॥ दधानः प्रेमाणं तरुषु समभावेन विपुलं न मालाकारोऽसावकृत करुणां वालबकुले । अयं तु द्रागुद्यत्कुसुमनिकराणां परिमलैर्दिगन्तानातेने मधुपकुलझङ्कारभरितान् ॥ ७६ ॥ अशोकः ॥ गर्वायसे विकचकोरकमञ्जुगुञ्जदुद्धृत्तषट्पदघटाविभवेन किं नु । वामभ्रुवां चरणताडनदोहदानि किं नाम न स्मरसि तावदशोक तानि ॥ ७७ ॥ उन्मीलयन्ति कुसुमानि मनोरमाणि के नाम नात्र तरवः समयोचितानि । कस्येदृशं कथय दोहदमस्ति तस्य याद्दग्विनिर्मितमशोकमहीरुहस्य ॥ ७८ ॥ मृदूनां स्वादूनां लघुरपि फलानां न विभवस्तवाशोक स्तोकैः[2] स्तबकमहिमा सोऽप्यसुरभिः[3] । यदेतन्नो तन्वीकरचरणलावण्यसुभगं प्रवालं बालं स्यात्तरुषु स कलङ्कः किमपरः ॥ ७९ ॥ किं ते नम्रतया किमुन्नततया किं वा घनच्छायया कि वा पल्लवलीलया किमनया वाशोक पुष्पश्रिया । यत्त्वन्मूलनिषण्णखिन्नपाथिकस्तोमैः[4] स्तुवन्नन्वहं न स्वादूनि मृदूनि खादति फलान्याकण्ठमुत्कण्ठितः ॥ ८० ॥ यूथी ॥ यूथि यथोचितविधिना विधेयमातिथ्यमेतस्मिन् । मालतिकाप्राणेशः प्राघुणिकस्ते घुणाक्षरन्यायात् ॥ ८१ ॥ मालती ॥ कुसुमस्तबकानम्राः सन्त्येव परितो लताः । तथापि भ्रमरभ्रान्ति हरत्येकैव मालती ॥ ८२ ॥ मालतीकुसुमे भाति गुञ्जन्मत्तमधुव्रतः । प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥ ८३ ॥ गुञ्जति मञ्जु मिलिन्दे मालति मा मौनमुपयासीः । शिरसा वदान्यगुरवः सादरमेनं वहन्ति सुरतरवः ॥८४॥ अयि किं गुणवति मालति जीवति भवतीं विनापि किं मधुपः । अथ यदि जीवति जीवतु

१ कुशल.. २ अल्पः. ३ सुगन्धरहितः. ४ समूहः.

जीवितमपि तस्य जीवनाभासः ॥ ८५ ॥ मा मालति म्लायसि यद्यविद्यश्चुचुम्ब तुम्बीकुसुमं षड्ङ्घ्रिः। पदैश्चतुर्भिर्हि युतः पशुश्चेत्स षड्भिरध्यर्धपशुः कथं नो ॥ ८६ ॥ कति सन्ति लवङ्गलता ललिता नवकोरकिता धरणीसुतले। कति बन्धुरगन्धभृतस्तरवो गुरवो निवसन्ति गिरौ मलये ॥ ८७ ॥ अयि मालति सौरभसारविनिर्जितसंविकसत्कमलानिलये। मधुपानविधौ मधु पश्य पुनर्भुवने भवतीमहमाकलये ॥ ८८ ॥ किं मालतीकुसुम ताम्यसि निष्ठुरेण केनापि यत्किल विलूनमितो लताग्रात्। लोकोत्तरेण विलसद्गुणगौरवेण को नामुना शिरसि नाम करिष्यति त्वाम् ॥ ८९ ॥ म्रदीयस्त्वाधिक्यान्न भवति विमर्दक्षममिदं न चान्येभ्यो रूपं भवति कुसुमेभ्योऽधिकतरम्। प्रसूनं मालत्यास्तदपि हृदयाह्लादकरणं प्रवीणैरामोदैर्भवति जगतो मौलिनिलयम् ॥ ९० ॥ अस्मिन्केलिवने सुगन्धपवने क्रीडत्पुरंध्रीजने गुञ्जद्भृङ्गकुले विशालबकुले कूजत्पिकीसंकुले। उन्मीलन्नवपाटलापरिमले मल्लीप्रसूनाकुले यद्येकापि न मालती विकसिता तत्किं न रम्यो मधुः ॥ ९१ ॥ मल्लिका ॥ न च गन्धवहेन चुम्बिता न च पीता मधुपेन मल्लिका। पिहितैव कठोरशाखया परिणामस्य जगाम गोचरम् ॥ ९२ ॥ दमनकः ॥ वद प्रादुर्भावावधि परिमलावस्थितदशो जगत्यां विख्याता दमनक प्रतीपास्तव गुणाः। तथाप्यस्मिन्भृङ्गे मधुलवपिपासापरवशे दृढप्रेमाबद्धे कथय कथमौदास्यमकरोः॥ ९३ ॥ केतकी ॥ कालक्रमकमनीयक्रोधं हे केतकीति का शङ्का। वृद्धिर्यथा यथास्यास्तथा तथा कण्टकोत्कर्षः॥ ९४ ॥ पत्राणि कण्टकशतैः परिवेष्टितानि वार्तापि नास्ति मधुनो रजसान्धकारः। आमोदमात्ररसिकेन मधुव्रतेन नालोकितानि तव केतकि दूषणानि ॥९५॥ एतासु केतकिलतासु विकासिनीषु सौभाग्यमद्भुततरं भवती बिभर्ति। यत्कण्टकैर्व्यथितमात्मवपुर्न जानंस्त्वामेव सेवितुमुपक्रमते द्विरेफः ॥९६॥ एकेन चेत्परिहृतोऽसि महेश्वरेण किं तेन केतक विषादमुरीकरोषि। अन्येन किं जगति सन्ति महागुणज्ञा ये त्वां वहन्ति शिरसा नरदेवदेवाः ॥ ९७ ॥ हे हेमकेतकि कथं बहु गर्वितासि संसेव्यसे मधुकरैरखिलैरतीव। नैषा रसातिशयता नलिनीवियोगार्त्तैर्दीयते विकटकण्टकशूलझम्पः ॥ ९८ ॥ रोलम्बस्य चिराय केतकपरिष्वङ्गेष्वभङ्गो रसः सुज्ञातं बत केतकस्य च मनोभृङ्गप्रसङ्गोत्सुकम्। जानात्येव मिथोऽनुरागमनयोः सर्वोऽपि नैसर्गिकं प्रत्यूहाय दलेषु धिक्समभवन्मर्माभिधः कण्टकः ॥ ९९ ॥ पाटला ॥ पाटलया वनमध्ये कुसुमितया मोहितस्तथा भ्रमरः। सैवेयमिति यथाभूत्प्रतीतिरस्यान्यपुष्पेऽपि ॥ १०० ॥ सहकारः ॥ अरविन्देषु कुन्देषु रमितं कालयोगतः। अये माकन्द जानीहि तवैवायं मधुव्रतः ॥ १०१ ॥ यद्यपि दिशि दिशि तरवः परिमलबहुलाश्च पारिजाताद्याः। तदपि रसालोऽप्येकः कोकिलहृदये सदा वसति

१ शिरसि. २ मूढ. ३ इक्ष्वाकुकुसुमम्. ४ षट्पद. ५ सतापं शुष्यसे. ६ छिन्नम्. ७ मार्दवाधिक्यात्. ८ वायुना. ९ आदिता. १० परिणतिं प्रातेत्यर्थः.

॥ १०२ ॥ वेत्ता कोकिल एव ज्ञाता च रसाल एव नियतमिदम् । यः पञ्चममुद्रायति यस्यास्थिषु पुलकमुकुलानि ॥ १०३ ॥ लोडितमखिलं गहनं परितो दृष्टाश्च विटपिनः सर्वे । सहकार न प्रपेदे मधुपेन तवोपमा जगति ॥ १०४ ॥ कुन्दे कदम्बे कुमुदेऽरविन्दे यथाकथंचित्समयं नयन्ति । प्राप्ते वसन्ते पुनरुत्तराङ्गा रसाल जानीहि तवैव भृङ्गाः ॥ १०५ ॥ भूरिशोऽपि च वसन्ति कानने शाखिनो फलविशेषशालिनः । कोकिलस्य तदपीह मानसं नो रसालमपहाय तुष्यति ॥ १०६ ॥ आम्र यद्यपि गता दिवसास्ते पुष्पसौरभफलप्रचुरा ये । हन्त संप्रति तथापि जनानां छाययैव दलयस्यतितापम् ॥ १०७ ॥ फलितस्य रसाल शाखिनः फलदानव्यसनैकशालिनः । विनिपत्य ददातु कः फल श्रमसुप्ताध्वगपाणिपल्लवे ॥ १०८ ॥ कति पल्लविता न पुष्पिता वा तरवः सन्ति समन्ततो वसन्ते । जगतीविजये तु पुष्पकेतोः सहकारी सहकार एक एव ॥ १०९ ॥ वहसि बलिभुजां कुलानि मौलौ यदि सहकार तदत्र किं निषिद्धा । परमुदयति पल्लवाञ्चलेषु स्फुरदलिभिस्तव सौरभप्रसिद्धिः ॥ ११० ॥ दिङ्मण्डलं परिमलैः सुरभीकरोषि सौन्दर्यमावहसि लोचनलोभनीयम् । हंहो रसाल फलवर्य तथापि दूये यद्ग्रन्थितं च कठिनं हृदयं बिभर्षि ॥ १११ ॥ उत्तंसकौतुकरसेन विलासिनीभिर्लूनानि यस्य न नखैरपि पल्लवानि[१]। उद्यानमण्डनतरो सहकार स त्वमङ्गारकारकरगोचरतां गतोऽसि ॥ ११२ ॥ यावत्फलोदयमुखः सहकार जातः प्रागेव कण्टकचयेन वृतोऽसि तावत् । छायापि ते न सुलभा फलमस्तु दूरे तन्निष्फलोऽपि हि वरं सुखसेवनीयः ॥ ११३ ॥ उत्फुल्लरम्य सहकार रसाल बन्धो कूजत्पिकावलिनिवास तथा विधेहि । गुञ्जद्भ्रमद्भ्रमरकस्त्वयि बद्धतृष्णो नान्यान्प्रयाति पिचुमन्दकरीरवृक्षान् ॥ ११४ ॥ शश्वन्निसर्गमलिनाः सहकार कामं लुण्ठन्ति तान्यपि मधूनि तव द्विरेफाः । युक्तं न तत्तव कषायरसप्ररोहैरेतान्प्रतारयसि किं कलकण्ठयूनः ॥ ११५ ॥ रे रे रसाल तरुसार वचो विधेहि वासन्तिकी स्वफलपल्लवपुष्पलक्ष्मीः । तावद्विकस्वरपिकद्विजसात्कुरु द्राङ् न व्यग्रितोऽसि कलभैः शलभैश्च यावत् ॥ ११६ ॥ यद्यध्वनीनचिरमध्वनि घर्मखिन्नः कासारतीररुहमाश्रयनम्रमाम्रम् । छायां न केवलमितः श्रमिता लभन्ते कामं पचेलिमफलं विमलं जलं च ॥ ११७ ॥ सौरभ्यगर्भमकरन्दकराम्बितानि पङ्केरुहाण्यपि विहाय समागतस्त्वाम् । संसारसार सहकार तथा विधेहि येनोपहासविषयो न भवेद्द्विरेफः ॥११८॥ कति कति न वसन्ते वल्लयः शाखिनो वा किसलयसुमनोभिः शोभमाना बभूवुः । तदपि युवजनानां प्रीतये केवलोऽभूदभिनवकलिकालीभारशाली रसालः ॥ ११९ ॥ यदेकस्मिन्वर्षे न फलति रसालस्तरुरयं पिकं किं काकेष्टं फलितमपि निम्बं व्रजति किम् । व्रजन्म्लानिं ग्लानिं न वदति च कस्यापि पुरतः स्मरन्वा-

१ कर्णभूषणम्.

रंवारं पुनरपि रसालं मृगयते ॥ १२०॥ अधिश्रीरुद्याने त्वमसि भवतः पल्लवचयो धुरीणः कल्याणे तव जगति शाखा श्रमहरा । मुदे पुष्पोल्लेखः फलमपि च तुष्ट्यै तनुभृतां रसाल त्वां तस्माच्छ्रयति शतशः कोकिलकुलम् ॥ १२१ ॥ न तादृक्कर्पूरे न च मलयजे नो मृगमदे फले वा पुष्पे वा तव मिलति यादृक्परिमलः । परं त्वेको दोषस्त्वयि खलु रसाले यदधिकः पिके वा काके वा लघुगुरुविशेषं न मनुषे ॥ १२२ ॥ चिरश्रान्तो दूरादहमुपगतो हन्त मलयात्तदेकं त्वद्गेहे तरुणि परिणेष्यामि दिवसम् । समीरेणोक्तवं नवकुसुमिता चूतलतिका धुनाना मूर्धानं नहि नहि नहीत्येव वदति ॥ १२३ ॥ वियुक्ता वासन्ती बकुलमुकुलेनापि मिलितं व्यलोकि व्याकोशः क्षणमणि न कोऽपि क्षितिरुहः । यमालोक्योत्कण्ठातरलमिह भृङ्गेन चलितं विदूरान्माकन्दः स खलु दलितो यूथपतिना ॥ १२४ ॥ येऽभिज्ञाः कुसुमोद्गमादनुदिनं त्वामाश्रिताः षट्पदास्ते भ्राम्यन्ति फलाद्बहिर्बहिरहो दृष्ट्वा न संभाषसे। ये कीटास्तव दृक्पथं न च गतास्ते त्वत्फलाभ्यन्तरे धिक्त्वां चूततरो परापरपरिज्ञानानभिज्ञो भवान् ॥ १२५ ॥ किं जातोऽसि चतुष्पथे घनतरच्छन्नोऽसि किं छायया छन्नश्चेत्फलितोऽसि किं फलभरैरानम्रशाखोऽसि किम् । हे चूताध्वग लोष्टपातविधुतः खिन्नोऽसि मा खिद्यतां पार्श्वस्थां जनवर्जितां बहुफलां पश्याधमां शाल्मलीम् ॥ १२६ ॥ आकर्ण्याम्रफलस्तुतिं जलमभूत्तन्नारिकेलान्तरं प्रायः कण्टकितं तथैव पनसं जातं द्विधोर्वारुकम् । आस्तेऽधोमुखमेव कादलमलं द्राक्षाफलं क्षुद्रतां श्यामत्वं बत जाम्बवं गतमहो मात्सर्यदोषादिह ॥ १२७ ॥ यो दृष्टः स्फुरदस्थिसंपुटवशात्तिर्यक्प्रवालाङ्कुरो दैवात्स द्विदलादिकक्रमवशादारूढशाखाशतः । स्निग्धं पल्लवितो घनं मुकुलितः स्फारच्छदं पुष्पितः सोत्कर्षं फलितो भृशं च विततः कोऽप्येष चूतद्रुमः ॥ १२८ ॥ एतस्मिन्वनमार्गभूपरिसरे सौन्दर्यमुद्राङ्कितः प्रोद्यद्भिः फलपुष्पपत्रनिचयैश्चूतः स एकः परम् । यं वीक्ष्य स्मितवक्त्रमुद्रितमहासंतोषमुल्लासितस्फारोत्कण्ठमकुण्ठितक्रममभी धावन्ति पान्थव्रजाः ॥ १२९ ॥ कूष्माण्डीफलवत्फलं न यदपि न्यग्रोधवन्नोच्चता रम्भापत्रनिभं दलं न कुसुमं नो केतकीपुष्पवत् । सौरभ्यं कुसुमे फले तदपि तत्किंचित्समुज्जृम्भते लोको येन रसाल शालनिकरांस्त्यक्त्वा गुणान्स्तौति ते ॥ १३० ॥ गर्वं मा कुरु शर्करे तव गुणाञ्जानन्ति राज्ञां गृहे ये दीना धनवर्जिताश्च कृपणाः स्वप्नेऽपि पश्यन्ति नो । आम्रोऽहं मधुकूपकैर्मम फलैस्तृप्ता हि सर्वे जना हे रण्डे तव किं गुणा मम फलैस्तुल्यं न किंचित्फलम् ॥ १३१ ॥ उन्मीलद्रसबिन्दुगन्धकुसुमावच्छचो वसन्तोदये कान्ताः कोमलपल्लवाः कति कति क्रीडा वने सन्ति न । सौभाग्यैकनिधे रसाल तदपि श्रीमञ्जरीशालिनस्त्वत्तोऽन्यत्र च कुत्रचिन्मधुकरश्रेणी न विश्राम्यति ॥ १३२ ॥ स्निग्धाम्राः फलिनो वृताः परिमलैः

१ चन्दने. २ कस्तूरिकायाम्.

पौष्पैर्मधुस्यन्दिनो नानन्दाय भवन्ति किं वनभुवां भूमीरुहो भूरिशः । माधुर्यं मधुनस्तवैव परमं माकन्द मन्यामहे माध्वीमर्मभिदो दृढं मधुलिहः स्यूता यतो मर्मणि ॥ १३३ ॥ आस्तां गाढतरानुशीलनविधिः संस्पर्शनं दूरतः संभाषाविषयीकृतोऽसि न मनागक्ष्णोः पदं प्रापितः । किं ब्रूमः सहकार तावकगुणानन्याद्दृशैर्दुर्लभान्सौरभ्येण यदध्वगानपि मुहुः प्रीणासि दूरादपि ॥ १३४ ॥ त्वं सामान्यतरुभ्रमेण सकलक्षोणीरुहक्ष्मापतौ माकन्देऽपि किरात पातय मुधा मास्मिन्कुठारं हठात् । एष श्लाघ्यजनस्य जीवितमलीव्यूहस्य बन्धुर्मधोः सर्वस्वं कुसुमायुधस्य विजयामात्यः पिकानां गुरुः ॥ १३५ ॥ शान्ता घर्मकणाः श्रमः शिथिलितस्तीर्णस्तृषामुद्गमो वारंवारमुदारकोकिलरवैरानन्दितं मानसम् । सर्वं प्राप्तमभीप्सितं तव तले चूत प्रसन्ना द्विजश्रेणीकूजितरञ्जिताखिलमनो यामो वयं स्वस्ति ते ॥१३६॥ **पनसः** ॥ गरीयः सौरभ्यं रसपरिचये नार्हति सुधा सिता मृद्वीकापि प्रथिमनि निमग्नः फलभरः । परार्थे कोशश्रीरिति पुलकिते कण्टकमिषादहो ते चारित्रं पनस मनसः कस्य न मुदे ॥ १३७ ॥ **तमालः** ॥ पास्यन्ति कस्य कुसुमे मधुपा मधूनि स्थास्यन्ति कस्य शिखरेषु विहंगमालाः । इत्येव शोचति परं परितो विसारिदावाग्निमग्नवपुरेष तरुस्तमालः ॥ १३८ ॥ **कदली** ॥ तालीतरोरनुपकारि फलं फलित्वा लज्जावशादुचित एव विनाशयोगः । एतत्तु चित्रमुपकृत्य फलैः परेभ्यः प्राणान्निजाञ्झटिति यत्कदली जहाति ॥ १३९ ॥ **द्राक्षा** ॥ दासेरकस्य दासीयं बदरी यदि रोचते । एतावतैव किं द्राक्षा न साक्षादमृतप्रदा ॥ १४० ॥ यद्यपि न भवति हानिः परकीयां चरति रासभे द्राक्षाम् । असमञ्जसमिति मत्वा तथापि खलु खिद्यते चेतः ॥ १४१ ॥ **दाडिमः** ॥ मयि जीवति बीजाढ्ये किमन्ये बीजपूरकाः । इति संचिन्त्य मनसा विदद्रे दाडिमीफलम् ॥ १४२ ॥ आ पुष्पप्रसवान्मनोहरतया विश्वास्य विश्वं जनं हंहो दाडिम तावदेव सहसे वृद्धिं स्वकीयामिह । यावन्नैति परोपभोगसहतामेषा ततस्तां तथा ज्ञात्वा ते हृदयं द्विधा दलति यत्तेनातिवन्द्यो भवान् ॥ १४३ ॥ **नालिकेरः** ॥ उच्चैरेष तरुः फलं च विपुलं दृष्ट्वैव दृष्टया शुकः पक्कं शालिवनं विहाय जडधीस्तां नालिकेरीं गतः । तत्रारुह्य बुभुक्षितेन मनसा यत्नः कृतो भेदने आशा तस्य न केवलं विगलिता चञ्चूर्गता चूर्णताम् ॥ १४४ ॥ **तालः** ॥ अये ताल व्रीडां व्रज गुरुतया भाति न भवान्फले न छाया नो कठिनपरिवारो हि भवतः । इयं धन्या धन्या सरलकदली सुन्दरदला परात्मानं मन्ये सुखयति फलेनामृतवता ॥१४५॥ अध्वन्यध्वनि भूरुहः फलभृतो नम्रानुपेक्ष्यादराद्दूरादुन्नतिसंश्रयव्यसनिनः पान्थस्य मूढात्मनः । यन्मूलं समुपागतस्य मधुरच्छायाफलैः का कथा शीर्णेनापि हि नोपयोगमगमत्पर्णेन तालद्रुमः ॥ १४६ ॥ **भूर्जः** ॥ दौर्जन्यमात्मनि परं प्रथितं विधात्रा भूर्जद्रु-

१ स्थूलत्वे. २ उद्गस. ३ पुष्पोदयादारभ्य. ४ दुर्जनत्वम्.

मस्य विफलत्वसमर्थनेन । किं चर्मभिर्निशितशस्त्रशतावकृत्तैराशां न पूरयति सोऽर्थिपरंपराणाम् ॥ १४७ ॥ कुर्वन्तु नाम जनतोपकृतिं प्रसूनच्छायाफलैरविकलैः सुलभैर्द्रुमास्ते । सोढास्तु कर्तनरुजः पररक्षणार्थमेकेन भूर्जतरुणा करुणापरेण ॥ १४८ ॥ अश्वत्थः ॥ वर्धितैः सेवितैः किं तैः सत्यश्वत्थेऽन्यपादपैः । वर्धितो नरकाद्रक्षेत्स्पृष्टोऽरिष्टानि हन्ति यः ॥१४९॥ न्यग्रोधः ॥ महातरुर्वा भवति समूलो वा विनश्यति । नान्तरप्रत्ययानेति न्यग्रोधकलिकाङ्कुरः ॥ १५० ॥ न्यग्रोधे फलशालिनि स्फुटतरं किंचित्फलं पच्यते बीजान्यङ्कुरगोचराणि कतिचित्सिध्यन्ति तस्मिन्नपि । एकस्तेष्वपि कश्चिदङ्कुरवरः प्राप्नोति तामुन्नतिं यामासाद्य निदाघपीडिततनुर्ग्लानिच्छिदे धावति ॥ १५१ ॥ विस्तीर्णो दीर्घशाखाश्रितशकुनिशतः शाखिनामग्रणीस्त्वं न्यग्रोध क्रोधमन्तः प्रकटयसि न चेद्वच्मि किंचित्तदल्पम् । जल्पोऽप्येष त्रपाकृत्प्रलघुपरिकरा कापि कूष्माण्डवल्ली पल्लीपृष्ठप्रतिष्ठा हसति हि फलने त्वत्फलानां किमन्यत् ॥ १५२ ॥ मधूकः ॥ तत्तेजस्तरणेर्निदाघसमये तद्वारि मेघागमे तज्जाड्यं शिशिरे यदेकशरणैः सोढुं पुरा यैर्दलैः । आयातोऽप्यधुना फलस्य समयः कोऽयं विना तैरिति स्मृत्वा तानि शुचेव रोदिति गलत्पुष्पैर्मधूकद्रुमः ॥ १५३ ॥ मूलादेव यदस्य विस्तृतिभरच्छायाप्यनन्यादृशी ते यस्य प्रसवाः सुमञ्जुलरसैरानन्दयन्तः प्रजाः । स्नेहं च प्रकटीकरोति परमं भूयः फलानां गुणैर्हित्वैकैकगुणांस्तरूनभज सखे तस्मान्मधूकद्रुमम् ॥ १५४ ॥ शाल्मलिः ॥ विशालं शाल्मल्या नयनसुभगं वीक्ष्य कुसुमं शुकस्यासीद्बुद्धिः फलमपि भवेत्तादृशमिति । चिरं तत्र स्थित्वा फलमपि च काले परिणतं विपाके तूलोऽन्तः सपदि मरुता सोऽप्यपहृतः ॥ १५५ ॥ दूरे मार्गान्निवससि पुनः कण्टकैरावृतोऽसि छायाशून्यः फलमपि च ते वानरैरप्यभक्ष्यम् । निर्गन्धस्त्वं मधुपरहितः शाल्मले सारशून्यः सेवास्माकं भवति विफला तिष्ठ निःश्वस्य यामः ॥ १५६ ॥ हंसाः पद्मवनाशया मधुलिहः सौरभ्यलाभाशया पान्थाः स्वादुफलाशया बलिभुजो गृध्राश्च मांसाशया । दूरादुत्तमपुष्परागनिकरैर्निःसारमिथ्योन्नते रे रे शाल्मलिपादप प्रतिदिनं के न त्वया वञ्चिताः ॥ १५७ ॥ कायः कण्टकभूषितो न च घनच्छायीकृताः पल्लवाः पुष्पाणि च्युतसौरभाणि न दलश्रेणी मनोहारिणी । किं ब्रूमः फलपाकमस्य यदुपन्यासेऽपि लज्जामहे तद्ब्रोः केन गुणेन शाल्मलितरो जातोऽसि सीमद्रुमः ॥ १५८ ॥ निम्बः ॥ निम्ब किं बहुनोक्तेन निःफलानि फलानि ते । यानि संजातपाकानि काका निःशेषयन्त्यमी ॥ १५९ ॥ यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा । यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥ १६० ॥ शर्करामधुसंयुक्तैर्निम्बबीजप्रतिष्ठि-

१ श्रेष्ठ. २ लज्जाकृत्. ३ शोकेन. ४ काकाः. ५ व्यर्थानि. ६ अत्र वृश्चति सिञ्चति अर्चति इत्यध्याहारेण वाक्यानि पूरणीयानि.

तम् । पयोघटसहस्राणि निम्बं किं मधुरायते ॥ १६१ ॥ पथ्यानुरूपमिन्दीवरेण माकन्दशेखरो मुखरः । अपि च पिचुमन्दमुकुरे लेभौ कलिकुलं मिलति ॥ १६२ ॥ चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं जातो दैवादुचितघटनासंविधाता विधाता । यन्निम्बानां परिणतफलस्फीतिरास्वादनीया यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ १६३ ॥ यस्मादर्थिजनो मनोऽभिलषितं लब्ध्वा मुदा मेदुरः सार्धं बन्धुजनैश्चकार विविधान्भोगान्विलासोद्धुरः । तं दैवेन विवेकशून्यमनसा निर्मूल्य चूतद्रुमं स्थाने तस्य तु काकलोकवैसतिर्निम्बः समारोपितः ॥ १६४ ॥ बब्बुलः ॥ पत्रफलपुष्पलक्ष्म्या कदाप्यदृष्टं वृतं च खलु शूकैः । उपसर्पेम भवन्तं बब्बुल वद कस्य लोभेन ॥१६५॥ गात्रं कण्टकसंकटं प्रविरलच्छाया न चायासहृन्निर्गन्धः कुसुमोत्करस्तव फलं न क्षुद्विनाशक्षमम् । बब्बूलद्रुममूलमेति न जनस्तत्तावदास्तामहो ह्यन्येषामपि शाखिनां फलवतां गुप्त्यै वृतिर्जायसे ॥१६६॥ आमूलाग्रनिबद्धकण्टकतनुर्निर्गन्धपुष्पोद्गमच्छाया न श्रमहारिणी न च फलं क्षुत्क्षामसंतोषकृत् । रे रे बब्बुल साधुसङ्गरहितस्तत्तावदास्तामहो ह्यन्येषामपि शाखिनां फलवतां गुप्त्यै वृतिर्जायसे ॥ १६७ ॥ शाखाः कण्टककोटिभिः परिहृता वज्र्यं फलं कुत्सितं पत्रं क्षुद्रतरं न चास्ति गहना छायापि पान्थप्रिया । अन्येषामपि शाखिनां फलभृतां रक्षार्थमानीयसे बर्बूर द्रुम कैर्गुणैर्गुरुतरैर्वृक्षेषु संभाव्यसे ॥ १६८ ॥ खदिरः ॥ विना खदिरसारेण हारेण हरिणीदृशाम् । नाधरे जायते रागो नानुरागा पयोधरे ॥ १६९ ॥ चन्दने विषधरान्सहामहे वस्तु सुन्दरमगुप्तिमत्कुतः । रक्षितुं वद किमात्मसौष्ठवं संचिताः खदिर कण्टकास्त्वया ॥१७०॥ परं तादिह नास्ति यत्र खदिरैः खरैरावृतं न तेऽपि खादिरा न ये कुटिलकण्टकैरावृताः । न ते कुटिलकण्टकाः किमपि ये न मर्मच्छिदः समुज्झितवृथास्थितिर्व्रत सहध्वमध्वश्रमम्॥१७१॥ किंशुकः ॥ किंशुक किं शुकमुखवत्कुसुमानि विकासयस्यनिशम् । यस्यां जनोऽनुरागी सा गीरेतैः कदापि नोच्चार्या ॥ १७२ ॥ त्यज किंशुक पुष्पिताभिमानं निजशिरसि भ्रमरोपसेवनेन । विकसन्नवमल्लिकावियोगात्कुरुते वह्निधिया त्वयि प्रवेशम् ॥ १७३ ॥ शाखोटः ॥ शाखोट शाल्मलिपलाशकरीरकाद्याः शृण्वन्तु पुण्यनिलयो यदसौ वसन्तः । युष्मभ्यमर्पयति पल्लवपुष्पलक्ष्मीं सौरभ्यसंभवविधिस्तु विधेरधीनः ॥ १७४ ॥ कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते । वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते न च्छायापि परोपकारकृतये मार्गस्थितस्यापि मे ॥ १७५ ॥ पीलुः ॥ धन्याः सूक्ष्मफला अपि प्रियतमास्ते पीलुवृक्षाः क्षितौ क्षुत्क्षीणेन जनेन हि प्रतिदिनं येषां फलं भुज्यते । किं तैस्तत्र महाफलैरपि पुनः कल्पद्रुमाद्यैर्द्रुमैर्येषां

---

१ समृद्धिः. २ भक्षणचातुर्यम्. ३ निवासः. ४ पुष्पप्रकर.. ५ प्राचीरम्. ६ सर्पान्. ७ रक्षारहितम्. ८ पलाशवृक्ष. ९ समित्पत्रछायादिभिः.

नाम मनागपि श्रमनुदे छायापि न प्राप्यते ॥ १७६ ॥ **करीरः** ॥ फलं दूरतरेऽप्यास्तां पुष्णासि कुसुमैर्जनान्। इतरे तरवो मन्ये करीर तव किंकराः ॥ १७७ ॥ किं पुष्पैः किं फलैस्तस्य करीरस्य दुरात्मनः। येन वृद्धिं समासाद्य न कृतः पत्रसंग्रहः ॥ १७८ ॥ **बिल्वः** ॥ आमोदीनि सुमेदुराणि च मृदुस्वादूनि च क्ष्मारुहामुद्यानेषु वनेषु लब्धजनुषां सन्तीतरेषामपि। किं तु श्रीफलता तवैव जयिनी मालूर दिङ्मण्डले यस्यैतानि फलानि यौवनवतीवक्षोजलक्ष्मीगृहाः ॥ १७९ ॥ **शालः** ॥ शाखासंततिसंनिरुद्धनभसो भूयांस एवावनौ विद्यन्ते तरवः फलैरविकलैरार्तिच्छिदः प्राणिनाम्। किंतु द्वित्रिदलैरलंकृततनोः शालद्रुमस्तुङ्गतां दत्त्वा येन निजं शिरः सुकृतिना को नाम न प्रीणितः ॥१८०॥ **कुटजः** ॥ समुपागतवति दैवादवलेहां कुटज मधुकरे मा गाः। मकरन्दतुन्दिलानामरविन्दानामयं महामान्यः ॥ १८१ ॥ **पलाशः** ॥ उपनदिपुलिने महापलाशः पवनसमुच्छलदेकपत्रपाणिः। दवदहनविनष्टजीवितानां सलिलमिवैष ददाति पादपानाम् ॥ १८२ ॥ **इक्षुः** ॥ कान्तोऽसि नित्यमधुरोऽसि रसाकुलोऽसि किंचासि पञ्चशरकार्मुकमद्वितीयम्। इक्षो तवास्ति सकलं परमेकमूनं यत्सेवितो भजसि नीरसतां क्रमेण ॥ १८३ ॥ परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः। न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥ १८४ ॥ मुखे यद्वैरस्यं वपुरपि पुनर्ग्रन्थिनिचितं न संतप्तः कोऽपि क्षणमपि भजेन्मूलमभितः। फलं चैवाप्राप्यं वितर्षरसलिप्सस्य भवतस्तदिक्षोर्नायुक्तं विहितमितरैर्यत्तु दलनम् ॥ १८५ ॥ **लवङ्गी** ॥ अयि दुष्कृतकेन केन वत्से हलिकद्वारि लवङ्गि पुष्पितासि। स्तबकास्तव पांसुभिः परीताः परितः प्राङ्गणसीम्नि यल्लुठन्ति ॥ १८६ ॥ लूनं मत्तमतंगजैः कियदपि च्छिन्नं तुषारार्दितैः शिष्टं ग्रीष्मजतीक्ष्णभानुकिरणैर्भस्मीकृतं काननम्। एषा कोणगता मुहुः परिमलैरामोदयन्ती दिशो हा कष्टं ललिता लवङ्गलतिका दावाग्निना दह्यते ॥ १८७ ॥ सौरभ्येण समावृणोपि ककुभः पुष्णासि पुष्पंधयांल्लूतातन्तु वृथा तथापि कियतीस्त्वं यापयेर्यामिनीः। अस्मिन्दासपुरे परस्तत इतो विन्यस्तविस्रामिषे मालाकारमृते लवङ्गि ललितान्कस्ते गुणाञ्ज्ञास्यति ॥ १८८ ॥ **कार्पासः** ॥ नीरसान्यपि रोचन्ते कार्पासस्य फलानि मे। येषां गुणमयं जन्म परेषां गुह्यगुप्तये ॥ १८९ ॥ श्लाघ्यं कार्पासफलं यस्य गुणै रन्ध्रवन्ति पिहितानि। मुक्ताफलानि तरुणीकुचकलशतटेषु विलसन्ति ॥ १९० ॥ निष्पेषोऽस्थिचयस्य दुःसहतरः प्राप्तस्तुलारोहणं ग्राम्यस्त्रीनखचुम्बनव्यतिकरस्तन्त्रीप्रहारव्यथा। मातङ्गोक्षितम-

---

१ गुच्छकेरादि'. २ अभे. ३ पर्वव्याप्तम्. ४ वितथा दलनातिरिक्तसाधनाभावेन विफला रसस्य लिप्सा लब्धुमिच्छा यस्मिस्तस्य. ५ गुच्छानि. ६ सूत्रमयम्. ७ मातङ्गेनान्त्यजेनोक्षित सिक्त यन्मङ्गवारि अभिषवद्रवोदक तरुणिकाया. पानम्. अतीवाशुचीति भावः.

ण्डवारिकणिकापानं च कूर्चाहतिः कार्पासेन परार्थसाधनविधौ किं किं न चाङ्गीकृतम् ॥ १९१ ॥ शणः ॥ भूर्जः परोपकृतये निजकवचविकर्तनं सहते। परबन्धनाय तु शणः प्रेक्षध्वमिहान्तरं कीदृक् ॥ १९२ ॥ कण्टकारिका ॥ उचितं नाम नारिङ्ग्यां केतक्यामपि कण्टकाः। रसगन्धोज्झिते किं ते कण्टकाः कण्टकारिके ॥ १९३ ॥ धत्तूरः ॥ [1]माधुर्यसाराधरितामृतस्य तत्कण्टकित्वं पनसस्य सह्यम्। [2]उन्मादिनो मातुलपुत्रकस्य कथं सहामो बत कण्टकित्वम् ॥ १९४ ॥ धत्तूर धूर्त तरुणेन्दुनिवासयोग्ये स्थाने [3]पिशाचपतिना विनिवेशितोऽसि। किं कैरवाणि विकसन्ति तमः प्रयाति [4]चन्द्रोपलो द्रवति वार्धिरुपैति वृद्धिम् ॥१९५॥ धत्तूरकण्टक फलप्रतिरोधबुद्ध्या वैरं वृथैव कुरुषे पनसेन सार्धम्। सन्तो हसन्ति न भजन्ति च चेतसा त्वां भ्रान्ता भवन्ति पुरुषास्तव सेवनेन ॥१९६॥ महेशस्त्वां धत्ते शिरसि [5]रसराजस्य जयिनी विशुद्धिस्त्व[6]त्सङ्गात्कनकमयमेतात्रिभुवनम्। तनोति त्वत्सेवां ननु कनकवृक्ष त्वदपरः परः को नु स्यात्तद्यदि न सुलभीभावमभजः ॥१९७॥ पलाण्डुः॥ कर्पूरधूलीरचितालवालः कस्तूरिकाकुङ्कुमलिप्तदेहः। सुवर्णकुम्भैः परिषिच्यमानो निजं गुणं मुञ्चति किं पलाण्डुः ॥ १९८ ॥ तृणानि ॥ रूढस्य सिन्धुतटमनु तस्य तृणस्यापि जन्म कल्याणम्। यत्सलिलमज्जदाकुलजनस्य हस्तावलम्बनं भवति ॥ १९९ ॥ उत्तुङ्गैस्तरुभिः किमेभिरखिलैराकाशसंस्पर्शिभिर्धन्योऽसौ नितरामुलूपविटपी नद्यास्तटेऽवस्थितः। एवं यः कृतबुद्धिरुज्झितजलव्यालोलवीचीवशान्मज्जन्तं जनमुद्धरामि सहसा तेनैव मज्जामि वा ॥२००॥ कलमाः ॥ कलमाः पाकविनम्रा मूलतलाघ्रातसुरभिकह्लाराः। पवनाकम्पितशिरसः प्रायः कुर्वन्ति परिमलश्लाघाम् ॥ २०१ ॥ अस्मानवेहि [8]कलमानलमा[9]हतानां येषां प्रचण्डमुसलैरवदाततैव। [11]स्नेहं विमुच्य सहसा [12]खलतां प्रयान्ति ये स्वल्पपीडनवशान्न वयं तिलास्ते ॥ २०२ ॥ ताम्बूलम् ॥ किं वीरुधो[13] भुवि न सन्ति सहस्रशोऽन्या यासां दलानि न परोपकृतिं भजन्ते। एकैव वल्लिषु विराजति नागवल्ली या नागरीवदनचन्द्रमलंकरोति ॥ २०३ ॥ वल्लीनां कति न स्फुरन्ति परितः पत्राणि किं तैरिह स्निग्धैरप्यतिकोमलैरपि निजामेवाश्रयद्भिः श्रियम्। तानेव स्तुमहे महाजनमुखं श्रीकारिजन्मव्रतान्यान्सूते नवनागरीप्रियतमांस्ताम्बूलवल्लीदलान् ॥ २०४ ॥ तुम्बी ॥ सर्वास्तु[14]म्ब्यः समकटुरसास्तुम्बिवल्लीप्रसूतास्ताः संबद्धा अपि कतिपया दुस्तरं तारयन्ति। श[15]ब्दायन्ते सरसमपराः शुष्ककाष्ठे निषण्णास्तन्मध्येऽन्या ज्वलितहृदयाः [16]शोणितं संपिबन्ति ॥२०५॥ एके तुम्बा व्रजकरगताः पात्रतामानयन्ति गायन्त्यन्ये सरसमधुरं शुद्धवंशे विलग्नाः। एके तावद्ग्रथितसगुणा

१ माधुर्यसारेण तुच्छीकृतममृत येन. २ धत्तूरफलस्य. ३ शंकरेण. ४ चन्द्रकान्त.. ५ जयिनी उत्कर्षवती रसराजस्य पारदस्य विशुद्धिः एतत्त्रिभुवन कनकमय सुवर्णमयं तनोतीत्यन्वयः. ६ जातेति शेषः. ७ कंदर्प. ८ शालिविशेषान्. ९ कण्डितानाम्. १० शुभ्रत्वम्. ११ तैलम्; (पक्षे) प्रीतिम्. १२ दुर्जनत्वम्; (पक्षे) खलरूपत्वम्. १३ लता. १४ तुम्बीफलानि. १५ शब्द कुर्वन्ति. १६ रक्तम्.

दुस्तरं तारयन्ति तेषां मध्ये ज्वलितहृदया रक्तमेके पिबन्ति ॥ २०६ ॥ वंशः ॥ छिन्नः सुनिशितैः शस्त्रैर्विद्धश्च नव सप्तधा । तथापि हि सुवंशेन विरसं नापजल्पितम् ॥ २०७ ॥ कुन्दः ॥ एष षट्पदयुवा मदायतः कुन्द यापयति यामिनीस्त्वयि । दुर्वहा तदपि नोपचीयते पद्मिनीहृदयवेदना यदि ॥ २०८ ॥ संदर्शयस्व मधुवैभवमस्ति यत्ते रे कुन्द किं दुरभिमानमुरीकरोषि । एतन्न चेतासि करोषि सरोजबन्धुः पुष्पंधयोऽपि मम सौरभमातनोति ॥ २०९ ॥ कमलानि ॥ वरमश्रीकता लोके नासमानसमानता । इतीव कुमुदोद्भेदे कमलैर्मुकुलायितम् ॥ २१० ॥ प्रसारितकरे मित्रे जगदुद्द्योतकारिणि । किं न कैरव लज्जा ते कुर्वतः कोशसंवृतिम् ॥ २११ ॥ लक्ष्मीसंपर्कजातोऽयं दोषः पद्मस्य निश्चितम् । यदेष गुणसंदोहधाम्नि चन्द्रे पराङ्मुखः ॥ २१२ ॥ अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः । कथं कमलनालस्य नाभूवन्भङ्गुरा गुणाः ॥ २१३ ॥ मालती मुकुला याताः कुन्दा मन्दायितास्तथा । पङ्कज त्वामिदं ब्रूमः कुत्र यातु मधुव्रतः ॥ २१४ ॥ पङ्कज जलेषु वासः प्रीतिर्मधुपेषु कण्टकैः सङ्गः । यद्यपि तदपि तवैतच्चित्रं मित्रोदये हर्षः ॥२१५॥ कुसुमं कोशातक्या विकसति रात्रौ दिवा च कूष्माण्ड्याः । अलिकुलनिचयै रुचिरं किं नु यशः कुमुदकमलयोरेव ॥ २१६ ॥ उदितवति द्विजराजे कस्य न हृदये मुदः पदं दधति । संकुचसि कमल यदयं हर हर वामो विधिर्भवतः ॥ २१७ ॥ एते हि गुणाः पङ्कज सन्तोऽपि न ते प्रकाशमायान्ति । यल्लक्ष्मीवसतेस्तव मधुपैरुपजीव्यते कोशः ॥ २१८ ॥ पद्मिनि किमिति क्रीडसि मधुपैर्लज्जालवोऽपि न हि किं ते । हर हर विस्मृत्योक्तं क्व नु लज्जा सवितृरक्तायाः ॥ २१९ ॥ किं कुप्यसि कस्मैचन सौरभसाराय कुप्य निजमधुने । यस्य कृते शतपत्र प्रतिपत्रं तेऽद्य मृग्यते भ्रमरैः ॥ २२० ॥ अयि मकरन्दस्यन्दिनि पद्मिनि मन्ये तवैव सुभगत्वम् । पुष्पवतीमपि भवती त्यजति न वृद्धः शुचिर्हंसः ॥२२१॥ मधुप इव मारुतेऽस्मिन्मा सौरभलोभमम्बुजिनि मंस्थाः । लोकानामेव मुदे महितोऽप्यात्मामुनार्थितां नीतः ॥ २२२ ॥ न कुले वापि न शीले न वास्ति रूपेऽपि कश्चिदुत्कर्षः । यत्पुष्णाति मिलिन्दानरविन्द महत्त्वमेतत्ते ॥ २२३ ॥ रे पद्मिनीपत्र भवच्चरित्रं चित्रं प्रतीमो वयमत्र किंचित् । त्वं पङ्कजन्मापि यदच्छभावादपि स्पृशस्यम्बु न पङ्कसङ्गि ॥ २२४ ॥ जनिः सरोऽङ्कादतिपङ्किनो यद्यच्छोलुपैर्वा मधुपैर्विहारः । कलङ्क एवैष कुमुद्वतीना कलङ्किनः किं तु कलावतीनाम् ॥ २२५ ॥ अपि त्वया कैरविणि व्यधायि मुधा

---

१ कोशसवरणम्. २ रन्ध्राणि, (पक्षे) दोषस्थानानि. ३ शूका.; (पक्षे) खला.. ४ सौभाग्यादय.; (पक्षे) तन्तवः. ५ उदकेषु; (पक्षे डलयो. सावर्ण्यात्) जडेषु मूर्खेषु. ६ भ्रमरेषु, (पक्षे) मद्यपेषु. ७ स्वाङ्गरुहै ; (पक्षे) दुष्टैः. ८ सूर्ये.; (पक्षे) स्निग्ध.. ९ सूर्यानुरक्तायाः, (पक्षे) सविता पिता तस्मिन्रक्तायाः. पितृगामिन्या इत्यभिप्रायः. १० पुष्पयुक्ताम्; (पक्षे) रजस्वलाम्. ११ श्वेतः, (पक्षे) पवित्रः. १२ राजहंस ; (पक्षे) परमहस.

सुधाबन्धुनि धामभावः । जनापवादः परितः प्रयातः समागतो हन्त न जातु जातः ॥ २२६ ॥ कमलिनि मलिनीकरोषि[1] चेतः किमिति बकैरवहेलितानभिज्ञैः[2][3] । परिणतमकरन्दमार्मिकास्ते[4] जगति भवन्तु चिरायुषो मिलिन्दाः[5] ॥ २२७ ॥ रुचिरतिरुचिरा शुचित्वमुच्चैः शिरसि धृतः स्वयमेव शंकरेण । कमलिनि मलिनीकरोषि कस्मान्मुखमिदमिन्दुमुदीक्ष्य लोककान्तम् ॥ २२८ ॥ नलिनि निपुणतां वदामि किं ते भ्रमरविलासिनि लास्यलालसायाः । त्रिभुवननयनोत्सवं यदिन्दुं नयसि न हन्त दृगन्त वर्त्म सीमाम् ॥ २२९ ॥ स्वच्छन्दं दलदरविन्द ते मरन्दं विन्दन्तो विदधतु गुञ्जितं मिलिन्दाः । आमोदानथ हरिदन्तराणि[6] नेतुं नैवान्यो जगति समीरणात्[7]प्रवीणः ॥ २३० ॥ यावत्त्वां न खलु हसन्ति कैरविण्यो यावत्त्वां तरणिकराः परामृशन्ति । यावत्ते मधुविभवो नवोऽस्ति तावन्माध्वीकं वितर सरोज षट्पदेभ्यः ॥ २३१ ॥ रे पद्मिनीदल तवात्र मया चरित्रं दृष्टं विचित्रमिव यद्विदितं ध्रुवं तत् । यैरेव शुद्धसलिलैः परिपालितस्त्वं तेभ्यः पृथग्भवसि पङ्कभवोऽसि[8] यस्मात् ॥ २३२॥ कामं भवन्तु मधुलम्पटषट्पदौघसंघट्टघर्घरघनध्वनयोऽब्जखण्डाः । गायन्नपि श्रुतिसुखं विधिरेव यत्र भृङ्गः स कोऽपि धरणीधरनाभिपद्मः ॥२३३॥ विश्रम्य काननमसौ दिवसावसाने त्वय्येव षट्पदयुवा हृदयं बबन्ध । राजीव चेन्मलिनिमानमुरीकरोषि कः स्यादहो मधुलिहामधुनावलम्बः ॥ २३४ ॥ स्वामोदवासितसमग्रदिगन्तराला रक्ता मनोहरशिखा सुकुमारमूर्तिः । सेव्या सरोजकलिका तु यदैव जाता नीतस्तदैव विधिना मधुपोऽन्यदेशम् ॥ २३५ ॥ किं बान्धवेन रविणा हरिणाथ किंवा लक्ष्म्या च किं च जलजोदरजेन किंवा । एतस्य शुद्धचरितस्य सरोरुहस्य नैषा तुषारजनिता शमिता विपत्तिः ॥ २३६ ॥ लक्ष्मीनिवास इति वारिरुहां प्रसिद्धिरन्वेषिताः कतिपया वरटास्तु सन्ति । राजप्रसारितकरं किमहं ददामि संकोचितं वदनमम्बुरुहैरितीव ॥ २३७ ॥ लक्ष्मीः स्वयं निवसति त्वयि लोकधात्री मित्रेण चापि विदितोऽस्ति दृढोऽनुरागः । बन्दीव गायति गुणांस्तव चञ्चरीकः कः पुण्डरीक तव साम्यमुरीकरोति ॥ २३८ ॥ अयि दलदरविन्द स्यन्दमानं मरन्दं तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गाः । दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्परिमलमयमन्यो बान्धवो गन्धवाहः ॥ २३९ ॥ समुत्पत्तिः स्वच्छे सरसि हरिहस्ते निवसनं निवासः पद्मायाः[9] सुरहृदयहारी परिमलः । गुणैरेतैरन्यैरपि च ललितस्याम्बुज तव द्विजोत्तंसे[10] हंसे यदि रतिरतीवोन्नतिरियम् ॥२४०॥ नालस्य प्रसरो जलेष्वपि कृतावासस्य कोशे रुचिर्दण्डे कर्कशता मुखेऽतिमृदुता मित्रे महान्प्रश्रयः । आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे[11] यस्यैषा स्थितिर-

---

१ कलुषीकरोषि. २ अवहेला नीता. तिरस्कृतेति यावत्. ३ अपण्डितैः. ४ मर्मज्ञाः. ५ भ्रमराः. ६ दिगन्तराणि. ७ वायोः. ८ कर्दमोत्पन्नः. ९ लक्ष्म्याः. १० पक्षिश्रेष्ठे. ११ दोषाणामाकरे; (पक्षे) चन्द्रे.

बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥ २४१ ॥ नीरान्निर्मल
ासो यस्य हरेः करे परिमलो गीर्वाणचेतोहरः । सर्वस
ाम्भोरुह त्वं चेत्प्रीतिमुरीकरोपि मधुपे किं त्वा प्रति ब्रू
यो: समजनि स्वच्छे सरोवारिणि भ्रातः काचिदिहैव क
ब्धं तामरसं त्वया मृगदृशां लीलावतंसास्पदं शैव
ाथसि ॥२४३॥ वैमुख्यं मृगलाञ्छनस्य मनसो निर्माति
मधुलिहः सर्पन्ति यन्नान्तिकम् । जल्पन्तीव दुरक्षर.
दम्ब कुमुद्वती हसति मां तन्मे मनस्ताम्यति ॥ २४४
त्वत्सौरभैर्वासिताः सर्वास्ताः ककुभस्तवास्ति गरमा बन्धु
वद्य शिशिरे शीतानिलैः शीर्यसि प्रायः प्राप्तमिदं
॥ २४५ ॥ खद्योतास्तरला भवन्ति भगवानस्तंगतो भानुमान्
क्रेङ्कुर्वते कौशिकाः । इत्थं चेत्सदसद्विवेकविधुरो धाता तदेतादृशं न द्रष्ट

रितः कामः सर्वकामप्रदोऽस्तु वः
न्वी स मार एवैको द्वयोरैक्यं
जितमेवासीदमुना

तवती पद्मेक्षणं पद्मिनी ॥ २४६ ॥ पौलोमीपतिकानने विलसतां गीर्वाणभूमीरुहां येन घ्रातसमुज्झितानि कुसुमान्याजघ्रिरे निर्जरैः । तस्मिन्नद्य मधुव्रते विधिवशान्माध्वीकमाकाङ्क्षति त्वं चेदश्वसि लोभमम्बुज तदा किं त्वां प्रति ब्रूमहे ॥ २४७ ॥ लताः ॥ लतानामेतासामुदितकुसुमानां मरुदयं मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् । लतास्त्वध्वन्यानामहह दृशमादाय सहसा ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥ २४८ ॥

---

## संकीर्णान्योक्तयः ।

शिवः ॥ भस्मनि स्मरारिपोरनुरागो हीयते न घनसारपरागः । भूषणं यदि फणी न मणीना काचिदप्यपचितिर्न च हेम्नः ॥ १ ॥ उरसि फणिपतिः शिखी ललाटे शिरसि विधुः सुरवाहिनी जटायाम् । प्रियसखि कथयामि किं रहस्यं पुरमथनस्य रहोऽपि संसदेव ॥ २ ॥ इयं तावल्लीला यदधिरुरुहे वृद्धवृषभौ यदुन्नेहे रुण्डं यदिह चितिभस्मापि लिलिपे । अयं को व्यापारो यदतिलकि भाले हुतवहो यदग्रैवि व्यालो यदकवलि हालाहलमपि ॥ ३ ॥ बिभ्राणे त्वयि भस्म कः समभवन्मन्दादरश्चन्दने कः क्षौमं कलयांचकार न कृती कृत्तिं वसाने त्वयि । धत्तूरस्पृहयालुता त्वयि गते तत्याज कः केतकीं स्वातन्त्र्याज्जहिहि त्वमीश्वर गुणाल्लोकोऽस्ति तद्ग्राहकः ॥ ४ ॥ त्वं चेत्संचरसे वृषेण लघुता का नाम दिग्दन्तिना व्यालैः काञ्चनकुण्डलानि कुरुषे हानिर्न हेम्नः पुनः । मूर्ध्ना चेद्वहसे

---

१ देवमनोहरः २ अङ्गीकरोषि. ३ नन्दिना. ४ दिग्गजानाम्.

सुधाबन्धुनि धामभावः । जनाप दीपस्याम्बुजबान्धवस्य जगतामीशोऽसि किं ब्रूमहे ॥५॥
॥ २२६ ॥ कमलिनि मलिनीकर प्रेतेषु सख्यं यदि क्षीबः क्रीडसि मातृभिर्यदि रतिं धत्से
रन्दमार्मिकास्ते जगति भवन्तु चिर जां यदि तथाप्याधाय भक्त्या मनः कं सेवे करवाणि किं
मुच्चैः शिरसि धृतः स्वयमेव शंकरे ६ ॥ परशुरामः ॥ त्वं जामदग्न्य जननीवधपातकेन संदू-
दीक्ष्य लोककान्तम् ॥ २२८ ॥ । गीर्वाणवन्द्यचरणस्तव चन्द्रमौलिमाचार्यकं स भगवा-
लास्यलालसायाः । त्रिभुवननय चारविचारपारगतया वृद्धानिरादिष्टया मात्रा वस्तुषु तेषु
॥ २२९ ॥ स्वच्छन्दं दलदरविन्द अन्नप्राशनवासरे सरभसं वक्षोभरोत्सर्पिणा येनात्तं धनु-
मोदानथ हरिदन्तराणि नेतुं नैवान शः ॥ ८ ॥ रामचन्द्रः ॥ सङ्ग्रामाङ्गणमागते दशमुखे
खलु हसन्ति कैरविण्यो यावत्त्वां वर्ति हनुमता व्यालोलमालोकितम् । श्रीरामेण परंतु
तावन्माध्वीकं वितर सरोज षट् न्द्रानन्दरसालसानि दधिरे बाणासने दृष्टयः ॥ ९ ॥
दृष्टं विचित्रमिव यद्विदित शशकशिशुमालोक्य चकिता भुजप्रान्तं भर्तुर्भजति भयहर्तुः
हा सेयं सीता दशवदननीता हलरदैः परीता रक्षोभिः श्रयति विवशा
कामपि दशाम् ॥ १० ॥ **कृष्णः** ॥ गोपालाः पशुसङ्गिनो गुणकथामन्दाः पुलिन्दा इमे तिर्यञ्चो हरिणादयो गिरिनदीवृक्षादयोऽचेतनाः । तद्गोष्ठे च विदांकरोतु कतमो राधागुणानुज्ज्वलांश्रेन्नो त्वादृक यादवेन्द्र भवतस्त्वं विज्ञचूडामणिः ॥ ११ ॥ **इन्द्रः** ॥ जम्भारिरेव जानाति रम्भासंयोगविभ्रमम् । घटीचेटीविटः किंस्विज्जानात्यमरकामिनीम् ॥ १२ ॥ **स्मरः** ॥ पुरो गीर्वाणानां निजभुजबलाहोपुरुषिकामहो कारं कारं पुरभिदि शरं संमुखयतः । स्मरस्य स्वर्बालानयनशुभमालार्चनपदं वपुः सद्यो भालानलभसितजालास्पदमभूत् ॥ १३ ॥ **आकाशम्** ॥ यः पीयूषसहोदरैः स्नपयति ज्योत्स्नाजलैः सर्वतो यश्च त्वामधिकाधिकं ज्वलयति प्रोद्दामतापैः करैः । भ्रातर्व्योम तयोरपि स्थितिमिह व्यातन्वतो विक्रियानिर्मुक्तस्य महत्त्वमेतदसमं दूरेऽधिरूढ तव ॥ १४ ॥ **पृथ्वी** ॥ विश्वास्य मधुरवचनैः साधून्ये वञ्चयन्ति नम्रतमाः । तानपि दधासि मातः काश्यपि यातस्तवापि च विवेकः ॥ १५॥ **जलम्** ॥ शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता किं ब्रूमः शुचितां भजन्त्यशुचयः स्पर्शेन यस्यापरे । किंवातः परमुच्यते स्तुतिपदं यज्जीवनं देहिनां त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥ १६ ॥ अब्जं त्वब्जमथाब्जभूस्तत इदं ब्रह्माण्डमण्डात्पुनर्विश्वं स्थावरजंगमं तदितरं त्वन्मूलमित्थं पयः । धिक्त्वा चोर इव प्रयासि निभृतं निर्गत्य जालान्तरैर्बध्यन्ते विवशास्त्वदेकशरणास्त्वामाश्रिता जन्तवः ॥ १७ ॥ **मारुतः** ॥ सन्ना नाविकधोरणी निपतिता मध्येजलं क्षेपणी पन्थाः पर्वतदुर्गमो घनघनच्छन्नश्च

१ जलांशु चन्द्रम्; ( पक्षे ) जडांशुम्. २ सूर्यस. ३ ख्यापयसि. ४ मत्तः. ५ ब्राह्मयादिभि.. ६ इन्द्र.. ७ घटवाहिका दासी तस्या जार.. ८ देवाङ्गनाम्. ९ भूमे. १० गतः. ११ गलिता. १२ जलमध्ये. १३ निबिडघनाच्छादित..

तारापथः । हंहो मारुत दुस्तरो जलनिधिः शीर्णा च नौः
वा हस्ते तवास्ते द्वयम् ॥ १८ ॥ मृगतृष्णिका ॥ जल
न्त्यां मृगतृष्णिकायाम् । जलाशयभ्रान्तिरभून्ममैषा प्र
सुवर्णम् ॥ अग्निदाहे न मे दुःखं छेदे न निकषे न वा
तोलनम् ॥ २० ॥ न वै ताडनात्तापनाद्वह्निमध्ये न
सुवर्णस्य मे मुख्यदुःखं तदेकं यतो मां जना गुञ्जया
अत्यच्छेनाविरुद्धेन सुवृत्तेनातिचारुणा । अन्तर्भिन्नेन र
हृदये कुरु संचयं गुणानां यदि रे वाञ्छसि नासिके
नूनं गुणहीनो नहि नासिके विभाति ॥ २३ ॥ ... चरितः कामः सर्वकामप्रदोऽस्तु वः
कृतः कठिनवेधनदुःखभारः । वक्षोजकुम्भपरिरम्भणलो... न्वौ स मार एवैको द्वयोरैक्यं
मौक्तिकेन ॥ २४ ॥ सुवर्णकारः ॥ हे हेमकार परदुःखवि... जितमेवासीदमुना
वारशतानि वह्नौ । संदीप्यते मयि सुवर्णगुणातिरेको लाभः पर तव : खि ...
॥ २५ ॥ हारः ॥ मुक्ताहार गुणीभूय नोपसर्प्यः स्तनस्त्वया । विभवे यस्य काठिन्यं व्यर्थं तदुपसर्पणम् ॥ २६ ॥ गुणवतस्तव हार न युज्यते परकलत्रकुचेषु विलुण्ठनम् । स्पृशति शीतकरो जघनस्थलीमुचितमस्ति तदेव कलङ्किनः ॥ २७ ॥ सद्वृत्तसद्गुणविचित्र-महार्हकान्ते कान्ताघनस्तनतटाञ्चितचारुमूर्ते । आः पामरीकठिनकण्ठविलग्नभङ्ग हा हार हारितमहो भवता गुणित्वम् ॥ २८ ॥ दीर्णोऽसि चेत्कनकसूत्रनिवेशनाय मुक्ताकलाप किमतो भवतो विषादः । यत्पञ्चबाणजयमङ्गलहेमकुम्भकुम्भस्तनीस्तनतटे भविता न स-ङ्गः ॥ २९ ॥ अन्येऽपि सन्ति कति नो गुणिनो जगत्यां हार त्वमेव गुणिनामुपरिस्थितो-ऽसि । एणीदृशामुरसि नित्यमवस्थितस्य सद्वृत्तता च शुचिता नवखण्डिता यत् ॥ ३० ॥ येनाकारि महीभृतामविरलं कण्ठेषु लीलायितं येन प्रापि सरोजसुन्दरदृशां तुङ्गस्तनालिङ्ग-नम् । जातं येन गजेन्द्रगण्डपुलिने साधारणं गुञ्जया मुक्तादाम तदेव पामरपुरे नावाप कां का दशाम् ॥ ३१ ॥ कञ्चुकः ॥ श्रीमता कथय कञ्चुक पूर्वं कानि कानि सुकृतानि कृ-तानि । जन्म यापयसि येन समस्तं हारहृद्यहृदये हरिणाक्ष्याः ॥ ३२ ॥ कुण्डलम् ॥ यत्पूर्वं पवनाग्निशस्त्रसलिलैश्चीर्णं तपो दुष्करं तस्यैतत्फलमीदृशं परिणतं यज्जातरूपं वपुः । मुग्धापाण्डुकपोलचुम्बनसुखं सङ्गश्च रत्नोत्तमैः प्राप्तं कुण्डल वाञ्छसे किमपरं य-न्मूढ दोलायसे ॥ ३३ ॥ नासाभूषणम् ॥ हारस्यातिदुरापमस्त्रिभुवने हे नासिकाभूषण त्वत्सौभाग्यमिति प्रतीहि वनितावक्त्रेन्दुकान्तिप्रदा । यत्कान्तातनुसंगमाय सहते सोऽन्तर्वि-

१ अन्तरिक्षम्. २ भिन्ना. ३ सूत्रवतः. (पक्षे) गुणयुक्तस्य. ४ चन्द्रः. ५ कलङ्कयुक्तस्य. ६ सुवर्ण-रूपम्

सुधाबन्धुनि धामभावः । जनाप
॥ २२६ ॥ कमलिनि मलिनीकर
रन्दर्मार्मिकास्ते जगति भवन्तु चि
मुच्चैः शिरसि धृतः स्वयमेव शंकरे
दीक्ष्य लोककान्तम् ॥ २२८ ॥
लास्यलालसायाः । त्रिभुवननय
॥ २२९ ॥ स्वच्छन्दं दलदरविन्द
मोदानथ हरिदन्तराणि नेतुं नैवान
खलु हसन्ति कैरविण्यो यावत्त्वां
तावन्माध्वीकं वितर सरोज पट
दृष्टं विचित्रमिव यद्विदिन

दी भवत्सङ्गं यतो वाञ्छति ॥ ३४ ॥ **वलयः** ॥ गुणानाम-
प्रेते हृच्छेदव्यतिकरमसौ स्वर्णवलयः । अपि ज्ञाते तत्त्वे
जां तापुञ्जैस्तुलनमतिलज्जाकरमिदम् ॥ ३५ ॥ **रङ्गः** ॥ हे
॥ नं जहीहि किमु पश्यसि नो विशेषम् । स्वर्णं सरत्न-
। चरणेषु लीनः ॥ ३६ ॥ **वीणादण्डः** ॥ यदेतत्का-
चार रेणानीतस्त्वं वससि सह हारेण गुणिना[1] । मुहुः
अन्न न्नये वीणादण्ड प्रकटय फलं कस्य तपसः ॥ ३७ ॥
शः खलग्ना रागमावहतु किंतु वयस्ये । वंशजाहमि-
वर्ति विवराणि ॥ ३८ ॥ परिपीड्य करद्वयेन
न्द । मुरली महनीयवंशजा मुहुराक्रन्दममन्दमातनोतु
स्य कुविन्द कन्दलतया वस्त्राण्यमूनि त्वया गोणीवि-
सुबद्धं यात्मा किमायास्यते । किं त्वेकं रुचिरं चिरादभिनवं वासस्तदा सूत्र्यतां यन्नोज्झन्ति कुचस्थलात्क्षणमपि क्षोणीभुजां वल्लभाः ॥ ४० ॥ **लाङ्गलिकः** ॥ रे लाङ्गलिक विषद्याः क्रोडं लोहं पुरा यदद्राक्षीः । स्पर्शं स्पर्शविशेषात्तदखिलमजनिष्ट हेम नृपयोग्यम् ॥ ४१ ॥ **कर्णधारः** ॥ दुर्गा नदी शिथिलबन्धविडम्बिनी नौरभ्युन्नता जलमुचो विषमः समीरः । आरूढवान्निजकुटुम्बयुतोऽध्वनीनस्तत्कर्णधार कुरु यत्सदृशं कुलस्य ॥ ४२ ॥ जीर्णा तरिः सरिदियं च गभीरनीरा नक्राकुला वहति वायुरतिप्रचण्डः । तार्यासि यश्च शिशवश्च तथैव वृद्धास्तत्कर्णधार भुजयोर्बलमाश्रयामः ॥४३॥ **तैलिकः** ॥ अमी तिलास्तैलिक नूनमेतां स्नेहादवस्थां भवतोपनीताः । द्वेष्योऽभविष्यद्यदमीषु नूनं तदा न जाने किमिवाकरिष्यः ॥ ४४ ॥ **पञ्जरलावकः** ॥ भ्रातः पञ्जरलावक मा कुरु संतोषमन्यनिधनेन । प्रातस्तवैव धातुः स्वामित्वं किं न जानासि ॥ ४५ ॥ **व्याधः** ॥ एको विश्वसतां हराम्यपघृणः प्राणानहं प्राणिनामित्येवं परिचिन्त्य मा स्वमनसि व्याधानुतापं कृथाः । भूपानां भवनेषु किंच विमलक्षेत्रेषु गूढाशयाः साधूनामरयो वसन्ति कति नो त्वत्तुल्यकक्षाः खलाः ॥ ४६ ॥ सर्वोद्वेगकरं मृगादनममुं संत्यज्य हा धिक्त्वया लोकस्यानपकारिणं गिरिनदीतीराटवीनिर्वृतम् । अश्नन्तं तृणमेणशावमदयं व्याध घ्नतामुं वृथा देवो दुर्बलघातकोऽयमिति सा गाथा यथार्थीकृता ॥ ४७ ॥ **विषमन्त्री** ॥ भेकेन[3] क्वणता सरोषपरुषं यत्कृष्णसर्पानने दातुं कर्णचपेटमुज्झितभिया[4] हस्तः समुल्लासितः । यच्चाधोमुखमक्षिणी विदधता नागेन तूष्णीं स्थितं तत्सर्वं विषमन्त्रिणो भगवतः कस्यापि लीलायितम् ॥४८॥ **मालाकारः** ॥ तोयैरल्पैरपि करुणया भीमभानौ निदाघे मालाकार

---

१ गुणयुक्तेन. २ निष्क्रहण.. ३ मण्डूकेन ४ निर्भयेन

व्यरचि भवता या तरोरस्य पुष्टिः । सा किं शक्या जन
रानपि विकिरता विश्वतो वारिदेन ॥ ४९ ॥ मत्स्यम
गणिताः क्रूराश्च नक्रादयश्चञ्चद्वीचिकरम्बडम्बरमिल
धि पाक्षिवत्स्मर कथं भूयः कृतो लीलया संपत्तिः श
॥ ५० ॥ कायस्थः ॥ विप्रेभ्यः साधुदानं रिपुजनसु
वर्गे निजहितमुचितं स्वामिकार्यं यथार्थम् । श्रो
भाग्यशालिन्नो चेन्नष्टेऽधिकारे मम मुखसदृशं ताव
कस्त्वं भोः कविरस्मि तत्किमु सखे क्षीणोऽस्यनाहा
देशं न मामेव धिक् । पाकार्थी क्षुधितो यदैव वि[illegible] चरितः कामः सर्वकामप्रदोऽस्तु वः
स्वुधौ न सलिलं नान्नं धरित्रीतले ॥ ५२ ॥ बालाः धन्वी स मार एवैको द्वयोरैक्यं
भवन्ति सखे समानसुखदुःखाः । चिकुरा इव ते बाला [illegible] जितमेवासीदमुना
शैलूषः ॥ वंशः प्रांशुरसौ घुणव्रणमयो जीर्णा वरत्रा इमाः कीलाः कुण्ठते[illegible]
महीमाहन्यमाना अपि । आरोहव्यवसायसाहसमिदं शैलूष संत्यज्यतां दूरे श्रीर्निकटे कृतान्तमहिषग्रैवेयघण्टारवः ॥ ५४ ॥ कुशीलवाः ॥ मौलिः स्वर्णकिरीटकान्तिरुचिरः केयूरभव्यौ भुजौ त्वद्भृत्याः किल कञ्चुकिप्रभृतयो देवेति विज्ञाप्यसे । इत्थं कल्पनया कुशीलवनृपाहंकारदार्ढ्यं वृथा नृत्यान्ते भवतो भविष्यति मसीमात्रावशेषं वपुः ॥ ५५ ॥ बाला ॥ स्रग्दाम मूर्धनि निधेहि गवेधुकानां गुञ्जामयीमुरसि धारय हारयष्टिम् । बाले कलावति चिरं पतितासि पल्लौ तल्लौहमन्यदपि भूषणमेषणीयम् ॥ ५६ ॥ पल्लीपतिपुत्री ॥ एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डुरप्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते । तत्पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थनादीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥ ५७ ॥ पान्थः ॥ न यत्र गुणवत्पात्रमेकमप्यस्ति संनिधौ । कस्तत्र भवतः पान्थ कूपाम्बुग्रहणाग्रहः ॥ ५८ ॥ वापी कापि कदापि न श्रुतचरी को वेद कीदृक्सरो व्योमाम्भोजवनीव चात्र तटिनी कैर्नाम विज्ञायते । हंहो पान्थ दुरन्तसाहसभरैरत्रागतं चेन्मरौ मण्डूकाकुलपङ्कसकुलजलादन्धोः कबन्धं पिब ॥ ५९ ॥ कस्तूरिका ॥ अयि त्यक्तासि कस्तूरि पामरैः पङ्कशङ्कया । अलं खेदेन भूपालाः किं न सन्ति महीतले ॥६०॥ यद्यपि दैवाल्लब्धा कस्तूरीभूमिरत्र भूरितरम् । नेया किमसौ तदपि हि शौचार्थं[1] जानता पुंसा ॥ ६१ ॥ दुर्लीलपल्लीपतिपुत्रहस्ते कस्तूरि कस्ते वद दुर्विपाकः । आरभ्य सौरभ्यकथासु मौनं मालिन्यमात्रे वचसोऽवकाशः ॥ ६२ ॥ अयि बत गुरुगर्वं मा स्म कस्तूरि यासीरखिलपरिमलानां मौलिना सौरभेण । गिरिगहनगुहायां लीनमत्यन्तदीनं स्वजनकम-

१ हस्तपादादिक्षालनार्थम्.

सुधाबन्धुनि धामभावः । जनाप [1]जन्मस्थानं न खलु विमलं वर्णनीयो न वंशो दूरे पुंसां
॥ २२६ ॥ कमलिनि मलिनीकर प्रेष्ठ्यस्येवं सकलसुरभिद्रव्यगर्वापहारी को जानीते परि-
रन्दर्मार्मिकास्ते जगति भवन्तु चि जातेः ॥ दीपः ॥ रक्ष पात्रगतं स्नेहं प्रदीप श्रीविवर्धनम् ।
मुच्चैः शिरसि धृतः स्वयमेव शंकरे६ बहुणाः ॥ ६५ ॥ बहिरतिनिर्मलरूपं वहतस्ते दीप
दीक्ष्य लोककान्तम् ॥ २२८ ॥ [1]मौज्ज्वल्यं कज्जलद्वारा ॥ ६६ ॥ न मणेरितोऽधिका
लास्यलालसायाः । त्रिभुवननय च अचिरस्थितिरिति दीपो न हि बहुमूल्योऽभवत्प्रायः
॥ २२९ ॥ स्वच्छन्दं दलदरविन्द अ दीप भद्र स्वीयासाविति हृदि मा स्म मन्यथास्त्वम् ।
मोदानथ हरिदन्तराणि नेतुं नैवान शः एवं चेदहनि सति क्व वा गता सा ॥ ६८ ॥ प्रदीप
खलु हसन्ति कैरविण्यो यावत्त्वां वो [illegible]पाटलप्रकटपार्वकव्यक्तये । त्वमङ्ग किमु कामि-
तावन्माध्वीकं वितर सरोज षट् त्पवनलेशपारं गतः ॥ ६९ ॥ रे रे दीप तिरस्कृता-
दृष्टं विचित्रमिव यद्विद्विन् [illegible]मूढनिजाङ्गपातिशलभाघातेन किं पौरुषम् । तत्कर्माचर
[illegible] भूयात्प्रभाते पुनर्न स्नेहो न च सा दशा नहि परं ज्योतिः परं स्थास्यति
॥ ७० ॥ **तुला** ॥ गुरुषु मिलितेषु शिरसा प्रणमसि लघुषून्नता समेषु तुला । उचितज्ञा-
सि तुले किं तुलयसि गुञ्जाफलैः कनकम् ॥ ७१ ॥ प्राप्य प्रमाणपदवीं को नामास्ते तुले-
ऽवलेपस्ते । नयसि गरिष्ठमधस्तात्तदितरमुच्चैस्तरां कुरुषे ॥ ७२ ॥ **कुम्भः** ॥ दृढतरगल-
कानिबन्धः कूपनिपातोऽपि कलश ते धन्यः । यज्जीवनदानैस्त्वं तर्षामर्षं नृणां हरसि
॥ ७३ ॥ श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रचण्डातपः क्लेशः श्लाघ्यतरः सुपङ्कनि-
चयैः श्लाघ्योऽतिदाहानलः । यत्कान्ताकुचपार्श्वबाहुलतिकाहिल्लोललीलासुखं लब्धं कु-
म्भवर त्वया नहि सुखं दुःखैर्विना लभ्यते ॥ ७४ ॥ **कलशः** ॥ भ्रातः [2]काञ्चनलेपगोपि-
तबहिस्ताम्राकृतिः सर्वतो मा भैषीः कलश स्थिरो भव चिरं देवालयस्योपरि । ताम्रत्वं
गतमेव काञ्चनमयी कीर्तिः स्थिरा तेऽधुना नान्तस्तत्त्वविचारणप्रणयिनो लोका बहिर्बुद्धयः
॥ ७५ ॥ **दुग्धम्** ॥ को हि तुलामधिरोहति शुचिना दुग्धेन सहजमधुरेण । तप्तं विकृतं
मथितं तथापि यत्स्नेहमुद्गिरति ॥ ७६ ॥ **बडिशदण्डाः** ॥ यत्सद्गुणोऽपि सरलोऽपि तट-
स्थितोऽपि वंशोद्भवोऽपि विदधासि नृशंसकर्म । वक्रात्मनो बडिशदण्ड तदेव तस्य जानामि
संगतिफलं तव कण्टकस्य ॥ ७७ ॥ **शरः** ॥ कोटिद्वयस्य लाभेऽपि नतं सद्वंशजं धनुः ।
असद्वंश्यः शरः स्तब्धो लक्ष्यलाभाभिकाङ्क्षया ॥ ७८ ॥ **लम्पाकः** ॥ प्रागल्भ्यं प्रथय-
न्यशो विशदयन्घाटीं मुखे योजयन्भूपानां कलयन्कथां विरचयन्हस्ताङ्गुलीः स्फोटयन् । दानं
पल्लवयन्गुणं द्विगुणयन्नेत्राञ्चलं घूर्णयंल्लम्पाकः सविधं समेत्य सुदृशां किं नाम नो भाषते
॥७९॥ **खलः** ॥ किमहं वदामि खल दिव्यमतं गुणपक्षपातमभितो भवतः । गुणशालिनो

१ शोभा. २. काञ्चनलेपेन गोपिता बाह्या ताम्राकृतिर्यस्य.

निखिलसाधुजनान्यदहर्निशं न खलु विस्मरसि ॥ ८ ॥
सोऽपि सन्मार्गपतितोऽपि सन् । सतां वै पादलग्नोऽ ।
कालकूटम् ॥ नन्वाश्रयस्थितिरियं तव कालकूट के—
र्णवस्य हृदये वृषलक्ष्मणोऽथ कण्ठेऽधुना वससि वा म् ।
द्वात्रिंशद्दशनद्वेषिमध्ये भ्रमासि नित्यशः । तदिदं
॥ ८३ ॥ नन्दनवनम् ॥ स्वर्लोकस्य शिखामणि. तः ।
पुरुहूतयोः परिणतिः पुण्यावलीनामसि । सत्यं नन्दन
त्वत्तः खाण्डवरङ्गताण्डवनटो दूरेऽस्तु वैश्वानरः ॥ ८ ।
दलितारविन्दा देहं दहन्ति दहना इव गन्धवाह... चरितः कामः सर्वकामप्रदोऽस्तु वः
न्मधुव्रत मधो किल कोकिलस्य ॥ ८५ ॥ मुसलः ॥ । धन्वी स मार एवैको द्वयोरैक्यं
तदपि च किल सत्यं कानने वर्धितोऽसि । नवकुव... जितमेवासीदमुना
किसलयं ते तत्क्षणाद्यन्न जातम् ॥ ८६ ॥ संकीर्णाः ॥ गतास्ते दिवस...
कल्पशाखिनाम् । औदुम्बरफलेभ्योऽपि स्पृहयामोऽद्य जीवितम् ॥ ८७ ॥ नौकां वै भजते तावद्यावत्पारं न गच्छति । उत्तीर्णे तु नदीपारे नौकायाः किं प्रयोजनम् ॥ ८८ ॥ एका भूरुभयोरैक्यमुभयोर्दलकाण्डयोः । शालिश्यामाकयोर्भेदः फलेन परिचीयते ॥ ८९ ॥ कौस्तुभमुरसि मुरारेः शिरसि शशी द्योतते पुरंजयिनः । ननु जन्मना न जलधेर्जग्मतुरियती गतिं पश्य ॥ ९० ॥ साधो कुण्डलघटनापरिश्रमो दलमविद्धकर्णा पूः । वसति दिगम्बरनगरे रजकश्चतुरोऽपि किं कुरुते ॥ ९१ ॥ शतपदी शतपादतलेक्षणा यदि न गोष्पदमप्यतिवर्तितुम् । किमियता द्विपदस्य हनूमतो जलपदैः क्रमणे विवदामहे ॥ ९२ ॥ हे मल्लि हे मालति हे लवङ्गि न तादृशी कापि भवादृशीनाम् । क्षणं समाधाय मधुव्रतं या विस्मारयेदम्बुजिनीवियोगम् ॥ ९३ ॥ यः कुन्तपाणिरिह भूप इति प्रसिद्धो भूखण्डमात्रविभवः परसेवकश्च । तस्यात्मजः सततमिच्छति राजशब्दं व्रीडे जगज्जननि हन्त निराश्रयासि ॥ ९४ ॥ इन्द्रो यमोऽसि वरुणोऽसि हुताशनोऽसि ब्रह्मा हरो हरिरसीत्यसकृद्यदुक्तिः । भूपालमौलिमणिरञ्जितपादपीठ तस्यानृतस्य फलमिन्धनमुद्वहामि ॥ ९५ ॥ आः सर्वतः स्फुरतु कैरवमाः पिबन्तु ज्योत्स्नाकरम्ममुदरंभरयश्चकोराः । याते यदेष चरमाचलमूलचुम्बी पङ्केरुहप्रकरजागरणप्रकारः ॥ ९६ ॥ खरनखरविमुक्ता रक्तरक्ताश्च मुक्ताः परिणतबदराणां विभ्रमेनोपगृह्य । सपदि शिरसि धौताः प्रत्यभिज्ञाय मुक्ता इति किरति किराती हन्त कान्तारमेव ॥ ९७ ॥ अब्धेरम्भः स्थगितभुवनाभोगपातालकुक्षेः

१ आश्रयो निवासस्तत्र स्थितिः. २ उत्कृष्टम्. ३ स्थानम्. ४ अभ्यन्तरे. ५ सदाशिवस्य. ६ दन्ताः. ७ अवमान.. ८ कल्पवृक्षाणाम्.

नुधाबन्धुनि धामभावः । जनाप ःजन्म क्षमन्ते । आहो रिक्तः कथमपि भवेदेष दैवात्तदानीं को
। २२६ ॥ कमलिनि मलिनीकर प्रौद्धृष्य ल्पः ॥९८॥ इयत्येतस्मिन्वा निरवधिचमत्कृत्यतिशये
न्दर्मांमिकास्ते जगति भवन्तु चि ज२४॥ षयः । महीमेको मग्नां यदयमवहद्दन्तसलिलैः शिरः
मुच्चैः शिरसि धृतः स्वयमेव शंकरे६ वद्गुणा ॥ ९९ ॥ श्रुत्वा कुम्भसमुद्भवेन मुनिना किंचित्तदा-
ढीक्ष्य लोककान्तम् ॥ २२८ ॥ ।भ्रौज्ज पादिदं ध्यायति । गाम्भीर्याद्यदि तेन बिभ्यति न
लास्यलालसायाः । त्रिभुवननय च अचि वसन्तु तिमयो जातानुकम्पा वयम् ॥ १०० ॥
॥ २२९ ॥ स्वच्छन्दं दलदरविन्द अद्दीप न स्मितं स्मेरैर्दृग्वलनैरमुष्य नयनाच्चेतः परावर्तते ।
मोदानथ हरिदन्तराणि नेतुं नैवान शुचैवं गु तन्नीयतां वेदीमार्जनबर्हिरर्पणवषट्कर्तव्यपाके-
खलु हसन्ति कैरविण्यो यावत्त्वां व भूतयः संभाविताः पञ्चषास्तान्प्रत्येष विशेषवि-
तावन्माध्वीकं वितर सरोज प रूप ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भासुरौ भ्रातः पर्वणि
॥ १०२ ॥ वीणाप्येकगुणो न राजरमणीनीरन्ध्रपीन-
दृष्टं विचित्रमिव श्रि शुष्कदारुनिचया निःसारतुम्बीफला । चञ्चत्पार्विकशर्वरीपरिवृढप्रौढप्रथा-
भासुरं मुक्ताजातमपीह निर्गुणतया योग्यं न संभाव्यते ॥ १०३ ॥ तृष्णालोलविलोचने कलयति प्राचीं चकोरीगणे मौनं मुञ्चति किं च कैरवकुले कामे धनुर्धुन्वति । माने मानवतीजनस्य सपदि प्रस्थातुकामेऽधुना धातः किं नु विधौ विधातुमुचितो धाराधराडम्बरः ॥ १०४ ॥ कस्मै हन्त फलाय सज्जनगुणग्रामार्जने सज्जसि स्वात्मोपस्करणाय चेन्मम वचः पथ्यं समाकर्णय । ये भावा हृदयं हरन्ति नितरां शोभाभरैः संभृतास्तैरेवास्य कलेः कलेवरपुषो दैनंदिनं वर्धनम् ॥ १०५ ॥ मर्यादानिलयो महोदधिरयं रत्नाकरो निश्चितः सर्वाशापरिपूरकोऽनुगमितः संपत्तिहेतोर्मया । जम्बूकोऽपि न लभ्यते किमपरं रत्नं महार्घं परं दोषोऽयं न महोदधेः फलमिदं जन्मान्तरीयं मम ॥ १०६ ॥ एकः कर्णमहीपतिः प्रतिदिनं लक्षाधिका याचकाः कस्मै किं वितरिष्यतो च मनसश्चिन्तां वृथा मा कृथाः । आस्ते किं प्रतिवाचकं सुरतरुः प्रत्यम्बुजं किं रविश्चन्द्रः किं प्रतिकैरवं प्रतिलतागुल्मं किमम्भोधरः ॥ १०७ ॥

इति श्रीसुभाषितरत्नभाण्डागारे पञ्चमं प्रकरणं समाप्तम् ।

---

# प्रकरणम् ६ ।

## [1]नवरसप्रकरणम् ।

### शृङ्गाररसनिर्देशः ।

#### १ मनसिजप्रशंसा ।

अनङ्गेनाबलासङ्गाज्जिता येन जगत्त्रयी । स चित्रचरितः कामः सर्वकामप्रदोऽस्तु वः ॥ १ ॥ एकं वस्तु द्विधा कर्तुं बहवः सन्ति धन्विनः । धन्वी स मार एवैको द्वयोरैक्यं करोति यः ॥ २ ॥ न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः । तथापि जितमेवासीदमुना भुवनत्रयम् ॥ ३ ॥ स एकस्त्रीणि जयति जगन्ति कुसुमायुधः । हरतापि तनुं यस्य शंभुना न हृतं बलम् ॥ ४ ॥ कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने । नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥ ५ ॥ बाणेष्वारोप्य गुणान्विधाय चापं वियोगिनीनयने । स्वयमतनुर्जगदेतज्जयति सुमास्त्रो विचित्रधानुष्कः ॥ ६ ॥ संपदमतरललभ्यामनन्यसामान्यबहलदर्पनिधेः । पुष्णातु चित्तयोनेरघटितघटनापटीयसी विभुता ॥ ७ ॥ याभिरनङ्गः साङ्गीकृतः स्त्रियोऽस्त्रीकृताश्च ता येन । वामाचरणप्रवणौ प्रणमत तौ कामिनीकामौ ॥ ८ ॥ जयति मनसिजः सुखैकहेतुर्मिथुनकुलस्य वियोगिनां कठोरः । वपुषि यदिषुपातवारणार्थं वहति वधूं शशिखण्डमण्डनोऽपि ॥ ९ ॥ चेतोभुवश्चापवति प्रसङ्गे का वा कथा मानुषलोकभाजाम् । भर्तुः पुरामप्यलिकेक्षणस्य तथाविधं पौरुषमर्धमासीत् ॥ १० ॥ शिव शिव हि शिवेन पुष्पधन्वा [2]प्रलयनटेन किमित्य[3]कारि भस्म । स हि पुनर्[4]उदित[5]श्छलाय लोके स तु मणिमन्त्रमहौषधैर[6]साध्यः ॥ ११ ॥ शंभुस्वयंभुहरयो ह[7]रिणेक्षणानां येनाक्रियन्त सततं [8]गृहकर्मदासाः । वाचामगोचरचरित्रविचित्रिताय तस्मै नमो भगवते कुसुमायुधाय ॥ १२ ॥ वक्षःस्थलीवदनवामशरीरभोगैः पुष्यन्ति यस्य विभुतां पुरुषास्त्रयोऽपि । सोऽयं जगत्त्रितयजित्वरचापधारो मारः परान्प्रहरतीति न विस्मयाय ॥ १३ ॥ स्तोकां[9]स्त्रसाधनवता भवता [10]मनोज [11]स्वैरं जगज्जितमनङ्गतयापि सर्वम् । स्याच्चेद्भवान्बहुशरः प्रतिलब्धगात्रः कुर्यास्ततो यदपि कर्म कियन्न जाने ॥ १४ ॥ हारो जलार्द्रवसनं नलिनीदलानि प्रालेयसी-

---

१ "शृङ्गारवीरकरुणाद्भुतहासभयानकाः । बीभत्सरौद्रशान्ताश्च नवधा कीर्तिता रसाः ॥" २ प्रलयकालिको नर्तकः । शिव इति यावत्. ३ कृत. ४ उत्पन्नः. ५ छलं कर्तुम्. ६ अचिकित्स्यः. ७ स्त्रीणाम्. ८ गृहकर्मकरा दासाः ९ मदनाय. १० अल्पानि. ११ मदन. १२ स्वेच्छया.

करमुचस्तुहिनांशुभासः । यस्येन्धनानि सरसानि च चन्दनानि निर्वाणमेष्यति कथं स मनोभवाग्निः ॥ १५ ॥ कुलगुरुरबलानां केलिदीक्षाप्रदाने परमसुहृदनङ्गो रोहिणीवल्लभस्य । अपि कुसुमपृषत्कैर्देवदेवस्य जेता जयति सुरतलीलानाटिकासूत्रधारः ॥ १६ ॥ हृदयतृणकुटीरे दीप्यमाने स्मराग्नावुचितमनुचितं वा वेत्ति नो पण्डितोऽपि । किमु कुवलयनेत्राः सन्ति नो नाकनार्यस्त्रिदशपतिरहल्यां तापसीं यः सिषेवे ॥ १७ ॥ न गम्यो मन्त्राणां न च भवति भैषज्यविषयो न चापि प्रध्वंसं व्रजति विविधैः शान्तिकशतैः । भ्रमावेशादङ्गे किमपि विदधद्भव्यमसमं स्मरापस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥ १८ ॥ कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युल्लसत्पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति । दृष्ट्वा माद्यति मोदतेऽभिरमते प्रस्तौति विद्वानपि प्रत्यक्षाशुचिपुत्रिकां स्त्रियमहो कामस्य दुश्चेष्टितम् ॥ १९ ॥ चन्द्रे शीतलयत्यलीकनयनं शंभोः सुधाशीकरैर्विष्वग्व्याकुलयत्सु संयमधनान्कान्तादृगन्तेषु च । लीलायै परमैक्षवं धनुरिषून्बिभ्रत्प्रसूनात्मनः स्वच्छन्दं रतिवल्लभो विजयते त्रैलोक्यवीरः स्मरः ॥ २० ॥ इक्षुर्धन्वशराः प्रसूनविततिर्भृङ्गावली सिञ्जिनी यस्याज्ञावशवर्तिनः प्रमनसो निर्विष्टराष्ट्रादयः । यद्बाणा विहता विरञ्चिमुरजिन्मृत्युंजयेन्द्रादयो व्याप्ताशेषमुखा इव त्रिभुवनं पायादजेयः स्मरः ॥ २१ ॥ प्रासादीयति वैणवादि गहनं दीपीयति द्राक्तमः पर्यङ्कीयति भूतलं दृषदपि श्लक्ष्णोपधानीयति । कस्तूरीयति कर्दमः किमपरं यूनो रसाविष्टयोर्येनालोकि तयोः स वन्द्यमहिमा देवो नमस्यः स्मरः ॥ २२ ॥

---

## स्त्रीप्रशंसा ।

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः । विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ १ ॥ न हयैर्न च मातङ्गैर्न रथैर्न च पत्तिभिः । स्त्रीणामपाङ्गदृष्ट्यैव जीयते जगतां त्रयम् ॥ २ ॥ सोमः शौचं ददौ तासां गन्धर्वाश्च शुभां गिरम् । अग्निः सर्वाङ्गकान्तित्वं तस्मादिष्टतमाः स्त्रियः ॥ ३ ॥ स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् । मासि मासि रजो यासां दुष्कृतान्यपहन्ति च ॥ ४ ॥ अमृतस्यैव कुण्डानि रत्नानामिव राशयः । रतेरिव निधानानि निर्मिताः केन योषितः ॥ ५ ॥ प्राणानां च प्रियायाश्च मूढाः सादृश्यकारिणः । प्रिया कण्ठगता रत्यै प्राणा मरणहेतवः ॥ ६ ॥ आकृतिप्रेमसरसा विलासालसगामिनीः । असारे दग्धसंसारे सारं सारङ्गलोचनाः ॥ ७ ॥ हरिणप्रेक्षणा यत्र गृहिणी न विलोक्यते । सेवितं सर्वसंपद्भिरपि तद्भवनं वनम् ॥ ८ ॥ यासामञ्चलवातेन दीपो निर्वाणतां गतः । तासामालिङ्गने पुंसां नरके पतनं कुतः ॥ ९ ॥ नामृतं न विषं किंचि-

१ पुष्पबाणैः. २ हृदयमेव तृणगृहम्. ३ इन्द्रः. ४ औषधोपायसाध्यः. ५ नाशम्. ६ भूतोन्मादो रोगविशेषः. ७ कामम्. ८ जीवन्तं कुर्वन्ति. ९ शिवस्य.

देकां मुक्त्वा नितम्बिनीम्। यस्याः सङ्गेन जीव्येत म्रियेत च वियोगतः ॥ १० ॥ यासां नाम्नापि कामः स्यात्संगमं दर्शनं विना। तासां दृक्संगमं प्राप्य यन्न द्रवति कौतुकम् ॥ ११ ॥ यावद्दृष्टिर्मृगाक्षीणां नो नरीनर्ति भङ्गुरा। तावज्ज्ञानवतां चित्ते विवेकः कुरुते पदम् ॥ १२ ॥ समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि। दष्टाश्च दशनैः कान्तं दासीकुर्वन्ति योषितः ॥ १३ ॥ ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम्। प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ १४ ॥ कार्पासकृतकूर्पासशतैरपि न शाम्यति। शीतं शातोदरीपीनवक्षोजालिङ्गनं विना ॥ १५ ॥ संपन्न रमणी शीलसंपन्नरमणीं विना। इत्यूढवान्नरमणी रमणी रुक्मिणीं हरिः ॥ १६ ॥ पादसंवाहने वज्री केशसंवाहने फणी। अहो भाग्यं पुरंध्रीणां दधिसंमन्थने रविः ॥ १७ ॥ प्रभवति मनसि विवेको विदुषामपि शास्त्रसंभवस्तावत्। निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम् ॥ १८ ॥ सन्तु विलोकनभाषणविलासपरिहासकेलिपरिरम्भाः। स्मरणमपि कामिनीनामलमिह मनसो विकाराय ॥ १९ ॥ ह्लादनतापनशक्ती सहजे स्तः सुभ्रुवां कटाक्षेषु। तत्राद्या प्रबला स्यान्नेदीयस्त्वे परा दवीयस्त्वे ॥ २० ॥ अवलोकनमपि सुखयति कुवलयदलचारुचपलनयनायाः। किं पुनरमृतसमानं सरभसमालिङ्गनं तस्याः ॥ २१ ॥ व्रीडावेलारुद्धं सागरतोयमिव योषितां हृदयम्। रागेन्दुरुदयमानो भूयो भूयस्तरङ्गयति ॥ २२ ॥ आदानपानलेपैः कश्चिद्गरलोपतापहारिण्यः। पुरतः स्थितैव सिद्धौषधिवल्ली कापि जीवयति ॥ २३ ॥ उपनिषदः परिपीता गीतापि च हन्त मतिपथं नीता। तदपि न हा विधुवदना मानससदनाद्बहिर्याति ॥ २४ ॥ यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य। यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥ २५ ॥ यत्र पतत्यबलानां दृष्टिर्निशिताः पतन्ति तत्र शराः। तच्चापरोपितशरो धावत्यासां पुरः स्मरो मन्ये ॥ २६ ॥ स्वपरप्रतारकोऽसौ निन्दति योऽलीकपण्डितो युवतीः। यस्मात्तपसोऽपि फलं स्वर्गः स्वर्गेऽपि योषितोऽप्सरसः ॥ २७ ॥ अकृशं कुचयोः कृशं विलग्ने विततं चक्षुषि विस्तृतं नितम्बे। अरुणाधरमाविरस्तु चित्ते करुणाशालि कपालिभागधेयम् ॥ २८ ॥ अधरे नववीटिकानुरागो नयने कज्जलमुज्ज्वलं दुकूलम्। इदमाभरणं नितम्बिनीनामितरद्भूषणमङ्गदूषणाय ॥ २९ ॥ रत्नानि विभूषयन्ति योषा भूष्यन्ते वनिता न रत्नकान्त्या। चेतो वनिता हरन्त्यरत्ना नो रत्नानि विनाङ्गनाङ्गसङ्गात् ॥ ३० ॥ तावदेव विदुषां विवेकिनी बुद्धिरस्ति भवबन्धछेदिनी। यावदिन्दुवदना न कामिनी वीक्षिता रहसि हंसगामिनी ॥ ३१ ॥ तरुणिमनि कृतावलोकना ललितविलासविलब्धविग्रहा। स्मरशरविसराचितान्तरा मृगनयना हरति मुने-

---

१ त्यक्त्वा. २ पादस्थमलनिर्हरणार्थं इन्द्रो भाजनेऽदकारणं वज्रोऽति लोके कथ्यते; (पक्षे) इन्द्रः. ३ दन्ताग्रैः; (पक्षे) ... ४ मन्था ; (पक्षे) सूर्यः. ५ ब्रह्मप्रतिपादका. श्रुतिशिरोभागाः. ६ अभ्यस्ताः. ७ स्थूलम्. ८ मध्ये. ९ रहस्य. १० स्वच्छन्

मेनः ॥ ३२ ॥ तावदेव कृतिनां हृदि स्फुरत्येष निर्मलविवेकदीपकः। यावदेव न कुरङ्ग-
चक्षुषां ताड्यते चपललोचनाञ्चलैः ॥ ३३ ॥ जये धरित्र्याः पुरमेव सारं पुरे गृहं सद्मनि
चैकदेशः। तत्रापि शय्या शयने वरा स्त्री रत्नोज्ज्वला राज्यसुखस्य सारः ॥३४॥ आस्यं
सहास्यं नयनं सलास्यं सिन्दूरबिन्दूदयशोभि भालम्। नवा च वेणी हरिणीदृशश्चेदन्यै-
रगण्यैरपि भूषणैः किम् ॥ ३५ ॥ मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु।
सेव्या नितम्बा किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥ ३६ ॥ स्मितेन भावेन च
लज्जया भिया पराङ्मुखैरर्धकटाक्षवीक्षणैः। वचोभिरीर्ष्याकलहेन लीलया समस्तभावैः खलु
बन्धनं स्त्रियः ॥ ३७ ॥ अविश्वसन्धूर्तधुरंधरोऽपि नरः पुरंध्रीपुरतोऽन्ध एव। अशेष-
शिक्षाकुशलोऽपि काकः प्रतार्यते किं न पिकाङ्गनाभिः ॥३८॥ उडुराजमुखी मृगराजक-
टिर्गजराजविराजितमन्दगतिः। यदि सा वनिता हृदये निहिता क्व जपः क्व तपः क्व स-
माधिरतिः ॥ ३९ ॥ तदाखण्डलाशां महीमण्डलाशां तथा भोगिभोगानुरागं त्यजामः।
मनःक्षोभदक्षान्कृपातः कटाक्षान्कुरंगेक्षणाश्चेत्क्षणं पातयन्ति ॥ ४० ॥ भ्रूचातुर्याकुञ्चिता-
क्षाः कटाक्षाः स्निग्धा वाचो लज्जिताश्चैव हासाः। लीलामन्दं प्रस्थितं च स्थितं च
स्त्रीणामेतद्भूषणं चायुधं च ॥ ४१ ॥ नूनं हि ते कविवरा विपरीतबोधा ये नित्यमाहुरबला
इति कामिनीस्ताः। याभिर्विलोलतरतारकदृष्टिपातैः शक्रादयोऽपि विजितास्त्वबलाः कथं
ताः ॥४२॥ नान्दीपदानि रतिनाटकविभ्रमाणामाज्ञाक्षराणि परमाण्यथवा स्मरस्य। दष्टे-
ऽधरे प्रणयिना विधुताग्रपाणेः सीत्कारशुष्करुदितानि जयन्ति नार्याः ॥ ४३ ॥ अलमति-
चपलत्वात्स्वप्नमायोपमत्वात्परिणतिविरसत्वात्संगमेनाङ्गनायाः। इति यदि शतकृत्वस्तत्त्व-
मालोचयामस्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ ४४ ॥ द्रुतं यस्यालोकाद्विरहिज-
नशोकापनयनं यदङ्के सानन्दं नयनमरविन्दं विहरति। न यस्यापैति श्रीः कचनिचयरा-
होरपि पुनः स मे खेदं रामावदनहितधामा शमयतु ॥ ४५ ॥ श्रुतं दृष्टं स्पृष्टं स्मृतमपि
नृणां ह्लादजननं न रत्नं स्त्रीभ्योऽन्यत्क्वचिदपि कृतं लोकपतिना। तदर्थं धर्मार्थौ विभव-
नरसौख्यानि च ततो गृहे लक्ष्म्या मान्याः सततमबला मानविभवैः ॥ ४६ ॥ ललाटे
कस्तूरीतिलकमबलाः कज्जलरुचि दृशोः कर्णद्वन्द्वे विमलमणिताटङ्कयुगलम्। गले मुक्ता-
मालां शुचि वसनमङ्गे च सततं वशीकर्तुं विश्वं दधति खलु बाह्योपकरणम् ॥ ४७ ॥
भवन्तो वेदान्तप्रणिहितधियामत्र गुरवो विदग्धालापानां वयमपि कवीनामनुचराः। तथा-
प्येतद्ब्रूमो न हि परहितात्पुण्यमधिकं न चास्मिन्संसारे कुवलयदृशोरन्यमपरम् ॥ ४८ ॥
विमुञ्चति बुधो जनः सुकृतचिन्तनं दूरतो जहाति च मुनिस्तपस्त्यजति धीरतां शंकरः।
विधिर्भवति चञ्चलस्त्रिजगतीपतिः क्षुभ्यति क्षणं कुटिलदृष्टयो यदि पतन्ति वामभ्रुवः

१ मुखम्. २ हासयुक्तम्. ३ भयेन. ४ प्रणयप्रकोपेन. ५ वञ्च्यते. ६ कोकिलाभिः.

॥ ४९ ॥ अमृतममृतं कः संदेहो मधून्यपि नान्यथा मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् । सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो वदतु यदिहान्यत्स्वादु स्यात्प्रियारदनच्छदात् ॥ ५० ॥ वचसि भवति सङ्गत्यागमुद्दिश्य वार्ताश्रुतिमुखरमुखानां केवलं पण्डितानाम् । जघनमरुणरत्नग्रन्थिकाञ्चीकलापं कुवलयनयनानां को विहातुं समर्थः ॥ ५१ ॥ किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापैर्द्वयमिह पुरुषाणां सर्वदा सेवनीयम् । अभिनवमदलीलालालसं सुन्दरीणां स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ ५२ ॥ यासां सत्यपि सद्गुणानुसरणे दोषानुरागो भृशं याः प्राणान्प्रति तर्पयन्ति न पुनः संपूर्णदृष्टिं प्रिये । अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मकस्तत्तत्केलिषु दक्षिणा अपि सदा वामा जयन्त्येव ताः ॥ ५३ ॥ स्त्रीमुद्रां कुसुमायुधस्य परमां सर्वार्थसंपत्करीं ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः । ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ५४ ॥ द्रष्टव्येषु किमुत्तमं मृगदृशः प्रेमप्रसन्नं मुखं घ्रातव्येष्वपि किं तदास्यपवनः श्राव्येषु किं तद्वचः । किं स्वाद्येषु तदोष्ठपल्लवरसः स्पृश्येषु किं तद्वपुर्ध्येयं किं नवयौवनं सुहृदयैः सर्वत्र तद्विभ्रमः ॥ ५५ ॥ यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः । तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥ ५६ ॥ विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशनास्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः । शाल्यन्नं सघृतं पयोदधियुतं भुञ्जन्ति ये मानवास्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यस्तरेत्सागरे ॥ ५७ ॥ आलोलैरुपगम्यते मधुकरैः केशेषु माल्यग्रहः कान्तिः कापि कपोलयोः प्रथयते ताम्बूलमन्तर्गतम् । अङ्गानामनुलेपनं परिमलैरालेपनप्रक्रियावेशः कोऽपि सरोजसुन्दरदृशः सूते सुखं चक्षुषोः ॥ ५८ ॥ सद्रत्नस्फारहारा भयवरदकरा स्रस्तधम्मिल्लभारा मूलाधाराधिकारा निगमनिधिधरा काव्यकोटिप्रचारा । संसारानल्पकारा सदनमयहरा चिद्घनैकावतारा तारा शृङ्गारधारा मनसि वसतु ते सर्वदा सर्वसारा ॥ ५९ ॥ संसारेऽस्मिन्नसारे परिणतितरले द्वे गती पण्डितानां तत्त्वज्ञानामृताम्भःपुलकितमनसां यातु कालः कदाचित् । नो चेन्मुग्धाङ्गनानां स्तनजघनभराभोगसंभोगिनीनां स्थूलोपस्थस्थलीषु स्थगितकरतलस्पर्शलोलोद्यतानाम् ॥ ६० ॥ संसारेऽस्मिन्नसारे कुनृपतिभवनद्वारसेवाकलङ्कव्यासङ्गव्यस्तधैर्यं कथममलधियो मानसं संविदध्युः । यद्येताः प्रोद्यदिन्दुद्युतिनिचयभृतो न स्युरम्भोजनेत्राः प्रेङ्खत्काञ्चीकलापाः स्तनभरविनमन्मध्यभागास्तरुण्यः ॥ ६१ ॥

---

## युववर्णनम् ।

अधारि पद्मेषु तदङ्घ्रिणा घृणा क्व तच्छयच्छायलवोऽपि पल्लवे । तदास्यदास्येऽपि गतो-

ऽधिकारितां न शारदः पार्विकशर्वरीश्वरः ॥ १ ॥ किमस्य रोम्णां कपटेन कोटिभिर्विधिर्न लेखाभिरजीगणद्गुणान् । न रोमकूपौघमिषाज्जगत्कृता कृताश्च किं दूषणशून्यबिन्दवः ॥ २ ॥ अमुष्य दोर्भ्यामरिदुर्गलुण्ठने ध्रुवं गृहीतार्गलदीर्घपीनता । उरःश्रिया तत्र च गोपुरस्फुरत्कपाटदुर्धर्षतिरःप्रसारिता ॥ ३ ॥ स्वकेलिलेशस्मितनिन्दितेन्दुनो निजांशदृक्तर्जितपद्मसंपदः । अतद्द्वयीजित्वरसुन्दरान्तरे न तन्मुखस्य प्रतिमा चराचरे ॥ ४ ॥ सरोरुहं तस्य दृशैव तर्जितं जिताः स्मितेनैव विधोरपि श्रियः । कुतः परं भव्यमहो महीयसी तदाननस्योपमितौ दरिद्रता ॥ ५ ॥ स्वबालभारस्य तदुत्तमाङ्गजैः समं चमर्येव तुलाभिलाषिणः । अनागसे शंसति बालचापलं पुनः पुनः पुच्छविलोलनच्छलात् ॥ ६ ॥ निमीलनभ्रंशजुषा दृशा भृशं निपीय तं यस्त्रिदशीभिरर्जितः । अमूस्तमभ्यासभरं विवृण्वते निमेषनिस्वैरधुनापि लोचनैः ॥ ७ ॥ विलोकयन्तीभिरजस्रभावनाबलादमुं तत्र निमीलनेष्वपि । अलम्भि मर्त्याभिरमुष्य दर्शने न विघ्नलेशोऽपि निमेषनिर्मितः ॥ ८ ॥ न का निशि स्वप्नगतं ददर्श तं जगाद गोत्रस्खलिते च का न तम् । तदात्मनाध्यानधवा रते च का चकार वा न स्वमनोमनोद्भवम् ॥ ९ ॥

---

## बालावर्णनम् ।

अभ्यासः कर्मणां सम्यगुत्पादयति कौशलम् । विधिना तावदभ्यस्तं यावत्सृष्टा मृगेक्षणा ॥ १ ॥ न देवकन्यका नापि गन्धर्वकुलसंभवा । तथाप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥ २ ॥ इयं व्याधायते बाला भ्रूरस्याः कार्मुकायते । कटाक्षाश्च शरायन्ते मनो मे हरिणायते ॥ ३ ॥ मनोऽपि शङ्कमानाभिर्बालाभिरुपजीव्यते । अषडक्षीणषाड्गुण्यमन्त्री मकरकेतनः ॥ ४ ॥ अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा । तारकातरला श्यामा सानन्दं न करोति कम् ॥ ५ ॥ निर्माणकौशलं धातुश्चान्द्रिमा लोकचक्षुषाम् । क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा ॥ ६ ॥ प्रेङ्खणप्रेक्षणालापान्कुर्वत्यः सस्मितत्रपम् । न वीणायाः प्रवीणायाः स्वञ्जनं स्मररञ्जनम् ॥ ७ ॥ दग्धो विधिर्विधत्ते न सर्वगुणसुन्दरं जनं कमपि । इत्यपवादभयादिव मुग्धाक्षी निर्मिता विधिना ॥ ८ ॥ मीनवती नयनाभ्यां चरणाभ्यामपि प्रफुल्लकमलवती । शैवालिकी च केशैः सुरसेयं सुन्दरी सरसी ॥ ९ ॥ अलिकुलमञ्जुलकेशी परिमलबहुला रसावहा तन्वी । किसलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे ॥ १० ॥ अमृतं तदधरबिम्बे वचनेष्वमृतं विलोकनेऽप्यमृतम् । अमृतभृतौ कुचकुम्भौ सत्यं सा सृष्टिरपरैव ॥ ११ ॥ स्तनकलशस्खलदम्बरसंवरणव्यग्रपाणिकमलायाः । निपतन्ति भाग्यभाजामुपरि कटाक्षाः सरोजाक्ष्याः ॥ १२ ॥ कुङ्कुमपङ्केनाङ्कितदेहा गौरपयोधरकम्पितहारा । नूपुरहंसरणत्पदपद्मा कं न वशीकुरुते भुवि रामा ॥ १३ ॥ मन्दम-

न्दगमना करिणी किं वा विशालनयना हरिणी किम् । पूर्णचन्द्रवदना रजनी कि पश्य गच्छति सखे तरुणी किम् ॥ १४ ॥ उत्तुङ्गस्तनभरतान्ततान्तमध्यं विश्लिष्यद्धनकचवान्तवान्तसूनम् । वक्त्राब्जभ्रमदलिभीतभीतनेत्रं मुग्धाक्षी मम धुरि मन्दमन्दमेति ॥ १५ ॥ उदयदुदयदीक्षणाय पत्युश्चपलदृशस्त्रपया निरुध्यमानम् । मन इव कृपणस्य दानकाले कति न ततान गतागतानि चक्षुः ॥ १६ ॥ अदम्भा हि रम्भा विलक्षा च लक्ष्मीर्घृताची ह्रिया चीरसंच्छादितास्या । अहो जायते मन्दवर्णाप्यपर्णा समाकर्ण्य तस्या गुणस्यैकदेशम् ॥ १७ ॥ एकान्तसुन्दरविधानजडः क्व वेधाः सर्वाङ्गकान्तिचतुरं क्व च रूपमस्याः । मन्ये महेश्वरभयान्मकरध्वजेन प्राणार्थिना युवतिरूपमिदं गृहीतम् ॥ १८ ॥ किं कौमुदीः शशिकलाः सकला विचूर्ण्य संयोज्य चामृतरसेन पुनः प्रयत्नात् । कामस्य घोरहरहुंकृतिदग्धमूर्तेः संजीवनौषधिरियं विहिता विधात्रा ॥ १९ ॥ लीलास्मितेन शुचिना मृदुनोदितेन व्यालोकितेन लघुना गुरुणा गतेन । व्याजृम्भितेन जघनेन च दर्शितेन सा हन्ति तेन गलितं मम जीवितेन ॥ २० ॥ नेदं मुखं मृगवियुक्तशशाङ्कबिम्बं नेमौ स्तनावमृतपूरितहेमकुम्भौ । नैवालकावलिरियं मदनास्त्रशाला नैवेदमक्षियुगलं निगडं हि यूनाम् ॥ २१ ॥ चित्ते निवेश्य परिकल्पितसत्त्वयोगान्रूपोच्चयेन विधिना विहिता कृशाङ्गी । स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ २२ ॥ चन्द्रो जडः कदलिकाण्डमकाण्डशीतमिन्दीवराणि च विमुद्रितविभ्रमाणि । येनाक्रियन्त सुतनोः स कथं विधाता किं चन्द्रिकां क्वचिदशीतरुचिः प्रसूते ॥ २३ ॥ निर्मुक्तशैशवदशा शिशिरा नवीनसंप्राप्तयौवनवसन्तमनोरमश्रीः । उन्मीलितस्तननवस्तबका निकाममेणीदृशस्तनुलता तनुते मुदं नः ॥ २४ ॥ नीलोत्पलोल्लसितखञ्जनमञ्जुनेत्रा संपूर्णशारदसुधाकरकान्तवक्त्रा । बाला जगत्त्रितयमोहनदिव्यमूर्तिर्मन्ये विभाति जगति स्मरवीरकीर्तिः ॥ २५ ॥ एताः स्खलद्वलयसंहतिमेखलोत्थझङ्कारनूपुररवाहृतराजहंसाः । कुर्वन्ति कस्य न मनो विवशं तरुण्यो विश्वस्तमुग्धहरिणीसदृशैः कटाक्षैः ॥ २६ ॥ एषा भविष्यति विनिद्रसरोरुहाक्षी कामस्य कापि दयिता तनुजानुजा वा । यः पश्यति क्षणमिमां कथमन्यथासौ कामस्तमस्तकरुणस्तरुणं हिनस्ति ॥ २७ ॥ अपाङ्गतरले दृशौ तरलवक्रवर्णा गिरो विलासभरमन्थरा गतिरतीव कान्तं मुखम् । इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ २८ ॥ दृशः पृथुतरीकृता जितनिजाब्जपत्त्रत्विषश्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् । शिरांसि चलितानि विस्मयवशाद्ध्रुवं वेधसो विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥ २९ ॥ क्वचि-

१ प्रज्ञा २ स्त्रीरूपम्. ३ शृङ्खला. ४ नेत्रप्रान्तचञ्चले. ५ विलासभरेण मन्थरा मन्दा गति. ६ कृतस्थितिः.

त्सुभ्रूभङ्गैः क्वचिदपि च लज्जापरिणतैः क्वचिद्भीतित्रस्तैः क्वचिदपि च लीलाविलसितैः। नवोढानामेभिर्वदनकमलैर्नेत्रचलितैः स्फुरल्लीलालीनाप्रकरपरिपूर्णा इव दृशः ॥ ३० ॥ अमुष्या लावण्यं मृदुलमृदुलानप्यवयवान्मनोलौल्यं धातुः करकठिनतां मे विमृशति । पदं चित्ते धत्ते मतिरिति पुरा पङ्कजभुवा ध्रुवं कल्याणीयं कलितसुकृतैरेव रचिता ॥ ३१ समीचीना चीनांशुकपरिवृताङ्गी प्रविलसत्कुचापीना हीना जघनघनभागेऽब्जवदना । न दीना दीनान्तःकलितमदना सेयमधुना नवीना मीनाक्षी व्यथयति मुनीनामपि मनः ॥३२॥ स्फुरन्नानारत्नारुणितवसना वृत्तमसृणस्तनापीना मत्ता तरलजघना हंसगमना । स्मराधीना सीना कविहृदि जितारोषललना नवीना मीनाक्षी व्यथयति मुनीनामपि मनः ॥ ३३ ॥ उदासीना लीनामपि वचसि लीनातनुलसत्त्रपाधीना दीना लपनपदवीनायकधृता । कवीना-मासीना हृदि कुमुदिनीना[?]वदना नवीना मीनाक्षी व्यथयति मुनीनामपि मनः ॥ ३४ ॥ निलीना वेश्मान्तः कथमपि सखीनामभिहितैः कृताधीनाहीनाकृतिरपि मतीनामविषया। कवीनामज्ञत्वं ज्ञपयति विपीना तनुतया नवीना मीनाक्षी व्यथयति मुनीनामपि मनः ॥३५॥ कुचाभ्यां भास्वन्ती विजितलकुचाभ्यां युवमनो हरन्ती विब्बोकैः सरसि विहरन्ती मधुरगीः। तरुण्या लावण्यं किमपि विदधानार्भकविधौ नवीना मीनाक्षी व्यथयति मुनीनामपि मनः॥३६॥ अमलमृणालकाण्डकमनीयकपोलरुचेस्तरलसलीलनीलनलिनप्रतिफुल्लदृशः । विकसदशोक-शोणकरकान्तिभृतः सुतनोर्मदलुलितानि हन्त ललितानि हरन्ति मनः ॥ ३७ ॥ किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखं किमब्जं किं मीनौ किमु मदनबाणौ किमु दृशौ। खगौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ तडिद्वा तारा वा कनकलतिका वा किमबला ॥ ३८ ॥ तनुस्पर्शादस्या दरमुकुलिते हन्त नयने उदञ्चद्रोमाञ्चं व्रजति जडता-मङ्गमखिलम् । कपोलौ घर्मार्द्रौ ध्रुवमुपरताशेषविषमं मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम् ॥ ३९ ॥ मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनैरलसवलितैरङ्गन्यासैर्महो-त्सवबन्धुभिः । असकृदसकृत्स्फारस्फारैरपाङ्गविलोकितैस्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम् ॥ ४० ॥ कर्पूरेण स्थलविरचना कुङ्कुमेनालवालं माध्वीकानि प्रतिदिनपयः पञ्चबाणः कृशाणः [?] तत्रोत्पन्ना यदि किल भवेत्काञ्चनी कापि वल्ली सा चेदस्याः किमपि लभते सुभ्रुवः [?] [?]म् ॥ ४१ ॥ लावण्यामृतदीर्घिका कुलगृहं सौन्दर्यसौभाग्ययो-र्लोक्याकरर[?]वहे [?] [?]यं जीव्यात्सहस्रं समाः । रूपालोकनकौतुकेन वटुना शिल्पश्रमे [?] ॥[?]न्मन्थे[?] [?] [?]विधाय विहितं सृष्टेर्ध्वजारोपणम् ॥ ४२ ॥ अस्याः सर्गविधौ सा सृष्टिरभूच्चन्द्रो नु [?] [?]प्रदः शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः । [?]न्ति भाग्यभाजः कथं नु [?] [?]गात्तकौतूहलो निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो

कम्पितहारा । नूने. २ जीर्णः.

मुनिः ॥ ४३ ॥ वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचाना चयः । वक्षोजाविभकुम्भविभ्रमहरौ गुर्वी नितम्बस्थली वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मण्डनम् ॥ ४४ ॥ अस्याश्चेद्गतिसौकुमार्यमधुना हंसस्य गर्वैरलं संलापो यदि धार्यतां परभृतैर्वाचंयमत्वव्रतम् । अङ्गानामकठोरता यदि दृषत्प्रायेव सा मालती कान्तिश्चेत्कमला किमत्र बहुना काषायमालम्ब्यताम् ॥ ४५ ॥ निर्मित्सुः सुदतीमनो विरचिते वक्त्रे शशिभ्रान्तितः कोशीभूतनिजाम्बुजासनमधिष्ठातुं न शक्तो विधिः । मध्यं विस्मृतवान्कुचौ च कठिनौ पीनौ नितम्बौ कचान्वक्राग्निर्मितवान्मतिः स्फुरति हि स्वस्थे नृणां चेतसि ॥ ४६ ॥ सौन्दर्यस्य तरंगिणी तरुणिमोत्कर्षस्य हर्षोद्गमः कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः । विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥ ४७ ॥ दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा श्रोत्रे प्रेषयति प्रवर्तितसखीसंभोगवार्तास्वपि । पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग्यथा बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥ ४८ ॥ आयाति श्रियमञ्जसा नयनयोरम्भोरुहप्रेयसी संनाहः स्तनयोरय कथयते संभोगयोग्यां दशाम् । वैदग्ध्येन सहासिकां वितनुते वाचामियं प्रक्रियां मुग्धायाः पुनरैन्दवीं न सहते मुख्यामभिख्या मुखम् ॥ ४९ ॥

---

## वयःसंधिवर्णनम् ।

यथा यथा विशत्यस्या हृदये हृदयेश्वरः । तथा तथा बहिर्यातौ मन्ये संकोचतः कुचौ ॥ १ ॥ अन्तरङ्गमनङ्गस्य शृङ्गारकुलदैवतम् । अङ्गीकरोति तन्वङ्गी सा विलासमयं वयः ॥२॥ अन्येयं रूपसंपत्तिरन्या वैदग्ध्यधोरणी । नैषा नलिनपत्राक्षी सृष्टिः साधारणी विधेः॥३॥ अनायासकृत मध्यमशङ्कतरले दृशौ । अभूषणमनोहारि वपुर्वयासि सुभ्रुवः ॥ ४ ॥ दृश्यं दृशां सहस्रैर्मनसामयुतैर्विभावनीयं च । सुकृतशतकोटिभोग्यं किमपि वयः सुभ्रुवो जयति ॥ ५ ॥ न्यञ्चति वयसि प्रथमे समुदञ्चति तरुणिमनि सुदृशः । दधति स्म मधुरिमाणं वाचो गतयश्च विभ्रमाश्च भृशम् ॥ ६ ॥ यदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनायाः । दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते ॥ ७ ॥ अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू । कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥८॥ मृदुलवलि-

---

१ तुच्छ कुर्वन् २ जयशील ३ मनोहरम् ४ मिथो भाषणम् ५ मौनव्रतम् ६ पाषाणरूपा. ७ लक्ष्मी. ८ काषायवस्त्रम्. ९ निर्मातुमिच्छु. १० ब्रह्मा. ११ मुकुलीभूतस्वकीयकमलासनम् १२ चातुर्यम्. १३ परिपाटी. १४ ध्येयम्. १५ गच्छति सति. १६ उदय प्राप. १७ स्पृहणीयम्. १८ मृद्वी या लवलिर्वृक्षविशेषस्तेन ललितो मध्यभागो यस्य तत्, (पक्षे) मृदुला या वलयो वलित्रितयं तेन ललितो मध्यो यस्मिन्

ललितमध्यं [1]पृथुलकुचं [2]चारु [3]विपुलभूजघनम् । [4]पुंनागस्पृहणीयं स्फुरति वनं यौवनं च नारीणाम् ॥ ९ ॥ संभिन्नयोरमुष्या वयसोः पयसोरिवाङ्गेषु । अनयोरसद्विभेदं मानसजन्मा परं वेद ॥ १० ॥ स्तनतटमिदमुत्तुङ्गं निम्नो मध्यः समुन्नतं जघनम् । विषमे मृगशावाक्ष्या वपुषि नवे क इव न स्खलति ॥ ११ ॥ उदयति तरुणिमतरणौ शैशवशशिनि प्रशान्तिमायाते । कुचचक्रवाकयुगलं तरुणितटिन्यां मिथो मिलति ॥१२ ॥ अचलं चलदिव चक्षुः प्रकृतमपीदं समुद्यदिव वक्षः । अतदिव तदपि शरीरं संप्रति वामभ्रुवो जयति ॥ १३ ॥ अयमङ्कुरभाव एव तावत्कुचयोः कर्षति लोकलोचनानि । इतरेतरपीडनीमवस्थां गतयोः श्रीनरयोः कथं भवित्री ॥ १४ ॥ परिहरति यथा यथा वयोऽस्याः स्फुरदुरुकन्दलशालिबालभावम् । द्रढयति धनुषस्तथा तथा ज्यां स्पृशति शरानपि सज्जयन्मनोभूः ॥ १५ ॥ निशितशरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले । दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥ १६ ॥ यथा यथास्याः कुचयोः समुन्नतिस्तथा तथा लोचनमेति वक्रताम् । अहो सहन्ते बत नो परोदयं निसर्गतोऽन्तर्मलिना ह्यसाधवः ॥ १७ ॥ समं विलासोऽङ्कुरितः स्तनाभ्यां त्रपा विलासेन सहावतीर्णा । अवर्ततान्यस्त्रपयैव साकं कान्तः प्रकारो वचसां कृशाङ्ग्याः ॥ १८ ॥ उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् । बभूव तस्याश्चतुरश्रशोभि वपुर्विभक्तं नवयौवनेन ॥ १९ ॥ असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य । कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साधु वयः प्रपेदे ॥ २० ॥ आवृणोति यदि सा मृगीदृशी स्वाञ्चलेन कुचकाञ्चनाचलम् । भूय एव बहिरेति गौरवादुन्नतो न सहते तिरस्क्रियाम् ॥ २१ ॥ अत्युन्नतस्तनमुरो नयने सुदीर्घे वक्रे भ्रुवावतितरां वचनं ततोऽपि । मध्योऽधिकं तनुरनूनगुरुर्नितम्बो मन्दा गतिः किमपि चाद्भुतलोचनायाः ॥ २२ ॥ भ्रूपल्लवो धनुरपाङ्गतरङ्गितानि बाणा गुणाः श्रवणपालिरिति स्मरेण । तस्यामनङ्गजयजंगमदेवतायामस्त्राणि निर्जितजगन्ति किमर्पितानि ॥२३॥ दृशोः सीमावादः श्रवणयुगलेन प्रतिकलं स्तनाभ्यां संरुद्धे हृदि मनसिजस्तिष्ठति बलात् । नितम्बः साक्रन्दं क्षिपति रशनादाम परतः प्रवेशस्तन्वङ्ग्या वपुषि तरुणिम्नो विजयते ॥ २४ ॥ अनाघ्रातं पुष्पं किसलयम[5]लूनं कररुहै[6]रनाविद्धं रत्नं मधु नवमनास्वादितरसम् । अखण्डं पुण्यानां फलमिव च तद्रूपमनघं न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥ २५ ॥ भ्रुवौ काचिल्लीलापरिणतिरपूर्वा नयनयोः स्तनाभोगो व्यक्तस्तरुणिमसमारम्भसमये । इदानीं बालायाः किम-

१ पृथवः स्थूला लकुचाः पनसा यस्मिन्; (पक्षे) पृथुलौ कुचौ यस्मिन्. २ सुन्दरम्. ३ विपुला ये भूजा वृक्षास्तैर्घनं निबिडम्; (पक्षे) विपुला भूर्येषां ते विपुलभुव एतादृशा जघना यस्मिंस्तत्. बहुप्रदेशव्यापकजघनमित्यर्थः. ४ पुनागैः केसरवृक्षैः स्पृहणीयम्; (पक्षे) पुरुषश्रेष्ठैः स्पृहणीयम्. ५ कुटिले. अर्थाद्यौवनरूपे. ६ अच्छिन्नम्. ७ वेधरहितम्.

मृतमयः किं विषमयः किमानन्दः साक्षाद्ध्वनितमधुरः पञ्चमरवः ॥ २६ ॥ अनाकूतैरेव प्रियसहचरीणां शिशुतया वचोभिः पाञ्चालीमिथुनमधुना संगमयितुम्। उपादत्ते नो वा विरमति न वा केवलमियं कपोलौ कल्याणी पुलकमुकुलैर्दन्तुरयति ॥ २७ ॥ प्रगल्भानामन्तः प्रविशति शृणोति प्रियकथां स्वयं तत्तच्चेष्टाशतमभिनयैर्वञ्चयति च। स्पृहामन्तः कान्ते वहति न समभ्येति निकटं यथैवेयं बाला हरति हि तथा चित्तमधिकम् ॥ २८ ॥ स्मितं किंचिद्वक्त्रे सरलतरलो दृष्टिविभवः परिस्पन्दो वाचामभिनवविलासोक्तिसरसः। गतीनामारम्भः किसलयितलीलापरिकरः स्पृशन्त्यास्तारुण्यं किमिह न हि रम्यं मृगदृशः ॥ २९ ॥ इमे तारुण्यश्रीनवपरिमलाः प्रौढसुरतप्रतापप्रारम्भाः स्मरविजयदानप्रतिभुवः। चिरं चेतश्चौरा अभिनवविकारैकरुचयो विलासव्यापाराः किमपि विजयन्ते मृगदृशः ॥ ३० ॥ अपक्रान्ते बाल्ये तरुणिमनि चागन्तुमनसि प्रयाते मुग्धत्वे चतुरिमणि चाश्लेषरसिके। न केनापि स्पृष्टं यदिह वयसा मर्म परमं यदेतत्पश्येषोर्जयति वपुरिन्दीवरदृशः ॥ ३१ ॥ तदात्वप्रोन्मीलन्म्रदिमरमणीया कठिनतां विचित्य प्रत्यङ्गादिव तरुणभावेन घटितौ। स्तनौ संबिभ्राणाः क्षणविनयवैषात्यमसृणस्मरोन्मेषाः केषामुपरि न रसानां युवतयः ॥ ३२ ॥ न शीलं दृग्भङ्गी कलयति कुरङ्गीनयनयोः कुचश्रीः कर्कन्धूफलमपि न बन्धूकृतवती। सुधायाः सध्रीची नववचनवीचीपरिचिता तथापि श्रीरस्या युवजनमनस्या विजयते ॥ ३३ ॥ उदञ्चद्वक्षोजद्वयतटभरक्षोभितकटि स्फुरद्भूभ्यां मन्दीकृतविलसदिन्दीवरयुगम्। समुद्यद्भूभङ्गं प्रविहितधनुर्भङ्गमनिशं वयस्तत्पद्माक्ष्याः कथमिव मनो न व्यथयतु ॥ ३४ ॥ मुखं विकसितं स्मितं वशितवक्रिमप्रेक्षितं समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः। उरोमुकुलितौ स्तनौ जघनमंसबन्धोद्धुरं बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ ३५ ॥ न दन्तुरमुरःस्थलं वचसि नाश्रिता चातुरी विकारि न विलोकितं भ्रुवि न वक्रिमोपक्रमः। तथापि हरिणीदृशो वपुषि कापि कान्तिच्छटापटावृतमहामणिद्युतिरिवात्र संलक्ष्यते ॥ ३६ ॥ इदं परमसुन्दरं तनुपुरं कुरङ्गीदृशां निवार्य खलु शैशवं स्वयमनेन नीतं बलात्। तदागमनशङ्कया मकरकेतुना किं कृतं पयोधरधराधरौ त्रिवलिवाहिनीदुस्तरौ ॥ ३७ ॥ स्थिरत्वमचिरद्युतौ तमसि कोऽपि बन्धग्रहो विधौ किमपि सौरभं मधुनि कापि वर्णात्मता। शिरीषनवदामनि स्फुरति कोऽपि शैलोदयो वयोऽभिनववेधसस्तदिह मन्महे कौशलम् ॥ ३८ ॥ क्षणं सरलवीक्षणं क्षणमपाङ्गसंवीक्षणं क्षणं रजसि खेलनं क्षणमतीव भूषादरः। क्षणं द्रुततरा गतिः क्षणमतीव मन्दा गतिः क्षणक्षणविलक्षण जयति चेष्टितं सुभ्रुवः ॥ ३९ ॥ क्षोभं धत्ते यदतिवहलः स्निग्धलावण्यपूरः प्रत्यङ्गं यत्तटमनुसरन्त्यूर्मयो विभ्रमाणाम्। उन्मग्नं यत्स्फुरति च मनाक्कुम्भयोर्द्वन्द्वमेतत्तन्मन्येऽस्याः स्मरगजयुवा गाहते हृत्तडागम् ॥ ४० ॥

१ स्वायत्तीकृतम्. २ समुद्गत.. ३ नियतैकविषयता. ४ उन्नतम्. ५ उत्कर्षभाग्यवति.

मन्दं मन्दं श्रवणपुटकोपान्तगन्ता दृगन्तः किंचित्किंचिद्विरमति मनो धूलिकेलीरसेभ्यः आविर्भावः स्तनमुकुलयोः कापि कान्तिः समन्तादद्य श्वो वा कुसुमधनुषो यौवराज्याभिषेकः ॥ ४१ ॥ संनद्धोऽयं नवतरुणिमा काममास्कन्दुकामो नैनां मुञ्चत्यहह सहसा कौतुकी बालभावः । तद्वैराज्यं वरतरतनुस्वर्णभूमौ प्रवृत्तं प्रायस्त्वस्मादनुदिनमयं क्षीयते मध्यदेशः ॥ ४२ ॥ श्रोणीबन्धस्त्यजति तनुतां[2] सेवते मध्यभागः पद्भ्यां मुक्तास्तरलगतयः[3] संश्रिता लोचनाभ्याम् । धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं त्वद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ ४३ ॥ सभ्रूभङ्गं करकिसलयावर्तनैरालपन्ती सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन । विन्यस्यन्ती चरणकमले लीलया स्वैरयातैर्निःसङ्गीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥ ४४ ॥ दोलायां जघनस्थलेन चलता लोलेक्षणा लज्जते साशङ्कं तनुकण्टकक्षतभिया क्रीडावने क्रीडति । धत्ते दिक्षु निरीक्षणं स्मितमुखी पारावतानां रुतैः सज्जं मौग्ध्यविसर्जनाय सुतनोः शृङ्गारमिश्रं वयः ॥४५॥ वक्षस्यावरणादरस्तनयुगोद्भेदं विनाप्यङ्गुलीमुद्रासूचितहास्यमास्यमधिकं नो पुत्रिकादौ रसः । तिर्यग्लोचनवीक्षितानि वचसां छेकोक्तिसक्रान्तयस्तस्याः सीदति शैशवे समभवत्कोऽप्ययेप नव्यः क्रमः ॥ ४६ ॥ लावण्यामृतनिर्झरेण सुदृशः सिक्ताखिलाङ्गस्थली जातस्तत्र नवीनयौवनकलालीलालतामण्डपः । तस्मिन्वेषविशेषशीतलतरच्छायासु सुप्तोत्थितः कंदर्पस्त्रिजगज्जयोऽयमपरोऽप्यद्यापि निद्रालसः ॥ ४७ ॥ बाल्ये गेहपतौ निमीलति वयःसंधिं विधाय स्मरश्चौरश्चारुतरं विवेश निभृतं बालाशरीरालयम् । चाञ्चल्यं चरणे पृथक्त्वमुदरे निर्लज्जतां चेतसि क्षामत्वं हृदये दृशोः सरलतां सर्वस्वमस्या हरन् ॥ ४८ ॥ एतस्यां रतिवल्लभक्षितिपतेः क्रीडासरस्यां शनैः संशोषं नयतीव शैशवजलं तारुण्यतिग्मद्युतिः । अन्तस्था च यथा यथा विकसति प्रायः कुचोच्चस्थली स्थौल्यं हन्त तथा तथा वितनुते दृक्पीनमीनावली ॥ ४९ ॥ रेखा काचन कज्जलस्य नयनाम्भोजे मिथः कौशलात्पुङ्खीभिः सरलीकृतापि कुटिलीभावं समालम्बते । लक्ष्या वक्षसि पाणिपद्मविषमस्पर्शोदयादुन्नतिर्जानीमो वयमेणशावनयने बाल्यं न पाल्यं तव ॥ ५० ॥ मध्यस्य प्रथिमानमेति जघनं वक्षोजयोर्मन्दतां दूरं यात्युदरं च रोमलतिका नेत्रार्जवं धावति । कंदर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणादङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः ॥ ५१ ॥ दृष्टिः शैशवमण्डना प्रतिकलं लावण्यमभ्यस्यते पूर्वाकारमुरस्तथापि कुचयोः शोभां नवामीहते संप्राप्ता गुरुतां तथाप्युपचिता भोगा नितम्बस्थली तन्व्याः स्वीकृतमन्मथं विजयते तत्रैकपेयं वयः ॥ ५२ ॥ तत्तस्याः कमनीयकान्ति विजितत्रैलोक्यनारीवपुः शृङ्गारस्य निकेतनं समभवत्संसारसारं वयः । यस्मिन्विस्मृतपक्ष्मपालि चलनाः कामालसे दृष्टयो नो यूनां पुनरुत्पतन्ति पतिताः पत्रे शकुन्ता इव

१ जघनबन्ध. २ सूक्ष्मताम् ३ चञ्चलगमनानि ४ विपर्यय.

॥ ५३ ॥ केलीकौतुकमादराच्छ्रणवयोरालीभिराश्राव्यते बालाभिस्तु पुरः पुरेव रजसि क्रीडार्थमाहूयते । चेतो याति न वा ततस्तदुभयोरेणीदृशः सांप्रतं मध्ये चुम्बकयोरयःशकलवन्निःपक्षपातं मनः ॥ ५४ ॥ उत्तालालकभञ्जनानि कबरीपाशेषु शिक्षारसो दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः । तिर्यग्लोचनचेष्टितानि वचसां छेकोक्तिसंक्रान्तयः स्त्रीणां म्लायति शैशवे प्रतिकलं कोऽप्येष केलिक्रमः ॥ ५५ ॥ मात्रानर्तनपण्डितभ्रु वदनं किंचित्प्रगल्भे दृशौ स्तोकोद्भेदनिवेशितस्तनमुरो मध्यं दरिद्राति च । अस्या यज्जघनं घनं च कलया प्रत्यङ्गमेणीदृशः सत्यकारमिव स्मरैकसुहृदा तद्यौवनेनार्पितम् ॥ ५६ ॥ लावण्यामृतमाहितं वरतनोरङ्गे स्थितं यत्पुरा तत्तारुण्यघनोदयेन बहुधा संवर्धितं पद्मभूः । वीक्ष्य स्यन्दनशङ्कितः कुचयुगव्याजान्नितम्बस्थलाच्चक्रे सेतुयुगं न चेदिह कुतस्तादृग्रसस्थास्नुता ॥ ५७ ॥ विस्तारी स्तनभार एष गमितो न स्वोचितामुन्नतिं रेखोद्भासिकृतं वलित्रयमिदं न स्पष्टनिम्नोन्नतम् । मध्येऽस्या ऋजुरायतार्धकपिशा रोमावली निर्मिता रम्यं यौवनशैशवव्यतिकरोन्मिश्रं वयो वर्तते ॥ ५८ ॥ चाञ्चल्यं चरणौ विहाय नयनप्रान्तं प्रतिष्ठासते वस्तुं वाञ्छति वाचि काचिदमृतस्पर्धाकरी माधुरी । कान्तिः काञ्चनवक्षसो विजयते तन्व्या दुकूलाञ्चलं तन्मध्ये दिवसैः कियद्भिरतनुर्जेता जगन्मण्डलम् ॥ ५९ ॥ आलापान्भ्रूविलासो विरलयति लसद्बाहुविक्षिप्ति यातं नीविग्रन्थिं प्रथिम्ना प्रतनयति मनाङ्मध्यनिम्नो नितम्बः । उत्पुष्यत्पार्श्वमूर्च्छत्कुचशिखरमुरो नूनमन्तः स्मरेण स्पृष्टा कोदण्डकोट्या हरिणशिशुदृशो दृश्यते यौवनश्रीः ॥ ६० ॥

---

## तरुणीपृथगवयववर्णनम् ।

**केशपाशः** ॥ अस्या मनोहराकारकबरीभारनिर्जिताः । लज्जयेव वने वासं चक्रुश्चमरबर्हिणः ॥ १ ॥ भाति विन्यस्तकह्लारं सुकेश्याः केशसंचयम् । शोणितार्द्रैः शरैस्तूर्णं तूणीरमिव मान्मथम् ॥ २ ॥ स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः । शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः ॥ ३ ॥ चलत्कामिमनोमीनमादातुं चित्तजन्मनः । गलयष्टिरिवाभाति बालवेणी गुणोज्ज्वला ॥ ४ ॥ एणीदृशो विजयते वेणी पृष्ठावलम्बिनी । कशेव पञ्चबाणस्य युवतर्जनहेतवे ॥ ५ ॥ तमस्तोम भृशं सोममण्डलोपरि राजसे । धूमपानेन किं नाम धाम गम्यमतःपरम् ॥ ६ ॥ वेणी श्यामा भुजंगीयं नितम्बान्मस्तकं गता । वक्रचन्द्रसुधां लेढुं सान्द्रसिन्दूरजिह्वया ॥ ७ ॥ तस्याः कचभरव्याजात्तनयस्नेहलालितः । आरूढा पार्वतीवृद्ध्या गुहबर्हीव मूर्धनि ॥ ८ ॥ श्यामा मिलिन्दमाला बालाया वदनपद्ममकरन्दम् । आस्वादितुमिव मिलिता ललिता वेणीमिषादेषा ॥ ९ ॥ मलिना अपि

---

१ परिमाणेन.

संयमनात्कुटिला अपि सुमनसां समागमतः। बाला अपि मुक्तानामनुषङ्गान्निर्जरत्वमुपयान्ति ॥ १० ॥ स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायंतनमल्लिकेषु। कामो वसन्तात्ययमन्दवीर्यः केशेषु लेभे बलमङ्गनानाम् ॥ ११ ॥ एणीदृशः पाणिपुटे निरुद्धा वेणी विरेजे शयनोत्थितायाः। सरोजकोशादिव निष्पतन्ती श्रेणी घनीभूय मधुव्रतानाम् ॥ १२ ॥ इयं मुखाम्भोरुहसंनिधाने विलम्बिधम्मिल्लततीच्छलेन। समागतां सादरमेव बाला द्विरेफमालामुत वा दधाति ॥ १३ ॥ अस्याः सपक्षैकविधोः कचौघः स्थाने मुखस्योपरि वासमाप। पक्षस्थतावद्बहुचन्द्रकोऽपि कलापिनां येन जितः कलापः ॥ १४ ॥ अस्या यदास्येन पुरस्तिरश्च तिरस्कृतं शीतरुचान्धकारम्। स्फुटं स्फुरद्भङ्गकचच्छलेन तदेव पश्चादिदमस्ति बद्धम् ॥ १५ ॥ अस्याः कचानां शिखिनश्च किं नु विधिं कलापौ विमतेरगाताम्। तेनायमेभिः किमपूजि पुष्पैरभर्त्सि दत्त्वा स किमर्धचन्द्रम् ॥ १६ ॥ केशान्धकारादथ दृश्यभालस्थलार्धचन्द्रा स्फुटमष्टमीयम्। एतां यदासाद्य जगज्जयाय मनोभुवा सिद्धिरसाधि साधु ॥ १७ ॥ आभाति शोभातिशयं प्रपश्चादेणीदृशोऽस्या रमणीयशोभा। वेणी लसत्कुन्तलधोरणीनां श्रेणीव किं चास हरिन्मणीनाम् ॥ १८ ॥ विधिः किमस्या नितरामभान्तमङ्गेषु शृङ्गाररसं सुकेश्याः। स्निग्धोल्लसत्कुन्तलकैतवेन निधाय मूर्ध्नि स्तबकीचकार ॥ १९ ॥ चिकुरप्रकरा जयन्ति ते विदुषी मूर्धनि यान्बिभर्ति सा। पशुनाप्यपुरस्कृतेन तत्तुलनामिच्छति चामरेण कः ॥२०॥ लसन्मौक्तिकश्रेणिगङ्गातरंगा स्वयं नन्दिनीभास्वतो नीलवर्णा। ससीमन्तसिन्दूरसारस्वताभा त्रिवेणीयमेणीदृशो मौलिवेणी ॥ २१ ॥ उत्थितो निशि कलानिधिर्भवेदेतदीयमुखतुल्यताप्तये। प्रापितो मलिनभावमेतया लज्जया रभसि यात्यदृश्यताम् ॥ २२ ॥ एतां नवाम्बुधरकान्तिमुदीक्ष्य वेणीमेणीदृशो यदि वदन्ति वदन्तु नाम। ब्रूमो वयं मुखसुधांशुसुधाभिलाषादभ्यागतां भुजगिनीं मणिमुद्वहन्तीम् ॥२३॥ स्वर्भानुराकलयितुं स समुद्यतोऽभूद्राकां विनाननसुधांशुमहो यदस्याः। मन्ये तदस्य न च तिष्ठति पूर्णिमायां भावो हि किंतु परिपूर्णकले सुधांशौ ॥ २४ ॥ विकचकचकलापः किंचिदाकुञ्चितोऽयं कुचकलशनिवेशी शोभते श्यामलाक्ष्याः। मधुरसपरितोषात्किंचिदुत्फुल्लकोशे कमल इव विलीनः पेटकः षट्पदानाम् ॥ २५ ॥ न जीमूतच्छेदः स हि गगनचारी न च तमो न तस्येन्दोर्मैत्री न च मधुकरास्ते हि मुखराः। न पिच्छं तत्केकिन्युचितमसितोऽयं न च मणिर्मृदुत्वादाज्ञातं घनचिकुरपाशो मृगदृशः ॥ २६ ॥ धुनोतु ध्वान्तं न स्तुलितदलितेन्दीवरवनं घनस्निग्धं श्लक्ष्णं चिकुरनिकुरम्बं तव शिवे। यदीयं सौरभ्यं

---

१ बन्धनात्; (पक्षे) इन्द्रियनिग्रहात्. २ पुष्पाणाम्; (पक्षे) देवानाम्. ३ केशाः; (पक्षे) अर्भकाः. ४ मौक्तिकानाम्; (पक्षे) जीवन्मुक्तानाम्. ५ जरारहितत्वम्; (पक्षे) देवत्वम्. ६ कमलकुड्मलात्. ७ पङ्क्तिः. ८ भ्रमराणाम्. ९ केशकलापाः. १० पश्चात्कृतेन.

सहजसमुपालब्धुमनसो वसन्त्यस्मिन्मन्ये बलमथनवाटी विटपिनाम् ॥ २७ ॥ उन्मीलद्वदनेन्दुकान्तिविसरैर्दूरे समुत्सारितं भग्नं पीनकुचस्थलस्य च रुचा हस्तप्रभाभिर्हतम् । एतस्याः कलविङ्ककण्ठकदलीकल्पं मिलत्कौतुकादप्राप्ताङ्गसुखं रुषेव सहसा केशेषु लग्नं तमः ॥२८॥ ( अभ्यङ्गारम्भः ) ॥ अस्याः पीठोपविष्टाया अभ्यङ्गं वितनोत्यसौ । ललच्छ्रोणि चलद्द्रोणि नटद्गुरुपयोधरम् ॥ २९ ॥ आवर्त्य कण्ठं सिचयेन सम्यगावध्य वक्षोरुहकुम्भयुग्मम् । कासौ करालम्बिततैलपात्रा मन्दं समासीदति सुन्दरीं ताम् ॥ ३० ॥ वक्षोजौ निविडं निरुध्य सिचयेनाकुञ्च्य मध्यं शनैः कृत्वा चम्पकतैलसेकमबला संपीड्य मन्दं शिरः । पाणिभ्यां चलकङ्कणोद्यतझणत्कारोत्तराभ्यां करोत्यभ्यङ्गं परिपश्यतः सकुतुकं दोरन्तरं श्रेयसः ॥ ३१ ॥ जानुभ्यामुपविश्य पार्ष्णिनिहितश्रोणीभरा प्रोन्नमद्दोर्वल्ली नमदुन्नमत्कुचतटी दीव्यन्नखाङ्कावलिः । पाणिभ्यामवधूय कङ्कणझणत्कारावतारोत्तरं बाला नेह्यति किं निजालकभरं किंवा मदीयं मनः ॥ ३२ ॥ अश्रान्तं दृढयन्त्रणेन कुचयोरत्यक्तकाठिन्ययोराबद्धस्फुटमण्डलोन्नतिमितश्रोलं विमुच्योरसः । नीवीविच्छुरितं विधाय तममुं वाभस्तनालम्बिनीं वेणीं पाणिनखाञ्चलैः शिथिलयत्याक्रम्य पीठं पदा ॥ ३३ ॥ ( सीमन्तरचनम् ) ॥ स्नेहसंवर्धितान्बालान्दृढं बध्नाति सुन्दरी । करुणा हरिणाक्षीणां कुतः कठिनचेतसाम् ॥ ३४ ॥ संप्राप्तचिकुरभावः कचनिचयो वा युवा करे लग्नः । स्त्रीभिर्दृढं निबध्यो नो चेत्परकलत्रमनुसरति ॥ ३५ ॥ यथा यथायं वलते भुजोऽस्या उदञ्चितः संयमने कचानाम् । तथा तथा वल्गति काममेकः स एव वक्षोरुह उत्पलाक्ष्याः ॥ ३६ ॥ आभुग्नाङ्गुलिपल्लवौ कचभरे व्यापारयन्ती करौ बन्धोत्कर्षनिबद्धमानसतया शून्यां दधाना दृशम् । बाहूत्क्षेपसमुन्नते कुचतटे पर्यस्तचोलांशुका ह्रीसंकोचितबाहुमूलसुभगं बध्नाति जूटीं वधूः ॥ ३७ ॥ जानुस्थापितदर्पणं परिणमद्ग्रीवं समुद्यद्भुजं न्यञ्चत्कूर्परमुन्नमद्भुजलसत्कक्षान्तरोहत्कुचम् । पाणिभ्यां प्रविभज्य केशनिचयं सीमन्तकर्मोद्यता चेतः कस्य वशीकरोति न बलाद्बाला विलोलेक्षणा ॥ ३८ ॥ केशान्वामकरावलम्बितशिखान्भूयो रणत्कङ्कणं व्याधूयाथ कनिष्ठिकानखमुखेनाकुञ्चितान्याङ्गुलि । सीमन्तं विरचय्य तस्य करभेणोन्मृज्य पार्श्वद्वयं तान्पश्चाद्युगपत्प्रणीय करयोर्युग्मेन बध्नात्यसौ ॥ ३९ ॥ ( सीमन्तसिन्दूरम् ) ॥ वहन्ती सिन्दूरं प्रबलकबरीभारतिमिरत्विषा वृन्दैर्वन्दीकृतमिव नवीनार्कभरणम् । तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरीपरीवाहः स्रोतस्तरणिरिव सीमन्तसरणिः ॥ ४० ॥ अये मातर्दृष्ट्वा मुखममृतभानुभ्रमवशात्कचच्छद्मा राहुर्वसति किमु तृष्णातरलितः । किमेवं कंदर्पान्तकतरुणिसिन्दूरसरणिच्छलाद्धोकुं भूयो बहिरिव रसज्ञां कलयति ॥ ४१ ॥ ललाटः ॥

१ वस्त्रप्रान्तेन. २ बध्नाति. ३ सततम्. ४ वसनग्रन्थिसनिहितम्. ५ कृत्वा. ६ केशवेप.. ७ 'कलत्र शोणिभार्ययो' ८ करपृष्टेन

केशान्धकारादथ दृश्यभालस्थलार्धचन्द्रास्फुटमष्टमीयम्। एनां यदासाद्य जगज्जयाय मनोभुवा सिद्धिरसाधि साधु ॥ ४२ ॥ (तिलकः) ॥ बाले ललामलेखेयं भाले भल्लीव राजते। भ्रूलताचापमाकृष्य न विद्मः कं हनिष्यति ॥ ४३ ॥ कस्तूरीतिलकं बाले भाले मा कुरु मा कुरु। अद्य साम्यं भजामीति जृम्भते शशलाञ्छनः ॥ ४४ ॥ श्यामलेनाङ्कितं भाले बाले केनापि लक्ष्मणा। मुखं तवान्तरासुप्तभृङ्गफुल्लाम्बु जायते ॥ ४५ ॥ नासावंशविनिर्मुक्तमुक्ताफलसनाभिना। भाति भालतलस्थेन बालचन्दनबिन्दुना ॥ ४६ ॥ लोचनफुल्लाम्भोजद्वयलोभान्दोलितैकमनाः। कस्तूरीतिलकमिषादयमलिकेऽलिः समुल्लसति ॥ ४७ ॥ अस्या ललाटे रचिता सखीभिर्विभाव्यते चन्दनपत्रलेखा। अपाण्डुरक्षामकपोलभित्तावनङ्गबाणव्रणपट्टिकेव ॥ ४८ ॥ अस्यास्तनुस्यन्दनसंस्थितो वै समीनकेतुं जगतीं विजेतुम्। सकुङ्कुमालेखमिषेण वीरो व्यमोचयच्चारुतरां पताकाम् ॥ ४९ ॥ विराजतेऽस्यास्तिलकोऽयमञ्चितो विकुञ्चितभ्रूलतिकाद्वयान्तरे। विजित्य लोकाद्वितयं दिवं प्रति स्मरेण बाणो धनुषीव योजितः ॥ ५० ॥ अस्याः सुगन्धिनवकुङ्कुमपङ्कदत्तो मुग्धश्चकास्ति तिलको मदिरेक्षणायाः। आविष्टरागमभिराममुखारविन्दनिष्यन्दलग्नमिव मे हृदयं द्वितीयम् ॥ ५१ ॥ लोके कलङ्कमपहातुमयं मृगाङ्को जातो मुखं तव पुनस्तिलकच्छलेन। तत्रापि कल्पयसि तन्वि कलङ्करेखां नार्यः समाश्रितजनं हि कलङ्कयन्ति ॥ ५२ ॥ अस्याः संयमवान्कचो मधुकरैरभ्यर्थ्यमानो मुहुर्भृङ्गीगोपनजाभिशापमचिरादुन्मार्ष्टुकामो निजम्। सीमन्तेन करेण कोमलरुचा सिन्दूरबिन्दुच्छलादातप्तायसपिण्डमण्डलमसावादातुमाकाङ्क्षति ॥ ५३ ॥ केयूरं न करे पदे न कटकं मौलौ न माला पुनः कस्तूरीतिलकं तथापि तनुते संसारसारश्रियम्। सर्वाधिक्यमलेखि भालफलके यत्सुभ्रुवो वेधसा जानीमः किमु तत्र मन्मथमहीपालेन मुद्रा कृता ॥५४॥ भ्रुवौ ॥ भ्रूरेखायुगल भाति तस्याश्चटुलचक्षुषः। पत्रद्वयीव हरिता नासावंशविनिर्मिता ॥ ५५ ॥ असितात्मा समुन्नद्धः समाविष्कृतचापलः। भुजंगकुटिलस्तस्या भ्रूविक्षेपः खलायते ॥ ५६ ॥ स्मरकल्पद्रुमो बाले तव भाले द्विपत्रकः। पत्रयोरनयोश्छाया भ्रुवोर्व्याजादुदञ्चति ॥ ५७ ॥ किंचित्सविभ्रमोदञ्चिभ्रूलता भाति भामिनी। बालक्रीडाप्रतिद्वन्द्वि तर्जयन्तीव यौवनम् ॥ ५८ ॥ कामकार्मुकतया कथयन्ति भ्रूलता मम पुनर्मतमन्यत्। लोचनाम्बुरुहयोरुपरिस्थं भृङ्गशावकततीद्वयमेतत् ॥ ५९ ॥ तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरायतलेखयोर्या। तां वीक्ष्य लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ॥ ६० ॥ भ्रूभ्यां प्रियाया भवता मनोभूचापेन चापे घनसारभावः। निजां यदाल्लोपदशामपेक्ष्य संप्रत्यनेनाधिकवीर्यतार्जि ॥ ६१ ॥ स्मारं धनुर्यद्विधुनोज्झितास्यामास्येन भूतेन च लक्ष्मलेखा। एतद्भ्रुवौ जन्म तदाप युग्मं लीलाचलत्वोचितबालभा-

---

१ निष्कलङ्कमुखस्य कस्तूरीतिलकेन लाञ्छनवत्त्वाच्चन्द्र साम्य भजेदिति भाव. २ श्यामवर्णेन. ३ चिह्नेन.

वम् ॥ ६२ ॥ नेत्रे ॥ नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः । यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते ॥ ६३ ॥ निःसीमशोभासौभाग्य नताङ्ग्या नयनद्वयम् । अन्योन्यालोकनानन्दविरहादिव चञ्चलम् ॥ ६४ ॥ आसां व्रतमतीवाक्ष्णोर्यत्पुरः परिसर्पणम् । सह यातं मनस्तत्र त्यक्त्वा भूयो निवर्तनम् ॥ ६५ ॥ अर्जुनः कृष्णसंयुक्तः कर्ण यत्रानुधावति । तन्नेत्रं तु कुरुक्षेत्रमिति मुग्धे मृशामहे ॥ ६६ ॥ एकमेवाक्षि वामाक्षि रञ्जयाञ्जनलेखया । जायतामैन्दवे बिम्बे खञ्जनाम्बुजसंगमः ॥ ६७ ॥ अमुष्य मुषिता लक्ष्मीश्चक्षुपेति न नूतनम् । न वेद्मि कथयत्यस्याः कर्णे लग्नं किमुत्पलम् ॥ ६८ ॥ मृगसंबन्धिनी दृष्टिरसौ यदि न सुभ्रुवः । धावति श्रवणोत्तंसलीलादूर्वाङ्कुरे कुतः ॥ ६९ ॥ तस्याः श्रवणमार्गेण चलिते यदि लोचने । कुतः प्रकामधवले धत्तः कृष्णानुरक्तताम् ॥ ७० ॥ श्रूयतां कौतुकं सोऽपि स्मरः शृङ्गारिणां गुरुः । अमुष्याः शिष्यतामेति श्रवणोन्मुखयोर्दृशोः ॥ ७१ ॥ भास्वत्कुण्डलमाणिक्यप्रभाप्रतिहतेरिव । नताङ्ग्याः श्रवणोत्सङ्गमारूढा नयनद्वयी ॥७२॥ नयनस्य तुलां चक्रे नलिनेन नतभ्रुवः । ऊनेन चलिते भृङ्ग मामरंभाद्विधिर्दधौ ॥ ७३ ॥ अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्ग्यः । जनयन्ति मुहुर्यूनामन्तः संतापसंततिम् ॥ ७४ ॥ यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम् । तदोपमीयते तस्या वदनं चारुलोचनम् ॥ ७५ ॥ श्रमयति शरीरमधिक भ्रमयति चेतः करोति संतापम् । मोहं मुहुश्च कुरुते विपविषमं वीक्षणं तस्याः ॥ ७६ ॥ अतिपूजिततारेयं दृष्टिः श्रुतिलङ्घनक्षमा सुतनुः । जिनसिद्धान्तस्थितिरिव सवासना कं न मोहयति ॥ ७७ ॥ नयनच्छलेन सुतनोर्वदनजिते शशिनि कुलपतौ क्रोधात् नासानालनिबद्धं स्फुटितमिवेन्दीवर द्वेधा ॥ ७८ ॥ आयामिनोस्तदक्ष्णोरञ्जनरेखाविधिं वितन्वत्याः । पाणिः प्रसाधिकायाः प्रापदपाङ्गं चिरेण विश्रम्य ॥ ७९ ॥ प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या । तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥ ८० ॥ मुखारविन्दोपरिभागसंस्थं नेत्रद्वय खञ्जनमामनन्ति । प्रफुल्लवक्त्राम्बुजपार्श्ववर्ति दलद्वयं भृङ्गयुतं मतं मे ॥ ८१ ॥ इन्दीवर लोचनयोस्तुलायै निर्माय यत्नेन विधिः कदाचित् । अतुल्यता वक्ष्य ततो रजांसि निक्षिप्य चिक्षेप स पङ्कमध्ये ॥ ८२ ॥ इपुत्रयेणैव जगत्रयस्य विनिर्जयात्पुष्पमयाशुगेन । शेषा द्विबाणी सफलीकृतेयं प्रियादृगम्भोजपदेऽभिषिच्य ॥ ८३ ॥ सेयं मृदुः कौसुमचापयष्टिः स्मरस्य मुष्टिग्रहणार्हमध्या । तनोति नः श्रीमदपाङ्गमुक्तां मोहाय या दृष्टिशरौघवृष्टिम् ॥ ८४ ॥ आघूर्णितं पक्ष्मलमाक्षिपद्भ प्रान्तद्युतिश्वेत्यजितामृतांशु । अस्या इवास्याश्चलदिन्द्रनीलगोलामलश्यामलतारतारम् ॥ ८५ ॥ कर्णोत्पलेनापि मुखं सनाथं लभेत नेत्रद्युतिनिर्जितेन । यद्येतदीयेन तदा कृतार्था स्वचक्षुपी किं कुरुते कुरङ्गी ॥ ८६ ॥ त्वचः समुत्तार्य दलानि रीत्या मोचात्वचः

१ नेत्रकटाक्षपातेन सूचितेषु.

पक्ष्मपाटनानाम् । सारैर्गृहीतैर्विधिरुत्पलौघादस्यामभूदीक्षणरूपशिल्पी ॥ ८७ ॥ चकोरनेत्रैणदृगुत्पलानां निमेषयन्त्रेण किमेष कृष्टः । सारः सुधोद्गारमयः प्रयत्नैर्विधातुमेतन्नयने विधातुः ॥ ८८ ॥ ऋणीकृता किं हरिणीभिरासीदस्याः सकाशान्नयनद्वयश्रीः । भूयोगुणेयं सकला बलाद्यत्ताभ्योऽनयालभ्यत बिभ्यतीभ्यः ॥ ८९ ॥ दृशौ किमस्याश्चपलस्वभावे न दूरमाक्रम्य मिथो मिलेताम् । न चेत्कृतः स्यादनयोः प्रयाणे विघ्नः श्रवःकूपनिपातभीत्या ॥ ९० ॥ केदारभाजा शिशिरप्रवेशात्पुण्याय मन्ये मृतमुत्पलिन्या । जाता यतस्तत्कुसुमेक्षणेयं यतश्च तत्कोरकदृक्चकोरः ॥ ९१ ॥ नतभ्रुवो लोचनखञ्जरीटौ विहारमानङ्गमिहारभेते । कथं न सानन्दहृदो युवानस्तारुण्यमन्तर्निधिमुन्नयन्तु ॥ ९२ ॥ स्वदृशोर्जनयन्ति सान्त्वतां खुरकण्डूयनकैतवान्मृगाः । जितयोरुदयत्प्रमीलयोस्तदखर्वेक्षणशोभया भयात् ॥ ९३ ॥ नलिनं मलिनं विवृण्वती पृषतीमस्पृशतीं तदीक्षणे । अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम् ॥ ९४ ॥ श्रुतिलङ्घनमीहमानयोर्मलिनाभ्यन्तरयोरधीरयोः । स्मृतितापकरत्वमेतयोरुचितं लोचनयोर्मृगीदृशः ॥ ९५ ॥ लोचने हरिणगर्वमोचने मा विदूषय नताङ्गि कज्जलैः । सायकः सपदि जीवहारकः किं पुनर्हि गरलेन लेपितः ॥ ९६ ॥ कामिनीनयनकज्जलपङ्कादुत्थितो मदनमत्तवराहः । कामिमानसवनान्तरचारी मूलमुत्खनति मानलतायाः ॥ ९७ ॥ उत्तरङ्गय कुरङ्गलोचने लोचने हरिणगर्वमोचने । अस्तु सुन्दरि कलिन्दनन्दिनीवीचिडम्बरगभीरमम्बरम् ॥ ९८ ॥ रामाविलोलनयने किमु मीनबाणौ नीलोत्पले किमथवा किमु खञ्जरीटौ । किं वा जगत्त्रयजयाय कृतिर्न जाने कंदर्पभूपरचिता नवकार्मणस्य ॥ ९९ ॥ मुखविधुपरिवृत्तोत्तानताटङ्कपाशावधिचकितचकोरीकान्तिचौरं तदक्षि । त्रिभुवनयुवचेतोबन्धसंकेतहेतोः सहचरमिव कर्तुं पाशमाशङ्क्य याति ॥ १०० ॥ ( कटाक्षः ) ॥ यान्ती गुरुजनैः सार्धं स्मयमानमुखाम्बुजा । तिर्यग्ग्रीवं यदद्राक्षीत्तन्निष्पत्राकरोज्जगत् ॥१०१॥ क्वचित्कृष्णार्जुनगुणा क्वचित्कर्णान्तगामिनी । अपाङ्गश्रीस्तवाभाति सुभ्रूर्भारतगीरिव ॥ १०२ ॥ विशालाक्षीकटाक्षस्य साक्षी त्र्यक्षो महेश्वरः । नाद्यापि प्रकृतिं याति येन विद्धो दिगम्बरः ॥ १०३ ॥ यासां कटाक्षविशिखैः स्मरचौरेण ताडिताः । हृतचैतन्यसर्वस्वा मोह्यन्ते मुग्धकामुकाः ॥ १०४ ॥ रे रे घरट्ट मा रोदीः कं कं न भ्रामयन्त्यमूः । कटाक्षवीक्षणादेव कराकृष्टस्य का कथा ॥ १०५ ॥ प्रभवति मनसि विवेको विदुषामपि शास्त्रसंभवस्तावत् । निपतन्ति नेत्रविशिखा यावन्नेन्दीवराक्षीणाम् ॥ १०६ ॥ हत्वा लोचनविशिखैर्गत्वा कतिचित्पदानि पद्माक्षी । जीवति युवा न वा किं भूयो भूयो विलोकयति ॥ १०७ ॥ अस्याः कररुहखण्डितकाण्डपटप्रकटनिर्गता दृष्टिः । पटविगलितनिःकलुषा स्वदते पीयूषधारेव ॥ १०८ ॥ वसन्तनीलोत्पलपट्टप-

१ विषेण. २ व्यथयामास. सपत्रनिष्पत्रादतिव्यथने. ३ बाणैः.

दानां गीतं मृतेः श्रोतुमिवोत्तरङ्गौ । नतभ्रुवो लोचनकृष्णसारौ कर्णान्तिकं संततमाश्रयेते ॥ १०९ ॥ नयनाञ्चलचञ्चरीकपूरो वलतेऽयं यत एव पक्ष्मलाक्ष्याः । तत एव भवन्ति नीलपक्ष्मप्रकराणां ननु वृष्टयो नवीनाः ॥ ११० ॥ यत्र यत्र वलते शनैः शनैः सुभ्रुवो नयनकोणविभ्रमः । तत्र तत्र शतपत्रधोरणी तोरणीभवति पुष्पधन्वनः ॥ १११ ॥ तावदेव कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः । यावदेव न कुरङ्गचक्षुषां ताड्यते चपललोचनाञ्चलैः ॥ ११२ ॥ यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या । दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥ ११३ ॥ भवनभुवि सृजन्तस्तारहारावतारान्दिशि दिशि विकिरन्तः केतकानां कुटुम्बम् । वियति च रचयन्तश्चन्द्रिकां दुग्धमुग्धां प्रतिनयननिपाताः सुभ्रुवो विभ्रमान्ति ॥ ११४ ॥ प्रणालीदीर्घस्य प्रतिपदमपाङ्गस्य सुहृदः कटाक्षव्याक्षेपाः शिशुशफरफालप्रतिभुवः । सुधानाः सर्वस्वं कुसुमधनुषोऽस्मान्प्रति सखे नवं नेत्राद्वैतं कुवलयदृशः सन्निदधाति ॥११५॥ दिनान्ते स्नातीनां कनककलशाकारकुचयोरुपर्यस्यन्तीनां कमलकलिकाकोमलकरौ । समुद्यत्कालिन्दीतरलतरकल्लोलकुटिलः कटाक्षः कान्तानां कमिह कमितारं न कुरुते ॥११६॥ शिलासम्यग्धौतोज्ज्वलधवलधारापरिसरानिमानन्तःश्यामानिव विषमबाणस्य विशिखान् । दृढप्रज्ञावर्माण्यपि हृदयमर्माणि रुजतः कटाक्षानेतस्या मुनिरपि न सोढुं प्रभवति ॥११७॥ पिपासुरिव चञ्चलं विकटकर्णकूपाञ्चलं ततः प्रतिचलन्मुहुः श्रवणपाशभीतोऽभितः । तनोति तरलाकृतिस्तरललोचने संततं गतागतकुतूहलं मुहुरपाङ्गरङ्कुस्तव ॥ ११८ ॥ सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव । भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते यावल्लीलावतीनां हृदि न धृतिमुषो दृष्टिबाणाः पतन्ति ॥११९॥ (अश्रूणि)॥ अश्रुच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः । अप्राप्य मानभङ्गे विगलति लावण्यवारिपूर इव ॥ १२० ॥ नासा॥ पुराणबाणत्यागाय नूतनास्त्रकुतूहलात् । तन्नासा भाति कामेन तूणीवाधोमुखीकृता ॥१२१॥ दन्तालिदाडिमीबीजभक्षणोत्कण्ठचेतसः । मन्ये मारशुकस्येयं नासा चञ्चू विराजते ॥१२२॥ नासादसीया तिलपुष्पतूणं जगत्त्रयन्यस्तशरत्रयस्य । श्वासानिलामोदभरानुमेयां दधद्विबाणी कुसुमायुधस्य ॥ १२३ ॥ केचित्तिलस्य कुसुमं शुकचञ्चुमन्ये नासां वदन्ति कथयाम्यहमन्यदेव । संरक्षितो निजशरासनसंनिधाने कामेन केतकदलैकमयो निषङ्गः ॥ १२४ ॥ (नासाभूषणम्)॥ नासामौक्तिकमबले किमधरबिम्बेन विद्रुमं कुरुषे । दृष्ट्वा गुञ्जाबीजं शिव शिव भूयस्तदेव हसितेन ॥ १२५ ॥ श्लेष्मागारे वसतिर्जातास्माकं तदत्र मा यात । आन्दोलनच्छलादिह निवारयन्तीव मौक्तिकानि विटान् ॥१२६॥ सुधामयोऽपि क्षयरोग-

१ पण्डितानाम्. २ धैर्यहारिणः. ३ घ्राणे. ४ आन्दोलनमिषात्. ५ जारान्.

शान्त्यै नासाग्रमुक्ताफलकच्छलेन । अनङ्गसंजीवनदृष्टिशक्तिर्मुखामृतं ते पिबतीव चन्द्रः ॥ १२७ ॥ आकाशात्पतितं पुनर्जलनिधौ मध्ये चिरं संस्थितं पश्चाद्दुःसहदेहरन्ध्रजनितक्लेशान्वितं मौक्तिकम् । बाले बालकुरंगलोचनयुगे घोरं तपः संचरन्नासाभूषणतामुपैति सखि ते बिम्बाधरापेक्षया ॥१२८॥ अस्याः कामनिवासरम्यभवनं वक्त्रं विलोक्यादरान्निश्रित्येव सुधाकरं प्रियतमं भूमीगतं शोभनम् । नासामौक्तिककैतवेन रुचिरा तारापि सा रोहिणी मन्ये तद्विरहासहिष्णुहृदया तत्संनिधिं सेवते॥१२९॥कर्णौ॥ सौन्दर्यपात्रे वक्त्रेन्दौ कुरङ्गासङ्गभीतया । सूचितौ श्रोत्रपाशाभ्यां पाशाविव मृगीदृशा॥१३०॥कमनीयतानिवासः कर्णस्तस्या विचित्रमणिभूपः । सविधप्रसूनरत्नं शङ्खनिधिं दूरतरमकरोत् ॥१३१॥ तालीदलं काञ्चनकर्णपाशौ प्रसारयन्ती सुतनुः कराभ्याम् । रराज कर्णान्तनिषण्णदृष्टिः शाणे दधानेव कटाक्षबाणान् ॥ १३२ ॥ वियोगबाष्पाञ्चितनेत्रपद्मच्छद्मान्वितोत्सर्गपयःप्रसूनौ । कर्णौ किमस्या रतितत्पतिभ्यां निवेद्यपूपौ विधिशिल्पमीदृक् ॥ १३३ ॥ इहाविशद्येन पथातिवक्रः शास्त्रौघनिष्पन्दरसप्रवाहः । सोऽस्याः श्रवःपत्रयुगे प्रणालीरेखेव धावत्यभिकर्णकूपम् ॥ १३४ ॥ अस्या यदष्टादश संविभज्य विद्याः श्रुती दध्रतुरर्धमर्धम् । कर्णान्तरुत्कीर्णगभीररेखः किं तस्य संख्यैव न वा नवाङ्कः ॥ १३५ ॥ मन्येऽमुना कर्णलतामयेन पाशद्वयेन च्छिदुरेतरेण । एकाकिपाशं वरुणं विजिग्येऽनङ्गीकृतायासततो रतीशः ॥ १३६ ॥ आत्मैव तातस्य चतुर्भुजस्य जातश्चतुर्दोरुचितः स्मरोऽपि । तच्चापयोः कर्णलते भ्रुवोर्ज्ये वंशत्वगंशौ चिपिटे किमस्याः ॥ १३७ ॥ ( **कर्णभूषणम्** ) ॥ मुक्ताताटङ्कयुगं प्रतिमुक्तं कर्णपार्श्वयोरस्याः । मुखकमलमिव निषेवितुमागतममृतांशुबिम्बयुगम् ॥ १३८ ॥ ताटङ्कमस्यास्तरलेक्षणाया मुक्ताफलैश्चारुरुचिं विधत्ते । मुखश्रिया चन्द्रमिवाभिभूय बन्दीकृतं तारकचक्रवालम् ॥ १३९ ॥ शशी हर्तुं लोभान्मुखकमलशोभां श्रुतितलं सिषेवे सातङ्कस्तव तरुणि ताटङ्ककपटात् । तदन्तःपीयूषं निखिलमथ निक्षेप्तुमधरे मनोजन्मा मुष्णन्मुहुरहह तुच्छं तमकरोत् ॥ १४० ॥ **कपोलौ** ॥ कपोलपालीं तव तन्वि मन्ये लावण्यधन्ये दिशमुत्तराख्याम् । विभाति यस्यां ललितालकायां[1] मनोहरा वैश्रवणस्य[2] लक्ष्मीः ॥ १४१ ॥ स्वर्णच्छवीनां प्रसितेक्षणानां कर्णान्ततो गण्डलतातलानि । भृङ्गाः सहेलं यदि नापतिष्यन्को वेदयिष्यन्नवचम्पकानि ॥ १४२ ॥ आवध्नन्परिवेषमण्डलमलं वक्त्रेन्दुबिम्बाद्बहिः कुर्वन्पङ्कजजृम्भमाणकलिकाकर्णावतंसक्रियाम् । तन्वङ्ग्याः परिनृत्यतीव हसतीवोत्सर्पतीवोल्बणं लावण्यं ललतीव काञ्चनशिलाकान्ते कपोलस्थले ॥ १४३ ॥ **अधरः** ॥ तवैष विद्रुमच्छायो[3] मरुमार्ग[4] इवाधरः । करोति कस्य नो मुग्धे पिपासाकुलितं मनः ॥ १४४ ॥ अल्पे-

---

१ अलका केशा; (पक्षे) कुबेरनगरी. २ वैश्रवणस्य कुबेरस्य; (पक्षे) वै इति पदच्छेद. श्रवणस्य कर्णस्य. ३ प्रवालकान्तिः, (पक्षे) विगता द्रुमच्छाया यस्मात्. ४ मरुदेशस्थमार्ग.

नापि सुरक्तेन साधनेन प्रयोजनम् । ओष्ठद्वयसहायेन कान्तास्येन जगज्जितम् ॥१४५॥ सर्वस्यैव हि रत्नस्य व्रणे[1]ऽर्घः[2] परिहीयते । दयिताधररत्नं तु व्रणितं[3] यात्यनर्घताम्[4] ॥१४६॥ अधरोऽयमधीराक्ष्या बन्धुजीवप्रभाहरः[5] । अन्यजीवप्रभां हन्त हरतीति किमद्भुतम् ॥१४७॥ मुखारविन्ददत्तश्रीः सुतनोररुणोऽधरः । कुरुते हारमाणिक्यप्रदीपान्पाण्डुरत्विषः ॥१४८॥ संततोदयसंध्येव वदनेन्दोरनिन्दिता । तदोष्ठमुद्रा लावण्यसमुद्रस्येव विद्रुमः ॥१४९॥ अधरोऽसौ कुरङ्गाक्ष्याः शोभते नासिकातले । सुवर्णनलिकामध्यान्माणिक्यमिव विच्युतम् ॥ १५० ॥ अधरं खलु बिम्बनामकं फलमाभ्यामिति भव्यमन्वयम् । लभतेऽधरबिम्ब इत्यदः पदमस्या रदनच्छदे वदत् ॥ १५१ ॥ अपि मृगाक्षि तवाधरपल्लवे दयितदन्तपदं न भवत्यदः । भुवनमोहनमन्त्रपदाङ्कितं किमुत यन्त्रमिदं स्मरयान्त्रिणः ॥ १५२ ॥ अभिलषन्ति तवाधरमाधुरीं तादिह किं हरिणाक्षि मुधा बुधाः । सुरसुधामधरीकुरुते यतस्त्वदधरोऽधरतामगमत्ततः ॥ १५३ ॥ पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् । ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥ १५४ ॥ बन्धूकबन्धूभवदेतदस्या मुखेन्दुनानेन सहोज्जिहानम् । रागश्रिया शैशवयौवनीयां स्वमाह संध्यामधरोष्ठलेखा ॥ १५५ ॥ अस्या मुखेन्दोरधरः सुधाभूर्बिम्बस्य युक्तः प्रतिबिम्ब एषः । तस्याथवा श्रीद्रुमभाजि देशे संभाव्यमानास्य तु विद्रुमेऽसौ ॥ १५६ ॥ जानेऽतिरागादिदमेव बिम्बं बिम्बस्य च व्यक्तमितोऽधरत्वम्[6] । द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम् ॥१५७॥ प्रियामुखीभूय सुखी सुधांशुर्वसत्यसौ राहुभयव्ययेन । इमां दधाराधरबिम्बलीलां तस्यैव बालं करचक्रवालम् ॥ १५८ ॥ अधरममृतं कः सदेहो मधून्यपि नान्यथा मधुरमधिकं द्राक्षायाश्च प्रसन्नरसं फलम् । सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥ १५९ ॥ त्वं पीयूष दिवोऽपि भूषणमसि द्राक्षे परीक्षेत को माधुर्यं तव विश्वतोऽपि विदितं माध्वीक माध्वीकता । एतत्किं तु मनागरुंतुदमिव[9] ब्रूमो न चेत्कुप्यसि यः कान्ताधरपल्लवे मधुरिमा नान्यत्र कुत्रापि सः ॥१६०॥ दन्ताः ॥ द्विधा विधाय शीतांशुं कपोलौ कृतवान्विधिः । तन्व्यास्तद्रसनिष्पत्तिबिन्दवो रदनावलिः ॥ १६१ ॥ चन्द्राधिकैतन्मुखचन्द्रिकाणां दरायतं तत्किरणाङ्कनानाम् । पुरःपरिस्रस्तदृषद्धितीयं रदावलिद्वन्द्वति बिन्दुवृन्दम् ॥ १६२ ॥ राज्ञौ द्विजानामिह राजदन्ताः संबिभ्रति श्रोत्रियविभ्रमं यत् । उद्वेगरागादिमृजावदाताश्चत्वार एते तदवैमि मुक्ताः ॥ १६३ ॥ यावद्यावत्कुवलयदृशा मृज्यते दन्तपालिस्तावत्तावद्द्विगुणमधरच्छायया शोणशोचिः । काचित्त्वस्याः परिमलकलाहूतमात्रालिकान्त्या वक्त्राश्वासे

१ छिद्रे. जाते सतीत्यध्याहार्यम्. २ मूल्यम् ३ सजातव्रणम्. ४ अमूल्यताम्. ५ बन्धूकपुष्पम्; (पक्षे) बन्धुभूता जीवा. ६ लौहित्यात्. ७ निकृष्टत्वम्. ८ तारतम्य. ९ मर्मस्पृक्.

प्रसरति मुहुः श्यामिकाप्याविरासीत् ॥ १६४ ॥ चिबुकः ॥ विलोकितास्या मुखमुन्नमय्य किं वेधसेयं सुषमासमाप्तौ। धृत्युद्भवा यच्चिबुके चकास्ति निम्ने मनागङ्गुलियन्त्रणेव ॥१६५॥ मुखम् ॥ जितेन्दुपद्मलावण्यं कः कान्तावदनं जयेत्। मुक्त्वा तदेव सुरतश्रमजिह्मितलोचनम् ॥ १६६ ॥ चलद्भृङ्गमिवाम्भोजमधीरनयनं मुखम्। तदीयं यदि दृश्येत कामः क्रुद्धोऽस्तु किं ततः ॥ १६७ ॥ विलसत्याननं तस्या नासाग्रस्थितमौक्तिकम्। आलक्षितबुधाश्लेषं राकेन्दोरिव मण्डलम् ॥१६८॥ मुखं वहति बन्धूकबन्धुरेणाधरेण सा। पूर्णेन्दुमिव सौदर्यादङ्कलालितकौस्तुभम् ॥ १६९ ॥ विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम्। धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥ १७० ॥ शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम्। करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥ १७१ ॥ राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः। तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥ १७२ ॥ आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम्। भ्रमद्भ्रमरसंकीर्णं स्मरामि सरसीरुहम् ॥ १७३ ॥ इयं सुनयना दासीकृततामरसश्रिया। आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥ १७४ ॥ लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम्। लोकलोचनरोलम्बकदम्बैः कैर्न पीयते ॥ १७५ ॥ ननु नीलाञ्चलसंवृतमाननमाभाति हरिणनयनायाः। प्रतिबिम्बित इव यमुनागभीरनीरान्तरेणाङ्कः ॥ १७६ ॥ अम्बुजमम्बुनि मग्नं त्रासादाकाशमाश्रितश्चन्द्रः। संप्रति कः परिपन्थी यं प्रति कोपारुणं वदनम् ॥ १७७ ॥ आसायं सलिलभरे सवितारमुपास्य सादरं तपसा। अधुनाब्जेन मनाक्तव मानिनि तुलना मुखस्याप्ता ॥ १७८ ॥ सुविरलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे। वदनपरिपूर्णचन्द्रे सुन्दरि राकास्ति नात्र संदेहः ॥ १७९ ॥ पुंसां दर्शय सुन्दरि मुखेन्दुमीपत्रपामपाकृत्य। जायाजित इति रूढा जनश्रुतिर्मे यशो भवतु ॥१८०॥ उचितं गोपनमनयोः स्तनयोः कनकाद्रिकान्तितस्करयोः। अवधीरितविधुमण्डलमुखमण्डलगोपनं किमिति ॥ १८१ ॥ अबले सलिले तपस्यता मुखभावो गमितो न पङ्कजेन। कथमादिमवर्णतान्त्यजस्य द्विजराजेन कृतोरुनिग्रहस्य ॥ १८२ ॥ सुषमाविषये परीक्षणे निखिलं पद्ममभाजि तन्मुखात्। अधुनापि न भङ्गलक्षणं सलिलोन्मज्जनमुज्झति स्फुटम् ॥ १८३ ॥ यः ससर्ज कमलं रमागृहं विश्वलोचनमहोत्सवं विधिः। एष तादृगसृजन्मृगीदृशो मीनकेतननिकेतनं मुखम् ॥१८४॥ साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके। उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥ १८५॥ तस्या मुखस्यातिमनोहरस्य कर्तुं न शक्तः सदृशं प्रियायाः। अद्यापि शीतद्युतिरात्मबिम्बं निर्माय निर्माय पुनर्भिनत्ति

१ सायंकालपर्यन्तम्. २ मुखत्वम्. मुखसाम्यमित्यर्थः. ३ आदौ पवर्णो यस्य तस्य भावस्तत्ता ताम्. पकारादेः पङ्कजस्य मकारादित्वं कथमित्यर्थः; (पक्षे) ब्राह्मणत्वम्. ४ अन्त्ये जकारो यस्यैतादृशस्य पङ्कजस्य, (पक्षे) अतिशूद्रस्य. ५ चन्द्रेण; (पक्षे) ब्राह्मणश्रेष्ठेन. ६ कृत ऊरुमूर्ध्नि निग्रहो दण्डो यस्य. ७ तुल्यम्.

॥ १८६ ॥ अनेन रम्भोरु तवाननेन पीयूषभानोस्तुलया धृतस्य। ऊनस्य नूनं परिपूरणाय तारा: स्फुरन्ति प्रतिमानखण्डाः ॥ १८७॥ अस्या मुखस्यास्तु न पूर्णिमास्यं पूर्णस्य जित्वा महिमा हिमांशुम्। भ्रूलक्ष्मखण्डं दधदर्धमिन्दुर्भालस्तृतीयः खलु यस्य भागः ॥ १८८ ॥ व्यधत्त धाता मुखपद्ममस्याः सम्राजमम्भोजकुलेऽखिलेऽपि। सरोजराजौ सृजतोऽदसीयां नेत्राभिधेयावतएव सेवाम् ॥ १८९ ॥ दिवारजन्यो रविसोमभीते चन्द्राम्बुजे निक्षिपतः स्वलक्ष्मीम्। अस्या यदास्येन तदा तयोः श्रीरेकश्रियेदं तु कदा न कान्तम् ॥ १९० ॥ अस्या मुखश्रीप्रतिबिम्बमेव जलाच्च तातान्मुकुराच्च मित्रात्। अभ्यर्थ्य धत्तः खलु पद्मचन्द्रौ विभूषणं याचितकं कदाचित् ॥१९१॥ अस्या मुखेनैव विजित्य नित्यस्पर्धी मिलत्कुङ्कुमरोषभासा। प्रसह्य चन्द्रः खलु नह्यमानः स्यादेव तिष्ठन्परिवेशपाशः ॥१९२॥ विधोर्विधिर्बिम्बशतानि लोपं लोपं कुहूरात्रिषु मासि मासि। अभङ्गुरश्रीकममुं किमस्या मुखेन्दुमस्थापयदेकशेषम् ॥१९३॥ कपोलपत्रान्मकरात्सकेतुर्भ्रूभ्यां जिगीषुर्धनुषा जगन्ति। इहावलम्ब्यास्ति रतिं मनोभू रज्यद्द्वयस्यो मधुनाधरेण ॥ १९४ ॥ धिक्तस्य मन्दमनसः कुकवेः कवित्वं यः स्त्रीमुखं तुहिनबिम्बसमं करोति। भ्रूभङ्गविभ्रमकटाक्षनिरीक्षितानि कोपप्रसादहसितानि कुतः शशाङ्के॥ १९५ ॥ चन्द्रं कलङ्करहितं शफरद्वयं च निस्तोयमन्धतमसं च सुगन्धि तन्व्याः। वक्त्रच्छलेन भुवि सृष्टवतो विधातुर्वर्ण्येत केन करकौशलमद्भुतं तत् ॥ १९६ ॥ अस्यामपूर्व इव कोपकलङ्करिक्तश्चन्द्रोऽपरः किमुत तन्मकरध्वजेन। रोमावलीगुणमिलत्कुचमन्दरेण निर्मथ्य नाभिनलधिं ध्रुवमुद्धृतः स्यात् ॥ १९७ ॥ लोके कलङ्कमपहातुमयं शशाङ्को जातो यतस्तव मुखं तरलायताक्षि। तत्रापि कल्पयसि तन्वि कलङ्कलेखां नार्यः समाश्रितजनं हि कलङ्कयन्ति ॥ १९८ ॥ यन्मञ्जुसिञ्जितमितो रसनामणीनां यच्छ्वाससौरभबलादलयो वदन्ति। यद्गीतयः स्खलदलं कृतयश्च लीला दोलाविलासतरलस्तदयं मुखेन्दुः ॥ १९९ ॥ प्रविश झटिति गेहं मा बहिस्तिष्ठ कान्ते ग्रहणसमयवेला वर्तते शीतरश्मेः। तव मुखमकलङ्कं वीक्ष्य नूनं स राहुर्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय ॥ २०० ॥ यदमरशतैः सिन्धोरन्तः कथंचिदुपार्जितं सकलमपि तद्धात्रा कान्तामुखे विनिवेशितम्। सुरसुमनसः श्वासामोदे शशी च कपोलयोरमृतमधरे तिर्यग्भूते विषं च विलोचने ॥ २०१ ॥ असावन्तश्चञ्चद्विकचनवलीलाब्जयुगलस्तलस्फूर्जत्कम्बुर्विलसदलिसंघात उपरि। विना दोषासङ्गं सततपरिपूर्णाखिलकलः कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि ते ॥ २०२ ॥ जगन्नेत्रानन्दं वदनमतुलं पक्ष्मलदृशः कथंकारं पङ्केरुहमनुविधातुं प्रभवति। अयं चेदाकाङ्क्षी सह मदनकोदण्डलतया वराको राकेन्दुः कुवलययुगं किं न वहति ॥ २०३ ॥ अनाकाशे चन्द्रः सरसिजदलद्वन्द्वसहितो गृहीतः पश्चार्धे कुटिलकुटिलैः सोऽपि तिमिरैः। सुधां मुञ्चत्युच्चैरशनिमथ संमोहजननीं किमुत्पाता-

लीयं वदत जगतः कर्तुरुदिता ॥ २०४ ॥ सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां किरञ्ज्योत्स्नामच्छां नवलवलिपाकप्रणयिनीम् । उपप्राकाराग्रं प्रहिणु नयने तर्कय मनागनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥२०५॥ विना सायं कोऽयं समुदयति सौरभ्यसुभगः किरञ्ज्योत्स्नाधारामधिधरणितारापरिवृढः। धनुर्धत्ते स्मारं तिरयति विहारं न तमसां निरातङ्कः पङ्केरुहयुगलमङ्के नटयति॥२०६॥अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः कलङ्केनास्पृष्टो न खलु परिभूतो दिनकृता । कुहूभिर्नो लुप्तो न च युवतिवक्त्रेण विजितः कलानाथः कोऽयं कनकलतिकायामुदयते ॥ २०७ ॥ स्मितज्योत्स्नागङ्गातपनतनया श्यामलरुचिः सरस्वत्योष्ठाभारुणकिरणसौन्दर्यजयिनी । इमास्तिस्रस्तीर्थाधिप इव मुखे सुभ्रु मिलितास्तवेदं सेवन्को न लभत इहानन्दलहरीम् ॥ २०८ ॥ कोशस्यातितरः स्थितानि परितः पात्राणि दुर्गं जलं मन्त्रैर्मण्डलमुज्ज्वलं चिरमधो नीतास्तथा कण्टकाः । इत्याकृष्य शिलीमुखेन रचनां कृत्वा तदत्यद्भुतं यत्पद्मेन जिगीषुणापि न जितं मुग्धे त्वदीयं मुखम् ॥ २०९ ॥ आरब्धे दयितामुखप्रतिसमे निर्मातुमस्मिन्नपि व्यक्तं जन्मसमानमेव मिलितामंशुच्छटां वर्षति। आत्मद्रोहिणि रोहिणीपरिवृढे पर्यङ्कपङ्केरुहः संकोचादथ दुःस्थितस्य न विधेस्तच्छीलमुन्मीलितम् ॥ २१० ॥ तानि प्राश्चिदिनानि यत्र रजनी सेहे तामिस्रापदं सा सृष्टिर्विरराम यत्र भवति ज्योत्स्नामयो नातपः । अद्यान्यः समयस्तथाहि तिथयोऽप्यस्या मुखस्योदये हस्ताहस्तिकया हरन्ति परितो राकावराकीयशः ॥२११॥ अज्ञातेन्दुपराभवं परिलसद्व्यालोलनेत्राञ्जनं भ्रान्तभ्रूलतमैणनाभितिलकं श्रीखण्डपत्रालकम् । बन्धूकाधरसुन्दरं सुरमुनिव्यामोहि वाक्यामृतं त्रैलोक्याद्भुतपङ्कजं वरतनोरास्यं न कस्य प्रियम् ॥२१२॥ चातुर्यस्यैकचिह्नं फलममलगिरां मूलमुत्तापशान्तेः पद्मायाः सप्रसादं स्थलमपि च रुचां कोशभूतं फलानाम् । शृङ्गारस्यातिमान्यं शरदमृतकरस्पर्धि सौभाग्यसिन्धोरास्यं तस्याः सहास्यं मनसि न मृदुले कस्य लास्यं तनोति ॥२१३॥ (**स्मितम्**) ॥ कामबाणप्रहारेण मूर्च्छितानि पदे पदे । जीवन्ति युवचेतांसि युवतीनां स्मितामृतैः ॥२१४॥ स्मयमानमायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखम् । असमग्रलक्ष्यकेसरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ २१५ ॥ धवलीकरोति हरितो मलिनीकुरुते मनः सपत्नीनाम्। अस्या हास्यविकासो मम तु मनो रक्तमाचरति॥२१६॥ यदि प्रसादीकुरुते सुधांशोरेषा सहस्रांशमपि स्मितस्य। तत्कौमुदीनां कुरुते तमेव निमित्य देवः सफलं स्वजन्म॥२१७॥ (**कण्ठः**)॥ कण्ठस्य विदधे कान्तिं मुक्ताभरणता तथा। नास्याः स्वभावरम्यस्य मुक्ताभरणता तथा ॥२१८॥ असावुद्वेललावण्यरत्नाकरसमुद्भवः । जगद्विजयमङ्गल्यशङ्खः कुसुमधन्वनः ॥ २१९ ॥ श्रोत्रपीयूषगण्डूषैः काकलीकलगीतिभिः। कण्ठः कुण्ठितचातुर्यो विपञ्ची पञ्चमध्वनेः ॥ २२० ॥ अयं त्रयाणां ग्रामाणां निधानं मधुरध्वनिः। रेखात्रय-

---

१ प्रसारयन्. २ लताविशेषः. ३ सदृशीम्. ४ प्रेरय. ५ ईषत्.

मितीवास्याः सूत्रितं कण्ठकन्दले ॥ २२१ ॥ कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य । अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥ २२२ ॥ कवित्वगानप्रियवादसत्यान्यस्या विधाता न्यधिताधिकण्ठम् । रेखात्रयन्यासमिषादमीषां वासाय सोऽयं विबभाज सीमाः ॥ २२३ ॥ मुक्तोत्करः संकरशुक्तिमध्याद्विनिर्गतः सारसलोचनायाः । जानीमहेऽस्याः कमनीयकम्बुग्रीवाधिवासाद्गुणवत्त्वमाप ॥२२४॥ (वाणी) ॥ अमृतद्रवमाधुरीधुरीणां गिरमाकर्ण्य कुरङ्गलोचनायाः । मुहुरभ्यसनं कषायकण्ठी कलकण्ठी कुरुते कुहूरुतेन ॥ २२५ ॥ स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि । अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥२२६॥ शिरीषकोषादपि कोमलाया वेधा विधायाङ्गमशेषमस्याः । प्राप्तप्रकर्षः सुकुमारसर्गे समापयद्वाचि मृदुत्वमुद्राम् ॥२२७॥ प्रसूनबाणाद्वयवादिनी सा कापि द्विजेनोपनिपात्यिकेन । अस्याः किमास्याद्विजराजतो वा नाधीयते भैक्षभुजा तरुभ्यः ॥२२८॥ पङ्काङ्कसद्मानमवेक्ष्य लक्ष्मीमेकस्य विष्णोः श्रयणात्सपत्नीम् । आस्येन्दुमस्या भजते जिताब्जं सरस्वती तद्विजिगीषया किम् ॥ २२९ ॥ कण्ठे वसन्ती चतुरा यदस्याः सरस्वती वादयते विपञ्चीम् । तदेव वाग्भूय मुखे मृगाक्ष्याः श्रोतुः श्रुतौ याति सुधारसत्वम् ॥ २३० ॥ बाहू ॥ दयिताबाहुपाशस्य कुतोऽयमपरो विधिः । जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः ॥ २३१ ॥ शब्दवद्भिरलंकारैरुपेतमतिकोमलम् । सुवृत्तं काव्यवद्रेजे तद्बाहुलतिकाद्वयम् ॥ २३२ ॥ सरले एव दोर्लेखे यदि चञ्चलचक्षुषः । अमुग्धाभ्यो मृणालीभ्यः कथमाजह्रतुः श्रियम् ॥ २३३ ॥ बाहू तस्याः कुचाभोगनिरुद्धान्योन्यदर्शनौ । मन्त्रितं कथमेताभ्या मृणालीकीर्तिलुण्ठनम् ॥ २३४ ॥ बाहू प्रियाया जयतां मृणालं द्वन्द्वे जयो नाम न विस्मयोऽस्मिन् । उच्चैस्तु तच्चित्रममुष्य भग्नस्यालोक्यते निर्व्यथनं यदन्तः ॥ २३५ ॥ अजीयतावर्तशुभंयुनाभ्यां दोर्भ्यां मृणालं किमु कोमलाभ्याम् । निःसूत्रमास्ते घनपङ्कमृत्सु मूर्तासु नाकीर्तिषु तन्निमग्नम् ॥ २३६ ॥ करौ ॥ कुसुमायुधकोदण्डे हस्तौ विस्तीर्णचक्षुषः । अशोकपल्लवास्त्राणां प्रतिहस्तत्वमागतौ ॥ २३७ ॥ नाहं धार्यमधीराक्षि मुखेन्दोः संमुखं त्वया । इतीव लीलापद्मेन करेऽस्याः कान्तिरर्पिता ॥२३८॥ स्पृष्टस्त्वयैष दयिते स्मरपूजाव्यापृतेन हस्तेन । उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः ॥ २३९ ॥ अस्याः करस्पर्शनगर्धिऋद्धिर्बालत्वमापत्खलु पल्लवो यः । भूयोऽपि नामाधरसाम्यगर्वं कुर्वन्कथं वास्तु न स प्रवालः ॥ २४० ॥ अस्यैव सर्गाय भवत्करस्य सरोजसृष्टिर्मम हस्तलेखः । इत्याह धाता हरिणेक्षणायां किं हस्तलेखीकृतया तयास्याम् ॥ २४१ ॥ मुग्धे प्रतारयसि किं कुसुमानि हर्तुमेतान्यशोककविटपस्य कुतूहलेन । अस्यैव तन्वि नवपल्लवडम्बरेषु त्वं हारयिष्यसि न तु स्वयमेव पाणी ॥२४२॥

---

१ त्यक्तः.

(कङ्कणम्)॥ गौराङ्ग्या भुजलावण्यमीलितं हेमकङ्कणम्। कण्ठाश्लेषे वयस्याभिः काठिन्यादन्वमीयत ॥२४३॥ प्रकोष्ठबन्धे बिम्बोष्ठ्यास्तस्याः काञ्चनकङ्कणम्। नालं वलयितं हस्ते हेमाब्जस्येव राजते ॥२४४॥ सौवर्णकङ्कणश्रेण्या भाति तद्बाहुकन्दली। तूणचम्पकमौर्व्येव पुष्पचापेन वेष्टिता ॥२४५॥ सहेमकटकं धत्ते सा करं पद्मतस्करम्। पद्मिनीवल्लभस्येव मूले वेष्टितमंशुना ॥ २४६ ॥ हस्ते चकास्ति बालायास्तस्याः कङ्कणमालिका। मनः कुरङ्गबन्धाय पाशालीव मनोभुवः ॥ २४७ ॥ कृशाङ्ग्याः कुचभारेण दूरमुत्सारितौ भुजौ। वहतः कलहायेव वाचालां वलयावलिम् ॥ २४८ ॥ न्यस्तानि दन्तवलयानि करे कदाचित्तानीन्दुखण्डघटितानि ममैष तर्कः। अस्या निसर्गमृदुपाणिसरोजमेषामामोचने झटिति यन्मुकुलीबभूव ॥२४९॥ (हस्तरेखा)॥ आयूरेखां चकारास्याः करे द्राघीयसीं विधिः। शौण्डीर्यगर्वनिर्वाहप्रत्याशां च मनोभुवः ॥२५०॥ अङ्गुल्यः॥ सुदीर्घा रागशालिन्यो बहुपर्वमनोहराः। तस्या विरेजुरङ्गुल्यः कामिनां संकथा इव ॥ २५१ ॥ रज्यन्नखस्याङ्गुलिपञ्चकस्य मिषादसौ हैङ्गुलपद्मतूणे। हैमैकपुङ्खास्ति विशुद्धपर्वा प्रियाकरे पञ्चशरी स्मरस्य ॥ २५२ ॥ (मुद्रिका)॥ अङ्गुलीषु कुरङ्गाक्ष्याः शोभते मुद्रिकावलिः। प्रोतेव बाणैः पुष्पेषोः सूक्ष्मलक्ष्यपरंपरा ॥ २५३ ॥ स्तनौ ॥ मृद्वङ्गि कठिनौ तन्वि पीनौ सुमुखि दुर्मुखौ। अत एव बहिर्यातौ हृदयात्ते पयोधरौ ॥ २५४ ॥ तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम्। हाराय गुणितं स्थानं न दत्तमिति लज्जया ॥ २५५ ॥ यन्न भाति तदङ्गेषु लावण्यमिति संभृतम्। पिण्डीकृतमुरोदेशे तत्पयोधरतां गतम् ॥ २५६ ॥ स्वयंभूः शंभुरम्भोजलोचने त्वत्पयोधरः। नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति ॥ २५७ ॥ अविवेकि[1] कुचद्वन्द्वं हन्तु नाम जगत्त्रयम्। श्रुतिप्रणयिनो[2]रक्ष्णोरयुक्तं जनमारणम् ॥२५८॥ प्रायश्चित्तं[3] न गृह्णीतस्तन्वङ्ग्याः पतितौ[4] स्तनौ। अत एव तयोः स्पर्शी लोकोऽयं शिथिलादरः ॥ २५९ ॥ पयोधरघनीभाव[5]स्तावदम्बरमध्यग[6]। आश्लेषोपगम[7]स्तत्र यावन्नैव प्रवर्तते ॥२६०॥ भाति निर्विवरे तस्याश्चित्रं कुचयुगान्तरे। क्रीडाकुण्डलितोच्चण्डकोदण्डः कुसुमायुधः ॥२६१॥ कुचद्वये चकोराक्षी चिबुकप्रान्तचुम्बिनि। नर्मोक्तिषु न शक्नोति स्थातुं लज्जानतानना ॥ २६२ ॥ शङ्के तच्चित्तमक्लेशसाध्यं कुसुमधन्वनः। काठिन्यं बहिरेवास्याः स्तनाभ्यां येन धारितम् ॥ २६३ ॥ सा स्तनाञ्जलिबन्धेन मन्मथं प्रथमागतम्। करोतीवोन्मुखं बाला बान्धवं यौवनश्रियः ॥२६४॥ अस्त्यप्रतिसमाधेयं स्तनद्वन्द्वस्य दूषणम्। स्फुटतां कञ्चुकानां यन्नायात्यावरणीयताम् ॥२६५॥ कुम्भौ सदम्भौ करिणां कलशौ मन्द-

१ विशेषदर्शनरहितम्; (पक्षे) विश्लेषशून्यम्. परस्पर सश्लिष्टत्वात्. २ वेद; (पक्षे) कर्णः. ३ पापनिष्कृतिम्; (पक्षे) प्रायो बाहुल्येन चित्त स्वान्तम्. ४ पातकिनौ, (पक्षे) गलितौ. ५ पयोधराणा मेघाना घनीभाव प्राचुर्यम्. ६ आकाशमध्यवर्तिन्. ७ आश्लेषानक्षत्रस्योदय.; (पक्षे) सुगमम्.

कौशलौ। चक्रवाकौ वराकौ च तदीयकुचयोः पुरः ॥२६६॥ मुखेन्दुचन्द्रिकापूरछाद्यमानौ पुनः पुनः। शीतभीताविवान्योन्यं तस्याः पीडयतः स्तनौ ॥२६७॥ तत्कुचौ चरतः किंचिन्नूनं मनसिजव्रतम्। नित्योन्मुखौ यदासाते मौलिरत्नस्य भास्वतः ॥२६८॥ सा धारयत्यधीराक्षी दुर्वहं स्तनमण्डलम्। गर्वपर्वतमारूढश्श्रितं कुसुमकार्मुकः ॥ २६९ ॥ तस्यास्तुङ्गस्तनच्छाया चकास्ति त्रिवलीतटे। लीना तिमिरलेखेव वदनेन्दोरगोचरे ॥२७०॥ स्वकीयं हृदयं भित्त्वा निर्गतौ यौ पयोधरौ। हृदयस्यान्यदीयस्य भेदने का कृपा तयोः ॥ २७१ ॥ अल्पं निर्मितमाकाशमनालोच्यैव वेधसा। इदमेवंविधं भावि भवत्याः स्तनमण्डलम् ॥२७२॥ उच्छ्वसन्मण्डलप्रान्तरेखमाबद्धकुड्मलम्। अपर्याप्तमुरोवृद्धेः शंसत्यस्याः स्तनद्वयम् ॥ २७३ ॥ मध्येन तनुमध्या मे मध्यं जितवतीत्ययम्। इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः ॥ २७४ ॥ पटविघटितमपि कुचतटमकपटमनसः कुरङ्गनयनायाः। मणिभवमयूखपटली पटलीनतया न सम्यगालोचि ॥ २७५ ॥ प्रतिपक्षो यदि वक्षोरुहपरिणाहः कुरङ्गनयनायाः। आकाशवासतपसः श्रीफल विफलस्तवायासः ॥ २७६ ॥ चञ्चत्काञ्चनशैलावस्या वक्षोरुहौ तन्व्याः। नो चेत्तावधिरूढा कथमनिमिषतां भजेत मे दृष्टिः ॥२७७॥ करतलयुगपरिणद्धे कुचकलशे कुङ्कुमारुणे तस्याः। सिन्दूरिते करिपतेः कुम्भे नक्षत्रमालेव ॥ २७८ ॥ काठिन्यमङ्गैरखिलैर्निरस्तं कुचौ युवत्याः शरणं जगाम। अधः पतिष्याव इतीव भीत्या न शक्नुतस्तावपि हातुमेतत् ॥ २७९ ॥ दिवानिशं वारिणि कण्ठदघ्ने[1] दिवाकराराधनमाचरन्ती[2]। वक्षोजतायै किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा ॥ २८० ॥ अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु तथा प्रवृद्धम्। मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम् ॥ २८१ ॥ किं नर्मदाया मम सेयमस्या दृश्यामितो बाहुलतामृणाली। कुचौ किमुत्तस्थतुरन्तरीपे स्मरोष्मशुष्यत्तरबाल्यवारः ॥ २८२ ॥ तालं प्रभु स्यादनुकर्तुमेतावुत्थानसुस्थौ पतितं न तावत्। परं च नाश्रित्य तरुं महान्तं कुचौ कृशाङ्ग्याः स्वत एव तुङ्गौ ॥२८३॥ एतत्कुचस्पर्धितया घटस्य ख्यातस्य शास्त्रेषु निदर्शनत्वम्। तस्माच्च शिल्पान्मणिकादिकारी प्रसिद्धनामाजनि कुम्भकारः ॥२८४॥ निःशङ्कसंकोचितपङ्कजोऽयमस्यामुदीतो मुखमिन्दुबिम्बः। चित्रं तथापि स्तनकोकयुग्मं न स्तोकमप्यञ्चति विप्रयोगम् ॥ २८५ ॥ आभ्यां कुचाभ्यामिभकुम्भयोः श्रीरादीयतेऽसावनयोः क ताभ्याम्। भयेन गोपायितमौक्तिकौ तौ प्रव्यक्तमुक्ताभरणाविमौ यत् ॥२८६॥ कराग्रजाग्रच्छतकोटिरर्थी ययोरिमौ तौ तुलयेत्कुचौ चेत्। सर्व तदा श्रीफलमुन्मदिष्णु जातं वटीमप्यधुना न लब्धुम् ॥ २८७ ॥ मध्यं तनूकृत्य यदीदभीयं वेधा न दध्यात्कमनीयमंशम्। केन स्तनौ संप्रति यौवनेऽस्याः सृजेदनन्यप्रतिमाङ्गदीप्तेः ॥२८८॥ तवोपकण्ठस्थिततारहारस्फुरत्प्रभाशैवलिनीजलेषु। लीनो

१ कण्ठप्रमाणे. २ सूर्याराधनम्.

मनोजाद्विप एव तस्य व्यक्तौ नु गण्डौ किमुरोजपिण्डौ ॥ २८९ ॥ सतां समालोकयतां विवेकान्हवींषि हुत्वा स्मरबाणवह्नौ। धत्ते स्तनः श्यामशिरोमिषेण तनूदरि त्र्यायुषभस्मबिन्दुम् ॥२९०॥ नयननीरज किं भवता कृतं मुखशशीवदयं वपुराश्रितः। इति वचो वितरीतुमिवोन्मुखं वरतनोः स्तनचक्रयुगं बभौ ॥२९१॥ बदरामलकाम्रदाडिमानामपहृत्य श्रियमुन्नतौ क्रमेण। अधुना हरणे कुचौ यतेते दयिते ते करिशावकुम्भलक्ष्म्याः ॥ २९२ ॥ कनकक्रमुकायितं पुरस्तादथ पङ्केरुहकोरकायमाणम्। क्रमशः कलशायमानमास्ते सुदृशो वक्षसि कस्य भागधेयम् ॥२९३॥ अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिझरैरगाधताम्। स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥२९४॥ कलशे निजहेतुदण्डजः किमु चक्रभ्रमिकारिता गुणः। स तदुच्चकुचौ भवन्प्रभाझरचक्रभ्रमिमातनोति यत् ॥२९५॥ जम्बीरश्रियमतिलङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ। नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्धेते किल कनकाचलेन सार्धम् ॥ २९६ ॥ शुकीचञ्चूत्खातच्छवि फलयुगं यौवनतरोरयःशङ्कुक्षुण्णं मदनकरिणः कुम्भयुगलम्। समुद्राम्भोगोर्यामृतकलशयुग्मं सुकृतिनः कुचद्वन्द्वं तन्व्या नवनखपदाङ्कं विजयते ॥ २९७ ॥ कुचावस्याः कामद्विपकलभकुम्भाविति परे वदन्त्यन्ये वक्षःसरसि कमले काञ्चनघटौ। ममायं सिद्धान्तः स्फुरति मदनेन त्रिजगतीं विनिर्जित्य न्युब्जीकृतमिव निजं दुन्दुभियुगम् ॥२९८॥ जम्बीरं वा कमलमुकुलं हेमगुच्छं यथेच्छं मङ्गल्यं वा कलयतु जनो भूपतेर्मन्मथस्य। एतद्द्वन्द्वं कलयति मतिर्मामकीना नवीना केनाप्यस्या हृदि विनिहितं मन्मथानन्दकन्दम् ॥ २९९ ॥ पुष्पेषोरभिषेकहेमकलशौ हारप्रभावाहिनीचक्राह्वौ मदनोन्मदद्विपपतेः कुम्भौ रतेः कन्दुकौ। कन्दौ बाहुमृणालिकायुगलयोर्लीलालतासत्फले नव्यौ रत्नसमुद्गकौ वहति सा लावण्यपूर्णौ स्तनौ॥३००॥ यूनां मोहमहाफलप्रसविनीं नाभ्यालवालोत्थितां सेक्तुं लोमलतां मुखामृतनिधेर्लावण्यनामामृतम्। नेष्यन्सारणिकां विभज्य कृतवान्कूटद्वयं पार्श्वयोः पञ्चेषुस्तदिदं पयोधरयुगं लोकाः समाचक्षते ॥३०१॥ उद्भिन्नं किमिदं मनोभवनृपक्रीडारविन्दद्वयं सूते तत्कथमेकतः किल लसद्रोमावलीनालतः। चक्रद्वन्द्वमिदं क्षमं तदपि न स्थातुं मुखेन्दोः पुरो लावण्याम्बुनि मग्नयौवनगजस्यावैमि कुम्भद्वयम् ॥३०२॥ उद्भेदं प्रतिपद्य पक्वबदरीभावं समेत्य क्रमात्पुंनागाकृतिमाप्य पूगपदवीमारुह्य बिल्वश्रियम्। लब्ध्वा तालफलोपमां च ललितामासाद्य भूयोऽधुना चञ्चत्काञ्चनकुम्भजृम्भणमिमावस्याः स्तनौ बिभ्रतः ॥३०३॥ रत्याप्तप्रियलाञ्छने

१ चक्रवाकौ. २ सपुटौ. ३ रतावाप्तं प्राप्तं प्रियस्य लाञ्छनं चिह्नं नखक्षताङ्गरागादिकं येन तथाभूते; (पक्षे) रत्या प्राप्त. प्रियः कामस्तस्य लाञ्छनं मत्स्यस्तद्रूपे.

[1]कठिनतावासे [2]रसालिङ्गिते [3]प्रह्लादैकरसे [4]क्रमादुपचिते [5]भूभृद्गुरुत्वापहे । [6]कोकस्पर्धिनि [7]भोगभाजि [8]जनितानङ्गे [9]खेलीनोन्मुखे भाति श्री[10]रमणावतारदशकं बाले भवत्याः स्तने ॥३०४॥ मध्योऽयं वलिसद्मदृष्टिरधिकं पृथ्वी सुपर्वालयो बाहुस्तत्कमलेक्षणे त्रिजगतीमेकैव संरक्षति । इत्येवं स्तनयोर्मिषेण कनकक्षोणीभृता संधृतौ यस्यामात्मकिशोरकौ पविभयव्यग्रेण जम्भाद्विषः ॥३०५॥ ( कञ्चुकी ) ॥ उपरि पीनपयोधरपातितापरकुटीव मनोभवभूपतेः । विजयिनस्त्रिपुरारिजिगीषया तव विराजति भामिनि कञ्चुकी ॥३०६॥ ( हारः ) ॥ घटीयन्त्रायते हारो नाभिकूपे मृगीदृशः । संसेक्तुमिव लावण्यपयसा यौवनद्रुमम् ॥ ३०७ ॥ हारः कुरङ्गशावाक्ष्या राजति स्थूलमौक्तिकः । नाभिलावण्यपानीयघटीयन्त्रगुणोपमः ॥ ३०८ ॥ [11]मातङ्गकुम्भसंसर्गजातपातकशङ्कया । स्नातीव मुक्ताहारोऽस्याः स्फुरत्कान्तिगले जले ॥ ३०९॥ प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः । मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥ ३१० ॥ हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले । मुक्तानामप्यवस्थेयं के वयं स्मरकिंकराः ॥३११॥ मणिहारलता विभाति तन्व्याः स्तनसिंहासनसीम्नि तस्थिवांसम् । अभिषेक्तुमनङ्गदेवराजं गलशङ्खाद्गलितेव दुग्धधारा ॥ ३१२ ॥ ग्रीवाद्भुतैवावटुशोभितापि प्रसाधिता माणवकेन सेयम् । आलिङ्ग्यतामप्यवलम्बमाना सरूपताभागखिलोर्ध्वकाया ॥ ३१३ ॥ स्तनातटे चन्दनपङ्किलेऽस्या जातस्य यावद्युवमानसानाम् । हारावलीरत्नमयूखधाराकाराः स्फुरन्ति स्खलनस्य रेखाः ॥ ३१४ ॥ निबिडानुषक्तकुचकोकदंपतीमुखतारकापरिच्छेदेन शासितुम् । अवतारितेव निजतारकावली हरिणीदृशः स्फुरति हारवल्लरी ॥३१५॥ एकावलीकलितमौक्तिककैतवेन तन्व्याः समुन्नतपयोधरयुग्मसेवाम् । चक्रुर्मनांसि यमिनामतिनिर्मलानि कंदर्पमुक्तशरपातकृतान्तराणि ॥३१६॥ सारङ्गाक्ष्याः कुचकलशयोरन्तराकाशदेशः प्राप्तच्छेदः क्वचिदपि चलन्प्रस्खलन्निःपपात । नाभीकूपः समजनि नतस्तस्य देहच्युतासौ नक्षत्राणां ततिरिव समालम्बते हारशोभाम् ॥३१७॥ मुक्तावली स्मरविदाहविपाण्डुभूले नद्धा चकास्ति जितकम्बुनि कण्ठकाण्डे । निश्रिन्वती मृगदृशो वदन मृगाङ्कं नक्षत्रपङ्क्तिरिव संपतिता नभस्तः ॥३१८॥ मध्यदेशः ॥ युक्त मध्ये कृशा तन्वी कार्मुकीकर-

---

१ कठिनताया आवासे स्थानभूते; (पक्षे) कठिनताया आवासे कूर्मे. २ रसेनालिङ्गिते; (पक्षे) रसया पृथिव्या स्वोद्धरणकाले आलिङ्गिते वराहे ३ प्रकृताह्लादे एकरसे तत्परे; (पक्षे) प्रह्लादे एको रस प्रीतिर्यस्य तस्मिन्नृसिंहे. ४ क्रमाद्बदरामलकादिपरिमाणलाभेनोपचिते प्रवृद्धे, (पक्षे) क्रम पादविक्षेपस्तदनुसारेणोपचिते प्रवृद्धे वामने. ५ भूभृता पर्वताना गुरुत्वमपहन्ति नाशयन्ति तादृशे ततोऽपि महत्त्वात्, (पक्षे) भूभृता राज्ञा गौरवनाशके भार्गवे. ६ चक्रवाकस्पर्धाशीले. तत्सदृशत्वात्; (पक्षे) सीतावियोगातुरतया चक्रवाकशापदे रामे. ७ भोग. सुख शरीर वा तद्भाजि, (पक्षे) भोग· फणा तद्भाजि शेषावतारे बलभद्रे. ८ जनितमदने; (पक्षे) जनितमनङ्गमङ्गस शरीरस्य विरुद्ध मानभोगत्यागसमाधिप्रभृति येन तस्मिन्बुद्धे. ९ खेष्विन्द्रियेषु लीना आसक्ता उन्मुखा यस्मिंस्तादृशे; (पक्षे) खलीनमश्वस्य वल्गा तदुन्मुखे कल्किनीति. १० विष्णोः. ११ अन्त्यज ; (पक्षे) गजः.

णाय यत्। अत्रैव कुसुमास्त्रेण पीड्यते श्लिष्टमुष्टिना ॥ ३१९ ॥ स्तनौ भारार्पणव्यग्रौ काञ्ची कलकलोन्मुखी। कस्यां दिशि न मध्यस्य तस्याः कार्श्यं सहेतुकम् ॥३२०॥ मध्यं तव सरोजाक्षि पयोधरभरार्दितम्। अस्ति नास्तीति संदेहः कस्य चित्ते न भासते ॥३२१॥ स्मरमानसिकसमस्यात्स्यास्तनिमा निरवधिर्मध्यः। श्रीरेव पूरयति यां न गिरां देवी न चापि गुरुरस्याः ॥ ३२२ ॥ अस्मिन्प्रकृतिमनोज्ञे लग्ना प्रायेण मान्मथी दृष्टिः। सुन्दरि यतो भवत्याः प्रतिक्षणं क्षीयते मध्यः ॥ ३२३ ॥ वयःप्रकर्षादुपचीयमानस्तनद्वयस्योद्वहन-[1]श्रमेण। अत्यन्तकार्श्यं वनजायताक्ष्या मध्यो जगामेति ममैष तर्कः ॥ ३२४ ॥ बद्धा ह्रियोमा त्रिवलीगुणेन गृह्णाति रोमावलिनेत्रवल्लीम्। इतीव चिन्ताकुलभङ्गुरोऽयं मध्यो मृगाक्ष्याः कृशतामुपैति ॥ ३२५ ॥ स्फुटमसदवलग्नं[2] तन्वि निश्चिन्वते ते तदनुपलभमानास्तर्कयन्तोऽपि लोकाः। कुचगिरिवरयुग्मं यद्विनाधारमास्ते तदिह मकरकेतोरिन्द्रजालं[3] प्रतीमः ॥३२६॥ तुङ्गाभोगे स्तनगिरियुगे प्रौढबिम्बे नितम्बे सीमादेशं हरति नृपतौ यौवने जृम्भमाणे। मध्यो भीरुः क्वचिदपि ययौ पद्मपत्रेक्षणायाः शून्यं मध्यस्थलमिति ततः किंवदन्ती वदन्ति ॥ ३२७ ॥ देहं हेमद्युतिपरिहृताम्भोजदृष्टिं च दृष्टिं राशीभूतभ्रमरपटलीचारुवेषं च कोशम्। दृष्ट्वा सद्यो विपुलहृदयानन्दमूढेन धात्रा सारङ्गाक्ष्याः किमु रचयितुं विस्मृतो मध्यदेशः ॥३२८॥ आक्रान्ते शैशवेऽस्मिन्नभिनववयसा शासनान्मीनकेतोर्बालाया नेत्रयुग्मं श्रुतियुगमविशङ्कयुगेनापि सार्धम्। वक्षोजद्वन्द्वमुच्चैर्बहिरिह निरगाच्छ्रोणिबिम्बेन साकं मध्यः संगृह्य बद्धं त्रिवलिभिरभितः कार्श्यमङ्गीकरोति ॥ ३२९ ॥ **नाभिः** ॥ मन्ये समाप्तलावण्यसारे सर्गे मृगीदृशः। अपूरयित्वेव गतो नाभिरन्ध्रं चतुर्मुखः ॥ ३३० ॥ कुचकुम्भौ समालम्ब्य तरन्ती कान्तिनिम्नगाम्। भ्रमादितस्ततो दृष्टा दृष्टिर्नाभौ निमज्जति ॥३३१॥ स्तनौ तुङ्गौ समारूढे चापन्यस्तभरे स्मरे। कोदण्डाटनिमुद्रेव जाता नाभी नतभ्रुवः ॥ ३३२ ॥ उरोजवच्चक्रमनोज्ञरूपा केशावलीव भ्रमराजिता वा। संगीतवत्सत्पुटभेदहृद्या विद्येत नाभीसरसी मृगाक्ष्याः ॥३३३॥ **वलित्रयम्** ॥ एकमेव बलिं[4] बध्वा जगाम हरिरुन्नतिम्। तन्व्यास्त्रिवलिबन्धेऽपि सैव मध्यस्य नम्रता ॥ ३३४ ॥ स्तनभाराय मध्येन त्रिवलिव्याजतः कृता। तस्याः शङ्कितभङ्गेन भ्रूभङ्गानामिवावलिः ॥३३५॥ तदीयत्रिवलीमार्गसोपानारोहणश्रमः। अनङ्गत्वादनङ्गस्य जातो रत्येकगोचरः ॥ ३३६ ॥ परिहृत्य दुरारोहं तस्याः स्तनतटं कृता। कंदर्परथसंचारमार्गालीव वलित्रयी ॥ ३३७ ॥ दरिद्रमुदरं दृष्ट्वा चक्रे लावण्यपूर्णयोः। पन्थानं स्तनयोस्तस्यास्त्रिवलीविषमं विधिः ॥ ३३८ ॥ राजति त्रिवली तस्याः स्तनभारोन्नतिक्रमात्। उपर्युपरि जातेव हारमुद्रापरंपरा ॥ ३३९ ॥ मध्यत्रिवलीत्रिपथे पीवरकुचचत्वरे च चपलदृशाम्। छलयति मदनपिशाचः पुरुषं हि मना-

१ पुष्यमाण. २ मध्यम् ३ गारुडम्. ४ बलिनामान दैत्यम्, (पक्षे) वलिम्.

गपि स्खलितम् ॥ ३४० ॥ मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला । आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ॥ ३४१ ॥ अनन्यसाधारणकान्तिकान्ततनोरमुष्याः किमु मध्यदेशः । जगत्त्रयी जन्मभृता निषण्णा चित्तावलीयं त्रिवलीमिषेण ॥ ३४२ ॥ मध्यात्समानीय सुसारभागं वक्षोजमुत्पादयिता विधाता । अतिप्रयत्नात्रिवलीमिषेण सोपानवर्त्मत्रितयं चकार ॥ ३४३ ॥ मत्वा चापं शशिमुखि निजं मुष्टिना पुष्पधन्वा तन्वीमेनां तव तनुलतां मध्यदेशे बभार । यस्मादत्र त्रिभुवनवशीकारमुद्रानुकारास्तिस्रो भान्ति त्रिवलिकपटादङ्गुलीसंधिरेखाः ॥ ३४४ ॥ **रोमावलिः** ॥ नाभिरन्ध्रं प्रविष्टास्याः श्यामला रोमवल्लरी । त्रस्ता तिमिरलेखेव मेखलामणिकान्तितः ॥ ३४५ ॥ भाति रोमावली तस्याः पयोधरभरोन्नतौ । जाता रत्नशलाकेव श्रोणिवैदूर्यभूमितः ॥ ३४६ ॥ नाभिसङ्गेन गौराङ्ग्याः शोभते रोममञ्जरी । कंदर्पहेमकटकाल्लाक्षाधारेव निर्गता ॥३४७॥ नाभीवलयसंबद्धा रोमाली भाति सुभ्रुवः । सहिता निगडेनेव शृङ्खला स्मरदन्तिनः ॥३४८॥ रोमावली विलासिन्याः प्रविष्टा नाभिमण्डलम् । कियद्गाम्भीर्यमत्रेति तात्पर्यमिव बिभ्रती ॥ ३४९ ॥ लिखन्त्याः कामसाम्राज्यशासनं यौवनश्रियः । गलितेव मषीधारा रोमाली नाभिगोलकात् ॥ ३५० ॥ जाने रात्रिषु तन्मध्ये ददाति शनकैः पदम् । गम्भीरनाभिकुहरप्रवेशाशङ्कया स्मरः ॥ ३५१ ॥ कुचदुर्गराजधान्योर्मध्ये मार्गं मृगीदृशो मदनः । किमकृत नाभीवापीमपि रोमालीतमालवनरेखा ॥ ३५२ ॥ वयसी शिशुतातदुत्तरे सुदृशि स्वाभिविधिं विधित्सुनी । विधिनापि न रोमरेखया कृतसीम्नि प्रविभज्य रज्यतः ॥३५३॥ तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी नवरोमराजिः । नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः ॥३५४॥ गौरीव पत्या सुभगा कदाचित्कर्त्रीयमप्यर्धतनूसमस्याम् । इतीव मध्ये निदधे विधाता रोमावलीमेचकसूत्रमस्याः ॥ ३५५ ॥ रोमावलीरज्जुमुरोजकुम्भौ गम्भीरमासाद्य च नाभिकूपम् । मद्दृष्टितृष्णा विरमेद्यदि स्यान्नैषां वतैषा सिचयेन गुप्तिः ॥३५६॥ उन्मूलितालानविलाभनाभिश्छिन्नस्खलच्छृङ्खलरोमदामा । मत्तस्य सेयं मदनद्विपस्य प्रस्तापवप्रोच्चकुचास्तु वास्तु ॥३५७॥ रोमावलिभ्रूकुसुमैः स्वमौर्वीचापेषुभिर्मध्यललाटमूर्ध्नि । व्यस्तैरपि स्यात्त्रिभिरेतदीयैर्जेत्रः स चित्रं रतिजानिवीरः ॥ ३५८ ॥ गम्भीरनाभिह्रदसंनिवेशे रराज तन्वी नवरोमराजिः । मुखेन्दुभीतस्तनचक्रवाकद्वन्द्वोज्झिता शैवलमञ्जरीव ॥ ३५९ ॥ स्वर्णावदातद्युतिकायकाण्डे सपूर्णपीयूषमयूखमुख्यः । एणीदृशः पृष्ठविलम्बिवेणीबिम्बः पुरो राजति रोमराजी ॥ ३६० ॥ पयोधरस्तावदयं समुन्नतो रसस्य वृष्टिः सविधे भविष्यति । अतः समुद्गच्छति नाभिरन्ध्रतो विसारि रोमालिपिपीलिकावलिः ॥ ३६१ ॥ गभीरनाभीह्रदपार्श्ववर्तिनी विराजते लोमतती मृगीदृशः । मुखारविन्दस्य रसा-

१ रोमावलिरेव पिपीलिकापङ्क्तिः.

भिलाषिणी द्विरेफपङ्क्तिश्चलितेव नीरवा ॥ ३६२ ॥ समुदितकुचकुम्भमङ्गनाया हृदयमनङ्गमतङ्गजोऽधिशेते । तदखिलपदबन्धनाय रोमावलिरिह शृङ्खलिका विलोक्यते यत् ॥ ३६३ ॥ दत्तं मया पदमिदं नवयौवनाय त्वं सत्वरं क्वचन शैशव साधयेति । कामस्य हस्तलिखिताक्षरमालिकेव रोमावली विजयते जलजेक्षणायाः ॥३६४॥ नाभीबिलान्तरविनिर्गतपन्नगीयं संप्रस्थिता नयनखञ्जनभक्षणाय । नासामुदीक्ष्य गरुडभ्रममुद्वहन्ती गुप्तेव पीनकुचपर्वतयोरधस्तात् ॥ ३६५ ॥ अतिबहुतरलज्जा शृङ्खलाबद्धपादो मदननृपतिवाहो यौवनोन्मत्तहस्ती । प्रकटितकुचकुम्भो लोमराजीकरेण पिबति सरसि नाभीमण्डलाख्ये पयांसि ॥३६६॥ रचयति युवनेत्रक्षेत्रपीयूषवृष्टिं नवजलधररेखा रोमराजिच्छलेन । यदुदयति कलापिप्रक्रियेयं तदुच्चैःस्तनघनसमयोऽस्यामाविरस्तीति विद्मः ॥ ३६७ ॥ अमुष्मिल्लावण्यामृतसरसि नूनं मृगदृशः स्मरः शर्वप्लुष्टः पृथुजघनभारे निपतितः । यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे शिखा धूमस्येयं परिणमति रोमावलिमिषात् ॥३६८॥ इयं सृष्टा चञ्चत्कनकलतिका पङ्कजभुवा निषक्ता लावण्यामृतरसभरेणानुदिवसम् । अकस्माद्रोमालीमधुपपटलीह स्फुरति यत्ततः शङ्के पुष्पोद्गमसमयमायातमधुना ॥ ३६९ ॥ हरक्रोधज्वालावलिभिरवलीढेन वपुषा गभीरे ते नाभीसरसि कृतझम्पो मनसिजः । तमुत्तस्थौ तस्मादचलतनये धूमलतिका जनस्तां जानीते तव जननि रोमावलिरिति ॥ ३७० ॥ निर्णेतव्यो मनसिजकलातन्त्रसिद्धान्तसारो जेतव्या च त्रिदशसुदृशामङ्गलावण्यलक्ष्मीः । रोमश्रेणीलिखनसुभगं पत्रमादर्शयन्ती पत्रालम्बं जगति कुरुते सुभ्रुवो यौवनश्रीः ॥३७१॥ उत्तुङ्गस्तनपर्वतादवतरद्गङ्गेव हारावली रोमाली नवनीलनीरजरुचिः सेयं कलिन्दात्मजा[1] । जातं तीर्थमिदं सुपुण्यजनकं यत्रानयोः संगमश्चन्द्रो मज्जति लाञ्छनापहृतये नूनं नखाङ्कच्छलात्[2] ॥ ३७२ ॥ उत्तुङ्गस्तनभार एष तरले नेत्रे चले भ्रूलते रागान्धेषु तदोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् । सौभाग्याक्षरपङ्क्तिरेव लिखिता पुष्पायुधेन स्वयं मध्यस्थापि करोति तापमधिकं रोमावली केन सा ॥ ३७३ ॥ यूनां धैर्यतृणाङ्कुरं कवलयन्व्रीडाम्बुपूरं पिबञ्शृङ्गारो हरिणस्तव स्तनगिरेः सीमानमारोहति । नाभेः काचन तस्य निःसृतवती कस्तूरिकामालिका रोमश्रेणिमहोत्सवं वितनुते कल्याणि जानीमहे ॥३७४॥ सौन्दर्यस्य मनोभवेन गणनारेखा किमेषा कृता लावण्यस्य विलोकितुं त्रिजगतामेषा किमुद्ग्रीविका । आनन्दद्रुमकन्दली नयनयोः किंवा समुज्जृम्भते सुन्दर्याः किमु वा स्वभावसुभगा रोमालिरुन्मीलति ॥ ३७५ ॥ **पृष्ठभागः** ॥ अस्याः खलु ग्रन्थिनिबद्धकेशमल्लीकदम्बप्रतिबिम्बवेशात् । स्मरप्रशस्ती रजताक्षरेयं पृष्ठस्थलीहाटकपट्टिकायाम् ॥३७६॥ **नितम्बः** ॥ तन्नितम्बस्य निन्दन्ती वृद्धिं परिजनाङ्गनाः । काञ्चीनवनवग्रन्थिग्रथनेन कदर्थिताः ॥३७७॥ नि-

१ यमुना. २ नखव्रणच्छलेन.

तम्बबिम्बं बिम्बोष्ठी चन्द्रकान्तशिलाघनम् । धत्ते कंदर्पदोःस्तम्भप्रशस्तिफलकोपमम् ॥३७८॥ विस्तारिणा मुहुस्तस्याः श्रोणीबिम्बेन पीडिता । त्रुटिता त्रुटितास्मीति पूत्करोतीव मेखला ॥ ३७९॥ अपर्याप्तभुजायामः सखेदोऽस्याः सखीजनः । श्रोण्यां कथंचित्कुरुते रशनादामबन्धनम् ॥ ३८० ॥ नितम्बगौरवेणासौ गौराङ्गी खिद्यते दृढम् । हारयत्यपरिस्पन्दा कन्दुकं क्रीडितेषु यत् ॥३८१॥ स कथं न स्पृहणीयो विषयस्तैस्तान्नितम्बविन्यासः । शान्तात्मनापि विहितं विश्वसृजा गौरवं यत्र ॥३८२॥ पृथुवर्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया । विधिरेककचक्रचारिणं किमु निर्मित्सति मान्मथं रथम् ॥ ३८३ ॥ चक्रेण विश्वं युधि मत्स्यकेतुः पितुर्जित वीक्ष्य सुदर्शनेन । जगज्जिगीषत्यमुना नितम्बद्वयेन किं दुर्लभदर्शनेन ॥ ३८४ ॥ रोमावली दण्डनितम्बचक्रे गुणं च लावण्यजलं च बाला । तारुण्यमूर्तेः कुचकुम्भकर्तुर्बिभर्ति शङ्के सहकारि चक्रम् ॥ ३८५ ॥ ( काञ्ची ) ॥ बद्धा मणिमयकाञ्ची तस्याः परिणाहशालिनि नितम्बे । पङ्क्तिरिव सारसानां सुरसरितः पुलिनमण्डलाभोगे ॥ ३८६ ॥ स्रस्तां नितम्बादवरोधयन्ती पुनः पुनः केसरपुष्पकाञ्चीम् । न्यासीकृता स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥ ३८७ ॥ काञ्चीगुणैर्विरचिता जघनेषु लक्ष्मीर्लब्धस्थितिः स्तनतटेषु च रत्नहारैः । नो भूषिता वयमितीव नितम्बिनीनां काञ्चीनिर्गलमधार्यत मध्यभागैः ॥ ३८८ ॥ जघनम् ॥ तस्याः पद्मपलाशाक्ष्यास्तन्व्यास्तज्जघनं घनम् । दृष्ट्वा सखीभिर्याभिस्ताः पुंभावं मनसा ययुः ॥ ३८९ ॥ अनङ्गरङ्गपीठोऽस्याः शृङ्गारस्वर्णविष्टरः । लावण्यसारसंघातः सा घना जघनस्थली ॥ ३९० ॥ तदीयजघनाभोगगरिमा विस्मयास्पदम् । दूरपाती पृषत्कोऽभूद्येनानङ्गस्य साङ्गता ॥ ३९१ ॥ वपुरनुपमं नाभेरूर्ध्वं विधाय मृगीदृशा लैलितललितैरङ्गन्यासैः पुरा रभसादिव । तदनु सहसा खिन्नेनेव प्रजापतिना भृशं पृथुलपृथुला स्थूलस्थूला कृता जघनस्थली ॥३९२॥ मदनमन्दिरम् ॥ अङ्गेन केनापि विजेतुमस्या गवेष्यते किं चलपत्रपत्रम् । न चेद्विशेषादितरच्छदेभ्यस्तस्यास्तु कम्पस्तु कुतो भयेन ॥ ३९३ ॥ गौरमुग्धवनितावराङ्गके रेजुरुत्थिततनूरुहाङ्कुराः । तर्पणाय मदनस्य वेधसा स्वर्णशुक्तिनिहितास्तिला इव ॥ ३९४ ॥ ऊरू ॥ मन्ये तदूरू संभाव्य हस्तसर्वस्वहारिणौ । वहन्त्यस्पृश्यताहेतोर्मातङ्गत्व मतङ्गजाः ॥ ३९५ ॥ लम्भिताः कदलीस्तम्भास्तदूरुभ्या पराभवम् । अत्यन्तमृदुभिर्लब्धो जडैः क्व जयडिण्डिमः ॥ ३९६ ॥ ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति । सपताकः कनकमयो विजयस्तम्भः स्मरस्येव ॥ ३९७ ॥ तरुमूरुयुगेण सुन्दरी किमु रम्भा परिणाहिना परम् । तरुणीमपि जिष्णुरेव ता धनदापत्यतपःफलस्तनीम् ॥ ३९८ ॥ रम्भापि किं चिह्नयति प्रकाण्डं न चात्मनः स्वेन न चैतदूरू । स्वस्यैव येनोपरि सा दधाना पत्राणि जागर्त्यनयोर्भ्रमेण ॥ ३९९ ॥

---

१ प्रशान्तमनसा. २ ब्रह्मणा. ३ अत्यन्तसुन्दरे.. ४ श्रान्तेनेव.

विधाय मूर्धानमधश्चरं चेन्मुश्चेत्तपोभिः स्वमसारभावम् । जाड्यं च नाश्चेत्कदली बलीयस्तदा यदि स्यादिदमूरुचारुः ॥ ४००॥ ऊरुप्रकाण्डद्वितयेन तस्याः करः पराजीयत वारणीयः । युक्तं ह्रिया कुण्डलनच्छलेन गोपायति स्वं मुखपुष्करं सः ॥ ४०१ ॥ अस्यां मुनीनामपि मोहमूहे भृगुर्महान्यत्कुचशैलशीली । नानारदाह्लादि मुखं श्रितोरुर्व्यासो महाभारतसर्गयोग्यः ॥ ४०२ ॥ पश्यन्हतो मन्मथबाणपातैः शक्तो विधातुं न निमील्य चक्षुः । ऊरू विधात्रा हि कथं कृतौ तौ विन्यासवत्याः सुमतेर्वितर्कः ॥ ४०३ ॥ नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः । लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः ॥४०४॥ कदली कदली करभः करभः करिराजकरः करिराजकरः । भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः ॥४०५॥ जङ्घे ॥ जङ्घे तदीये संतापं यज्जनस्यानुरागिणः । जनयांचक्रतुस्तीव्रं तत्र हेतुर्विलोमता ॥ ४०६ ॥ हेममञ्जीरमालाभ्यां भाति जङ्घालताद्वयम् । लावण्यशाखिनः स्थानं कुङ्कुमेनेव वेष्टितम् ॥ ४०७ ॥

वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये । शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः ॥ ४०८ ॥ क्रमोद्गता पीवरताधिजङ्घं वृक्षाधिरूढिं विदुषी किमस्याः । अपि भ्रमीभङ्गिभिरावृताङ्गं वासो लतावेष्टितकप्रवीणम् ॥ ४०९ ॥ चरणौ ॥ अमूल्यस्य मम स्वर्णतुलाकोटिद्वयं कियत् । इति कोपादिवाताम्रं पादयुग्मं मृगीदृशः ॥ ४१० ॥ जाग्रतः कमलाल्लक्ष्मीं यज्जग्राह तदद्भुतम् । पादद्वन्द्वस्य मत्तेभगतिस्तेये तु का स्तुतिः ॥ ४११ ॥ स्तनभारोऽत्र वक्त्रेन्दुचन्द्रिकावरणं मम । इति तत्पादयोर्लग्ना वेद्मि प्राङ्गणपद्मिनी ॥ ४१२ ॥ अत्यपूर्वस्य रागस्य पूर्वपक्षाय पल्लवाः । पद्मानि पादयुग्मस्य प्रत्युदाहरणानि च ॥ ४१३ ॥ दृश्यन्ते मानसोत्तंसा राजहंसाः क्वचिद्यदि । गतौ चरणयोस्तस्याः प्रक्ष्यते यावदन्तरम् ४१४ ॥ नितम्बपीड्यमानेन पादयुग्मेन सुभ्रुवः । कृता भ्रुकुटिभङ्गीव नीलनूपुरमालया ॥ ४१५ ॥ चरणकमलं तदीयं लाक्षाबालातपेन संवलितम् । अध्यास्त भृङ्गमालावलिभिर्मणिखचितनूपुरव्याजात् ॥ ४१६ ॥ अननुरणन्मणिमेखलमविरलसिञ्जानमञ्जुमञ्जीरम् । परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥ ४१७ ॥ दशकैरवबान्धवान्दधानौ जडसंसर्गविमुक्तिसावधानौ । चरणौ नलिनेन तोलयन्तः कथमस्याः कवयो न यान्ति लज्जाम् ॥ ४१८ ॥ अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ । आजह्रतुस्तच्चरणौ पृथिव्या स्थलारविन्दश्रियमव्यवस्थाम् ॥४१९॥ अस्याः पदौ चारुतया महान्तावपेक्ष्य सौक्ष्म्याल्लवभावभाजः । जाता प्रवालस्य महीरुहाणा जानीमहे पल्लवशब्दलब्धिः ॥ ४२० ॥ जगद्वधूमूर्धसु रूपदर्पाद्यदेतयाधायि पदारविन्दम् । तत्सान्द्रसिन्दूरपरागरागैर्ध्रुवं प्रवालप्रबलारुणं तत् ॥ ४२१ ॥ यानेन तन्व्या

१ शुण्डाः. २ नियमेन. ३ सुवर्णस्य विंशतिपलात्मकस्य तुला कोटिद्वयम्; ( पक्षे ) पादाङ्गदद्वयम्.

जितदन्तिनाथौ पदाब्जराजौ परिशुद्धपार्ष्णी । जाने न शुश्रूषयितुं स्वामिच्छू नतेन मूर्ध्ना कतरस्य राज्ञः ॥ ४२२ ॥ प्रियासखीभूतवतो मुदेदं व्यधाद्विधिः साधुदशत्वमिन्दोः । एतत्पदच्छद्मसरागपद्मसौभाग्यभाग्यं कथमन्यथा स्यात् ॥ ४२३ ॥ **गुल्फौ** ॥ अरुन्धतीकामपुरंध्रिलक्ष्मीनम्भद्विषद्वारनवाम्बिकानाम् । चतुर्दशीयं तदिहोचितैव गुल्फद्वयाप्ता यदृश्यसिद्धिः ॥ ४२४ ॥ **पादाङ्गुल्यः** ॥ एष्यन्ति यावद्गणनादिगन्तान्नृपाः स्मरार्ताः शरणे प्रवेष्टुम् । इमे पदाब्जे विधिनापि सृष्टास्तावत्य एवाङ्गुलयोऽत्र रेखाः ॥ ४२५ ॥ **नखाः** ॥ तस्याः पादनखश्रेणिः शोभते किल सुभ्रुवः । रत्नावलीव लावण्यरत्नाकरसमुद्गता ॥ ४२६ ॥ तत्पादनखरत्नानां यदलक्तकमार्जनम् । इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥ ४२७ ॥ तद्वक्त्रं नेत्रपद्मं प्रकटितमसकृत्स्पर्धितं यन्मयैतज्जातं तस्मात्कृशत्वं ग्रहणमपि ततो जायमानः कलङ्कः । तत्सर्वं क्षम्यतां मे पुनरपि न करोम्येवमुक्त्वा तु तस्या गाढं लग्नः शशाङ्कश्चरणनखमणिच्छद्मना पादयुग्मम् ॥ ४२८ ॥ ( **गमनम्** ) ॥ सलीलमियमायाति कामिनी गजगामिनी । उन्नतं हि नखज्योतिःपुष्पैर्भुवमिवार्चती ॥ ४२९ ॥ मारयन्त्या जनं सर्वं निरागसमिवाज्ञया । मातङ्गानां गतिर्यादृक्तादृगासीदसंशयम् ॥ ४३० ॥ सा राजहंसैरिव संनताङ्गी गतेषु लीलाञ्चितविक्रमेषु । व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरसिञ्जितानि ॥ ४३१ ॥ वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया । चलितया विदधे कलमेखला कलकलोऽलकलोलदृशान्यया ॥ ४३२ ॥ गुरुतरकलनूपुरानुनादं सललितनर्तितवामपादपद्मा । इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥ ४३३ ॥ (जृम्भा)॥ वक्रीकृतभुजलतिकं वक्रीकृतवक्त्रमुन्नमद्ग्रीवम् । नो हरति कस्य हृदयं हरिणदृशो जृम्भणारम्भः ॥ ४३४ ॥ अस्येन्दोः परिवेषवद्रतिपतेश्चापेयकोदण्डवद्धम्मिल्लाम्बुमुचः क्षणद्युतिवदासज्जौ क्षिपन्ती भुजौ । विश्लिष्यद्वलि लक्ष्मनाभिविगलन्नीव्युन्नमन्मध्यमं किंचित्किंचिदुदञ्चलच्चलमहो कुम्भस्तनी जृम्भते ॥ ४३५ ॥ ( **निद्रा** ) ॥ सार्थकानर्थकपदं ब्रुवती मन्थराक्षरम् । निद्रार्धमीलिताक्षी सा लिखितेवास्ति मे हृदि ॥ ४३६ ॥ उत्तानामभिधाय बाहुलतिकामेषामपाङ्गश्रियामन्यामप्यलसान्निधाय विपुलाभोगो नितम्बस्थले । नीवीं किंचिदवश्लथां विदधती निश्वासलोलालका तल्पोत्पीडनतिर्यगुन्नतकुचं निद्राति शातोदरी ॥ ४३७ ॥ आमीलन्नवनीलनीरजतुलामालम्बते लोचनं शैथिल्यं नवमल्लिकासहचरैरङ्गैरपि स्वीकृतम् । आलापादधरः स्फुरत्कलयति प्रेङ्खत्प्रवालोपमामानन्दप्रभवाश्च बाष्पकणिका मुक्ताश्रियं बिभ्रति ॥ ४३८ ॥ (कान्तिः) ॥ सुन्दरी सा भवत्येवं विवेकः केन जायते । प्रभामात्रं हि तरलं दृश्यते नात्र संशयः ॥ ४३९ ॥ अवयवेषु परस्परबिम्बितेष्वतुलकान्तिषु राजति तत्तनोः । अयमयं प्रविभाग इति स्फुटं जगति निश्चिनुते चतुरोऽपि कः ॥ ४४० ॥

---

## समग्रस्त्रीस्वरूपवर्णनम् ।

सा दृष्टा यैर्न वा दृष्टा मुषिताः सममेव ते । हृदयं हृतमेतेषामन्येषां चक्षुषोः फलम् ॥ १ ॥ मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः । पादाभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ २ ॥ गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता । शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ ३ ॥ फलायते कुचद्वन्द्वमियं हेमलतायते । अङ्गानि कुसुमायन्ते मनो मे भ्रमरायते ॥ ४ ॥ वक्रे गुरुत्वं यदि ते वृत्तशास्त्रविदो विदुः । कठिने कुचयुग्मेऽस्या वदतां किं नु हीयते ॥ ५ ॥ आवर्त एव नाभिस्ते नेत्रे नीलसरोरुहे । तरङ्गा वलयस्तेन त्वं लावण्याम्बुवापिका ॥ ६ ॥ राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् । तपनीयशिलाशोभा कटिश्च हरते मनः ॥ ७ ॥ निर्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम् । क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा ॥ ८ ॥ विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी । तव दत्तां सदा मोदं लसत्तरलहारिणी ॥ ९ ॥ दन्तप्रभा पुष्पचिता पाणिपल्लवशोभिनी । केशपाशालिवृन्देन सुवेशा हरिणेक्षणा ॥ १० ॥ अकृशं नितम्बभागे क्षामं मध्ये समुन्नतं कुचयोः। अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ११ ॥ अव्याजसुन्दरीं तां विज्ञानेनाद्भुतेन योजयता । उपकल्पिता विधात्रा बाणः कामस्य विषदिग्धः ॥ १२ ॥ आलोक्य चिकुरनिकरं सततं सुमनोधिवासयोग्यं ते । कामोऽनिलं निसङ्गं परिवृत्य परामृशति साशङ्कः ॥ १३ ॥ आलपति पिकवधूरिव पश्यति हरिणीव चलति हंसीव । स्फुरति तडिल्लतिकेव स्वदते तुहिनांशुलेखेव ॥ १४ ॥ वेणीबन्धमहीनं कृष्णं नेत्रान्तमचलरूपं तम् । कुचमस्याः स्वीकुर्वन्पुरुषो लीला वहत्यहो शम्भोः ॥ १५ ॥ अङ्गं भूषणनिकरो भूषयतीत्येष लौकिको वादः । अङ्गानि भूषणानां कामपि सुषुमामजीजनंस्तस्याः ॥ १६ ॥ सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ । हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले ॥ १७ ॥ मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः । चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः ॥ १८ ॥ कलयति कुवलयमालाललितं कुटिलः कटाक्षविक्षेपः । अधरः किसलयलीलामाननमस्याः कलानिधिविलासम् ॥ १९ ॥ तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे । अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥२०॥ नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् । रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च ॥ २१ ॥ संन्यस्तभूषापि नवैव नित्यं विनापि हारं हसतीव कान्त्या । सौम्यं विनापि स्खलतीव भावैर्वाचं विना व्याहरतीव दृष्ट्या ॥ २२ ॥ भ्रूयुग्ममुच्चैर्धनुरुज्झितज्या बाणाः कटाक्षाः कुटिला नितान्तम् । तथापि यूनां हृदयं भिनत्ति कोऽयं विलासो वनिताजनस्य ॥ २३ ॥ अलीकरूपो यदि मध्यभागः पयोधराकारभृतश्च केशाः । उत्सङ्गशोभापि सरोरुहाक्ष्याः करस्य शोभां कलयेन्न कस्मात् ॥ २४ ॥ सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं

विनिवेशितेन । सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥ २५ ॥ जानेऽति-रागादिदमेव बिम्बं बिम्बस्य च व्यक्तमितोऽधरत्वम् । द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम् ॥ २६ ॥ प्रत्यङ्गमस्यामभिकेन रक्षां कर्तुं मघोनेव निजास्त्रमस्ति । वज्रं च भूषामणिमूर्तिधारि नियोजितं तद्द्युतिकार्मुकं च ॥ २७ ॥ भ्रूश्चित्ररेखा च तिलो-त्तमास्या नासा च रम्भा च यदूरुसृष्टिः । दृष्टा ततः पूरयतीयमेकानेकाप्सरःप्रेक्षणकौतु-कानि ॥ २८ ॥ कर्णाक्षिदन्तच्छदबाहुपाणिपदादिनः स्वाखिलतुल्यजेतुः । उद्वेगभागद्वय-ताभिमानादिहैव वेधा व्यधित द्वितीयम् ॥ २९ ॥ यशः पदाङ्गुष्ठनखौ मुख च बिभर्ति पूर्णेन्दुचतुष्टयं या । कलाचतुःषष्टिरुपैति वासं तस्यां कथ सुभ्रुवि नाम नास्याम् ॥ ३० ॥ कात्स्न्र्येन निर्वर्णयितुं च रूपमिच्छन्ति तत्पूर्वसमागतानाम् । न तु प्रियेण्वायतलोचनानां समग्रपातीनि विलोचनानि ॥ ३१ ॥ यतो यतोऽङ्गादपयाति कञ्चुकं ततस्ततः स्वर्णमरी-चिवीचयः । यतो यतोऽस्या निपतन्ति दृष्टयस्ततस्ततः श्यामसरोजवृष्टयः ॥ ३२ ॥ तदा तदङ्गस्य बिभर्ति सभ्रम विलपनामोदमुचः स्फुरद्रुचः । दरस्फुरत्काञ्चनकेतकीदलात्सुवर्णम-भ्यस्यति सौरभं यदि ॥ ३३ ॥ अधरे मधुरा सरस्वती ननु कर्णे मणिकर्णिकाप्रवाहः । शिरसि प्रतिभाति चारुवेणी कथमेणीनयना न तीर्थराजः ॥ ३४ ॥ केशः कागस्तन्त्रविकासः कायः प्रकटितकरभविलासः । चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम् ॥ ३५ ॥ वेणी विडम्बयति मत्तमधुव्रतालीमङ्गीकरोति गुणमैन्दवमास्यमस्याः । बाहू मृणा-ललतिकाश्रयमाश्रयेते पुङ्खोऽनुपुङ्खयति कामशरान्कटाक्षैः ॥३६ ॥ भ्रूपल्लवं धनुरपाङ्गतरङ्गि-तानि बाणा गुणश्रवणपालिरिति स्मरेण । तस्यामनङ्गजयजंगमदेवतायामस्त्राणि निर्जितज-गन्ति किमर्पितानि ॥३७॥ बन्धूकबन्धुरधरः सितकेतकाभ चक्षुर्मधूककलिकामधुरः कपोलः । दन्तावली विजितदाडिमबीजराजिरास्य पुनर्विकचपङ्कजदत्तदास्यम् ॥३८॥ येनोत्पलानि न शशी न मृणालिकाश्च रम्भालताश्च कमलानि च निर्मितानि । नूनं स एव मृगशावदृशोऽपि वेधा. सृष्टिक्रमो यदयमेकतया चकास्ति ॥३९॥ सा रामणीयकविधेरविदेवता वा सौन्दर्य-सारसमुदायनिकेतनं वा । तस्याः सखे नियतमिन्दुसुधामृणालज्योत्स्नादि कारणमभून्मदनश्च देवाः ॥ ४० ॥ राजीव जीवसि मुधा न सुधाकर त्वमस्याः समः पदनखस्य कुतो मुखस्य । [illegible] दृशोर्मृगदृशः कतमः कुरङ्ग [illegible] त्वमपि किं जनरञ्जनाय ॥ ४१ ॥ सा दुग्ध-मुग्ध[illegible] लोचने तरुणकेतकपत्रदीर्घे । कर्णौ विडम्बनकरौ च [illegible] [illegible] मदनायुधं वा ॥ ४२ ॥ उरुद्वयं मृगदृशः कदलेश्च काण्डौ [illegible] [illegible] ॥ ४३ ॥ [illegible] । [illegible]-

[illegible]

नाय सुचिरार्पितसुभ्रुचापचाण्डालपाशयुगलाविव शून्यकर्णौ ॥ ४४ ॥ व्याकोशकोकनदशोककरः करोऽयं खेलच्चकोरमदचोरमिदं च चक्षुः । उद्भिन्नविद्रुमरहस्यहरोऽधरोऽयं तत्स्यादरण्यमपि वश्यमवश्यमस्याः ॥ ४५ ॥ मुखं यदि किमिन्दुना यदि चलाञ्चले लोचने किमुत्पलकदम्बकैर्यदि तरङ्गभङ्गी भ्रुवौ । किमात्मभवधन्वना यदि सुसंयताः कुन्तलाः किमम्बुरुहडम्बरैर्यदि तनूरियं किं श्रिया ॥ ४६ ॥ इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः सुधाधाराधारश्चिरपरिणतं बिम्बमधरः । इमे नेत्रे रात्रिंदिवमधिकशोभे कुवलये तनुर्लावण्यानां जलधिरवगाहे सुखतरः ॥ ४७ ॥ विनैवाम्भोवाहं बहलरुचिदीप्ताम्बरबलात्तडिल्लेखा हेमद्युतिविततिरम्या विलसति । विनैव स्वर्गङ्गां नभसि रभसव्यग्रशफरीपरीवर्तैः सार्धं स्फुरति विकचेन्दीवरवनम् ॥ ४८ ॥ तमःस्तोमः पूर्वं तदनु सकलः शीतकिरणस्ततः कोकद्वन्द्वं तदनु च न किंचित्पुनरभूत् । अधस्तस्यावर्तस्तदनु कदलीकाण्डयुगलं ततो वाचौ पद्मौ शिवशिव विधेः शिल्परचना ॥४९॥ पदाभ्यामुन्निद्रामधरयति शोणाम्बुजरुचिं कराभ्यामादत्ते नवकिसलयानामरुणताम् । प्रवालस्य च्छायां दशनवसनाग्रेण पिबति स्मितज्योत्स्नापूरैरुपहसति कान्ति हिमरुचेः ॥ ५० ॥ वहत्यस्या दृष्टिर्विकचनवनीलोत्पलतुलामखण्डस्याभिख्यां वदनमिदमिन्दोः कलयति । कुचौ किंचिन्मीलत्कमलतुलनां कन्दलयतस्तमःशोभां चित्रं चिकुरनिकुरम्बं हि कुरुते ॥ ५१ ॥ करे वेणीमेणीसदृशनयना स्नानविरतौ दधाना हर्म्याग्रे हरनयनतेजोहुतमपि । इयं मुग्धा दुग्धाम्बुधिबहलकल्लोलसदृशा दृशा वारंवारं मनसिजतरुं पल्लवयति ॥ ५२ ॥ दायादत्वं मनसिजधनुर्भ्रूविलासस्य धत्ते योगक्षेमौ वहति नयनद्वन्द्वमिन्दीवराणाम् । तद्गात्राणां पुनरिह जगज्जैत्रलावण्यभाजामाभात्यग्रे मलवदखिलं मूलवर्णं सुवर्णम् ॥ ५३ ॥ लीलाब्जानां नयनयुगलद्राघिमादत्तपत्रः कुम्भावैभौ कुचपरिकरः पूर्वपक्षीचकार । भ्रूविश्रान्तिर्मदनधनुषो विभ्रमानन्ववादीद्वक्त्रज्योत्स्ना शशधररुचं दूषयामास यस्याः ॥ ५४ ॥ तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः[1] । श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥ ५५ ॥ वापी कापि स्फुरति गगने[2] तत्परं सूक्ष्मपद्या[3] सोपानालीमधिगतवती[4] काञ्चनीमैन्द्रनीली । अग्रे शैलौ[5] सुकृतिसुगमौ[6] चन्दनच्छन्नदेशौ[7] तत्रत्यानां सुलभममृतं संनिधानात्सुधांशोः ॥ ५६ ॥ तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत्स्मितं का सुधा तच्चक्षुर्यदि हारितं कुवलयैस्ताश्चेद्गिरो धिङ्मधु । धिक्कन्दर्पधनुर्भ्रुवौ यदि च ते किंवा बहु ब्रूमहे यत्सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः

---

१ तद्वद्गम्भीरा नाभिः. २ सूक्ष्मतया तद्वद्दुर्लक्ष्ये मध्ये. ३ सरणिस्तद्वच्छायारोमावली. ४ सोपानपङ्क्तिं तत्सदृशीं त्रिवलीम्. ५ कुचौ ६ पुण्यकृता सुगम्यौ; ( पक्षे ) सुलभगमनौ. ७ चन्दनतरुभिः; ( पक्षे ) चन्दनपङ्केन.

॥ ५७ ॥ सौरभ्यं मृगलाञ्छने यदि भवेदिन्दीवरे वक्रता माधुर्यं यदि विद्रुमे तरलता कन्दर्पचापे यदि। रम्भायां यदि विप्रतीपगमनं प्राप्तोपमानं तदा तद्वक्त्रं तदुदीक्षणं तदधरस्तद्भ्रूस्तदूरूयुगम् ॥ ५८ ॥ वेणीवेल्लणमङ्गणं किमु वलन्नेणीदृशो मध्यमं संव्यानं किमिदं विद्यत्तिविषमाद्वासः स्तनाच्छ्रंसते । नृत्यन्तीव किमन्तिके वलितयोः स्निग्धा दृशोः कान्तयः साकूतस्मितगर्भितं किमु मुखं वक्तुं सखी वाञ्छति ॥ ५९ ॥ बाहू द्वौ च मृणालमास्यकमलं लावण्यलीलाजलं श्रोणीतीर्थशिला च नेत्रशफरीधम्मिल्लशैवालकम् । कान्तायाः स्तनचक्रवाकयुगलं कन्दर्पबाणानलैर्दग्धानामवगाहनाय विधिना रम्यं सरो निर्मितम् ॥ ६० ॥ जिघ्रत्याननमिन्दुकान्तिरधरं बिम्बप्रभा चुम्बति स्प्रष्टुं वाञ्छति चारुपद्ममुकुलच्छायाविशेषः स्तनौ । लक्ष्मीः कोकनदस्य खेलति करावालम्ब्य किं चादरादेतस्याः सुदृशः करोति पदयोः सेवां प्रवालद्युतिः ॥ ६१ ॥ कर्णारुंतुदमेव कोकिलरुतं तस्याः श्रुते भाषिते चन्द्रे लोकरुचिस्तदाननरुचेः प्रागेव संदर्शनात् । चक्षुर्मीलनमेव तन्नयनयोरग्रे मृगीणां वरं हैमी वल्ल्यपि तावदेव ललिता यावन्न सा लक्ष्यते ॥ ६२ ॥ चक्षुर्मेचकमम्बुजं विजयते वक्त्रस्य मित्रः शशी भ्रूसूत्रस्य सैनाभिमन्मथतनुर्लावण्यपण्यं वपुः । लेखा कापि रदच्छदे च सुतनोर्गात्रे च तत्कामिनीमेनां वर्णयिता स्मरो यदि भवेद्वैदग्ध्यमभ्यस्यति ॥ ६३ ॥ स्निग्धस्मेरविलोलमुग्धमधुरा यन्नेत्रयोर्विभ्रमा यद्वामृष्टविलासपत्रलतिका घर्मोद्गमाद्गण्डयोः । यच्च प्रौढकदम्बकुड्मलसखी काप्यङ्गके विक्रिया तत्तस्यां किमपि स्फुटं रतिपतेर्दोर्दण्डविस्फूर्जितम् ॥ ६४ ॥ स्निग्धेन्द्रोपलसुन्दरः कचभरो वक्त्रं सगोत्रं विधोर्वक्षोजौ मणिकुम्भडम्बरमुषौ मध्योऽस्ति वा नास्ति वा । श्रोणीमण्डलमूरुदुर्वहमहो शोणाब्जतुल्ये पदे मन्ये मञ्जुगिरो मरालमहिलाध्येयो गतेर्विभ्रमः ॥ ६५ ॥ नेत्रोपान्तवतंसिते श्रुतिपुटे नीलोत्पलं निष्फलं हासश्रीपरिकर्मिते स्तनतटे हारोऽन्यहारः कथम् । पिण्डालक्तकपातनं चरणयोः पीडाफलं ताम्रयोर्वामाक्ष्या वपुषि स्वभावसुरभौ व्यर्थानुलेपव्यथा ॥ ६६ ॥ एतस्याः स्तनपद्मकोरकयुगं यस्याननेन्दोः सितज्योत्स्नाभिर्न भजत्यतो मृगदृशः शङ्के प्रकाशं पुनः । तस्मिल्लोचनपङ्कजं विकसितं भ्रूभङ्गसंसेवितं स्वान्ते संशयमातनोति सुतरामेतन्ममैवासकृत् ॥ ६७ ॥ पानायावरतोऽमृतं वसतयेऽप्यस्याः स्तनक्ष्माधरोऽधस्तात्सज्जघनान्तकन्दरधरः सख्याय चक्षुर्मृगः । जप्यो मन्त्रवरो मनोहरकथा ध्यानाय वक्त्राम्बुजं चेत्थं देहतपःस्थले ऽति कथं सन्तो वनान्तं गताः ॥ ६८ ॥ कर्णोत्सङ्गविसर्पिणी नयनयोः कान्तिर्वसन्तोत्पलं ऽाक्षासंभ्रमनिर्व्यपेक्षमधुरं लावण्यमेवाश्नुते । हारोऽस्याः स्मितचन्द्रिकैव कुचयोरङ्गप्रभाकञ्चुकी तन्व्याः केवलमङ्गहारमधुना मन्ये परं भूषणम् ॥ ६९ ॥ अस्याश्चेदलकावली कृतमलिश्रेणीभिरेणीदृशः सौन्दर्यं यदि चक्षुषोः सरलयोः किं मन्मथस्यायुधैः । का प्रीतिः

१ बिसम्. २ मत्सी. ३ नीलम्. ४ भ्रूलेखाया. ५ सोदरम्.

कनकारविन्दमुकुले पीनौ स्तनौ चेदतो मन्ये काचिदियं मनोभवकृता माय। जगन्मोहिनी ॥ ७० ॥ ऊर्ध्वं नीरदवृन्दमैन्दवमिदं बिम्बं त्वधो निर्मितं व्योम्नः पल्लवचित्रितस्य निहितौ शैलावुपर्युन्नतौ । किं चाधः पुलिनोच्चयस्य कदलीकाण्डाववारोपितौ तन्मन्ये चतुरस्य पुष्पधनुषः सर्गोऽयमन्यादृशः ॥ ७१ ॥ भृङ्गालीमुदरे क्षिपन्ति शतशः पद्मानि शस्त्रीमिव प्रत्यागच्छति लङ्घनार्थमसकृद्व्योमाङ्गणं चन्द्रमाः । वक्रेणापहृते कुरङ्गसुदृशस्त्रैलोक्यरूपोच्चये प्रत्यावर्तनवाञ्छयेव कति न क्लेशं समातन्वते ॥ ७२ ॥ वक्त्रं निर्मलमुन्नता कुचतटी मध्यप्रदेशः कृशः श्रोणीमण्डलमङ्गनाकुलगुरोर्देवस्य सिंहासनम् । कृत्वा चारुदृशश्चतुष्टयमिदं तुष्टाव मन्ये विधिर्हर्षाद्गद्गदगद्यपद्यरचनागर्भैश्चतुर्भिर्मुखैः ॥ ७३ ॥ मध्यं विष्णुपदं कुचौ शिवपदं वक्त्रं विधातुः पदं धम्मिल्लः सुमनःपदं प्रविलसत्काञ्ची नितम्बस्थली । वाणी चेन्मधुराधरोऽरुणधरः श्रीरङ्गभूमिर्वपुस्तस्याः किं कथयामि पुण्यचरितं मान्या सदा निर्जरैः ॥ ७४ ॥ यत्तीर्थाम्बुमुखाम्बुजासवरसो नेत्रे नवेन्दीवरे दन्तश्रेणिरखण्डिताक्षतचयो दूर्वा च रोमावली । उत्तुङ्गं च कुचद्वयं फलयुगं पात्रं कराम्भोरुहं तन्मन्ये मदनार्चनाहितमतिः स्वाङ्गोपहारैरियम् ॥ ७५ ॥ दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव । मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली छन्दो नर्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः ॥ ७६ ॥ नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः । कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्पर्धिनी स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटाः ॥ ७७ ॥ दृष्टिः कापि सुरा सुधा स्मितमिदं वक्त्रं कलानां निधिर्वक्षः कुम्भि झषौ दृशौ विजयते धन्वन्तरिः सत्कृपा । कान्तिः श्रीस्त्रिवलीतरंगलहरीनाभीगता वर्ततामेतस्यामचिरेण भाविकलने लावण्यवारांनिधौ ॥ ७८ ॥ किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः । उद्गाढोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ॥ ७९ ॥ जानीमो वदनं सरोरुहदृशो निर्माय पश्यन्मुहुर्हृष्यत्कामकठोरपावकशिखासंतापितः पद्मभूः । रम्भामूरुतटी स्तनं रसघटीं पीयूषवीचीं वचो बाहूबालबिसंकरं किसलयं नाभीसरो निर्ममे ॥ ८० ॥ जानीमो वयमासनस्य कमले तस्या मुखेन्दोस्त्विषा संकोचं समुपागते स भगवान्दुःस्थः सरोजासनः । भुग्नं भ्रूलतिकायुगं विहितवान्वक्त्रे दृशौ सृष्टवान्मध्यं विस्मृतवान्कचांश्च कुटिलान्वामभ्रुवः सृष्टवान् ॥ ८१ ॥ मुक्ता विद्रुममन्तरा मधुरसः पुष्पं परं धूर्वहं प्रालेयद्युतिर्मण्डले खलु तयोरेकासिका नार्णवे । तच्चोदञ्चति शङ्खमूर्ध्नि न पुनः पूर्वाचलाभ्यन्तरे तानीमानि विकल्पयन्ति

---

१ मध्ये. २ केवलम्. ३ भारवाहकम्, न तु मधुरसयुक्तम्. ४ चन्द्रमण्डले. ५ एकस्मिन्नासिकावस्थितिः. एकाधिकरण्यमित्यर्थः.

न इमे येषां न सा दृक्पथे ॥ ८२ ॥ इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा । कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं सुन्दर्याः पुरतश्च हन्त शिखिनां बर्हा सगर्हेव तु ॥ ८३ ॥

## परस्परदर्शनम् ।

स्मरतोरभिलाषकल्पिता बहुशः स्वप्नभुवः समागमान् । अपि दृष्टिपथं प्रपन्नयोर्निर्विशश्वास चिरं मनस्तयोः ॥ १ ॥ आघ्रातं कमलं प्रियेण सुदृशा स्थित्वापनीतं मुखं दत्तं विभ्रमकन्दुके नखपदं सीत्कृत्य गूढौ स्तनौ । दत्ता चम्पकमालिकोरसि भुजानिर्भिन्नरोमाञ्चया मीलल्लोचनया स्थितं प्रणयिनोर्दूरेऽपि पूर्णं रहः ॥ २ ॥

## नायकदर्शनम् ।

न जाने संमुखायाते प्रियाणि वदति प्रिये । सर्वाण्यङ्गानि किं यान्ति नेत्रतामुत कर्णताम् ॥१॥ यां यां प्रियः प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव । निःशङ्कमन्याः सममाहितेर्ष्यास्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥ २ ॥ काचिन्निवारितबहिर्गमना जनन्या द्रष्टुं प्रियं भवनजालकमाससाद । तस्या विलोचनमदृश्यत दाशदत्तं यन्त्रोपरुद्धशफरोपमितं क्षणेन ॥ ३ ॥ कृच्छ्रेण कापि गुरुणैव जने निरोधमुलङ्घ्य नायकसमीपभुवं प्रतस्थे । हा हन्त शीघ्रगमनप्रतिरोधहेतुस्तस्याः पुनः स्तनभरोऽपि गुरुर्बभूव ॥ ४ ॥ नान्तः प्रवेशमरुणद्विमुखी न चासीदाचष्ट दोषपरुषाणि न चाक्षराणि । सा केवलं सरलपक्ष्मभिरक्षिपातैः कान्तं विलोकितवती जननिर्विशेषम् ॥ ५ ॥ किंचित्कुञ्चितहारयष्टि सरलभ्रूवल्लि साचिस्मितं प्रान्तभ्रान्तविलोचनद्युति भुजापर्यस्तकर्णोत्पलम् । अङ्गुल्या स्फुरदङ्गुलीयकरुचा गण्डस्य कण्डूयनं कुर्वाणा नृपकन्यका सुकृतिनं सव्याजमालोकते ॥ ६ ॥

## नायिकादर्शनम् ।

प्रियादर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः । प्राप्यते येन निर्वाणं सरागेणापि चेतसा॥१॥ क्षीरसागरकल्लोललोललोचनया तया । असारोऽपि हि संसारः सारवानिव लक्ष्यते ॥ २ ॥ सेयं सीधुमयी वा सुधामयी वा हलाहलमयी वा । दृग्भ्यां निपीतमात्रा मदयति मोदयति मूर्च्छयति च ॥ ३ ॥ गच्छति न तृप्तिमेतत्सुललितमस्याः समापिबद्रूपम् । नयनयुगं मम नूनं संप्रति समुपैति सफलतां चैवम् ॥ ४ ॥ जानीमहेऽस्या यदि सारसाक्ष्या विराजतेऽन्तः प्रियवक्त्रचन्द्रः । उत्क्रान्तिजालैः प्रसृतैस्तदङ्गेष्वापाण्डुता कुड्मलताक्षिपद्मे ॥ ५ ॥ सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः । मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥ ६ ॥ तामनङ्गजयमङ्गलश्रियं किंचिदुच्चभुजमूललोकि-

ताम् । नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥ ७ ॥ इयमसौ तरलायतलोचना गुरुसमुन्नतपीनपयोधरा । पृथुनितम्बभरालसगामिनी प्रियतमा मम जीवितहारिणी ॥ ८ ॥ इयं सुस्तनी मस्तकन्यस्तकुम्भा कुसुम्भारुणं चारुवासो वसाना । समस्तस्य लोकस्य चेतःप्रवृत्तिं गृहीत्वा घटे न्यस्य यातीव भाति ॥ ९ ॥ कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः । लीलाशिरोंऽशुकनिवेशविशेषकॢप्तिव्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥ १० ॥ आलोक्य कोमलकपोलतलाभिषिक्तव्यक्तानुरागसुभगामभिरामरूपाम् । पश्यैष बाल्यमतिवृत्य विवर्तमानः शृङ्गारसीमनि तरङ्गितमातनोति ॥ ११ ॥ अर्धस्मितेन विनिमन्त्र्य दृशार्धत्राणमर्ध विधूय वसनाञ्चलमर्धमार्गे । अर्धेन नेत्रविशिखेन निवृत्य सार्धमर्धार्धमेव तरुणी तरुणं चकार ॥ १२ ॥ आधाय कोमलकराम्बुजकेलिनालीमालीसमाजमधिकृत्य समालपन्ती । मन्दस्मितेन मयि साचि विलोकितेन चेतश्चकोरनयना चुलुकीचकार ॥ १३ ॥ मदनमपि गुणैर्विशेषयन्ती रतिरिव मूर्तिमती विभाति येयम् । मम हृदयमनङ्गवह्नितप्तं भृशमिव चन्दनशीतलं करोति ॥ १४ ॥ पुरः स्थित्वा किंचिद्वलितमुखमालोकय सखे सखेदाः स्थास्यन्ति ध्रुवमिदमदृष्टास्तव दृशः । इतश्चञ्चत्काञ्चीरणितमुखरात्सौधशिखरादराकायां कोऽयं कवलयति चान्द्रेण महसा ॥१५॥ अये केयं लीलाधवलगृहवातायनतले तुलाकोटिक्काणैः कुसुमविशिखं जागरयति । अहो नेत्रद्वन्द्वं विकसति विलङ्घ्य श्रुतिमहो कथं न त्रैलोक्यं जयति मदनः स्मेरवदनः ॥ १६ ॥ तडिल्लेखा नेयं विलसति परं सौधशिखरे वसन्त्याः कस्याश्चित्कनकरुचिरा गात्रलतिका । अपीदं नोन्मज्जत्कुवलयवनं मीनतरलं परं तस्या एव स्फुरति नयनालोकललितम् ॥१७॥ सखे सायं स्नात्वा कनकरुचिकौसुम्भवसनं वसानायास्तिर्यग्वलितचिकुरस्यन्दि सलिलम् । दिशन्त्या दृष्टेति कुसुमशरकोदण्डलतिकामकस्मादस्माकं मृगशिशुदृशो दर्शनमभूत्॥१८॥ अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं रतिरपि रतिः कामः कामो मधूनि मधून्यपि । इति न भजते वस्तु प्रायः परस्परसंकरं तदियमबला धत्ते लक्ष्मीं कुतः सकलात्मिकाम् ॥१९॥ केयं श्यामोपलविरचितोल्लेखहेमैकरेखालग्नैरङ्गैः कनककदलीकन्दलीगर्भगौरैः । हारिद्राम्बुद्रवसहचरं कान्तिपूरं वहद्भिः कामक्रीडाभवनवलभीदीपिकेवाविरस्ति ॥ २० ॥ अर्कच्छायं तिरयति सुधालिप्तविद्युन्मतल्ली चक्रप्रख्यं महति सुषुमामण्डले दूरमग्रम् । रक्तादर्शप्रतिफलमिव श्रीमदङ्गं वहन्ती दृष्टा काचित्तरलनयना देवतेव स्मरस्य ॥ २१ ॥ नेयं विद्युद्ध्रुवमधिगता काञ्चनी नापि वल्ली मन्दं मन्दं प्रचलति यतो नापि वा पन्नगस्य । चूडारत्नस्फुरदुरुशिखा क्वापि धत्ते सरोजं का वा तर्हि प्रकृतिसुभगा तत्सखे न प्रतीमः ॥ २२ ॥ वक्त्रोपान्तं नयनयुगलं सर्वतो निक्षिपन्ती श्रोणीभाराच्छिथिलशिथिलन्यस्तपादारविन्दा ।

१ वस्त्रम्. २ मनोवृत्तिम्. ३ नूपुरध्वनिभिः.

आरादालीकरकिसलये दत्तहस्तावलम्बा काचित्कान्त्या विकसितमहीचक्रमायाति तन्वी ॥ २३ ॥ इयं भुजगिनी श्रितालसदनेकपुष्पान्विता द्विरेफततिसेविता प्रमदखञ्जनालंकृता । फलद्वयभरानता विलसिताननैः पल्लवैर्विलोचनपथं गता भवति कापि हैमी लता ॥ २४ ॥ पातालाद्भुवनावलोकनपरा किं नागकन्योत्थिता मिथ्या तत्खलु दृष्टमेव हि मया तस्मिन्कुतोऽस्तीदृशी । मूर्ता स्यादिह कौमुदी न घटते तस्या दिवा दर्शनं केयं हस्ततलस्थितेन कमलेनालोक्यते श्रीरिव ॥ २५ ॥ अच्छिन्नामृतबिन्दुवृष्टिसदृशीं प्रीतिं ददत्या दृशां याताया विगलत्पयोधरपराद्दृष्टव्यतां कामपि । अस्याश्चन्द्रमसस्तनोरिव करस्पर्शास्पदत्वं गता नैते यन्मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम् ॥ २६ ॥ श्रोणीभारभरालसा दरगलन्माल्यापवृत्तिच्छलाल्लीलोत्क्षिप्तभुजोपदर्शितकुचोन्मीलन्नखाङ्कावलिः । नीलेन्दीवरदामदीर्घतरया दृष्ट्या धयन्ती मनो दोरान्दोलनलोलकङ्कणझणत्कारोत्तरं सर्पति ॥ २७ ॥ लग्नं पादतले नखेषु विलुठत्संसक्तमूर्वोर्युगे विश्रान्तं जघनस्थले निपतितं नाभीसरोमण्डले । शून्यं मध्यमवेक्ष्य रोमलतिकामालम्बमानं क्रमादारूढं स्तनयोः स्तुतं नयनयोर्लीनं मनः कैशिके ॥ २८ ॥ अस्या धामसरोवरे भुजविषे वक्त्रारविन्दे भ्रमन्नेत्रभ्रूभ्रमरे सुयौवनजले कस्तूरिकापङ्किले । वक्षोजप्रतिकुम्भिकुम्भदलनक्रोधादुपेत्य द्रुतं मग्नश्चित्तमतंगजः कथमसावुत्थाय निर्यास्यति ॥ २९ ॥ स्वैरं सस्मितमीक्षते क्षणमलं व्याजृम्भते वेपते रोमाञ्चं तनुते मुहुः स्तनतटे व्यालम्बते नाम्बरम् । आलिङ्गत्यपरां तनोति चिकुरं प्रत्युत्तरं याचते केयं कामकला विलासवसतिर्लोलेक्षणा भाविनी ॥ ३० ॥ खेलत्खञ्जननेत्रया परिलसत्स्वर्णारविन्दास्यया पीनोत्तुङ्गनिरन्तरस्तनभरव्यालोलसन्मध्यया । स्फीतस्फीतनितम्बया क्षणमपि व्यालोकितश्चानया किं न स्याद्वाशिनां वरः स्मरहरः स्मारैः शरैर्जर्जरः ॥ ३१ ॥ सायं चन्द्रकलाभृतोदयगिरिस्पर्धां दधानः स्तनस्पर्शोत्तुङ्गतरो नखाङ्करुचिरः शोणाम्बराभ्यन्तरे । अस्याः कं न विलोकनोत्कमकरोत्तीक्ष्णः कटाक्षः क्षणं भृङ्गाक्रष्टगरिष्ठकेतकदलभ्रान्तिं वहन्नप्ययम् ॥ ३२ ॥ उत्तुङ्गस्तनशैलदुस्तरमुरो निम्नातिनाभिस्थली भीमं देहवनं स्फुरद्भुजलतं लोमालिजालाकुलम् । व्याधः पञ्चशरः किरत्यतितरांस्तीक्ष्णान्कटाक्षाशुगांस्तन्मे ब्रूहि मनःकुरङ्ग शरणं कं सांप्रतं यास्यसि ॥ ३३ ॥ वक्त्रश्रीजितजर्जरेन्दुमलिनं कृत्वा करे कन्दुकं क्रीडाकौतुकमिश्रभावमनया ताम्रं वहन्त्याननम् । भृङ्गाग्रग्रहकष्टकेतकदलस्पर्धावतीना दृशा दीर्घापाङ्गतरङ्गणैकसुहृदामेषोऽस्मि पात्रीकृतः ॥ ३४ ॥ स्कन्धे विन्यस्य सख्या भुजमपरकरस्यार्धचन्द्रेण मध्यं बिभ्राणा घूयमानं स्तनतटवसना गन्धवाहेन मन्दम् । पन्थानं दृग्विलासैरिव नलिनदलैः कोमलैरास्तृणन्ती सौधाग्रे कस्य साक्षात्परिणमति तपःसिद्धिरेषा सुवेषा ॥ ३५ ॥

---

## प्रेम ।

प्रेम सत्यं तयोरेव ययोर्योगवियोगयोः । वत्सरा वासरीयन्ति वत्सरीयन्ति वासराः ॥ १ ॥ जीवने सति विश्लेषो विश्लेषे सति जीवनम् । द्वयोः किमनयोर्यूनामहमेव निदर्शनम् ॥ २ ॥

---

## विरहः ।

समानकुलशीलयोः सुवयसोः परायत्तयोः परस्परविलोकनाकुलितचेतसोः प्रेयसोः । तनुत्वमनुविन्दतोर्बहुविधिं व्यथां विन्दतोरशक्यविनिवेदना विरहवेदना वर्धते ॥ १ ॥

---

## वियोगिनोऽवस्थावर्णनम् ।

प्रियाविरहितस्यास्य हृदि चिन्ता समागता । इति मत्वा गता निद्रा के कृतघ्नमुपासते ॥ १ ॥ अत्राशितं शयितमत्र निपीतमत्र तोयं तया सह मया विधिवद्वितेन । इत्यादि हन्त परिचिन्तयता वनान्ते हा तस्य लोचनपयोभिरभूत्पयोधिः ॥ २ ॥ मन्दं मरुद्वहति गर्जति वारिवाहो विद्युल्लता चलति नृत्यति नीलकण्ठः । एतावति व्यतिकरे तरुणस्य तस्य मूर्च्छैव केवलमभूदवलम्बनाय ॥ ३ ॥ गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोऽथवा । भ्रमति भुवने कंदर्पाज्ञा विकारि च यौवनं ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥ ४ ॥ धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते मार्गे गात्रं क्षिपति बकुलामोदगर्भस्य वायोः । दाहप्रेम्णा सरसबिसिनीपत्रमात्रान्तरायस्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥ ५ ॥ रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते शय्योपान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः । दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा गोत्रेषु स्खलितस्तदा भवति च व्रीडावनम्रश्चिरम् ॥ ६ ॥ प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं बिभ्रत्काञ्चनमेकमेव वलयं श्वासापरक्ताधरः । चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मनः संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ ७ ॥ चन्द्रश्चण्डकरायते[1] मृदुगतिर्वातोऽपि वज्रायते माल्यं सूचिकुलायते मलयजालेपः[2] स्फुलिङ्गायते[3] । रात्रिः कल्पशतायते[4] विधिवशात्प्राणोऽपि भारायते हा हन्त प्रमदावियोगसमयः संहारकालायते ॥ ८ ॥ माकन्दाक्षिप मामरन्दनिकरं मूको भव त्वं शुक स्फारं कोकिल कोमलं कलरवं भ्रातः क्षणं संहर । सौगन्ध्यं वह गन्धवाह न म नाक्सर्वैः क्षणं क्षम्यतां जानीध्वं तरुणस्य तस्य यदयं कालः करालो महान् ॥ ९ ॥

---

## वियोगिन्या अवस्थावर्णनम् ।

दह्यमानेऽपि हृदये मृगाक्ष्या मन्मथाग्निना । स्नेहस्तथैव यत्तस्थौ तदाश्चर्यमिवाभवत्

---

१ सूर्यवदाचरति. २ चन्दनलेप.. ३ अग्निकण इवाचरति. ४ सहस्रकल्पमितेवाचरति.

॥ १ ॥ जीवेन तुलितं प्रेम सखि मूढेन वेधसा । लघुर्जीवो ययौ कण्ठं गुरु प्रेम हृदि स्थितम् ॥ २ ॥ कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ । अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥ ३ ॥ वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः । राकाविभावरीजानिर्विषज्वालाकुलोऽभवत् ॥ ४ ॥ अस्तमितविषयसङ्गा मुकुलितनयनोत्पला मुहुः श्वसिता। ध्यायति किमप्यलक्ष्यं बाला योगाभियुक्तेव ॥ ५ ॥ लिखति न गणयति रेखा निर्झरबाष्पाम्बुधौतगण्डतटा । अवधिदिवसावसानं मा भूदिति शङ्किता बाला ॥ ६ ॥ आस्वाद्य निर्विशेषं विरहिवधूना मृदूनि मासानि । करकामिषेण मन्ये निष्ठीवति नीरदोऽस्थीनि ॥ ७ ॥ अपसारय घनसारं कुरु हारं दूर एव किं कमलैः । अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ ८ ॥ पातयति हृदयदेशे प्रियजनगर्भे पुनः पुनर्मुग्धा । वर्णितमदनातङ्का बाष्पवतीं भावमन्थरां दृष्टिम् ॥ ९ ॥ श्लिष्यति पश्यति चुम्बति पुनः पुनः पुलकमुकुलितैरङ्गैः । प्रियसङ्गाय स्फुरिता वियोगिनी वामबाहुलताम् ॥ १० ॥ कमले निधाय कमलं कलयन्ती कमलवासिनं कमले । कमलयुगादुद्भूतं कमलं कमलेन वारयति ॥ ११ ॥ नयनोत्पलचलधारां दृष्ट्वा वारांनिधिभ्रान्त्या । वडवानल इव भगवान्वमति तनौ कृशतनोस्तापः ॥ १२ ॥ लीनानसून्सरोरुहदृष्टेरन्वेष्टुरेष कुसुमेषु । भ्रमति द्राग्वपुरन्तःसंतापं दीपमादाय ॥ १३ ॥ हला लोचनविशिखैर्गत्वा कतिपयपदानि च मृगाक्षी । जीवति युवा न वा किं शिव शिव भूयो विलोकयति ॥ १४ ॥ कुसुमितलताभिरहताप्यधत्त रुजमलिकुलैरदष्टापि । परिवर्तते स्म नलिनी लहरीभिरलोलिताप्यघूर्णत सा ॥१५॥ शशभृन्नवपल्लवे शशाङ्के मकरन्दस्नुति वारिणीसरोजे । अपि चास्य मरुद्गणान्प्रसूतिस्तिलकुसुमं स्फुटचम्पकोपदाम्नि ॥ १६ ॥ अधिदेहलि हन्त हेमवल्ली शरदिन्दुः सरसीरुहे शयानः । उपखञ्जनचञ्चुमौक्तिकाली फलितं कस्य सुजन्मनस्तपोभिः ॥ १७ ॥ विश्रम्य विश्रम्य वनद्रुमाणां छायासु तन्वी विचचार काचित् । तनूत्तरीयेण करोद्धृतेन निवारयन्ती शशिनो मयूखान् ॥ १८ ॥ अपि मरणमुपैति सा मृगाक्षी विलसति कैव कथा रसान्तरस्य । अपि कथमधुना दधातु शान्ति विषमशरज्वरतीव्रदेहदाहः ॥ १९ ॥ निविशते यदि शूकशिखापदे सृजति सा कियतीमिव न व्यथाम् । मृदुतनोर्वितनोतु कथं न तामवनिभृत्तु निविश्य हृदि स्थितः ॥ २० ॥ सा तोरणान्तिकमुपेत्य दिशोऽवलोक्य निःश्वस्य दीर्घमुपधाय करं कपोले । मत्वा च तं पुरत एव ससंभ्रमत्वाज्ज्ञात्वा समोहलिखिते च न किं किमासीत् ॥ २१ ॥ अस्यास्तनौ विरहताण्डवरङ्गभूमौ स्वेदोदबिन्दुकुसुमाञ्जलिमाविकीर्य । नान्दी पपाठ पृथुवेपथुवेपमानकाञ्चीलताकलरवैः स्मरसूत्रधारः ॥ २२ ॥ मदनदहनशुष्यत्क्लान्तकान्ताकुचान्तर्घनमलयजपङ्के गाढबद्धाखिलाङ्घ्रिः । उपरि विततपक्षो

१ मेघः, (पक्षे) निर्गता रदा दन्ता यस्य. दन्तानामभावादस्थिचर्वणासमर्थ. सन्त्यजतीति भावः.

लक्ष्यतेऽलिर्निमग्नः शर इव कुसुमेषोरेष पुङ्खावशेषः ॥ २३ ॥ नवकिसलयतल्पं कल्पितं तापशान्त्यै करसरसिजसङ्गात्केवलं म्लापयन्त्याः । कुसुमशरकृशानुप्रापिताङ्गारतायाः शिवशिव परितापं को वदेत्कोमलाङ्ग्याः ॥ २४ ॥ दरललितहरिद्राग्रन्थिगौरे शरीरे स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः । वलति सति हि यस्मिन्सार्धमावर्त्य हेम्ना रजतमिव मृगाक्ष्याः कल्पितान्यङ्ककानि ॥ २५ ॥ किसलयमिव मुग्धं बन्धनाद्विप्रलूनं हृदयकुसुमशोषी दारुणो दीर्घशोकः । ग्लपयति परिपाण्डु क्षाममस्याः शरीरं शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ २६ ॥ परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु । कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदकान्तः कपोलः ॥ २७ ॥ स्थगयति नयनास्रं छद्मना धूमधूम्रं प्रथयति च नितान्तं कार्श्यमङ्गं प्रकृत्या । अहह विरहबाधां छादयत्यम्बुजाक्षी तदपि वदति साक्षी पाण्डुरो गण्डदेशः ॥ २८ ॥ परिम्लानं पीनस्तनजघनसङ्गादुभयतस्तनोर्मध्यस्यान्तःपरिमिलनमप्राप्य हरितम् । इदं व्यस्तन्यस्तं श्लथभुजलताक्षेपचलनैः कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥ २९ ॥ प्रयातेऽस्तं भानौ श्रितशकुनिनीडेषु तरुषु स्फुरत्संध्यारागे शशिनि शनकैरुल्लसति च । प्रियप्रत्याख्यानद्विगुणविरहोत्कण्ठितदृशा तदारब्धं तन्व्या मरणमपि यत्रोत्सवपदम् ॥ ३० ॥ लतामूले लीनो हरिणपरिहीनो हिमकरः स्खलन्मुक्ताकारा गलति जलधारा कुवलयात् । धुनीते बन्धूकं तिलकुसुमजन्मा हि पवनो गृहद्वारे पुण्यं परिणमति कस्यापि कृतिनः ॥ ३१ ॥ मरालश्रेणीभिर्नियतमुपनीतं सफलतां गतिस्पर्धावैरं मृदुकलरवैरम्बुजदृशः । यदेतान्शृण्वत्याः प्रियविरहवत्याः कृशतनोरगादस्यास्तम्भादहह गतिसंभावनमपि ॥ ३२ ॥ अगारेऽस्मिन्कान्ते गिरिशमानिशानाथशकलं भुजंगानुजुङ्गान्सकलमपि वातायनपथे । निकुञ्जेषु श्येनानधिगृहशिरो राहुवलयं लिखन्त्या नीयन्ते शिवशिव तया हन्त दिवसाः ॥ ३३ ॥ स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं प्रियायाः साबाधं तदपि कमनीयं वपुरिदम् । समस्तापः कामं मनसिजनिदाघप्रसरयोर्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ३४ ॥ कपोले पाण्डुत्वं किमपि जलधारां नयनयोस्तनौ कार्श्यं दैन्यं वचसि हृदि दावानलशिखाम् । अवज्ञां प्राणेषु प्रकृतिषु विपर्यासमधुना किमन्यद्वैराग्यं सकलविषयेष्वाकलयते ॥ ३५ ॥ निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा कलाशेषा मूर्तिः शशिन इव नेत्रोत्सवकरी । अवस्थामापन्ना मदनदहनोद्दाहविधुरामियं नः कल्याणी रमयति मनः कम्पयति च ॥ ३६ ॥ घनोऽयं चेदब्देदुपरि विकिरंश्चन्दनरसानुदाराद्वैहारी सरिदुरसि हारी भवति वा । समन्तात्प्राणाली चिरमुपवनाली मिलति

१ मात्रमर्दी. २ सखीजनः. ३ ऊर्ध्वाधोभागयोः. ४ कृशस्य. ५ सघर्षम्. ६ हरिद्वर्णम्. ७ अनुमापयति. ८ शय्या.

॥ तदल्पदेशस्तापो प्रियविरहजः किं विरमति ॥ ३७ ॥ कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् । अनिद्रं यच्चान्तः स्वपिति तद्धो वेद्म्यभिनवां प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥ ३८ ॥ इतो विद्युद्वल्लीविलसितमितः केतकरजः स्फुरद्गन्धं प्रोद्यज्जलदनिनदस्फूर्जितमितः । इतः केकिक्रीडाकलकलभरः पक्ष्मलदृशां कथं यास्यन्त्येते विरहदिवसाः संभ्रमरसाः ॥ ३९ ॥ नीतेमुपनासिकं परिमलव्ययाशङ्कया न हन्त विनिवेशितं विरहवह्निकुण्डे हृदि । दृशोर्बहिरिति श्रुतौ न निहितं प्रियप्रेषितं करे कमलमर्पितं मृगदृशा दृशा पीयते ॥ ४० ॥ वीणामङ्के कथमपि सखीप्रार्थनाभिर्विधाय स्वैरं रत्यां सरसिजदृशा गातुमारब्धमेव । तन्त्रीबुद्ध्या किमपि विरहक्षीणदेहानुवल्लीमेनामेव स्पृशति बहुशो मूर्छना चित्रमेतत् ॥ ४१ ॥ अन्तस्तारं तरलतरलाः स्तोकमुत्पीडभाजः पक्ष्माग्रेषु ग्रथितपृषतः कीर्णधाराः क्रमेण । चित्तातङ्कं निजगरिमतः सम्यगासूत्रयन्तो निर्यान्त्यस्याः कुवलयदृशो बाष्पवारां प्रवाहाः ॥ ४२ ॥ मुक्त्वानङ्गः कुसुमविशिखान्पञ्चकुण्ठीकृताग्रान्मन्ये मुग्धां प्रहरति हठात्पत्रिणा वारुणेन । वारां पूरः कथमपरथा स्फारनेत्रप्रणालीवक्त्रोद्भ्रान्तस्त्रिवलिविपिने सारणीसाम्यमेति ॥४३॥ स्विन्नौ गण्डौ स्फुरितमधरं स्पन्दितं चूचुकाग्रं सन्नौ बाहू मसृणमुकुले लोचने भ्रूश्च लैव । अङ्गादङ्गादजनि पुलकश्रेणिरूरू सकम्पौ किं च श्वासास्तरलितदुकूलाञ्चलाश्चञ्चलाक्ष्याः ॥ ४४ ॥ पीनोत्तुङ्गस्तनकलशयोस्तारहारं न धत्ते हस्तेनापि स्पृशति सहसा नैव कर्पूरवीटीम् । मञ्चं नापि श्रयति शयितुं हंसतूलास्तराढ्यां तादृक्तन्वी गुरुजनभयाद्गोप्तुकामा स्वतापम् ॥ ४५ ॥ गण्डे पाण्डौ कलयति पुनश्चान्दनान्पत्रभङ्गान्निद्रालाभे स्वयमरुणदृक्पृच्छति त्वान्निदानम् । प्रत्यासन्ने मधुरलपिते गृह्यके कीरशावे कण्ठे धत्ते कमलनयना चारु वैदूर्यहारम् ॥ ४६ ॥ नीवीबन्धोच्छ्वसनमधरस्पन्दनं दोर्विषादः स्वेदश्चक्षुर्मसृणमधुराकेकरास्निग्धमुग्धम् । गात्रस्तम्भः स्तनमुकुलयोरुत्प्रबन्धः प्रकम्पो गण्डाभोगे पुलकपटलं मूर्छना चेतना च ॥ ४७ ॥ संध्यां कोष तत उपगतां हन्त रात्रिं कृपाणीं चन्द्रं चक्रं विरहविधुरा तारकापङ्क्तिमुग्राम् । तूणीरान्तर्गतशरततीः प्रज्वलत्पुङ्खभागं संनद्धास्त्रं कलयति पुनर्मन्मथं राक्षसेन्द्रम् ॥ ४८ ॥ लीलावल्लीभवनकुहरे पत्ररन्ध्राच्चकोरीचञ्चुस्रस्तं शशिकरकणं वीक्ष्य मूर्च्छामुपैति । लीलारामात्पिकमुखरितात्का कथा सा बिभेति स्वालापेभ्यश्चकितनयना यत्कुहूकोमलेभ्यः ॥ ४९ ॥ व्यजनमरुतः श्वासश्रेणीमिमामुपचिन्वते मलयजरसो धाराबाष्पं प्रपञ्चयितुं प्रभुः । कुसुमशयनं कामास्त्राणां करोति सहायतां द्विगुणगरिमा कामोन्माथः कथं नु विरस्यति ॥ ५० ॥ विषयविधुरा दृष्टिः श्वासानिला ग्लपिताधरास्तनुरपि भृशं म्लाना लूनेव पल्लवमञ्जरी । अपि च लवलीपाकोद्भेदाभिरामवदावदः स्फुरति कुचयोर्मूले गण्डे च कश्चन पाण्डिमा ॥ ५१ ॥ कथमपि कृतप्रत्यावृत्तौ प्रिये स्खलितो-

त्तरे विरहकृशया कृत्वा व्याजं प्रकल्पितमश्रुतम्। असहनसखीश्रोत्रप्राप्तिप्रमादससंभ्रमं प्रचलितदृशा शून्ये गेहे समुच्छ्वसितं पुनः ॥ ५२ ॥ तन्वङ्ग्या गुरुसंनिधौ नयनजं यद्वारि संस्तम्भितं तेनान्तर्गलितेन मन्मथशिखी सिक्तो वियोगोद्भवः। मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता श्वासायाससमागतालिसरणिव्याजेन धूमावली ॥ ५३ ॥ मुग्धा स्वप्नसमागते प्रियतमे तत्पाणिसंस्पर्शनं रोमाञ्चाञ्चितया शरीरलतया संभाव्य कोपाकिल। मा मा वल्लभ संस्पृशेति सहसा शून्यं वदन्ती मुहुर्भ्रमस्था नो हसिता सचिन्तमसकृत्संशोचिता प्रत्युत ॥ ५४ ॥ शीघ्रं भूमिगृहे गृहाण वसनं चूर्णैः किमु क्रीडसि प्राप्तां पश्यसि किं न दैवहतिकां ज्योत्स्नां गवाक्षोदरे। इत्थं मन्मभिभीव्रसंज्वरजुषो गेहेषु वामभ्रुवामुद्गच्छन्ति कुरङ्गलाञ्छनभयाद्दीनाः सखीनां गिरः ॥ ५५ ॥ शय्या पुष्पमयी परागमयतामङ्गार्पणादश्नुते ताम्यन्त्यन्तिकतालवृन्तनलिनीपत्राणि दाहोष्मणा। न्यस्तं च स्तनमण्डले मलयजं शीर्णान्तरे दृश्यते क्काथादाशु भवन्ति फेनिलमुखा भूषा मृणालाङ्कुराः ॥ ५६ ॥ आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितं लाक्षारञ्जनवार्तयापि सहसा रक्तं तलं पादयोः। अङ्गानामनुलेपनस्मरणमप्यत्यन्तखेदावहं हन्ताधीरदृशः किमन्यदलकामोदोऽपि भारायते ॥ ५७ ॥ अङ्गासङ्गिमृणालकाण्डमयते भृङ्गावलीनां रुचं नासामौक्तिकमिन्द्रनीलसरणिं श्वासानिलाद्गाहते। क्षिप्ता सा हिमवालुकापि कुचयोर्धत्ते क्षणं दीप्ततां तप्तायःपतिताम्बुवत्करतले धाराम्बु संलीयते ॥ ५८ ॥ केशैः कोमलमालिकामपि चिरं या बिभ्रती खिद्यते या गात्रेषु घनं विलेपितमपि न्यस्तं न वोढुं क्षमा। दीपस्यापि शिखां न चापि भवने स्वप्नेऽपि या वीक्षितं तापं सा विरहानलस्य महतः सोढुं कथं शिक्षते ॥ ५९ ॥ उद्धूयेत तनूलतेति बिसिनीपत्रेण नो वीज्यते स्फोटः स्यादिति नाङ्गकं मलयजक्षोदाम्भसा सिच्यते। स्यादस्यातिमरात्पराभव इति त्रासान्न वा पल्लवारोपो वक्षसि तत्कथं वरतनोराधिः समाधीयताम् ॥ ६० ॥ निःश्वासानलविद्धदन्तवसना नेत्राम्बुसिक्तस्तनी हस्तन्यस्तकपोलदीनवदना हारैकभूषावती। बिभ्राणासपदेन तुङ्गजघना विस्रंसिनी वेणिकामास्ते स्थण्डिल एव पाण्डुमधुरक्षामालसैरङ्गकैः ॥ ६१ ॥ क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा। शोच्या च प्रियदर्शना च मदनग्लानेयमालक्ष्यते पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ ६२ ॥ कर्पूराम्बुनिषेकभाजिसरसैरम्भोजिनीनां दलैरास्तीर्णेऽपि विवर्तमानवपुषः स्रस्तस्राजि संस्तरे। मन्दोन्मेषदृशः किमन्यदभवत्सा काप्यवस्था तदा यस्याश्चन्दनचन्द्रचम्पकदलश्रेण्यादि वह्नीयते ॥ ६३ ॥ आलीचालितपद्मिनीदलचलत्सर्वाङ्गमङ्गीकृता स्वाङ्गा-

---

१ चञ्चलदृशः. २ केशरञ्जनचूर्णम्. ३ बिसखण्डम्. ४ प्राप्नोति. ५ भृङ्गपङ्क्तीनाम्. ६ कान्तिम्. ७ प्राप्नोति. ८ कर्पूर. ९ दीप्तरूपताम्. १० तप्तलोहपतितजलवत्

लिङ्गनमर्मरीकृतनवाम्भोजालिशय्या चिरात् । चैतन्यं कथमप्युपेत्य शनकैरुन्मील्य नेत्राञ्चलं वाला केवलमेव शून्यहृदया शून्यं जगत्पश्यति ॥ ६४ ॥ न क्रीडासु कुतूहलं वितनुते नालंकृतौ सादरा नाहारेऽपि च सस्पृहा न गणयत्यालापलोलां सखीम् । वाला केवलमङ्गकैरनुकलक्षामैर्विविक्तस्थले ध्यायन्ती किल किंचिदन्तरधुना निस्पन्दमास्ते सदा ॥ ६५ ॥ सोन्मेषो न सखीजनः परिजनः प्रागल्भ्यभूमिर्न वा वात्सल्यादपि भावितस्फुटवयोऽवस्था विशेषो गुरुः । आयाता नवमल्लिकापरिमलक्रूराः शरद्वासराः कस्याख्यातु निम्विनी पितृगृहावस्थानदुःस्थं जनुः ॥ ६६ ॥ दुःखं दीर्घतरं वहत्यपि सखीवर्गाय नो भाषते शैवालैः शयनं सृजत्यपि पुनः शेते न वा लज्जया । कण्ठे गद्गदवाचमश्चति दृशा धत्ते न वाष्पोदकं संतापं सहते यदम्बुजमुखी तद्वेद चेतोभवः ॥ ६७ ॥ कण्ठे मौक्तिकमालिकाः स्तनतटे कार्पूरमच्छं रजः सान्द्रं चन्दनमङ्गके वलयिताः पाणौ मृणालीलताः । तन्वी नक्तमियं चकास्ति तनुनी चीनांशुके बिभ्रती शीतांशोरधिदेवतेव गलिता व्योमाग्रमारोहतः ॥ ६८ ॥

---

## वियोगिनो विप्रलापाः ।

यदि प्रियावियोगेऽपि रुद्यते[1] दीनदीनकम् । तदिदं दग्धमरणमुपयोगं क यास्यति ॥१॥ दिव्यचक्षुरहं[2] जातः सरागेणापि चक्षुषा । इहस्थो येन पश्यामि देशान्तरगतां प्रियाम्॥२॥ नपुंसकमिति ज्ञात्वा तां प्रति प्रहितं मनः । तत्तु तत्रैव रमते हताः[3] पाणिनिना वयम्॥३॥ न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति सा । एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते ॥ ४ ॥ यदि स्मरामि तन्वङ्गीं जीविताशा कुतो मम । अथ विस्मृत्य जीवामि जीवितव्यसनेन किम् ॥ ५ ॥ मुखं तस्याः स्मितस्मेरं[4] किंचिदञ्चलसद्वृतम्[5] । मदालोकनलोलाक्षं स्मृत्वा मन्ये सुधां[6] मुधा[7] ॥ ६ ॥ तद्वियोगसमुत्थेन तच्चिन्ताविपुलार्चिषा । रात्रिंदिवं शरीरं मे दह्यते मदनाग्निना ॥ ७ ॥ विशालाक्ष्याः कटाक्षेण विकृष्टं रश्मिनेव मे । हृदयं किं करिष्यामि न पुनर्विनिवर्तते ॥ ८ ॥ सति प्रदीपे सत्यग्नौ सत्सु तारारवीन्दुषु । विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ ९ ॥ दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम । मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥ १० ॥ अपूर्वो दृश्यते वह्निः कामिन्याः स्तनमण्डले । दूरतो दहते गात्रं हृदि लग्नस्तु शीतलः ॥ ११ ॥ भ्रूचापवल्ली सुमुखी यावन्नयति वक्रताम् । तावत्कटाक्षविशिखैर्भिद्यते हृदयं मम ॥ १२ ॥ मनः प्रकृत्यैव चलं दुर्लक्ष्यं च तथापि मे । कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥ १३ ॥ या जयश्रीर्मनोजस्य यया जगदलंकृतम् । यामेणाक्षीं विना प्राणा विफला मे कुतोऽद्य सा ॥ १४ ॥ अरविन्दमिदं वीक्ष्य खेलत्खञ्ज-

---

१ रोदन क्रियते. २ अतीन्द्रियज्ञानवान्. ३ वञ्चिताः. ४ स्मितेन हास्येन स्मेरं प्रसन्नम्. ५ वस्त्राञ्चलेनावगुण्ठितम्. ६ अमृतम्. ७ व्यर्थम्.

नमञ्जुलम् । स्मरामि वदनं तस्याश्चारु चञ्चललोचनम् ॥ १५ ॥ स्पर्शः स्तनतटस्पर्शो वीक्षणं वक्रवीक्षणम् । तस्याः केलिकथालापसमयः समयः सखे ॥ १६ ॥ कुतः प्रेमलवोऽप्यस्ति खले मे हृदये खलु । सुन्दरीं तामनालोक्य यदहं प्राणिमि प्रिय ॥ १७ ॥ लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः । तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥ १८ ॥ नूनमयं मे पापः कान्ताविरहो रसायनीभूतः[1] । वर्षसहस्राभ्यधिकान्नयामि कथमन्यथा दिवसान् ॥ १९ ॥ संगमविरहवितर्के वरमिह विरहो न संगमस्तस्याः । सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥ २० ॥ अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे । यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥ २१ ॥ दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च । अविरलविलोलजलदः कालः समुपागतश्चायम् ॥ २२ ॥ स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं मयि सा । कथयामास कृशाङ्गी मनोगतं निखिलमाकूतम् ॥ २३ ॥ आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् । विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥ २४ ॥ तस्यां सुतनुसरस्यां चेतो नयनं च निष्पतितम् । चेतो गुरु तु निमग्नं लघु नयनं सर्वतो भ्रमति ॥ २५ ॥ निष्कासयन्त्यनेके सागरसरिदम्बुपूरपरिपतितम् । हृदयह्रदे विनिमग्नामिन्दुमुखीं मे बहिः कुरुताम् ॥ २६ ॥ किमकारि मन्दमतिना रतिपतिना नीतितन्त्रनिपुणेन । स्यूतासि हरिणनयने हन्त हृदि स्नेहतन्तुना न तनौ ॥ २७ ॥ दर्शनपथमुपयाता यदवधि मदिरायतेक्षणा सहसा । तदवधि हृदयेनाहं मदनेषुभयादिवोन्मुक्तः ॥ २८ ॥ अपसरति न चक्षुषो मृगाक्षी रजनिरियं च न याति नैति निद्रा । प्रहरति मदनोऽपि दुःखितानां बत बहुशोऽभिमुखीभवन्त्यपायाः ॥ २९ ॥ पुनरपि मिलनं यदाकदाचित्प्रियतमया कृपया भवेद्विधातुः । हरिरिव करवै हृदि प्रतिष्ठामिह रमणीं तनवै तनोरभिन्नाम् ॥ ३० ॥ स्खलदंशुकमव्यवस्थतारं स्मितकान्ति स्नपिताधरप्रवालम् । असमाप्तनकारमाप्तशोभं हरिणाङ्कं हरिणीदृशः स्मरामः ॥ ३१ ॥ अधृतपरिपतन्निचोलबन्धं मुषितनकारमवक्रदृष्टिपातम् । प्रकटहसितमुन्नतास्यबिम्बं पुरसुदृशः स्मरचेष्टितं स्मरामि ॥ ३२ ॥ नयनेन निरीक्षिता नताङ्गी हृदये हन्त पतत्रिणः पतन्ति । विषमा विषमायुधव्यथासौ परिभूयेत परः परापराधैः ॥ ३३ ॥ यत्राकृतिस्तत्र गुणा वसन्ति नैतद्ध सम्यक्कविभिः प्रणीतम् । येनातिचार्वङ्ग्यपि मे हृदिस्था दुनोति गात्रं विरहे प्रियासौ ॥ ३४ ॥ पञ्चसायकमहेन्द्रजालिना पाणिपद्मसमुदञ्चिता स्वयं वर्धनाय मनसः प्रगल्भते पिच्छिकेव मम चञ्चलेक्षणा ॥ ३५ ॥ दूरमस्तु दरघूर्णितशारदेन्दुमुखवीक्षणमक्ष्णोः । एतदेव मम पुण्यमगण्यं यत्कृशोदरि दृशोरतिथिस्त्वम् ॥ ३६ ॥ ग्रसति कोऽपि विमोहविधुंतुदो हृदयचन्द्रमसं मम दारुणः । तदपि

१ जीवनसाधकरसायनरूपो जातः.

दन्तरशायिनी लगति चित्तमृगीव मृगेक्षणा ॥ ३७ ॥ असुलभा सकलेन्दुमुखी च सा क्रिमपि चेदमनङ्गविचेष्टितम् । अभिमुखीष्विव वाञ्छितसिद्धिषु[1] व्रजति निर्वृतिमेकपदे मनः ॥ ३८ ॥ तप्ते महाविरहवह्निशिखावलीभिरापाण्डुरस्तनतटे हृदये प्रियायाः । मन्मार्गवीक्षणनिवेशितदीनदृष्टेर्नूनं छमच्छमितबाष्पकणाः पतन्ति ॥ ३९ ॥ कान्तामुखं सुरतकेलिविमर्दखेदसजातघर्मकणविच्छुरितं रतान्ते । आपाण्डुरं विलसदर्धनिमीलिताक्षं संस्मृत्य हे हृदय किं शतधा न यासि ॥ ४० ॥ अद्यापि तत्प्रचलकुण्डलमृष्टगण्डं वक्त्रं स्मरामि विपरीतरताभियोगे । आन्दोलनश्रमजलस्फुटसान्द्रबिन्दुमुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥ ४१ ॥ निद्रार्धमीलितदृशोर्मदमन्थराणि[3] नाप्यर्थवन्ति न च नाम निरर्थकानि । अद्यापि मे मृगदृशो मधुराणि तस्या न्यस्ताक्षराणि हृदये किमपि ध्वनन्ति ॥ ४२ ॥ अद्यापि तां कनकचम्पकदामगौरीं फुल्लारविन्दनयनां तनुरोमराजिम् । सुप्तोत्थितां मदनविह्वललालसाङ्गीं विद्यां प्रमादगलितामिव चिन्तयामि ॥ ४३ ॥ अद्यापि सा मनसि संप्रति वर्तते मे रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या । जीवेति मङ्गलवचः परिहृत्य कोपात्कर्णे कृतं कनकपत्रमनालपन्त्या ॥ ४४ ॥ आसन्नमार्गमतिलङ्घ्य नतेन मूर्ध्ना पश्चात्प्रसङ्गवलितेन सुखेन यान्त्या । आरोपिताः कतिपये मयि पङ्कजाक्ष्या साकूतहासमनतिप्रकटाः कटाक्षाः ॥४५॥ राजल्ललाटफलका कमनीयकूजत्काञ्चीगुणप्रणयिनी धृतकेशपक्षा । हा किं करोमि मम सा हृदयं प्रविष्टा नाराचयष्टिरिव पुष्पशिलीमुखस्य ॥ ४६ ॥ यत्र क्षिपामि दृशमन्यदिदृक्षयाहं तत्राग्रतः स्फुरति केवलमेतदेव । तद्वक्त्रबिम्बमरुणाधरलोभनीयं ते लोचने तदलसालसमीक्षितं च ॥ ४७ ॥ मन्दस्मितेन मधुराधरपल्लवेन कुम्भोन्नमत्कुचभरेण कृशोदरेण । विद्युन्निभाङ्गलतया च विचिन्त्यमाना चेतो धुनोति च धिनोति च चञ्चलाक्षी ॥ ४८ ॥ तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य चेतः कथं कथमपि व्यपवर्तते मे । लज्जां विजित्य विनयं विनिवार्य धैर्यमुन्मथ्य मन्थरविवेकमकाण्ड एव ॥ ४९ ॥ यद्विस्मयस्तिमितमस्तमितान्यभावमानन्दमन्दममृतप्लवनादिवाभूत् । तत्संनिधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते ॥ ५० ॥ पश्यामि तामित इतः पुरतश्च पश्चादन्तर्बहिः परित एव विवर्तमानाम् । उद्बुद्धमुग्धकनकाब्जनिभं वहन्तीमासक्ततिर्यगपवर्तितदृष्टि वक्त्रम् ॥ ५१ ॥ लीलास्मितेन शुचिना मृदुनोदितेन व्यालोकितेन लघुना गुरुणा गतेन । व्याजृम्भितेन जघनेन च दर्शितेन सा हन्ति तेन गलितं मम जीवितेन ॥ ५२ ॥ यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृत्तशतपत्रनिभं वहन्त्या । दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥ ५३ ॥ ता हेमचम्पकरुचि मृगशावकाक्षी पार्श्वे स्थिता च पुरतः परिवर्तमानाम् । पश्चात्तथा दशदिशासु परिस्फुरन्तीं

१ इष्टसिद्धिषु २ सतोपम्. ३ मन्दानि.

पश्यामि तन्मयमहो भुवनं किमेतत् ॥ ५४ ॥ अद्यापि तिष्ठति दृशोरिदमुत्तरीयं धर्तुं पुरः स्तनतटात्पतितं प्रवृत्ते। वाचं निशम्य नयनं नयनं ममेति किंचित्तदा यदकरोत्स्मित यताक्षी ॥ ५५ ॥ राकासुधाकरमुखी तरलायताक्षी सस्मेरयौवनतरङ्गितविभ्रमास्या। तत्किं करोमि कथमत्र तनोमि मैत्रीं तत्स्वीकृतिव्यतिकरे क इहाभ्युपायः ॥ ५६ ॥ यान्त्याः सरःसलिलकेलिकुतूहलाय व्याजादुपेत्य मयि वर्त्मनि वर्तमाने। अन्तःस्थितद्युतिचमत्कृतिदृक्तरङ्गैरङ्गीकृतं किमपि कामदृशः स्मरामि ॥ ५७ ॥ मन्दादरः कुसुमपत्रिषु पेलवेषु नूनं बिभर्ति मदनः पवनास्त्रमद्य। हारप्रकाण्डसरलाः कथमन्यथामी श्वासाः प्रनर्तितदुकूलदशाः सरन्ति ॥ ५८ ॥ पीतो यतः प्रभृति कामपिपासितेन तस्या मयाधररसः प्रचुरः प्रियायाः। तृष्णा ततः प्रभृति मे द्विगुणत्वमेति लावण्यमस्ति बहु तत्र किमप्यपूर्वम् ॥ ५९ ॥ अलसविलसितानामुच्छसद्भ्रूलतानां मसृणमुकुलितानां प्रान्तविस्तारितानाम्। प्रतिनयननिपाते किंचिदाकुञ्चितानां विविधमहमभूवं पात्रमालोकितानाम् ॥ ६० ॥ अलसवलितमुग्धस्निग्धनिष्पन्दमन्दैरधिकविकसदन्तर्विस्मयस्मेरतारैः। हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षैरपहृतमपविद्धं पीतमुन्मूलितं च ॥ ६१ ॥ क्रमसरलितकण्ठप्रक्रमोल्लासितोरस्तरलितवलिलेखासूत्रसर्वस्वमस्याः। स्थितमतिचिरमुच्चैरग्रपादाङ्गुलीभिः करकलितसखीकं मां दिदृक्षोः स्मरामि ॥ ६२ ॥ व्रीडा[1]योगान्नत[2]वदनया संनिधाने गुरूणां बद्धोत्कम्पस्तनकलशयोर्मन्यु[3]मन्तर्निगृह्य। तिष्ठेत्युक्तं किमिव नतया यातमुत्सृज्य बाष्पं मय्यासन्नश्चकितहरिणीहारिनेत्रत्रिभागः ॥ ६३ ॥ वारंवारं तिरयति दृशोरुद्गमं बाष्पपूरस्तत्संकल्पोपहितजडिमस्तम्भमभ्येति गात्रम्। सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥ ६४ ॥

हा हा देवि स्फुटति हृदयं स्रंसते देहबन्धः शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि। सीदन्नन्धेतमसि विधुरो मज्जतीवान्तरात्मा विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ ६५ ॥ ऊरू रम्भा दृगपि कमलं शैवलं केशपाशो वक्त्रं चन्द्रो लपितममृतं मध्यदेशो मृणालम्। नाभिः कूपो वलिरपि सरित्पल्लवः किं च पाणिर्यस्याः सा चेदुरसि न कथं हन्त तापस्य शान्तिः ॥ ६६ ॥ प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा पर्यङ्के सा पथि पथि च सा तद्वियोगातुरस्य। हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥ ६७ ॥ कुन्दं दन्तैर्मधुनिगदितैः षट्पदं दृग्विलासैरेभिर्हासैरमृतलहरीं कुन्तलैरम्बुवाहम्। इन्दोर्बिम्बं वदनशशिना पङ्कजं च स्तनाभ्यां त्वं जित्वा तान्वससि हृदये तेन मां चञ्चले मम पुण्यमगात् ॥ ६८ ॥ स्वप्ने दृष्टं किमपि पिशुना शङ्कया नैव दृष्टा स्पृष्टा नीवी धुंतुदो हृदयचन्द्रमसे निष्कणानाम्। आश्लेपाय स्पृहयति मयि द्राग्व्यरंसीदसीमा निद्रा दृशोरीदृशो दुर्विपाकः ॥ ६९ ॥

---

१ लज्जा. २ नम्रमुखत्वेन. ३ क्रोधम्. ४ दृष्ट्वा.

दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते वहति विकलः कायो मोहं न मुञ्चति चेतनाम्। ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ७० ॥ जगति जयिनस्ते ते भावा नवेन्दुकलादयः प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये। मम तु यदियं याता लोके विलोचनचन्द्रिका नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ ७१ ॥ व्यजनमरुतः श्वासश्रेणीमिमामुपचिन्वते मलयजरसो धाराबाष्पं प्रपञ्चयितुं प्रभुः। कुसुमशयनं कामास्त्राणां करोति सहायतां द्विगुणगरिमा कामोन्माथः कथं नु विरंस्यति ॥ ७२ ॥ मयि सकपटं किंचित्क्वापि प्रणीतविलोचने किमपि नयनं प्राप्ते तिर्यग्विजृम्भिततारकम्। स्थितमुपगतामालीं दृष्ट्वा सलज्जमनाञ्चितं कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननम् ॥ ७३ ॥ हृदयमिषुभिः कामस्यान्तः सशल्यमिदं सदा कथमुपलभे निद्रां स्वप्ने समागमकारिणीम्। न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥ ७४ ॥ कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः। मनसिजरुजं सा वा दिव्या ममालमपोहितुं रहसि लघयेदारब्धा वा तदाश्रयिणी कथा ॥ ७५ ॥ ईदमंशिशिरैरन्तस्तापाद्विवर्णमणीकृतं निशि निशि भुजन्यस्तापाङ्गप्रवर्तिभिरश्रुभिः। अनतिलुलितज्याघाताङ्कं मुहुर्मणिबन्धनात्कनकवलय स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ ७६ ॥ कदा कान्तागारे परिमलमिलत्पुष्पशयने शयानः श्यामायाः कुचयुगमहं वक्षसि वहन्। अये स्निग्धे मुग्धे चपलनयने चन्द्रवदने प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ७७ ॥ तया गाढं मुक्तो भ्रुवि धनुषि संधाय निशितः कटाक्षेषुर्नान्यैः सह पठनयोग्यः शरगणैः। पतन्गात्रे गात्रे परममृतमास्त्रौदिव तदा दवीयानद्यायं दलयति पुनर्न व्रणयति ॥ ७८ ॥ तदा मुग्धं वक्त्रं किसलयसखः सोऽधरमणिर्विशाले ते नेत्रे स्तनभरनता सा तनुलता। सलीलं तद्यातं जननयनसंजीवनसुधा प्रिया सा सा सा सेत्यजनि हृदयं तन्मयमहो ॥ ७९ ॥ कटाक्षेणापीपत्क्षणमपि निरीक्षेत यदि सा तदानन्दः सान्द्रः स्फुरति निहताशेषविषयः। सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः परीरम्भारम्भः क इव भविताम्भोरुहदृशः ॥ ८० ॥ पुरस्ताद्गच्छन्ती सह सहचरीभिः प्रियतमा ममालापं श्रुत्वा सचकितपरावृत्तवदना। किमग्रे व्यासङ्गहमहह यामीति विनयप्रणालीमालीनां यदकृत तदन्तर्व्यथयति ॥ ८१ ॥ समुत्कीर्णेवान्या निशितनयनान्ते न मृदिते स्तनद्वन्द्वस्पन्दैः स्मितलवसुधाभिः प्लुतिमति। मदन्तःकेदारे मदनकृपिकारेण जनिता चिरादाशावल्ली किमिति न फलं हन्त लभते ॥ ८२ ॥ वि-

१ कनकवलयमित्यर्थः. २ उष्णैः अश्रुभिरित्यनेन सबन्ध. ३ अभ्यन्तरे विरहजन्यतापाद्धेतोः. ४ विवर्णा हीनवर्णा मणयो यस्मिन्नेवंविधं कृतम्. ५ नेत्रप्रान्तः. ६ मौर्वीवर्षणजन्य. किण.. ७ सुवर्णकङ्कणम्. ८ वारंवार गलितम्.

लीयेन्दुः साक्षादमृतरसवापी यदि भवेत्कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनम्। ततः स्नानक्रीडाजनितजडभावैरवयवैः कदाचिन्मुञ्चेयं मदनशिखिपीडाव्यतिकरम् ॥८३॥ परागैः कार्पूरैस्तुहिनसलिलैश्चान्दनरसैः सुधाभिर्ज्योत्स्नाभिः स्नपितमिव यः प्रागकृत माम्। स एवासौ मारः शिवशिव वियोगे मृगदृशः करालं काकोलं किरति मयि कालानलमपि ॥८४॥ न दूतीसंचारो न सरसपरोक्षोक्तिकलना न सांमुख्ये हासः क्वचिदपि न वाचां व्यतिकरः। अहो चित्रं चेतः क्षणपरिचितालोकनवशान्मुहुर्धावंधावं व्रजति सुदृशं नो विरमति ॥ ८५ ॥ शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति। तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं प्रसक्ते निर्वाणे हृदय परितापं वहसि किम् ॥ ८६ ॥ दृगन्तव्यापारप्रबलनिगडेन स्फुरदुरस्तटीकारागारे तव समुचितं बन्धनमिदम्। अरे चेतस्त्यक्त्वा यदिह जनमाजन्म सुहृदं क्षणप्राप्तामेतामधरमधुलाभेन भजसे ॥ ८७ ॥ विपत्सिन्धुं बन्धुं विगलितजलं नेत्रयुगलं सशोकं भूलोकं भुवनवलयं खेदानिलयम्। अनङ्गं नीरङ्गं विघटितवनं कोशभवनं विधातुं किं धातस्तव हृदि न लज्जा प्रभवति ॥ ८८ ॥ न वक्षोजाश्लेषप्रभृति कुतुकानामवगमो न पीयूषस्वादुस्थितवलितवाचामनुभवः। न चासीन्मे तादृग्दृढपरिचयः पङ्कजदृशः कुतो हेतोस्तन्वी क्षणमपि न निर्याति मनसः ॥ ८९ ॥ प्रियायाः प्रत्यूषे गलितकबरीबन्धनविधावुदञ्चद्दोर्वल्लीदरचलितचेलाञ्चलमुरः। घनाकूतं पश्यन्नथ च मयि मन्दाक्षहसितं नमन्त्यास्तद्रूपं नहि लिखितुमीशो मनसिजः ॥ ९० ॥ आः पात्री स्यामकृतकघनप्रेमविस्फारितानां सव्रीडानां सकलकरुणानन्दनादिन्धमानाम्। तेषां तेषां हृदयनिहिताकूतनिष्यन्दिनेत्रव्यापाराणां पुनरपि तथा सुभ्रुवो विभ्रमाणाम् ॥ ९१ ॥ तदङ्गमपि नाम तत्सहजकान्तिपूराप्लुतं सुवर्णकदलीदलोद्दलितगर्भगौरं पुनः। कठोरमदनव्यथापिशुनपाण्डिमाधिष्ठितप्रथीयकुचमण्डलं परिरभेय वीक्षेय वा ॥ ९२ ॥ जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः। नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥ ९३ ॥ याताः किं नु मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि। लज्जामन्थरतारकेन निपतत्पीताश्रुणा चक्षुषा दृष्ट्वा मां हसितेन भाविमरणोत्साहस्त्वया सूचितः ॥ ९४ ॥ श्वासा एव मृगीदृशो न गणिताः के नाम झञ्झानिलास्तीर्णा बाष्पपरंपरैव सरितां वृन्देषु कः संभ्रमः। सोढा कातरदृष्टिरेव केयती वज्राभिघातव्यथा प्रेमैवायमुपेक्षितो यदि तदा प्राणेषु को नु ग्रहः ॥ ९५ ॥ सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम्। साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं दोषैरन्यजनाश्रयैरपटवो जाताः

१ विकसितम्. २ शैत्यम्. ३ वह्निः.

स्म इत्यद्भुतम् ॥ ९६ ॥ प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयास्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि । यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणादाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ ९७ ॥ धन्या सा गृहदेहली स्पृशति या तत्पादपद्मप्रभां जाता सा सरसी रसाद्विशति सा यस्यां विहारेच्छया । वन्द्यः कोऽपि स एव यः खलु तया नेत्रेण संभाव्यते धिग्धिग्वेधसमेषु मां यदनयन्नैकं कथंचित्कथम् ॥ ९८ ॥ किं मे सद्गुरुसेवनैः प्रतिदिनं किं व्योमधामार्चनैः किं स्यादध्ययनेन वा सुरपुरप्राप्त्याथवा किं फलम् । एतस्याः कुचकुम्भनिर्भरपरीरम्भप्रभावोद्भवस्वेदाम्भोभिरनङ्गवह्निरधुना निर्वापितो नो यदि ॥ ९९ ॥ तन्वी सा यदि गायति श्रुतिकटुर्वीणाध्वनिर्जायते यद्याविष्कुरुते स्मितानि मलिनैवालक्ष्यते चन्द्रिका । आस्ते म्लानमिवोत्पलं नवमपि स्याच्चेत्पुरो नेत्रयोस्तस्याः श्रीरवलोक्यते यदि तडिद्वल्ली विवर्णेव सा ॥ १०० ॥ तानि स्पर्शसुखानि ते च तरलस्निग्धा दृशोर्विभ्रमास्तद्वक्त्राम्बुजसौरभं स च सुधास्यन्दी गिरां वक्रिमा । सा बिम्बाधरमाधुरीति विषयासङ्गेऽपि मन्मानसं तस्यां लग्नसमाधि हन्त विरहव्याधिः कथं वर्तते ॥ १०१ ॥ तस्मिन्पञ्चशरे स्मरे भगवता भर्गेण भस्मीकृते जानाम्यक्षयसायकं कमलभूः कामान्तरं निर्ममे । यस्यामीभिरितस्ततश्च विशिखैरापुङ्खमग्नात्मभिर्जातं मे विदलत्कदम्बमुकुलस्पष्टोपमानं वपुः ॥ १०२ ॥ ज्योत्स्नां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकैर्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम् । चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥ १०३ ॥ किं तिष्ठामि किमु व्रजामि किमहं जागर्मि निद्रामि किं किं जानामि किमु भ्रमामि किमु वा सुख्यामि दुःख्यामि वा । किं नास्म्यस्मि किमित्यनल्पकलिते न क्वापि पक्षे स्थितः प्राप्या निर्वचनीयमेव कमपि क्रूरं विकारं सखे ॥ १०४ ॥ आसीनः स इतः स्थितः प्रचलितः स्वप्नायितो जाग्रतः पश्यन्मीलितलोचनो व्यवहरन्मौनं प्रपन्नोऽथवा । तां प्रेमाकुलवीक्षितां स्मितमुखीं सव्रीडमन्दागमां श्लिष्यन्तीं प्रणयार्द्रमुग्धलपितां पश्यामि नक्तं दिवम् ॥ १०५ ॥ नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः । लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥ १०६ ॥ सा मे यद्यपि सुन्दरी भगवतो मामेव चेतोभुवो न स्वप्ने न च जागरे नयनयोः पन्थानमासादिता । तामाकर्ण्य तथापि तादृशदशावैधुर्यमासेदुषीमानन्दाद्भुतशोककौतुकभयव्रीडाकुलं मे मनः ॥ १०७ ॥ सा संचारचमत्कृतिर्नयनयोः सभ्रूलताविभ्रमस्तद्बिम्बाधरपाटलस्मितयुतस्यास्यस्य सा वैखरी । सेयं संक्रमचातुरी चरणयोः सोऽप्यङ्गहारक्रमो दिष्ट्या तन्मम नेत्रपात्रमखिलं जायेत जीवामि च ॥ १०८ ॥ लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च । सा नश्चेतसि कीलितेव विशिखैश्चेतो-

भुवः पञ्चभिश्छिन्तासंततितन्तुजालनिविडस्यूतेव लग्ना प्रिया ॥ १०९॥ सा विद्याधरकन्यका किमु भुवं पुण्यैः प्रपन्ना नृणां लावण्यामृतसागराद्धिमथिता लक्ष्मीः किमन्योत्थिता। आ ज्ञातं घनसारचन्दनसुधाज्योत्स्नामृणालादिभिः प्रारब्धा हृदयं मम भ्रमयितुं पौष्पेपवी शाम्बरी ॥ ११० ॥ हृत्वा पद्मवनद्युतिं प्रियतमेवेयं दिनश्रीर्गता रागोऽस्मिन्मम चेतसीव सवितुर्बिम्बेऽधिकं लक्ष्यते । चक्राह्वोऽहमिव स्थितः सहचरीं ध्यायन्नलिन्यास्तटे संजाताः सहसा ममैव भुवनस्याप्यन्धकारा दिशः ॥१११॥ नेत्रे खञ्जनरञ्जने नवसुधाधारानुकारा गिरः पाणिः पद्मसहोदरः कुचरुचिः शैवालजालोपमा । वक्त्रं कार्तिकपौर्णिमापतिसमं हारिद्रहृद्यं वपुस्त्वं यस्मै वलसे विलासिनि हृदा तेनैव तप्तं तपः ॥ ११२ ॥ आस्तां दूरतया तदीयवदनाम्भोजामृतस्वादनं नोदेत्येव मनोरथोऽपि हृदये तत्सङ्गमाशां प्रति । उत्कण्ठाशिथिलीकृताङ्गलतिकं वीक्षेत मामेकदा सस्नेहं यदि सा सरोजवदना धन्या वयं तावता ॥११३॥ निद्रे लोचनमुद्रणं विरचय स्वप्न त्वमप्याचर प्राणा भिन्नतमां चिरात्प्रियतमां मच्चेतसो गोचरम् । प्रातर्बोध दृढानुरोधन तथा कुर्या यथा प्रेयसी प्रौढाश्लेषविघट्टनेन भवतः क्रीडन्ति दुष्कीर्तयः ॥ ११४ ॥ लज्जैकोद्घटिता किमत्र कुलिशोद्भिन्ना कपाटावली मर्यादेव विलम्बिता सखि पुनः केयं कलिङ्गात्मजा । आक्षिप्ता खलु दृष्टिरेव किमियं व्यालावली वा पुनः प्राणा एव समर्पिताः सखि पुनः कस्मै किमेषा तनुः ॥११५॥ सव्याजं तिलकालकान्विरलयंल्लोलाङ्गुलिः संस्पृशन्वारंवारमुदञ्चयन्कुचयुगप्रोदञ्चिनीलाञ्चलम् । यद्भ्रूभङ्गतरङ्गिताञ्चितदृशा सावज्ञमालोकितं तद्गर्वादवधीरितोऽस्मि न पुनः कान्ते कृतार्थीकृतः॥११६॥ क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् । किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥ ११७ ॥ हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् । किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत्कथं तादृग्यामवतीमयो भवति मे नो जीवलोकेऽधुना ॥ ११८ ॥ स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसुर्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च । इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥ ११९ ॥ सा सौन्दर्यनिधिर्विलासभवनं मीनध्वजस्यापि वा कान्तीनामधिदेवताधिकरण माधुर्यसारस्य वा । तामुद्वीक्ष्य सखे तदादि गतवान्सर्वेन्द्रियाणामहं सार्धं तद्गतमानसेन गलितोत्साहः किलानीशताम् ॥ १२० ॥ तस्याः किं मुखपङ्कजं स्मितरुचा चन्द्रद्युतेर्निन्दकं कि वा नेत्रयुगं कटाक्षचतुरं किं भ्रूलताविभ्रमम् । किं च स्निग्धमवेक्षितं मयि पुनर्यान्त्या सखीनां पुरः किं किं संप्रति चिन्तयामि हृदये कामेन लक्ष्यीकृते ॥ १२१ ॥ शीतांशुर्विषसोदरः फणभृतां लीलास्पदं चन्दनं हारः क्षार-

पयोभुवः प्रियसुहृत्पङ्केरुहं भास्वतः । इत्येषां किमिवास्तु वस्तुमदनज्वालाविघाताय यद्वा-ह्याकारपरिभ्रमेण तु वयं तत्त्वत्यजो वञ्चिताः ॥ १२२ ॥ जाने स्वप्नविधौ ममाद्य चुलुकोत्सेक्यं पुरस्तादभूत्प्रत्यूषे परिवेषमण्डलमिव ज्योत्स्नासपत्नं महः । तस्यान्तर्नखनिस्तुषीकृतशरच्चन्द्रप्रभैरङ्गकैर्दृष्टा काप्यचला बलात्कृतवती सा मन्मथं मन्मथम् ॥ १२३ ॥ सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति । वत्सैतद्विदितं कथं तु भवता धत्ते कुरङ्गं यतः क्वासि प्रेयसि हा कुरङ्गनयने चन्द्राननने जानकि ॥ १२४ ॥ पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती भूयोभूयः क्षिपन्ती मयि सितशवले लोचने लोलतारे । वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना यन्मां नोवाच किंचित्स्थितमपि पुरतो मानसं तद्दुनोति ॥ १२५ ॥ चक्षुःप्रीत्या निषण्णे मनसि परिचयाच्चिन्त्यमानेऽभ्युपाये याते रागे विवृद्धिं प्रविसरति गिरा विस्तरे दूतिकायाः । आस्तां दूरे स तावत्सरभसदयितालिङ्गनानन्दलाभस्तद्गेहोपान्तरथ्याभ्रमणमपि परां निर्वृतिं संतनोति ॥ १२६ ॥ मदनं प्रति उक्तयः ॥ स्वयमप्राप्तदुःखो यः स दुनोति न विस्मयः । त्वं स्मर प्राप्तदाहोऽपि दहसीति किमुच्यते ॥ १२७ ॥ भवनेत्रभवो वह्निरद्यापि त्वयि मन्मथ । ज्वलतीवान्यथा किं ते विशिखास्तत्कणा इव ॥ १२८ ॥ अद्यापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ । त्वमन्यथा मन्मथ मद्विधानां भस्मावशेषः कथमेवमुष्णः ॥ १२९ ॥ वृथैव संकल्पशतैरजस्रमनङ्ग नीतोऽसि मयातिवृद्धिम् । आकृष्य चापं श्रवणोपकण्ठे मय्येव युक्तस्तव बाणमोक्षः ॥ १३० ॥ क्व रुजा हृदयप्रमाथिनी क्व च ते विश्वसनीयमायुधम् । मृदुतीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ॥ १३१ ॥ अनुममार न मार कथं नु मा रतिरतिप्रथितापि पतिव्रता । अयमनाथवधूवधपातकी दयितयापि तयासि किमुज्झितः ॥ १३२ ॥ भुवनमोहनजेन किमेनसा तव परेत बभूव पिशाचता । यदधुना विरहाधिमलीमसामभिभवन्भ्रमसि स्मर मादृशाम् ॥ १३३ ॥ स्मर नृशंसतमस्त्वमतो विधिः सुमनसः कृतवान्भवदायुधम् । यदि दृढं धनुरायसमाशुगं तव सृजेत्त्रिजगत्प्रलयं व्रजेत् ॥ १३४ ॥ विधिरनंशमभेद्यमवेक्ष्यते जनमनः खलु लक्ष्यमकल्पयत् । अपि सवज्रमदास्यत चेत्तदा त्वदिषुभिर्व्यदलिष्यदसावपि ॥ १३५ ॥ अपि विधिः कुसुमानि तवाशुगान्स्मर विधाय स निर्वृतिमाप्तवान् । अदित पञ्च हि ते स नियम्य तांस्तदपि तैर्वत जर्जरित जगत् ॥ १३६ ॥ सह तया स्मर भस्म झटित्यभूः पशुपतिं प्रतियामिषुमग्रहीः । ध्रुवमभूदधुना वितनोः शरस्तव कटुस्वर एव स पञ्चमः ॥ १३७ ॥ त्वमुचित नयनार्चिषि शंभुना भुवनशान्तिकहोमहविः कृतः । तव वयस्यमपास्य मधुं मधुं हतवता हरिणा वत

---

१ कोमलपल्लवकान्तिना २ सव्याजम्. ३ लोला चञ्चला तारा कनीनिका ययो. ४ लज्जया नम्रम्. ५ संतापयति ६ वडवाग्नि ७ समुद्रे.

किं कृतम् ॥ १३८ ॥ बाणाग्रिमस्तकरुणो विकिरन्ममाङ्गे प्रायो न वेत्सि विषमास्त्रवर स्वपीडाम् । संताप एष भवता किमु नान्वभावि चण्डीपतेरलिकलोचनगोचरेण ॥ १३९ ॥ तव कुसुमशरत्वं शीतरश्मित्वमिन्दोर्द्वयमिदमयथार्थं दृश्यते मद्विधेषु । विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैस्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ १४० ॥ हृदि बिसलताहारो नायं भुजंगमनायकः कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः । मलयजरजो नेदं भस्म प्रियारहिते मयि प्रहर न हरभ्रान्त्यानङ्ग क्रुधा किमु धावसि ॥ १४१ ॥ पाणौ मा कुरु चूतसायकममुं मा चापमारोपय क्रीडानिर्जितविश्वमूर्च्छितजनाघातेन किं पौरुषम् । तस्या एव मृगीदृशो मनसिजप्रेङ्खत्कटाक्षानलश्रेणीजर्जरितं मनागपि मनो नाद्यापि संधुक्षते ॥१४२॥ रे रे निर्दय दुर्निवार मदन प्रोत्फुल्लपङ्केरुहं बाणं संवृणु संवृणु त्यज धनुः किं पौरुषं मां प्रति । कान्तासङ्गवियोगदुःखदहनज्वालावलीढं वपुः शूराणां मृतमारणे न हि परो धर्मः प्रयुक्तो बुधैः ॥ १४३ ॥ आपुङ्खाग्रममी शरा मनसि मे मग्नाः समं पञ्च ते निर्दग्धं विरहाग्निना वपुरिदं तैरेव सार्धं मम । तत्कंदर्प निरायुधोऽसि भवता जेतुं न शक्यः परो दुःखी स्यामहमेक एव सकलो लोकः सुखं जीवतु ॥ १४४ ॥ बाणाः पञ्च मनोभवस्य नियतास्तेषामसंख्यो जनः प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धिं गतम् । दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसंख्यैरयं विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम् ॥१४५॥ तद्विच्छेदकृशस्य कण्ठलुठितप्राणस्य मे निर्दयं क्रूरः पञ्चशरः शरैरतिशितैर्भिन्दन्मनोनिर्भरम् । शंभोर्भूतकृपाविधेयमनसः प्रोद्दामनेत्रानलज्वालाजालकरालितः पुनरसौ नास्तां समस्तात्मना ॥ १४६ ॥ बाणान्संहर मुञ्च कार्मुकलतां लक्ष्यं तव त्र्यम्बकः के नामात्र वयं शिरीषकलिकाकल्पं यदीयं मनः । तत्कारुण्यपरिग्रहात्कुरु दयामस्मिन्विधेये जने स्वामिन्मन्मथ तादृशं पुनरपि स्वप्नाद्भुतं दर्शय ॥१४७॥ चन्द्रं प्रति उक्तयः ॥ चण्डीशचूडाभरण चन्द्र लोकतमोपह । विरहिप्राणहरण कदर्थय न मां वृथा ॥ १४८ ॥ तारापते कुमुदिनीमनुकूलकान्तां पादेन पीडयसि कम्पयसि द्विजातीन् । विद्वेषमाचरसि किं च वियोगिलोके नक्तंचरस्य भवतः करुणा कुतः स्यात् ॥ १४९ ॥ किं रे विधो मृगदृशां मुखमद्वितीयं कन्दर्प दृप्यसि दृगम्बुजमन्यदेव । झङ्कारमावहासि भङ्गतनुर्न तादृक्कर्माणि धिङ् न पुनरीदृशमीक्षणीयम् ॥ १५० ॥ अभिलषसि यदिन्दो वक्त्रलक्ष्मीं मृगाक्ष्याः पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कम् । सुविमलमथ बिम्बं पारिजातस्य गन्धैः सुरभय वद नो चेत्त्वं क्व तस्या मुखं क्व ॥ १५१ ॥ सूतिर्दुग्धसमुद्रतो भगवतः श्रीकौस्तुभौ सोदरौ सौहार्दे कुमुदाकरेषु किरणाः पीयूषधाराकिरः । स्पर्धा ते वदनाम्बुजैर्मृगदृशां तत्स्थाणुचूडा-

१ असत्यम्. २ वज्रवत्कठिनान्करोषि ३ वासुकिः. ४ निष्करुण. ५ विकसितम्. ६ उपसहर. ७ पक्षिण ; (पक्षे) ब्राह्मणान्. ८ रात्रिचरस्य; (पक्षे) राक्षसस्य.

मणे हंहो चन्द्र कथं नु सिश्चसि मयि ज्वालामुचो रोचिषः ॥ १५२ ॥ पवनं प्रति उक्तयः ॥ उन्मीलन्मुकुलकरालकुन्दकोशप्रश्च्योतद्घनमकरन्दगन्धबन्धो। तामीषत्प्रचलविलोचनां नताङ्गीमालिङ्गन्पवन मम स्पृशाङ्गमङ्गम् ॥ १५३ ॥ व्याधूय यद्वसनमम्बुजलोचनाया वक्षोजयोः कनककुम्भविलासभाजोः। आलिङ्गसि प्रसभमङ्गमशेषमस्या धन्यस्त्वमेव मलयाचलगन्धवाह ॥१५४॥ हंहो धीर समीर हन्त जननं ते चन्दनक्ष्माभृतो दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः। प्रत्यङ्गं दहसीह मे त्वमपि चेदुद्दामदावाग्निवन्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः ॥१५५॥ मेघं प्रति उक्तयः ॥ भो मेघ गम्भीरतर नद त्वं तव प्रसादात्स्मरपीडितं मे। संस्पर्शरोमाञ्चितजातरागं कदम्बपुष्पत्वमुपैति गात्रम् ॥१५६॥ भ्रमय जलदानम्भोगर्भान्प्रमोहय चातकान्कलय शिखिनः केकोत्कण्ठान्कठोरय केतकान्। विरहिणि जने मूर्च्छालब्धां विनोदयति व्यथामकरुण पुनः संज्ञाव्याधिं विधाय किमीहसे ॥ १५७ ॥ मलयमरुतां व्राता याता विकासितमल्लिकाः परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि। घन घटयितुं निःस्नेहं त्वां य एव निवर्तने प्रभवति गवां किं नश्छिन्नं स एव धनंजयः ॥ १५८ ॥ अशोकं प्रति उक्ती ॥ रक्तस्त्वं[1] नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैस्त्वामायान्ति शिलीमुखाः[2] स्मरधनुर्मुक्तास्तथा मामपि। कान्तापादतलाहतिस्तव[3] मुदे तद्वन्ममाप्यावयोः सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥ १५९ ॥ रक्ताशोक कृशोदरि क्व नु गता त्यक्त्वानुरक्तं जनं नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः। उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छदस्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥ १६० ॥ तमालं प्रति उक्तिः ॥ धन्यस्त्वमसि तमाल स्पृष्टस्तन्व्या लतावदनया यत्। अद्य स्थावरजन्मा जातस्त्वं जङ्गमादधिकः ॥ १६१ ॥ मृणालहारं प्रति उक्तिः ॥ परिच्युतस्तत्कुचकुम्भमध्यात्किं शोषमायासि मृणालहार। न सूक्ष्मतन्तोरपि तावकस्य तत्रावकाशो भवतः किमु स्यात् ॥ १६२ ॥ मधुकरं प्रति उक्तयः ॥ वदनमिदं न सरोजं नयने नेन्दीवरे एते। इह सविधे मुग्धदृशो मधुकर न मुधा परिभ्राम्य ॥ १६३ ॥ भ्रातर्द्विरेफ भवता भ्रमता समन्तात्प्राणाधिका प्रियतमा मम वीक्षिता किम्। ब्रूषे किमोमिति सखे कथयाशु तन्मे किं किं व्यवस्यति कुतोऽस्ति च कीदृशीयम् ॥ १६४ ॥ चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः। करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ १६५ ॥ उन्मीलन्नयनान्तकान्तिलहरीनिष्पीतयोः केवलादामोदादवधारणीयवपुषोः कान्तासखेन क्षणम्। यत्कर्णोत्पलयोः स्थितेन

1 रक्तवर्णः; (पक्षे) अनुरक्तः. 2 भ्रमराः (पक्षे) बाणाः. 3 कान्तापादघातः. 'पादाहतः; प्रमदया विकसत्यशोकः.'

भवता किंचित्समुद्गुञ्जितं भ्रातस्तिष्ठति कुत्र तत्कथय मे कान्तं प्रियाया मुखम् ॥ १६६ ॥ **हंसं प्रति उक्तिः ॥** हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता । विभावितैकदेशेन देयं यदभियुज्यते ॥ १६७ ॥ **चकोरं प्रति उक्तिः ॥** चुलुकयति चन्द्रदीधितिमविरलमश्नासि नूनमङ्गारान् । अधिकरणमुष्णमनयोः किमिह चकोरावधारयसि ॥ १६८ ॥ **कृष्णसारं प्रति उक्तिः ॥** स्नेहं स्वीकुरु कृष्णसार कथय क्कागान्मम प्रेयसी नो जानासि यद्दावयोः समजनि व्यापारतो मित्रता । स्फीते यत्किल मण्डले हिमरुचैर्जातं त्वया लाञ्छनं भव्ये भास्करमण्डले तदधुना दत्तः कलङ्को मया ॥ १६९ ॥ **सारङ्गं प्रति उक्तिः ॥** रे सारङ्गा वनवसतयस्तत्त्वमाख्यात यूयं कुत्राधीतं त्रिभुवनमनोहारि चाञ्चल्यमक्ष्णोः । आं जानीमो गमनसमये हन्त कान्तारसीमन्येकाकिन्याः कुवलयदृशो लुण्ठिता यौवनश्रीः ॥ १७० ॥ **मयूरविषयकोक्तिः ॥** मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्घनरुचिरकलापो निःसपत्नोऽद्य जातः । रतिविगलितबन्धे केशपाशे सुकेश्याः सति कुसुमसनाथे किं हरेदेष बर्हः ॥ १७१ ॥ **मुक्ताकलापं प्रति उक्तिः ॥** सूचीमुखेन सकृदेव कृतव्रणस्त्वं मुक्ताकलाप लुठसि स्तनयोः प्रियायाः । बाणैः स्मरस्य शतशो विनिकृत्तकर्मा स्वप्नेऽपि तां कथमहं न विलोकयामि ॥ १७२ ॥

---

## वियोगिन्या विप्रलापाः ।

हारो नारोपितः कण्ठे मया विश्लेषभीरुणा । इदानीमन्तरे जाताः पर्वताः सरितो द्रुमाः ॥ १ ॥ बिभेमि सखि संवीक्ष्य भ्रमरीभूतकीटकम् । यद्ध्यानादागते पुंस्त्वे तेन सार्धं रतिः कथम् ॥ २ ॥ याः पश्यन्ति प्रियं स्वप्ने धन्यास्ताः सखि योषितः । अस्माकं तु गते कान्ते गता निद्रापि वैरिणी ॥ ३ ॥ यदीयबलमालोक्य गतः प्रेयान्वियुज्यते । आलोकये कथं सख्यस्तस्य चन्द्रमसो मुखम् ॥ ४ ॥ विरमत विरमत सख्यो नलिनीदलतालवृन्तपवनेन । हृदयगतोऽयं वह्निर्झटिति कदाचिज्ज्वलत्येव ॥ ५ ॥ अनलस्तम्भनविद्यां सुभग भवान्नियतमेव जानाति । मन्मथशराग्नितप्ते हृदि मे कथमन्यथा वससि ॥ ६ ॥ अजनि प्रतिदिनमेषा कर्दमशेषा मदङ्गसङ्गेन । प्रतिनिशमपूरि यं या दक्षिणसंपातिभिः सलिलैः ॥ ७ ॥ मदकृतकृतान्तकासरखुरपुटनिर्धूतधूलिसंकाशम् । केतकरजो निवार्यं सखि यदि कार्यं मम प्राणैः ॥ ८ ॥ आलि बालिशतया वलिरस्मै दीयतां बलिभुजे न कदापि । केवलं हि कलकण्ठशिशूनामेष एव कुशलेषु निदानम् ॥ ९ ॥ गरलद्रुमकन्दमिन्दुबिम्बं करुणावारिज वारणो वसन्तः । रजनी स्मरभूपतेः कृपाणी करणीयं किमतःपरं विधातः ॥ १० ॥ हन्तालि संतापनिवृत्तयेऽस्याः किं तालवृन्तं तरलीकरोषि । उत्ताप एषोऽन्त-

---

१ वियोग.. २ विराम कुरुत.

रदाहहेतुर्नतभ्रुवो न व्यजनापनोद्यः ॥ ११ ॥ वरमसौ दिवसो न पुनर्निशा ननु निशैव वर न पुनर्दिनम् । उभयमेतदुपैत्वथवा क्षयं प्रियजनेन न यत्र समागमः ॥ १२ ॥ अहमिह स्थितवत्यपि तावकी त्वमपि तत्र वसन्नपि मामकः । न तनुसंगम एव सुसंगमो हृदयसंगम एव सुसंगमः ॥ १३ ॥ बकुलमालिकयापि मया न सा तनुरभूषि तदन्तरभीरुणा । तदधुना विधिना कथमावयोर्गिरिदरीनगरीशतमन्तरम् ॥ १४ ॥ दहनजा न पृथुर्दवथुर्व्यथा विरहजैव यथा यदि नेदृशम् । दहनमाशु विशन्ति कथं स्त्रियः प्रियमपांशुमुपासितमुद्धुरा ॥ १५ ॥ कति न सन्ति जना जगतीतले तदपि तद्विरहाकुलितं मनः । कति न सन्ति निशाकरतारकाः कमलिनी मलिनी रविणा विना ॥ १६ ॥ अरतिरियमुपैति नापि निद्रा गणयति तस्य गुणान्मनो न दोषान् । विगलति रजनी न सगमाशा व्रजति तनुस्तनुतां न चानुरागः ॥ १७ ॥ प्रियसखि न तथा पटीरपङ्को न च नलिनीदलमारुतोऽपि शीतः । शमयति मम देहदाहमन्ते सपदि कथा स यदा नरेन्द्रसूनोः ॥ १८ ॥ एतानि निःसहतनोरसमञ्जसानि शून्य मनः पिशुनयन्ति गतागतानि । एते च तीरतरवः प्रथयन्ति तापमालम्बितोज्झिततरुग्लपितैः प्रवालैः ॥ १९ ॥ अन्तर्गता मदनवह्निशिखावली या सा बाधते किमिह चन्दनचर्चितेन । यः कुम्भकारपवनोपरि पङ्कलेपस्तापाय केवलमसौ न च तापशान्त्यै ॥ २० ॥ बत सखि कियदेतत्पश्य वैरं स्मरस्य प्रियविरहकृशेऽस्मिन्रागिलोके तथाहि । उपवनसहकारोद्भासि भृङ्गच्छलेन प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ २१ ॥ कलयति मम चेतस्तल्पमङ्गारकल्पं ज्वलयति मम गात्रं चन्दनं चन्द्रकश्च । तिरयति मम नेत्रे मोहजन्मान्धकारो विकृतबहुविकारं मन्मथो मां दुनोति ॥ २२ ॥ रिपुरिव सखीसंवासोऽयं शिखीव हिमानिलो विषमिव सुधारश्मिर्यस्मिन्दुनोति मनोगते । हृदयमदये तस्मिन्नेवं पुनर्वलते बलात्कुवलयदृशां वामः कामो निकामनिरङ्कुशः ॥ २३ ॥ ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी दहतु मदनः किं वा मृत्योः परेण विधास्यति । मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥ २४ ॥ इदानीं तीव्राभिर्दहन इव भाभिः परिवृतो ममाश्चर्यं सूर्यः किमु सखि रजन्यामुदयति । अयं मुग्धे चन्द्रः किमिति मयि तापं प्रकटयत्यनाथाना बाले किमिव विपरीतं न भवति ॥ २५ ॥ पिकाली वाचाली भवति बहुधालीकवचने मृणाली व्यालीव व्यथयतितरामङ्गमनिशम् । विषज्वालाजालं सखि किरति पीयूषकिरणो जगत्प्राणः प्राणानपहरति केयं परिणतिः॥२६॥ मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव । हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥ २७ ॥ आदौ हालाहलहुतभुजा दत्तहस्तावलम्बो बाल्ये शंभोर्निटिलमहसा बद्धमैत्री-

१ दत्तम्. २ ललाटम्. ३ नेत्राग्निना.

निरूढः । प्रौढो राहोरपि मुखविषेणान्तरङ्गीकृतो यः सोऽयं चन्द्रस्तपति किरणैर्मामिति प्राप्तमेतत् ॥ २८ ॥ भस्मीभूतः कुसुमविशिखः शंभुनेत्राग्निनाभूज्ज्वालादायी तदनु मनसि प्राप्तजन्मा बभूव । भूयस्तस्मिन्विरहदहनैर्दाहितोऽसौ मयैवं कुत्रोत्पन्नो व्यथयति पुनर्मामहो तन्न वेद्मि ॥ २९ ॥ प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः । यातुं निश्चितचेतसि प्रियतमे सर्वैः समं प्रस्थितं गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमुत्सृज्यते ॥ ३० ॥ पञ्चत्वं तनुरेतु भूतनिवहाः स्वांशैर्मिलन्तु ध्रुवं धातारं प्रणिपत्य हन्त शिरसा तत्रापि याचे वरम् । तद्वापीषु पयस्तदीयमुकुरे ज्योतिस्तदीयाङ्गनव्योम्नि व्योम तदीयवर्त्मनि धरा तत्तालवृन्तेऽनिलः ॥ ३१ ॥ यास्यामीति समुद्यतस्य गदितं विश्रब्धमाकर्णितं गच्छन्दूरमुपेक्षितो मुहुरसौ व्यावृत्य तिष्ठन्नपि । तच्छून्ये पुनरागतास्मि भवने प्राणास्त एते दृढाः सख्यस्तिष्ठत जीवितव्यसनिनी दम्भादहं रोदिमि ॥ ३२ ॥ यात्रामङ्गलसंविधानरचनाव्यग्रे सखीनां जने बाष्पाम्भःपिहितेक्षणे गुरुजने तद्वत्सुहृन्मण्डले । प्राणेशस्य महीक्षणार्पितदृशः कृच्छ्रादपि क्रामतः किं व्रीडाहतया मया भुजलतापाशो न कण्ठेऽर्पितः ॥ ३३ ॥ ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः । अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्करव्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥ ३४ ॥ दाक्षिण्यं मलयानिलस्य विदितं शैत्यं सुधादीधितेर्वाचामेव न गोचरो मलयजस्यापि स्फुटं सौष्ठवम् । विश्लेषे तव के न मे परिचिताः प्राणेश तत्तत्कथाविष्कारे पुनरप्रमाणयति मामव्याहतेयं तनुः ॥ ३५ ॥ दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् । स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमी नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं मया ॥ ३६ ॥ शंवत्तत्त्वाविबोधवत्कुसुमवत्पीयूषवन्मित्रवद्यान्यासन्भजति प्रिये मृगदृशोऽथ प्रस्थिते तत्क्षणात् । गेहं तन्मुकुरं तदेव वलयं तच्चन्दनं सा निशा कारावत्करवालवत्क्रकचवत्काकोलवत्कालवत् ॥ ३७ ॥ रोलम्बो मधुपः पिकस्तु परभृद्रन्ध्रानुसारी मरुद्धंसाः केवलपक्षपातनिरताश्चन्द्रोऽपि दोषाकरः । चेतो नैति शुकस्त्विहैकपठिताख्यायी पयोदो जडः कं वाहं प्रहिणोमि हन्त कठिनस्वान्ताय कान्ताय मे ॥ ३८ ॥ आयाता मधुयामिनी यदि पुनर्नायात एव प्रभुः प्राणा यान्तु विभावसौ यदि पुनर्जन्मग्रहं प्रार्थये । व्याधः कोकिलबन्धने हिमकरध्वंसे च राहुग्रहः कंदर्पे हरनेत्रदीधितिरहं प्राणेश्वरे मन्मथः ॥ ३९ ॥ रात्रिर्मे दिवसायते हिमरुचिश्चण्डांशुलक्षायते तारापङ्क्तिरपि प्रदीप्तवडवावह्निस्फुलिङ्गायते ।

१ प्रसिद्धः. २ ग्रहणकाले सपर्कातिशयादन्तरङ्गता प्रापित इत्यर्थः. ३ न्यायप्राप्तमित्यर्थः. ४ कङ्कणैः. ५ नेत्रोदकैः. ६ निरन्तरम्. ७ उपवेशनं कृतम्. ८ निश्चितम्.

धीरो दक्षिणमारुतोऽपि दहनज्वालावलीढायते हा हा चन्दनबिन्दुरद्य जलवत्संचारिरङ्गायते ॥ ४० ॥ गुञ्जन्ति प्रतिकुञ्जमम्बुददलद्रोणीषु भृङ्गाङ्गनाः फुल्लत्पुष्परसालवीथिशिखरे कूजन्ति माद्यत्पिकाः । कामः काममयं करोति विशिखैर्हन्तुं मुहुर्दुर्दिनं का सा तन्मलयानिलस्य सखि मे भीतिस्त्वयोद्भाव्यते ॥ ४१ ॥ रोलम्बाः परिपूरयन्तु हरितो झङ्कारकोलाहलैर्मन्दं मन्दमुपैतु चन्दनवनीजातो नभस्वानपि । माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी ॥ ४२ ॥ वार्यन्तां मन्दमन्दं मधुकरनिकरं प्रौढझङ्कारधाराः क्षिप्यन्तां यत्र कुत्र प्रतिदिशमधुना भूरिभाराश्च हाराः । दह्यन्तां सर्व एते कमलदलयुताः किं च हा पुष्पभारास्तारा नाराचधारा विकिरति हृदये मन्मथोऽयं हताशः ॥ ४३ ॥ श्रुत्वा नामापि यस्य स्फुटघनपुलकं जायतेऽङ्गं समन्ताद्दृष्ट्वा यस्याननेन्दुं भवति वपुरिदं चन्द्रकान्तानुकारि । तस्मिन्नागत्य कण्ठग्रहणसरभसस्थायिनि प्राणनाथे भग्ना यानस्य चिन्ता भवति मम पुनर्वज्रमय्याः कदा तु ॥ ४४ ॥ **मदनं प्रति उक्तयः** ॥ हृदयमाश्रयसे यदि मामकं ज्वलयसीत्थमनङ्ग तदेति कम् । स्वयमपि क्षणदग्धनिजेन्धनः क्व भवितासि हताश हुताशवत् ॥ ४५ ॥ जटा नेयं वेणीकृतकचकलापो न गरलं गले कस्तूरीयं शिरसि शशिलेखा न कुसुमम् । इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा पुरारातिभ्रान्त्या कुसुमशर किं मां व्यथयसि ॥ ४६ ॥ पञ्चत्वं यान्तु बाणाः समयपरिणतस्ते विदीर्णोऽस्तु चापः क्रूरः क्रूराहिवक्त्रं विशतु तव रथो मा भव त्वं शरीरी । किं ते शापेन माद्दग्युवतिवधमहापातकिन्मीनकेतो शप्यः पाथोजयोनिः स खलु रचितवान्पापिनो दीर्घमायुः ॥ ४७ ॥ **चन्द्रं प्रति उक्तयः** ॥ संतापय चिरं चन्द्र न तत्र प्रतिषिध्यसे । निवारय करस्पर्शं रामस्याहं परिग्रहः ॥ ४८ ॥ मुग्धस्य ते वद विधुंतुद किं वदामि किं तूक्तवानसि मुखे पतितं शशाङ्कम् । अस्यार्द्रबिम्बगलितेन सुधारसेन संधानमेति तव किं न जरत्कबन्धः ॥ ४९ ॥ प्रियविरहमहोष्मा मुर्मरामङ्गलेखामपि हतक हिमांशो मा स्पृश क्रीडयापि । इह हि तव लुठन्तः शोषपीडां भजन्ते दरजठरमृणालीकाण्डमुग्धा मयूखाः ॥ ५० ॥ **रोहिणीं प्रति उक्तिः** ॥ ओ रोहिणि त्वमसि रात्रिचरस्य भार्या एनं निवारय पतिं सखि दुर्निवारम् । जालान्तरेण मम सद्मनि संनिविष्टः श्रोणीतटं स्पृशति किं कुलधर्म एषः ॥ ५१ ॥

---

## नायिकां प्रति सखीवचनम् ।

वियोगवह्निकुण्डेऽस्मिन्हृदये ते वियोगिनि । प्रियसङ्गसुखायैव मुँक्ताहारस्तपस्यति ॥ १ ॥ पाण्डु क्षामं वदनं हृदयं सरसं तवालस च वपुः । आवेदयति नितान्तं क्षेत्रियरोगं

१ विषम् २ भस्म. ३ पाण्डुरता. ४ शिवभ्रान्त्या. ५ मुक्तस्त्यक्त आहारो येन, (पक्षे) मुक्तानां मौक्तिकानां हारः.

सखि हृदन्तः ॥ २ ॥ सखि पतिविरहहुताशः[1] किमिति प्रशमं न याति नयनोदैः[2] । शृणु कारणं नितम्बिनि मुञ्चसि नयनोदकं तु सस्नेहम् ॥३॥ सहसा हृदये निधाय चेतो नयनादीन्द्रियमुद्रणां विधाय । अयि कण्टकिताङ्गयष्टि सत्यं कथय ध्यायसि किं रहो निषण्णा ॥ ४ ॥ सहचरि शपथाः शतं मदीया वद विरहालयितां निजामवस्थाम् । सहचरि परिपृच्छ भानुकन्यानवदलिनीनलिनीनिकुञ्जशय्याः ॥ ५ ॥ नलिनीदलतालवीजनं सखि तन्व्या विनिवारितं मया । तनुवह्निविभूतिशङ्कया विनिवार्यः श्वसितानिलः कथम् ॥ ६ ॥ अयं विपाको वद कस्य यूनः कल्याणि कल्याणपरंपराणाम् । यदक्षिकोणस्रवदच्छधारा हारावतारो गुणमन्तरेण ॥ ७ ॥ वासस्तदेव वपुषो वलयं तदेव हस्तस्य सैव जघनस्य च रत्नकाञ्ची । वाचालभृङ्गसुभगे सुरभौ समस्तमद्याधिकं भवति ते सखि किं निदानम् ॥ ८ ॥ उत्पादयत्यलमिदं मनसो विषादं सीदत्सरोरुहनिभं वदनं त्वदीयम् । ज्ञात्वा निदानमहमत्र समानदुःखा प्राणैरपि प्रियतमे भवितुं समीहे ॥ ९ ॥ अनुदिनमधिकं ते कम्पते कायवल्ली शिव शिव नयनान्तं नाश्रुधारा जहाति । कथय कथय कोऽयं यत्कृते कोमलाङ्गी त्यजति न परिणद्धं पाण्डिमानं कपोलम् ॥ १० ॥ विलुलितमतिपूरैर्बाष्पमानन्दशोकप्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा । स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः ॥ ११ ॥ अधिकतरलतल्पं कल्पितस्वापलीलापरिमिलननिमीलत्पाण्डिमा गण्डपाली । सुतनु कथय कस्य व्यञ्जयस्यञ्जसैव स्मरनरपतिलीलायौवराज्याभिषेकम् ॥ १२ ॥ अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः । हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते ॥ १३ ॥ भगिनि मदनः श्रीमानेष त्वया यदि लिख्यते किमपि सुमुखि व्यग्रासीति व्रजामि निजालयम् । यदपि मकरोऽधस्तात्पौष्पं करे च शरासनं तदपि परितो दृष्टिर्देया जनः सखि नागरः ॥ १४ ॥ गोपायन्ती विरहजनितं दुःखमग्रे गुरूणां किं त्वं मुग्धे नयनविरतं बाष्पपूरं रुणत्सि । नक्तं नक्तं नयनसलिलैरेष आर्द्रीकृतस्ते शय्योपान्तः कथयति दशामातपे शोष्यमाणः ॥ १५ ॥ शोणौ कोणौ सखि नयनयोरुद्यतौ गोपनाय शङ्कामेव स्फुटयतितरां स्वेदबिन्दुप्रचारः । अन्तः प्रेमाङ्कुरपरिकरारम्भकं कन्दमस्याः किंचित्किंचित्कथयति पुनः कापि दिव्या मुखश्रीः ॥ १६ ॥ मुक्ताहारं न च कुचगिरेः कङ्कणं नैव हस्तात्कर्णात्स्वर्णाभरणमपि वा नीतवान्नैव तावत् । आहो स्वप्ने बकुलकुसुमं भूषणं संदधानः कोऽयं चौरो हृदयमहरत्तन्वि तन्न प्रतीमः ॥ १७ ॥ सायं दामग्रथनसमये लग्नया कर्णमूले संख्यामन्दस्मितसुभगया सादरं सूच्यमानः । धन्यः कोऽयं कमलनयने यत्कथायां पुरस्तादङ्गुल्यग्रं निजमपि मुहुः सूचि-

१ पत्युर्विरहो वियोग एव हुताशोऽग्निः. २ नेत्रोदकैः. अश्रुभिरिति यावत्.

विद्धं न वेत्सि ॥ १८ ॥ मुखं पाण्डुच्छायं नयनयुगलं बाष्पतरलं तनुः क्षागः क्षामो गतमविशदं धैर्यविगमः । ह्रियं मुक्त्वा मूढे कथयसि न मे सारवचनान्यवस्था येनेयं तव सखि मुहूर्तेन पतिता ॥ १९ ॥ पक्ष्माग्रग्रथिताश्रुबिन्दुनिकरैर्मुक्ताफलस्पर्धिभिः कुर्वन्त्या हरहासहारिहृदये हारावलीभूषणम् । बाले बालमृणालनालवलयालंकारकान्ते करे विन्यस्याननमायताक्षि सुकृती कोऽयं त्वया स्मर्यते ॥ २० ॥ आसन्नामवलम्ब्य केसरलतामेकेन पुष्पोज्ज्वलां सव्यं निःसहया नितम्बफलके कृत्वा कराम्भोरुहम् । आमीलन्नयनां वनान्तसलिलं श्लाघ्यस्य निन्द्यस्य वा कस्येदं दृढसौहृदे प्रतिदिनं दीनं त्वया स्मर्यते ॥ २१ ॥ उज्जृम्भाननमुल्लसत्कुचतटं लोलद्भ्रमद्भ्रूलतं स्वेदाम्भःस्नपिताङ्गयष्टिविगलद्व्रीडं सरो याच्ञया । धन्यः कोऽपि युवा स यस्य वदने व्यापारिताः सांप्रतं मुग्धे दुग्धमहाब्धिफेनपटलप्रख्याः कटाक्षच्छटाः ॥ २२ ॥ मुग्धे दोर्लतिकां निधाय न कृतो द्वारोपरोधस्त्वया लग्ना नो रुदती गतासि रभसात्तस्योत्तरीयांशुके । कालेऽस्मिन्कुसुमाकरे द्विगुणितप्रेमोत्सवे रागिणां गच्छन्नग्रत एव मूढ हृदये मुक्तस्त्वया वल्लभः ॥ २३ ॥ विश्रान्तो दिवसस्तटीमयमटत्यरताचलस्याशुमान्संप्रत्यङ्कुरितान्धकारपटलैर्लम्बालका द्यौरभूत् । एह्यन्तर्विश वेश्मनः शशिमुखि द्वारस्थलीतोरणस्तम्भालम्बितबाहुवल्लि रुदितं किं त्व पथः पश्यसि ॥ २४ ॥ आहारे विरतिः समग्रविषयग्रामे निवृत्तिः परा नासाग्रे नयनं यदेतदपरं यच्चैकतानं मनः । मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाति ते तद्ब्रूयाः सखि योगिनी किमसि भोः किंवा वियोगिन्यसि ॥ २५ ॥ यत्तालीदलपाकपाण्डु वदनं यद्दुर्दिनं नेत्रयोर्यत्प्रेङ्खोलितकेलिपङ्कजवनाः श्वासाः प्रसर्पन्ति च । गौरी क्रुध्यतु वर्तते यदि न ते तत्कोऽपि चित्ते युवा [1]धिग्धिक्त्वां खलु पांसुखेलनसखीलोकेऽपि यन्निह्नवः ॥ २६ ॥ क्षामं गात्रमतीव पाण्डु वदनं क्लिष्टा कपोलस्थली कोऽसौ चेतसि वर्तते तव युवा लोकैकमान्याकृतिः । त्यक्त्वा किंचिदपत्रपा कथय मे खिन्नासि किं त्वं वृथा घोरः पञ्चशरो यदि त्वमबला वक्ष्यामि नातः परम् ॥ २७ ॥ चिन्ताभिः स्तिमितं मनः करतले लीना कपोलस्थली प्रत्यूषक्षणदेशपाण्डुवदनं श्वासैकखिन्नोऽधरः । अम्भःशीकरपद्मिनीकिसलयैर्नोपैति तापः शमं कोऽस्याः प्रार्थितदुर्लभोऽस्ति सहते दीना दशामीदृशीम् ॥२८॥ लावण्यद्रविणव्ययो न गणितः क्लेशो महानार्जितः स्वच्छन्द चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः । एषापि स्वगुणानुरूपरमणाभावाद्[2]वराकी हता कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता ॥ २९ ॥ जानीमस्तव गौरि चेतसि चिरं शंभुः समुज्जृम्भते तापो नेत्रतनूनपादिव तनौ तीव्रः समुन्मीलति । अक्ष्णोरस्रमिषेण गच्छति बहिर्गङ्गातरङ्गावलिः पाण्डिम्नः कपटेन चान्द्रकलिकाकान्तिः समुन्मीलति ॥ ३० ॥ न प्रीतिः पवने

१ उदासीनस्येत्यर्थः. २ दीना.

रतिर्न रसने प्रेमा न पङ्केरुहे न स्नेहः कुसुमे सुखं न शयने यत्नो न वा जीवने । चन्द्रे नैव चमत्कृतिर्मृगमदे मोदो न मौने व्रते तेने तेन कियांस्तपस्तरुणिमा यस्मै तवेदं दशा ॥ ३१ ॥ मातः कं हृदये निधाय सुचिरं रोमाञ्चिताङ्गी मुहुर्जृम्भा मन्थरतारकां सुललितापाङ्गां दधाना दृशम् । सुप्तेवालिखितेव शून्यहृदया लेखावशेषीभवस्यात्मद्रोहिणि किं ह्रिया कथय मे गूढो निहन्ति स्मरः ॥ ३२ ॥ श्वासास्ते सखि सूचयन्त्यविरताः संतापबाधां परं विघ्नस्तत्र न कारणं वयमिति स्वान्तेऽतिचिन्ताभरः । किंवा धर्मनिपीडिता तव तनूवल्ली निकामं प्रिये पुष्पादप्यतिकोमला मलिनतां याता मृणाली यथा ॥ ३३ ॥

---

## दूतीं प्रति स्वावस्थाकथनम् ।

अह्निसंवीक्षणं चक्षुरह्निसंमीलनं मनः । अह्निसंस्पर्शनः पाणिरद्य मे किं करिष्यति ॥ १ ॥ हन्त कान्तमपि तं दिदृक्षते मानसं मम न साधु यत्पते । इन्दुरिन्दुमुखि मन्दमारुतश्चन्दनं च वितनोति वेदनाम् ॥ २ ॥ तुष्यन्तु मे छिद्रमवाप्य शत्रवः करोतु मे शास्ति भरं गृहेश्वरः । मणिस्तु वक्षोरुहमध्यभूषणं ममास्तु सौन्दर्यनिकेतनं प्रियः ॥ ३ ॥ काले मधुः कुपित एष च पुष्पधन्वा धीरा वहन्ति रतिखेदहराः समीराः । केलावनीयमपि वञ्जुलकुञ्जमञ्जुर्दूरे पतिः कथय किं करणीयमद्य ॥ ४ ॥ कान्तः कृतान्तचरितकुटिला तदम्बा वज्रोपमानि वचनानि च दुर्जनानाम् । प्रत्यङ्गमन्तरतनोः प्रहरन्ति बाणाः प्राणाः पुनः सखि बहिर्न खलु प्रयान्ति ॥ ५ ॥ अकस्मादेकस्मिन्पथि सखि मयामुं वनतटं व्रजन्त्या दृष्टो यो नवजलधरश्यामलतनुः । सदृग्भङ्ग्या किं वा कुरुत नहि जाने तत इदं मनो मे व्यालोलं क्वचन गृहकृत्ये न वलते ॥ ६ ॥ गते प्रेमाबन्धे प्रणयबहुमाने विगलिते निवृत्ते सद्भावे प्रणयिनि जने गच्छति पुरः । तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसान्न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥ ७ ॥ स्वामी कुप्यति कुप्यता परिजना निन्दन्तु मामन्यवत्किं तावत्प्रथतामयं तु जगति प्रौढो ममोपद्रवः । आशास्यं पुनरेतदेव यदिदं चक्षुश्चिरं वर्धतां येनेदं परिचीयते मुररिपोः सौन्दर्यसारं वपुः ॥ ८ ॥ निःस्नेहः पतिरुज्झिता करुणया श्वश्रूरजस्रं वृथा वाग्बाणैर्हृदयं भिनत्ति कलहोत्तालाः पुनर्यातरः । नित्यं निन्दति नैव नन्दति कदाप्येषा ननान्दापि तन्मातः कं शरणं व्रजामि तरुणी दीनाहमेकाकिनी ॥ ९ ॥ किं स्वप्नः किमु जागरः किमथवा रात्रिः किमासीद्दिनं मोहावस्थितया मया न किमपि ज्ञातं किमेतत्सखि । यन्नामश्रवणादनन्तरमिदं वृत्तं तमेव प्रियं चेतो दुर्लभमप्यपास्तसकलव्यापारमाकाङ्क्षति ॥ १० ॥ तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयोस्तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया । पाणिभ्यां च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः सख्यः किं करवाणि यान्ति शतधा यत्कञ्चुके संधयः ॥ ११ ॥

---

## नायकं प्रति दूतीप्रेषणम् ।

अपूजितैवास्तु गिरीन्द्रकन्या किं पक्षपातेन मनोभवस्य । यद्यस्ति दूती सरसोक्तिदक्षा दासः पतिः पादतले वधूनाम् ॥ १ ॥ न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि । निपुणं तथैनमवगम्य वदेरभिदूति काचिदिति संदिदिशे ॥ २ ॥ ननु संदिशेति सदृशोदितया त्रपया न किंचन किलाभिदधे । निजमैक्षि मन्दमनिशं निशितैः कृशितं शरीरमशरीरशरैः ॥ ३ ॥ दिशि दिशि परिहासगूढगर्भाः पिशुनगिरो गुरुगञ्जनं च तादृक् । सहचरि हृदये निवेदनीयं भवदनुरोधवशादयं विपाकः ॥ ४ ॥ वृथा गाथाश्लोकैरलमलमलीकां मम रुजं कदाचिद्दूतोऽसौ कविवचनमित्याकलयति । इदं पार्श्वे तस्य प्रहिणु परिलग्नाञ्जनचयस्रवद्बाष्पोत्पीडास्थगितलिपि ताटङ्कयुगलम् ॥ ५ ॥ वाच्यं तस्मै सहचरि भवद्भूरिविश्लेषवह्नौ स्नेहैरिद्धे मम वपुरिदं कामहोता जुहोति । प्राणानस्मै तदिहमुचितां दक्षिणां दातुमीहे तत्रादेशो भवतु भवतां यत्त्वमेषामधीशः ॥ ६ ॥ जीवामीति वियोगिनी यदखिले लोके प्रवृत्ता कथा अद्य श्वोऽथ मरिष्यतीति मरणे कालात्ययः किं कृतः । आगन्तव्यमिहेति संप्रति सखे संभावनानिष्फलात्प्रातः संप्रति याहि नास्ति लिखितं तद्ब्रूहि यत्ते क्षमम् ॥ ७ ॥ उल्लङ्घ्यापि सखीवचः समुचितामुल्लङ्घ्य लज्जामल भीत्वा भीतिमरं निरस्य च निजं सौभाग्यगर्वं मनाक् । आज्ञां केवलमेव मन्मथगुरोरादाय नूनं मया त्वं निःशेषविलासिवर्गगणनाचूडामणिः संभृतः ॥ ८ ॥ दूति त्वं तरुणी युवा स चपलः श्यामास्तमोभिर्दिशः संदेशः स रहस्य एव विपिने संकेतकावासकः । भूयोभूय इमे वसन्तमरुताश्चेतो नयन्त्यन्यथा गच्छ क्षेमसमागमाय निपुणे रक्षन्तु ते देवताः ॥ ९ ॥

---

## नायकस्याग्रे दूत्युक्तयः ।

सुभग त्वत्कथारम्भे कर्णकण्डूतिलालसा । उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साङ्गना ॥ १ ॥ त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदनव्यथा । दृष्टानुदयभाजीन्दौ ग्लानिः कुमुदसंहतेः ॥ २ ॥ विरहे तव तन्वङ्गी कथं क्षपयतु क्षपाम् । दारुणव्यवसायस्य पुरस्ते भणितेन किम् ॥ ३ ॥ सा सुन्दर तव विरहे सुतनुरियन्मात्रलोचना सपदि । एतावतीमवस्थां याता दिवसैरियन्मात्रैः ॥ ४ ॥ तव विरहे विधुवदना मदनाधिक का न सीदन्ति । सीदसि विरहे यस्याः साधु तपस्याफलं तस्याः ॥ ५ ॥ प्राणेश तव विरहिणी हिमकरकिरणेषु हर्म्यमिलितेषु । संतापनिःसहाङ्गी मुञ्चति निचयं चकोराणाम् ॥ ६ ॥ अनयनपथे प्रिये न व्यथा यथा दृश्य एव दुःप्राये । म्लानैव केवलं निशि तपनशिला वासरे ज्वलति ॥ ७ ॥ सा सर्वथैव रक्ता रागं गुञ्जेव न मुखेन वहति । वचनपटोस्तव रागः केवलमास्ये शुकस्येव ॥ ८ ॥ न स वर्णो न च रूपं न संस्क्रिया नैव सा प्रकृतिः । बाला त्वद्विरहा-

पदि जातापभ्रंशभावैव ॥ ९ ॥ सा विरहदहनदूना मृत्वा मृत्वापि जीवति वराकी । सारीव कितव भवतानुकूलिता पातिताक्षेण ॥ १० ॥ गायति गीते सति वा वंशे वादयति सा विपञ्चीषु । पाठयति पञ्जरशुकं तव संदेशाक्षरं रामा ॥ ११ ॥ तव विरहमसहमाना सा तु प्राणान्विमुक्तवती । किंतु तथाविधमङ्गं न सुलभमिति ते न मुञ्चन्ति ॥ १२ ॥ अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिः । सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥ १३ ॥ त्वद्विरहे विस्तारितरजनौ जनितेन्दुचन्दनद्वेषे । बिसिनीव माघमासे विना हुताशेन सा दग्धा ॥ १४ ॥ या दक्षिणात्वमस्यामदक्षिणो दक्षिणस्तदितरस्याम् । जलधिरिव मध्यसंस्थो न वेलयोः सदृशमाचरसि ॥ १५ ॥ अनुरागवर्तिना तव विरहेणोग्रेण सा गृहीताङ्गी । त्रिपुररिपुणेव गौरी वरतनुरर्धावशिष्टैव ॥ १६ ॥ अगणितगुणेन सुन्दर कृत्वा चारित्रमप्युदासीनम् । भवतानन्यगतिः सा विहिता वर्तेन तरणिरिव ॥ १७ ॥ कितव प्रपञ्चिता सा भवता मन्दाक्षमन्दसंचारा । बहुदायैरपि संप्रति सा पाशकरीव नायाति ॥ १८ ॥ रुष्टे का परपुष्टे मन्दे का हन्त मारुते चर्चा । त्वयि गतवति हृदयेशे जीवनदातापि जीवनं हरति ॥ १९ ॥ कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम् । पुनरपि तदेव कथयसि मृता नु कथयामि या श्वसिति ॥ २० ॥ उद्धूयेत नतभ्रूः पक्ष्मनिपातोद्भवैः पवनैः । इति निर्निमेषमस्या विरहिवयस्या विलोकते वदनम् ॥ २१ ॥ त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् । आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः ॥ २२ ॥ तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम् । हन्त नितान्तमिदानीमाः किं हतजल्पितैरथवा ॥ २३ ॥ स्मरशरशतविधुराया भणामि सख्याः कृते किमपि । क्षणमिह विश्राम्य सखे निर्दयहृदयस्य किं वदाम्यथवा ॥ २४ ॥ तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः । हृदयमरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः ॥ २५ ॥ व्यजनं व्यजनं जलं जलं घनसारो घनसार इत्यपि । अवरोधगृहेषु सुभ्रुवां कुररीणामिव कातरो ध्वनिः ॥ २६ ॥ मम रूपकीर्तिमहरद्भुवि यस्तदनुप्रविष्टहृदयेयमिति । त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः ॥ २७ ॥ तव सा कथासु परिघट्टयति श्रवणं यदङ्गुलिमुखेन मुहुः । घनतां ध्रुवं नयति तेन भवद्गुणपूगपूरितमतृप्ततया ॥ २८ ॥ उपताप्यमानमलघूष्णिमभिः श्वसितैः सितेतरसरोजदृशः । द्रवतां न नेतुमधरं क्षमते नवनागवल्लिदलरागरसः ॥ २९ ॥ दधति स्फुटं रतिपतेरिषवः शिततां यदुत्पलपलाशदृशः । हृदयं निरन्तरबृहत्कठिनस्तनमण्डलावरणमप्यभिदन् ॥ ३० ॥ कुसुमादपि स्मितदृशः सुतरां सुकुमारमङ्गमिति नापरथा । अनिशं निजैरकरुणः करुणः कुसुमेषुरुत्तपति यद्विशिखैः ॥ ३१ ॥ विषतां निषेवितमपक्रियया समुपैति सर्वमिति सत्यमदः । अमृतस्रुतोऽपि

विरहाद्भवतो यदमूं दहन्ति हिमरश्मिरुचः ॥ ३२ ॥ उदितं प्रियां प्रति सहार्दमिति श्रदधीयत प्रियतमेन वचः । विदितेङ्गिते हि पुर एव जने सपदीरिताः खलु लगन्ति गिरः ॥ ३३ ॥ त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता । पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः ॥ ३४ ॥ क्षणमपि विरहः पुरा न सेहे नयननिमीलनखिन्नयानया ते । श्वसिति कथमसौ रसालशाखां चिरविरहेण विलोक्य पुष्पिताग्राम् ॥ ३५ ॥ सखि दयितमिहानयेति सा मां प्रहितवती कुसुमेषुणाभितप्ता । हृदयमहृदया न नाम पूर्वं भवदुपकण्ठमुपागतं विवेद ॥ ३६ ॥ चिरमपि कलितान्यपारयन्त्या परिगदितुं परिशुष्यता मुखेन । गतघृण गमितानि सत्सखीनां नयनयुगैः सममार्द्रतां मनांसि ॥ ३७॥ अचकमत सपल्लवां धरित्रीं मृदुसुरभिं विरहय्य पुष्पशय्याम् । भृशमरतिमवाप्य तत्र चास्यास्तव सुखशीतमुपैतुमङ्कमिच्छा ॥ ३८ ॥ तदनघ तनुरस्तु सा सकामा व्रजति पुरा हि परासुतां त्वदर्थे । पुनरपि सुलभं तपोऽनुरागी युवतिजनः खलु नाप्यतेऽनुरूपः ॥ ३९ ॥ हारावशेषा ननु कण्ठनाला त्वन्नामशेषा रसना तदीया । लावण्यशेषा तनुमात्रयष्टिस्त्वद्ध्यानशेषं परमं तदायुः ॥ ४० ॥ तस्या महाविरहवह्निशिखाकलापतप्ते स्थितोऽसि हृदये सततं प्रियायाः । प्रालेयसीकरसमे हृदि सा कृपालो बाला क्षणं वसति नैव खलु त्वदीये ॥ ४१ ॥ अङ्गानि मे दहतु कान्तवियोगवह्निः संरक्षतां प्रियतमो हृदि वर्तते यः । इत्याशया शशिमुखी गलदश्रुबिन्दुधाराभिरुष्णमभिषिञ्चति हृत्प्रदेशम् ॥ ४२ ॥ संकेतकुञ्जभुवि सा शयनोपधानव्यालंकृतं सुभग कुण्डलिनं न वेद । तत्कण्ठलग्नघनचन्दनगन्धलुब्धस्तत्रैव निश्चलमुवास चिराय सोऽपि ॥ ४३ ॥ राका सुधाकरकरैर्नलिनीदलैश्च नीहारहारघनसारभरैः किमेतैः । किंवा भयेन हरिचन्दनपङ्कसेकैर्न त्वां विना मृगदृशः परितापशान्तिः ॥ ४४ ॥ त्वामञ्जनीयति कलासु विलोकयन्ती त्वां शृण्वती कुवलयीयति कर्णपूरम् । त्वां पूर्णिमाविधुमुखी हृदि भावयन्ती वक्षोनिलीनवनीलमणीकरोति ॥ ४५ ॥ अविरलपरिवाहैरश्रुणः सारणीनां स्मरदहनशिखोष्णश्वासपूरैश्च तस्याः । सुभग बत कृशाङ्ग्याः स्पर्धयान्योन्यमेभिः क्रियत इव पुरोभूः पङ्किला पांसुला च ॥ ४६ ॥ स्मरवमथुनिमित्तं गूढमुन्नेतुमस्याः सुभग तव कथायां प्रस्तुतायां सखीभिः । भवति विततपृष्ठोदस्तपीनस्तनाग्रा ततवलयितबाहुर्जृम्भितैः साङ्गभङ्गैः ॥ ४७ ॥ विपुलपुलकपालिः स्फीतसीत्कारमन्तर्जनितजडिमकाकुव्याकुलं व्याहरन्ती । तव कितव विधायामन्दकंदर्पचिन्तारसजलनिधिमग्ना ध्यानलग्ना मृगाक्षी ॥ ४८ ॥ अङ्गेऽनङ्गज्वरहुतवहश्चक्षुषि ध्यानमुद्रा कण्ठे जीवः करकिसलये दीर्घशायी कपोलः । अंसे वेणी कुचपरिसरे चन्दनं वाचि मौनं तस्याः सर्वं स्थितमपि न तु त्वां विना क्वापि चेतः ॥ ४९॥ किं दृष्टेन द्रुततरमितो गम्यतां सा प्रिया ते दृष्टा मार्गे दिवसमखिलं साश्रमे कामयैवम् ।

दृष्टे दृष्टे त्वमिति रभसोद्ग्रीवमालोकयन्ती पृष्टे पृष्टे न भवति भवानित्युदस्त्युर्यभूवम् ॥ ९० ॥ चित्रोत्कीर्णादपि विपधराद्भीतिभाजो निशायां किं त्वब्रूमस्त्वदभिसरणे साहसं नाथ तस्याः। ध्वान्ते यान्त्या यदतिनिभृतं बालया सप्रकाशां त्रासात्पाणिं पथि फणिफणारत्नरोधी व्यधायि ॥ ९१ ॥ यावद्यावद्भवति कलया पूर्णकामः शशाङ्कस्तावत्तावद्द्युतिमयवपुः क्षीयते सा मृगाक्षी। मन्ये धाता घटयति विधुं सारमादाय तस्यास्तस्माद्यावन्न भवति सखे पूर्णिमा तावदेहि ॥ ९२ ॥ हस्ताम्भोजे वदनमलकानायतान्बाहुमूले द्वारि स्वैरं नयनमधरे तर्जनीं संनिधाय। दीर्घोच्छ्वासं विरतविषयास्वादमुत्कण्ठितोष्णं मुग्धाक्षी त्वां हृदि विदधती बाष्पमाविष्करोति ॥ ९३ ॥ आद्यः कोपस्तदनु मदनस्त्वद्वियोगस्तृतीयः शान्त्यै दूतीवचनमपरः पञ्चमः शीतभानुः। इत्थं बाला निरवधि परं त्वां फलं प्रार्थयन्ती हा हा पञ्चज्वलनमधुना सेवते योगिनीव ॥९४॥ धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी रूपे देवोऽप्ययमनुपमो दत्तपादो स्मरस्य। जातं दैवात्सदृशमनयोः संगतं यत्तदेतच्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥ ९५ ॥ अभ्रध्वानैर्मुखरितदिशः श्रेणयस्तोयदानां धारासारैर्धरणिवलयं सर्वतः प्लावयन्ति। तेन स्नेहं वहति विपुलं मत्सखी युक्तमेतत्त्वं निःस्नेहो यदासि तदिदं नाथ मे विस्मयाय ॥ ९६ ॥ प्रादुर्भूते नवजलधरे त्वत्पथं द्रष्टुकामाः प्राणाः पङ्केरुहदलदृशः कण्ठदेशं प्रयान्ति। अन्यत्किं वा तव मुखविधुं द्रष्टुमुड्डीय गन्तुं वक्षः पक्षं सृजति बिसिनीपल्लवस्य च्छलेन ॥ ९७ ॥ गृहीतं ताम्बूलं परिजनवचोभिः कथमपि स्मरत्यन्तःशून्या सुभग तव मूर्तिं प्रतिदिनम्। तथैवास्ते हस्तः कलितफणिवल्लीकिसलयस्तथैवासीत्तस्याः क्रमुकफलतालीपरिगतम् ॥ ९८ ॥ गलत्येका मूर्च्छा भवति पुनरन्या यदनयोः किमप्यासीन्मध्ये सुभग सकलायामपि निशि। लिखन्त्यास्तत्तस्याः कुसुमशरलेखं तव कृते समाप्तिं स्वस्तीति प्रथमपदभागोऽपि न गतः ॥ ९९ ॥ सखीभिक्षां याचे बत नतशिरास्त्वामिदमहं न चेदस्ति प्रीतिः कुरु तदपि कारुण्यकणिकाम्। अवस्था सा तस्याः सुकृतमयमस्यां किमपरं प्रमोहो विश्रामस्त्वमथ मरणं वा प्रतिकृतिः ॥ ६० ॥ विमुञ्चन्त्या प्राणांश्चिरविरहदुःखासहनया तथा संदिष्टं ते कठिनहृदया पश्चिममिव। अपत्यं बालैका मम विधिहतायाः सलिलदा तथा नेयं सेव्या व्यसनरुचये दयित इति ॥ ६१ ॥ न हारं नाहारं कलयति विहारं विषमिव स्मरन्ती सा रामा सुभग भवतश्चागमदिनम्। परं क्षीणा दीना परमसुखहीना सुवदना कुहूपक्षग्लौवच्चपलनयनाङ्गीकृतगतिः ॥ ६२ ॥ क्षणं मूर्च्छामेति भ्रमति परितोऽथ क्षणमपि क्षणं प्रैति स्तम्भं निरवधि भवध्यानिरता। क्षणं स्वप्ने बाला तव सुभग योगं च लभते क्षणं तेजः शंभोर्नयनजमथ ध्यायति यमम् ॥ ६३ ॥ कुसुमशयनेऽप्यङ्गं ताम्यत्यनङ्गविवर्तनं वदनपवनैः श्यामच्छायो बभूव सखीजनः। हृदयनिहितः शीलेपेतश्च्छमीति रवं करोत्यहह कठि

नावस्था तस्यास्त्वयैवमुपेक्ष्यते ॥ ६४ ॥ विरहविषमः कामः कामं तनुं कुरुते त दिवसगणनादक्षश्चायं व्यपेतघृणोपमः । त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ किसलयमृदुर्जीवत्येवं कथं प्रमदाजनः ॥ ६५ ॥ मृगशिशुदृशस्तस्यास्तापं कथं कथयामि ते दहनपतिता दृष्टा मूर्तिर्मया न हि वैधवी । इति तु विदितं नारीरूपः स लोकदृशां सुधा तव शठतया शिल्पोत्कर्षो विधेर्विघटिष्यते ॥ ६६ ॥ इतो विद्युद्वल्लीविलसितमितः केतकरजः स्फुरद्गन्धं प्रोद्यज्जलदनिनदस्फूर्जितमितः । इतः केकीक्रीडाकलकलभरः पक्ष्मलदृशां कथं यास्यन्त्येते विरहदिवसाः संभृतरसाः ॥ ६७ ॥ मुहुर्व्यजनवीजनैः सरसचन्दनासेचनैः सरोजदलवेष्टनैरपि न चेष्टते सुन्दरी । तथापि तव नामनि प्रियसखीभिरावेदिते निवेदयति जीवितं श्रवणसीम्नि रोमोद्गमः ॥ ६८ ॥ गेहादङ्गणमङ्गणादपि बहिर्बाह्याच्च पृथ्वीतलं तामार्तिं यदि वेत्ति सैव सुमुखी किं चान्यदाचक्ष्महे । पर्यङ्केऽपि तवाङ्गसङ्गसुभगैः स्वेदाम्भसां निर्झरैर्धारामण्डपतामनीयत तया तस्मिन्रुदत्या मुहुः ॥ ६९ ॥ दृष्टे चन्द्रमसि प्रलूनतमसि व्योमाङ्गणस्थेयसि स्फूर्जन्निर्मलतेजसि त्वयि गते दूरं निजप्रेयसि । श्वासः कैरवकोरकीयति मुखं तस्याः सरोजीयति क्षीरोदीयति मन्मथो मृगदृशो दृक्चन्द्रकान्तीयति ॥ ७० ॥ आवासो विपिनायते प्रियसखीमालापि जालायते तापो निःश्वसितेन दावदहनज्वालाकरालायते । सापि त्वद्विरहेण हन्त हरिणीरूपायते हा कथं कन्दर्पोऽपि यमायते विरचयञ्शार्दूलविक्रीडितम् ॥ ७१ ॥ अच्छिन्नं नयनाम्बु बन्धुषु कृतं तापः सखिष्वाहितो दैन्यं न्यस्य विशेषतः परिजने चिन्ता गुरुभ्योऽर्पिता । अद्य श्वः किल निर्वृतिं व्रजति सा श्वासैः परं खिद्यते विश्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया ॥ ७२ ॥ त्वच्चिन्तापरिकल्पितं सुभग सा संभाव्य रोमाञ्चिता शून्यालिङ्गनसंचलद्भुजयुगेनात्मानमालिङ्गति । किं चान्यद्विरहव्यथाप्रशमनी संप्राप्य मूर्च्छां चिरात्प्रत्युज्जीवति कर्णमूलपठितैस्त्वन्नाममन्त्राक्षरैः ॥ ७३ ॥ नीरागा मृगलाञ्छने मुखमपि स्वं नेक्षते दर्पणे त्रस्ता कोकिलकूजितादपि गिरं नो मुद्रयत्यात्मनः । चित्तं दुःसहदाहदायिनि धृतद्वेषापि पुष्पायुधे सा बाला सुभगं प्रति प्रतिपदं प्रेमाधिकं पुष्यति ॥ ७४ ॥ उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय । इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठेषु साङ्केतिकव्यापाराः सुभग त्वदीयविरहे तस्याः सखीनां मिथः ॥ ७५ ॥ वर्षन्ति स्तनयित्नवोऽनुसरतो धारा गृहे वर्तते गर्जन्ति प्रतिकूलवादिनि न ते द्वारि स्थिता दन्तिनः । इत्येवं गमितो घनव्यतिकरः सा राजपुत्री पुनर्वाते वाति कदम्बपुष्पसुरभौ केन प्रतारिष्यते ॥ ७६ ॥ संप्राप्तेऽवधिवासरे क्षणमनु त्वद्वर्त्मवातायनं वारंवारमुपेत्य निष्क्रियतया निश्चित्य किंचिच्चिरम् । संप्रत्येव निवेद्य केलिकुररीः सास्रं सखीभिः शिशोर्माधव्या सह कारकेण करुणः पाणिग्रहो निर्मितः ॥ ७७ ॥ नायं मुञ्चति सुभ्रुवामपि

तनुत्यागे वियोगज्वरस्तेनाहं विहिताञ्जलिर्यदुपते पृच्छामि सत्यं वद। ताम्बूलं कुसुमं पटीरमुदकं यद्बन्धुभिर्दीयते स्यादत्रैव परत्र तात्किमुचितज्वालावलीदुःसहम् ॥ ७८॥ श्वासान्मुञ्चति भूतले विलुठति त्वन्मार्गमालोकते दीर्घं रोदिति निक्षिपत्यविरतं क्षामां भुजावल्लरीम्। किं च प्राणसमा न काङ्क्षितवती स्वप्नेऽपि ते संगमं निद्रां वाञ्छति न प्रयच्छति पुनर्दग्धो विधिस्तामपि ॥ ७९॥[1] कोदण्डो विशिखो मनो निवसतिः कामस्य तस्या अपि भ्रूवल्लीनयनाञ्चलं मनसि ते वासः समुन्मीलति। इत्थं साम्यविधौ तयोः प्रभवति स्वामिंस्तथा स्निह्यतां तन्वाना तनुतां क्रमादतनुतां नैषा यथा गच्छति ॥ ८०॥ शोकोत्पत्तिरशोकतः सुमनसो यद्दैमनस्योदयो वैरस्यं च रसालतो विकलता तावत्कलानां विधेः। किं चान्यन्नलदो भवत्यनलदो निर्णीतमुन्नीयते वामः केवलमेक एव न भवानस्यामशेषं जगत् ॥ ८१॥[2] नैष्ठुर्यं कलकण्ठकोमलगिरा पूर्णस्य शीतद्युतेस्तिग्मत्वं बत दक्षिणस्य मरुतो दाक्षिण्यहानिश्च ताम्। स्मर्तव्याकृतिमेव कर्तुमबलां संनाहमातन्वते ताद्विघ्नः क्रियते तृणादिचलनोद्भूतैस्त्वदाप्तिभ्रमैः ॥ ८२॥ या चन्द्रस्य कलङ्किनो जनयति स्मेराननेन त्रपां वाचा मन्दिरकीरसुन्दरगिरो या सर्वदा निन्दति। निःश्वासेन तिरस्करोति कमलामोदान्वितान्यानिलान्सा तैरेव रहस्त्वया विरहिता कांचिद्दशां नीयते ॥ ८३॥ चन्द्रं चन्दनकर्दमेन लिखितं संमार्ष्टि दष्टाधरा कामः पुष्पशरः किलेति सुमनोवर्गं लुनीते च यत्। वन्द्यं निन्दति यच्च मन्मथमसौ भङ्क्त्वाग्रहस्ताङ्गुलीस्तत्कामं सुभग त्वया वरतनुर्वातूलतां लम्भिता ॥ ८४॥ तापोऽम्भः प्रसृतिंपचः प्रचयवान्बाष्पः प्रणालोचितः श्वासाः कम्पितदीपवर्तिकलिकाः पाण्डिम्नि मग्नं वपुः। किं चान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥ ८५॥[3] बिभ्राणा हृदये त्वया विनिहितं प्रेमाभिधानं नवं शल्यं यद्विदधाति सा विधुरिता साधो तदाकर्ण्यताम्। शेते शुष्यति ताम्यति प्रलपति प्रम्लायति प्रेङ्खति भ्राम्यत्युल्लुठति प्रणश्यति गलत्युन्मूर्च्छति त्रुट्यति ॥ ८६॥[4] कार्श्यं चेत्प्रतिपत्कला हिमरुचः स्थूलैव चेत्पाण्डिमा लीना एव मृणालिका यदि पुनर्बाष्पः कियानम्बुधिः। संतापो यदि शीतलो हुतवहस्तस्याः कियद्वर्ण्यतां किं तु त्वत्स्मृतिमात्रमेव शरणं लावण्यशेषं वपुः ॥ ८७॥ सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं द्वारात्त्रस्यति चित्रकेलिसदसो वेषं विषं मन्यते। आस्ते केवलमब्जिनीकिसलयप्रस्तारशय्यातले संकल्पोपनमत्त्वदाकृतिरसायत्तेन चित्तेन ते ॥ ८८॥ सा न स्नाति न चानुलिम्पति न वा केशेषु धत्ते स्रजं न क्रीडासु मनो दधाति न सखीरालोकते चाटुषु। किं तु न्यस्तमुखाम्बुजं करतले बाष्पायमाणेक्षणं निःश्वासग्लपिताधरं

---

१ विरहविह्वला. २ ग्लानिं प्राप्नोति. ३ चलति. ४ नैर्बल्यातिशयेन मृतप्राया भवति. ५ खेदातिशयादित्यर्थः. ६ क्षीणा भवति.

: नयने जागर्ति ते चिन्तया ॥ ८९ ॥ सा रोमाञ्चति सीत्करोति विलपत्युत्कम्पते ता-
प्यति ध्यायत्युद्भ्रमति प्रमीलति पतत्युद्याति मूर्छत्यपि। एतावत्यतनुज्वरे वरतनुर्जीवेन्न किं
रसात्स्वर्वैद्यप्रतिम प्रसीदसि यदि त्यक्तोऽन्यथा हस्तकः ॥ ९० ॥ कंदर्पज्वरसंज्वरा-
कुलतनोराश्चर्यमस्याश्चिरं चेतश्चन्दनचन्द्रमाः कमलिनीचिन्तासु संताम्यति। किं तु क्षा-
न्तवशेन शीतलतनुं त्वामेवमेकं प्रियं ध्यायन्ती रहसि स्थिता कथमसौ क्षीणा क्षणं प्रा-
णिति ॥ ९१ ॥ अङ्गेष्वाभरणं करोति बहुशः पत्रेऽपि संचारिणि प्राप्तं त्वां परिशङ्कते
वितनुते शय्यां चिरं ध्यायति। इत्याकल्पविकल्पतल्परचनासंकल्पलीलाशतव्यासक्तापि
विना त्वया वरतनुर्नैषा निशां नेष्यति ॥ ९२ ॥ आलम्ब्याङ्गणवापिकापरिसरे चूतद्रुमे
मञ्जरी सर्पत्सान्द्रपरागलम्पटरणद्भृङ्गाङ्गनाशोभिनी। मन्ये त्वां तनुमुत्तरीयशकलेनाच्छाद्य
बाला स्फुरत्कण्ठध्वाननिरोधकम्पितकुचश्वासोद्गमा रोदिति ॥ ९३ ॥ चित्राय त्वयि
चिन्तिते स्मृतिभुवा सज्जीकृतं स्वं धनुर्वर्त्तिं धर्तुमुपागतेऽङ्गुलियुगे बाणा गुणे योजिताः।
प्रारब्धे तव चित्रकर्मणि पुनस्तद्बाणभिन्ना सती भित्तिं द्रागवलम्ब्य सिंहलपते सा तत्र
चित्रायते ॥ ९४ ॥ आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासितप्रोत्सर्पद्विरहानलेन च
ततः संतापितानां दृशाम्। संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो भल्लीनामिव पान-
र्मे कुरुते कामं कुरङ्गेक्षणा ॥ ९५ ॥ ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्त-
वः कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः। अन्तर्मानसमास्त्वया प्रभवता तस्याः
स्फुलिङ्गोत्करव्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥ ९६ ॥ पाणिर्नीरवकङ्कणः
स्तनतटी निष्कम्पमानांशुका दृष्टिर्निश्चलतारका समभवन्निस्ताण्डवं कुण्डलम्। कश्चिन्नापि
प्रिया समं कृशतनोर्भेदो भवेन्नो यदि त्वन्नामस्मरणेन कोऽपि पुलकारम्भः समुज्जृम्भते॥९७॥
दत्तोऽस्याः प्रणयस्त्वयैव भवता चेयं चिरं लालिता दैवादद्य किल त्वमेव कृतवानस्या नव
र्वेप्रियम्। मन्युर्दुःसह एष यात्युपशमं नो सान्त्ववादैः स्फुटं हे निस्त्रिंश वियुक्तकण्ठक-
रुणं तावत्सखी रोदितु ॥ ९८ ॥ अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक्सुहृद्यो
मां नेच्छति नागतश्च हहहा कोऽयं विधेः प्रक्रमः। इत्यल्पेतरकल्पनाकवलितस्वान्ता नि-
शान्तान्तरे बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥ ९९ ॥ चूडारत्नमपांनिधि-
र्यदि भवेच्चेत्कुन्तलं गण्डकी कावेरी यदि कङ्कणं यदि पुनर्ग्रैवेयकं गौतमी। मुक्ता स्रक्सु-
रनिम्नगा यदि यदि स्यान्मेखला नर्मदा कौशेयं यदि कौशिकी कृशतनोस्तापस्तदाप्येति
वा ॥ १०० ॥

---

## नायकं प्रति नायिकासंदेशः।

यथा गौः स्मरते वत्सं चक्रवाकी दिवाकरम्। सती स्मरति भर्तारं तथाहं तव दर्शने

॥ १ ॥ अदृष्टे दर्शनोत्कण्ठा दृष्टे विश्लेषभीरुता । नादृष्टे न च दृष्टेन भवता विद्यते सुखम् ॥ २ ॥ आलीभिः सह भाषितं किमपि तद्वर्त्मापि संवीक्षितं पञ्चेपुः कुसुमैरपूजि कथमप्याधाय चित्ते मनाक् । तेनापि प्रिय चेत्तथा मयि कृपाकार्पण्यमालम्बसे प्राणेश प्रबलं तदत्र निखिलं तत्प्रातिकूल्यं विधेः ॥ ३ ॥ नित्यं ब्रह्म यथा स्मरन्ति मुनयो हंसा यथा मानसं सानन्दास्फुटशल्लकीवनयुतां ध्यायन्ति रेवां गजाः । युष्मद्दर्शनलालसाः प्रतिदिनं युष्मान्स्मरामो वयं धन्यः कोऽपि स वासरोऽत्र भविता यत्रावयोः संगमः ॥ ४ ॥ इन्दुं कैरविणीव कोकपटलीवाम्भोजिनीबान्धवं मेघं चातकमण्डलीव मधुपश्रेणीव पुष्पाकरम् । माकन्दं पिकसुन्दरीव तरुणी प्राणेश्वरं प्रोषितं चेतोवृत्तिरियं मम प्रियसखे त्वां द्रष्टुमुत्कण्ठते ॥ ५ ॥

## नायिकां प्रति संदेशप्रेषणम् ।

दैवात्पश्येर्जगति विचरन्निच्छया मत्प्रियां चेदाश्वास्यादौ तदनु कथयेर्मामकीनामवस्थाम् । आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः प्राणत्राणं कथमपि करोत्यायताक्ष्याः स एकः ॥ १ ॥

## नायिकां प्रति नायकसंदेशः ।

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे । दिनावसाने[1] छायेव पुरो मूलं वनस्पतेः ॥ १ ॥ स्मर्तव्योऽहं त्वया कान्ते न स्मरिष्याम्यहं तव । स्मरणं चेतसो धर्मस्तच्चेतो भवता हृतम् ॥ २ ॥ त्वया मम समेतस्य कल्पा अपि समासमाः । भवता विप्रयुक्तस्य कल्पकल्पः क्षणोऽपि मे ॥ ३ ॥ यतः प्रभृति ते कान्तं मुखमालोकितं मया । कामः कामं ममाङ्गानि व्यथयत्यभितः शरैः ॥ ४ ॥ तपति तनुगात्रि[2] मदनस्त्वामनिशं मां पुनर्दहत्येव । ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥ ५ ॥ किमकारि मन्दमतिना रतिपतिना कामतन्त्रनिपुणेन । स्यूतासि हरिणनयने हन्त हृदि स्नेहतन्तुना न तनौ ॥ ६ ॥ कृष्णा ते कचसंहतिरम्बुजनयने तवाधरः शोणः । त्वं सुरतरंगिणी कथमभितस्तापी न ते वियोगः स्यात् ॥ ७ ॥ दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे । हंस इव दर्शिताशो मानसजन्मा त्वया नीतः ॥ ८ ॥ स्निग्धमालप सुरूक्षमेव वा त्वत्कथैव सखि मे रसायनम् । शीतलं सलिलमुष्णमेव वा पावकं हि शमयेदसंशयम् ॥ ९ ॥ स्वप्नेऽपि देवि रमसे न मया विना त्वं स्वापे त्वया विरहितो मृतवद्भवामि । दूरीकृतासि विधिदुर्ललितैस्तथापि जीवत्यवेहि मन इत्यसवो दुरन्ताः ॥ १० ॥ वल्गत्कुचानि वलनासहमध्यमानि कण्ठोदयत्कलरुतानि गलत्कचानि । आस्वादिताधरदलान्यलसेक्षणानि तान्येव

१ सायंकाले. २ कोमलाङ्गि.

तन्वि सुरतानि तव स्मरामि ॥ ११ ॥ अद्यापि सुन्दरि तवाननचन्द्रबिम्बं बन्दीकृताम्बुजयुगं परिचुम्ब्य चेतः । त्वत्संगमोद्भवसुखं तनुते तथापि वैरं करोति करुणाविकलो विवेकः ॥ १२ ॥ त्वदीयमुखपङ्कजं यदि विधोरलं वार्तया तवाधरसुधा यदा भवति किं सुधा नो सुधा । त्वदङ्गपरिरम्भणं भण कृतं सुधागाहनैस्त्वदीयदृगनुग्रहस्तदपि धिग्धिगैन्द्रं पदम् ॥ १३ ॥ भवतु विदितं भव्यालापैरलं खलु गम्यतां तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः । तव यदि तथा भूतं प्रेम प्रपन्नमिमां दशां प्रकृतितरले का नः पीडा गते हतजीविते ॥ १४ ॥ यदिन्दोर्लक्ष्मीस्ते वदनकमले वासमकरोत्तमःस्तोमस्थेमा तव तरुणि धम्मिल्लमभजत् । अनुप्राप्ता हारावलिमपि च तारावलिरुचिः शरण्यायाः कस्ते मम शरणदाने परिभवः ॥ १५ ॥ भवत्या विश्लेषे गुरुहृदयखेदेन तनुतां तनुर्नित्यं धत्ते सदृशमिति मत्तेभगमने । इदं तावच्चित्रं कमलमुखि सर्वैरवयवैः सुरूपा त्वं लोके नियतमसुरूपा भवसि नः ॥ १६ ॥ सुमध्ये वाग्भङ्गैर्वचनविधिमङ्गीकुरु न वा स्मितज्योत्स्ना कान्तं कुरु वदनमेतन्मयि न वा । त्रिलोकीमूर्धन्या यदि विविधपुण्याधिकतया मया दृष्टासि त्वं तदिह सफलं मेऽजनि जनुः ॥ १७ ॥ यदि प्राणा एव प्रणयपरिणाहः कथमयं विभिन्ना तेभ्यश्चेत्कथमियमभेदव्यवसितिः । न भिन्ना नाभिन्ना यदि भवसि किं नाम तदसि त्वमेकासि त्वं मे कुवलयदलश्रेणिनयने ॥ १८ ॥ यदेकः कासारं रचयति तथा कूपमथवा तदाकाङ्क्षां देवो वितरतितरां श्रीपतिरपि । मया तु त्वद्धेतोः कमलमुखि सान्द्राश्रुसलिलैः कृताः पारावारास्तदपि गणना ते न हृदये ॥ १९ ॥ इतो विद्युत्पुञ्जस्फुरितमसकृद्धावयतु मामितः केकानेका हरतु हृदयं निर्दयमिदम् । इतः कामो वामः प्रहरतु मुहुः पुङ्खितशरो गतासि त्वं दूरं चपलनयने प्राप्स्यसि यतः ॥ २० ॥ हिमांशुश्चण्डांशुर्नवजलधरो दावदहनः सरिद्वीचीवातः कुपितफणिनिःश्वासपवनः । नवा मल्ली भल्ली कुवलयवनं कुन्तगहनं मम त्वद्विश्लेषात्सुमुखि विपरीतं जगदिदम् ॥ २१ ॥ विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः । तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ २२ ॥ आस्तां तावद्वचनरचनाभाजनत्वं विदूरे दूरे चास्तां तव तनुपरीरम्भसंभावनापि । भूयो भूयः प्रणतिभिरहं किंतु याचे विधेया स्मारं स्मारं स्वजनगणने कापि लेखा ममापि ॥ २३ ॥ श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् । उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्हन्तैकस्मिन्क्वचिदपि न ते चण्डि सादृश्यमस्ति ॥ २४ ॥ त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायामात्मानं ते चरणपतित यावदिच्छामि कर्तुम् । अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ २५ ॥ मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतोर्लब्धायास्ते कथमपि मया स्व-

प्रसंदर्शनेषु। पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां मुक्तास्थूलास्तरुकिसलयेस्वश्रुलेशाः पतन्ति ॥ २६ ॥ भित्त्वा सद्यः किसलयपुटान्देवदारुद्रुमाणां ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः। आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ २७ ॥ संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात्। इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥ २८ ॥ कस्याख्याय व्यतिकरमिमं मुक्तदुःखो भवेयं को जानीते निभृतमुभयोरावयोः स्नेहसारम्। जानात्येकं शशधरमुखि प्रेमतत्त्वं मनो मे त्वामेवैतच्चिरमनुगतं तत्प्रिये किं करोमि ॥ २९ ॥ त्वद्रूपामृतया न दुर्ललितया दृष्ट्या क्व विश्रम्यतां त्वद्वाक्यश्रवणाभियोगपरयोः श्रव्यं कुतः श्रोत्रयोः। एभिस्त्वत्परिरम्भनिर्भररसैरङ्गैः कथं स्थीयतां कष्टं त्वद्विरहेण संप्रति वयं कष्टामवस्थां गताः ॥ ३० ॥ यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी। येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गतास्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ ३१ ॥ गूढालिङ्गनगण्डचुम्बनकुचस्पर्शादिलीलायितं सर्वं विस्मृतमेव विस्तृतवतो बाले खलेभ्यो भयात्। संलापस्त्वधुना सुदुर्घटतमस्तत्रापि नातिव्यथा यत्त्वद्दर्शनमप्यभूदसुलभं तेनैव दूये भृशम् ॥ ३२ ॥ धन्यस्तन्वि स एष पाण्डिमवरश्चुम्बत्कपोलस्थलं धन्यं तन्वि तदेव कार्श्यमिह यत्प्रत्येकमालिङ्गति। धन्योऽयं विरहानलस्तव मनो[१] यस्यानुवृत्तेः पदं दूरे हन्त तया तु पातकितया मादृग्जनः सीदति ॥ ३३ ॥ न स्नानं न च भोजनं न पठनं नान्यत्र सौख्यं धृतिर्नान्यस्त्रीजनसेवनं न च कथा निद्राविलासोद्यमः। किंतु त्वां परिचिन्तयामि सततं ध्यानेन चेतःस्थितां स्वप्नालोकनकामकेलिविधिना जीवामि कान्ते तव ॥ ३४ ॥ रात्रिः कालयुगोपमा मलयजो गन्धानिलः किं विषं सोमः सूर्य इवाभवन्मलयजालेपः स्फुलिङ्गोपमः। तिक्तः सुस्वरगीतवाद्यपरभृत्पारावतादिध्वनिर्वज्रस्याहतिरेव कर्णयुगले विच्छेदतो मे तव ॥ ३५ ॥ चन्द्रो द्वादशभास्करः समभवद्रात्रिर्युगानां शतं मिष्टं तिक्तरसं विलेपनमहो दीप्तानलो मे तव। विच्छेदान्मलयानिलः प्रियतमे किं कालकूटः श्रुतौ गीतादिध्वनिरेव वज्रसदृशोऽरण्यं विचित्रं गृहम् ॥ ३६ ॥ स्थानान्निर्गत्य दूरं व्रजति मयि चिरं मुक्तकण्ठं रुदित्वा पश्चादुन्मृज्य नेत्रे प्रणतिमुपगता वेपमानाङ्गयष्टिः। कान्ते यन्मामवोचः प्रलयघनघटाटोपबद्धान्धकारे काले कापालिकोऽपि प्रवसति न गृहात्तन्मनो मे दुनोति ॥ ३७ ॥

---

१ छादित..

## दूतीं प्रति नायिकाप्रश्नाः ।

उल्लापयन्त्यां दयिताय दूती वध्वा विभूषां च निवेशयन्त्या । प्रसन्नता कापि मुखस्य जज्ञे वेषश्रिया नु प्रियवार्तया नु ॥ १ ॥ अलमलमघृणस्य तस्य नाम्ना पुनरपि सैव कथा गतः स कालः । कथय कथय वा तथापि दूति प्रतिवचनं द्विषतोऽपि मानवानाम् ॥ २ ॥ कथय निपुणे कस्मिन्दृष्टः कथं नु कियच्चिरं किमिव लिखितं किं तेनोक्तं कदा स इहेष्यति । इति बहुविधं प्रेमालापः प्रपञ्चितविस्तरा प्रियतमकथाः स्वल्पेऽप्यर्थे प्रयान्ति न नष्टताम् ॥ ३ ॥

---

## दूत्युपहासप्रश्नाः ।

पार्श्वाभ्यां सम्प्रहाराभ्यामधरे व्रणखण्डिते । दूति सङ्ग्रामयोग्यासि न योग्या दूतकर्मणि ॥ १ ॥ बहुनात्र किमुक्तेन दूति मत्कार्यसिद्धये । स्वमांसान्यपि दत्तानि वक्तव्येषु तु का कथा ॥ २ ॥ किं त्वं निगूहसे दूति स्तनौ वक्षं च पाणिना । खण्डिता एव शोभन्ते शूराधरपयोधराः ॥ ३ ॥ त्वं दूति निरगाः कुञ्जं न तु पापीयसो गृहम् । किंशुकाभरणं देहे दृश्यते कथमन्यथा ॥ ४ ॥ दूति त्वया कृतमहो निखिलं मदुक्तं न त्वादृशी परहितप्रवणास्ति लोके । श्रान्तासि हन्त मृदुलाङ्गि गता मदर्थं सिध्यन्ति कुत्र सुकृतानि विना श्रमेण ॥ ५ ॥ रजन्यामन्यस्यां सुरतपरिवृत्तावनुचितं मदीयं यद्वासः कथमपि हृतं तेन सुहृदा । त्वया प्रत्यानीतं निजवसनदानात्पुनरिदं कुतस्त्वादृग्दूती स्खलितशमनोपायनिपुणा ॥ ६ ॥ निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागो[1]ऽधरो नेत्रे दूरम[2]नञ्जने[3] पुलकिता तन्वी तथेयं तनुः । मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥ ७ ॥ दूतीदं नयनोत्पलद्वयमहो तान्तं नितान्तं तव स्वेदाम्भःकणिका ललाटफलके मुक्ताश्रियं बिभ्रति । निःश्वासाः प्रचुरीभवन्ति नितरां हा हन्त चन्द्रातपे याताया तवशाद्वृथा मम कृते श्रान्तासि कान्ताकृते ॥ ८ ॥ दूति श्वासविशेष एष किमहो चण्डि त्वराधावनाद्विभ्रष्टालकवल्लरी कथमहो त्वन्नाथपादार्पणात् । निर्मृष्टाधररागपल्लवरुचिस्त्वत्कार्यसंजल्पनाद्वासस्तस्य किमङ्गसंगतमहो विश्वासहेतोस्तव ॥ ९ ॥ श्वासः किं त्वरितागता पुलकिता कस्मात्प्रसादः कृतः स्रस्ता वेण्यपि पादयोर्निपतनान्नीवी गमादागमात् । स्वेदार्द्रं मुखमातपेन गमितं क्षामा किमित्युक्तिभिर्दूति म्लानसरोरुहाकृतिधरस्यौष्ठस्य किं वक्ष्यसि ॥ १० ॥ खिन्नं केन मुखं दिवाकरकरैस्ते रागिणी लोचने रोषात्तद्वचनोत्थिताद्विलुलिता नीलालका वायुना । भ्रष्टं कुङ्कुममुत्तरीयकषणात्क्लान्तासि गत्यागतैर्युक्तं तत्सकलं किमत्र वद हे दूति क्षतस्याधरे ॥ ११ ॥ सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं

---

१ क्षालितो रागो रक्तिमा यस्य. २ अतिशयम् ३ अञ्जनरहिते.

यातोऽस्ताचलमौलिमम्बरमणिर्विश्रब्धमन्दा गतिः। आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोमि तेनासितुम् ॥ १२ ॥

## नायिकां प्रति नायकावस्थाकथनम्।

पदशब्दलीनहृदयो रूपालंकारभावनानिपुणः। कविरिव वञ्चितमुद्रस्तरुणि तवार्थे परं स युवा ॥ १ ॥ परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः। इति तव विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥ २ ॥ विकिरति मुहुः श्वासान्नाशां पुरो मुहुरीक्षते प्रविशति मुहुः कुञ्जात्कुञ्जं मुहुर्बहु ताम्यति। रचयति मुहुः शय्यां पर्याकुलं मुहुरीक्षते मदनकदनक्रान्तः कान्ते प्रियस्तव वर्तते ॥ ३ ॥ सा मां द्रक्ष्यति वक्ष्यति स्मरकथां प्रत्यङ्गमालिङ्गनैः प्रीतिं यास्यति रंस्यते सखि समागत्येति चिन्ताकुलः। मार्गं पश्यति वेपते पुलकयत्यानन्दति स्विद्यति प्रत्युद्गच्छति मूर्च्छति प्रियतमः कुन्ते निकुञ्जप्रियः ॥४॥ पूर्वं यत्र समं त्वया रतिपतेरासादिताः सिद्धयस्तस्मिन्नेव निकुञ्जमन्मथमहातीर्थे पुनर्माधवः। ध्यायंस्त्वामनिशं जपन्नपि तवैवालापमन्त्रावलीर्भूयस्त्वत्कुचकुम्भनिर्भरपरीरम्भामृतं वाञ्छति ॥ ५ ॥

## नायिकां प्रति दूत्युपदेशः।

सभयचकितं विन्यस्यन्तीं दृशं तिमिरे पथि प्रतितरु मुहुः स्थित्वा मन्दं पदानि वितन्वतीम्। कथमपि रहः प्राप्तामङ्गैरनङ्गतरंगिभिः सुमुखि सुभगः पश्यन्स त्वामुपैतु कृतार्थताम् ॥ १ ॥

## सूर्यास्तमनसमयवर्णनम्।

मन्त्रसंस्कारसंपन्नास्तन्वदौदन्वतीरपः। एतत्त्रयीमयं ज्योतिरादित्याख्यं निमज्जति ॥१॥ तापनैरिव तेजोभिर्दग्धनिर्वाणमेचकाः। दिशो जाताः प्रतीची तु समुदाचरति क्रमात् ॥२॥ पुराणरश्मिजालेषु स्रस्तेष्वस्तावलम्बनम्। बिम्बमम्बुरुहां नेतुरम्बरादवलम्बते ॥ ३ ॥ विलोक्य संगमे[1] रागं पश्चिमायां विवस्वतः। कृतं कृष्णं मुखं प्राच्या नहि नार्यो विनेर्ष्यया ॥ ४ ॥ करिष्यति कलानाथः कुतुकीकरमम्बरे। इति निर्वापयामास रविदीपं निशाङ्गना ॥ ५ ॥ विलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः। विकसत्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥ ६ ॥ अस्तंगतवति सवितरि भर्तरि मधुपं[2] निवेश्य कोशान्ते। कमलिन्योऽपि रमन्ते किमत्र चित्रं मृगाक्षीणाम् ॥ ७ ॥ कृतोपकारं प्रियबन्धुमर्कमद्राक्ष्म हीनांशुमधः पतन्तम्। इतीव मत्वा नलिनीवधूभिर्निमीलितान्यम्बुरुहेक्षणानि ॥ ८ ॥ सान्ध्यरागरुधिरारुणमारान्निःपपात रविमण्डलमब्धौ। क्रूरकालकरवाल[3]विलूनं[4] वासरस्य सहसैव शिरो नु

१ सूर्ये. २ भृङ्गम्; (पक्षे) मद्यपम्. ३ खङ्गः. ४ छिन्नम्.

॥ ९ ॥ नो रविर्न च तमो न तमीशो न द्युतिर्ग्रहगणो न च संध्या। यादृशी प्रथमतः किल सृष्टेस्तादृगेव भुवनं श्रियमूहे ॥ १० ॥ भानुबिम्बमिदमस्तगामि च प्रोद्यतं कुमुदबन्धुमण्डलम्। दृश्यते रतिपतेः प्रवासिनां क्रोधरक्तमिव लोचनद्वयम् ॥ ११ ॥ स्थानमाह्निकमपास्य दन्तिनः सल्लकीविटपभङ्गवासितम्। आविभातचरणाय गृह्णते वारि वारिरुहबद्धषट्पदम् ॥ १२ ॥ पश्य पश्चिमदिगन्तलम्बिना निर्मितं कथमिदं विवस्वता। दीर्घया प्रतिमया सरोम्भसां तापनीयमिव सेतुबन्धनम् ॥ १३ ॥ उत्तरन्ति विनिकीर्य पल्वलं गाढपङ्कमतिवाहितातपाः। दंष्ट्रिणो वनवराहयूथपा दष्टभङ्गुरबिसाङ्कुरा इव ॥ १४ ॥ एष वृक्षशिखरे कृतास्पदो जातरूपरसगौरमण्डलः। हीयमानमहरत्ययातपं पीवरोरु पिबतीव बर्हिणः ॥ १५ ॥ पूर्वभागतिमिरप्रवृत्तिभिर्व्यक्तपङ्कमिव जातमेकतः। खं हृतातपजलं विवस्वता भाति किंचिदिव शेषवत्सरः ॥ १६ ॥ आविशद्भिरुटजाङ्गणं मृगैर्मूलसेकसरसैश्च वृक्षकैः। आश्रमाः प्रविशदग्र्यधेनवो बिभ्रति श्रियमुदीरिताग्नयः ॥ १७ ॥ बद्धकोशमपि तिष्ठति क्षणं सावशेषविवरं कुशेशयम्। षट्पदाय वसतिं ग्रहीष्यते प्रीतिपूर्वमिव दातुमन्तरम् ॥ १८ ॥ दूरलग्नपरिमेयरश्मिना वारुणी दिगरुणेन भानुना। भाति केसरवतेव मण्डिता बन्धुजीवतिलकेन कन्यका ॥ १९ ॥ सान्ध्यमस्तमितशेपमातपं रक्तलेखमपरा बिभर्ति दिक्। संपरायवसुधासशोणितं मण्डलाग्रमिव तिर्यगुत्थितम् ॥ २० ॥ कोऽत्र भूमिवलये जनान्मुधा तापयन्सुचिरमेति संपदम्। वेदयन्निति दिनेन भानुमानाससाद चरमाचलं ततः ॥ २१ ॥ मध्यमोपलनिभे लसदंशावेकतश्च्युतिमुपेयुषि भानौ। द्यौरुवाह परिवृत्तिविलोलां हारयष्टिमिव वासरलक्ष्मीम् ॥ २२ ॥ अंशुपाणिभिरतीव पिपासुः पद्मजं मधु भृशं रसयित्वा। क्षीबतामिव गतः क्षितिमेष्यंल्लोहितं वपुरुवाह पतङ्गः ॥ २३ ॥ मुक्तमूललघुरुज्झितपूर्वः पश्चिमे नभसि संभृतसान्द्रः। सामि मज्जति रवौ न विरेजे खिन्नजिह्म इव रश्मिसमूहः ॥ २४ ॥ कान्तदूत्य इव कुङ्कुमताम्राः सायमण्डनमभि त्वरयन्त्यः। सादरं ददृशिरे वनिताभिः सौधजालपतिता रविभासः ॥ २५ ॥ अग्रसानुषु नितान्तपिशङ्गैर्भूरुहान्मृदुकरैरवलम्ब्य। अस्तशैलगहनं नु विवस्वानाविवेश जलधिं नु महीं नु ॥ २६ ॥ आकुलश्चलपतत्रिकुलानामारवैरनुदितौषसरागः। आययावहरिदश्वविपाण्डुस्तुल्यतां दिनमुखेन दिनान्तः ॥ २७ ॥ आस्थितः स्थगितवारिदपङ्क्त्या संध्यया गगनपश्चिमभागः। सोर्मिविद्रुमवितानविभासा रञ्जितस्य जलधेः श्रियमूहे ॥ २८ ॥ प्राञ्जलावपि जने नतमूर्ध्नि प्रेम तत्प्रवणचेतसि हित्वा। संध्ययानुविदधे विरमन्त्या चापलेन सुजनेतरमैत्री ॥ २९ ॥ अभितापसंपदमथोष्णरुचिर्निजतेजसामसहमान इव। पयसि प्रपित्सुरपराम्बुनिधेरधिरोढुमस्तगिरिमभ्यपतत् ॥ ३० ॥ गतया पुरः प्रतिगवाक्षमुखं दधती रतेन भृशमुत्सुकताम्। मुहुरन्तरालभुवमस्तगिरेः सवितुश्च योषिदमिमीत दृशा ॥ ३१ ॥ विरलातपच्छविरनुष्णवपुः परितो

विपाण्डु दधदभ्रशिरः । अभवद्गतः परिणतिं शिथिलः परिमन्दसूर्यनयनो दिवसः ॥३२॥ अपराह्णशीतलतरेण शनैरनिलेन लोलितलताङ्गुलये । निलयाय शाखिन इवाह्वयते ददुराकुलाः खगकुलानि गिरः ॥ ३३ ॥ उपसंध्यमास्त तनु सानुमतः शिखरेषु तत्क्षणमशीतरुचः । करजालमस्तसमयेऽपि सतामुचितं खलूच्चतरमेव पदम् ॥ ३४ ॥ नवकुङ्कुमारुणपयोधरया स्वकरावसक्तरुचिराम्बरया । अतिशक्तिमेत्य वरुणस्य दिशा भृशमन्वरज्यदतुषारकरः ॥ ३५ ॥ गतवत्यराजत जपाकुसुमस्तबकद्युतौ दिनकरेऽवनतिम् । बहलानुरागकुरुविन्ददलप्रतिबद्धमध्यमिव दिग्वलयम् ॥ ३६ ॥ द्रुतशीतकुम्भनिभमंशुमतो वपुरर्धमग्नवपुषः पयसि । रुरुचे विरिञ्चिनखभिन्नबृहज्जगदण्डकैकतरखण्डमिव ॥ ३७ ॥ अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् । निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥ ३८ ॥ अभितिग्मरश्मि चिरमाविरमादवधानखिन्नमनिमेषतया । विगलन्मधुव्रतकुलाश्रुजलं न्यमिमीलदब्जनयनं नलिनी ॥ ३९ ॥ अविभाव्यतारकमदृष्टहिमद्युतिबिम्बमस्तमितभानुनभः । अवसन्नतापमतमिस्रमभादपदोषतैव विगुणस्य गुणः ॥ ४० ॥ रुचिधाम्नि भर्तरि भृशं विमलाः परलोकमभ्युपगते विविशुः । ज्वलनं त्विषः कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः ॥ ४१ ॥ महद्भिरार्यैस्तमसोऽपि दुद्रुते भयेऽथ संमूढमतिर्भ्रमन्क्षितौ । प्रदीपवेषेण गृहे गृहे स्थितो विखण्ड्य देहं बहुधैव भास्करः ॥ ४२ ॥ अयमसौ गगनाङ्गणदीपकस्तरलकालभुजंगशिखामणिः । क्षणविडम्बितवाडवविग्रहः पतति वारिनिधौ विधुरो रविः ॥ ४३ ॥ अभिभूय सतामवस्थितिं जडजेषु प्रतिपाद्य च श्रियम् । जगतीपरितापकृत्कथं जलधौ नावपतेदसौ रविः ॥ ४४ ॥ परिपतति पयोनिधौ पतङ्गः सरसिरुहामुदरेषु मत्तभृङ्गः । उपवनतरुकोटरे विहंगस्तरुणिजनेषु शनैः शनैरनङ्गः ॥ ४५ ॥ शुचिरिति परितः प्रसिद्धिभाजि प्रकटिततेजसि दुर्जये कृशानौ । निजवसुनिकुरम्बमस्तवेलाव्यतिकरवान्निदधे सरोजबन्धुः ॥ ४६ ॥ जगदिव बहुलातपाभितप्तं जनयितुमद्य जलाभिषेकशीतम् । परिधृतरविशातकुम्भकुम्भा प्रचलति पश्चिमवारिधिं दिनश्रीः ॥ ४७ ॥ पतति रविरपूर्ववारिराशौ हृदि पथिकस्य यथात्मभूर्हुताशः । प्रसरति चरमां तमःप्ररोहः प्रतिपदमद्य यथा मनोविमोहः ॥ ४८ ॥ अस्तावलम्बिरविबिम्बतयोदयाद्रिशृङ्गोन्मिषत्सकलचन्द्रतया च सायम् । संध्याप्रवृत्तहरहस्तगृहीतकांस्यं तालद्वयेव समलक्ष्यत नाकलक्ष्मीः ॥ ४९ ॥ यातोऽस्मि पद्मनयने समयो ममैष सुप्ता मयैव भवती प्रतिबोधनीया । प्रत्यायनामयमितीव सरोरुहिण्याः सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥ ५० ॥ कृत्वा प्रबुद्ध-

१ प्रीतियुक्तम्; (पक्षे) रक्तिमयुक्तम्. २ बहिर्निष्कासयामास. ३ अपेतं गतं वसु द्रविणं किरणाश्च यस्मात्. ४ अपरदिगेव गणिका. ५ निजद्रव्यसमूहम्; (पक्षे) किरणसमूहम्. ६ स्थापयामास. ७ सूर्यः. ८ विश्वासोत्पादनम्. ९ कमलिन्याः.

कमलामखिलां त्रिलोकीमम्भोनिधेर्विशति गर्भमसाविदानीम् । अन्तःप्रसुप्तहरिनाभिसरोजबोधकौतूहलीव भगवानरविन्दबन्धुः ॥ ५१ ॥ पूर्वा क्षणक्रमनिरस्तसमस्तरागं हित्वा निजान्तिकमुपेत्य रवौ सरागे । आलोकतः पुनरमुष्य धृतप्रसादाज्जाता चिरेण चरमा परमानुरक्ता ॥ ५२ ॥ स्पष्टोल्लसत्किरणकेसरसूर्यबिम्बविस्तीर्णकर्णिकमथो दिवसारविन्दम् । श्लिष्टाष्टदिग्दलकलापमुखावतारबद्धान्धकारमधुपावलि संचुकोच ॥ ५३ ॥ पृथु गगनकबन्धस्कन्धचक्रं किमेतत्किमु रुधिरकपालं कालकापालिकस्य । कललभरितमन्तः किंतु तार्क्ष्याण्डखण्डं प्रजनयति वितर्कं सांध्यमर्कस्य बिम्बम् ॥ ५४ ॥ अयमपि खरयोषित्कर्णकाषायमीषद्विसृमरतिमिरोर्णाजर्जरोपान्तमर्चिः । मदकलकलविङ्कीकाकुनान्दीकरेभ्यः क्षितिरुहशिखरेभ्यो भानुमानुच्चिनोति ॥ ५५ ॥ गतवति दिननाथे पश्चिमक्ष्माधरान्तं शिशिरकरमयूखैर्निर्भरं दह्यमाना । परिहृतमिलितालिः पान्थकान्तेव दीना सपदि कमलिनीयं हास्यहीना बभूव ॥ ५६ ॥ उदयगिरीतटस्थः पद्मिनीर्बोधयित्वा मृदुतरकिरणाग्रैस्ताः स्वयं चोपभुज्य । मलिनमधुपसङ्गात्तासु संजातकोपः कृतरुधिरविरोचिर्भानुरस्तं प्रयातः ॥ ५७ ॥ अयमपि पुरुहूतप्रेयसीमूर्ध्नि पूर्णः कलश इव सुधांशुः साधुरुल्लासतीति । मदनविजययात्राकालविज्ञापनाय स्फुरति जलधिमध्ये ताम्रपात्रीव भानुः ॥ ५८ ॥ रवेरस्तं तेजः प्रमुदयति खद्योतपटली मरालाली मूका कलकलपरोलूकपटली । इदं कष्टं दृष्ट्वा चिरमसहमाना कमलिनी मदभृङ्गव्याजात्कलयति हलाहालमिव च ॥ ५९ ॥ सैरन्ध्रीकरकृष्टकङ्कणसरद्वीरध्वनिःसंचरद्दूतीसूत्रितसंधिविग्रहविधिः सोल्लासलीलाधरः । वारस्त्रीजनसज्जमानशयनः संनद्धपुष्पायुधः श्रीखण्डद्रवधौतसौधशिखरो रम्यः क्षणो वर्तते ॥६०॥ विश्लेषाकुलचक्रवाकमिथुनैरुत्पक्ष्ममाक्रन्दितं कारुण्यादिव मीलितासु नलिनीष्वस्तं च मित्रे गते । शोकेनेव दिगङ्गनाभिरभितः श्यामायमानैर्मुखैर्निःश्वासानिलधूमवर्तय इवोद्गीर्णास्तमोराजयः ॥ ६१ ॥ निर्याद्वासरजीवपिण्डकरुणा बिभ्रत्कवोष्णैः करैर्माञ्जिष्ठं रविबिम्बमम्बरतलादस्ताचलं चुम्बति । किं च स्तोकतमःकलापकलनाश्यामायमान मनाग्धूमश्यामपुराणचित्ररचनारूपं जगज्जायते ॥ ६२ ॥ संध्याताण्डवचण्डदण्डपरशुप्रारब्धभीमभ्रमीवेगस्त्रस्तकपर्दवासुकिफणामाणिक्यशङ्कावहम् । मग्नं पाथसि पश्चिमस्य जलधेर्मार्तण्डबिम्बं ततो ध्वान्तैर्भूतगणैरगाहि भुवनं मन्ये तदन्वेषिभिः ॥ ६३ ॥ पाश्चात्याम्बुधिदृष्टपूर्ववडवासंदर्शनोत्कण्ठया धावद्रथ्यतुरंगनिष्ठुरखुरक्षुण्णेऽस्तशैलस्थले । तस्मादुच्चलितेन धातुरजसा लिप्तानुरक्ताङ्गका मन्दांशुः प्रियदर्शनः खलु सहस्रांशुर्दरीदृश्यते ॥ ६४ ॥ तद्रोधोऽन्तरसंततान्धतमसं निर्भिद्य तिग्मांशुभिः संछेत्तुं बलिसद्मगं कृतमतिर्भानुर्जगाहेऽम्बुधिम् । अन्यत्संप्रति संनिपत्य

१ वराटः. २ दिवसरूपमरविन्दम्. ३ प्रकाशाभावेन परस्पर मिलिताः. ४ अशिरस्ककलेवरम्. ५ काल एव कापालिको भिक्षुः. ६ गरुडः. ७ वियोगाकुलै..

वृणुते लोके तमोमण्डलं किं चैतस्य नयत्यहो परिभवं पाथोजिनीं वल्लभाम् ॥ ६५ ॥ द्रागैन्द्रीमनुचुम्ब्य सस्मितमुखीमामोदिनीं पद्मिनीं कृत्वासौ परिरम्भसंभ्रमपरिश्रान्तां च वारस्त्रियम्। संरक्तो हिमभानुरद्य चरमां श्लिष्यत्यहो रागिणीं काश्मीरोपलसत्पयोधरभरां कान्तां दिशं वारुणीम् ॥ ६६ ॥ धृता मौलितलानलैः कवलिता कण्ठोत्थहालाहलैराली-ढाथ जटाटवीवलयितैराशीविषाणां गणैः। कीर्णा भस्मभिराहतास्थिपटलैर्विद्धा जटाग्रैरपि स्वीयामुज्झति माधुरीं हरशिरोरत्नं किमिन्दोः कला ॥ ६७ ॥ आवासोत्सुकपक्षिणः कलरुतं क्रामन्ति वृक्षालयान्कान्ताभाविवियोगभीरुरधिकं क्रन्दत्ययं कातरः। चक्राह्वो मधुपाः सरोजगहनं धावन्त्युलूको मुदं धत्ते चारुणतां गतो रविरसावस्ताचलं चुम्बति ॥ ६८ ॥ अध्वानं नैकचक्रः प्रभवति भुवनभ्रान्तिदीर्घं विलङ्घ्य प्रातः प्राप्तुं रथो मे पुन-रिति मनसि न्यस्तचिन्तातिभारः। संध्याकृष्टावशिष्टस्वकरपरिकरैः[1] स्पष्टहेमारपङ्क्त्या-कृष्यावस्थितोऽस्तक्षितिभृति नयतीवैष दिक्चक्रमर्कः[2] ॥ ६९ ॥ प्राचीमालम्बमाने घनति-मिरचये बान्धवे बन्धकीनां संप्राप्ते च प्रतीचीं शशिकरनिकरे वैरिणि स्वैरिणीनाम्। अर्धश्यामोपलार्धस्फटिकमिव दिशामन्तरालं विधत्ते कालिन्दीजह्नुकन्यामिलदमलजलस्य-न्दसंदोहमैत्रीम् ॥ ७० ॥ संध्यावध्यस्तशोणं तनुदहनचिताङ्गारमन्दार्कबिम्बं तारा नारास्थिकीर्णं विशदनरकरङ्कायमाणोज्ज्वलेन्दु। हृष्यन्नक्तंचरौघं घनतिमिरमहाधूमधूम्रा-कारं जातं लीलाश्मशानं जगदखिलमहो कालकापालिकस्य ॥ ७१ ॥ गाढं प्रौढाङ्गनाभिः सुरतरतमनःसन्मदोत्सारिताक्षं मुग्धाभिः स्त्रस्तनेत्रं रतिसमरभयं चिन्तयन्तीभिरेवम्। पा-न्थानामङ्गनाभिः ससलिलनयनं शून्यचित्ताभिरुच्चैः कष्टं दृष्टोऽस्तशैलं भृशमजयदयं मण्ड-लश्चण्डरश्मेः ॥ ७२ ॥ व्योम्नस्तापिच्छगुच्छावलिभिरिव तमोवल्लरीभिर्वियन्ते पर्यन्ता-प्रान्तवृत्त्या पयसि वसुमती नूतने मज्जतीव। वात्यासंवेगविष्वग्विततवलयितस्फीतधूम्या-प्रकाशं प्रारम्भेऽपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥ ७३ ॥

---

## चक्रवाकावस्थाख्यानम्।

रतिकेलिकलः कश्चिदेषो मन्मथमन्थरः। पश्य सुभ्रु समाश्वस्तां कादम्बश्चुम्बति प्रि-याम् ॥ १ ॥ दष्टतामरसकेसरत्यजोः क्रन्दतोर्विपरिवृत्तकण्ठयोः। निघ्नयोः सरसि चक्र-वाकयोरल्पमन्तरमनल्पतां गतम् ॥ २ ॥ आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन। सेहिरे न किरणा हिमरश्मेर्दुःखिते मनसि सर्वमसह्यम् ॥ ३ ॥ गम्यतामुपगते नयनानां लोहितायति सहस्रमरीचौ। आससाद विरहय्य धरित्रीं चक्रवाकहृदयान्य-भितापः ॥ ४ ॥ इच्छतां सह वधूभिरभेदं यामिनीविरहिणां विहगानाम्। आपुरे-

---

१ संध्याया कृष्टा उपसंहृतास्तेभ्योऽवशिष्टो यः स्वकराणां परिकर. समूहस्तद्रूपा स्पष्टा हेमनिर्मितानामराणां पङ्क्तिर्यस्मिंस्तत्. २ दिशा चक्र मण्डल रथाङ्ग च.

मिथुनानि वियोगं लङ्घ्यते न खलु कालनियोगः ॥ ५ ॥ यच्छति प्रतिमुखं दयितायै वाचमन्तिकगतेऽपि शकुन्तौ । नीयते स्म नतिमुज्झितहर्षं पङ्कजं मुखमिवाम्बुरुहिण्या ॥ ६ ॥ आयाति याति पुनरेव जलं प्रयाति पद्माङ्कुरं च विचिनोति धुनोति पक्षम् । उन्मत्तवद्भ्रमति कूजति मुक्तकण्ठः कान्तावियोगविधुरो निशि चक्रवाकः ॥ ७ ॥ एकेनाक्ष्णा प्रविततरुषा वीक्ष्यते लम्बमानं भानोर्बिम्बं जलविलुलितेनापरेण स्वकान्तम् । अह्नश्छेदो दयितविरहाशङ्किनी चक्रवाकी द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥ ८ ॥ वापीतोयं तटरुहवनं पद्मिनीपत्रशय्या चन्द्रालोको विकचकुसुमामोदहृद्यः समीरः । यत्रैतेऽपि प्रियविरहिणो दाहिनश्चक्रनाम्नस्तत्रोपायः क इव भवतु प्राणसंधारणे यः ॥ ९ ॥ चक्राह्वो विरही हतोऽपि हृदये बाणेन न त्यक्तवान्प्राणान्प्राणसमासमागमसुखध्यानैकतानश्चिरम् । स्वां छायामवलोक्य वारिणि गलद्रक्तामवेक्ष्य प्रियां भ्रान्तस्त्वद्व्रणवेदनापरिगतः कष्टं मृतः सांप्रतम् ॥ १० ॥ तीरात्तीरमुपैति रौति करुणं चिन्तां समालम्बते किंचिद्ध्यायति निश्चलेन मनसा योगीव युक्तेक्षणः । स्वां छायामवलोक्य कूजति पुनः कान्तेति मुग्धः खगो धन्यास्ते भुवि ये निवृत्तमनसो धिग्दुःखिताः कामिनः ॥ ११ ॥ मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति क्रन्दत्सु भ्रमरेषु वीक्ष्य दयिताश्लिष्टं परः सारसम् । चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता वक्त्रे केवलमर्गलेव निहिता प्राणस्य निर्गच्छतः ॥ १२ ॥ भुक्त्वा भोक्तुं न भुङ्क्ते कुटिलबिसलतां कोटिमिन्दोर्वितर्कात्ताराकारा तृषार्तः पिबति न पयसां विप्रुषः पत्रसंस्थाः । छायामम्भोरुहाणामलिकुलसबलां वेत्ति संध्यामसंध्यां कान्ताविश्लेषभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः ॥ १३ ॥

---

## संध्यावर्णनम् ।

अनुरागवती संध्या दिवसस्तत्पुरःसरः । अहो दैवगतिश्चित्रा तथापि न समागमः ॥ १ ॥ उच्चैस्तरादम्बरशैलमौलेश्च्युतो रविर्गैरिकगण्डशैलः । तस्यैव पातेन विचूर्णितास्य संध्यारजोराजिरिवोज्जिहीते ॥ २ ॥ विहिताञ्जलिर्जनतया दधती विकसत्कुसुम्भकुसुमारुणताम् । चिरमुज्झतापि तनुरौज्झदसौ न पितृप्रसूः प्रकृतिमात्मभुवः ॥ ३ ॥ अथ सान्द्रसांध्यकिरणारुणितं हरिहेतिहूति मिथुनं पततोः । पृथगुत्पपात विरहार्तिदलद्धृदयस्नुतासृगनुलिप्तमिव ॥ ४ ॥ निलयः श्रियः सततमेतदिति प्रथितं यदेव जलजन्म तया । दिवसात्ययात्तदपि मुक्तमहो चपलाजनं प्रति न चाद्य मदः ॥ ५ ॥ दिवसोऽनुमित्रभगमद्भिलयं किमिहास्यते बत मयावलया । रुचिभर्तुरस्य विरहाधिगमादिति संध्ययापि सपदि व्यगमि ॥ ६ ॥ मुग्धस्य केलिविजितस्मरचापयष्टेरातन्वती रुचिमतीव सुधाकरस्य । रागोद्धुरा स्फुटमुदञ्चिततारकश्रीः संध्याविरस्ति ननु कापि पतिंवरेव ॥ ७ ॥

---

## रजनिवर्णनम् ।

व्योमपात्रमपि चैकपाणिना विस्फुटोडुकुसुमानि बिभ्रती । अन्यपाणिकलितेन्दुदर्पणा कामिनीव रजनीयमागता ॥ १ ॥ नृपतिपुरुषशङ्कितप्रचारं परगृहदूषणनिश्चितैकवीरम् । घनतिमिरनिरुद्धसर्वभावा रजनिरियं जननीव संवृणोति ॥ २ ॥ अस्तोदयाचलविलम्बिरवीन्दुबिम्बव्याजात्क्षणं श्रवणयोर्निहितारविन्दा । ताराच्छलेन कुसुमानि समुत्क्षिपन्ती संध्येयमागतवती प्रमदेव काचित् ॥ ३ ॥ शशाङ्के संनद्धे भरत इव संध्यायवनिका तिरोभूत्वा पुष्पाञ्जलिमिव विकीर्योडुनिकरान् । कलं गायन्तीभिः कुमुदवनभृङ्गीभिरधुना नभोरङ्गं प्राप्ता विहरति निशालासिकवधूः ॥ ४ ॥ उन्मुक्ताभिर्दिवसमधुना सर्वतस्ताभिरेव स्वच्छायाभिर्निचुलितमिव प्रेक्ष्यते विश्वमेतत् । पर्यन्तेषु ज्वलति जलधौ रत्नसानौ च मध्ये चित्राङ्गीयं रमयति तमःस्तोमनीला धरित्री ॥ ५ ॥ ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थीन्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् । द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्रा कपाले न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ६ ॥

---

## तमोवर्णनम् ।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ १ ॥ अविज्ञातविशेषस्य सर्वतेजोपहारिणः । स्वामिनो निर्विवेकस्य तमसश्च किमन्तरम् ॥ २ ॥ आपूरितमिदं श्यामतमसं तमसैरलम् । ब्रह्माण्डमण्डलं भाति सकज्जलकरण्डवत् ॥ ३ ॥ तनुलग्ना इव ककुभः क्ष्मावलयं चरणचारपात्रमिव । वियदपि चालिकदग्धं मुष्टिग्राह्यं तमः कुरुते ॥ ४ ॥ अम्बरविपिनमिदानीं तिमिरवराहोऽवगाहते जलधेः । रोमसु यदस्य लग्नास्तारकजलबिन्दवो भान्ति ॥ ५ ॥ घटितामिवाञ्जनपुञ्जैः पूरितामिव मृगमदक्षोदैः । ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम् ॥ ६ ॥ औषसातपभयादपलीनं वासरच्छविविरामपटीयः । संनिपत्य शनकैरिव निम्नादन्धकारमुदवाप समानि ॥ ७ ॥ एकतामिव यतस्य विवेकः कस्यचिन्न महतोऽप्युपलेभे । भास्वता निदधिरे भुवनानामात्मनीव पतितेन विशेषाः ॥ ८ ॥ रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु । पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥ ९ ॥ रात्रिरागमलिनानि विकाशं पङ्कजानि रहयन्ति विहाय । स्पष्टतारकमियाय नभःश्रीर्वस्तुमिच्छति निरापदि सर्वः ॥ १० ॥ नोर्ध्वमीक्षणगतिर्न चाप्यधो नाभितो न पुरतो न पृष्ठतः । लोक एष तिमिरौघवेष्टितो गर्भवास इव वर्तते निशि ॥ ११ ॥ शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् । सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां हतान्तरम् ॥ १२ ॥

---

१ अङ्गलेपः. २ कौतुके. ३ योगिनी.

पिदधति तिमिरे[2] समस्तलोकं प्रलयमहाब्धिनिभे भृतोच्चनीचे । व्यरुचदुडुगणोऽवलक्षरोचिर्बहुविधफेनसमूहतुल्यरूपः ॥ १३ ॥ पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ । अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे ॥ १४ ॥ व्यसरन्नु भूधरगुहान्तरतः पटलं बहिर्बहलपङ्करुचि । दिवसावसानपटुनस्तमसो बहिरेत्य चाधिकमभक्त गुहाः ॥ १५ ॥ किमलम्बताम्बरविलग्नमधः किमवर्धतोर्ध्वमवनीतलतः । विससार तिर्यगथ दिग्भ्य इति प्रचुरीभवन्न निरधारि तमः ॥ १६ ॥ स्थगिताम्बरक्षितितले परितस्तिमिरे जनस्य दृशमन्धयति । दधिरे रसाञ्जनमपूर्वमतः प्रियवेश्मवर्त्म सुदृशो ददृशुः ॥ १७ ॥ अवधार्य कार्यगुरुतामभवन्न भयाय सान्द्रतमसन्तमसम् । सुतनोः स्तनौ च दयितोपगमे तनुरोमराजिपथवेपथवे ॥ १८ ॥ ददृशेऽपि भास्कररुचाह्नि न यः स तमीं तपोभिरभिगम्य तताम् । द्युतिमग्रहीद्ग्रहगणो लघवः प्रकटीभवन्ति मलिनाश्रयतः ॥ १९ ॥ अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपशिखाः । समयेन तेन चिरसुप्तमनोभवबोधनं सममबोधिषत ॥ २० ॥ विवस्वतानायिषतेव मिश्राः स्वगोसहस्रेण समं जनानाम् । गावोऽपि नेत्रापरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारैः ॥ २१ ॥ चरमगिरिनिकुञ्जमुष्णभानौ भगवति गच्छति विप्रयोगखिन्ना । मुकुलितनयनाम्बुजा धरित्री वपुषि बभार तमांसि शैवलानि ॥ २२ ॥ काश्मीरगौरवपुषामभिसारिकाणामाबद्धरेखमभितो मणिमञ्जरीभिः । एतत्तमालदलनीलतमं तमिस्रं तत्प्रेमहेमनिकषोपलतां तनोति ॥ २३ ॥ उद्दामदिग्द्विरदचञ्चलकर्णपूरगण्डस्थलोच्चलदलिस्तवकाकृतीनि । मीलन्नभांसि मृगनाभिसमानभांसि दिक्कन्दरेषु विलसन्तितमां तमांसि ॥ २४ ॥ सिन्धोः सुधांशुशकलं परिगृह्य संध्याक्षेमं करी निपतिताम्बरभूरुहाग्रे । चञ्चूपुटेन चपलेन तया विकीर्णास्ताराभिषेण पतिता इव पक्षखण्डाः ॥ २५ ॥ व्यसनिनि इव विद्या क्षीयते पङ्कजश्रीर्गुणिनि इव विदेशे दैन्यमायान्ति भृङ्गाः । कुनृपतिरिव लोकं पीडयत्यन्धकारो धनमिव कृपणस्य व्यर्थतामेति चक्षुः ॥ २६ ॥ इदं नभसि भीषणभ्रमदुलूककोलाहलैर्निशाचरविलासिनीनिवहदत्तनेत्रोत्सवम् । परिस्फुरति निर्भरप्रचुरपङ्कमग्नोल्लसद्वराहकुलमांसलप्रबलबद्धमन्धं तमः ॥ २७ ॥ पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशं क्रमात्क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति । उपेतः पीनत्वं तदनु भुवनस्येक्षणपथं तमःसंघातोऽयं हरति हरकण्ठद्युतिहरः ॥ २८ ॥ अमुष्मिन्नुद्यानद्रुमकुहरनीरन्ध्रभरिते तमःखण्डे पिण्डीकृतबहलकालायसघने । यतामद्यास्माकं कथमपि पुरोन्यस्तचरणं निमेषेऽप्युन्मेषे नहि नहि विशेषो नयनयोः ॥ २९ ॥ काकोल कलकण्ठिका कुवलयं कादम्बिनी कर्दमः कंसारिः कबरी कु-

१ तिरोदधति सति २ अन्धकारे. ३ धवलकान्तिः. ४ किरणाः. ५ विषभेदः. ६ मेघपङ्क्तिः. ७ केशपाशः. ८ लङ्कलतिका.

पाणलतिका कस्तूरिका कज्जलम् । कालिन्दी कषपट्टिका [1]करिघटा कामारिकण्ठस्थली यस्यैते [2]करदा भवन्ति सखि तद्वन्दे विनिद्रं तमः ॥ ३० ॥ किं भूमौ परितः स्फुरन्ति किरणाः कस्तूरिकाया रसैः सिक्ताः किं निखिला दिशः किमखिलं व्याप्तं सखीभिर्नभः । किं व्याप्तं भुवनं समस्तमपि च श्रीकण्ठकण्ठत्विषा कालिन्दीजलकान्तिभाजि निबिडे जातेऽन्धकारेऽधुना ॥ ३१ ॥ सद्यः सान्द्रमषीविलुप्तककुभः स्निग्धेन्द्रनीलेन्दवव्यामीलन्नभसो निरन्तरमिलन्नीलीरसद्योतिनः । एते कोकिलकायकालिमहृतो लुप्यन्ति वृत्तिं दिशोरुन्निद्राननपुञ्जमेचकरुचो भीमास्तमप्रक्रमाः ॥ ३२ ॥ चिन्वच्चोरचि[3]कीर्षितानि घटयद्वेतालगोष्ठीसुखं तन्वानं [4]शैवसाधनोद्धतरसं निर्व्याजवीरात्मनाम् । कुर्वत्कामकृशानुतप्तमनसां गुप्ताङ्गनासंगमं दृप्यत्कोकिलकालकण्ठमलिनं ध्वान्तं समुज्जृम्भते ॥ ३३ ॥ नाकाशं न दिशो न भूधरकुलं नाम्भोदयो न क्षितिर्न द्यौर्नाम्बुधरा न तीव्रकिरणो नेन्दुर्न तारागणः । एतैः षट्पदकायकान्तिपटलीपाण्डित्यवैतण्डिकैः कल्लोलैस्तमसामसांप्रतमयं विश्वव्ययः कल्प्यते ॥ ३४ ॥ एतद्व्योमवनीवराहवलयं विश्वैकवीरस्मरस्कन्धावारमदान्धसिन्धुरकुलं श्यामावधूकैशिकम् । चक्षुष्याञ्जनवस्तुघूकसदसां विश्लिष्टचक्राह्वयः स्तोमान्तर्जरधूमकेतनमहाधूम्या तमः स्थीयते ॥ ३५ ॥ सर्वे ध्वान्तमिदं वदन्तु बहुधा सिद्धान्त एवं तु नः स्वाधारेषु करेषु पुष्करमणेः स्रस्तेषु नूनं शनैः । अस्तालम्बतयाम्बरेण पतता ग्रस्ते समस्ते जगत्युन्मीलत्करकन्दलैरपि विधोस्तत्तावदुत्तार्यते ॥ ३६ ॥ विश्वं चाक्षुषमस्तमस्ति हि तमःकैवल्यमौपाधिकप्राच्यादिव्यवहारबीजविरहाद्दिङ्मात्रमेव स्थितम् । गृह्यन्ते भयहेतवः पटुभिरप्यक्षान्तरैर्भाति च ध्वान्तेनातिघनेन वस्तुवचसा ज्ञातः स्वरेणामुकः ॥ ३७ ॥ व्योम्नि प्राङ्गणसीम्नि सांध्यकिरणं विस्तार्य चेलाञ्चलं ध्वान्तैः कार्मणपांसुभिश्च जगतां द्राङ् मोहयित्वा दृशौ । ताराशौक्तिकमौक्तिकानि विहगश्रेणीरवच्छद्मना जिह्नीकृत्य च मायिकः स्मरनटो वक्राद्बहिर्वर्षति ॥ ३८ ॥ उत्खातच्छिन्नसंध्यारुणकमलवनो व्योमकासारमध्यं मन्ये मत्तो निशीथाह्वयवनमहिषो मङ्क्ष्वविक्षन्निमङ्क्षुः । तत्कालोद्भिद्यमानैः सह तनुपृथुभिस्तारकाबुद्बुदौघैस्तस्मादेवोज्जिहीते कलुषितभुवनं भीषणो ध्वान्तपङ्कः ॥ ३९ ॥ चूडारत्नैः स्फुरद्भिर्विषधरविवराण्युज्ज्वलानुज्ज्वलानि प्रेक्षन्ते चक्रवाका मनसि निविशते सूर्यकान्तात्कृशानुः । किं चामी शल्ययन्तास्तिमिरमुभयतो निर्भराहस्तमिस्रा संघट्टोत्पिष्टसंध्याकणनिकरपरिस्पर्धिनो भान्ति दीपाः ॥ ४० ॥

---

## अभिसारिकासंचारकथनम् ।

मेघा वर्षन्तु गर्जन्तु मुञ्चन्त्वशनिमेव वा । गणयन्ति न शीतोष्णं रमणाभिमुखाः स्त्रियः

---

१ गजसमूहः. २ करप्रदा. ३ कर्तव्यकर्माणि. ४ प्रेतसाधनविधिः.

॥ १ ॥ मल्लिकाभारवाहिण्यः सर्वाङ्गेणार्द्रचन्दनाः । क्षौमवन्त्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥ २ ॥ मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः । अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः ॥ ३ ॥ गर्ज वा वर्ष वा शक्र मुञ्च वा शतशोऽशनिम् । न शक्या हि स्त्रियो रोद्धुं प्रस्थिता दयितं प्रति ॥ ४ ॥ प्राणेशमभिसरन्ती पथि स्खलन्ती सुपिच्छलं मुग्धा । अवलम्बनाय वारां धारासु करं प्रसारयति ॥ ५ ॥ अयि यामिनि गजगामिनि कामिनि सौदामिनीव यं व्रजसि । जलदेनेव न जाने कति कति सुकृतानि तेन विहितानि ॥ ६ ॥ जलधर निर्लज्जस्त्वं यन्मां दयितस्य वेश्म गच्छन्तीम् । स्तनितेन भीषयित्वा धाराहस्तैः परामृशसि ॥ ७ ॥ यद्वदहल्याहेतोर्मृषा वदसि शक्र गौतमोऽस्मीति । तद्वन्ममापि दुःखं निरवेक्ष्य निवार्यतां जलदः ॥ ८ ॥ यदि गर्जति वारिधरो गर्जतु तन्नाम निष्ठुराः पुरुषाः । अयि विद्युत्प्रमदाना त्वमपि च दुःखं न जानासि ॥ ९ ॥ ग्भसादभिसर्तुमुद्यतानां वनितानां सखि वारिदो विवस्वान् । रजनी दिवसोऽन्धकारमर्चिर्वापिनं वेश्म विमार्ग एव मार्गः ॥ १० ॥ चन्द्रोदये चन्दनमङ्ककेषु विहस्य विन्यस्य वेनिर्गतायाः । मनो निहन्तुं मदनोऽपि बाणान्करेण कौन्दान्बिभरांबभूव ॥ ११ ॥ ...रदुरसिजभारभङ्गुराङ्गी किसलयकोमलकान्तिना पदेन । अथ कथय कथं सहेत गन्तुं न...दि न निशासु मनोरथो रथः स्यात् ॥ १२ ॥ संचरन्ति मृगनाभिचर्चिता मेचकाम्बरकृ...गुण्ठनाः । प्राणनाथमभिसर्तुमुद्यताः सुभ्रुवस्तिमिरदेवता इव ॥ १३ ॥ क्व प्रस्थितासि ...भोरु घने[2] निशीथे[3] प्राणाधिपो वसति यत्र मनःप्रियो मे । एकाकिनी वद कथं न ...पि बाले नन्वस्ति पुङ्खितशरो[4] मदनः सहायः ॥ १४ ॥ मन्दं निधेहि चरणौ परिधेहि ...तेर वासः पिधेहि वलयावलिमञ्चलेन । मा जल्प साहसिनि शारदचन्द्रकान्तदन्तांशव...मासि समापयन्ति ॥ १५ ॥ भीतासि नैव भुजगात्पथि मद्गुजस्य सङ्गे पुनः किमपि पार्वती...करोषि । अम्भोधरध्वनिभिरक्षुभितासि तन्वि मद्वाचि साचिवदनासि किमाचरामि ॥ २४ ॥ मूढे निरन्तरपयोधरया मयैव कान्तः सहाभिरमते यदि किं तवात्र । मां गमृगीदृ...ते मुहुर्विनिवारयन्ती मार्गं रुणद्धि कुपितेव निशा सपत्नी ॥ १७ ॥ उरसि निन्द्रि...ारो हारः कृता जघने घने कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ । प्रियमभिप...यैवं मुग्धे त्वमाहतडिण्डिमा यदि किमधिकत्रासोत्कम्पं दिशः समुदीक्षसे ॥ १८ ॥ क...ल्प दशनत्विषा भवति ते तमिस्रक्षतिस्तरंगय दृगञ्चलं भवतु ते न गाढं तमः । अ...ह सखि साध्वस पथि जहीहि निम्नोन्नते स्मरं समदसिन्धुरं समधिरुह्य निर्गच्छसि ॥ १९ ॥ देवे वर्षत्यशनपवनव्यापृता वह्निहेतोर्गेहाद्गेहं फलकनिचितैः सेतुभिः पङ्कभीताः । नीध्रमान्तानविरलजलान्पाणिभिस्ताडयित्वा सूर्यच्छत्रस्थगितशिरसो योषितः संचरन्ति

१ दुकूलधारिण्यः. २ निबिडे. ३ अर्धरात्रे. ४ पुङ्खिता शरा येन.

॥ २० ॥ वातोद्धूतमुखी प्रनष्टतिलका तोयौघनीलांशुका मेघानां निनदेन भीतहृदया गत्वा प्रियस्यालयम् । द्वारं नेच्छति लज्जया प्रलपितुं देहीति वर्षाहता पादौ नूपुरकर्दमप्रतिहतौ संशब्दयन्ती स्थिता ॥ २१ ॥ मुक्तं मौक्तिकदाम हेमवलयश्रेणी समुत्सारिता वासो नीलमुरीकृतं नियमितो मञ्जीरकोलाहलः । गच्छन्त्यास्तव साहसं न सहते तन्वङ्गि संगोपनं धम्मिल्लच्युतमल्लिकापरिमलप्रौढो निशीथानिलः ॥ २२ ॥ जाताः प्रासादपालीकनकवलभिकान्यस्तमाणिक्यदीपच्छायाविच्छर्दतुच्छीकृतविरलतमा ये निशीथान्धकाराः । तेऽमी स्फारीक्रियन्ते प्रतिविशिखमितः कान्तसंकेतधावद्वामभ्रूमुक्तनेत्रोत्पलतरलतरत्तारकामेचकिम्ना ॥ २३ ॥ उत्तंसः केकिपिच्छैर्मरकतवलयैः श्यामलैर्दोःप्रकाण्डे हारः सान्द्रेन्द्रनीलैर्मृगमदरचितो वक्त्रपत्रप्रपञ्चः । नीलाब्जैः शेखरश्रीरसितवसनता चेत्यभीकाभिसारे संप्रत्येणेक्षणानां तिमिरभरसखी वर्तते वेषलीला ॥ २४ ॥ मलयजरसविलिप्ततनवो नवहारलताविभूषिताः सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः । शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः प्रियवसतिं प्रयान्ति सुखमेव निरस्तभयोऽभिसारिकाः ॥ २५ ॥

## नक्षत्रोदयवर्णनम् ।

घनतरतिमिरघुणोत्कटजग्धानामिव पतन्ति काष्ठानाम् । छिद्रैरमीभिरुडुभिः किरणव्याजेन चूर्णानि ॥ १ ॥ उद्धर्तुं किल शैलकेलिरभसस्रस्तानि पाथोनिधेरन्तर्भूषणमौक्तिकानि दिविजस्त्रीभिः समुत्कण्ठया । गाढं तत्र निमज्जितेन रविणा बद्ध्वा दृढं रश्मिभिः प्रोत्क्षिप्तानि निपत्य तानि गगने तारापदेशं दधुः ॥ २ ॥

## चन्द्रोदयवर्णनम् ।

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना[1] । नेत्रानन्देन चन्द्रेण माहेन्द्री[2] दिगलंकृता ॥
कुमुदेष्वधिकं भान्ति पतिताश्चन्द्ररश्मयः । अतिप्रकृष्टशीलेषु कुलेष्विव समृद्धयः ॥
आनन्दं कुमुदादीनामिन्दुः कन्दलयन्नयम्[3] । लङ्घयत्यम्बराभोगं हनूमानिव सागरम् ॥
पिनष्टीव तरंगाग्रैः समुद्रः फेनचन्दनम् । तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥
नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति । अधुना विनिरुद्धाशमविशीर्णमिदं तमः ॥
नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः । पतन्ति शशिनः पादा भासयन्तः क्षमातलम् ॥
ज्योत्स्नाचयः पयःपूरस्तारकाः कैरवानि च । राजति व्योमकासारराजहंसः सुधाकरः ॥ ७
इदमाभाति गगने भिन्दानं संततं तमः । अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥ ८
उदयतटान्तरितमियं प्राची सूचयति दिङ्निशानाथम् । परिपाण्डुना मुखेन प्रियमिव हृदय

---

१ विरहिणीकपोलवत्पाण्डुरेण. २ प्राची. ३ चन्द्रम्.

स्थितं रमणी ॥ ९ ॥ अथ पथिकवधूदहनः शनकैरुदभून्निशाकरालोकः । कुमुदप्रबोधदूतो व्यसनगुरुश्चक्रवाकीनाम् ॥ १० ॥ त्रिनयनचूडारत्नं मित्रं सिन्धोः कुमुद्वतीदयितः । अयमुदयति घुसृणारुणरमणीवदनोपमश्चन्द्रः ॥ ११ ॥ हंसो यथा राजति पञ्जरस्थः सिंहो यथा मन्दरकन्दरस्थः । वीरो यथा दर्पितकुञ्जरस्थश्चन्द्रोऽपि बभ्राम तथाम्बरस्थः ॥१२॥ आकाशवापीसितपुण्डरीकं शाणोपल मन्मथसायकानाम् । पश्योदितं शारदपक्ष्मलाक्षि संध्याङ्गनाकन्दुकमिन्दुबिम्बम् ॥ १३ ॥ वीथीषु वीथीषु विलासिनीनां मुखानि संवीक्ष्य शुचिस्मितानि । जालेषु जालेषु करं प्रसार्य लावण्यभिक्षामटतीव चन्द्रः ॥ १४ ॥ नभोलताकुञ्जमुपागतायाः प्रमोदपर्याकुलतारकायाः । निशामयायाः स्फुरता करेण शशी तमःकञ्चुकमुन्मुमोच ॥ १५ ॥ मनोजराजस्य सितातपत्रं श्रीखण्डचित्रं हरिदङ्गनायाः । विराजति व्योम सरःसरोजं कर्पूरपूरप्रथमिन्दुबिम्बम् ॥ १६ ॥ अथ मन्मथवाहिनीपरागः किमपि हि ज्योतिरुदस्फुरत्पुरस्तात् । तिमिरस्य जरा चकार दूरं कुलटाकेलिवनीदवानलार्चिः ॥ १७ ॥ नवकुङ्कुमचर्चिका रजन्या गगनाशोकतरोः प्रवालपङ्क्तिः । मणिकुन्तलता स्मरस्य मन्ये शशिनः प्राथमिकी मयूखलेखा ॥ १८ ॥ उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् । यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥ १९ ॥ करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य । विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशोमुखं सुधांशुः ॥ २० ॥ तत उदयगिरेरिवैक एव स्फुरितगुणद्युतिसुन्दरः कलावान् । इह जगति महोत्सवस्य हेतुर्नयनवतामुदियाय बालचन्द्रः ॥ २१ ॥ अन्धकारगरलं यतो जगन्मोहकारि भृशमेति नित्यशः । उज्ज्वलं जठरमोषधीतेरञ्जनार्थमभवत्ततः प्रिये ॥ २२ ॥ मानिनीजनविलोचनपातानुष्णबाष्पकलुषान्प्रतिगृह्य । मन्दमन्दमुदितः प्रययौ खं भीत भीत इति शीतमयूखः ॥ २३ ॥ शंकरार्धतनुबद्धपार्वतीकुङ्कुमाक्तकुचकोरकाकृतिः । सूच्यते कमलिनीभिरुन्नमत्पद्मकोशकरलीलया शशी ॥ २४ ॥ इन्दुरिन्दुरिति किं दुराशया बिन्दुरेष पयसो विलोक्यते । नन्विदं विजयते मृगीदृशः श्यामकोमलकपोलमाननम् ॥ २५ ॥ रुद्धनिर्गमनमा दिनक्षयात्पूर्वदृष्टतनुचन्द्रिकास्मितम् । एतदुद्गिरति रात्रिचोदिता दिग्रहस्यमिव चन्द्रमण्डलम् ॥ २६ ॥ पश्य पक्वफलिनीफलत्विषा बिम्बलाञ्छितवियत्सरोम्भसा । विप्रकृष्टविवरं हिमांशुना चक्रवाकमिथुनं विडम्ब्यते ॥ २७ ॥ अङ्गुलीभिरिव केशसंचयं संनिकृष्य तिमिरं मरीचिभिः । कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥ २८ ॥ रक्तभावमपहाय चन्द्रमा जात एव परिशुद्धमण्डलः । विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया

१ आकाश एव वापी तस्याः श्वेतकमलम्. २ शाणपाषाण.. शस्त्रादितीक्ष्णकरणार्हः पाषाण इति यावत्. ३ सौन्दर्यस्य याचनाम्.

॥ २९ ॥ उन्नतेषु शशिनः प्रभा स्थिता निम्नसंश्रयपरं निशातमः । नूनमात्मसदृशी प्रकल्पिता वेधसैव गुणदोषयोर्गतिः ॥ ३० ॥ चन्द्रपादजनितप्रवृत्तिभिश्चन्द्रकान्तजलबिन्दुभिर्गिरिः । मेखलातरुषु निद्रितानमून्बोधयत्यसमये शिखण्डिनः ॥ ३१ ॥ उन्नतावनतभागवत्तया चन्द्रिका सतिमिरा गिरेरियम् । भक्तिभिर्बहुविधाभिरर्पिताभाति भूतिरिव मत्तदन्तिनः ॥ ३२ ॥ एतदुच्छ्वसितपीतमैन्दवं सोढुमक्षममिव प्रभारसम् । मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमा निबन्धनात् ॥ ३३ ॥ साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके । उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥ ३४ ॥ आननानि हरिणीनयनानामद्भुतानि च समीक्ष्य जगत्याम् । लज्जयैव घनमण्डललीनो मन्दमन्दमहहेन्दुरुदेति ॥ ३५ ॥ व्यानशे शशधरेण विमुक्तः केतकीकुसुमकेसरपाण्डुः । चूर्णमुष्टिरिव लम्भितकान्तिर्वासवस्य दिशमंशुसमूहः ॥ ३६ ॥ उज्झती शुचमिवाशु तमिस्रामन्तिकं व्रजति तारकराजे । दिक्प्रसादगुणमण्डनमूहे रश्मिहासविशदं मुखमैन्द्री ॥ ३७ ॥ नीलनीरजनिभे हिमगौरं शैलरुद्धवपुषः सितरश्मेः । खे रराज निपतत्करजालं वारिधेः पयसि गाङ्गमिवाम्भः ॥ ३८ ॥ यां निरुन्धदतिनीलघनाभं ध्वान्तमुद्यतकरेण पुरस्तात् । क्षिप्यमाणमसितेतरभासा शंभुनेव करिचर्म चकासे ॥ ३९ ॥ अन्तिकान्तिकगतेन्दुविसृष्टे जिह्मतां जहति दीधितिजाले । निःसृतस्तिमिरभारनिरोधादुच्छ्वसन्निव रराज दिगन्तः ॥ ४० ॥ लेखया विमलविद्रुमभासा संततं तिमिरमिन्दुरुदासे । दंष्ट्रया कनकटङ्कपिशङ्ग्या मण्डलं भुव इवादिवराहः ॥ ४१ ॥ दीपयन्नथ नभः किरणौघैः कुङ्कुमारुणपयोधरगौरः । हेमकुम्भ इव पूर्वपयोधेरुन्ममज्ज शनकैस्तुहिनांशुः ॥ ४२ ॥ उन्नतेन्दुमविभिन्नतमिस्रां पश्यति स्म रजनीमवितृप्तः । व्यंशुकस्फुटमुखीमतिजिह्मां व्रीडया नववधूरिव लोकः ॥ ४३ ॥ न प्रसादमुचितं गमिता द्यौर्नोद्धृतं तिमिरमद्रिवनेभ्यः । दिङ्मुखेषु न च धा[illegible] विकीर्णं भूषितैव रजनी हिमभासा ॥ ४४ ॥ मानिनीजनविलोचनपातानुष्णबाष्पकलुषान्प्रतिगृह्णन् । मन्दमन्दमुदितः प्रययौ खं भीतभीत इव शीतमयूखः ॥ ४५ ॥ श्लिष्यतः प्रियवधूरुपकण्ठं तारकास्ततकरस्य हिमांशोः । उद्वमन्नभिरराज समन्तादङ्गराग इव लोहितरागः ॥ ४६ ॥ प्रेरितः शशधरेण करौघः संहतान्यपि नुनोद तमांसि । क्षीरसिन्धुरिव मन्दरभिन्नः काननान्यविरलोच्चतरूणि ॥ ४७ ॥ शारतां गमितया शशिपादैश्छायया विटपिनां प्रतिपेदे । न्यस्तशुक्लबलिचित्रतलाभिस्तुल्यता वसतिवेश्ममहीभिः ॥ ४८ ॥ गन्धमुद्धतरजःकणवाही विक्षिपन्विकसतां कुमुदानाम् । आदुधाव परिलीनविहङ्गा यामिनीमरुदपा वनराजीः ॥४९॥ संविधातुमभिषेकमुदासे मन्मथस्य लसदंशुजलौघः । यामिनीवनितया ततचिह्नः सोत्पलो रजतकुम्भ इवेन्दुः ॥ ५० ॥ ओजसापि खलु नूनमनूनं नासहायमुपयाति जयश्रीः । यद्विभुः शशिमयूखसखः सन्नाददे विजयि चापमनङ्गः ॥ ५१ ॥

कलितमम्बरमाकलयन्करैर्मृदितपङ्कजकोशपयोधरः । विकसदुत्पलनेत्रविलोकितः सखि निशां सरसीकुरुते विधुः ॥ ५२ ॥ वसुधान्तनिःसृतमिवाहिपतेः पटलं फणामणिसहस्ररुचाम् । स्फुरदंशुजालमथ शीतरुचः ककुभं समस्कुरुत माघवनीम् ॥ ५३ ॥ विशदप्रभापरिगतं विबभावुदयाचलव्यवहितेन्दुवपुः । मुखमप्रकाशदशनं शनकैः सविलासहासमिव शक्रदिशः ॥ ५४ ॥ कलया तुषारकिरणस्य पुरः परिमन्दभिन्नतिमिरौघजटम् । क्षणमभ्यपद्यत जनैर्न मृषा गगन गणाधिपतिमूर्तिरिति ॥ ५५ ॥ नवचन्द्रिकाकुसुमकीर्णतमः कबरीभृतो मलयजार्द्रमिव । ददृशे ललाटतटहारि हरेर्हरितो मुखे तुहिनरश्मिरलम् ॥ ५६ ॥ प्रथमं कलाभवदथार्धमथो हिमदीधितिर्महदभूदुदितः । दधति ध्रुवं क्रमश एव न तु द्युतिशालिनोऽपि सहसोपचयम् ॥ ५७ ॥ उदमज्जि कैटभजितः शयनादपनिद्रपाण्डुरसरोजरुचा । प्रथमप्रबुद्धनदराजसुता वदनेन्दुनेव तुहिनद्युतिना ॥ ५८ ॥ अथ लक्ष्मणानुगतकान्तवपुर्जलधिं विलङ्घ्य शशिदाशरथिः । परिवारितः परित ऋक्षगणैस्तिमिरौघराक्षसकुलं बिभिदे ॥ ५९ ॥ उपजीवति स्म सततं दधतः परिमुग्धता वणिगिवोडुपतेः । घनवीथिवीथिमवतीर्णवतो निधिरम्भसामुपचयाय कलाः ॥ ६० ॥ रजनीमवाप्य रुचमाप शशी सपदि व्यभूषयदसावपि ताम् । अविलम्बितक्रममहो महतामितरेतरोपकृतिमच्चरितम् ॥ ६१ ॥ दिवसं भृशोष्णरुचिपादहतां रुदतीमिवानवरतालिरुतैः । मुहुरामृशन्मृगधरोऽग्रकरैरुदशिश्वसत्कुमुदिनीवनिताम् ॥ ६२ ॥ प्रतिकामिनीति ददृशुश्चकिताः स्मरजन्मधर्मपयसोपचिताम् । सुदृशोऽभिभर्तृशशिरश्मिगलज्जलबिन्दुमिन्दुमणिदारुवधूम् ॥ ६३ ॥ अमृतद्रवैर्विदधदब्जदृशामपमार्गमोषधिपतिः स्म करैः । परितो विसर्पि परितापि भृशं वपुषोऽवतारयति मानविषम् ॥ ६४ ॥ अमलात्मसु प्रतिफलन्नभितस्तरुणीकपोलफलकेषु मुहुः । विससार सान्द्रतरमिन्दुरुचामधिकावभासितदिशां निकरः ॥ ६५ ॥ उपगूढवेलमलघूर्मिभुजैः सरितामचुक्षुभदधीशमपि । रजनीकरः किमिव चित्रमहो यदुरागिणाङ्गणमनङ्गलघुम् ॥ ६६ ॥ भवनोदरेषु परिमन्दतया शयितोऽलसः स्फटिकयष्टिरुचः । अवलम्ब्य जालकमुखोपगतानुदतिष्ठदिन्दुकिरणान्मदनः ॥ ६७ ॥ अविभावितेषुविषयः प्रथमं मदनोऽपि नूनमभवत्तमसा । उदिते दिशः प्रकटयत्यमुना यदधर्मधाम्नि धनुराचकृषे ॥ ६८ ॥ युगपद्विकाशमुदयाद्गमिते शशिनः शिलीमुखगणोऽलभत । द्रुतमेत्य पुष्पधनुषो धनुषः कुमुदेऽङ्गनामनसि चावसरम् ॥ ६९ ॥ ककुभां मुखानि सहसोज्ज्वलयन्दधदाकुलत्वमधिकं रतये । अदिदीपदिन्दुरपरो दहनः कुसुमेषुमत्रिनयनप्रभवः ॥ ७० ॥ ख्याता वयं समधुपा मधुकोशवत्यश्चन्द्रः प्रसारितकरो द्विजराज एषः । अस्मत्समागमकृतोऽस्य पुनर्द्वितीयो मा भूत्कलङ्क इति संकुचिता नलिन्यः ॥ ७१ ॥ उद्गर्भहूणतरुणीरमणोपमर्दभुग्नोन्नतस्तननिवेशनिभं हिमांशोः । बिम्बं कठोरबिसकाण्डकडारमेतदम्भापदं प्रथममग्रकरैर्व्यनक्ति ॥ ७२ ॥ तारा-

क्षतान्प्रविकिरन्कलकण्ठनादान्मन्त्राक्षराणि निगदन्कुसुमेषुरेषः । लाभाय वासरमणेर्मुषितस्य सायं संचारयत्यमृतदीधितिकांस्यपात्रम् ॥ ७३ ॥ एतद्विभाति चरमाचलचूडचुम्बिहिण्डीरपिण्डरुचिशीतमरीचिबिम्बम् । उज्ज्वालितस्य रजनीं मदनानलस्य धूमं दधत्प्रकटलाञ्छनकैतवेन ॥ ७४ ॥ भूयस्तराणि यदमूनि तमस्विनीषु ज्योत्स्नीषु च प्रविरलानि ततः प्रतीमः । संध्यानलेन भृशमम्बरमूषिकायामावर्तितैरुडुभिरेव कृतोऽयमिन्दुः ॥ ७५ ॥ स्मेरा दिशः कुमुदमुद्गिदुरं पिबन्ति ज्योत्स्नाकरम्भमुदरंभरयश्चकोराः । आः कीदृगत्रिमुनिलोचनदूषिकायां पीयूषदीधितिरिति प्रथितोऽनुरागः ॥ ७६ ॥ उज्जृम्भते कुमुदिनीसुकृतं मृगाङ्को विष्वग्विकीर्णपरिपाटलरश्मिदण्डः । उत्सूतविद्रुमकुलो जलधेस्तरंगादुत्क्षिप्यमाण इव कश्चन राजकम्बुः ॥ ७७ ॥ गगनविपिनसिंहः कामभूपातपत्रं निखिलदिगबलानां कन्दुकं क्रीडनाय । मणिरिव रतिभर्तुः कार्मणः पार्वणोऽयं जयति कुमुदबन्धुर्बन्धुरश्चन्द्रबिम्बः ॥७८॥अयमुदयति चन्द्रो वारिधेरम्बुगर्भादमृतकणकरालैरंशुभिर्दीप्यमानः । भुजगशयनवक्षोहर्म्यदेशे ललन्त्या वदनमिव यदृच्छोत्तानितं विश्वमातुः ॥ ७९ ॥ अयमुदयति चन्द्रश्चन्द्रिकाधौतविश्वः परिणतविमलिम्नि व्योम्नि कर्पूरगौरः । ऋजुरजतशलाकास्पर्धिभिर्यस्य पादैर्जगदमलमृणाली पञ्जरस्थं विभाति ॥ ८० ॥ उदयति कलमन्द्रैः कण्ठतालैरलीनां कुमुदमुकुलकेषु व्यञ्जयन्नङ्गहारान् । मदमुखरचकोरीतोयकर्मान्तिकोऽयं तुहिनरुचिरधामा दक्षिणं लोकचक्षुः ॥ ८१ ॥ मृगाङ्कोऽयं धत्ते गगनजलतः फेनतुलनां सितच्छत्राकारां मदननृपतेर्विश्वजयिनः । त्रियामारामाया मलयजविशेषप्रतिकृतिं जगद्धात्रीदेव्य मणिमुकुटलक्ष्मीं च विमलाम् ॥ ८२ ॥ कपोले मार्जारः पय इति करांल्लेढि शशिनस्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति । रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥ ८३ ॥ अयं नेत्रादत्रेरजनि रजनीवल्लभ इति क कोऽयं प्रज्ञापरिचयपराधीनमनसाम् । सुधानामाधारः स खलु रतिबिम्बाधरसुधारसासेकस्निग्धादजनि नयनात्पुष्पधनुषः ॥ ८४ ॥ जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो वियोगिव्यापत्तेरिव कलितवैराग्यविशदः । परिप्रेङ्खत्तारापरिकरकपालाङ्किततले शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥ ८५ ॥ तथा पौरस्त्यायां दिशि कुमुदकेदारकलिकाकवाटघ्नीमिन्दुः किरणलहरीमुल्लसयति । समन्तादुन्मीलद्बहलजलबिन्दुस्तबकिनो यथा पुञ्जायन्ते प्रतिगुडकमेणाङ्कमणयः ॥ ८६ ॥ सुधारश्मिः सद्यस्तिमिरनिकरान्तं विरचयन्नलिन्देभ्यः स्यन्दं शशिमणिसमुत्थं च वितरन् । उदेत्यादौ रक्ताम्बुजसमरुचिः कैरववने प्रमोदं तन्वानो मधुपवनितागीतिमधुरम् ॥ ८७ ॥ त्रिनयनजटावल्लीपुष्पं निशावदनस्मितं ग्रहकिसलयं संध्यानारीनितम्बनखक्षतिः । तिमिरभिदुरं व्योम्नः शृङ्गं मनोभवकार्मुकं प्रतिपदि नवस्येन्दोर्बिम्बं सुखोदयमस्तु नः ॥ ८८ ॥ प्रथममरुणच्छायस्तावत्ततः कनकप्रभः तदनु विरहोत्ता-

म्यत्तन्वीकपोलतलद्युतिः । उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे सरसविसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ ८९ ॥ मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलोच्छलत्तरलतारकागणविकीर्णमुक्तागणः । पुरंदरहरिद्दरीकुहरगर्भसुप्तोत्थितस्तुपारकरकेसरी गगनकानन गाहते ॥ ९० ॥ प्रसारणपरैः करैः प्रकटितानुरागोदये सुधाकिरणकामुके त्वरितमम्बरालम्बिनि । तदा विगलितोल्लसत्तिमिरजालनाशांशुका पुरंदरादिगङ्गना पुलकितैव तारागणैः ॥ ९१ ॥ कलानिधिरवेरयं समुपलभ्य रूपं स्वयं दिनान्तसमयेऽस्तशत्सपदि पद्मिनीं रागवान् । धवान्यकरसंगमान्मुकुलितेति पूर्वाकृति समीक्ष्य जहसुः प्रिया ध्रुवमभूदतः पाण्डुरः ॥ ९२ ॥ दर्पोद्रेकः कुसुमधनुषो जीवितं कैरवाणां जीवं जीवप्रणयगरिमा भाग्यराशिर्निशायाः । शृङ्गारश्रीललितहसितं पानपात्रं सुराणा पौरस्त्याद्रेर्जयति शिखरं किं तमः स्थातुमीष्टे ॥ ९३ ॥ तैः सर्वङ्गीभवदभिसृतानेत्रसिद्धाञ्जनैर्वा नीरन्ध्रैर्वा त्रिभुवनदृशामन्धपट्टैस्तमोभिः । व्याप्तं पृथ्वीवलयमखिलं क्षालयन्नुच्छलद्भिर्ज्योत्स्नाजालैरयमुदयते शर्वरीसार्वभौमः ॥९४॥ पश्योदेति वियोगिनीदिनमणिः शृङ्गाररक्षामणिस्तारामौक्तिकहारनायकमणिश्चण्डीशचूडामणिः । प्रौढानङ्गभुजंगमस्तकमणिः कंदर्पसीमन्तिनीकाञ्चीमध्यमणिश्चकोरपरिषच्चिन्तामणिश्चन्द्रमाः ॥ ९५ ॥ ॐकारो मदनद्विजस्य गगनक्रोडैकदंष्ट्राङ्कुरस्तारामौक्तिकशुक्तिरन्धतमसस्तम्बेरमस्याङ्कुशः । शृङ्गारार्गलकुञ्चिकाविरहिणी मर्मच्छिदा कर्तरी संध्यावारवधूनखक्षतिरियं चान्द्री कला राजते ॥ ९६ ॥ स्वैरं कैरवकोरकान्विदलयन्यूनां मनो दोलयन्नम्भोजानि निमीलयन्मृगदृशां मानं समुन्मूलयन् । ज्योत्स्नां कन्दलयन्दिशो धवलयन्नम्भोधिमुल्लासयन्कोकानाकुलयंस्तमः कवलयन्निन्दुः समुज्जृम्भते ॥ ९७ ॥ एष स्वर्गतरंगिणीजलफलदिग्दन्तिदन्तद्युतिभ्रंश्यद्राजतकुम्भविभ्रमधरः शीतांशुरभ्युद्यतः । हंसीयत्यमलाम्बुजीपद्म लसड्डिण्डीरपिण्डीयति स्फारत्स्फाटिककुण्डलीयति दिशामानन्दकन्दीयति ॥ ९८ ॥ अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः । उद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥ ९९ ॥ कैलासायितमद्रिभिर्विटपिभिः श्वेतातपत्रायितं मृत्पङ्केन दधीयितं जलनिधौ दुग्धायितं वारिभिः । मुक्ताहारलतायितं व्रततिभिः शाखायितं श्रीफलैः श्वेतद्वीपजनायित जनपदैर्जाते शशाङ्कोदये ॥ १०० ॥ पीयूषाश्रयिणं जगत्त्रयदृशामालानलेखालवो विश्वोन्माथहुताशनस्य ककुभामुद्घाटिनी कुञ्चिका । वीरेषु प्रथमा च पुष्पधनुषो रेखा मृगाक्षीमुखश्रीणां च प्रतिराजबीजमधिकानन्दी नवश्चन्द्रमाः ॥ १०१ ॥ दिग्बालाकरकन्दुकः स्मरवधूसीमन्तमुक्तामणिः कामक्षोणिपतेर्विहारवलभीनिर्व्यूहपारावतः । दृष्टव्योम्नि

१ अवे सूर्यात् २ पति. ३ पूर्ववदाकृति स्वरूप यस्य तथा विम्बम् प्रथम पद्मिनीदर्शनेन विकृताकार्तिं पश्चान्मुकुलीभावेन निराशतया विकारापगमेन स्वरूपस्थितिं प्राप्तमित्यर्थ. ४ कैरविण्यः ५ विरहिणीना सूर्यवत्तापक.. ६ वराह ७ उद्घाटनसाधनम्.

विकीर्णतारकमणिः श्यामा वणिक्सुभ्रुवः स्फारः स्फाटिकसंपुटः कुमुदिनीकान्तोऽयमुन्मीलति ॥ १०२ ॥ यातस्यास्तमनन्तरं दिनकृतो वेषेण रागान्वितः स्वैरं शीतकरः करं कमलिनीमालिङ्गितुं योजयन्। शीतस्पर्शमुपेत्य संप्रति तया रुद्धे मुखाम्भोरुहे हासेनैव कुमुद्वतीवनितया वैलक्ष्यपाण्डूकृतः ॥ १०३ ॥ एतत्कोककुटुम्बिनीजनमनःशल्यं चकोराङ्गनाचञ्चूकोटिकपाटयोर्घटितयोरुद्घाटिनी कुञ्चिका। दग्धस्यापि नवाङ्कुरः स्मरतरोरार्द्रागसां प्रेयसीमालोद्दामगजाङ्कुशो विजयते मुग्धं सुधांशोर्वपुः ॥ १०४ ॥ क्षीराब्धेर्लहरीषु फेनधवलाश्चन्द्रोपलेषु स्रवत्पाथःसीकरिणो विकासिकुमुदक्रोडे रजःपिञ्जराः। उन्मीलन्ति चकोरचञ्चुगहने छिन्नप्ररूढाश्चमत्कुर्वन्तः प्रियविप्रयुक्तरमणीगात्रे सुधांशोः कराः ॥ १०५ ॥ ध्वान्तौघे शितिकण्ठकण्ठमहसि प्राप्ते प्रतीचीमुखं प्राचीमश्चति किं च दुग्धलहरीमुग्धे विधोर्धामनि। एतत्कोकचकोरशोकरभसम्लानप्रसन्नोल्लसद्दृक्पातोर्मिकदम्बचुम्बितमिव त्रैलोक्यमाभासते ॥ १०६ ॥ शीतांशुस्फटिकालवालवलयद्रागुल्लसत्कौमुदीवल्लीनूतनपल्लवाधितमिव प्राप्य क्षणं ताम्रताम्। चञ्चन्मत्तचकोरचञ्चुघटनाच्छिन्नाग्रकाण्डस्रुतक्षीरस्यन्दनिरन्तराप्लुतमिव श्वेतं वियद्भासते ॥१०७॥ यः श्रीखण्डतमालपत्त्रति दिशः प्राच्याः स्मरक्ष्मापतेः पाण्डुच्छत्त्रति दन्तपत्त्रति वियल्लक्ष्मीकुरङ्गीदृशः। केलिश्वेतसहस्रपत्त्रति रतेः किं च क्षपायोषितः क्रीडाराजतसीधुपात्त्रति शशी सोऽयं जगन्नेत्रति ॥१०८॥ ये पूर्वं यवसूचिसूत्रसुहृदो ये केतकाग्रच्छदच्छायासाम्यभृतो मृणाललतिकालावण्यभाजोऽत्र ये। ये धाराम्बुविडम्बिनः क्षणमथो ये तारहारश्रियस्तेऽमी स्फाटिकदण्डडम्बरजितो जाताः सुधांशोः कराः ॥१०९॥ सद्यश्चन्दनपङ्कपिच्छिलमिव व्योमाङ्गणं कल्पयन्पश्यैरावतकान्तदन्तमुसलच्छेदोपमेयाकृतिः। उद्गच्छत्ययमच्छमौक्तिकलताप्रालम्बलम्बैः करैर्मुग्धानां स्मरलेखवाचनकलाकेलिप्रदीपः शशी ॥ ११० ॥ कोकानाकुलयंश्चकोरतरुणीवैकल्यमुन्मूलयन्नम्भोजानि निमीलयन्कुमुदिनीरुन्मीलयन्सर्वतः। पान्थानाकुलतां नयन्कुलवधूचेतः समुल्लासयन्नस्तं याति दिवापतिः समुदयं यात्येष दोषापतिः ॥ १११ ॥ स्वर्धामामृतपानचारुचषकं किं कामदेवाङ्गनाक्रीडाकन्दुक एष किं सुरनदीहिण्डीरपिण्डः किमु। किं छत्त्रं स्मरभूपतेः किमु यशःपुञ्जं पुरस्तादिदं चेतःसंशयकारकं समुदितं शीतद्युतेर्मण्डलम् ॥ ११२ ॥ पद्मिन्या दयितेऽनुधावति रुषा स्वं पद्मिनीद्रोहिणं भ्रान्त्वा भीतमना दिगन्तमखिलं चन्द्रो जगाहेऽम्बुधिम्। गाढं तत्र च तत्र विह्वलममुं कर्षन्ति ताराः पतिं सोऽयं तच्छ्रमवारिकुङ्कुमरसैः सिक्तोऽरुणो दृश्यते ॥ ११३ ॥ भानावभ्युदिते तथा मयि गते किं स्यान्मम प्रेयसी हा हेत्यस्तमितः शशी रसवशादिन्दीवरिण्याः स्मरन्। सोऽयं संप्रति नीलिमाङ्किततनुस्तस्मादरीदृश्यते ये वै यत्किल संस्मरन्ति चरमे तद्रूपमेष्यन्ति ते ॥ ११४ ॥ आदायामृतपूर्णमर्कचषकं शोणारविन्दप्रभे पाणाविन्द्रवधूर्विलोक्य च पुनस्तस्मिन्नभःश्यामिकाम्। चिक्षे-

पोपरि कोपतः परिजने संशोध्य दत्ता सुधेत्येन तं शशिनं प्रशंसति जनस्तत्पाणिमुक्तार्जु-
नम् ॥ ११५ ॥ आनीतां करपल्लवैरपनयन्नच्छा तमःकञ्चुलीमाशा संप्रति वासवीमनुभव-
न्नक्षीणरागः शशी । अस्याश्च स्तनसङ्गिनीमिव वहत्यङ्केन कस्तूरिकामालिङ्गत्ययमादरेण
रजनीमर्धोन्मिषत्तारकाम् ॥ ११६ ॥ यत्पीयूषमयूखमालिनि तमःस्तोमावलीढायुषां नेत्रा-
णामपमृत्युहारिणि पुरः सूर्योढ एवातिथौ । अम्भोजानि पराञ्चितं निजमर्घं दत्त्वैव तेभ्यस्ततो
गौराङ्गीवदनोपमासुकृतमादत्ते पतिर्यज्वनाम् ॥ ११७ ॥ यं प्राक्प्रत्यगवागुदाञ्चि ककुभां
नामानि संबिभ्रतं ज्योत्स्नाजालझलज्झलाभिरभितो लुम्पन्तमन्धं तमः । प्राचीनादचलादि-
तस्त्रिजगतामालोकबीजाद्बहिर्निर्यान्तं हरिणाङ्कमङ्कुरमिव द्रष्टुं जनो जीवति ॥ ११८ ॥ स
श्रीकण्ठकिरीटकुट्टिमपरिष्कारप्रदीपाङ्कुरो देवः कैरवबन्धुरन्धतमसप्राग्भारकुक्षिंभरिः । सं-
स्कर्ता निजकान्तिमौक्तिकमणिश्रेणीभिरेणीदृशां गीर्वाणाधिपतेः सुधारसवतीपौरोगवः प्रो-
दगात् ॥ ११९ ॥ प्राचीनाचलचुम्बिचन्द्रमणिभिर्निर्व्यूढपाद्यं निजैर्निर्यासैरुडुभिर्निजेन
वपुषा दत्तार्घलाजाञ्जलि । अन्तःप्रौढकलङ्कतुच्छमभितः सान्द्रं परिस्तीर्यते बिम्बादङ्कुरभ-
ग्नैनैशिकतमःसंदोहमिन्दोर्महः ॥ १२० ॥ सायं नायमुदेति वासरमणिश्चन्द्रो नु चण्डद्यु-
तिर्दावाग्निः कथमम्बरे किमशनिः स्वच्छान्तरीक्षे कुतः । हन्तेदं निरणायि पान्थरमणीप्रा-
णानिलाशाशया धावद्घोरविभावरीविषधरीभोगस्य भीमो मणिः ॥ १२१ ॥ प्राणायामोप-
ष्टा सरसिरुहमुनेर्यौवनोन्मादलीलागोष्ठीनां पीठमर्दस्त्रिभुवनवनितानेत्रयोः प्रातराश· ।
समायुष्टोमयज्वा शमितकुमुदिनीमौनमुद्रानुरागः शृङ्गाराद्वैतवादी प्रभवति भगवानेष
॥ वृषभानुः ॥ १२२ ॥ कल्लोलक्षिप्तपङ्कत्रिपुरहरशिरःस्वःस्रवन्तीमृणालं कर्पूरक्षोदजालं
फ० मशारवधूसीधुभृङ्गारनालम् । एतद्दुग्धाब्धिबन्धोर्गगनकमलिनीपत्रपानीयबिन्दोरन्तस्तोषं
पद्मा षां किसलयति जगन्मण्डलं खण्डमिन्दोः ॥ १२३ ॥ संरम्भोद्रिक्तनक्तंसमयदशमु-
अ च्चण्डदोर्दण्डहेलाकैलासः सप्तलोकीजयमुदितमनोजन्मवादित्रशङ्खः । लोलाक्षीगण्डपा-
लीलवणिमजलधेरुद्गतः फेनपिण्डः पश्य व्योमावकाशं विशति विरहिणां दत्तशङ्कः शशाङ्कः
॥ १२४ ॥ क्वैतन्मार्तण्डबिम्बं सरसि सरसिजश्रेणिहास्यं क्व यातं क्वैते याता रथाङ्गाः स-
पदि गतह्रियः क्व प्रविष्टा मरालाः । संध्यारागारुणाङ्गः कुपित इव पतिः प्रोद्यतोऽयं हिमांशु-
र्मन्ये हर्षादिवेयं हसति कुमुदिनी जाग्रतीवालिनादैः ॥ १२५ ॥ प्राचीभागे सरागे धरणि-
विरहिणीक्लान्तवक्त्रे समुद्रे निद्रालौ नीरजालौ विकसति कुमुदे निर्विकारे चकोरे । आकाशे
सावकाशे तमसि शममिते नागलोके सशोके कंदर्पे मन्ददर्पे वितरति किरणाञ्शर्वरीसार्व-
भौमः ॥ १२६ ॥ **चन्द्रकलावर्णनम्** ॥ अकलङ्कचन्द्रकलया कलिता सा भाति वारुणी
तरुणी । भालस्थलीवराम्भो संध्याध्यानोपविष्टस्य ॥ १२७ ॥ **ज्योत्स्नावर्णनम्** ॥ दल-
विततिभृतां तले तरूणामिह तिलतण्डुलितं मृगाङ्करोचिः । मदचपलचकोरचञ्चुकोटीक-

वलनतुच्छमिवान्तरान्तराभूत् ॥ १२८ ॥ आलोक्य चन्द्रमसमभ्युदितं समन्तादुद्वेल्लदूर्मिविचलत्कलशाम्बुराशेः। विष्वग्विसारिपरमाणुपरंपरैव ज्योत्स्नात्मना जगदिदं धवलीकरोति ॥ १२९ ॥ सितकिरणकपोलीमालिमालोकयन्ती तिमिरविरहतापव्याकुलां व्योमलक्ष्मीम्। रजनिरमलताराशीकरैः सिक्तमस्याः परिमलयति गात्रं चन्द्रिकाचन्दनेन॥१३०॥ अपि पिबत चकोराः कृत्स्नमुन्नाम्य कण्ठं क्रमकवलनचञ्चच्चञ्चवश्चन्द्रिकाम्भः। विरहविधुरितानां जीवितत्राणहेतोर्भवति हरिणलक्ष्मा येन तेजोदरिद्रः ॥ १३१ ॥ सह कुमुदकदम्बैः काममुल्लासयन्तः सह घनतिमिरौघैर्धैर्यमुत्सारयन्तः। सह सरसिजखण्डैः स्वान्तमामीलयन्तः प्रतिदिशममृतांशोरंशवः संचरन्ति ॥ १३२ ॥ भास्वत्कर्कशशाणचक्रकषणैराकाशकालायसाद्यच्चूर्णं निबिडं निपत्य तम इत्याख्यां जगत्यामगात् । यच्चेन्द्रोश्चलसिद्धपारदमहाबिन्दोः समायोगतो जातं रूप्यरजोमयं वयमिदं ज्योत्स्नां समाचक्ष्महे ॥ १३३ ॥ एतत्तर्कय कैरवक्लमहरे शृङ्गारदीक्षागुरौ दिक्कान्तामुकुरे चकोरसुहृदि प्रौढे तुषारत्विषि। कर्पूरैः किमपूरि किं मलयजैरालेपि किं पारदैरक्षालि स्फटिकोपलैः किमघटि द्यावापृथिव्योर्वपुः ॥ १३४ ॥ उन्मीलन्ति मृणालकोमलरुचो राजीवसंवर्तिका संवर्तव्रतवृत्तयः व तिपथे पीयूषभानोः कराः। अप्युच्चैर्धवलीभवत्सु गिरिषु क्षुब्धोऽयमुन्मज्जता विश्वेनेव तमेमयो निधिरपामह्नाय फेनायते ॥ १३५ ॥ किं नु ध्वान्तपयोधिरेष कतकक्षोदैरिवेन्दोः करैरत्यच्छोऽयमधश्च पङ्कपटलं छायापदेशादभूत्। किं वा तत्करकर्तरीभिरभितो निस्तक्षणादुज्ज्वलं व्योमैवेदमितस्ततश्च पतिताश्छायाच्छलेन त्वचः ॥१३६॥ पौलोमीकुचकुम्भकुङ्कुमरजःस्वाजन्मजन्मोद्धताः शीतांशोर्द्युतयः पुरंदरपुरीसीम्नामुपस्कुर्वते। एताभिर्लिहती रन्धतमसान्युद्ग्रथतीभिर्दिशः क्षौणीमास्तृणतीभिरन्तरतमं व्योमेदमोजायते ॥ १३७ ॥ वायं भगवानुदञ्चति शशी गव्यूतिमात्रीमपि द्यामद्यापि तमस्तु कैरवकुलश्रीचाटुकराः। मश्नन्ति स्थलसीम्नि शैलगहनोत्सङ्गेषु संरुन्धते जीवग्राहमिव क्वचित्क्वचिदिच्छायासु गृह्णन्ति च ॥ १३८ ॥ यन्त्रद्रावितकेतकोदरदलस्रोतश्रिय बिभ्रती येयं मौक्तिकदामगुम्फनविधौ योग्यच्छविः प्रागभूत्। उत्सेच्या कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरैः पातव्या च शशिन्यमुग्धविभवे सा चन्द्रिका वर्तते ॥ १३९ ॥ मुग्धा दुग्धधिया गवि विदधते कुम्भानधो बल्लवाः कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि। कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥ १४० ॥ इन्दोरस्य त्रियामायुवतिकुचतटीचन्दनस्थासकस्य व्योमश्रीचामरस्य त्रिपुरहरजटावल्लरीकोरकस्य। कंदर्पक्षोणिपालस्फटिकमणिगृहस्यैतदाखण्डलाशानासामुक्ताफलस्य स्थगयति जगती कोऽपि भासां विलासः ॥ १४१ ॥ लक्ष्मीक्रीडातडागो रतिधवलगृहं दर्पणो दिग्वधूनां पुष्पं श्यामालतायास्त्रिभुवनजयिनो मन्मथस्यातपत्रम् । पिण्डीभूतं

हरस्य स्मितममरसरित्पुण्डरीकं मृगाङ्को ज्योत्स्नापीयूषवापी जयति सितवृषस्तारकागोलकस्य ॥ १४२ ॥ सकलङ्कचन्द्रवर्णनम् ॥ दोषागमनमाशङ्क्य रविरेष तिरोहितः । कथमिन्दुः समायाति कुतः शङ्का कलङ्किनः ॥ १४३ ॥ यक्षं विरहिणं कंचित्त्रासयामास तेजसा । यक्ष एव विलोमेन संछन्नोऽभूद्विधौ क्षयः ॥ १४४ ॥ शिवभालानलोत्थेन धूम्रयोगेन कालिमा । विधौ शुक्लतरे किं वा इति मन्मानसाशयः ॥ १४५ ॥ इन्दोरेककलाया रुद्रेणोद्धृत्य मूर्धनि धृतायाः । स्थानमिव तुच्छमेतत्कलङ्करूपेण परिणमति ॥ १४६ ॥ अस्तं गतवति सवितरि पायसपिण्डं सुधाकरं प्राची । विरचयदम्बरकुशभुवि चराति कलङ्कस्तदन्तरे काकः ॥ १४७ ॥ कृष्णवर्णहृदयं सितदीप्तिं दुर्धियः किल कलङ्किनमाहुः । कृष्णवर्णसमुदीरणमात्रा देव यद्गलति दृश्यकलङ्कः ॥ १४८ ॥ आयताग्रसितरश्मिनिबद्धं लाञ्छनच्छविमषीरसदिग्धम् । चन्द्रकैतवमरुत्पटचक्रं क्रीडयोत्सृजति किं स्मरबालः ॥ १४९ ॥ शम्बरारिरमृतं विषगर्भं चन्द्रबिम्बकपटात्प्रयुनक्ति । यद्बहिः सितमथासितमन्तः प्रोषितान्दहति दर्शनमात्रात् ॥ १५० ॥ अयं पुरः पार्वणशर्वरीशः किं दर्पणोऽयं रजनीरमण्याः । यतस्तदीयं प्रतिबिम्बमस्मिन्संलक्ष्यते लाञ्छनकैतवेन ॥ १५१ ॥ प्रदोषमातङ्गमनङ्गदेवस्तुङ्गं समारुह्य समागतोऽयम् । सिन्दूरिते तस्य सुधांशुकुम्भे किमङ्कुशो लक्ष्यमिषेण दत्तः ॥ १५२ ॥ मम प्रियां कैरविणी करेण संतापयामास दिनाधिनाथः । इतीव दुःखैर्विकलः कलावान्पपौ विषं लक्ष्यमिषेण सद्यः ॥ १५३ ॥ कलाधिनाथानयनाय सायं कुमुद्वतीप्रेषित एष भृङ्गः । किमिन्दुनालिङ्ग्य सरागमङ्के कृतः कलङ्कभ्रममातनोति ॥ १५४ ॥ नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः । नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः ॥ १५५ ॥ मधुव्रतौघः कुपितः स्वकीयमधुप्रपापद्मनिमीलनेन । बिम्बं समाक्रम्य बलात्सुधांशोः कलङ्कमङ्के ध्रुवमातनोति ॥ १५६ ॥ अत्रान्तरे च कुलटाकुलवर्त्मयानसंजातपातक इव स्फुटलाञ्छनश्रीः । वृन्दावनान्तरमलिम्पयदंशुजालैर्दिक्सुन्दरीवदनचन्दनबिन्दुरिन्दुः ॥ १५७ ॥ अच्छप्रकाशवति चन्द्रमसि प्रियेऽस्मिन्नाह्लादकारिणि सुधावति पूर्णबिम्बे । धाता विचिन्त्य मनसाखिलदृष्टिपातं हर्तुं चकार किमु कज्जलबिन्दुयोगम् ॥ १५८ ॥ दष्टे जगद्वपुषि कालभुजंगमेन तत्रान्धकारमिषमाविरभूद्विषं यत् । संजातलक्ष्मणि तदिन्दुमणौ निपाय्य ज्योत्स्नामये पयसि तत्क्षिपति स्म धाता ॥ १५९ ॥ दिग्यन्त्रतस्तिमिरचूर्णविशेषपूर्णादुद्गत्वरोडुमयरञ्जकविस्फुलिङ्गात् । कालेन पूर्वगिरिदुर्गजुषा प्रयुक्तो वृत्तोपलो विधुमिषात्पथिकान्हिनस्ति ॥ १६० ॥ मन्थानभूमिधरमूलशिलासहस्रसंघट्टनव्रणकिणः स्फुरतीन्दुमध्ये । छाया मृगः शशक इत्यतिपामरोक्तिस्तेषां कथंचिदपि तत्र हि न प्रसक्तिः ॥ १६१ ॥ बत सखि कियदेतत्पश्य वैरं स्मरस्य प्रियवि-

१ मध्यभागे. २ मन्दर. ३ चिह्नम्. ४ मूर्खः. ५ छायादीनाम्.

रहक्दशेऽस्मिन्रागिलोके तथाहि। उपवनसहकारोद्गासिभृङ्गच्छलेन प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ १६२ ॥ अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि। अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ १६३ ॥ समयशबरो व्योमारण्ये सुधाशनमक्षिका सुविहितसुधाबिम्बक्षौद्रस्फुरत्पटलं प्रति। कलयति कलङ्काख्यं धूमं निपीड्य पुनश्च तत्किरति मधुरज्योत्स्नाक्षौद्रं महीतलभाजने ॥ १६४ ॥ रुचिभिरभितष्टङ्कोत्कीर्णैरिव त्रसरेणुभिर्यदुडुभिरपि च्छेदैः स्थूलैरिव भ्रियते नभः। प्रकृतिमलिनी भास्वद्बिम्बोन्मृजाकृतकर्मणस्तदयमपि हि त्वष्टुः कुन्दे भविष्यति चन्द्रमाः ॥ १६५ ॥ तरुणतमालकोमलमलीमसमेतदयं कलयति चन्द्रमाः किल कलङ्कमिति ब्रुवते। तदनृतमेव निर्दयविधुंतुददन्तपदव्रणविवरोपदर्शितमिदं हि विभाति नभः ॥ १६६ ॥ अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन्परे। इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥ १६७ ॥ रङ्कावङ्कगते त्रिविष्टपवनीखेलत्कुरंगीगणैः साकं क्रीडनकौतुकेन रभसादुत्प्लुत्य याते दिवम्। तच्छायानुगतात्ममूर्तिरधुना धर्तुं तमेनं शशी मन्दं व्यायतरश्मिजालकलितः खाग्रं समारोहति ॥ १६८ ॥ इन्दुर्यद्युदयाद्रिमूर्ध्नि न भवत्यद्यापि तन्मास्म भून्नासीरेऽपि तमःसमुच्चयममूरुन्मूलयन्ति त्विषः। अप्यक्ष्णोर्मुदमुद्गिरन्ति कुमुदैरामोदयन्ते दिशः संप्रत्यूर्ध्वमसौ तु लाञ्छनमभिव्यक्तुं प्रकाशिष्यते ॥ १६९ ॥ काश्मीरेण दिहानमम्बरतलं वामभ्रुवामाननद्वैराज्यं विदधानमिन्दुदृषदां भिन्दानमम्भःशिरः। प्रत्युद्यत्पुरुहूतपत्तनवधूदत्तार्घदूर्वाङ्कुरक्षीबोत्सङ्गकुरङ्गमैन्दवमिदं बिम्बं समुज्जृम्भते ॥ १७० ॥

---

## नायकागमनावस्थावर्णनम्।

श्रुत्वायान्तं बहिः कान्तमसमाप्तविभूषया। भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥ १ ॥ आगच्छन्सूचितो येन येनानीतो गृहं प्रति। प्रथमं सखि कः पूज्यः किं काकः किं क्रमेलकः ॥ २ ॥ सज्जितसकलशरीरा क्षणे क्षणे मनसि किमपि गणयन्ती। उत्सवमिव तं दिवसं मनुते मुग्धा प्रियागमने ॥ ३ ॥ अभ्युन्नतस्तनयुगा तरलायताक्षी द्वारि स्थिता तदुपयानमहोत्सवाय। सा पूर्णकुम्भनवनीरजतोरणस्रक्संभारमङ्गलमयत्नकृतं विधत्ते ॥ ४ ॥ आयातो दयितस्तवेति सहसा न श्रद्दधे भाषितं सद्यः संमुखतां गतेऽपि सुमुखी भ्रान्तिं निजां मन्यते। कण्ठाश्लेषिभुजेऽपि शून्यहृदया स्वप्नान्तरं शङ्कते प्रत्यावृत्तिमियं प्रियस्य कियता प्रत्येतु शातोदरी ॥ ५ ॥ द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम्। आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने वाचस्तच्च निवारितं प्रसरणं संकोचिते दोर्लते ॥ ६ ॥

---

१ कलङ्कम्. २ अम्बुवत्. ३ स्फुटित. ४ घनम्. ५ गाढध्वान्तम्. ६ अत्यन्तसनिहिते.

## नायकागमने नायिकां सखीवचनम् ।

नित्यं मनोरथस्यापि सखि दुर्गम एव यः । अभवत्सांप्रतं कामं प्रत्यक्षेण विभाति सः ॥ १ ॥ धैर्यमाधाय लज्जां च व्यपनीय विलासिनम् । संभावयसि किं नैनं दिष्ट्या स्वयमुपस्थितम् ॥ २ ॥ अपाङ्गसंसर्गि तरङ्गितं दृशोर्भ्रुवोररालान्तविकासि वेल्लनम् । विसारि रोमाञ्चितकञ्चुकं तनोस्तनोति योऽसौ सुभगे तवागतः ॥ ३ ॥ कलय वलयं धम्मिल्लेऽस्मिन्निवेशय मल्लिकां रचय सिचयं मुक्ताहारं विभूषय सत्वरम् । मृगमदमषीपत्रालेपं कुरुष्व कपोलयोः सहचरि समायातः प्रातः स ते हृदयप्रियः ॥ ४ ॥

---

## नायकातिथ्यवर्णनम् ।

आयाते दयिते मरुस्थलभुवामुत्प्रेक्ष्य दुर्लङ्घ्यतां गेहिन्या परितोषबाष्पकलिलामासाद्य दृष्टिं मुखे । दत्त्वा पीलुशमीकरीरकवलं लोलाञ्चलेनादरादुन्मृष्टं करभस्य केसरसटाभाराग्रलग्नं रजः ॥ १ ॥ बाला चन्दनमालिकाकिसलयग्रन्थीनधः कुर्वतः श्रुत्वा वल्लभवाहनस्य रटितं दासेरकस्याङ्गने । आक्रन्दात्सुहृदो वनाद्गुरुजनं नासाग्रसङ्गादसून्कान्तं स्त्रीवधपातकात्स्मरमसत्कीर्त्यै परावर्तयत् ॥ २ ॥ किंचित्कम्पितपाणिकङ्कणरवैः पृष्टं ननु स्वागतं व्रीडानम्रमुखाब्जया चरणयोर्न्यस्ते च नेत्रोत्पले । द्वारस्य स्तनयुग्ममण्डलघटे दत्तः प्रवेशो हृदि स्वामिन्किं भवतातिथेः समुचितं सख्यानयानुष्ठितम् ॥ ३ ॥ दीर्घा वन्दनमालिका विरचिता दृष्ट्यैव नेन्दीवरैः पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः । दत्तः स्वेदमुचा पयोधरभरेणार्घ्यो न कुम्भाम्भसा स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ॥ ४ ॥

---

## नायकस्य नायिकां प्रश्नः ।

कृशा केनासि त्वं प्रकृतिरियमङ्गस्य ननु मे मलाधूम्रा कस्माद्गुरुजनगृहे पावकतया । स्मरस्यस्मान्कच्चिन्नहि नहि नहीत्येवमवदच्छिरःकम्पं बाला मम हृदि निपत्य प्ररुदिता ॥ १ ॥ कृशासीत्यालीना मलिनवसनासीत्यवनता चिराद्दृष्टासीति स्तनकलशकम्पं प्ररुदिता । परिष्वक्ता यावत्प्रणयपदवीं कामपि गता ततः सारङ्गाक्ष्या हृदयसदने भीतमभवत् ॥ २ ॥ अङ्गानामतितानवं कथमिदं कम्पश्च कस्मात्कुतो मुग्धे पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति । तन्व्या सर्वमिदं स्वभावजमिति व्याहृत्य पक्ष्मान्तरव्यापी बाष्पभरस्तया चलितया निःश्वस्य मुक्तोऽन्यतः ॥ ३ ॥

---

## प्रणयकलहे नायिकानुनयः ।

अनिर्दयोपभोगस्य रूपस्य मृदुनः कथम् । कठिनं खलु ते चेतः शिरीषस्येव बन्धनम् ॥ १ ॥ किं त्वां भणामि विच्छेददारुणायासकारिणि । कामं कुरु वरारोहे देहि मे परिरम्भणम् ॥ २ ॥ मयि ते पादपतिते किंकरत्वमुपागते । प्रिये कामातुरः कोपं कान्ते कोऽन्योऽपनेष्यति ॥ ३ ॥ दाक्षिण्यं नाम बिम्बोष्ठि बैम्बिकानां कुलव्रतम् । तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः ॥ ४ ॥ मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये । वाचः सुधा इवोष्ठस्ते बिम्बतुल्यो मनोऽश्मवत् ॥ ५ ॥ सोढुमलमस्मि नाहं सुन्दरि मन्दागमाद्विलम्बं ते । पञ्चशरास्त्रहतं मां संजीवय चारुगात्रि परिरम्भैः ॥ ६ ॥ सकृदिव समर्प्य बाले मम हस्ते मदनघर्मतप्तस्य । अपहरसे कुचकुम्भं तृषितकरादमृतकुम्भमिव ॥ ७ ॥ अपराधी नूनमहं प्रसीद रम्भोरु विरम संरम्भात् । सेव्यो जनश्च कुपितः कथं नु दासो निरपराधः ॥ ८ ॥ त्वामयमाबद्धाञ्जलि दासजनस्तमिममर्थमर्थयते । स्वपिहि मया सह सुरतव्यतिकरखिन्नैव मा मैवम् ॥ ९ ॥ सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम् । विरसं विरहायासं वोढुं तव चित्तमसहं मे ॥ १० ॥ नयननिपातेऽङ्कुरितः पल्लवितो वचसि पुष्पितो हसिते । फलतु कृशाङ्गि तवाङ्गस्पर्शनमात्रे मनोरथाख्यतरुः ॥ ११ ॥ क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते नित्यम् । विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥ १२ ॥ अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा । अयमीहितकुसुमानां संपादयिता तवास्ति दासजनः ॥ १३ ॥ मधुधारेव न मुञ्चसि मानिनि रूक्षापि माधुरीसहजाम् । कृतमुखभङ्गापि रसं ददासि मम निम्नगा यथाम्भोधेः ॥ १४ ॥ विराममेवानलयातितोषात्तथापि रोषारुणितेव दृष्टिः । निशापतिः श्लिष्यति पश्चिमाशामये किमाशां विफलीकरोषि ॥ १५ ॥ यदि प्रिये वेत्सि तव प्रभुं मामनन्यसाधारणदासमङ्ग्योः । तदद्य वक्षो मम पात्रमस्तु स्वयग्रहाश्लेषमहोत्सवानाम् ॥ १६ ॥ उत्तरंगय कुरङ्गलोचने लोचने कमलगर्वमोचने । अस्तु सुन्दरि कलिङ्गनन्दिनीवीचिडम्बरगभीरमम्बरम् ॥ १७ ॥ शशिमुखि तव भाति भङ्गुरभ्रूर्युवजनमोहकरालकालसर्पः । यदुदितभयभञ्जनाय यूनां त्वदधरसीधुसुधैव सिद्धमन्त्रः ॥ १८ ॥ त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः । कमपराधलवं मयि पश्यसि त्यजसि मानिनि दासजनं यतः ॥ १९ ॥ विसृज सुन्दरि संगमसाध्वसं ननु चिरात्प्रभृति प्रणयोन्मुखे । परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि ॥ २० ॥ मोहान्मया सुतनु पूर्वमुपेक्षितस्ते यो बाष्पबिन्दुरधरं परिबाधमानः । तं तावदाकुटिलपक्ष्मविलग्नमद्य कान्ते प्रमृज्य विगतानुशयो भवामि ॥ २१ ॥ मुग्धे विधेहि मयि निर्दयदन्तदंशं दोर्वल्लिबन्धनिबिडस्तनपीडनानि । चण्डि त्वमेव मुदमुञ्चय पञ्चबाण-

---

१ कोपात्.

चण्डालकाण्डदलनादसवः प्रयान्ति ॥ २२ ॥ मा मा ससाध्वसमवेहि विलोलनेत्रे दासे जने किमिति संभ्रमकातरासि । किं युज्यते बत मया चिरकाङ्क्षितस्य मध्ये वराङ्गि परिरम्भसुखस्य भङ्गः ॥२३॥ कि शीकरैः क्लमविमर्दिभिरार्द्रवातं संचालयामि नलिनीदलतालवृन्तम् । अङ्के विधाय चरणावुत पद्मताम्रौ संवाहयामि करभोरु यथासुखं ते ॥ २४ ॥ आताम्रतामपनयामि विलक्ष एष लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना । कोपोपरागजनितां तु मुखेन्दुबिम्बे हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥ २५ ॥ इन्दीवरेण नयनं मुखमम्बुजेन कुन्देन दन्तमधरं नवपल्लवेन । अङ्गानि चम्पकदलैः स विधाय वेधाः कान्ते कथं घटितवानुपलेन चेतः ॥ २६ ॥ किं मुक्तमासनमलं मयि संभ्रमेण नोत्थातुमित्थमुचितं मम तन्तुमध्ये । दृष्टिप्रसादविधिमात्रहृतो जनोऽयमत्यादरेण किमिति क्रियते विलक्षः ॥ २७ ॥ भुग्नालकं स्मितपराजितचन्द्रलेखं दृग्लीलया कुवलयश्रियमादधानम् । एतन्मुखं दिविषदामिव दुर्निरीक्ष्यं तन्वङ्गि मामिव मुधा किमधःकरोषि ॥ २८ ॥ लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्स्मेरेऽधुना तव मुखे तरलायताक्षि । क्षोभं यदेति न मनागपि तेन मन्ये सुव्यक्तमेव जलराशिरयं पयोधिः ॥ २९ ॥ किं ते निसर्गरुचिरौ चरणौ कराभ्यां संवाहयामि नयने च तवाञ्जनेन । किं रञ्जयामि किमु ते स्तनयोर्विचित्रां पत्रावली विरचयाम्यचिरेण तन्वि ॥ ३० ॥ सुतनु जहिहि मौनं मुञ्च वाचो जडत्वं प्रणयिनि मयि कोपं किंकरे किं करोषि । अथ यदि तव चित्ते सापराधोऽस्मि बाले निजभुजयुगवल्लीबन्धनं मा विधेहि ॥ ३१ ॥ किमपि किमपि शङ्के मङ्गलेभ्यो यदन्यद्विरमतु परिहासश्चण्डि पर्युत्सुकोऽस्मि । कलयसि कलितोऽहं वल्लभे देहि वाचं भ्रमति हृदयमन्तर्विह्वलं निर्दयासि ॥ ३२ ॥ यदिदमगणयित्वा दुर्वहं श्रोणिभारं मदभिसरणलोभात्प्रस्थितं पद्मताम्रम् । अयमहमभिवाञ्छाम्यप्रमृज्यैव पांसु सुमुखि पदतलं ते चूडितुं चुम्बितुं च ॥ ३३ ॥ वितरय कुचयोस्त्वद्दर्शनोपक्रमाणां मदनशररुजानां शान्तये मामकीनाम् । सकृदपि परिरम्भं सुभ्रु दोर्मूलकूलकपघनपरिणाहख्यातयोरेतयोस्ते ॥ ३४ ॥ चरणकमलदासस्त्वेष सकल्पसङ्के सुमुखि यदभिधत्से त्वं बलात्कारधूर्तम् । प्रसभविधृततर्षः पीडयत्यात्मनैव द्विरद इव सरोजं पाणिमापाटलं ते ॥ ३५ ॥ विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः परिजनपथवर्तिन्यत्र किं संभ्रमेण । स्मितमधुरमुदारं देवि मामालपोच्चैः प्रभवति मम पाण्योरञ्जलिः सेवितुं त्वाम् ॥ ३६ ॥ परिलुठति ललाटे भङ्गुरा भ्रूलता किं मदनजयपताकाविभ्रमं बिभ्रतीयम् । स्फुरति च किमकाण्डे चण्डि बिम्बाधरोऽयं मृदुपवनविधूतोन्निद्रबन्धूकबन्धुः ॥ ३७ ॥ मुहुर्मुहुरवेक्षणं सरसमञ्जसा संस्तवः समुच्चलतरङ्गिणि प्रचुरनर्ममर्मस्पृहा । मुहुर्निबिडनम्रता परिजनव्यपेक्षापि नो कुतः सुमुखि शिक्षिता कथय कोपरीतिस्त्वया ॥ ३८ ॥ तरङ्गय

१ नीलोत्पलेन. २ पाषाणेन. तत्सदृशकठिणत्वात्.

दृशोऽञ्जने पततु चित्रमिन्दीवरं स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् । क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिमामुदञ्चय मुखं मनाग्भवतु च द्विचन्द्रं नभः ॥ ३९ ॥ उदञ्चय दृगञ्चलं चलतु चञ्चरीकोच्चयः प्रपञ्चय वचः सुधाश्रवणपालिमालिङ्गतु । भ्रुवं नटय नागरि त्यजतु मन्मथः कार्मुकं मुखं च कुरु संमुखं व्रजतु लाघवं चन्द्रमाः ॥ ४० ॥ पुरो दिगनुरागिणी तदपि नानुरागोदयः कृशोदरि निशा कृशा तदपि ते न मानः कृशः । प्रसन्नमिदमम्बरं तदपि न प्रसन्नं मनो ननाद चरणायुधस्तदपि मौनमालम्बसे ॥ ४१ ॥ कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः शिरस्याज्ञा न्यस्ता प्रतिवचनमुच्चैः प्रणमितम् । न दृष्टेः शैथिल्यं मिलत इति चेतो दहति मे निगूढान्तःकोपात्कठिनहृदये संवृतिरियम् ॥ ४२ ॥ गतप्राया रात्रिः शशिमुखि शशी शीर्यत इव प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव । प्रणामान्तो मानस्तदपि न जहासि ध्रुवमहो कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥ ४३ ॥ इदं दूर्वाकाण्डद्युतिमुषि कपोले कतिपयैः श्रमाम्भोभिः कीर्णं सहजबकुलामोदसुभगम् । समाकाङ्क्षे ताम्राधरमनुमनुष्व प्रियतमे मनोज्ञं ते पातुं मुखकमलमाघ्रातुमथवा ॥ ४४ ॥ प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः । निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥ ४५ ॥ प्रसीदेति ब्रूयामिदमसति कोपे न घटते करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः । न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ॥ ४६ ॥ कृतेऽप्याज्ञाभङ्गे कथमिव मया ते प्रणतयो धृताः स्मित्वा हस्ते विसृजसि रुषं सुभ्रु बहुशः । प्रकोपः कोऽप्यन्यः पुनरयमसीमाद्य गुणितो वृथा यत्र स्निग्धाः प्रियसहचरीणामपि गिरः ॥४७॥ कपोले पत्राली करतलनिरोधेन मृदिता निपीतो निःश्वासैरयममृतहृद्योऽधररसः । मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं प्रियो मन्युर्जातस्तव निरनुरोधे[1] न तु वयम् ॥ ४८ ॥ सुतनु हृदयात्प्रत्यादेश[2]व्यलीकमपैतु ते किमपि मनसः संमोहो मे तदा बलवानभूत् । प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः स्रजमपि[3] शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया[4] ॥ ४९ ॥ परिहर कृतातङ्के शङ्कां त्वया सततं घनस्तनजघनया क्रान्ते स्वान्ते परानवकाशिनि । विशति वितनोरन्यो धन्यो न कोऽपि ममान्तरं स्तनभरपरीरम्भारम्भे विधेहि विधेयताम् ॥ ५० ॥ व्यथयति वृथा मौनं तन्वि प्रपञ्चय पञ्चमं तरुणि मधुरालापैस्तापं विनोदय दृष्टिभिः । सुमुखि विमुखीभावं तावद्विमुञ्च न वञ्चय स्वयमतिशयस्निग्धो मुग्धे प्रियोऽहमुपस्थितः ॥ ५१ ॥ कठिनहृदये मुञ्च भ्रान्तिं व्यलीककथाश्रितां पिशुनवचनैर्दुःखं नेतुं न युक्तमिमं जनम् । किमिदमथवा सत्यं मुग्धे त्वया हि विनिश्चितं यदभिरुचितं तन्मे कृत्वा प्रिये सुखमास्यताम् ॥ ५२ ॥

---

१ अत्यन्तकोपने. २ निराकृतिदुःखम् ३ मालाम्. ४ सर्पभ्रान्त्या

पादासक्ते सुचिरमिह ते वामता कैव कान्ते सन्मार्गस्थे प्रणयिनि जने कोपने कोऽपराधः। इत्थं तस्याः परिजनकथा कोपवेगोपशान्तौ बाष्पोद्भेदैस्तदनु सहसा न स्थितं न प्रयातम् ॥ ५३ ॥ कोऽयं कोपविधिः प्रयच्छ करुणागर्भं वचो जायतां पीयूषद्रवदीर्घिकापरिमलैरामोदिनी मेदिनी । आस्तां वा स्पृहयालुलोचनमिदं व्यावर्तयन्ती मुहुर्यस्मै कुप्यसि तस्य सुन्दरि तपोवृन्दानि वन्दामहे ॥ ५४ ॥ सूर्येऽस्ताचलमौलिमालिनि गृहे दीपावलीशालिनि प्राणस्वामिनि मानिनि प्रतिपदं सत्कारमातन्वति । यन्मान न जहासि कोपकलनादालोहितस्तत्क्षणादिन्दुः सुन्दरि पूर्वपर्वतशिरःसीमानमारोहति ॥ ५५ ॥ सन्त्येवात्र गृहे रहो युवतयस्ताः पृच्छ गत्वाधुना प्रेयांसः प्रणमन्ति किं तव पुनर्दासो यथा वर्तते । आत्मद्रोहिणि दुर्जनप्रलपितं कर्णे वृथा मा कृथाश्छिन्नस्नेहरसा भवन्ति पुरुषा दुःखानुवृत्त्या यतः ॥ ५६ ॥ क्षीणांशुः शशलाञ्छनः सखि पुनः क्षीणो न मानस्तव स्मेरं[2] पद्मवनं मनागपि न ते स्मेरं मुखाम्भोरुहम् । पीतं श्रोत्रयुगेन षट्पदरुतं[3] पीतं न ते जल्पितं रक्ता शक्रदिगङ्गना[4] रविकरैर्नाद्यापि रक्तासि किम् ॥ ५७ ॥ किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया निद्राच्छेदविवर्तनेष्वभिमुखी नाद्यापि संभाविता। अन्यस्त्रीजनसंकथालघुरहं स्वप्ने त्वया लक्षितो दोषं पश्यसि किं प्रिये परिजनोपालम्भयोग्ये मयि ॥ ५८ ॥ चक्षुर्जाड्यमुपैतु मानिनि मुखं संदर्शय श्रोत्रयोः पीयूषस्रुति सौख्यमस्तु मधुरां वाचं प्रिये व्याहर । तापः शाम्यतु मे प्रसादशिशिरा दृष्टिं शनैः पातय त्यक्त्वा दीर्घमभूतपूर्वमचिराद्रोषं सखीदोषजम् ॥ ५९ ॥ कल्याणाङ्गरुचानुरक्तमनसा त्व येन संप्रार्थ्यते यस्यार्थे सुमुखि त्वया पुनरसुत्यागेऽपि संनह्यते । सोऽयं सुन्दरि पञ्चबाणविशिखव्यालीढदोरन्तरस्वैरोत्पीडितपीवरस्तनतटस्त्वद्दोलतापञ्जरे ॥ ६० ॥ शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ । इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्गच मामङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥ ६१ ॥ स्निग्धं यद्यपि वीक्षितं नयनयोस्ताम्रा तथापि द्युतिर्माधुर्यापि सती स्खलत्यनुपदं ते गद्गदा वागियम् । निःश्वासा नियता अपि स्तनभरोत्कम्पेन संलक्षिताः कोपस्ते प्रकटं प्रयत्नविधृतोऽप्येषः स्फुट लक्ष्यते ॥ ६२ ॥ भ्रूभङ्गैः क्रियते ललाटशशिनः कस्मात्कलङ्को मुधा वाताकम्पितबन्धुपुष्पसमता नीतोऽधरः किं स्फुरन् । मध्यश्चाधिककम्पितस्तनभरेणायं पुनः खिद्यते कोपं मुञ्च तवैव चित्तहरणायैतन्मया क्रीडितम् ॥ ६३ ॥ भ्रूभङ्गं न करोषि रोदिषि मुहुर्मुग्धेक्षणे केवलं नातिप्रस्फुरिताधरानवरतं निःश्वासमेवोज्झसि । वाचं नापि ददासि तिष्ठसि परं प्रध्यातनम्रानना कोपस्ते स्तिमितोऽतिपीडयति मा गूढप्रहारोपमः ॥ ६४ ॥ धृष्टः किं पुरतोऽवरुध्य विहसन्गृह्णामि कण्ठे प्रिया[1] किं वा चाटुशतप्रचण्डरचनाप्रीतां करिष्यामि

---

१ प्रिया.. २ विकसितम्. ३ भ्रमरशब्द.. ४ प्राची.

ताम् । किं तिष्ठामि कृताञ्जलिर्निपतितस्तस्याः पुरः पादयोः सत्यं सत्यमहो न वेद्म्यनुनयस्तस्याः कथं स्यादिति ॥ ६५ ॥ सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ताः कथा योषितां दूरादेव मयोज्झिताः सुरभयः स्रग्गन्धधूपादयः । रागं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना सद्यस्त्वद्विरहे भवन्ति सुभगे सर्वा ममान्धा दिशः ॥ ६६ ॥ व्यावृत्तं खलु सर्वतो विषयतस्त्वय्येव लीनं मनो नित्यं च त्वदधीनमेव नियतं मज्जीवितं मानिनि । मत्त्वैवं मयि नूनमन्यविषया शङ्का त्वया त्यज्यतां किंवान्यत्र निशाकरोऽभिरमते मुक्त्वा क्षणं कौमुदीम् ॥ ६७ ॥ यद्रम्यं गुरुगौरवस्य सुहृदो यस्मिन्नभन्तेऽन्तरं यद्दाक्षिण्यवशात्प्रसह्य सहते नर्मोपचारानपि । यल्लज्जा निरुणद्धि यत्र शपथैरुत्पाद्यते प्रत्ययस्तत्किं प्रेम स उच्यते परिचयस्तत्रापि कोपेन किम् ॥ ६८ ॥ मुग्धे मानिनि कोपरीतिरियती युक्ता न तथ्यं त्विदं कान्ते किं त्वदुपेक्षिता मम तनुः शोभेत नेहाद्भुतम् । अन्यायो भवति च्छलस्य करणे दक्षे जनेऽन्यादृशं का हेति प्रतिरुद्धवागकरवं वाक्स्तम्भनं चुम्बनैः ॥ ६९ ॥ मानं मानिनि मुञ्च देवि दयिते मिथ्या वचः श्रूयते किं कोपो निजसेवके यदि वचः सत्यं त्वया गृह्यते । दोर्भ्यां बन्धनमाशु दन्तदलनं पीनस्तनास्फालनं दोषश्चेन्मम ते कटाक्षविशिखैः शस्त्रैः प्रहारं कुरु ॥ ७० ॥ नैतद्वारिदगर्जितं रतिपतिप्रस्थानढक्कारवो नैते वारिधराः स्रवन्मदजलास्तत्सिन्धुराः प्रोद्धुराः । नैषा विद्युदियं विभाति रुचिरान्तश्चन्द्रहासप्रभा मन्ये मानिनि मानदुर्गमधुना भेत्तुं किमायात्यसौ ॥ ७१ ॥ सुभ्रु त्वं नवनीतकल्पहृदया केनापि दुर्मन्त्रिणं मिथ्यैव प्रियकारिणां मधुमुखेनास्मासु चण्डीकृता । किं त्वेतद्विमृश क्षणं प्रणयिनामेणाक्षि कस्ते हितः कि धात्रीतनया वयं किमु सखी किंवा किमस्मत्सुहृत् ॥ ७२ ॥

---

## सख्यनुनयः ।

मुग्धे मानं न ते कर्तुं युक्तं प्राणाधिके प्रिये । धत्से मत्स्यी कियत्कालं जीवितं जीवनं विना ॥ १ ॥ कुपितासि यदा तन्वि निधाय करजक्षतम् । बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा ॥ २ ॥ स्मेरराजीवनयने नयने किं निमीलिते । पश्य निर्जितकंदर्पं कंदर्पवशगं प्रियम् ॥ ३ ॥ रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना । वदामि सखि ते तत्त्वं कदाचिन्नोचिताः क्रुधः ॥ ४ ॥ यदि कुप्यसि नास्ति रतिः कोपेन विनाथवा कुतः कामः । कुप्य च कोपय च त्वं प्रसीद च त्वं प्रसादय च कान्तम् ॥ ५ ॥ अरुणे च तरुणि नयने तव मलिनं च प्रियस्य मुखम् । मुखमानतं च सखि ते ज्वलितश्चास्यान्तरे स्मरज्वलनः ॥ ६ ॥ अञ्चति रजनिरुदञ्चति तिमिरमिदं चञ्चति मनोभूः । उक्तं न त्यज युक्तं विरचय रक्तं मनस्तस्मिन् ॥७॥ वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशा श्रीः । धरणिरभि-

नवाङ्कुराङ्कटङ्कां प्रणतिपरे दयिते प्रसीद मुग्धे ॥ ८ ॥ जहीहि कोपं दयितोऽनुगम्यतां पुरोऽनुशेते तव चञ्चलं मनः । इति प्रियं कांचिदुपैतुमिच्छतीं पुरानुनिन्ये निपुणः सखीजनः ॥ ९ ॥ सभयचकितं विन्यस्यन्ती दृशं तिमिरे पथि प्रतितरु मुहुः स्थित्वा मन्दं पदानि वितन्वतीम् । कथमपि रहःप्राप्तामङ्गैरनङ्गतरंगिभिः सुमुखि सुभगः स त्वां पश्यन्नुपैतु कृतार्थताम् ॥ १० ॥ चपलहृदये किं स्वातन्त्र्यात्स्वयं गृहमागतश्चरणपतितः प्रेमार्द्रार्द्रैः प्रियः समुपेक्षितः । तदिदमधुना यावज्जीवं निरस्तसुखोदया रुदितशरणा दुर्जातानां सहस्व रुषा फलम् ॥ ११ ॥ लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो निराहाराः सख्यः सततरुदितोच्छूननयनाः । परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैस्तवावस्था चेयं विसृज कठिने मानमधुना ॥ १२ ॥ असद्वृत्तो नायं न च खलु गुणैरेव रहितः प्रियो मुक्ताहारस्तव चरणमूले निपतितः । गृहाणैनं मुग्धे व्रजतु तव कण्ठप्रणयितामुपायो नास्त्यन्यस्तव हृदयदाहोपशमने ॥ १३ ॥ अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृदस्त्वयाकाण्डे मानः किमिति सरले संप्रति कृतः । समाकृष्टा ह्येते मलयदहनोद्भासुरशिखाः स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः ॥ १४ ॥ अयेऽस्तमयते शशी न हि कृशी भवत्या ग्रहो विनश्यति तमो हतं किमणुमप्यपास्ते मनः । सखि प्रकटितोऽरुणो न करुणोदयस्ते मनाक्प्रयाति खलु यामिनी न विमनीकृथा नायकम् ॥ १५ ॥ आयातः कुमुदेश्वरो विजयते सर्वेश्वरो मारुतो भृङ्गः स्फूर्जति भैरवो न निकटं प्राणेश्वरो मुञ्चति । एते सिद्धरसाः प्रसूनविशिखो वैद्योऽनवद्योत्सवो मानव्याधिरयं कृशोदरि कथं त्वच्चेतसि स्थास्यति ॥ १६ ॥ मानं मानिनि मुञ्च मानसभुवः साम्राज्यमुज्जृम्भतां हा हा गच्छति यामिनी न समयो यातः पुनः प्राप्यते । अत्यल्पागसि कल्पिताधिकमये कान्ते पदान्तानते कोऽयं कोकिलवासिकेलिसमये कोपस्त्वयालम्बितः ॥ १७ ॥ स्निग्धे यत्परुषासि यत्प्रणमति स्तब्धासि यद्रागिणि द्वेषस्थासि यदुन्मुखे विमुखतां यातासि तस्मिन्प्रिये । तद्युक्तं विपरीतकारिणि तव श्रीखण्डचर्चाविधौ शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥ १८ ॥ त्वां चित्तेन चिरं वहन्नयमतिश्रान्तो भृशं तापितः कन्दर्पेण च पातुमिच्छति सुधासंवादि बिम्बाधरम् । अस्याङ्कं तदलंकुरु क्षणमिह भ्रूक्षेपलक्ष्मीलवक्रीते दासजनेऽपि सेवितपदाम्भोजे कुतः संभ्रमः ॥ १९ ॥ मुग्धे किं नखरैः क्षिपस्यविरतं नेत्राम्बु मानोन्नते पश्यैनं चरणाग्रनम्रशिरसं स्वं कान्तमात्ताञ्जलिम् । अप्यङ्के तव चेतसि प्रणयिनि प्राप्तेऽतिनिर्विण्णतामन्यासक्तमनस्युपेक्षितगता फूत्कृत्य रोदिष्यति ॥ २० ॥ मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते मानं धत्स्व धृतिं बधान ऋजुता दूरे कुरु प्रेयसि । सख्यैवं प्रतिबोधिता प्रतिवचस्ता-

१ पाषाणः. २ नम्र.. ३ उपवासशीला . ४ सततरोदनेन शोथयुक्तानि नयनानि यासाम्. ५ पाषाणहृदये. ६ मौक्तिकाना हारः; (पक्षे) मुक्तस्त्यक्त आहारोऽशनं येन. प्रियेणेत्यर्थः. ७ हृदयदाहशान्त्य. ८ सरलत्वम्.

माह भीतानना नीचैः [1]शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥ २१ ॥ अङ्गुल्यग्रनखेन बाष्पसलिलं निक्षिप्य निक्षिप्य किं तूष्णीं रोदिषि कोपने बहुतरं फूत्कृत्य रोदिष्यसि। यस्यास्ते पिशुनोपदेशवचनैर्माने‌ऽतिभूमिं गते निर्विण्णो‌ऽनुनयं प्रति प्रियतमो मध्यस्थतामेष्यति ॥ २२ ॥ नो तल्पं भजसे न जल्पसि सुधाधारानुकारा गिरो दृक्पातं कुरुते न वा परिजने कोपप्रकाशच्छलात्। इत्थं केतकगर्भगौरि दयिते कोपस्य संगोपनं तत्स्यादेव न चेत्पुनः सहचरी कुर्वीत साचिस्मितम् ॥ २३ ॥

---

## कलहान्तरिताप्रलापाख्यानम्।

उपचारानुनयास्ते कितवस्योपेक्षिताः सखीवचसा। अधुना निष्ठुरमपि यदि स वदति कलिकैतवाद्यामि ॥ १ ॥ प्रयाहि तत्रैव मयानुरज्यसे किमत्र निस्त्रिंश तव प्रयोजनम्। न कञ्चुकग्रन्थिमपाकुरुष्व मे कथं हृदि ग्रन्थिमपाकरिष्यसि ॥ २ ॥ अकरोः किमु नेत्रशोणिमानं किमकार्षीः करपल्लवावरोधम्। कलहं किमधाः क्रुधा रसज्ञे हितमर्थं न विदन्ति दैवदष्टाः ॥ ३ ॥ स्फुरसि बाहुलते किमनर्थकं त्वमपि लोचनभावमहो गता। तमहमागतमप्यपराधिनं न परिरब्धुमलं न च वीक्षितुम् ॥ ४ ॥ मानोन्नतेत्यसहनेत्यतिपण्डितेति मय्येव धिक्कृतिरनेकमुखी सखीनाम्। दाक्षिण्यमात्रमसृणेन विचेष्टितेन धूर्तस्य तस्य हि गुणानुपवर्णयन्ति ॥ ५ ॥ नवनखपदमङ्गं गोपयस्यंशुकेन स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम्। प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥ ६ ॥ इदं कृष्णं कृत्स्नं प्रियतमतनुश्वेतमथ किं गमिष्यामो यामो भवतु गमनेनाथ भवतु। पुरा येनैवं मे चिरमनुसृता चित्तपदवी स एवान्यो जातः सखि परिचिताः कस्य पुरुषाः ॥ ७ ॥ गते प्रेमाबन्धे प्रणयबहुमाने विगलिते निवृत्ते सद्भावे जन इव जने गच्छति पुरः। तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसान्न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥ ८ ॥ कथमपि सखि क्रीडाकोपाद्व्रजेति मयोदिते कठिनहृदयस्त्यक्त्वा शय्यां बलाद्गत एव सः। इति सरभसध्वस्तप्रेम्णि [2]व्यपेतघृणे स्पृहां पुनरपि हतव्रीडं चेतः करोति करोमि किम् ॥ ९ ॥ अद्यारभ्य यदि प्रिये पुनरहं मानस्य चान्यस्य वा गृह्णीयां शठ दुर्नयेन मनसा नामापि संक्षोभतः। तत्तेनैव विना शशाङ्ककिरणस्पष्टाट्टहासा निशा एको वा दिवसः पयोदमलिनो भूयान्मम प्राद्यपि ॥ १० ॥ मानव्याधिनिपीडिताहमधुना शक्नोमि तस्यान्तिकं नो गन्तुं न सखीजनो‌ऽपि चतुरो यो मां बलान्नेष्यति। मानी सो‌ऽपि जनो न लाघवभयादभ्येति मानः स्वयं कालो याति चलं च जीवितमिदं क्षुण्णं मन[3]श्चिन्तया ॥ ११ ॥ निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मील्यते निद्रा नैति न दृश्यते प्रियमुखं नक्तंदिनं

---

१ कथय. २ त्यक्तकरुणे. ३ मनः.

रुद्यते । अङ्गं शोषमुपैति पादपतितः प्रेयांस्तथोपेक्षितः सख्यः कं गुणमाकलय्य दयिते मानवयं कारिताः ॥१२॥ तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयोस्तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया । पाणिभ्यां च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः सख्यः किं करवाणि यान्ति शतशो यत्कञ्चुके संधयः ॥ १३ ॥ नो चाटु श्रवणं कृतं न च दृशा हारोऽन्तिके वीक्षितः कान्तस्य प्रियहेतवे निजसखीवाचोऽपि दूरीकृताः । पादान्ते विनिपत्य तत्क्षणमसौ गच्छन्मया मूढया पाणिभ्यामवरुध्य हन्त सहसा कण्ठे कथं नार्पितः ॥ १४ ॥ भर्तुर्यस्य कृते गुरुर्लघुरभूद्द्वेष्टी कनिष्ठीकृता धैर्यं कोषधनं गतं सहचरी नीतिः कृता दूरतः । निर्मुक्ता तृणवत्त्रपा परिचिता स्रोतस्विनी बिन्दुवत्स क्रोधादवधीरितो हतधिया मातर्बलीयान्विधिः ॥ १५ ॥ यत्पङ्केरुहलक्ष्मपाणिकमलं भाग्यालये यद्गुरुर्न्यस्तं वा मम यच्छलाटफलके भाग्याक्षरं वेधसा । तत्सर्वं सखि यो यथार्थमकरोत्तस्मिन्प्रकोपः कृतो धिङ् मां धिङ् मम जीवितं धिगतनुं धिक्चेष्टितं धिग्वयः ॥ १६ ॥ केकाभिः कलयन्तु केकिनिवहाः संभूय कर्णज्वरं विद्युद्भिः सह भीषयन्तु परितः पाथोधराणां घटाः । पञ्चेषुर्बधिरीकरोतु ककुभः सर्वाः शराणां रवैर्नाहं दग्धदुरन्तजीवनकृते कस्यापि वश्या सखि ॥ १७ ॥

---

## नायकानुनयः ।

घनघनमपि दृष्टं व्योमवातो मरुत्वाञ्छिखिकुलकलयाञ्चां श्रोत्रमासीन्निवासः । असुशमनमृताहं यद्वियोगेऽपि जाते तव घनपरिरम्भप्रार्थनाशावशेन ॥ १ ॥ मयि मलयसमीरो वर्षतीव स्फुलिङ्गानहह हिमकरो मामग्निना सिञ्चतीव । किमिति मकरकेतोः किं नु वक्ष्ये कठोरं कथमपि तदहं ते नाथ नोपेक्षणीया ॥ २ ॥ विरहविषमः कामो वामः करोति तनुं तनुं दिवसगणनादक्षश्चायं व्यपेतघृणो जनः । त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे किसलयमृदुर्जीवेदेवं कथं प्रमदाजनः ॥ ३ ॥ त्वं तावद्बहुवल्लभो नवयुवा कान्तः सुखी निर्घृणो नो जानासि परव्यथां शठमते नैवासि दुःखी यतः । किं त्वन्याः परिपृच्छ मन्मथशरैः पीडामसह्यामिमां त्राता नो भव येन सज्जनजनैः कापालिको नोच्यसे ॥ ४ ॥ मुक्तो मानपरिग्रहः सह सखीसार्थेन तन्मन्त्रिणा शक्ता त्वच्चरणप्रसादरहिता नाहं क्षणं प्राणितुम् । पश्य त्वं कृशकं शरीरकमिदं या यामवस्था गत सैषाहं तव पादयोर्निपतिता नाथ प्रसीदाधुना ॥ ५ ॥

---

## नायकयोरुक्तिप्रत्युक्तयः ।

सार्धं मनोरथशतैस्तव धूर्त कान्ता सैव स्थिता मनसि कृत्रिमभावरम्या । अस्माकमस्मिन्न कथंचिदिहावकाशस्तस्मात्कृतं चरणपातविडम्बनाभिः ॥ १ ॥ तदवितथमवादीर्यन्मम त्वं प्रियेति प्रियजनपरिभुक्तं यद्दुकूलं दधानः । मदधिवसतिमागाः कामिनां मण्डनश्रीर्व्रजति

हि सफलत्वं वल्लभालोकनेन ॥ २ ॥ पुराभूदस्माकं प्रथममविभक्ता[1] तनुरियं ततोऽनु त्वं प्रेयानहमपि हता च प्रियतमा । इदानीं नाथस्त्वं वयमपि कलत्रं[2] किमपरं मयाप्तं प्राणानां कुलिशकठिनानां[3] फलमिदम् ॥ ३ ॥ यदा त्वं चन्द्रोऽभूः शिशिरकरसंपर्करुचिरस्तदाहं जाता झाक्शशधरमणीनां प्रतिकृतिः । इदानीमर्कस्त्वं खररुचिसमुत्सारितरसः किरन्ती कोपाग्नीनहमपि रविश्रावघटिता ॥ ४ ॥ तवेदं पश्यन्त्याः प्रसरदनुरागं बहिरिव प्रियापादालक्तच्छुरितमरुणद्योतिरुदयम् । ममाद्य प्रख्यातप्रणयभरभङ्गेन कितव त्वदालोकः शोकादपि किमपि लज्जां जनयति ॥ ५ ॥ कृतककृतकैर्मायाशाठ्यैस्त्वयाप्यनिवर्तितं निभृतिनिभृतैः कार्यालापैर्मयाप्युपलक्षितम् । भवतु विदितं नेष्टा तेऽहं वृथा परिखिद्यते अहमसहना त्वं निःस्नेहः समेन समं गतम् ॥ ६ ॥ कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः । तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ ७ ॥ बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं खेदोऽस्मासु न मेऽपराध्यति भवान्सर्वेऽपराधा मयि । तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥८॥ किं किं वक्त्रमुपेत्य चुम्बसि बलान्निर्लज्ज लज्जा क्व ते वस्त्रान्तं शठ मुञ्च मुञ्च शपथैः किं धूर्त वाग्बन्धनैः । खिन्नाहं तव रात्रिजागरवशात्तामेव याहि प्रियां निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः ॥ ९ ॥ साहारं वचनं प्रयच्छसि न मे नो वाञ्छितं यच्छसि प्रायः प्रोच्छ्वसिषि द्रुतं हुतवहज्वालासमं रात्रिषु । कण्ठाश्लेषपरिग्रहे शिथिलिता यन्नादराच्चुम्बसे तत्ते धूर्त हृदि स्थिता प्रियतमा काचिन्ममैवापरा ॥ १० ॥ सत्यं तद्यदवोचथा मम महान्रागस्त्वदीयादिति त्वं प्राप्तोऽसि विभात एव सदनं मां द्रष्टुकामो यतः । रागं किं च बिभर्षि नाथ हृदये काश्मीरपत्रोदितं नेत्रे जागरजं ललाटफलके लाक्षारसापादितम् ॥ ११ ॥ रोहन्तौ प्रथमं ममोरसि तव प्राप्तौ विवृद्धिं स्तनौ संलापास्तव वाक्यभङ्गमलिना मौग्ध्यं परं त्याजिताः । धात्रीकण्ठमपास्य बाहुलतिके कण्ठे तवासिञ्जिते निर्दाक्षिण्य करोमि किं नु विशिखाप्येषा न पन्थास्तव ॥ १२ ॥ अज्ञानेन पराङ्मुखीं परिभवादाश्लिष्य मां दुःखितां किं लब्धं चटुल त्वयेह नयता सौभाग्यमेतां दशाम् । पश्यैतद्दयिताकुचव्यतिकरोन्मृष्टाङ्गरागारुणं वक्षस्ते मलतैलपङ्कशबलैर्वेणीपदैरङ्कितम् ॥ १३ ॥

---

## नायकशिक्षा ।

अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितम् । मेखलाभिरसकृच्च बन्धनं वञ्चनं प्रणयिनीरवाप सः ॥ १ ॥ अधिरजनि जगाम धाम तस्याः प्रियतमयेति रुषा स्रजावनद्धः[4] ।

---

१ एका. २ कुटुम्बम्. ३ वज्रवत्कठोराणाम्. ४ क्रोधम्.

पदमपि चलितुं युवा न सेहे किमिव न शक्तिहरं ससाध्वसानाम् ॥ २ ॥ सालक्तकेन नवपल्लवकोमलेन पादेन नूपुरवता मदनालसेन । यस्ताड्यते दयितया प्रणयापराधात्सोऽङ्गीकृतो भगवता मकरध्वजेन ॥ ३ ॥ सालक्तक शतदलाधिककान्तिरम्यं रत्नौघधामनिकरारुणनूपुरं च । क्षिप्तं भृशं कुपितया तरलोत्पलाक्ष्या सौभाग्यचिह्नमिव मूर्ध्नि पदं विरेजे ॥ ४ ॥ कोपात्किंचिदुपानतोऽपि रभसादाकृष्य केशेष्वल नीत्वा मोहनमन्दिरं दयितया हारेण बद्ध्वा दृढम् । भूयो यास्यसि तद्गृहानिति मुहुः कण्ठार्धरुद्धाक्षरं जल्पन्त्याः श्रवणोत्पलेन सुकृती कश्चिद्रहस्ताड्यते ॥ ५ ॥ सा बाढं भवते क्षितेऽतिनिबिडं संयम्य बाह्वोः स्रजा भूयो द्रक्ष्यसि तां शठेति नितरां संभर्त्स्य संतर्ज्य च । आलीनां पुर एव निह्नुतिपरः कोपाद्रसन्नूपुरं मानिन्याश्चरणप्रहारविधिना प्रेयानशोकीकृतः ॥ ६ ॥ पादे मूर्धनि ताम्रतामुपगते कर्णोत्पले चूर्णिते छिन्ने हारलतागुणे करतले संपातजातव्रणे । अप्राप्तप्रियताडनव्यतिकरा हन्तुं पुनः कोपिता वाञ्छन्ती मुहुरेणशावनयना पर्याकुला रोदिति ॥ ७ ॥ कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं नीत्वा केलिनिकेतनं दयितया सायं सखीनां पुरः । भूयोऽप्येवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं धन्यो हन्यत एष निह्नुतिपरः प्रेयान्रुदन्त्या हसन् ॥ ८ ॥

---

## नायिकाप्रसादः ।

भवति विततश्वासोन्नाहप्रणुन्नपयोधरं हृदयमपि च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम् । तदनु वदनं मूर्च्छाच्छेदात्प्रसादि विराजते परिगतमिव प्रारम्भेऽह्नः श्रिया सरसीरुहम् ॥ १ ॥ आविर्भूते शशिनि तमसा मुच्यमानेव रात्रिर्नैशस्यार्चिर्हुतभुज इव छिन्नभूयिष्ठधूमा । मोहेनान्तर्वरतनुरियं लक्ष्यते मुक्तकल्पा गङ्गारोधःपतनकलुषा गृह्णतीव प्रसादम् ॥ २ ॥ कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् । अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥ ३ ॥ परिम्लाने माने मुखशशिनि तस्याः करधृते मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे । तया पक्ष्मप्रान्तव्रजपुटनिरुद्धेन सहसा प्रसादो बाष्पेण स्तनतटविशीर्णेन कथितः ॥ ४ ॥ कृष्णस्निग्धकनीनिके विकसतः कर्णान्तदीर्घे दृशावुत्कम्पो हृदयस्य वेपितकुचाभोगः शनैः शाम्यति । धत्ते शीतरुचो विधुंतुदमुखान्मुक्तस्य लक्ष्मीमिदं मुग्धाङ्ग्या विगलद्विमोहतिमिरं वक्त्रं प्रसीदत्क्रमात् ॥ ५ ॥

---

## परस्परप्रसादः ।

न याते संमुखं याते प्रियाणि वदति प्रिये । सर्वाण्यङ्गानि मे यान्ति नेत्रतामुत कर्णताम्

१ तोयपातेन मृदाविला. २ नैर्मल्यम्.

॥ १ ॥ पदप्रणतमालोक्य कान्तमेकान्तकातरम् । मुञ्चती बाष्पसंतानं सुमुखी तेन चुम्बिता ॥ २ ॥ इह स्फुटं तिष्ठति नाथ कण्टकः शनैः शनैः कर्ष नखाग्रलीलया । इति च्छलात्काचिदलग्नकण्टकं पदं तदुत्सङ्गतले न्यवेशयत् ॥ ३ ॥ निपपात संभ्रमभृतः श्रवणादसितभ्रुवः प्रणदितालिकुलम् । दयितावलोकविकसन्नयनप्रसरप्रणुन्नमिव वारिरुहम् ॥ ४ ॥ उपनेतुमुन्नतिमतेव दिवं कुचयोर्युगेन तरसा कलिताम् । रभसोत्थितामुपगतः सहसा परिरभ्य कश्चन वधूमरुधत् ॥ ५ ॥ अनुदेहमागतवतः प्रतिमां परिणायकस्य गुरुमुद्वहता । मुकुरेण वेपथुभृतोऽतिभरात्कथमप्यपाति न वधूकरतः ॥ ६ ॥ अवनम्य वक्षसि निमग्नकुचद्वितयेन गाढमुपगूढवता । दयितेन तत्क्षणचलद्रशना कलकिङ्किणीरवमुदासि वधूः ॥ ७ ॥ कररुद्धनीवि दयितोपगतौ गलितं त्वराविरहितासनया । क्षणदृष्टहाटकशिलासदृशस्फुरदूरुभित्ति वसनं ववसे ॥ ८ ॥ पिदधानमन्वगुपगम्य दृशौ ब्रुवते जनाय वद कोऽयमिति । अभिधातुमध्यवसतौ न गिरा पुलकैः प्रियं नववधूर्न्यगदत् ॥ ९ ॥ उदितोरुसादमतिवेपथुमत्सुदृशोऽभिभर्तृ विधुरं त्रपया । वपुरादरातिशयशंसि पुनः प्रतिपत्तिमूढमपि बाढमभूत् ॥ १० ॥ परिमन्थराभिरलघूरुभरादधिवेश्म पत्युरुपचारविधौ । स्खलिताभिरप्यनुपदं प्रमदाः प्रणयातिभूमिमगमन्गतिभिः ॥ ११ ॥ मधुरोन्नतभ्रु ललितं च दृशोः सकरप्रयोगचतुरं च वचः । प्रकृतिस्थमेव निपुणागमितं स्फुटनृत्यलीलमभवत्सुतनोः ॥ १२ ॥ लोलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टिहारि मम लोचनबान्धवस्य । अध्यासितुं तव चिरं जघनस्थलस्य पर्याप्तमेव करभोरु ममोरुयुग्मम् ॥ १३ ॥ सुतनु जहिहि मौनं पश्य पादानतं मां न खलु तव कदाचित्कोप एवंविधोऽभूत् । इति निगदति नाथे तिर्यगामीलिताक्ष्या नयनजलमनल्पं मुक्तमुक्तं[1] न किंचित् ॥ १४ ॥ वचो वीचीदानं स्फुरदधरपानं विविनयं कृशीभूते माने मयि मृगयमाने मृगदृशः । बभूव भ्रूभङ्गः सनयनतरंगः सपदि यः प्रभुत्वं व्यातेने जगदुपरि तेनेह मदनः ॥ १५ ॥ तदेवाजिह्माक्षं मुखमविशदास्ता गिर इमाः स एवाङ्गश्लेषो मयि सरसमाश्लिष्यति तनुम् । तदुक्तं प्रत्युक्तं यदपटु शिरःकम्पनपरं प्रिया माने हीने पुनरपि कृता मे नववधूः ॥ १६ ॥ दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरादेकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः । ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसामन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥ १७ ॥ आगत्य प्रणिपातसान्त्वितसखीं दन्तान्तरे सागसि स्वैरं कुर्वति तल्पपार्श्वनिभृते धूर्ताङ्गसंवाहनम् । ज्ञात्वा स्पर्शवशात्प्रियं किल सखीभ्रान्त्या स्वमङ्गं शनैः खिन्नासीत्यभिधाय मीलितदृशा सानन्दमारोपितः ॥ १८ ॥ सत्यं दुर्लभ एष वल्लभतरो रागो ममास्मिन्पुनः कोपोऽस्यातिगुरुर्न चातिनिपुणाः सख्योऽपि संबोधने । संचिन्त्येति मृगीदृशा

१ त्यज. २ न किंचिदप्युक्तम्

प्रियतमे दृष्टे श्लथां मेखलां बध्नन्त्या न गतं स्थितं न च चलद्वासोऽथवा संवृतम्॥ १९॥ वाचो वाग्मिनि किं तवाद्य पुरुषाः सुभ्रु भ्रुवो विभ्रमोऽप्युद्भ्रान्तः कृत एष लोलनयने किं लोहिते लोचने। नास्त्यागो मयि किं मुधैव कुपितेत्युक्ते पुनः प्रेयसा मानिन्या जलबिन्दुदन्तुरपुटा दृष्टिः सखीष्वाहिता॥ २०॥ सा यावन्ति पदान्यलीकवचनैरालीजनैः पाठिता तावन्त्येव कृतागसो द्रुततरं संलप्य पत्युः पुरः। प्रारेभे पुरतो यथा मनसिजस्येच्छा तथा वर्तितं प्रश्नो मौग्ध्यविशेषणस्य सहजः कोऽप्येष कान्तः क्रमः॥ २१॥ दृष्टे लोचनवन्मनाङ्कुलितं पार्श्वे स्थिते वक्त्रवद्यद्भूतं बहिरासितं पुलकवत्स्पर्शं समातन्वति। नीवीबन्धनतागता शिथिलतां संभाषमाणे क्षणान्मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि॥ २२॥ एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतोरन्योन्यस्य हृदि स्थितेऽप्यनुनये सरक्षतोर्गौरवम्। दंपत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषोर्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः॥ २३॥ कृत्वा विग्रहमश्रुपातकलुषं शय्यासनादुत्थिता क्रोधात्तापि विगृह्य गर्भभवनाद्द्वारं रुषा प्रस्थिता। दृष्ट्वा चन्द्रमसं प्रभाविरहितं प्रत्यूषवाताहता हा रात्रिस्त्वरिता गतेति पतिता कान्ता प्रियस्योरसि॥ २४॥ पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयालम्बितं किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः। इत्यन्योन्यविलक्ष्यदृष्टिचतुरे तस्मिन्नवस्थान्तरे सव्याजं हसितं मया धृतिहरो मुक्तस्तु बाष्पस्तया॥ २५॥ चक्षुर्लुप्तमषीकणं कवलितस्ताम्बूलरागोऽधरे विश्रान्ता कबरी कपोलफलके लुप्तेव गात्रद्युतिः। जाने संप्रति मानिनि प्रणयिना कैरप्युपायक्रमैर्भग्नो मानमहातरुस्तरुणि ते चेतःस्थलीवर्धितः॥ २६॥ तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते। इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया संश्लिष्टा रभसेन तत्सुखवशात्तन्व्यापि तद्विस्मृतम्॥ २७॥ नापेतोऽनुनयेन यः प्रियसुहृद्वाक्यैर्न यः संहृतो यो दीर्घं दिवसं विषह्य हृदये यत्नात्कथंचिद्धृतः। अन्योन्यस्य हृते मुखे विहितयोस्तिर्यक्कथंचिद्दृशोः संभेदे सपदि स्मितव्यतिकरे मानो विहस्योज्झितः॥ २८॥ शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनैर्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्। विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥ २९॥ कान्ते घोरकृतान्तवक्त्रकुहरात्त्वं पुण्यपुञ्जेन मे मुक्ताक्रन्ततदर्जनश्रमभरं प्रत्यङ्गमालिङ्गच माम्। इत्याकर्ण्य निमीलितार्धनयनं स्मेर शनैराननं सोल्लासं वदनाम्बुजं मृगदृशः स्वैरं चुचुम्बे प्रियः॥ ३०॥ एकस्मिञ्शयने सरोरुहदृशोर्विज्ञाय निद्रार्तयोरेका पल्लवितावगुण्ठनवतीमुत्कन्धरो दृष्टवान्। अन्यस्याः सविधं समेत्य निभृतव्यालोलहस्ताङ्गुलिव्यापारैर्वसनाञ्चलं चपलयन्स्वापच्युतिं क्लृप्तवान्॥ ३१॥ लीलाता-

---

१ मौनरूपम्.

मरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः । मुग्धा कुड्मलिताननेन दधतो वायुं स्थिता तस्य सा भ्रान्त्या धूर्ततया च वेपथुमती तेनानिशं चुम्बिता ॥ ३२ ॥ जाता नोत्कलिका स्तनौ न लुलितौ गात्रं न रोमाञ्चितं वक्त्रं स्वेदकणाञ्चितं न सहसा यावच्छठेनामुना । दृष्टेनैव मनो हृतं धृतिमुषा प्राणेश्वरेणाद्य मे तत्केनापि निरूप्य माननिपुणो मानः समाधीयताम् ॥ ३३ ॥

---

## प्रियचाटूक्तयः ।

मुग्धे धनुष्मता केयमपूर्वा त्वयि दृश्यते । यथा विध्यसि चेतांसि गुणैरेव न सायकैः ॥ १ ॥ कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी । याति विश्वसनीयत्वं कस्य ते कलभाषिणि ॥ २ ॥ स्मितपुष्पोद्गमोऽयं ते दृश्यतेऽधरपल्लवे । फलं तु जातं मुग्धाक्षि चक्षुषोर्मम पश्यतः ॥ ३ ॥ अपूर्वं चौर्यमभ्यस्तं त्वया चञ्चललोचने । दिवैव जाग्रतां पुंसां चेतो हरसि दूरतः ॥ ४ ॥ कुतः कुवलयं कर्णे करोषि कलभाषिणि । किमपाङ्गमपर्याप्तमस्मिन्कर्मणि मन्यसे ॥ ५ ॥ दृष्टिं देहि पुनर्बाले कमलायतलोचने । श्रूयते हि पुरा लोके विषस्य विषमौषधम् ॥ ६ ॥ विभ्रमैर्विश्वहृद्यैस्त्वं विद्ययाप्यनवद्यया । केनापि हेतुना मन्ये प्राप्ता विद्याधरी क्षितिम् ॥ ७ ॥ त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते । मालतीशशभृल्लेखाकदलीनां कठोरता ॥ ८ ॥ बिम्बौष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत । अधुना हृदयेऽप्येष मृगशावाक्षि दृश्यते ॥ ९ ॥ पातालमिव ते नाभिः स्तनौ क्षितिधरोपमौ । वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः ॥ १० ॥ अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवम् । यदनेन न संप्राप्तः पाणिस्पर्शोत्सवस्तव ॥ ११ ॥ कमले कमलोत्पत्तिः श्रूयते न च दृश्यते । बाले तव मुखाम्भोजे दृष्टमिन्दीवरद्वयम् ॥ १२ ॥ आकर्णय सरोजाक्षि वचनीयमिदं भुवि । शशाङ्कस्तव वक्त्रेण पामरैरुपमीयते ॥ १३ ॥ नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः । सदृशे वनवृद्धानां कमलानां त्वदीक्षणे ॥ १४ ॥ यन्मध्यदेशादपि ते सूक्ष्मं लोलाक्षि दृश्यते । मृणालसूत्रमपि ते न संमाति स्तनान्तरे ॥ १५ ॥ अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः । अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥ १६ ॥ निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनी । अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥ १७ ॥ राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् । तपनीयशिलाशोभी कटिश्च हरते मनः ॥ १८ ॥ आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् । कोषदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥ १९ ॥

---

१ चन्द्रलेखा. २ रक्तिमा; (पक्षे) अनुरागः. १ इन्दीवरसदृश नेत्रयुगलम्. २ अलीकतया निन्दितम्. ३ व्याप्तताम्; (पक्षे) चपलताम्. ४ लोभशीलैः; (पक्षे) व्याधैः. ५ भ्रमरैः; (पक्षे) बाणैः. ६ जलम्; (पक्षे) अरण्यम्, ७ पद्मानाम्; (पक्षे) हरिणानाम्.

आवर्त एव नाभिस्ते नेत्रे नीलसरोरुहे । तरङ्गा वलयस्तेन त्वं लावण्याम्बुवापिका ॥ २० ॥ साहजिकरूपवत्या भवति भवत्या विभूषणं भारः । सर्वाङ्गसौरभिण्या दमनकवल्ल्याः किमालि कुसुमेन ॥ २१ ॥ इन्दुः किं क्व कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम् । ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः ॥२२॥ आरुह्य शैलशिखरं त्वद्वदनापहृतकान्तिसर्वस्वः। प्रतिकर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥२३॥ कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते । काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ २४ ॥ आक्षिपसि कर्णमक्ष्णा वलिरपि वद्धस्त्वया त्रिधा मध्ये । इति जितसकलवदान्ये तनुदाने लज्जसे सुतनु ॥ २५ ॥ नयननिपातेऽङ्कुरितः पल्लवितो वचसि पुष्पितो हसिते । फलतु कृशाङ्गि तवाङ्गस्पर्शेन मनोरथोऽस्माकम् ॥ २६ ॥ उचितं गोपनमनयोः कुचयोः कनकाद्रिकान्तितस्करयोः । अवधीरितविधुमण्डलमुखमण्डलगोपनं किमिति ॥ २७ ॥ वदनेन निर्जितं तव निलीयते चन्द्रविम्बमम्बुधरे । अरविन्दमपि च सुन्दरि निलीयते पाथसां पूरे ॥ २८ ॥ सत्यं तपः सुगत्या यत्तस्वाम्बुषु रविप्रतीक्षं सत् । अनुभवति सुगतिमब्जं त्वत्पदजन्मनि समस्तकमनीयम् ॥ २९ ॥ दलदमलकोमलोत्पलपलाशशङ्काकुलोऽयमलिपोतः । तव लोचनयोरनयोः परिसरमनुवेलमनुसरति ॥ ३० ॥ तव कुवलयाक्षि वक्षसि कुण्डलिता कापि काञ्चनी कान्तिः । कुसुमेषोर्विजिगीषोर्भवति च भवतीह भूयसी कण्डुः ॥ ३१ ॥ कम्बुकण्ठि चरणः शनैश्चरो राहुरेष तव केशकलापः । न च्युतं तदपि यौवनमेतत्सा पयोधरगुरोरनुकम्पा ॥ ३२ ॥ कमलाक्षि विलम्ब्यतां क्षणं कमनीये कचभारबन्धने । दृढलग्नमिदं दृशोर्युगं शनकैरद्य समुद्धराम्यहम् ॥ ३३ ॥ अयि मन्मथचूतमञ्जरि श्रवणायतचारुलोचने । अपहृत्य मनः क्व यासि तत्किमराजकमत्र राजते ॥ ३४ ॥ भवत्कृते खञ्जनमञ्जुलाक्षि शिरो मदीयं यदि याति यातु । नीता विनाशं जनकात्मजार्थं दशाननेनापि दशाननानि ॥३५॥ ताम्बूलरागोऽधरलोलुपो यद्यदञ्जनं लोचनचुम्बनोत्सुकम् । हारश्च कण्ठग्रहलालसो यत्स्वार्थः स तेषां न तु भूषणं ते ॥ ३६ ॥ यत्पद्ममादित्सु तवाननीयां कुरङ्गलक्ष्मस्य मृगाक्षि लक्ष्मीम् । एकार्थलिप्साकृत एव मन्ये शशाङ्कपङ्केरुहयोर्विरोधः ॥ ३७ ॥ अनेन रम्भोरु तवाननेन तुषारभानोस्तुलया धृतस्य । ऊनस्य नूनं प्रतिपूरणाय ताराः स्फुरन्ति प्रतिमानखण्डाः ॥ ३८ ॥ सदा प्रदोषो मम याति जाग्रतः सदा च मे निःश्वसतो गता निशा । त्वया समेतस्य विशाललोचने ममाद्य शोकान्तकरः प्रदोषकः ॥ ३९ ॥ तवाननं सुन्दरि फुल्लपङ्कजं स्फुटं जपापुष्पमसौ तवाधरः । विनिद्रपद्मं तव लोचनद्वयं तवाङ्गमन्यत्किल पुष्पसंचयः ॥ ४० ॥ प्रिये सदा पूर्णतरं मनोहरं ते निष्कलङ्कं मुखचन्द्र

१ श्रोत्रम्; (पक्षे) अङ्गाधिपम्. २ बलिनामा दैत्यः; (पक्षे त्रयो. सावर्ण्यात्) वलि. वलित्रितयम् ३ जितसर्वदानशौण्डे ४ जलानाम्.

मण्डलम्। विलोक्य सव्रीडतया निशापतिर्गतः प्रतप्तो जलधेर्जलान्तरम्॥ ४१॥ त्वद्वर्तुलस्थूलसुवर्णकान्ति रम्यस्तनश्रीफलयुग्ममेतत्। दृष्ट्वा वने श्रीफलसंकुलं किं लज्जाभिरालम्बितमेव वृक्षे॥ ४२॥ जघान बाणैर्दशभिर्दशास्यशिरांसि सीताहरणे स रामः। त्वदङ्गसङ्गाय सदानुरक्ते प्रयातु मे मस्तकमेकमेव॥ ४३॥ शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः। सुमुखि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः॥ ४४॥ अनधिगतमनोरथस्य पूर्वं शतगुणितेव गता मम त्रियामा। यदि तु तव समागमे तथैव प्रसरति सुभ्रु ततः कृती भवेयम्॥ ४५॥ दलितकुचनखाङ्कमङ्कपाणिं रचय ममाङ्कमुपेत्य पीवरोरु। अनुहर हरिणाक्षि शंकराङ्कस्थितहिमशैलसुताविलासलक्ष्मीम्॥४६॥ कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का। अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य॥ ४७॥ नारब्धं कुचपरिरम्भणेषु वाम्यं वैमुख्यं किमपि न चुम्बने कदाचित्। किं नीवीगतमबले रुणत्सि पाणिं विक्रीते करिणि[१] किमङ्कुशे विवादः॥ ४८॥ दासे कृतागसि भवेदुचितः प्रभूणां पादप्रहार इति मानिनि नास्मि दूये। उद्यत्कठोरपुलकाङ्कितकण्टकाग्रैर्यद्भिद्यते तव पदं ननु सा व्यथा मे॥ ४९॥ बाले तवाधरसुधारसपानकाले चेतो मदीयमभिवाञ्छति शेष[२]भावम्। आलिङ्गने तव विरोचनपौत्रभावमाखण्डलत्व[३]मखिलाङ्गनिरीक्षणे ते॥ ५०॥ एको हि खञ्जनवरो नलिनीदलस्थो दृष्टः करोति चतुरङ्गबलाधिपत्यम्। किंवा करिष्यति भवद्वदनारविन्दे जानामि नो नयनखञ्जनयुग्ममेतत्॥५१॥ कोपस्त्वया हृदि कृतो यदि पङ्कजाक्षि सोऽस्तु प्रियस्तव किमत्र विधेयमन्यत्। आश्लेषमर्पय मदर्पितपूर्वमुच्चैर्दन्तक्षतं मम समर्पय चुम्बनं च॥ ५२॥ म्लानस्य जीवकुसुमस्य विकासनानि संतर्पणानि सकलेन्द्रियमोहनानि। एतानि ते सुवचनानि सरोरुहाक्षि कर्णामृतानि मनसश्च रसायनानि॥ ५३॥ मालिन्य[५]मब्जशशिनोर्मधुलिट्कलङ्कौ धत्तो मुखे तु तव दृक्तिलकाञ्जनाभाम्। दोषावि[६]र्तैः क्वचन मेलनतो[७] गुणत्वं वक्तुर्गुणो हि वचसि भ्रमविप्रलम्भौ[८]॥ ५४॥ पादास्त एव शशिनः सुखयन्ति गात्रं बाणास्त एव मदनस्य ममानुकूलाः। संरम्भरूक्षमिव सुन्दरि यद्यदासीत्त्वत्संगमेन मम तत्तदिवानुनीतम्॥ ५५॥ पद्मातपत्ररसिके सरसीरुहस्य किं बीजमर्पयितुमिच्छसि वापिकायाम्। कालः कलिर्जगदिदं न कृतज्ञमज्ञे स्थित्वा हरिष्यति मुखस्य तवैव लक्ष्मीम्॥ ५६॥ त्वद्वक्त्रसाम्यमयमम्बुजकोश[९]मुद्राभङ्गा[१०]त्तितत्[११]सुषु[१२]ममित्रकरोपक्लृप्त्या[१३]। लब्धापि पर्वणि विधुः क्रमहीयमानः शंसत्यनीत्युपचितां श्रियमाशुनाशाम्॥ ५७॥ किं शीतलैः क्लमविरोधिभिरार्द्रवातं संचारयामि

१ अस्मीत्यहमर्थे. २ शेषत्वम्. जिह्वासहस्रवत्त्वात्. ३ सहस्रार्जुनत्वम्. हस्तसहस्रवत्त्वात्. ४ इन्द्रत्वम्. चक्षुःसहस्रवत्त्वात्. ५ मलिनत्वम्. ६ प्रावृतः. ७ मिथो मिलनात्. ८ भ्रान्तिप्रतारणे. ९ कुड्मलः; (पक्षे) भाण्डारगृहम्. १० मुकुलीभाव; (पक्षे) मुद्रणम्. ११ गृहीता. १२ शोभा. १३ सूर्यकिरणाः; (पक्षे) सुहृत्पाणयः.

नलिनीदलतालवृन्तैः । अङ्के निवेश्य चरणावुत पद्मताम्रौ संवाहयामि करभोरु यथासुखं ते ॥ ५८ ॥ मृदुलकनककान्ति श्वाससौरभ्यरम्यं वदनकमलमेतन्नेत्रमत्तद्विरेफम् । तव किमु सुसमीक्ष्य व्रीडया पद्मवृन्दं सरसि सलिलपूर्णं मर्तुकामं विवेश ॥ ५९ ॥ यः प्रागासीदभिनववयोविभ्रमावाप्तजन्मा चित्तोन्माथी विगतविषयोपप्लवानन्दसान्द्रः । वृत्तीरन्तस्तिरयति तवाश्लेषजन्मा स कोऽपि प्रौढप्रेमा नव इव पुनर्मान्मथो मे विकारः ॥ ६० ॥ गोत्रे साक्षादजनि भगवानेष यत्पद्मयोनिः शय्योत्थायं यदखिलमहः प्रीणयन्ति द्विरेफान् । एकाग्रां यद्दधति भगवत्युष्णभानौ च भक्तिं तत्प्रापुस्ते सुतनु वदनौपम्यमम्भोरुहाणि॥६१॥ उन्मेषं यो मम न सहते जातिवैरी निशायामिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः । नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षाल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः ॥ ६२ ॥ हस्तस्वेदस्नपित इव यश्चन्दनक्षोदवृन्दैरालिप्तोऽलंकृतपरिसरः फुल्लकह्लारहारैः । आराधीत्थं तव नवकुरङ्गाक्षि वक्षोजशंभुः साक्षात्कारं तदपि न दिपत्येष किं वा करोमि ॥ ६३ ॥ विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः । तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो विकारश्चैतन्यं भ्रमयति च संमीलयति च ॥ ६४ ॥ स्मितज्योत्स्नाभिस्ते धवलयति विश्वं शशिमुखि दृशस्ते पीयूषद्रवमिव विमुञ्चन्ति परितः । वपुस्ते लावण्यं किरति मधुरं दक्षु तदिदं कुतस्ते पारुष्यं सुतनु हृदयेनाद्य गुणितम् ॥ ६५ ॥ स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे विलेभे कः प्राणान्रणमखमुखे यं मृगयसे । सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥ ६६ ॥ पुराभूदस्माकं प्रथममविभिन्ना तनुरियं ततोऽनु त्वं प्रेयान्वयमपि हताशाः प्रियतमाः । इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं हताना प्राणानां कुलिशकठिनानां फलमिदम् ॥ ६७ ॥ दृशौ तव मदालसे वदनमिन्दुमत्यान्वितं गतिर्जनमनोरमा विधुतरम्भमूरुद्वयम् । रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवावहो विबुधयौवतं वहसि तन्वि पृथ्वीगता ॥ ६८ ॥ दिनकरकराभृष्टं बिभ्रद्द्युतिं परिपाटलां दशनकिरणैरुत्सर्पद्भिः स्फुटीकृतकेसरम् । अयि मुखमिदं मुग्धे सत्यं समं कमलेन ते मधु मधुकरः किं त्वेतस्मिन्पिबन्न विभाव्यते ॥ ६९ ॥ बन्धूकद्युतिबान्धवोऽयमधरः स्निग्धो मधूकच्छविर्गण्डश्चण्डि चकास्ति नीलनलिनश्रीमोचनं लोचनम् । नासाभ्येति तिलप्रसूनपदवीं कुन्दाभदन्ति प्रिये प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः ॥७०॥ केशाः संयमिनः[2] श्रुतेरपि[3] परं पारंगते लोचने ह्यन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां[4] गणैः । मुक्तानां[5] सततं निवासरुचिरं वक्षोजकुम्भद्वयमित्थं तन्वि वपुः प्रशान्तमपि

---

१ वज्रम्. २ बन्धनयुक्ताः; (पक्षे) नियमवन्तः. ३ कर्णस्य, (पक्षे) वेदस्य. ४ दन्तानाम्; (पक्षे) ब्राह्मणानाम्. ५ मौक्तिकानाम्, (पक्षे) जीवन्मुक्तानाम्.

ते रा[1]गं करोत्येव नः ॥ ७१ ॥ [2]भ्रूचापे निहितः [3]कटाक्षविशिखो निर्मातु मर्म[4]व्यथां श्यामात्मा कुटिलः करोतु कबरीभारोऽपि मारोद्यमम्। मोहं तावदयं च तन्वि तनुतां बिम्बाधरो रागवान्सद्वृत्तं स्तनमण्डलं तव कथं प्राणैर्मम क्रीडति ॥ ७२ ॥ ये ये खञ्जनमेकमेव कमले पश्यन्ति दैवात्क्वचित्ते सर्वे कवयो भवन्ति सुतरां प्रख्यातभूमीभुजः। त्वद्वक्त्राम्बुजनेत्रखञ्जनयुगं पश्यन्ति ये ये जनास्ते ते मन्मथबाणजालविकला मुग्धे किमत्यद्भुतम् ॥७३॥ धत्ते बर्हभरे शिखी तव न किं धम्मिल्लभारश्रियं सारङ्गो भजते न किं तव दृशोः सौभाग्यमालोकने। मत्तेभश्च शिरःपदे वहति ते वक्षोजलक्ष्मीं न किं तन्मन्ये तरुणि त्वया विवृणुते साम्यं वनश्रीरियम् ॥ ७४ ॥ किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं वृद्धिं वा झ[5]षकेतनस्य कुरुते [6]नालोकमात्रेण किम्। वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशु[7]रुज्जृम्भते दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥ ७५ ॥ उज्जृम्भाननमुल्लसत्कुचतटं लोलभ्रमद्भ्रूलतं स्वेदाम्भःस्नपिताङ्गयष्टिविगलद्व्रीडं सरोमाञ्चया। धन्यः कोऽपि युवा स यस्य वदने व्यापारिताः सस्पृहं मुग्धे दुग्धमहाब्धिफेनपटलप्रख्याः कटाक्षच्छटाः ॥ ७६ ॥ लावण्यामृतवर्षिणि प्रतिदिशं कृष्णागरुश्यामले वर्षाणामिव ते पयोधरभरे तन्वङ्गि दूरोन्नते। नासावंशमनोज्ञकेतकतनुर्भ्रूपत्रगर्भोल्लसत्पुष्पश्रीस्तिलकः सहेलमलकैर्भृङ्गैरिवापीयते ॥ ७७ ॥ अन्तःकूजदुदारकण्ठमसकृन्मुग्धेति लोलेक्षणं प्रायः स्मेरकपोलमूलममृतप्रस्यन्दि बिम्बाधरम्। आधूताङ्गुलिपल्लवाग्रमलमित्यानर्तितभ्रूलतं पीतं येन मुखं त्वदीयमबले सोऽयं हि धन्यो युवा ॥ ७८ ॥ हुंकारैर्ददता मया प्रतिवचो यन्मौनमासेवितं यद्दावानलदीप्तिभिस्तनुरियं चन्द्रातपैस्तापिता। ध्यातं यत्सुबहून्यनन्यमनसा नक्तंदिनानि प्रिये तस्यैतत्तपसः फलं मुखमिदं पश्यामि यत्तेऽधुना ॥ ७९ ॥ काश्मीरद्रवगौरि हन्त किमयं भूयोऽङ्गरागे ग्रहः को वा नीलसरोरुहाक्षि नितरां नेत्राञ्जने संभ्रमः। रक्ताशोकदलोपमेयचरणे किं लाक्षया दत्तया नो रागान्तरमीहते निजरुचा विभ्राजमाणो मणिः ॥८०॥ तन्वि त्वद्वदनस्य विभ्रमलवं लावण्यवारांनिधेरिन्दुः सुन्दरि दुग्धसिन्धुलहरीबिन्दुः कथं विन्दतु। उत्कल्लोलविलोचने क्षणमयं शीतांशुरालम्बतामुन्मीलन्नवनीलनीरजवनीखेलन्मरालश्रियम् ॥ ८१ ॥ वेणीं ते प्रसमीक्ष्य चित्रकुसुमैरुद्भासितां बर्हिणो लज्जन्ते निजबर्हवृन्दमधिकं भारं विदित्वा प्रिये। निर्याताः शनकैरिति स्वनिलयाद्दूरे निलीय स्थिताः पश्यैतानपि लज्जयेव मधुपान्वल्लीर्विहायोद्गतान् ॥ ८२ ॥ शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ। इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मामङ्गानि त्वमनङ्गतापविधुराण्येह्येहि

---

१ अनुरागम्; (पक्षे) क्रोधम्. २ भ्रूरेव चापस्तस्मिन्. ३ कटाक्ष एव विशिखो बाणः. ४ मलिनस्वभावः. ५ समुद्रस्य; (पक्षे) कामस्य. ६ आलोकः; (पक्षे) प्रकाशः. ७ उदितो भवति.

निर्वापय ॥ ८३ ॥ प्रातः प्रातरुपागतेन जनिता निर्निद्रिता चक्षुषोर्मन्दायां मयि गौरवव्यपगमादुत्पादितं लाघवम् । किं मुग्धेन मया कृतं- रमणधीर्मुक्ता त्वया गम्यतां दुःस्थं तिष्ठसि यच्च पथ्यमधुना कर्तास्मि तच्छ्रोष्यसि ॥ ८४ ॥

## पानगोष्ठीवर्णनम् ।

दृश्यते पानगोष्ठीषु कान्ते वक्त्रगतं मधु । स्मरं सहायमासाद्य ग्रस्तो राहुरिवेन्दुना ॥ १ ॥ सागसि प्रियतमे कृतकोपा याङ्घ्रियुग्मपतितेऽपि न तुष्टा । सैव मद्यपरिधिक्तविवेका तां तथैव परितोषयति स्म ॥ २ ॥ मूर्तिमन्तमिव रागरसौघं ते परस्परसमर्पितवक्त्राः । अङ्गनासवमिषेण तदानीमक्षिपन्त हृदयेषु युवानः ॥ ३ ॥ सज्जितानि सुरभीण्यथ यूनामुल्लसन्नयनवारिरुहाणि । आययुः सुघटितानि सुरायाः पात्रतां प्रियतमावदनानि ॥ ४ ॥ सोपचारमुपशान्तविचारं सानुतर्षमनुतर्षपदेन । ते मुहूर्तमथ मूर्तमपीप्यन्प्रेम मानमवधूय वधूः स्वाः ॥ ५ ॥ क्रान्तकान्तवदनप्रतिबिम्बे मग्नबालसहकारसुगन्धौ । स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥ ६ ॥ कापिशायनसुगन्धि विघूर्णन्नुन्मदोऽधिशयितुं समशेत । फुल्लदृष्टि वदनं प्रमदानामब्जचारु चषकं च षडङ्घ्रिः ॥ ७ ॥ बिम्बितं भृतपरिश्रुति जानन्भाजने जलजमित्यबलायाः । घ्रातुमाशि पतति भ्रमरः स्म भ्रान्तिभाजि भवति क्व विवेकः ॥ ८ ॥ दत्तमिष्टतमया मधु पत्युर्बाढमाप पिबतो रसवत्ताम् । यत्सुवर्णमुकुटांशुभिरासीच्चेतनाविरहितैरपि पीतम् ॥ ९ ॥ स्वादनेन सुतनोरविचारादोष्ठतः समचरिष्ट रसोऽत्र । अन्यमन्यदिव यन्मधु यूनः स्वादमिष्टमतनिष्ट तदेव ॥ १० ॥ बिभ्रतौ मधुरतामतिमात्रं रागिभिर्युगपदेव पपाते । आननैर्मधुरसो विकसद्भिर्नासिकाभिरसितोत्पलगन्धः ॥ ११ ॥ पीतवत्यभिमते मधुतुल्यस्वादमोष्ठरुचकं विदंदङ्क्षौ[3] । लभ्यते स्म परिरक्ततयात्मा यावकेन वियतापि युवत्याः ॥ १२ ॥ कस्यचित्समदनं मदनीय प्रेयसीवदनपानपरस्य । स्वादितः सकृदिवासव एव प्रत्युत क्षणविदंशपदेऽभूत् ॥ १३ ॥ पीतशीधुमधुरैर्मिथुनानामाननैः परिहृतं चषकान्तः । व्रीडया रुददिवालिविरावैर्नीलनीरजमगच्छदधस्तात् ॥ १४ ॥ प्रातिभं[4] त्रिसरकेण[5] गतानां वक्रवाक्यरचनारमणीयः । गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः ॥ १५ ॥ हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः । चक्रिरे भृशमृजोरपि वध्वाः कामिनेव तरुणेन मदेन ॥१६॥ अप्रसन्नमपराद्धरि पत्यौ कोपदीप्तमुररीकृतधैर्यम् । क्षालितं नु शमितं नु वधूनां द्रावितं नु हृदयं मधुवारैः ॥ १७ ॥ सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे । विभ्रमं मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम् ॥ १८ ॥ सावशेषपदमुक्तमुपेक्षास्रस्तमाल्यवसनाभरणेषु । गन्तुमुत्थितमकारणतः स्म द्योतयन्ति मदविभ्रममासाम् ॥ १९ ॥ मद्य-

१ निर्वृत्ति प्राप. २ मद्ये. ३ विदष्टुमिच्छौ. ४ प्रागल्भ्येन. ५ मद्येन.

मन्दविगलत्त्रयमीषच्चक्षुरुन्मिषितपक्ष्म दधत्या । वीक्ष्यते स्म शनकैर्नववध्वा कामिनो मुखमधोमुखयैव ॥ २० ॥ या कथंचन सखीवचनेन प्रागभिप्रियतमं प्रजगल्भे । व्रीडजाड्यमभजन्मधुपा सा स्वां मदात्प्रकृतिमेति हि सर्वः ॥ २१ ॥ छादितः कथमपि त्रपयान्तर्यः प्रियं प्रति चिराय रमण्याः । वारुणीमदविशङ्कमथाविश्रक्षुतोऽभवदसाविव रागः ॥ २२ ॥ आगतानगणितप्रतियातान्वल्लभानभिसिसारयिषूणाम् । प्रापि चेतसि स विप्रतिसारे सुभ्रुवामवसरः सरकेण ॥ २३ ॥ मा पुनस्तमभिसीसरमागस्कारिणं मदविमोहितचित्ता । योषिदित्यभिललाष न हालान्दुस्त्यजः खलु सुखादपि मानः ॥ २४ ॥ ह्रीविमोहमहरद्दयितानामान्तिकं रतिसुखाय निनाय । सप्रसादमिव सेवितमासीत्सद्य एव फलदं मधु तासाम् ॥ २५ ॥ दत्तमात्तमदनं दयितेन व्याप्तमातिशयिकेन रसेन । सस्वदे मुखसुरं प्रमदाभ्यो नाम रूढमपि च व्युदपादि ॥ २६ ॥ लब्धसौरभगुणो मदिराणामङ्गनास्यचषकस्य च गन्धः । मोदितालिरितरेतरयोगादन्यतामभजतातिशयं नु ॥ २७ ॥ मानभङ्गपटुना सुरतेच्छां तन्वता प्रथयता दृशि रागम् । लेभिरे सपदि भावयतान्तर्योषित प्रणयिनेव मदेन ॥ २८ ॥ पानधौतनवयावकरागं सुभ्रुवो निभृतचुम्बनदक्षाः । प्रेयसा मधररागरसेन स्वं किलाधरमुपालि ररञ्जुः ॥ २९ ॥ अर्पितं रसितवत्यपि नाम ग्राहमन्ययुवतेर्दयितेन । उज्झति स्म मदमप्यपिबन्ती वीक्ष्य मद्यमितरा तु ममाद ॥ ३० ॥ अन्ययान्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या । पीतभूरिसुरयापि न मेदे निर्वृतिर्हि मनसो मदहेतुः ॥ ३१ ॥ कोपवत्यनुनयानगृहीत्वा प्रागथो मधुमदाहितमोहा । कोपितं विरहखेदितचित्ता कान्तयेव कलयन्त्यनुनिन्ये ॥ ३२ ॥ कुर्वता मुकुलिताक्षियुगान्तमङ्गसादमवसादितवाचाम् । ईर्ष्ययेव हरता ह्रियमासां तद्गुणः स्वयमकारि मदेन ॥ ३३ ॥ गण्डभित्तिषु पुरा सदृशीषु व्याञ्जि नाञ्चितदृशां प्रतिमेन्दुः । पानपाटलितकान्तिषु पश्चाल्लोध्रचूर्णतिलकाकृतिरासीत् ॥ ३४ ॥ उद्धतैरिव परस्परसङ्गादीरितान्युभयतः कुचकुम्भैः । योषितामतिमदेन जुघूर्णुर्विभ्रमातिशयपुंषि वपूंषि ॥ ३५ ॥ चारुता वपुरभूषयदासां तामनूननवयौवनयोगः । तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसंगमभूषः ॥ ३६ ॥ क्षीवतामुपगतास्वनुवेलं तासु रोषपरितोषवतीषु । अग्रहीन्नु सशरं धनुरुज्झामास नूज्झितनिषङ्गमनङ्गः ॥ ३७ ॥ शङ्कयान्ययुवतौ वनिताभिः प्रत्यभेदि दयितः स्फुटमेव । न क्षमं भवति तत्त्वविचारे मत्सरेण हतसंवृति चेतः ॥ ३८ ॥ आननैर्विचकरो हृषिताभिर्वल्लभानभि तनूभिरभावि । आर्द्रतां हृदयमाप च रोषो लोलति स्म वचनेषु वधूनाम् ॥ ३९ ॥ रूपमप्रतिविधानमनोज्ञं प्रेम कार्यमनपेक्ष्य विकाशि । चाटु चाकृतकसंभ्रममासां कार्मणत्वमगमन्रमणेषु ॥ ४० ॥ लीलयैव सुतनोस्तुलयित्वा गौरवाढ्यमपि लावणिकेन । मानवञ्चनविदा वदनेन क्रीतमेव हृदयं दयितस्य ॥ ४१ ॥ शीधुपानवि-

धुरासु निगृह्णन्मानमाशु शिथिलीकृतलग्नः। संगतासु दयितैरुपलेभे कामिनीषु मदनो नु मदो नु ॥ ४२ ॥ पातुमाहितरतीन्यभिलेपुस्तर्षयन्त्यपुनरुक्तरसानि। सस्मितानि वदनानि वधूनां सोत्पलानि च मधूनि युवानः ॥ ४३ ॥ कान्तसंगमपराजितमन्यौ वारुणीरसनशान्तविवादे। मानिनीजन उपाहितसंधौ संदधे धनुषि नेपुमनङ्गः ॥ ४४ ॥ कुप्यताशु भवतानतचित्ताः कोपितांश्च वरिवस्यत यूनः। इत्यनेक उपदेश इव स्म स्वाद्यते युवतिभिर्मधुवारः ॥ ४५ ॥ भर्तृभिः प्रणयसंभ्रमदत्तां वारुणीमतिरसां रसयित्वा। ह्रीविमोहविरहादुपलेभे पाटवं नु हृदयं नु वधूभिः ॥ ४६ ॥ स्वादितः स्वयमथैधितमानं लम्भितः प्रियतमैः सह पीतः। आसवः प्रतिपदं प्रमदानां नैकरूपरसतामिव भेजे ॥ ४७ ॥ भ्रूविलाससुभगाननुकर्तुं विभ्रमानिव वधूनयनानाम्। आददे मृदुविलोलपलाशैरुत्पलैश्चषकवीचिषु कम्पः ॥ ४८ ॥ ओष्ठपल्लवविदंशरुचीनां हृद्यतामुपययौ रमणानाम्। फुल्ललोचनविनीलसरोजैरङ्गनास्यचषकैर्मधुवारः ॥ ४९ ॥ प्राप्यते गुणवतापि गुणानां व्यक्तमाश्रयवशेन विशेषः। तत्तथा हि दयिताननदत्तं व्यानशे मधु रसातिशयेन ॥ ५० ॥ वीक्ष्य रत्नचषकेष्वतिरिक्तां कान्तदन्तपदमण्डनलक्ष्मीम्। जज्ञिरे बहुमताः प्रमदानामोष्ठयावकनुदो मधुवाराः ॥ ५१ ॥ लोचनाधरकृताहृतरागा वासिताननविशेषितगन्धा। वारुणी परगुणात्मगुणानां व्यत्ययं विनिमयं नु वितेने ॥ ५२ ॥ तुल्यरूपमसितोत्पलमक्ष्णोः कर्णगं निरुपकारि विदित्वा। योषितः सुहृदिव प्रविभेजे लम्भितेक्षणरुचिर्मदरागः ॥ ५३ ॥ क्षीणयावकरसोऽप्यतिपानैः कान्तदन्तपदसंभृतशोभः। आययावतितरामिव वध्वाः सान्द्रतामधरपल्लवरागः ॥ ५४ ॥ रागकान्तनयनेषु नितान्तं विद्रुमारुणकपोलतलेषु। सर्वगापि ददृशे वनितानां दर्पणेष्विव मुखेषु मदश्रीः ॥ ५५ ॥ बद्धकोपविकृतीरपि रामाश्चारुताभिमततामुपनिन्ये। वश्यतां मधुमदो दयितानामात्मवर्गहितमिच्छति सर्वः ॥ ५६ ॥ वाससां शिथिलतामुपनाभि ह्रीनिरासमपदे कुपितानि। योषितां विदधती गुणपक्षे निर्ममार्ज मदिरा वचनीयम् ॥ ५७ ॥ भर्तृषूपसखि निक्षिपतीनामात्मनो मधुमदोद्यमितानाम्। व्रीडया विफलया वनितानां न स्थितं न विगतं हृदयेषु ॥ ५८ ॥ रुन्धती नयनवाक्यविकाशं सादितोभयकरा परिरम्भे। व्रीडितस्य ललितं युवतीनां क्षीबता बहुगुणैरनुजह्रे ॥ ५९ ॥ योषिदुद्धतमनोभवरागा मानवत्यपि ययौ दयिताङ्कम्। कारयत्यनिभृता गुणदोषे वारुणी खलु रहस्यविभेदम् ॥ ६० ॥ आहिते नु मधुना मधुरत्वे चेष्टितस्य गमिते नु विकाशम्। आबभौ नव इवोद्धतरागः कामिनीष्ववसरः कुसुमेषोः ॥ ६१ ॥ मा गमन्मदविमूढधियो नः प्रोज्झ्य रन्तुमिति शङ्कितनाथाः। योषितो न मदिरां भृशमीषुः प्रेम पश्यति भयान्यपदेऽपि ॥ ६२ ॥ चित्तनिर्वृतिविधायि विविक्तं मन्मथो मधुमदः शशिभासः। संगमैश्च दयितैः स्म नयन्ति प्रेम कामपि भुवं प्रम-

दानाम् ॥ ६३ ॥ धाष्ट्र्यलङ्घितयथोचितभूमौ निर्दयं विलुलितालकमाल्ये । मानिनीरतिविधौ कुसुमेषुर्मत्तमत्त इव विभ्रममाप ॥ ६४ ॥ शीधुपानविधुरेषु वधूनां निघ्नतामुपगतेषु वपुःषु । ईहितं रतिरसाहितभावं वीतलक्ष्यमपि कामिषु रेजे ॥ ६५ ॥ पीतस्तुषारकिरणो मधुनेव सार्धमन्तः प्रविश्य चषकप्रतिबिम्बवर्ती । मानान्धकारमपि मानवतीजनस्य नूनं बिभेद यदसौ प्रससाद सद्यः ॥ ६६ ॥ पिपिप्रिय ससस्वयं मुमुमुखासवं देहि मे तततत्यज दुदुद्रुतं भभभभाजनं काञ्चनम् । इति स्खलितजल्पितं मदवशात्कुरङ्गीदृशः प्रगे हसितहेतवे सहचरीभिरध्येयत ॥ ६७ ॥

---

## द्यूतक्रीडावर्णनम् ।

स्मितेनोपायनं दूरादागतस्य कृतं मम । स्तनोपपीडमाश्लेषः कृतो द्यूते पणस्तया ॥१॥ आश्लेषचुम्बनरतोत्सवकौतुकानि क्रीडादुरोदरपणः प्रतिभूरनङ्गः । भोगः सपद्यपि जये च पराजये च यूनोर्मनस्तदपि वाञ्छति जेतुमेव ॥ २ ॥ रतिक्रीडाद्यूते कथमपि समासाद्य समयं मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे । कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदितस्मितक्रोधोद्भ्रान्तं पुनरपि विदध्यान्मयि मुखम् ॥ ३ ॥ अद्य द्यूतजिताधरग्रहविधावासोसितात्खण्डनादाधिक्ये वद को भवानिति मृषा कोपाञ्चितभ्रूलता । सद्यः स्विन्नकराग्रकुन्तलपरा यन्त्रीकृतास्यस्य मे मुग्धाक्षी प्रतिकृत्य तत्कृतवती द्यूतेऽपि यन्नार्जितम् ॥ ४ ॥ गाढालिङ्गनपूर्वमेकमनया द्यूते जिते चुम्बनं तत्किंचित्परिरभ्य दत्तममुना प्रत्यर्पितं चानया। नैतत्तादृगिदं न तादृशमिति प्रत्यर्पणप्रक्रमैर्यूनोश्चुम्बनमेकमेव बहुधा रात्रिर्गता तन्वतोः ॥ ५ ॥ आश्लेषे प्रथमं क्रमेण विजिते हृद्येऽधरस्यार्पणे नर्मद्यूतविधौ पणं प्रियतमे कान्तां पुनः पृच्छति । अन्तर्हासविरोधसंभृतरसोद्भेदस्फुरद्गण्डया स्वैरं सारिविसारणाय विहितः स्वेदाम्बुगर्भोत्करः ॥ ६ ॥

---

## बाह्यरतक्रीडावर्णनम् ।

आलिङ्गनम् ॥ ह्रीतया गलितनीवि निरस्यन्नन्तरीयमवलम्बितकाञ्चि । मण्डलीकृतपृथुस्तनभारं सस्वजे दयितया हृदयेशः ॥ १ ॥ उत्तरीयविनयात्त्रपमाणा रुन्धती किल तदीक्षणमार्गम् । आवरिष्ट विकटेन विवोढुर्वक्षसैव कुचमण्डलमन्या ॥ २ ॥ अंशुकं हृतवता तनुबाहुस्वस्तिकापिहितमुग्धकुचाग्रा । भिन्नशङ्खवलयं परिणेत्रा पर्यरम्भि रभसादचिरोढा ॥ ३ ॥ संजहार सहसा परिरब्धप्रेयसीषु विरहय्य विरोधम् । संहितं रतिपतिः स्मितभिन्नक्रोधमाशु तरुणेषु महेषुम् ॥ ४ ॥ स्रंसमानमुपयन्तरि वध्वाः श्लिष्टवत्युपसपत्नि रसेन । आत्मनैव रुरुधे कृतिनेव स्वेदसङ्गि वसनं जघनेन ॥ ५ ॥ पीडिते पुर उरःप्रतिपेषं भर्तरि स्तनयुगेन युवत्याः । स्पष्टमेव दलतः प्रतिनार्यास्तन्मयत्वमभवद्धृदयस्य

॥ ६ ॥ दीपितस्मरमुरस्युपपीडं वल्लभे घनमभिष्वजमाने । वक्रतां न ययतुः कुचकुम्भौ सुभ्रुवः कठिनतातिशयेन ॥ ७ ॥ संप्रवेष्टुमिव योषित ईषुः श्लिष्यतां हृदयमिष्टतमानाम् । आत्मनः सततमेव तदन्तर्वर्तिनो न खलु नूनमजानन् ॥ ८ ॥ स्नेहनिर्भरमधत्त वधूनामार्द्रतां वपुरसंशयमन्तः । यूनि गाढपरिरम्भिणि वस्त्रक्नोपमम्बु वव्रषे यदनेन ॥ ९ ॥ न स्म माति वपुषः प्रमदानामन्तरिष्टतमसंगमजन्मा । यद्बहुर्बहिरवाप्य विकाशं व्यानशे तनुरुहाण्यपि हर्षः ॥ १० ॥ यत्प्रियव्यतिकराद्वनितानामङ्गजेन पुलकेन बभूवे । प्रापि तेन भृशमुच्छ्वसिताभिर्नीविभिः सपदि बन्धनमोक्षः ॥ ११ ॥ चुम्बनम् ॥ लोलदृष्टि वदनं दयितायाश्चुम्बति प्रियतमे रभसेन । व्रीडया सह विनीवि नितम्बादंशुकं शिथिलतामुपपेदे ॥ १२ ॥ आदृता नखपदैः परिरम्भाश्चुम्बितानि घनदन्तनिपातैः । सौकुमार्यगुणसंभृतकीर्तिर्वाम एव सुरतेष्वपि कामः ॥ १३ ॥ ह्रीभरादवनतं परिरम्भे रागवानवटुजेष्ववकृष्य । अर्पितोष्ठदलमाननपद्मं योषितो मुकुलिताक्षमधासीत् ॥ १४ ॥ पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे । पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥ १५ ॥ केनचिन्मधुरमुल्बणरागं बाष्पतप्तमधिकं विरहेषु । ओष्ठपल्लवमपास्य मुहूर्तं सुभ्रुवः सरसमक्षि चुचुम्बे ॥ १६ ॥ विहारः ॥ आवृतान्यपि निरन्तरमुच्चैर्योषितामुरसिजद्वितयेन । रागिणामित इतो विमृशद्भिः पाणिभिर्जगृहिरे हृदयानि ॥ १७ ॥ कामिनामसकलानि विभुग्नैः स्वेदवारिमृदुभिः करजाग्रैः । अक्रियन्त कठिनेषु कथंचित्कामिनीकुचतटेषु पदानि ॥ १८ ॥ सोष्मणस्तनशिलाशिखराग्रादात्तघर्मसलिलैस्तरुणानाम् । उच्छ्वसत्कमलचारुषु हस्तैर्निम्ननाभिसरसीषु निपेते ॥ १९ ॥ आमृशद्भिरभितो वलिवीचीर्लोलमानविततावगुलिहस्तैः । सुभ्रुवामनुभवात्प्रतिपेदे मुष्टिमेयमिति मध्यमभीष्टैः ॥ २० ॥ प्राप्य नाभिनदमज्जनमाशु प्रस्थितं निवसनग्रहणाय । औपजीविकमरुन्ध किल स्त्री वल्लभस्य करमात्मकराभ्याम् ॥ २१ ॥ कामिनः कृतरतोत्सवकालक्षेपमाकुलवधूकरसङ्गि । मेखलागुणविलग्नमसूयां दीर्घसूत्रमकरोत्परिधानम् ॥ २२ ॥ अम्बरं विनयता प्रियपाणेर्योषितश्च करयोः कलहस्य । वारणामिव विधातुमभीक्ष्णं कक्ष्यया च वलयैश्च शिशिञ्जे ॥ २३ ॥ ग्रन्थिमुद्ग्रथयितुं हृदयेशे वाससः स्पृशति मानधनायाः । भ्रूयुगेण सपदि प्रतिपेदे रोमभिश्च सममेव विभेदः ॥ २४ ॥ आशु लङ्घितवतीष्टकराग्रे नीतिमर्धमुकुलीकृतदृष्ट्या । रक्तवैणिकहताधरतन्त्री मण्डलक्वणितचारु चुकूजे ॥ २५ ॥ आयताङ्गुलिरभूदतिरिक्तः सुभ्रुवां कृशिमशालिनि मध्ये । श्रोणिषु प्रियकरः पृथुलासु स्पर्शमाप सकलेन तलेन ॥ २६ ॥ चक्रुरेव ललनोरुषु राजीः स्पर्शलोभवशलोलकराणाम् । कामिनामनिभृतान्यपि रम्भास्तम्भकोमलतलेषु नखानि ॥ २७ ॥ ऊरुमूलचपलेक्षणमन्यैर्वतंसकुसुमैः प्रियमेताः । चक्रिरे सपदि तानि यथार्थं मन्मथस्य कुसुमायुधनाम ॥ २८ ॥

## सुरतप्रशंसा ।

सुरते च समाधौ च माया यत्र न लीयते । ध्यानेनापि हि किं तेन किं तेन सुरतेन वा ॥ १ ॥ यत्र न वदनविकारः सद्भावसमर्पणं न गात्राणाम् । तस्मिन्नुद्धतभावे पशुकर्मणि पशव एव रज्यन्ते ॥ २ ॥ प्रतिक्षणसमुल्लसन्नवकलाकलापान्वितक्षपाकरविलोकने यदि तवास्ति कौतूहलम् । विलोकय तदा सखे सुरतसंगरालोकनप्रहृष्टदयितामुखं निबिडकञ्चुकोत्तारणे ॥ ३ ॥ नरैर्विफलजन्मभिर्गिरिदरी न किं सेव्यते न यच्छ्रवणगोचरीभवति जातुचिज्जन्मनि । कपोतरवमाधुरीविरचनानुकारादरीरतासहकृशोदरीवचनकाकुरीतिध्वनिः ॥४॥ संदष्टाधरपल्लवा सचकितं हस्ताग्रमाधुन्वती मा मा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता । सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी प्राप्तं तैरमृतं श्रमाय मथितो मूढैः सुरैः सागरः ॥५॥ किं चेतैर्गुरुसेवनैः किमपरव्योमार्चनैः किं फलं किं स्यादध्ययनेन मे सुरपदप्राप्त्याथ किं वा फलम् । एतस्याः कुचकुम्भसंभ्रमपरीरम्भप्रवाहोद्गमस्वेदाम्भोभिरनङ्गवह्निरधुना निर्वापितो नो यदि ॥ ६ ॥ प्राङ् मा मेति ततो नवोदयगुणं मानाभिलाषं ततः सव्रीडं तदनु श्लथोद्यममथ प्रभ्रष्टधैर्यं पुनः । प्रेमार्द्रस्पृहणीयनिर्भरतरं वीराप्रगल्भं ततो निःसङ्गाङ्गविमर्शनाधिकसुखं रम्यं कुलस्त्रीरतम् ॥ ७ ॥ शङ्काशृङ्खलितेन यत्र नयनप्रान्तेन न प्रेक्ष्यते केयूरध्वनिभूरिभीतिचकितं नो यत्र वाश्लिष्यते । नो वा यत्र शनैरलग्नदशनं बिम्बाधरः पीयते नो वा यत्र विधीयते च मणितं तत्किं रतं कामिनोः ॥ ८ ॥ आकाशे नटनं सरोवरयुगे मञ्जीरमञ्जुध्वनिः शीतांशौ कलकूजितं किसलये पीयूषपानोत्सवः । स्वर्गक्षोणिधरे नखात्परिभवो ध्वान्ते कराकर्षणं रम्भायां रसनारवस्तरुणयो पुण्यानि मन्यामहे ॥ ९ ॥

---

## नववधूसंगमे सखीवाक्यम् ।

रक्षामालिकया बाले बद्धया किं प्रयोजनम् । अवश्यंभाविनावेतौ कुचग्रहपरिग्रहौ ॥ १ ॥ बाला तन्वी मृदुतनुरियं त्यज्यतामत्र शङ्का दृष्टा कापि भ्रमरभरतो मञ्जरी भज्यमाना । तस्मादेषा रहसि भवता निर्दयं पीडनीया मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः समग्रम् ॥ २ ॥ नीरन्ध्रं परिरभ्यते प्रियतमो भूयस्तरां चुम्बते तद्गाढं क्रियते तदस्य रुचिरं चाटूक्तैः स्तूयते । सख्या मुग्धवधूरसौ रतविधौ यत्नेन सा शिक्षिता निर्भ्रान्तं गुरुणा पुनः शतगुणं पञ्चेषुणा कारिता ॥ ३ ॥ नार्यस्तन्वि हठाद्धरन्ति रमणं तिष्ठन्ति नो वारितास्तत्किं ताम्यसि किं च रोदिषि मुधा तासां प्रियं मा कृथाः । कान्तः केलिरुचिर्युवा सहृदयस्तादृक्पतिः कातरे किं नो बर्बरकर्कशैः प्रियशतैराक्रम्य विक्रीयते ॥ ४ ॥

---

## नववधूसंगमः ।

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन । मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ॥ १ ॥ आभाति बालिकेयं पाणिस्पर्शेन पुलकितावयवा । अभिनववसन्तसङ्गादाविर्मुकुलेव बालचूतलता ॥२॥ खिद्यति कूणति वेल्लति विवलति निमिषति विलोकयति तिर्यक् । अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥३॥ भुजपञ्जरे गृहीता नवपरिणीता वरेण रहसि वधूः । तत्कालजालपतिता बालकुरङ्गीव वेपते नितराम् ॥४॥ असंमुखालोकनमाभिमुख्यं निषेध एवानुमतिप्रकारः । प्रत्युत्तरं मुद्रणमेव वाचो नवाङ्गनानां नव एव पन्थाः ॥ ५ ॥ चुम्बनेषु परिवर्तिताधरं हस्तरोधि रसनानिघट्टने । विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम् ॥ ६ ॥ विरम नाथ विमुञ्च ममाञ्चलं शमय दीपमिमं समया सखी । इति नवोढवधूवचनैर्युवा मुदमगादधिकं सुरतादपि ॥ ७ ॥ नीवीदृढार्पितकरां निबिडीकृतोरुं व्रीडानतां तत इतो वदनं हरन्तीम् । आरोप्य वक्षसि सुखं परिरब्धुमेनां बालां बलादभिलषामि न पारयामि ॥ ८ ॥ पटालग्ने पत्यौ नमयति मुखं जातविनया हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् । न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥ ९ ॥ समाकृष्टं वासः कथमपि हठात्पश्यति तदा क्रमादूरुद्वन्द्वं जठरशरगौरं मृगदृशः । तया दृष्टिं दत्त्वा महति मणिदीपे निपुणया निरुद्धं हस्ताभ्यां झटिति निजनेत्रोत्पलयुगम् ॥ १० ॥ बलान्नीता पार्श्वं मुखमभिमुखं नैव कुरुते धुनाना मूर्धानं हरति बहुशश्चुम्बनविधिम् । हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना नवोढा वोढारं सुखयति च संतापयति च ॥ ११ ॥ स्फुरद्रोमोद्भेदस्तरलतरताराकुलदृशो भयोत्कम्पोत्तुङ्गस्तनयुगभरासङ्गसुभगः । अधीराक्ष्या गुञ्जन्मणिवलयदोर्वल्लिरचितः परीरम्भो मोदं जनयति च संमोहयति च ॥ १२ ॥ अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने । आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वादाबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्यः ॥ १३ ॥ दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते । निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते बाला वामतया प्रियस्य नितरां प्रीत्यै नवोढाभवत् ॥१४॥ अंसाकृष्टदुकूलया सरभसं गूढौ भुजाभ्यां स्तनावाकृष्टे जघनांशुके कृतमधःसंसक्तमूरुद्वयम् । नाभीमूलनिबद्धचक्षुषि तथा व्रीडानताङ्ग्या प्रिये दीपः फूत्कृतवातवेपितशिखाकर्णोत्पलेनाहतः ॥ १५ ॥ हस्तं कम्पवती रुणद्धि रशनाव्यापारलोलाङ्गुलि हस्तौ स्वौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् । पातुं पक्ष्मलचक्षुरुन्नमयतः साचीकरोत्याननं व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ १६ ॥ कण्ठाश्लेषिणमुन्नतस्तनभरश्रोणीतटग्राहिणं संसक्तोरुयुगं गृहीतजघनप्राकारमप्यन्ततः । द्रागेव श्लथबन्धमिन्दुवदना गाढावम-

र्दासहं विज्ञायात्यजदाशु काञ्चनपटं व्रीडाकुलापि क्षणम् ॥ १७ ॥ कान्ते कञ्चुलिकावलोकिनि कलावत्या नमन्त्या स्थितं तस्मिन्कोमलकाकुभाषिणि तया स्पन्दी निरुद्धोऽधरः । उत्थायाथ करस्पृशि प्रियतमे यूनोर्नवे संगमे काञ्चीकूजितकैतवेन मदनो द्यौःशान्तिमभ्यस्यति ॥ १८ ॥ आनीता सखिभिर्मनोरथशतैः संबोधिता किं मुहुर्दृष्टा प्रेमयुतं सुहास्यरुचिरं प्राणेश्वरं संस्थितम् । सिंहालोकनत्रासलोलनयना फालैर्युता मानिनी हाहेति ह्यभवत्कृतं मृगवधूराभीरिव क्रन्दति ॥ १९ ॥ इत्थं तल्पतलाधिरोहणमियं पर्णार्पणप्रक्रिया शय्याया वचनक्रमस्य दयितस्यैवंविधाराधना । एवं केलिगृहोपदेहलि बलादानीयमाना मुहुश्चाटूक्तिप्रकरैश्चिरं नववधूरालीभिरध्याप्यते ॥ २० ॥

---

## सुरतकेलिकथनम् ।

आस्तां दूरेण विश्लेषः प्रियामालिङ्गतो मम । स्वेदः किं नु सरिन्नाथो रोमाञ्चः किं नु पर्वतः ॥ १ ॥ उग्ररूपं कुचद्वन्द्वं हारगङ्गाधरं तव । चन्द्रचूडं करिष्यामि कुरु तावद्दिगम्बरम् ॥ २ ॥ कान्ते कलितचोलान्ते दीपे वैरिणि दीप्यति । आसीदसितपद्माक्ष्याः पक्षो नयनमुद्रणम् ॥ ३ ॥ ब्रह्मानन्दप्रचुरं किमपीदं नेति रतिषु वचनेन । श्रुतिसीमसंगताक्षी मुग्धे सारङ्गमादिशसि ॥ ४ ॥ तव तन्वि तरुणपुण्यादम्बरमणिमकरसंक्रमो जातः । अधिवेणि भवति नियमः फलमविलम्बेन भावि कामस्य ॥ ५ ॥ विधृताः प्रियस्य केशाः कण्ठे लग्नं भुजे वलितम् । मज्जन्त्या रससिन्धौ किं किं न कृतं तया सुदृशा ॥६॥ पृष्ठे कञ्चुकमुक्त्यै सुतनुरसव्यं प्रहिण्वती पाणिम् । हन्तुमिव चित्तहरिणं यूनस्तूणादिवेषुमादत्ते ॥ ७ ॥ चारुनूपुरझणत्कृतं रते कामिनां हरति मानसं यथा । नो तथा मधुरगीतवादितं केकिचातकपिकस्वना अपि ॥ ८ ॥ हेमकुम्भमिव तुङ्गमुरोजं वल्लभे स्पृशति चोरवदस्याः । जाग्रति स्म सहसैव तदानीं यामिका इव तनूरुहसंघाः ॥ ९ ॥ पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे । पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥ १० ॥ पाणिपल्लवविधूननमन्तः सीत्कृतानि नयनार्धनिमेषाः । योषितां रहसि गद्गदवाचामस्त्रतामुपययुर्मदनस्य ॥ ११ ॥ धैर्यमुल्वणमनोभवभावा वामतां च वपुरर्पितवत्यः । व्रीडितं ललितसौरतधाष्ट्र्यास्तेनिरेऽभिरुचितेषु तरुण्यः ॥ १२ ॥ पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः । कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितं च सुखेऽपि ॥ १३ ॥ वारणार्थपदगद्गदवाचामीर्ष्यया मुहुरपत्रपया च । कुर्वते स्म सुदृशामनुकूलं प्रातिकूलिकतयैव युवानः ॥ १४ ॥ अन्यकालपरिहार्यमजस्रं तद्द्वयेन विदधे द्वयमेव । धृष्टता रहसि भर्तृषु ताभिर्निर्दयत्वमितरैरबलासु ॥ १५ ॥ बाहुपीडनकचग्रहणाभ्यामाहतेन नखदन्तनिपातैः । बोधितस्तनुशयस्तरुणीनामुन्मिमील विशदं विषमेषुः ॥ १६ ॥ कान्तया सपदि कोऽप्युपगूढः प्रौढपाणिरपनेतुमियेष । संहतस्तनतिरस्कृतदृ

ष्टिर्भ्रष्टमेव न दुकूलमपश्यत् ॥ १७ ॥ आहतं कुचतटेन तरुण्याः साधु सोढमधुनेति पपात । त्रुट्यतः प्रियतमोरसि हारात्पुष्पवृष्टिरिव मौक्तिकवृष्टिः ॥ १८ ॥ सीत्कृतानि मणितं करुणोक्तिः स्निग्धमुक्तमलमर्थवचांसि । हासभूषणरवाश्च रमण्याः कामसूत्रपदतामुपजग्मुः ॥ १९ ॥ उद्धतैर्निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामैः । श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥ २० ॥ ईदृशस्य भवतः कथमेतल्लाघवं मुहुरतीव रतेषु । क्षिप्तमायतमदर्शयदुर्व्यां काञ्चिदाम जघनस्य महत्त्वम् ॥ २१ ॥ प्राप्यते स्म गतचित्रकचित्रैश्चित्रमार्द्रनखलक्ष्म कपोलैः । दध्रिरेऽथ रभसच्युतपुष्पाः स्वेदबिन्दुकुसुमान्यलकान्ताः ॥ २२ ॥ यद्यदेव रुरुचे रुचिरेभ्यः सुभ्रुवो रहसि तत्तदकुर्वन् । आनुकूलिकतया हि नराणामाक्षिपन्ति हृदयानि तरुण्यः ॥ २३ ॥ प्राप्य मन्मथरसादतिभूमिं दुर्वहस्तनभराः सुरतस्य । शश्रमुः श्रमजलार्द्रललाटश्लिष्टकेशमसितायतकेश्यः ॥ २४ ॥ पत्युः प्रवृत्तस्य रतौ जिगीषावचो निशम्याथ न किंचिदूचे । कलावती किं तु विहस्य तस्य कपोलयोः स्वेदमपाचकार ॥२५॥ उरोरुहाम्भोरुहदर्शनाय विमुञ्चतः कञ्चुकबन्धनानि । आनन्दनीराकुललोचनस्य प्रियस्य जातो विपुलः परिश्रमः ॥ २६ ॥ स्वामिन्प्रभो प्रिय गृहाण परिष्वजस्व किं किं शठोऽस्यकरुणोऽसि सुखोत्थितोऽसि । हा दुःखयस्यलमलं विरमेति वाचः स्त्रीणां भवन्ति सुरते प्रणयानुकूलाः ॥ २७ ॥ मत्तेभकुम्भपरिणाहि निकुम्भमार्द्रे कान्तापयोधरयुगे रतिखेदखिन्नः । वक्षो विधाय भुजपञ्जरमध्यवर्ती धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥ २८ ॥ कान्ते तथा कथमपि प्रथितं मृगाक्ष्या चातुर्यमुद्धतमनोभवया रतेषु । तत्कूजितान्यनुवदद्भिरनेकवारं शिष्यायितं गृहकपोतशतैर्यथास्याः ॥ २९ ॥ आमीलितालसविवर्तिततारकाक्षीमुत्कण्ठबन्धनदरश्लथबाहुवल्लीम् । प्रस्वेदवारिकणिकाचितगण्डबिम्बां संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥ ३० ॥ रतिरभमनितान्तश्रान्तकान्ताकुचान्तश्चलदमलकराग्रा नाभिदेशेप्वधो वा । स्मितमधुरमुखीनां ह्रीणनेत्रोत्पलानामधरमधु वधूना भाग्यवन्तः पिबन्ति ॥ ३१ ॥ अविदितसुखदुःख निर्मलं ब्रह्म किचिज्जडमतिरिह कश्चिन्मोक्ष इत्याचचक्षे । मम तु मतमनङ्गस्मेरतारुण्यघूर्णन्मदकलमदिराक्षीनीविमोक्षो हि मोक्षः ॥ ३२ ॥ अभिनवपुलकालीमण्डिता गण्डपाली निगदति विनिगूढानन्दहिन्दोलि चेतः । सुदति वदति पुण्यैः कस्य धन्यैर्मनोजप्रसरमसकृदेतच्चापलं लोचनस्य ॥ ३३ ॥ भजन्त्यास्तल्पान्तं कृतकपटकण्डूतिपिहितं स्मितं जाते गेहाद्बहिरवहितालीपरिजने । प्रियास्यं पश्यन्त्याः स्मरशरसमाकूलसुभगं सलज्जाया लज्जा व्यगमदिव दूरं मृगदृशः ॥ ३४ ॥ दुकूलं दोर्मूलात्प्रणयिनि परीरम्भरसिके हरत्यम्भोजाक्षी निभृतनिभृत नम्रवदना । प्रियाश्लेपद्वेपिण्यपसरतु लज्जा स्फुटमिति स्मितक्षीरेणैव स्तनकलशरांशुं स्नपयति ॥ ३५ ॥ चिरविरहिणो रत्युत्कण्ठाश्लथीकृतगात्रयोर्नवमिव जग-

ज्जातं भूयश्चिरादभिनन्दतोः। कथमपि दिने दीर्घे याते निशामधिरूढयोः प्रसरति कथा बह्वी यूनोर्यथा न तथा रतिः॥ ३६ ॥ दृशा सपदि मीलितं दशनरोचिषा निर्गतं करेण परिवेपितं वलयकैरथाक्रन्दितम्। प्रियैः समदयोपितां तनुविखण्ड्यमानेऽधरे परव्यसनकातराः किमिव कुर्वतां साधवः ॥ ३७ ॥ नैषा वेगं मृदुतरतनुस्तावकीनं विसोढुं शक्ता नैनां चपलनितरां खेदयेन्दीवराक्षीम्। रत्यभ्यासं विदधत इति प्राणनाथस्य गत्वा कर्णोपान्ते निभृतनिभृतं नूपुरं शंसतीव ॥ ३८ ॥ आयाते दयिते मनोरथशतैर्नीते कथंचिद्दिने वैदग्ध्यापगमाज्जडे परिजने दीर्घां कथां कुर्वतीम्। दष्टास्मीत्यभिधाय सत्वरपदं व्याधूय चीनांशुकं तन्वङ्ग्या रतिकातरेण मनसा नीतः प्रदीपः स्वयम् ॥ ३९ ॥ गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा। मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥ ४० ॥ दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजैराविद्धो दशनैः क्षताक्षरपुटः श्रोणीतटेनाहतः। हस्तेनानमितः करोऽधरसुधास्पन्देन संमोहितः कान्तः कामपि तृप्तिमापतुदहो कामस्य वामा गतिः ॥ ४१ ॥ ईषन्मीलितदृष्टि मुग्धहसितं सीत्कारधारावशादव्यक्ताकुलकेलिकाकुविकसद्दन्तांशुधौताधरम्। श्वासोत्कम्पिपयोधरोपरि परिष्वङ्गात्कुरङ्गीदृशो हर्षोत्कर्षविमुक्तनिःसहतनोर्धन्यो धयत्याननम् ॥ ४२ ॥ खिन्नं मण्डलमैन्दवं विगलितं स्रग्भारबद्धं तमः प्रागेव प्रथमानकेतकशिखावीरायितं च स्थितम्। शान्तं कुण्डलताण्डवं कुवलयद्वन्द्वं तिरोमीलितं वीतं विद्रुमसीत्कृतं नहि ततो जाते किमासीदिति ॥ ४३ ॥ गाढाश्लेषनिपीडनान्निपतितामालोक्य हारावलीं स्थातुं हन्त भिया क्षणं निबिडया नीव्यापि न व्यापृतम्। विश्लेषज्वरवेदनासहनयोः कारुण्यकीर्णात्मना क्वापि प्रापि तयोः समागमसुखं यूनोर्मनोजन्मना ॥ ४४ ॥ हारस्त्रुट्यति कङ्कणं निपतति स्रक्कौमुदी क्लिश्यति ध्वान्तं धावति सीत्करोति रजनीजानिर्वली भज्यति। काञ्ची क्षुभ्यति काञ्चनक्षितिधरे किं च क्षतं चञ्चति प्रारम्भे मदनाहवस्य विजयी देवो मनोभूरभूत् ॥ ४५ ॥ आघ्रातं कमलं प्रियेण सुदृशा स्मित्वापनीतं मुखं दत्तं विभ्रमकन्दुके नखपदं गूढौ कराभ्यां स्तनौ। न्यस्ता चम्पकमालिकोरसि मुदा पर्यस्तरोमाञ्चया मीलल्लोचनया स्थितं प्रणयिनोर्दूरेऽपि पूर्णं रतम् ॥ ४६ ॥ सिन्दूरं रतिमिन्दुमाननमसौ धम्मिल्लराहुस्त्वयं यद्गाढं ग्रसतीव तत्प्रियतमे निर्णीतमौत्पातिकम्। चोले चञ्चलता भविष्यति मुहुः स्यात्कुन्तले कर्षणं नीवी स्थास्यति न स्थिरा समुदयेदङ्गे महान्संगरः ॥ ४७ ॥ पश्यन्तीं परिणामकेलिषु मुहुर्निःशङ्कमालिङ्ग्य तां प्रोत्कूजत्कलमग्रहीषमधरं स्पर्धावती साप्यभूत्। नाहं वेद्मि न वेत्ति सा च दयिता तत्रावयोश्चेष्टितं शय्या वेत्ति न वेत्ति वा स तु कुतः सङ्ग्रामलोलः स्मरः ॥ ४८ ॥ प्रत्यहः पुलकाङ्कुरेण निबिडाश्लेषे

निमेषेण च क्रीडाकूतविलोकितेऽधरसुधापाने कथाकेलिभिः । आनन्दाधिगमेन मन्मथकशायुद्धेऽपि यस्मिन्नभूदुद्भूतः स तयोर्बभूव सुरतारम्भः प्रियंभावुकः ॥ ४९ ॥ ईषत्कम्पपयोधरं गुरुकटिप्रौढप्रहाराद्रुतं स्विद्यद्भालमनेकहास्यसरसं संरम्भमन्दव्यथम् । वारंवारमुरःप्रहारसुभगं संदश्यमानाधरं किंचिद्दत्तनितम्बदेशनखरं धन्यो रतं सेवते ॥ ५० ॥ त्व मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणी लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि । शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥ ५१ ॥ धम्मिल्लो भङ्गमेतु प्रविशतु तिलकः केशपाशान्धकारं पत्राली गण्डपालिं त्यजतु च विवरं कर्णयोर्गन्तुकामा । वामायाः कान्तदत्तक्षततिसहने एक एवाधरोऽसौ वीरः कामाहवेऽस्मिन्निति वदति मुहुर्नूपुरः क्वाणभङ्ग्याः ॥ ५२ ॥

---

## विपरीतरतक्रिया ।

प्रशान्ते नूपुरारावे श्रूयते मेखलाध्वनिः । कान्ते नूनं रतिश्रान्ते कामिनी पुरुषायते ॥ १ ॥ पततु तवोरसि सततं दयित धम्मिल्लमल्लिकानिकरः । रतरसरभसकचग्रहलुलितालकवल्लरीगलितः ॥ २ ॥ विपरीतमविपरीतं यद्रतमन्यत्तदेव विपरीतम् । तरुमारोहति लतिका नारोहति च लतिकां तरुः क्वापि ॥ ३ ॥ साक्षादभूत्स्वयंभूरथ मुक्तास्तिमिरनिकरभाराः । प्रणनाम शीतरोचिस्तव पाठं मेखला विदधे ॥ ४ ॥ वियति विलोलति जलदः स्खलति विधुश्चलति कूजति कपोतः । निष्पतति तारकाततिरान्दोलति वीचिरमरवाहिन्याः ॥ ५ ॥ स्थगयति तमः शशाङ्कं चलति गिरिः स्रवति तारकापटलम् । कथयति मन्ये काञ्चीपुरसीम्नि किमपि संक्षोभम् ॥ ६ ॥ मुक्ताः पतन्ति भूमौ बालाः कलयन्ति केवलां मुक्तिम् । चुम्बत्यम्बरमवनिं विपरीते किं न विपरीतम् ॥ ७ ॥ वल्गत्कुचं व्याकुलकेशपाशं स्विद्यन्मुखं स्वीकृतमन्दहासम् । पुण्यातिरेकात्पुरुषा लभन्ते पुंभावमम्भोरुहलोचनानाम् ॥ ८ ॥ वक्षस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे । पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गरेखां लिलेख ॥ ९ ॥ मधुपानसमुल्लसत्प्रवालं चलहेमाचलकान्तिभिर्जटालम् । विधुनिःपतदन्धकारजालं शुभकालं क्व पुनर्विलोकयामः ॥ १० ॥ अभिमुखपतयालुभिर्ललाटश्रमसलिलैरपनीतपत्त्रलेखः । कथयति पुरुषायितं वधूनां मृदितहिमद्युतिनिर्मलः कपोलः ॥ ११ ॥ तत्रास्ति कारयति यत्र मनोभवस्य सा शक्तिरप्रतिहता भुवने तथाहि । उत्पाद्य पीवरपयोधरमण्डलाग्रं वल्गन्ति यत्पुरुषवत्प्रमदा अपीह ॥ १२ ॥ मुग्धे तवास्मि दयिता पुरुषो भव त्वमित्युक्तया नहि नहीति शिरो विधूय । स्वस्मात्करा-

---

१ केशकलापरूप.. २ मुखरूप.. ३ कण्ठरूपः. ४ मुक्ताकलापरूपा ५ त्रिवलिरूपा. ६ धाराभि.

त्प्रियकरे वलयं क्षिपन्त्या वाचं विनाभ्युपगमः कथितो मृगाक्ष्या ॥ १३ ॥ वीरायितेषु मृगशावविलोचनानां कण्ठोदितान्यचरमं कलकूजितानि । आम्रेडयद्भिरथ सौधगतैः कपोतैः शङ्के गृहीत इति संप्रति शिष्यभावः ॥ १४ ॥ तमःस्तोमं सोमं गिलति वमतीवोडुनिकरं रथाङ्गद्वन्द्वेऽस्मिन्नमरतटिनी खेलति मुहुः । लतायामुत्कम्पो मदनवसतीकाञ्चनगिरिर्विपर्येति प्रायो रतिपतिमते सर्वमधुना ॥१५॥ विहायसि विहारिणी भवतु नाम सौदामिनी सुमेरुशिखरादधः पततु नाम मन्दाकिनी । परं तदिदमद्भुतं यदयमेत्य भूमीतलं नमन्नमृतदीधितिः कमलसारमाकर्षति ॥ १६ ॥ प्रारब्धे रतिकेलिसंकुलरणारम्भे तया साहसं प्रातः कान्तजयाय किंचिदुपरि प्रारम्भि यत्संभ्रमात् । खिन्ना येन कटीतटी शिथिलिता दोर्वल्लिरुत्कम्पितं वक्षो मीलितमक्षि पौरुषरसः स्त्रीणां कुतः सिध्यति ॥ १७ ॥ आलोकाम्लकावलिं सुकुसुमां बिभ्रच्चलं कुण्डलं किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसः सीकरैः । तन्व्या यत्सुरतान्ततान्तनयनं वक्त्रं रतिव्यत्यये तत्त्वां पातु चिराय किं हरिहरब्रह्मादिभिर्दैवतैः ॥ १८ ॥ प्रारब्धे विपरीतनामनि रते सर्वं तदाभूत्क्षणात्क्षामाङ्ग्यां विपरीतमेव कुटिला मुक्ताः सुवृत्ता अपि । मुक्ता निःपतिता भवन्ति तरलास्तौ चाचलौ चेलतुः सीदन्ति श्रुतिपारगाः सुमनसः कान्ता नु कान्तायते ॥ १९ ॥ निःशेषं व्यपनीय नीविवसनं मञ्जुक्वणन्मेखलं क्रीडान्दोलनखिन्नमध्यलतिकं किंचित्प्रकम्पस्तनम् । उद्यत्कुण्डलताण्डवं च रुचिरं विक्रम्य कान्तोपरि क्लान्ता वक्षसि कामिनां मुकुलितप्रान्ताक्षिकं शेरते ॥ २० ॥ प्रागल्भ्यं पुरुषायिते मम पुरः पश्येति संनद्धया तन्व्या ताम्यदुरोजयापि सुचिरं विक्रम्य रम्यं तथा । श्रान्ता वक्षसि मे निपत्य च पुनः सापत्रपं सस्मितं साकूतं च समीक्षितं मृगदृशा यत्तत्कथं कथ्यते ॥ २१ ॥

---

## सुरतनिवृत्तिः ।

संन्यासमकृत काञ्ची जहौ कलत्रं दुकूलमबलायाः । तत्याज रागमधरो मुक्तिमुरीचक्रिरे चिकुराः ॥ १ ॥ सुतनुश्रुतिसेवनतो मन्ये नयनाञ्जनं जातम् । मुग्धा स्नेहात्कबरीयुक्तां मुक्तिं कथं प्राप ॥ २ ॥ संवरणाय वधूटी बहुपरिपाटीं करोतु किं तेन । संप्रति रजनिरहस्यं नयनालस्यं निवेदयति ॥ ३ ॥ खिन्नालसनयनान्तं खिन्नालिकलग्नकुन्तलस्तबकम् । वदनमवलुप्ततिलकं मदनं नेदयति दवयति धृतिं मे ॥ ४ ॥ पपात मेरोः सुरसिन्धुर्धरा ववर्ष तारागणमन्धकारः । बभूव भृङ्गावलिरप्यकम्पा शशाम शम्फालतिकाविलासः ॥ ५ ॥ पपात गङ्गा हरमौलिसङ्गा बन्धं तमोभूतमपेतबन्धम् । तडिल्लताचञ्चलतामहासीदस्यन्दमासीदरविन्दयुग्मम् ॥ ६ ॥ कामसंगरविधौ मृगीदृशः प्रौढपौरुषधरे पयोधरे । स्वेदराजिरुदियाय सर्वतः पुष्पवृष्टिरिव पुष्पधन्वनः ॥ ७ ॥ संगताभिरुचितैश्चलितापि प्रागमुच्यत

चिरेण सखीव । भूय एव समगंस्त रतान्ते ह्रीर्वधूभिरसहा विरहस्य ॥ ८ ॥ प्रेक्षणीयकमिव क्षणमासन्ह्रीविभङ्गुरविलोचनपाताः । संभ्रमद्रुतगृहीतदुकूलच्छाद्यमानवपुषः सुरतान्ताः ॥ ९ ॥ अप्रभूततमनीयसि तन्वी काञ्चिधाम्नि पिहितैकतरोरु । क्षौममाकुलकरा विचकर्ष क्रान्तपल्लवमभीष्टतमेन ॥ १० ॥ मृष्टचन्दनविशेषकभक्तिभ्रष्टभूषणकदर्थितमाल्यः । सापराध इव मण्डनमासीदात्मनैव सुदृशामुपभोगः ॥ ११ ॥ योषितः पतितकाञ्चनकाञ्चीमोहनातिरभसेन नितम्बे । मेखलेव परितः स्म विचित्रा राजते नवनखक्षतलक्ष्मीः ॥ १२ ॥ भातु नाम सुदृशां दशनाङ्कः पाटलो धवलगण्डतलेषु । दन्तवाससि समानगुणश्रीः संमुखोऽपि परभागमवाप ॥ १३ ॥ सुभ्रुवामधिपयोधरपीठं पीडनैस्त्रुटितवत्यपि पत्युः । मुक्तमौक्तिकलघुर्गुणशेषा हारयष्टिरभवद्गुरुरेव ॥ १४ ॥ विश्रमार्थमुपगूढमजस्रं यत्प्रियैः प्रथमरत्यवसाने । योषितामुदितमन्मथमादौ तद्द्वितीयसुरतस्य बभूव ॥ १५ ॥ आस्तृतेऽभिनवपल्लवपुष्पैरप्यनारतरताभिरताभ्यः । दीयते स्म शयितुं शयनीये न क्षणः क्षणदयापि वधूभ्यः ॥ १६ ॥ उपबर्हमम्बुजदृशो निजं भुजं विरचय्य वक्त्रमपि गण्डमण्डले । निजसक्थिसक्थनि निधाय सादरं स्वपिति स्तनार्पितकराम्बुजो युवा ॥ १७ ॥ करकिसलयं धूत्वा धूत्वा विमार्गति वाससी क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति । स्थगयति मुहुः पत्युर्नेत्रे विहस्य समाकुला सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षते ॥ १८ ॥ सुरतविरतक्रीडावेशश्रमश्लथहस्तया रहसि गलितं तन्व्या प्राप्तुं न पारितमंशुकम् । रतिरसजडैरङ्गैरङ्गे पिधातुमशक्तया प्रियतमतनौ सर्वाङ्गीणं प्रविष्टमचेष्टया ॥ १९ ॥ प्रियकृतपटस्तेयव्रीडाविलम्बनविह्वलां किमपि कृपणालापां बाला विलोक्य ससंभ्रमः । अपि विचकितस्कन्धाचारे गले सुरताहवे त्रिभुवनमहाधन्वी स्थाने न्यवर्तत मन्मथः ॥ २० ॥ शयानस्योत्तानं हृदि निहितवक्षोरुहभरा तिरश्चीने वक्त्रे निबिडकलितात्मीयवदना । समाक्रम्योरुभ्यामतिदृढतरं सक्थियुगलं स्वपित्यम्भोजाक्षी शिथिलभुजबन्धेयमधुना ॥ २१ ॥ क्वचित्ताम्बूलाक्तः क्वचिदगुरुपङ्काङ्कमलिनः क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः । वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः ॥ २२ ॥ मुखं जृम्भारम्भि प्रसरति मदामोदलहरी दृशोस्तन्द्राभारः स्फुरति विगलत्यङ्गलतिका । त्वमेतादृक्कान्तिः कमलमुखि धन्यैव नितरामसौ धन्यो यस्ते सकलरजनीं जागरयिता ॥ २३ ॥ प्रियायाः प्रत्यूषे गलितकबरीबन्धनविधावुदञ्चद्दोर्वल्लीदरदलितचेलाञ्चलमुरः । घनाकूते पश्यत्यथ मयि समन्दाक्षिवलितं नमन्त्या यद्रूपं न हि लिखितुमीशो मनसिजः ॥ २४ ॥ रतान्ते प्राणेशे वसनमददाने कथमपि स्थिताया याचन्त्या वितर मम चैलं गुणनिधे । सरोषं पश्यन्त्याः किमपि च हसन्त्याः परिचलन्नमन्त्यास्तद्रूपं न हि लिखितुमीशो मनसिजः ॥ २५ ॥ शान्ते मन्मथसंगरे रणभुवां सत्कारमातन्वती वासोऽदाज्जघनस्य पीनकुचयोर्हारं

श्रुतेः कुण्डलम् । बिम्बोष्ठस्य च वीटिकां सुनयना पाण्योरणत्कङ्कणे पश्चाल्लम्बिनि केशपाशनिचये युक्तो हि बन्धक्रमः ॥ २६ ॥ नेपथ्यादपि राजते हि नितरां व्यालुप्तभूषा तनुः संभोगश्रममीलितं विजयते चक्षुः कटाक्षादपि । गाढालिङ्गनकौतुकादपि नवं दोर्वल्लिविस्रंसनं प्रीत्यालापरसादपि प्रियतमं मौनं कुरङ्गीदृशः ॥ २७ ॥ निर्वृत्ते सुरतोत्सवे बहुविधे जातेऽधिकेऽङ्गक्लमे तल्पे स्वेदजलार्द्रचन्दनमये किंचिद्गृहीताम्बरे । सान्द्रस्नेहवशाद्विशेषविषयव्यासङ्गजिह्मात्मनोर्दंपत्योः स्मर यत्स्मरातुरतया भूयोऽपि जाता स्पृहा ॥२८॥ मुक्ताभूषणमिन्दुबिम्बमजनि व्याकीर्णतारं नभः स्मारं चापमपेतचापलमभूदिन्दीवरे मुद्रिते । व्यालीनं कलकण्ठकण्ठनिनदैर्मन्दानिलैर्मन्दितं निष्कम्पस्तबकापि चम्पकलता सा भून्न जानेऽथ किम् ॥ २९ ॥ नीव्यां संयमनं कचे नियमनं श्रोणीतले चासनं विश्वासाभ्यसनं मुखे समभवत्प्रत्याहृतिर्भूषणे । ध्यानं प्रेमणि धारणा स्तनतटे तन्व्याः समाधिः प्रिये निर्वेदादिव किं रतान्तसुलभात्सर्वाङ्गयोगोत्सवः ॥ ३० ॥ निर्लेपौ कुचकुड्मलौ, कचभरस्तत्याज बन्धं ययौ काञ्ची निर्गुणतां निरञ्जनदशा दृग्भ्यां समासादिता । नीरागोऽधरपल्लवश्च गुरुणा केनापि गौराङ्गि ते शङ्के शम्बरशासनोपनिषदां तत्त्वावबोधः कृतः ॥ ३१ ॥ तन्द्रातुन्दिलशोणलोचनयुगं दन्ताङ्कदन्तच्छदं पर्यस्तालकवल्लिघर्मपटलप्रोद्भिन्नपत्रावलि । जृम्भोज्जृम्भितसीधुसौरभमिलद्भृङ्गीभिरङ्गीकृतस्तोत्रं शंसति वृत्तमेव रजनीवृत्तान्तमेणीदृशः ॥ ३२ ॥ स्वामिन्भङ्गुरयालकं सतिलकं भालं विलासिन्कुरु प्राणेश त्रुटितं पयोधरतटे हारं पुनर्योजय । इत्युक्त्वा सुरतावसानसमये संपूर्णचन्द्रानना स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम् ॥ ३३ ॥ आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसां सीकरैः । तन्व्या यत्सुरतान्ततान्तनयनं वक्त्रं रतिव्यत्यये तत्त्वां पातु चिराय किं हरिहरब्रह्मादिभिर्दैवतैः ॥ ३४ ॥ व्यालोलः केशपाशस्तरलितमलकैः स्वेदलोलौ कपोलौ क्लिष्टा बिम्बाधरश्रीः कुचकलशरुचा हारिता हारयष्टिः । काञ्ची कांचिद्गताशां स्तनजघनपदं पाणिना छादयन्ती भूषाहीनापि काचित्प्रियहृदयमहो प्रीणयत्येव मुग्धा ॥ ३५ ॥ सव्यासव्योरुबाहुव्यतिकरमधुरं कूर्परन्यस्तशीर्षं संसक्तास्याब्जयुग्मश्वसितहतचलच्चारुनासाविभूषम् । भूयो निद्रातिरेकात्क्रमशिथिलभुजाश्लेषदत्तावकाशोच्छ्वासोदञ्चत्कुचाग्रप्रतिहतहृदयं शेरतेऽमी रतान्ते ॥ ३६ ॥ व्यामिश्रैकैकबाहु प्रवलितपृथुलैकैकचारूरुकाण्डं दष्ट्वा दष्टाधरोष्ठं दराशिथिलतनुश्लेषमालिङ्ग्य कान्ताः । शश्वन्निःश्वासवेगस्फुरितगुरुकुचद्वन्द्वसंघृष्टवक्षाः श्रान्तः शेते रतान्ते सुखमिह सुकृती लीलया कामिलोकः ॥ ३७ ॥

---

## चन्द्रास्तसमयवर्णनम् ।

कलङ्कदाशो गगनाम्बुराशौ प्रसार्य चन्द्रातपतन्तुजालम् । लग्नोडुमीनांल्लघु संजिघृक्षुश्च-

न्द्रष्ठवरथश्वरमाब्धिमेति ॥ १ ॥ असौ हि दत्त्वा तिमिरावकाशमस्तं व्रजत्युन्नतकोटिरिन्दुः । जलावगाढस्य वनद्विपस्य तीक्ष्णं विषाणाग्रमिवावशिष्टम् ॥ २ ॥ वृन्देन तारावलितण्डुलानामङ्केन च श्रीफलपल्लवेन । अभ्यर्च्य जागेश्वरमिन्दुबिम्बं विसर्जयत्येष नभोमुनीन्द्रः ॥ ३ ॥ मैन्दमग्निर्मधुरर्यमोपला दर्शितश्वयथु चाभवत्तमः । दृष्टयस्तिमिरजं सिषेविरे दोषैमोषधिपतेरसंनिधौ ॥४॥ अरुणकिरणजालैरन्तरिक्षे गतर्क्षे चलति शिशिरवाते मन्दमन्दं प्रभाते । युवतिजनकदम्बे नाथमुक्तौष्ठबिम्बे चरमगिरिनितम्बे चन्द्रबिम्बं ललम्बे ॥ ५ ॥ जरठ इव मरालो जर्जराग्रैर्मयूखैः स्खलति शिशिरभानुः पश्चिमाम्भोधिपारे । श्लथगरुत इवामूस्तत्र तत्रान्तरिक्षे विरलविरलभासः किं च तारा लुठन्ति ॥ ६ ॥ चरमगिरिकुरङ्गः शृङ्गकण्डूयनेन स्वपिति सुखमिदानीमन्तरिन्दोः कुरङ्गः । परिणतरविगर्भव्याकुला पौरुहूती दिगपि घनकपोतीहुंकृतैः कुप्यतीव ॥७॥ उदयमुदितदीप्तिर्याति यः संगतौ मे पतति न वरमिन्दुः सोऽपरामेष गत्वा । स्मितरुचिरिव सद्यः साभ्यसूयं प्रभेति स्फुरति विशदमेषा पूर्वकाष्ठाङ्गनायाः ॥ ८ ॥ नवकुमुदवनश्रीहासकेलिप्रसङ्गादधिकरुचिरशेषामायुषां जागरित्वा । अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः शिशयिषुरिव पाण्डुं म्लानमात्मानमिन्दुः ॥ ९ ॥ सपदि कुमुदिनीभिर्मीलितं हा क्षपापि क्षयमगमदपेतास्तारकास्ताः समस्ता । इति दयितकलत्रश्चिन्तयन्नङ्गमिन्दुर्वहति कृशमशेषं भ्रष्टशोभं शुचेव ॥ १० ॥ प्रकरमलिनलक्ष्मा मृष्टपत्रावलीकैरधिगतरतिशोभैः प्रत्युषःप्रोषितश्रीः । उपहसित इवासौ चन्द्रमाः कामिनीना परिणतशरकाण्डापाण्डुभिर्गण्डभागैः ॥११॥ विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः । जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः श्रयति हरितं हन्त प्राचेतसीं तुहिनद्युतिः ॥ १२ ॥ पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः । सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखैरत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ॥ १३ ॥ नक्षत्रक्षितिनायकोऽयमधुना रुद्धः प्रभातागमे सप्ताश्वेन बलीयसातिमहसा रोषारुणज्योतिषा । भ्रश्यद्ध्वान्तशिरोरुहां प्रविगलत्तारालिहारावलीमादाय क्षणदीप्रियां क्षितिधरं पश्चात्समारोहति ॥ १४ ॥ संश्लिष्टा सानुरागं स्वकरपरिचयप्राप्तभूरिप्रसादा या पूर्वा भुक्तपूर्वा रविकरकलितां तामुदीक्ष्येर्ष्यामृताशुः । निस्तेजाः पश्चिमाब्धौ प्रविशति हि सतां दुःसहो मानभङ्गः किं वक्तव्यं सितांशोः स तु सकलसतां मण्डलस्यापि नेता ॥ १५ ॥

---

१ मन्दीभूतमग्निम्, (पक्षे) रोगविशेष.. २ धृतवन्तः ३ सूर्यकान्ता ४ पुष्टत्वम्, (पक्षे) रोगविशेष.. ५ आन्ध्यम्, (पक्षे) रोगविशेष.. ६ चन्द्रस; (पक्षे) वैद्यस. ७ सूर्यहस्तलग्नाम्. ८ चन्द्रः. ९ नक्षत्राणाम्; (पक्षे) द्विजानाम्. १० नायकः.

## मध्यरात्रक्रीडावर्णनम्।

आश्लेषशेषा रतिरङ्गनानामामोदशेषा कुचकुङ्कुमश्रीः। तूणीरशेषः कुसुमायुधोऽपि प्रभातशेषा रजनी बभूव ॥ १ ॥ शमितनिखिलदीपे सुप्तनिद्रालुलोके रतपरवशचित्ता मध्यरात्रे विबुद्धाः। प्रथमसुरतखिन्नां मुग्धिकां बोधयन्तो बहुदृढपरिरम्भैः कामुकाः खेदयन्ति ॥ २ ॥ अनुनयमगृहीत्वा व्याजसुप्ता पराची रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये। कथमपि परिवृत्ता निद्रयान्धा किल स्त्री मुकुलितनयनैवाश्लिष्यति प्राणनाथम् ॥ ३ ॥ चिररतिपरिखेदप्राप्तनिद्रासुखानां चरममपि शयित्वा पूर्वमेव प्रबुद्धाः। अपरिचलितगात्राः कुर्वते न प्रियाणामशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥ ४ ॥ वदनशशिनः स्पर्शे शीता दिवा गतवेपथुः स्तनयुगलके भ्रान्त्वा तुङ्गे निविष्ट इव भ्रमात्। ज्वलितमदनाङ्गारे तन्व्यास्ततो जघनस्थले सपुलकजलः पत्युः पाणिर्विलीन इवाभवत् ॥ ५ ॥ रतिकृतिगते मायानिद्रां प्रवर्तितचुम्बना पुलकपयसा तत्त्वं मत्वा सुखेदहृताननां। कृतकशयनो निग्राह्योऽसीत्युदीर्य कलं वधूर्व्रणितमधरं कृत्वा दन्तैरपूरयत स्पृहाम् ॥ ६ ॥

---

## प्रभातवर्णनम्।

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी। दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥१॥ कुक्कुटे कुर्वति क्वाणमाननं श्लिष्टयोस्तयोः। दिवाकरकराक्रान्तं शशिकान्तमिवादधौ ॥२॥ विकसितसंकुचितपुनर्विकस्वरेष्वम्बुजेषु दुर्लक्षाः। कलिकाः कथयति नूतनविकासिनीर्मधुलिहामर्घः ॥ ३ ॥ प्रियवसतेरपयान्त्यो मिथः करम्बितकराम्बुजन्मानः। करजपदव्रणविरलस्तनपुलकममूः किमपि विवदन्ते ॥ ४ ॥ नभोवनं नक्तमसौ विगाह्य नक्षत्रसेनासहितः शशाङ्कः। कराग्रलग्नान्कतिचित्प्रहृत्य पान्थान्प्रभाते प्रपलायतेऽद्य ॥ ५ ॥ चन्द्रकान्तगलदम्बुनाधुना या चकोरनयने समाश्रिते। कोकलोकहृदयानलः पुनः सूर्यकान्तमणिमाश्रयत्यहो ॥ ६ ॥ संनिगृह्य चिकुरं तमोमयं यामिनी तदनु केलिविच्युतम्। कुर्वती श्रवसि चन्द्रमण्डलं कुण्डलं गगनकेलिमुज्झति ॥ ७ ॥ तरुणां दिवाकरमयूखमञ्जरीमरुणामशोकशिखरावलम्बिनीम्। कमनीयपुष्पमनसा समाश्रितां मधुपो विडम्बयति मञ्जुभाषिणीम् ॥ ८ ॥ प्राची दिगम्बरमणौ दयिते विभाते प्रान्तेऽम्बरं स्पृशति वासकसज्जिकेयम्। धीरा जगाद रमणस्य न दूषणानि रोषारुणान्त्यजति तारकभूषणानि ॥ ९ ॥ यात्येकतोऽस्तशिखरं पतिरोषधीनामाविष्कृतारुणपुरःसर एकतोऽर्कः। तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां लोको नियम्यत इवैष दशान्तरेषु ॥ १० ॥ अन्तर्हिते शशिनि सैव कुमुद्वतीयं दृष्टिं न नन्दयति संस्मरणीयशोभा। इष्टप्रवासजनितान्यबलाजनेन दुःखानि नूनमतिमात्रदुरुद्वहानि ॥ ११ ॥ प्रालेयमिश्रमकरन्दकरालकोशैः पुष्पैः समं निपतिता रजनीप्रबुद्धैः।

अर्कांशुभिन्नमुकुलोदरसान्द्रगन्धसंसूचितानि कमलान्यलयः पतन्ति ॥ १२ ॥ दिङ्मण्डली-मुकुटमण्डनपद्मरागरत्नाङ्कुरे किरणमालिनि गर्भितेऽपि । सौखप्रसुप्तिकमधुव्रतचक्रवाल-वाचालपङ्कजवनीसरसाः सरस्यः ॥ १३ ॥ पीत्वा भृशं कमलकुड्मलशुक्तिकोषा दोषातनीं तिमिरवृष्टिमथ स्फुरन्तः । निर्यन्मधुव्रतकदम्बमिषाद्वमन्ति बिभ्रन्ति कारणगुणानिव मौक्तिकानि ॥ १४ ॥ आपाटलैः प्रथममङ्कुरितैर्मयूखैरह्नांपतिः प्रथमशैलविहारिणीनाम् । सोऽयं करोति सुरपुंगवसुन्दरीणां कर्णेषु कल्पतरुपल्लवभङ्गलक्ष्मीम् ॥ १५ ॥ अन्यत्र वाञ्छितनिशं परिलोहिताङ्गमन्याङ्गनागतमिवागतमुष्णरश्मिम् । प्रातर्निरीक्ष्य कुपितेव हि पद्मिनीयमुत्फुल्लहल्लकसुलोहितलोचनाभूत् ॥१६॥ का काबला निधुवनश्रमपीडिताङ्गी निद्रां गता दयितबाहुलतानुबद्धा । सा सा तु यातु भवनं मिहिरोद्गमोऽयं संकेतवाक्यमिति काकचया वदन्ति ॥ १७ ॥ दिशि दिशि मृगयन्ते[1] पल्लवग्राममेते मुहुरपगतनिद्राः सं-स्रयो हेषितेन । अयमपि च सरोषैः कामिभिः श्रूयमाणो नदति[4] मधुरतारं ताम्रचूडो विहंगः ॥ १८ ॥ अविरतमविरामा रागिणां सर्वरात्रं नवनिधुवनलीलाः कौतुकेनाभिवीक्ष्य । इदमु-द्वसितानामस्फुटालोकसंपन्नयनमिव सनिद्रं घूर्णते दैपमर्चिः ॥ १९ ॥ रतिरभसविलासा-भ्यासतान्तं न यावन्नयनयुगममीलत्तावदेवाहतोऽसौ । रजनिविरतिशंसी कामिनीनां भ-विष्यद्विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः ॥ २० ॥ प्रहरकमपनीय स्वं निदिद्रासतोच्चैः प्रति-पदमुपहूतः केनचिज्जागृहीति । मुहुरविशदवर्णां निद्रया शून्यशून्यां ददपि गिरमन्तर्बु-ध्यते नो मनुष्यः ॥ २१ ॥ विपुलतरनितम्बाभोगरुद्धे रमण्याः शयितुमनधिगच्छञ्जीवि-तेशोऽवकाशम् । रतिपरिचयनश्यन्नैन्द्रतन्द्रः कथंचिद्गमयति शयनीये शर्वरीं किं करोतु ॥ २२ ॥ द्रुततरकरदक्षाः क्षिप्तवैशाखशैले दधति दधनि धीरानारवान्वारिणीव । शशिन-मिव सुरौघाः सारमुद्धर्तुमेते कलशिमुदधिगुर्वीं वल्लवा लोडयन्ति ॥ २३ ॥ परि-शिथिलितकर्णग्रीवमामीलिताक्षः क्षणमयमनुभूय स्वप्नमुद्धर्तुरेव । रिरसयिषति भूयः शष्पमग्रे विकीर्णं पटुतरचपलौष्ठः प्रस्फुरत्प्रोथमश्वः ॥ २४ ॥ कृतधवलिमभेदैः कुङ्कुमे-नेव किंचिन्मलयरुहरजोभिर्भूषयन्पश्चिमाशाम् । हिमरुचिररुणिम्ना राजते रज्यमानैर्जर-ठकमलकन्दच्छेदगौरैर्मयूखैः ॥ २५ ॥ शिशिरकिरणकान्तं वासरान्तेऽभिसार्य श्वसनमुर-भिगन्धिः सांप्रतं सत्वरेव । व्रजति रजनिरेषा तन्मयूखाङ्गरागैः परिमिलितमनिन्द्यैरम्बरान्तं वहन्ती ॥ २६ ॥ व्रजति विषयमक्ष्णामंशुमाली न यावत्तिमिरमखिलमस्तं तावदेवारुणेन । परपरिभवितेजस्तन्वतामाशु कर्तुं प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥ २७ ॥ विगत-तिमिरपङ्कं पश्यति व्योम यावद्धुवति विरहखिन्नः पक्षती यावदेव । रथचरणसमाह्वस्तावदौ-त्सुक्यनुन्ना सरिदपरतटान्तादागता चक्रवाकी ॥ २८ ॥ अरुणजलदराजीमुग्धहस्ताग्रपादा

१ शोधयन्ति. २ पल्लवसमूहम्. ३ अश्वाः. ४ शब्दं करोति. ५ कुक्कुटः.

बहुलमधुपमालाकज्जलेन्दीवराक्षी। अनुपतति विरावैः पत्रिणां व्याहरन्ती रजनिमचिरजाता पूर्वसंध्या सुतेव ॥२९॥ अयमुदयमहीभृन्मूर्ध्नि पाणिगृहीता दिवसपतिरहौषीदिन्दुपादान्हवींषि ।·अरुणकिरणवह्नौ कन्यका पौरुहूती हरिदपि किमकार्षीत्तारकालाजहोमम् ॥३०॥ कुमुदवनमपश्रि श्रीमदम्भोजखण्डं त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः। उदयमहिमरोचिर्याति शीतांशुरस्तं हतविधिलसितानां ह्रीविचित्रो विपाकः ॥३१॥ लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा रजनय इव निद्राक्रान्तनीलोत्पलाक्ष्यः। तिमिरमिव दधानाः स्रंसिनः केशपाशानवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः ॥ ३२ ॥ शिथिलयति सरागो यावदर्को नलिन्याः कमलमुकुलनीवीग्रन्थिमुद्रां करेण। प्रविकसदलिमाला गुञ्जितैर्मञ्जुशब्दा जनयति मुदमुच्चैः कामिनां कामिनीव ॥ ३३ ॥ नभसि विरलतारा मौक्तिकानीव भान्ति स्फुटतरमयमस्तक्ष्माधरं चुम्बतीन्दुः। रविरुदयधरित्रीधारि मूर्धानमेतुं हृदयमनु नितान्तोल्लासमङ्गीकरोति ॥ ३४ ॥ अभूत्प्राची पिङ्गा रसपतिरिव प्राश्य कनकं गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि। क्षणं क्षीणास्तारा नृपतय इवानुद्यमपरा न दीपा राजन्ते द्रविणरहितानामिव गुणाः ॥ ३५ ॥ इतः शुक्ला चन्द्रद्युतिभिरिह रक्तारुणकणैस्तमिस्रैरप्यन्तःस्खलितगतिभिर्मेचकरुचिः। प्रभातश्रीरेषा विलसति पुरस्था सुकृतिनां मिमङ्क्षूणां जह्नुद्युमणिविधिजासंगम इव ॥ ३६ ॥ तमोभिः पीयन्ते गतवयसि पीयूषवपुषि ज्वलिष्यन्मार्तण्डोपलपटलधूमैरिव दिशः। सरोजानां कर्षन्नलिमयमयस्कान्तमणिवत्क्षणादन्तःशल्यं तपति पतिरद्यापि न रुचाम् ॥ ३७ ॥ इतः पौरस्त्यायां ककुभि विवृणोति क्रमदलत्तमिस्रामर्माणं किरणकलिकामम्बरमणिः। इतो निष्क्रामन्ती नवरतिगुरोः प्रोञ्छति वधूः स्वकस्तूरीपत्राङ्कुरमकरिकामुद्रितमुरः ॥ ३८ ॥ द्रुमाः पाण्डुप्राया धृतनिबिडगर्भाः स्त्रिय इव प्रफुल्लास्ते कुन्दा नृपतिकृतमाना इव जनाः। पिको मन्दं मन्दं हृदि मदननामानि जपति प्रभोरग्रे पूर्वापरिचितसभाकः कविरिव ॥ ३९ ॥ विरलविरलीभूतास्ताराः कलौ सुजना इव व्यपसरति च ध्वान्तं चित्तात्सतामिव दुर्जनः। मन इव मुनेः सर्वत्रापि प्रसन्नमभून्नभो विगलति निशा क्षिप्रं लक्ष्मीरनुद्यमिनामिव ॥ ४० ॥ व्रजत्यपरवारिधिं रजतपिण्डपाण्डुः शशी न भान्ति जलबुद्बुदद्युतिसपत्निकास्तारकाः। कुरण्टकविपाण्डुरं दधति धाम दीपाङ्कुराश्चकोरनयनारुणा भवति दिक्च सौत्रामणिः ॥ ४१ ॥ अयं मृदुमृणालिनीवनविलासवैहासिकस्त्विषां वितपते पतिः सपदि दृश्यमाना निजाः। स्तनौ पुलकयन्ति चोत्पलदृशां प्रियोरःस्थले विपर्ययितवृत्तयो घुसृणपङ्कपत्राङ्कुराः ॥ ४२ ॥ जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टैर्हस्तैर्भानोर्नृपतय इव स्पृश्यमाना विबु-

---

१ गतशोभम्. २ घूकः. ३ चञ्चलनयनकनीनिका. ४ क्षाम कृश वक्त्रेन्दुमण्डल यासां ताः. ५ शिथिलान्. ६ राजगृहेभ्यः. ७ वारस्त्रियः. ८ पारद.. ९ उद्योगरहिताः. १० रौप्यगोलकवत्पाण्डुरः. ११ ऐन्द्री. प्राचीत्यर्थः.

द्धाः । स्त्रीभिः सार्धं घनपरिमलस्तोकलक्ष्याङ्गरागा मुञ्चन्त्येते विकचनलिनीगर्भशय्यां द्विरेफाः ॥४३॥ यः सैन्ये स्मरपार्थिवस्य विरहि[1]प्रत्यर्थिनाम[2]ग्रणी[3]ज्योत्स्नानिर्झरमुज्झति स्म जगतां यस्तापनिर्वारणम् । सोऽयं तारकनायकः किमपरं [4]शृङ्गारसंजीवनं जातः पुष्पपरागपाण्डुर[5]जरत्कूष्माण्डपिण्डाकृतिः ॥ ४४ ॥ ये कुण्ठीकृतवल्लभप्रकृतयः शस्त्रैरनङ्गस्य ये न प्राप्ताश्च निशीथिनीपतिकरैः शैथिल्यवीथीमपि । ते निःशङ्कविटङ्कतालतुमुलप्रोतःप्लुतप्लावितैश्छिन्नाः कुक्कुटकूजितैर्मृगदृशां मानग्रहग्रन्थयः ॥ ४५ ॥ कान्ते जग्मुषि [6]ताम्रचूडरटितं श्रुत्वा प्रबुद्धा जैवातृकचिह्नासवदिङ्मुख प्रविकसद्दृष्ट्या गवाक्षाध्वना । संत्रासेन समीरिता प्रियतमप्रेम्णावरुद्धा शनैरुत्थानोपनिवेशनानि कुरुते तल्पे मुहुः पांसुला ॥ ४६ ॥ [10]निर्यान्त्या [11]रतिवेश्मनः [12]परिणतप्रायां विलोक्य [13]क्षपां गाढालिङ्गनचुम्बनानि बहुशः कृत्वाप्यसंतुष्टया । एकं भूमितले निधाय चरणं तल्पे [14]प्रकल्प्यापरं तन्वङ्ग्या [15]परिवर्तिताङ्गलतया [16]प्रेयांश्चिरं चुम्बितः॥४७॥ पद्मिन्याः सकलां विधाय [17]विकलां ताराधिपः [18]संपदं तत्प्रेयस्युदयोन्मुखे सति रवावुद्वि[19]ग्नतामाश्रितः । ताराः स्वस्य [20]करैर्विकृष्य सहसा गच्छन्नितोऽस्ताचलं लग्नाः काश्चन ताः प्रभाकरकरे पश्यन्परिम्लायति ॥ ४८ ॥ एते केतकधूलिधूसररुचः शीतद्युतेरंशवः प्राप्ताः संप्रति पश्चिमस्य जलधेस्तीरं जराजर्जराः । अप्येते विकसत्सरोरुहवनीदृक्पातसंभाविताः प्राचीरागमुदीरयन्ति तरणेस्तारुण्यभाजः कराः ॥ ४९ ॥ सद्यःसंघटमानकोकमिथुनव्याजेन पीनस्तनद्वन्द्वव्यञ्जितयौवनोज्ज्वलरुचो निर्माय दिक्कन्यकाः । दुर्दैवाक्षरमालिकामिव झटित्याकृष्य भृङ्गावलीं लक्ष्मीमम्बुजिनीजनस्य तनुते देवस्त्विषामीश्वरः ॥ ५० ॥ उन्मीलन्ति निशानिशाचरवधूप्रोच्चाटना मान्त्रिकाः सायं सालससुप्तपङ्कजवनप्रोद्बोधवैतालिकाः । फुल्लत्पङ्कजकोशगर्भकुहरप्रोद्भूतभृङ्गावलीझङ्कारप्रणवोपदेशगुरवस्तीव्रद्युतेरंशवः ॥ ५१ ॥ एतत्तर्कय चक्रवाकसुदृशामाश्वासनादायिनः प्रौढध्वान्तपयोधिमग्नजगतीदत्तावलम्बोत्सवाः । दीप्तांशोर्विकसन्ति दिङ्मृगदृशां काश्मीरपङ्कोदकव्यात्युक्षीचतुराः सरोरुहवनश्रीकेलिकाराः कराः ॥ ५२ ॥ द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकैर्ज्योत्स्नापानभरालसेन वपुषा मत्ताश्चकोराङ्गनाः । यातोऽस्ताचलचूल[21]मुद्रसमधुच्छत्रच्छविश्चन्द्रमाः प्राची बालबिडाललोचनरुचां जाता च पात्रं ककुप् ॥ ५३ ॥ जाताः पक्वपलाण्डुपाण्डुमधुरच्छायाकिरस्तारकाः प्राचीमङ्कुरयन्ति किंचन रुचो राजीवजीवातवः । लूतातन्तुवितानवर्तुलमितो बिम्बं दधच्चुम्बति प्रातः प्रोषितरोचिरम्बरतलादस्ताचलं चन्द्रमाः ॥ ५४ ॥ प्राचीविभ्रम-

---

१ शत्रूणाम्. २ श्रेष्ठ.. अग्रेसर इत्यर्थः.. ३ ज्योत्स्नाप्रवाहम् ४ शृङ्गारस्य जीवनौषधम्. ५ जीर्ण. ६ कुक्कुटारावम् ७ संभ्रमेण. ८ प्राचीमुखम् ९ स्वैरिणी. १० निर्गच्छन्त्या. ११ केलिमन्दिरात्. १२ प्रभातप्रायाम्. १३ रात्रिम्. १४ निधाय. १५ वलिताङ्गवल्लिर्यया सा. १६ प्रियतमः. १७ हीनाम्. १८ शोभाम्. १९ खिन्नत्वम्. २० किरणैः. २१ मत्तः.

कर्णिकाकमलिनीसंवर्तिकाः संप्रति द्वे तिस्रो रमणीयमम्बरमणेर्द्यामुच्चरन्ते रुचः । सूक्ष्मोच्छ्वासमपीदमुत्सुकतया संभूय कोपाद्बहिर्निष्क्रामद्भ्रमरौघसंभ्रमभरादम्भोजमुज्जृम्भते ॥५५॥ एकद्विप्रभृति क्रमेण गणनामेषामिवास्तं यतां कुर्वाणा समकोचयद्दशशतान्यम्भोजसंवर्तिकाः। भूयोऽपि क्रमशः प्रसारयति ताः संप्रत्यमूनुद्यतः संख्यातुं सकुतूहलेव नलिनी भानोः सहस्रं करान् ॥ ५६ ॥ प्रत्यासन्नसुरेन्द्रसिन्धुरशिरःसिन्दूरसान्द्रारुणा यत्तेजस्त्रसरेणवो वियदितः प्राचीनमाचिन्वते । शङ्के संप्रति यावदभ्युदयते तत्तर्कुटङ्कोन्मृजा रज्यद्बिम्बरजश्छटावलयितो देवस्त्विषामीश्वरः ॥५७॥ प्रत्यग्रज्वलितैः पतङ्गमणिभिर्नीराजिता भानवः सावित्राः कुरुविन्दकन्दलरुचः प्राचीमलंकुर्वते । प्रौढध्वान्तकरालितस्य वपुषश्छायाछलेन क्षणादप्रक्षालितनिर्मलं जगदहो निर्मोकमुन्मुञ्चति ॥ ५८ ॥ स्तोकोन्निद्रनिदाघदीधितिमहस्तन्द्रालुचन्द्रातपास्तायन्ते ककुभो रथाङ्गगृहिणीगार्हस्थ्यगर्हाभिदः । अद्यापि स्वकुलायशाखिशिरसि स्थित्वा रुवन्तो मुहुस्तूष्णीं प्रत्यभिजानते बलिभुजो भीताः स्वयूथ्यस्वरान् ॥ ५९ ॥ प्राचीं वासकसज्जिकामुपगते भानौ दिशां वल्लभे पश्यैता रुचयः पतङ्गदृशदामाग्नेयनाडिंधमाः । लोकस्य क्षणदानिरङ्कुशरसौ संभोगनिद्रागमौ कोकद्वन्द्वकुमुद्वतीविपिनयोर्निक्षेपमातन्वते ॥६०॥

मालिन्यं परिदृश्यते हिमरुचौ मन्दश्रियस्तारकाः शीताः केचन संचरन्ति कमलामोदस्पृशो मारुताः । आसीदन्ति च चक्रवाकमिथुनान्यन्योन्यमुत्कण्ठया पादैस्ताडितकैरवा मधुलिहो गच्छन्ति पद्माटवीम् ॥ ६१ ॥ किंचिद्विश्लथकेशवान्तकुसुमाः क्रीडाविलोलांशुका लुप्तालुप्तशरीरचन्दनतया लोकैकनेत्रोत्सवाः । संभोगश्रमविह्वलैरवयवैः संकेतशालान्तरान्निद्राशेषकषायितार्धनयना निर्यान्ति वाराङ्गनाः ॥ ६२ ॥ सौरभ्ये चलिते रसे विगलिते चाप्तालिवर्गे गते म्लानातीव कुमुद्वतीयमधुना मूर्च्छां परामृच्छति । तामुद्वीक्ष्य तथाविधां कमलिनी जाता प्रहासोन्मुखी हन्तोदीक्ष्य विपन्नवैरिवनितां का वा न संतुष्यति ॥ ६३ ॥ आलोकैरतिपाटलैरचरमां विस्तारयद्भिर्दिशं नक्षत्रद्युतिमाक्षिपद्भिराचिरादाशङ्क्य सूर्योदयम् । पुञ्जीभूय भयादिवान्धतमसं मन्ये द्विरेफच्छलान्मीलन्नीलसरोरुहोदरकुटीकोणान्तरे लीयते ॥६४॥ दूरं यान्तु निशाचराः शशिकराः क्लेशं लभन्तांतरामुद्यन्तः कलयन्तु हन्त न चिरं खद्योतका द्योतले । ध्वान्तध्वंसमुपैतु हंसविरहः पद्माकरे शाम्यतु प्राचीपर्वतमौलिमण्डनमणिः सूर्यः समुज्जृम्भते ॥ ६५ ॥ भिन्दानो मानिनीनां पतिषु रुषमयं हर्म्यपारावतेभ्यो वाचालत्वं ददानः कवितृषु कविताप्रातिभं संदधानः । प्रातस्त्यस्तूर्यनादः स्थगयति गगनं मांसलः पांशुतल्पादस्वल्पादुत्थितानां नरवरकरिणां शृङ्खलासिञ्जितेन ॥ ६६ ॥ कुर्वन्नाभुग्नपृष्ठो मुखनिकटकटीस्कन्धरोमा तिरश्चीं लीलेनाहन्यमानस्तुहिनकणमुचा चञ्चता केशरेण । निद्राकण्डूकषायं कषति निबिडितः श्रोत्रशुक्तिस्तुरंगः त्वङ्गत्पक्ष्माग्रलग्नप्रतनुबुसगणं कोणमक्ष्णः खुरेण ॥ ६७ ॥ कोकानुज्जीवयन्तः पथि पथि कुलटामानसं कम्पयन्तः प्रस्थातारं

प्रभाते प्रियतममबला गाढमालिङ्गयन्तः । उत्थातुं चाङ्गभङ्गीः कुलकमलदृशां कारयन्ती निशान्ते कूंकाराः कुक्कुटानां मधुमधुरसमारम्भगम्भीरधीराः ॥ ६८ ॥

---

## प्रभातवायुवर्णनम् ।

लतां पुष्पवतीं स्पृष्ट्वा स्नातो विमलवारिणा । पुनः संपर्कशङ्कीव मन्दं चराति मारुतः ॥ १ ॥ वान्ति कह्लारसुभगाः सप्तच्छदसुगन्धयः । वाता नवरतग्लानवधूगमनमन्थराः ॥ २ ॥ लवङ्गलतिकाभङ्गदयालुर्दक्षिणानिलः । कथमुन्मूलयत्येष मानिनीमानपर्वतान् ॥३॥ सुरतभराखिन्नपन्नगविलासिनीपानकेलिजर्जरितः । पुनरपि विरहिश्वासैर्मलयमरुन्मांसलीक्रियते ॥ ४ ॥ दरफुल्लकमलकाननसौरभसंभारमन्थरः पवनः । दयितोरसि शायितामपि दयितां संतापयांचक्रे ॥ ५ ॥ भिक्षितकमलकुटुम्बाः शिक्षितगजगामिनीगतयः। लक्षिताहिमगिरिपादाः प्रातरमी मातरिश्वानः ॥ ६ ॥ आदाय बकुलगन्धानन्धीकुर्वन्पदे पदे भ्रमरान् । अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः ॥ ७ ॥ अपहाय शनैः पटीरवाटीरिह लाटीजनमानलुण्ठनाय । समुदेति मनोजराजधाटीपरिपाटीपटुरेष गन्धवाहः ॥ ८ ॥ वासो विधूय स्तनयोरमुष्याः कपोलकीर्णां कबरीमुदस्य । अवारितः प्रोञ्छति वारिधारां मुखं मृगाक्ष्याः सुकृती समीरः ॥ ९ ॥ अरविन्दवृन्दमकरन्दतुन्दिलो मरुदेति मन्दमिह मन्दराचलान् । सुरतान्ततान्तसुदतीमतल्लिकाकबरीपरीमलझरीपरीकृतः ॥१०॥ उत्सार्य कुन्तलमपास्य दुकूलकूलमुन्नाम्य बाहुलतिकामलसास्तरुण्यः । स्वेदाम्बुसिक्ततनवः स्पृहयन्ति यस्मै तस्मै नमः सुकृतिने मलयानिलाय ॥ ११ ॥ चोलाङ्गनाकुचनिचोलतलानुलीनो द्राक्केरलीविरलकुन्तलकम्पलोलः । लाटीललाटतटशोषणमानसोऽयं फुल्लारविन्दवनबन्धुरुपैति वायुः ॥ १२ ॥ वैभातिको मरुदनुक्रमवर्धमानपद्माटवीपरिमलप्रसहानुमेयः । आयाति सोऽयमलसोत्थितसारसाक्षीपुंभावनृत्यपुनरुद्यमसूत्रधारः ॥ १३ ॥ झञ्झानिलोऽपि सुरतान्तनितान्ततान्तकान्ताकुचान्तघनघर्ममपाकरोति । भूयोऽभिलाषजननी पुनरन्यथैव स्वेदापनोदनकला मलयानिलस्य ॥ १४ ॥ विकचकमलगन्धैरन्धयन्भृङ्गमालाः सुरभितमकरन्दं मन्दमावाति वायुः । प्रमदमदनमाद्यद्यौवनोद्दामरामारमणरभसखेदस्वेदविच्छेददक्षः ॥ १५ ॥ स्तनपरिसरभागे दूरमावर्तमानाः स्फुटतरमणिमध्ये किंचिदेव स्खलन्तः । प्रचुरलघुनितम्बाभोगरुद्धा वधूनां निधुवनरतखेदच्छेदिनः शीतवाताः ॥ १६ ॥ दरविगलितमल्लीवल्लिचञ्चत्परागप्रकटितपटवासैर्वासयन्काननानि । इह हि दहति चेतः केतकीगन्धबन्धुः प्रसरदसमबाणप्रागवद्गन्धवाहः ॥ १७ ॥ सुललितमलकान्तावल्लरी नर्तयन्तो मधुसुरभिमुखाब्जोच्छ्वासगन्धानुगन्धाः । नवतररतभाजा योषितां स्वेदबिन्दून्सतृष इव पिबन्तो वान्ति मन्दं समीराः ॥ १८ ॥ उषसि मलयवासी जालमार्गप्रविष्टो विकचकम-

लरेणुं व्याकिरन्मोहचूर्णम् । सपदि शमितदीपो वायुचोरो वधूनां हरति सुरतखेदस्वेदमुक्ताफलानि ॥ १९ ॥ कुसुमपरिमलेनामोदितालिर्लतानां वलितकिसलयानां लास्यलीलोपदेष्टा । लुलितकमलवृन्दः शीकरासारवोढा मृदुमलयसमीरो वाति वैभातिकोऽयम् ॥ २० ॥ विलुलितकमलौघः कीर्णवल्लीवितानः प्रतिवनमवधूताशेषशाखिप्रसूनः । कचिदयमनवस्थः स्थास्नुतामेति वायुर्वधुकुसुमविमर्दोद्गन्धिवेश्मान्तरेषु ॥ २१ ॥ पुरातनपरीमलप्रकरमेदुरा मारुता न वान्ति मुकुलीभवत्कुमुदगर्भलीना इव । चरन्ति नवसौरभाः पुनरमी समीराङ्कुराः सजृम्भणसरोजिनीसरसिजास्यमुक्ता इव ॥ २२ ॥ अमी तटसमीपनिर्झरतरंगरिङ्गत्पयोजडीकृतपटीरभूरुहकुटीरसंचारिणः । मनो विधुरयन्ति मे मलयमेखलामेदुराद्दुरासदवनप्रियप्रियतमारुता मारुताः ॥ २३ ॥ लताकुञ्जे गुञ्जन्मदवदलिपुञ्जं चपलयन्समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् । मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्रजोवृन्दं विन्दन्किरति मकरन्दं दिशि दिशि ॥ २४ ॥ अनन्यक्षुण्णश्रीर्मलयवनजन्मायमनिलो निपीय स्वैराम्बु स्मरमकरसंभुक्तविभवम् । विदर्भाणां भूरि प्रियतमपरीरम्भरभसप्रसङ्गादङ्गानि द्विगुणपुलकासञ्जि तनुते ॥ २५ ॥ वृथा धूलीधाराः परिकिरसि वात्याः प्रथयसे न वा वेगः कोऽयं पवन तव हा नन्वसमये । रतान्तः श्रान्ताभिः स्तिमितनयनान्ताभिरनिशं स्मृतो यत्कान्ताभिर्न सुलभतरः क्वापि च भवान् ॥ २६ ॥ वारंवारं धुतकुसुमितारण्यरेवातटे वा सेवापुण्यं परिणतमिदं तावकं तर्कयामि । यत्त्वां मत्वान्तिकमुपगतं कामवामाभिरामा रामाः स्वैरं कुचकलशतो वस्त्रमुत्सारयन्ति ॥ २७ ॥ चूतश्रेणीपरिमलमुखश्चश्चरीकानुयाता भूयो भूयः कुवलयकुटीकोटरे लीयमानाः । मन्दं मन्दं सुरतविरतौ वान्ति सीमन्तिनीनां गण्डाभोगश्रमजललवग्राहिणो गन्धवाहाः ॥ २८ ॥ रामाणां रमणीयवक्त्रशशिनः स्वेदोदबिन्दुप्लुता व्यालोलाः कलमञ्जरीः प्रचलयन्धुन्वन्नितम्बाम्बरम् । प्रातर्वाति न चातिकष्टविकसद्राजीवराजीरजःपुञ्जामोदमनोहरो रतिरसग्लानिं हरन्मारुतः ॥ २९ ॥ उत्सिक्तः[1] कुसुमासवैः कुमुदिनीं राजप्रियां[2] पुष्पिणीमालिङ्गन्[3]निशि निर्भयं परिचयं कुर्वन्पुनः पल्लवैः । यावत्पङ्कजसौरभस्वमखिलं[4] गृह्णंल्लघु[5] प्रस्थितस्तावत्कल्य[6] उपस्थिते मरुदयं विष्वग्भयाद्धावति ॥ ३० ॥ अद्योत्सङ्गवमद्भुजंगकवलक्लेशादिवेशाचलप्रालेयप्लवनेच्छयानुसरति श्रीखण्डशैलानिलः । किंचित्स्निग्धरसालमौलिमुकुलान्यालोक्य हर्षोदयादुन्मीलन्ति कुहुः कुहूरिति कलोत्तालाः पिकानां गिरः ॥ ३१ ॥ नारीणां मृगनाभिकुङ्कुमरसप्रक्षालनश्यामलान्संभोगश्रमशीकरान्परिकरन्नाकम्पयन्कुन्तलान् । पुष्पामोदमनोरमान्विगलितानम्भोजगन्धं वहन्प्रातस्त्यः पवनो वहत्ययमलं स्वान्तप्रमोदप्रदः

---

१ मत्तः, (पक्षे) सपृक्तः. २ चन्द्रप्रियाम्; (पक्षे) नृपप्रियाम्. ३ पुष्पयुक्ताम्; (पक्षे) रजस्वलाम्. ४ पङ्कजसौरभं कमलामोदस्तदेव स्वं धनम्. ५ सत्वरम्. ६ प्रभाते.

॥ ३२ ॥ प्रातः सीमन्तिनीनां निधुवनलुलिताञ्शक्तयन्केशपाशानुन्मीलत्पङ्कजाम्भः परिमलसुरभिः स्फारयन्कामलीलाः । स्वच्छा वश्याद्य त्विन्दून्दिशि दिशि विकिरन्स्थूलमुक्ताफलाभान्धूलीभिः केतकीनां धवलितभुवनो वाति मन्दं नभस्वान् ॥ ३३ ॥ धुन्वानाश्चन्दनालीं वकुलमुकुलजां धूलिमुद्धूलयन्तश्चुम्बन्तश्चूतयष्टीः परिमलबहलांश्चम्पकान्कम्पयन्तः । आरादारामसीमातटघटितघटीयन्त्रनिर्मुक्तवारां धारामाधारयन्तः श्रमशमपटवो वान्त्यमी गन्धवाहाः ॥ ३४ ॥ कुप्यच्छङ्केशवाहुप्रकरनियमितारोपलेखाम्बुजाक्षीशापक्षीणाः क्षरन्तः क्षणपरिकलिताः केकिनां कामिनीभिः । कार्णाटीनामकाण्डे मृगमदमसृणं केशपाशं स्पृशन्तः पम्पासंपातसम्पामलयजमरुतो जातकम्पाः पतन्ति ॥ ३५ ॥ कृत्वा कार्णाटकान्ताकुचकनकगिरिभ्रान्तसंचारलीलां झम्पामासाद्य पम्पापयसि वनभुवि क्षिप्तमल्लीरजस्काः । आकर्षन्तः पुरस्तान्निगडमिव कलध्वानपुष्पधयालीं धावन्त्येते मदान्धा मदननरपतेः सिन्धुरा गन्धवाहाः ॥ ३६ ॥ एते पाटीरवाटीनवविटपनटीलास्यशिक्षातिदक्षा दोलाखेलत्पुरंध्रीश्रमजलकणिकाजालपातिप्रतानाः । सौरभ्यादापतद्भिर्मधुकरपटलैः पृष्ठतोऽनुप्रयाताः कामाग्नेः स्फारधाय्याः पथिककुलवधूबद्धवैराः समीराः ॥ ३७ ॥ एष क्रीडान्तताम्यत्कुसुमपुरवधूवक्त्रसौरभ्यबन्धुर्मुग्धं निद्राजडानां रसितमनुसरो द्रावयन्सारसानाम् । आवात्यङ्गानुकूलश्चकितविचाकिलश्रेणिगन्धानुधावल्लोलरवोद्घुष्यमाणस्मरजयविरुदाडम्बरो मातरिश्वा ॥ ३८ ॥ कावेरीवारिवेल्लल्लहरिपरिकरक्रीडनक्लान्तशान्तस्फीतः श्रीखण्डखण्डभ्रमणभरभवद्भूरिसौरभ्यगर्भाः । चौलस्त्रीचीनचेलाञ्चलचलनकलाक्रान्तकान्ताकुचान्ता वान्ति प्रेमाग्निकीलाकलितवरवधूबद्धवैराः समीराः ॥ ३९ ॥ चञ्चत्कर्पूरचोला मलयगिरिगुरुग्रावहावादवासा मन्दानन्दैर्मिलिन्दैरहमहमिकयानुद्रवद्दीर्घपान्थाः । कावेरीवारिसेका विरलतरतरत्तीरवानीरसिक्ता मुक्तार्द्राः स्वेदनिद्रालव इव पवनास्तालवत्यां विशन्ति ॥ ४० ॥ लीलादोलातिखेलारसरभसलसद्बालचेलाञ्चलानां चेलीनामापिबन्तो मृगमदसुरभिः स्वेदबिन्दूनमन्दान् । लोलन्तः केरलीनां कुचकलशलसत्कुङ्कुमालेपनेषु श्लिष्यन्तो मालवीनां मलयजमधुराः कञ्चुकीर्वान्ति वाताः ॥ ४१ ॥ भृङ्गालीकण्ठमालाः स्फुटितकमलिनीधूलिभिर्धूसराङ्गाश्चञ्चन्तश्चन्द्रकल्पा लघुतरलहरीशीकरासारलालाः । अङ्कादङ्कं व्रजन्तो विकसितविकसत्केतकीमालतीनां मोदन्ते मन्दमन्दं मलयगिरिदरीगर्भतो वातपोताः ॥ ४२ ॥

---

## सूर्योदयवर्णनम् ।

ततः कोकवधूबन्धुर्बन्धूककुसुमप्रभः । उदयाद्रिशिरोरत्नमुद्ययौ तेजसां निधिः ॥ १ ॥ निजांशुकावृतां प्राचीं चुम्बत्यर्कोऽतिरागिणीम् । लज्जयेव ययौ क्वापि श्यामा मीलितलोचना ॥ २ ॥ पैतङ्गपाकसमये पैतङ्गपतिविक्रमाः । पैतङ्गस्योदये चेलुः पैतङ्गा इव

१ शालिविशेषस्य परिपाकसमये. २ गरुडपराक्रम. ३ सूर्यस्य. ४ शलभा.

वानराः ॥ ३ ॥ निसर्गसौरभोद्भ्रान्तभृङ्गसंगीतशालिनी । उदिते वासराधीशे स्मेराजनि सरोजिनी ॥ ४ ॥ रथस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम् । उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम् ॥ ५ ॥ पुरुहूतदिगङ्गना प्रसूता रविमुद्दामसुतं चिरादुपेतम् । अलिनो नलिनीदलाद्विमुक्ताः प्रियबाहुद्वयबन्धनान्नवोढाः ॥ ६ ॥ उदयति विततोर्ध्वरश्मिरज्ज्वावहिमरुचौ हिमधाम्नि याति चास्तम् । वहति गिरिरियं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥ ७ ॥ घटमानकोककुचमामृशन्करैर्विकसत्पयोजनयनावलोकितः । परिचुम्बतीदमरुणप्रभाधरं रविरद्य वारवनितामुखं मुहुः ॥ ८ ॥ आगत्य संप्रति वियोगविसंस्थुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपितत्रियामः[1] । एतां प्रसादयति पश्य जनैः प्रभाते तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥ ९ ॥ उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा गायन्ति यत्र मधुपा गृहदीर्घिकासु । एतच्चकास्ति च रवेर्नवबन्धुजीवपुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥ १० ॥ भूयो निपीय लवणाम्बुधिमाप्रभातं पुञ्जीभवन्नुदयते तपनच्छलेन । और्वाग्निरम्बरपयोनिधिमद्य पातुं लीनोडुबुद्बुदकदम्बमिति प्रतीमः ॥ ११ ॥ अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम् । विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥ १२ ॥ करनखरविदीर्णध्वान्तकुम्भीन्द्रकुम्भात्तुहिनकणमिषेण क्षिप्तमुक्ताप्ररोहः । अयमुदयधरित्रीधारिमूर्धाधिरूढो नयनपथमुपेतो भानुमत्केशरीन्द्रः ॥ १३ ॥ नवकनकपिशङ्गं वासराणां विधातुः ककुभि कुलिशपाणेर्भाति भासां वितानम् । जनितभुवनदाहारम्भमम्भांसि दग्ध्वा ज्वलितमिव महाब्धेरूर्ध्वमौर्वानलार्चिः ॥ १४ ॥ विततपृथुवरत्रातुल्यरूपैर्मयूखैः कलश इव गरीयान्दिग्भिराकृष्यमाणः । कृतचपलविहङ्गालापकोलाहलाभिर्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः ॥ १५ ॥ पयसि सलिलराशेर्नक्तमन्तर्निमग्नः स्फुटमनिशमतापि ज्वालया वाडवाग्नेः । यदयमिदमिदानीमङ्गमुद्यन्दधाति ज्वलितखदिरकाष्ठाङ्गारगौरं विवस्वान् ॥ १६ ॥ अतुहिनरुचिनासौ केवलं नोदयाद्रिः क्षणमुपरिगतेन क्ष्माभृतः सर्व एव । नवकरनिकरेण स्पष्टबन्धूकसूनस्तबकरचितमेते शेखरं बिभ्रतीव ॥१७॥ उदयशिखरिशृङ्गप्राङ्गणेष्वेव रिङ्गन्सकमलमुखहासं वीक्षितः पद्मिनीभिः । विततमृदुकराग्रः शब्दयन्त्या वयोभिः परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥ १८ ॥ क्षणमयमुपविष्टः क्ष्मातलन्यस्तपादः प्रणतिपरमवेक्ष्य प्रीतमह्नाय लोकम् । भुवनतलमशेषं प्रत्यवेक्षिष्यमाणः क्षितिधरतटपीठादुत्थितः सप्तसप्तिः ॥ १९ ॥ उदयमयते दिङ्मालिन्यं निराकुरुतेतरां नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः । रचयतितरां स्वैराचारप्रवर्तनकर्तनं बत बत लसत्तेजःपुञ्जो विभाति विभाकरः[2] ॥ २० ॥ अयं खलु मृणालिनीनवविलासवैहासिकास्त्विषां वितपते रतिः सपदि दृश्यमाना निजाः । स्तनौ

१ प्राची दिक्. २ सूर्यः.

पुलकयन्ति चोत्पलदृशां प्रियोरःस्थले विपर्यतितद्वत्तयो घुसृणपङ्कपत्राङ्कुराः ॥ २१ ॥ आयान्त्या दिवसश्रियः पदतलस्पर्शानुभावादिव व्योमाशोकतरोर्नवीनकलिकागुच्छः समुज्जृम्भते । आतन्वन्नवतंसविभ्रममसावाशाकुरङ्गीदृशामुन्मीलत्तरुणप्रभाकरकरस्तोमः समुद्भासते ॥ २२ ॥ एतत्तर्कय चक्रवाकहृदयाश्वासाय तारागणग्रासाय स्फुरदिन्दुमण्डलपरीहासाय भासां निधिः । दिक्कान्ताकुचकुम्भकुङ्कुमरसन्यासाय पङ्केरुहोल्लासाय स्फुटवैरकैरववनत्रासाय विद्योतते ॥ २३ ॥ मीलत्कैरवलोचनां प्रविगलत्ताराच्छहारावलीं ग्लायच्चन्द्रमुखीं विशृङ्खलतमःकेशां सशेषाम्बराम् । प्राप्तः सत्वरमीत्वरीमिव बलादुद्गाढरागैः करैराकर्षन्निव यामिनीमनुपतत्यम्भोजिनीवल्लभः ॥ २४ ॥ एकद्विप्रभृतिक्रमेण गणनामेषामिवासां यतां कुर्वाणा समकोचयद्दशशतान्यम्भोजसंवर्तिकाः । भूयोऽपि क्रमशः प्रसारयति ताः संप्रत्यभूनुद्यतः संख्यातुं सकुतूहलेव नलिनी भानोः सहस्रं करान् ॥ २५ ॥ यावन्नीरनिधेः प्रभातसमयः प्रोद्धृत्य लोकत्रयीमाणिक्यं रविबिम्बमम्बरवणिग्वीथीपथे न्यस्यति । तावत्कर्तुमिवास्य मूल्यमुचितं पद्माकरेण स्वयं लक्ष्मीर्लब्धविकाशपङ्कजकरन्यस्ता पुरः स्थाप्यते ॥ २६ ॥ मञ्जिष्ठारुणदीधितिर्मधुकरैर्मङ्गल्यगीतिस्तुतः कोकाह्लादपटुः सरोरुहवनं प्रीत्या समुज्जृम्भयन् । लोकालोककरः करैश्च तमसां स्तोमं समुत्सारयन्नारोहत्युदयाचलं रविरयं बन्धूकगुच्छच्छविः ॥ २७॥ कीलालैः कुङ्कुमानां सकलमपि जगज्जालमेतन्निषिक्तं मुक्ताश्चोन्मत्तभृङ्गा विघटितकमलक्रोडकारागृहेभ्यः । उत्सृष्टं गोसहस्रं किमुत कलकलः श्रूयते च द्विजानां भाग्यैर्वृन्दारकाणां हरिहयदयिता सूयते पुत्ररत्नम् ॥ २८ ॥

---

## नायिकानिर्गमनम् ।

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते । श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा ॥ १ ॥ गुरुत्रासादासादितभवदुपालम्भवचसा मुहुः स्मारं स्मारं कथमपि निशीथे समगमम् । इदानीं मुञ्च त्वं दयित पुनरेष्यामि समभूदुषःकालीनोऽयं चटुलचटकालीकलकलः ॥ २ ॥ प्रबुद्धायाः प्रातर्लसदलसदोर्वल्लिवलयं गलन्मल्लीदाम्नः शिथिलकबरीबन्धसमये । प्रियालोके घूर्णन्नयनमसृणस्मेरमधुरो मुखे जृम्भारम्भो जयति भृशमिन्दीवरदृशः ॥ ३ ॥ प्राणेशेन प्रहितनखरेष्वङ्गकेषु क्षपान्ते जातातङ्का रचयति चिरं चन्दनालेपनानि । धत्ते लाक्षामसकृदधरे दत्तदन्तावघाते क्षामाङ्गीयं चकितमभितश्चक्षुषी विक्षिपन्ती ॥ ४ ॥ धम्मिल्लं यदि बध्नती नखमुखैः सीमन्तमातन्वती पश्यन्ती नखरोत्सवं कुचयुगे सव्यापसव्यं मुहुः । नाभीसीमनि कुञ्चिताङ्गुलिदलं नीवीभरं रुन्धती शय्यागारविनिर्गतापि हृदयान्नाद्यापि निःक्रामति ॥ ५ ॥ कोकस्तोकविमुक्तमौक्तिकभरो

निस्यन्दमिन्दीवरं चापं चापलवर्जितं हिमकरक्रोडे तमः क्रीडति । वातः कातरथत्यपाकृतरसं बन्धूकमेतावती वार्ता क्वापि कदापि पाणिपिहिता कस्यापि वा तिष्ठति ॥ ६ ॥ का एषा भुक्तमुक्ता विलुलितवसना स्वेदलग्नान्तवस्त्रा प्रत्यूषे याति बाला मृग इव चकिता सर्वतः शङ्कयन्ती । केनेदं वक्त्रपद्मं ह्यधरमधुरसं खण्डितं केन पीतं स्वर्गः केनाद्य भुक्तो हरनयनहतो मन्मथः कस्य तुष्टः ॥ ७ ॥

---

## संभोगाविष्करणम् ।

रतखिन्नतरं प्रातर्लज्जानम्रमुखीं वधूम् । स्मरन्तीं रात्रिचरितं दृष्ट्वाप्नोति न को मुदम् ॥ १ ॥ राजते राजरामाया एष बिम्बाधरव्रणः । सुधां पीत्वेव कान्तेन तच्छेषोऽयं समुद्रितः ॥ २ ॥ आच्छादयासि किं मुग्धे वस्त्रेणाधरपल्लवम् । खण्डिता एव शोभन्ते वीराधरपयोधराः ॥ ३ ॥ सखि दशनक्षतमधरं किं गोपयसे प्रयत्नेन । संप्रति रजनिरहस्यं नयनालस्यं निवेदयति ॥ ४ ॥ संवरणीयवधूटी बहुपरिपाटी करोति किं तेन । संप्रति रजनिरहस्यं नयनालस्यं निवेदयति ॥ ५ ॥ उषसि परिवर्तयन्त्या मुक्तादामोपवीततां नीतम् । पुरुषायितवैदग्ध्यं लज्जावति कैर्न कलितं ते ॥ ६ ॥ चन्दनं स्तनतटेऽधरबिम्बे पावकं घनतरं च सपत्न्याः । प्रातरीक्ष्य कुपितापि मृगाक्षी सागसि प्रियतमे परितुष्टा ॥ ७ ॥ दर्पणेषु परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः । प्रेक्ष्य बिम्बमनुबिम्बमात्मनः कानि कानि न चकार लज्जया ॥ ८ ॥ किमपि कान्तभुजान्तरवर्तिनी कृतवती यदियं कलभाषिणी । तदनुकृत्य गिरा गुरुसंनिधौ ह्रियमनीयत सारिकया वधूः ॥ ९ ॥ धन्यासि या कथयसि प्रियसंगमेऽपि नर्मोक्तिचाटुकशतानि रतान्तरेषु । नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि ॥ १० ॥ बहु जगद पुरस्तात्तस्य मत्ता किलाहं चकर च किल चाटु प्रौढयोषिद्वदस्य । विदितमिति सखिभ्यो रात्रिवृत्तं विचिन्त्य व्यपगतमदयाह्नि व्रीडितं मुग्धवध्वा ॥ ११ ॥ शशपदमणिमालं चन्द्ररेखाभिरामं ललितपुलकजालं लक्ष्मबिन्दुप्रवालम् । वपुरनघममुष्या वक्ति कस्यापि यूनः सुरतकलहलीलासूक्ष्ममार्गाभियोगम् ॥ १२ ॥ प्रभाते पृच्छन्तीरनुरहसवृत्तं सहचरीर्नवोढा न व्रीडामुकुलितमुखीयं सुखयति । लिखन्तीनां पत्राङ्कुरमनिशमस्यास्तु कुचयोश्चमत्कारो गूढं करजपदमासां कथयति ॥ १३ ॥ क्वचित्ताम्बूलाक्तः क्वचिदगुरुपङ्काङ्कमलिनः क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपुटः । वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः स्त्रियः सर्वावस्थं कथयति रतं प्रच्छदपटः ॥ १४ ॥ नखक्षतमुरःस्थलेऽधरदले रदस्य व्रणं च्युता बकुलमालिका विगलिता च मुक्तावली । रतान्तसमये मया सकलमेतदालोकितं स्मृतिः क्व च रतिः क्व च क्व च तवालि शिक्षाविधिः ॥ १५ ॥

वक्षस्ते दृढलग्नकर्कशकुचद्वन्द्वावभग्नान्तरं कण्ठः कङ्कणरत्नकोटिकलनासुव्यक्तमुद्राङ्कितः । व्यत्यासव्यतिषञ्जितश्च तिलकः फाले तवायं सखे कस्याश्चित्प्रकटीकरोति सुरतप्रौढिं परां सुभ्रुवः ॥ १६ ॥ तस्याः पाटलपाणिजाङ्कितमुरो निद्राकषाये दृशौ निर्धूताधरशोणिमाविलुलितस्रस्तस्रजो मूर्धजाः । काञ्चीदामदरश्लथाञ्चलमिति प्रातर्निखातैर्दृशोरेभिः कामशरैस्तदद्भुतमहो पत्युर्मनः कीलितम् ॥ १७ ॥ लाक्षालक्ष्म ललाटपट्टफलके केयूरमुद्रा गले वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागः परः । दृष्ट्वा कोऽपि विधाय मण्डनमिदं प्रातश्चिरं प्रेयसो लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥ १८ ॥ यद्रात्रौ रहसि व्यपेतविनयं वृत्तं रसात्कामिनोरन्योन्यं शयनीयमीहितरसावाप्तिप्रवृत्तिस्पृहम् । तत्सानन्दमिलद्दृशोः कथमपि स्मृत्वा गुरूणां पुरो हासोद्भेदनिरोधमन्थरमिलत्तारं कथंचित्स्थिरम् ॥ १९ ॥ दंपत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वचस्तत्प्रातर्गुरुसंनिधौ निगदतस्तस्योपहारं वधूः । कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्च्वोः पुटे व्रीडार्ता प्रकरोति दाडिमफलव्याजेन वाग्बन्धनम् ॥ २० ॥ धन्यास्ताः सखि योषितः प्रियतमे सर्वाङ्गलग्नेऽपि याः प्रागल्भ्यं रचयन्ति मन्मथविधावालम्ब्य धैर्यं महत् । अस्माकं तु तदीयपाणिकमलेनोन्मोचयत्यंशुकं कोऽयं का वयमत्र किं च सुरतं नैव स्मृतिर्जायते ॥ २१ ॥ कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनाद्वासो विश्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम् । एतावत्सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः कोऽयं का वयमत्र किं नु सुरतं स्वल्पापि मे न स्मृतिः ॥ २२ ॥ गाढाश्लेषविशीर्णचन्दनरजःपुञ्जप्रसारादियं शय्या संप्रति कोमलाङ्गि परुषेत्यारोप्य मां वक्षसि । गाढौष्ठग्रहपूर्वमाकुलतया पादाग्रसंदंशकेनाकृष्याम्बरमात्मनो यदुचितं धूर्तेन तत्प्रस्तुतम् ॥ २३ ॥ निद्रातुन्दिलशोणलोचनयुगं दत्ताङ्कि दन्तच्छदं पर्यस्तालकवल्लिघर्मपटलप्रामृष्टपत्रावलिः । जृम्भाजृम्भितसीधुसौरभमिलद्भृङ्गीभिरङ्गीकृतस्तोत्रं शंसति वक्त्रमेव रजनीवृत्तान्तमेणीदृशः ॥ २४ ॥

---

## प्रियप्रस्थानावस्थाकथनम् ।

मुग्धा कान्तस्य यात्रोक्तिश्रवणादेव मूर्च्छिता । बुद्ध्वा वक्ति प्रियं दृष्ट्वा किं चिरेणागतो भवान् ॥ १ ॥ यामीति प्रियपृष्टायाः कान्तायाः कण्ठवर्त्मनि । वचो जीवितयोरासीद्बहिर्निःसरणे रणः ॥ २ ॥ बाष्पाकुलं प्रलपतोर्गृहिणि निवर्तस्व कान्त गच्छेति । यातं दंपत्योर्दिनमनुगमनावधि सरस्तीरे ॥ ३ ॥ यामि न यामीति धवे वदति पुरस्तात्क्षणेन तन्वङ्ग्याः । गलितानि पुरोवलयान्यपराणि तथैव दलितानि ॥ ४ ॥ मनसि निविशिते स

१ प्रवासगमनम्. २ जागृता. ३ अग्रिमकङ्कणानि. ४ भग्नानि.

कोऽपि तापः प्रणयिनि बाहुलतान्तरास्थितेऽपि। सरसिजमकरन्दगन्धबन्धुर्वहति यदेष शनैः शनैः समीरः॥ ५॥ कान्ते कथंचिद्गदितप्रयाणे क्षणं विनम्रा विरहार्दिताङ्गी। ततः समालोक्य कदागतोऽसीत्याख्याय कान्ता मुदमाससाद॥ ६॥ लज्जां विहाय रुदितं विधृतः पटान्ते मा गास्त्वमित्युदितमङ्गुलयो मुखस्य। स्थित्वा पुरः पतितमेव निवर्तनाय प्राणेश्वरे व्रजति किं न कृतं कृशाङ्ग्या॥ ७॥ गन्तुर्विवस्वदुदये हृदयेश्वरस्य प्रत्यूषपक्षिनिनदश्रमजातकम्पा। निद्रां जलैरशिशिरैर्नयनाब्जजातैः कान्ता तदंसशिखरे पतितैर्जहार॥ ८॥ प्राणेश्वरे किमपि जल्पति निर्गमाय क्षामोदरी वदनमानमयांचकार। आली पुनर्निभृतमेत्य लतानिकुञ्जमुन्मत्तकोकिलकलध्वनिमाततान॥ ९॥ गन्तुं प्रिये वदति निःश्वसितं न दीर्घमासीन्न वा नयनयोर्जलमाविरासीत्। आयुर्लिपिं पठितुमेणदृशः परंतु भालस्थलीं किमु करः समुपाजगाम॥ १०॥ प्रहरविरतौ मध्ये वाह्नस्ततोऽप्यपरेण वा किमुत सकले यातेऽप्यह्नि प्रिय त्वमिहैष्यसि। इति दिनशतप्राप्यं देशं प्रियस्य यियासतो हरति गमनं बालालापैः सबाष्पगलज्जलैः॥ ११॥ पितुरधिपुरं त्यक्ताः सख्यः समं निजबान्धवैर्न च परिचितिर्जाता पत्युर्गृहेऽपि कयाचन। कतिपयदिनोद्भूतप्रेम्णि प्रिये प्रवसत्यसौ कथयतु मनस्तापं कस्मै नवं नवकामिनी॥१२॥सान्त्वप्रायैः प्रणयवचनैर्गन्तुमापृच्छमाने कान्ते तिर्यङ्नमितवदना रुन्धती बाष्पपूरम्। दीर्घोच्छ्वासस्थगनविकलोत्कम्पि नासापुटान्ता संख्याशून्यं गणयति मृगीलोचना कङ्कणानि॥ १३॥ यामीत्युक्ते हृदयपतिना पञ्चशः शङ्खभूषाः स्वैरं स्वैरं झटिति गलिताः पाणिपङ्केरुहाग्रात्। नो यास्यामीत्यनुपदमिमां वाचमाकर्णयन्त्यास्तन्व्याः शेषा अपि चटचटेत्येव भङ्गं समीयुः॥ १४॥ आयाते श्रुतिगोचरं प्रियतमप्रस्थानकाले बलात्तल्पान्तःस्थितया तया जनमलं दृष्ट्वा चिरं मुग्धया। सोच्छ्वासं दृढमन्युनिर्भरगलद्बाष्पाम्बुधौतं तया स्वं वक्त्रं विनिवेश्य भर्तृहृदये निःशब्दकं रुद्यते॥ १५॥ दृष्टः कातरनेत्रया चिरतरं बद्धाञ्जलि याचितः पश्चादंशुकपल्लवेन विधृतो निर्व्याजमालिङ्गितः। इत्याक्षिप्य समस्तमर्थमघृणो गन्तुं प्रवृत्तः शठः पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः॥ १६॥ लग्ना नांशुकपल्लवे भुजलता नो हारदेशेऽर्पिता नो वा पादयुगे तया निपतितं तिष्ठेति नोक्तं वचः। काले केवलमम्बुदालिमिलिते गन्तुं प्रवृत्तः शठस्तन्व्या बाष्पजलौघपूरितनदीपूरेण रुद्धः प्रियः॥ १७॥ दूरं सुन्दरि निर्गतासि नगरादेष द्रुमः क्षीरवानस्मादेव निवर्त्यतामिति शनैरुक्ताध्वगेन प्रिया। गाढालिङ्गनचक्रितस्तनतटाभोगस्फुटत्कञ्चुकं वीक्ष्योरःस्थलमश्रुपूरितदृशः प्रस्थानभङ्गः कृतः॥ १८॥ यामि प्रेयसि वारिदागमदिने जानीहि मामागतं चिन्तां चेतसि मा विधेहि कथयत्येवं सबाष्पे मयि। निःश्वासैः पवनायितं वरतनोरङ्गैः कदम्बायितं कान्त्या केतकपत्रकामितमहो दृग्भ्यां पयोदायितम्॥ १९॥ यामीत्यप्रियवादिनि प्रियतमे मुद्रा-

भवत्कङ्कणं केलीमद्मबहिर्गतैकचरणे भूमौ शरीरस्थितिः। अन्तर्धानगते पुनर्मृगदृशो वाच्या किमन्या दशा लाजास्फोट इव स्फुटत्यविरलं हारोऽपि वामभ्रुवः॥ २०॥ प्रस्थानं वलयैः कृतं प्रियसखैरस्त्रैरजस्रं गतं धृत्या न क्षणमासित व्यवसितं चित्तेन गन्तुं पुरः। यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते ॥ २१ ॥ गच्छामीति मयोक्तया मृगदृशा निःश्वासमुद्रेकिणं त्यक्त्वा तिर्यगवेक्ष्य बाष्पकलुषेणैकेन मा चक्षुषा । अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यतामित्थं स्नेहाविवर्धितो मृगशिशुः सोत्प्रासमाभाषितः ॥ २२ ॥ चिन्तामोहविनिश्चलेन मनसा मौनेन पादानतः प्रत्याख्यानपराङ्मुखः प्रियतमो गन्तुं प्रवृत्तोऽधुना। सव्रीडैरलसैर्निरन्तर-लुठद्बाष्पाकुलैर्लोचनैः श्वासोत्कम्पकुचं निरीक्ष्य सुचिरं जीवाशया वारितः ॥ २३ ॥

## सखीं प्रति नायिकावाक्यम्।

वयो नव्यं स्वान्तं विषयतरलं हन्त सततं प्रियो दूरे देशे जनकनगरं दुर्लभतरम्। जनश्चायं दुष्टो भृशमिदमनर्थाय सततं कथंकारं पारं कथय सखि यामोऽस्य वयसः॥१॥ आयाता जलदावनी सरभसं विद्युत्समालिङ्गिता शैलानां परितः सशब्दमहिभुक्श्रेणी नरीनृत्यति। एवं सत्यपि हन्त संप्रति पतिर्देशान्तरं प्रस्थितस्तद्दुःखं विनिवेद्यतां सखि कथं कस्याधुनाग्रे मया ॥ २ ॥ कान्तो यास्यति दूरदेशमिति मे चिन्ता परं जायते लोकानन्दकरो हि चन्द्रवदने वैरायते चन्द्रमाः। किं चायं वितनोति कोकिलकलालापो विलापोदयं प्राणानेव हरन्ति हन्त नितरामाराममन्दानिलाः ॥ ३ ॥

## नायकं प्रति नायिकोक्तयः।

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ १ ॥ न चिरं मम तापाय तव यात्रा भविष्यति। यदि यास्यसि यातव्यमलमाशङ्कयापि ते ॥ २ ॥ सहिष्ये विरहं नाथ देह्यदृश्याञ्जनं मम। यदक्तनेत्रां कंदर्पः प्रहर्तुं मां न शक्ष्यति ॥ ३ ॥ प्राणेश विज्ञप्तिरियं मदीया तत्रैव नेया दिवसाः कियन्तः। संप्रत्ययोग्यस्थितिरेष देशः करा हिमांशोरपि तापयन्ति ॥ ४ ॥ एतस्मिन्सहसा वसन्तसमये प्राणेश देशान्तरं गन्तुं त्वं यतसे तथापि न भयं तापात्प्रपद्येऽधुना। यस्मात्कैरवसारसौरभमुषा साकं सरोवायुना चान्द्री दिक्षु विजृम्भते रजनिषु स्वच्छा मयूखच्छटाः ॥ ५ ॥ लोलैर्लोचनवारिभिश्च शपथैः पादप्रमाणैः परैरन्यास्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम्। पुण्याहं व्रज मङ्गलं सुदिवसः प्रातः प्रयातस्य यत्त्वत्स्नेहोचितमीहितं प्रिय मया त्वं निर्गतः श्रोष्यसि ॥ ६ ॥ भास्वांश्चूततरुर्गुरुर्मनसिजः कोऽप्येष भृङ्गस्तमा मन्दो

१ स्वमरणसद्भावनेन गमननिषेधो गर्भीकृतः.

गन्धवहः सितो मलयजो दोषाकरो माधवः । अङ्गारो नवपल्लवः परभृतो विज्ञो गुरो राजपो या निर्यासि निवारिता कथममी क्रूरा ग्रहा न त्वया ॥ ७ ॥ मा याहीत्यपमङ्गलं बत सखे स्नेहेन हीनं वचस्तिष्ठेति प्रभुता यथारुचि कुरु त्वेषाप्युदासीनता । नो जीवामि विना त्वयेति वचनं संभाव्यते वा न वा तन्मां शिक्षय यत्प्रभो समुचितं वक्तुं त्वयि प्रस्थिते ॥ ८ ॥ न्यस्तं पन्नगमूर्ध्नि पादयुगलं भक्तिर्विमुक्ता गुरोस्त्यक्ता नीतिरकारि किं न भवतो हेतोर्मया दुष्कृतम् । अङ्गानां शतयातना नयनयोः कोऽपि क्रमो रौरवः कुम्भीपाकपराभवश्च मनसो युक्तं त्वयि प्रस्थिते ॥ ९ ॥ कान्ते कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ स्वस्ति स्वस्ति निमीलयामि नयने यावन्न शून्या दिशः । आयाता वयमागमिष्यति सुहृद्वर्गस्य भाग्योदयैः संदेशो वद कस्तवाभिलषितस्तीर्थेषु तोयाञ्जलिः ॥ १० ॥

## नायकं प्रति सखीवाक्यम् ।

किमिति सखे परदेशे गमयसि दिवसान्धनाशया कुञ्ज । वर्षति मौक्तिकनिकरं तव भवनद्वारि काञ्चनी वल्ली ॥ १ ॥ या बिम्बौष्ठरुचिः क्वचिद्द्रुममणिः स्वप्नेऽपि तां लब्धवान्हासश्रीसदृशैस्तपोभिरपि किं मुक्ताफलैः स्तूयते । तत्कान्तिः शतशोऽपि वह्निपतनैर्हेम्नः कुतः सेत्स्यति त्यक्त्वा रत्नमयीं प्रयासि दयितां कस्मै धनायाध्वग ॥ २ ॥ उद्यद्बर्हिषदर्दुरारवपुषि प्रक्षीणपान्थायुषि श्च्योतद्विप्रुषि चन्द्ररुड्मुषि सखे हंसद्विषि प्रावृषि । मा मुञ्चोच्चकुचान्तसंततगलद्बाष्पाकुलां बालिकां काले कालकरालनीलजलदव्यालुप्तभास्वत्त्विषः ॥ ३ ॥ मा गच्छ प्रमदाप्रिय प्रियशतैरभ्यर्थितस्त्वं मया बालाप्राङ्गनमागतेन भवता प्राप्नोत्यवस्थां पराम् । किं चास्याः कुचभारनिःसहतरैरङ्गैरनङ्गाकुलैस्त्रुट्यत्कञ्चुकजालकैरनुदिनं निःसूत्रमस्मद्गृहम् ॥ ४ ॥

## सखायं प्रति नायकोक्तिः ।

शेते शीतकरोऽम्बुजे कुवलयद्वन्द्वाद्विनिर्गच्छति स्वच्छा मौक्तिकसंहतिर्धवलिमा हैमीं लतामञ्चति । स्पर्शात्पङ्कजकोशयोरभिनवा यान्ति स्रजः क्लान्ततामेषोत्पातपरंपरा मम सखे यात्रास्पृहां कृन्तति ॥ १ ॥

## नायिकां प्रति सखीवाक्यम् ।

वारंवारमुदश्रु लोचनयुगं पर्याकुलं जायते निःश्वासा विरमन्ति न क्षणममी व्याश्लिष्टदन्तच्छदः । प्रस्थानश्रवणादपि प्रियतमस्याहो तवेयं स्थितिर्नो जाने निलयं गते तु दयिते कीदृग्दशामाप्स्यसि ॥ १ ॥

## देशान्तरोपगतो नायकः ।

दिदृक्षमाणः क्षणमायताक्ष्या मुखाम्बुजं मञ्जुलमध्वनीनः । मुहूर्तमात्रं सुमुहूर्तकालं सवर्ष-

कालं कलयांचकार ॥ १ ॥ निशम्य केलीभवनोपकण्ठे मञ्जीरमञ्जुध्वनिमध्वनीनः । यथा-तथा बद्धकथावशेषं समापयामास समं सुहृद्भिः ॥ २ ॥ मुखं प्रियायाः समुदीक्ष्यमाणः कान्तो दिनस्यान्तमपेक्षमाणः । मुहुर्मुहुर्व्योमनि तिग्मभानौ निवेशयामास विलोचनानि ॥ ३ ॥

## वसन्तवर्णनम् ।

मधुपराजिपराजितमानिनीजनमनः सुमनःसुरभिश्रियम् । अभृत वारितवारिजविप्लवं स्फुटितताम्रततताम्रवनं जगत् ॥ १ ॥ रणत्कङ्कणानां झणन्नूपुराणां चलत्कुण्डलानां क्वणत्किङ्किणीनाम् । वधूनां मुखाम्भोरुहं द्रष्टुकामो रथं मन्थरं चक्रबन्धुश्चकार ॥ २ ॥ विकसितसहकारभारहारिपरिमलपुञ्जितगुञ्जितद्विरेफः । नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः ॥ ३ ॥ **वसन्तसमयस्वभावाख्यानम्** ॥ कोकिलश्चूतशिखरे मञ्जरीरेणुपिञ्जरः । गदितैर्व्यक्ततामेति कुलीनश्चेष्टितैरिव ॥ ४ ॥ परिचुम्बति संश्लिष्य भ्रमरश्चूतमञ्जरीम् । नवसंगमसंहृष्टः कामी प्रणयिनीरिव ॥ ५ ॥ ताम्रपल्लविते स्थित्वा कोकिला मधुरस्वरम् । चुकूज कामिनां चित्तमकर्षन्तीव दूतिकाः ॥ ६ ॥ पुष्पस्तनभरानम्रा नीलभ्रमरलोचनाः । पुष्पवर्षैरर्चयन्त्यः स्वभर्तारं च माधवम् ॥ ७ ॥ सुभगे कोटिसंख्यत्वमुपेत्य मदनाशुगैः । वसन्ते पञ्चता त्यक्ता पञ्चतासीद्वियोगिनाम् ॥ ८ ॥ सहकारकुसुमकेसरनिकरभरामोदमूर्छितदिगन्ते । मधुरमधुविधुरमधुपे मधौ भवेत्कस्य नोत्कण्ठा ॥ ९ ॥ मलयानिलमिलनोत्कटमदकलकलकण्ठकचकलापः । मधुरमधुविधुरमधुपो मधुरयमधुना धिनोति धरम् ॥ १० ॥ किंशुककलिकान्तर्गतमिन्दुकलास्पर्धिकेसरं भाति । रक्तनिचोलकपिहितं धनुरिव नतमुद्रितं वितनोः ॥ ११ ॥ आयाता मधुरजनी मधुरजनीगीतिहृद्येयम् । अङ्कुरितः स्मरविटपी स्मरविटपीनस्तनीमबलाम् ॥ १२ ॥ अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः । रम्योऽयमेति संप्रति लोकोत्कण्ठाकरः कालः ॥ १३ ॥ सपदि सखीभिर्निभृतं विरहवतीस्त्रातुमत्र भज्यन्ते । सहकारमञ्जरीणां शिखोद्गमग्रन्थयः प्रथमे ॥ १४ ॥ असौ मरुच्चुम्बितचारुकेसरः[1] प्रसन्नताराधिपमण्डलाग्रणीः[2] । वियुक्तरामातुरदृष्टिवीक्षितो[3] वसन्तकालो हनुमानिवागतः[4] ॥ १५ ॥ प्रसूनशृङ्गैर्मकरन्दतोयं सलीलमादाय वसन्तकामी । वनस्थलीनामदृशां मुखानि सिञ्चत्यसौ मन्दमरुत्करेण ॥ १६ ॥ व्यतीतकल्पे शिशिरैकबाल्ये संकल्पपुष्पोद्गमबन्धुराङ्गी । इयं लवङ्गी युवभृङ्गसङ्गादुच्छूनगुच्छस्तनिकेव भाति ॥ १७ ॥ दत्ते जनोऽसौ खलु विद्यमानमविद्यमानं तु न कोऽपि तावत् । वियोगिनां पुष्पनमन्नशोकः शोकप्रदोऽभूदतिचित्रमेतत् ॥ १८ ॥ जगौ विवाहावसरे वनस्थलीवसन्तयोः कामहुताशसाक्षिणि । पिकद्विजः प्रीतमना मनोरमं मुहुर्मुहुर्मङ्गलमन्त्रमादरात् ॥ १९ ॥ आस्वादितं स्वादुमरन्दबिन्दुस्वच्छन्दमिन्दीवरसुन्दरीभिः । माकन्दपुष्पं प्रमदाजनस्य प्रमो-

१ विस्तीर्ण. २ पुनागः; (पक्षे) शरा.. ३ चन्द्रबिम्ब., (पक्षे) सुग्रीवस्य सेना. ४ स्त्री, (पक्षे) दशरथपुत्रः.

दमामोदभरैरकार्षीत् ॥ २० ॥ कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समये विलङ्घ्य। दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिश्वासमिवोत्ससर्ज ॥ २१ ॥ असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि। पादेन नापैक्षत सुन्दरीणां संपर्कमासिञ्जितनूपुरेण ॥ २२ ॥ सद्यः प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे। निवेशयामास मधुर्द्विरेफान्नामाक्षराणीव मनोभवस्य ॥ २३ ॥ वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः। प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ २४ ॥ बालेन्दुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि। सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥ २५ ॥ लग्नद्विरेफाञ्जनभक्तिचित्रं मुखे मधुश्रीस्तिलकं प्रकाश्य। रागेण बालारुणकोमलेन चूतप्रवालोष्ठमलंचकार ॥ २६ ॥ मृगाः पियालद्रुममञ्जरीणां रजःकणैर्विघ्नितदृष्टिपाताः। मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः ॥ २७ ॥ चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज। मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥ २८ ॥ हिमव्यपायाद्विशदाधराणामापाण्डरीभूतमुखच्छवीनाम्। स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥ २९ ॥ मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः। शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥ ३० ॥ ददौ रसात्पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः। अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥ ३१ ॥ गीतान्तरेषु श्रमवारिलेशैः किंचित्समुच्छ्वासितपत्रलेखम्। पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्बे ॥ ३२ ॥ पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः। लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥ ३३ ॥ कुसुमजन्म ततो नवपल्लवास्तदनु षट्पदकोकिलकूजितम्। इति यथाक्रममाविरभून्मधुर्द्रुमवतीमवतीर्य वनस्थलीम् ॥ ३४ ॥ उपहितं शिशिरापगमश्रिया मुकुलजालमशोभत किंशुके। प्रणयिनीव नखक्षतमण्डनं प्रमदया मदयापितलज्जया ॥ ३५ ॥ व्रणगुरुप्रमदाधरदुःसहं जघननिर्विषयीकृतमेखलम्। न खलु तावदशेषमपोहितुं रविरलं विरलं कृतवान्हिमम् ॥ ३६ ॥ अभिनयान्परिचेतुमिवोद्यता मलयमारुतकम्पितपल्लवा। अमदयत्सहकारलता मनः सकलिका कलिकामजितामपि ॥ ३७ ॥ नयगुणोपचितामिव भूपतेः सदुपकारफलां श्रियमर्थिनः। अभिययुः सरसो मधुसंभृतां कमलिनीमलिनीरपतत्रिणः ॥ ३८ ॥ कुसुममेव न केवलमार्तवं नवमशोकतरोः स्मरदीपनम्। किसलयप्रसवोऽपि विलासिनां मदयिता दयिताश्रवणार्पितः ॥ ३९ ॥ विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः। मधुलिहां मधुदानविशारदाः कुरबका रवकारणतां ययुः ॥ ४० ॥ सुवदनावदनासवसंभृतस्तदनुवादिगुणः कुसुमोद्गमः। मधुकरैरकरोन्मधुलोलुपैर्बकुलमाकुलमायतपङ्क्तिभिः ॥ ४१ ॥ प्रथममन्यभृताभिरुदीरिताः प्रविरला इव मुग्धवधूकथाः। सुरभिगन्धिषु शुश्रुविरे गिरः

कुसुमितासु मिता वनराजिषु ॥ ४२ ॥ श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः । उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः ॥ ४३ ॥ ललितविभ्रमबन्धविचक्षणं सुरभिगन्धपराजितकेसरम् । पतिषु निर्विविशुर्मधुमङ्गनाः स्मरसखं रसखण्डनवर्जितम् ॥ ४४ ॥ शुशुभिरे स्मितचारुतराननाः स्त्रिय इव श्लथशिञ्जितमेखलाः । विकचतामरसा गृहदीर्घिका मदकलोदकलोलविहंगमाः ॥ ४५ ॥ उपययौ तनुतां मधुखण्डिता हिमकरोदयपाण्डुमुखच्छविः । सदृशमिष्टसमागमनिर्वृतिं वनितयानितया रजनीवधूः ॥४६॥ अपतुषारतया विशदप्रभैः सुरतसङ्गपरिश्रमनोदिभिः । कुसुमचापमतेजयदंशुभिर्हिमकरो मकरोर्जितकेतनम् ॥ ४७ ॥ हुतहुताशनदीप्ति वनश्रियः प्रतिनिधिः कनकाभरणस्य यत् । युवतयः कुसुमं दधुराहितं तदलके दलकेसरपेशलम् ॥ ४८ ॥ अलिभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः । न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥ ४९ ॥ अमदयन्मधुगन्धसनाथया किसलयाधरसंततया मनः । कुसुमसभृतया नवमल्लिका स्मितरुचा तरुचारुविलासिनी ॥ ५० ॥ अरुणरागनिषेधिभिरंशुकैः श्रवणलब्धपदैश्च यवाङ्कुरैः । परभृताविरुतैश्च विलासिनः स्मरबलैरबलैकरसाः कृताः ॥ ५१ ॥ उपचितावयवा शुचिभिः कणैरलिकदम्बकयोगमुपेयुषी । सदृशकान्तिरलक्ष्यत मञ्जरी तिलकजालकजालकमौक्तिकैः ॥ ५२ ॥ ध्वजपटं मदनस्य धनुर्भृतश्छविकरं मुखचूर्णमृतुश्रियः । कुसुमकेसररेणुमलिव्रजाः सपवनोपवनोत्थितमन्वयुः ॥ ५३ ॥ अनुभवन्नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिवृक्षया । अनयदासनरज्जुपरिग्रहे भुजलतां जलतामबलाजनः ॥५४॥ त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः । परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ॥५५॥ नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् । मृदुलतान्तलतान्तमलोकयत्स सुरभिं सुरभिं सुमनोभरैः ॥५६॥ विलुलितालकसंहतिरामृशन्मृगदृशां श्रमवारि ललाटजम् । तनुतरङ्गततिं सरसां दलत्कुवलयं वलयन्मरुदाववौ ॥५७॥ स्फुटमिवोज्ज्वलकाञ्चनकान्तिभिर्युतमशोकमशोभत चम्पकैः । विरहिणा हृदयस्य भिदाभृतः कपिशितं पिशितं मदनाग्निना ॥५८॥ स्मरहुताशनमुर्मुरचूर्णतां दधुरिवाम्रवणस्य रजःकणाः । निपतिताः परितः पथिकव्रजानुपरि ते परितेपुरतो भृशम् ॥ ५९ ॥ रतिपतिप्रहितेव कृतक्रुधः प्रियतमेषु वधूरनुनायिका । बकुलपुष्परसासवपेशलध्वनिरगान्निरगान्मधुपावलिः ॥ ६० ॥ प्रियसखीसदृशं प्रतिबोधिताः किमपि काम्यगिरा परपुष्टया । प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयादुरयाचितमङ्गनाः ॥ ६१ ॥ मधुकरैरपवादकरैरिव स्मृतिभुवः पथिका हरिणा इव । कलतया वचसः परिवादिनी स्वरजिता रजिता वशमाययुः ॥ ६२ ॥ समभिसृत्य रसादवलम्बितः प्रमदया कुसुमावचिचीषया । अविनमन्न रराज वृथोच्चकैरनृतया नृतया वनपादपः ॥६३॥ वदनसौरभलोभपरिभ्रमद्भ्रमरसंभृतसंभृतशोभया । चलितया विदधे कलमेखला कलकलोऽलकलो-

लदृशान्यया ॥ ६४ ॥ कुसुमकार्मुककार्मुकसंहितद्रुतशिलीमुखखण्डितविग्रहाः। मरणमभ्युपराः प्रतिपेदिरे किमु मुहुर्मुमुहुर्गतभर्तृकाः ॥ ६५ ॥ मधुरया मधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया। मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥ ६६ ॥ अरुणिताखिलशैलवना मुहुर्विदधती पथिकान्परितापिनः। विकचकिंशुकसंहतिरुच्चकैरुदवहद्दवहव्यवहश्रियम् ॥ ६७ ॥ कमलिनी मलिनी दयितं विना न सहते सह तेन निषेधितुम्। तमधुना मधुना निहितं हृदि स्मरति सा रतिसारमहर्निशम् ॥ ६८ ॥ सुहृदस्तरुणीनखक्षतानां प्रतिपक्षाः पथिकाङ्गनाजनानाम्। दहनद्युतिदस्यवः समन्ताद्विपिने किंशुककुड्मला विरेजुः ॥ ६९ ॥ किंशुकक्षितिरुहां विलसन्तः कुड्मलाः कुटिलतां कलयन्तः। पान्थवारणविदारणताम्राः कामकेसरिनखा इव रेजुः ॥ ७० ॥ प्रस्फुरत्प्रचुरबालपल्लवा वीरुधश्च तरलश्चकाशिरे। क्रीडिता इव कुसुम्भवारिभिः काममित्रसमये समागते ॥ ७१ ॥ कूजितानि कलयन्वनप्रियो न प्रियो विरहिणामजायत। मन्मथाग्निरपि भस्मना दरं सादरं मुनिमनोऽम्बुजं व्यधात् ॥ ७२ ॥ बकुलकुलमिलन्मिलिन्दमालामदकलकोकिलकूजितोदयेन। अहह नियमिनोऽपि तत्त्वचिन्ताच्युतमतयो मतयोषितो बभूवुः ॥ ७३ ॥ कुसुमनगवनान्युपैतुकामा किसलयिनीमवलम्ब्य चूतयष्टिम्। क्वणदलिकुलनूपुरा निरासे नलिनवनेषु पदं वसन्तलक्ष्मीः ॥ ७४ ॥ विकसितकुसुमाधरं हसन्तीं कुरबकराजिवधूं विलोकयन्तम्। ददृशुरिव सुराङ्गना निषण्णं सशरमनङ्गमशोकपल्लवेषु ॥ ७५ ॥ मुहुरनुपतता विधूयमानं विरचितसंहति दक्षिणानिलेन। अलिकुलमलकाकृतिं प्रपेदे नलिनमुखान्तविसर्पि पङ्किन्याः ॥ ७६ ॥ श्वसनचलितपल्लवाधरोष्ठे नवनिहितेर्ष्यमिवावधूनयन्ती। मधुसुरभिणि षट्पदेन पुष्पे मुख इव शाललतावधूश्चुचुम्बे ॥ ७७ ॥ उत्सृष्टमम्बुजदृशामिव मानरत्नमादाय षट्पदतिलान्मधुवारिपूरान्। पुंस्कोकिलस्य कलकूजितकैतवेन संकल्पवाक्यमयमातनुते रसालः ॥ ७८ ॥ उत्फुल्लपङ्कजनिषक्तलसद्विरेफः किंचिद्विनिद्रकुमुदोत्करसंभृतश्रीः। आमूलनद्धविविधाद्भुतमाल्यमालश्चित्रं न कस्य तनुते ललितस्तमालः ॥ ७९ ॥ धुन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि धूताध्वनीनहृदयानि मधोर्दिनानि। निःसान्द्रचन्द्रवदनावदनारविन्दसौरभ्यसौहृदसगर्वसमीरणानि ॥ ८० ॥ कुपितापि मनःपतिना[1] सह का सहकारविलोकनजातरसा। तरसा रमतो स्म न हा रमणी रमणीयतनुः सुतनुः सुरभौ ॥ ८१ ॥ स्थलकमलतरूणां कामिनीलोचनेषु क्षिपति मुकुलमुष्ट्या धूलिजात्य विशालम्। तदनु हरति हन्त स्वान्तसर्वस्वभासामयमनयविदग्धो धूर्तवन्मीनकेतुः ॥ ८२ ॥ पथि पथि शुकचञ्चूचारुराभाङ्कुराणां दिशि दिशि पवमानो वीरुधां लासकश्च। नरि नरि किरति द्राक्सायकान्पुष्पधन्वा पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥ ८३ ॥ इह मधुपवधूनां पीतमल्लीमधूनां विल-

---

१ अतिप्रियेण.

सति कमनीयः काकलीसंप्रदायः । इह नटति सलीलं मञ्जरी वञ्जुलस्य प्रतिपदमुपदिष्टा दक्षिणेनानिलेन ॥ ८४ ॥ विकसति सहकारे स्फारसौरभ्यसारे वहति धुतपटीरे मन्दमन्दं समीरे । कलयति कलवाचं कोकिलोके च रुष्टः क्षणमपि न मृगाक्ष्या वल्लभो दुर्लभोऽभूत् ॥ ८५ ॥ इह हि नववसन्ते मञ्जरीरेणुपुञ्जच्छुरणधवलदेहा बद्धहेलं रुदन्ति । तरलमलिसमूहा हारिहुंकारिकण्ठा बहलपरिमलाली सिन्दुरं सिन्दुवारम् ॥ ८६ ॥ स्थाने स्थाने मलयमरुतः पूरयन्तः कपालीं पुष्पालीपु स्मरगजरजःस्नानयोग्याः परागाः । जातं चूते मधु मधुकरप्रेयसी जानुदघ्नं निर्विघ्नं त्वां सपदि भवते रागराज्याभिषेकः ॥८७॥ प्रसूनकलिकाकुलैः किसलयैः करस्पर्धिभिः स्फुरन्मधुमदभ्रमद्भ्रमरकोकिलाकूजितैः । इति क्रमसमुद्गतैरुपवनावलीमण्डलीममण्डयदिव प्रियामृतुवसुंधरावल्लभः ॥ ८८ ॥ विलासिभिरिवोन्मदै रचितरम्यगुञ्जारवैः प्रसूनसुरभीकृतैर्विगलितत्रपास्तापसाः । अशोकशिखरस्थितैः सुनयनान्वितैः षट्पदैर्निरन्तरनिषेविताममितमधौ मधौ रेमिरे ॥ ८९ ॥ मन्दोऽयं मलयानिलः किसलय चूतद्रुमाणां नवं माद्यत्कोकिलकूजितं विचकिलामोदः पुराणं मधु । बाणानित्युपदीकरोति सुरभिः पञ्चैव पञ्चेषवे यूनामिन्द्रियपञ्चकस्य युगपत्संमोहसंपादितः ॥ ९० ॥ उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः । भ्राम्यन्तो मलयानिलाहतिचलैः शाखासहस्रैर्मुहुर्भान्ति प्राप्य मधुप्रसङ्गमधुना मत्ता इवामी द्रुमाः ॥ ९१ ॥ चूताना चिरनिर्गतापि कलिका बध्नाति न स्व रजः सनद्धं यदपि स्थित कुरवकं तत्कोरकावस्थया । कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलाना रुतं शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्ट शरम् ॥९२॥ पुष्पाणि प्रथमं ततः प्रकटिताः स्वान्तोत्सवाः पल्लवाः पश्चादुन्मदकोकिलालिललनाकोलाहलः कोमलः । इत्थं प्रादुरभूदुपेत्य परितः प्राज्यप्रमोदप्रदः प्रोद्दामद्रुमराजिराजितवनक्षोणीमृतुक्ष्मापतिः ॥ ९३ ॥ भास्वाञ्चूततरुर्गुरुर्मनसिजः कोऽप्येष भृङ्गस्तमो मन्दो गन्धवहः स्थितो मलयजो दोषाकरो माधवः । अङ्गारो नवपल्लवः कलरवो विज्ञा गुरोराज्ञया निर्यातोऽसि विचारिताः कथममी क्रूरास्त्वया न ग्रहाः ॥ ९४ ॥ स्तोत्र चैत्रगुणोदयस्य विरहिप्राणप्रयाणानकष्टकारः स्मरकार्मुकस्य सुदृशां शृङ्गारशिक्षागुरुः । दोलाकेलिकलासु मङ्गलपदं वन्दीवनान्तःश्रिया नादोऽयं कलकण्ठकण्ठकुहरप्रेङ्खोलितः श्रूयते ॥ ९५ ॥ माकन्दच्युतपुष्परेणुपटलीक्लृप्तालवालोदरे मन्दस्यन्दि मरन्दपूरभरिते वातोत्थपुष्पच्छवैः । खेलन्तो ललितं मधोर्गुणगणान्गायन्ति पुंष्पंधयाः कान्तानामधरे धयन्ति मधुरं सक्तं मधूलीरसम् ॥ ९६ ॥ आरूढो मलयानिलद्विपवरं युक्तो विलासानुगैः पीतः पुष्पविलोचनैर्नवलता पौराङ्गनानां गणैः । अभ्राम्यद्वनपत्तने मधुमहीपालस्ततः कोकिलालीलालापमिलद्भ्रमद्भ्रमरिकाझाङ्कारभेरीरवैः

१ प्रवालम्. २ पल्लवैः. ३ आम्र.. ४ समूहः. ५ भ्रमराः. ६ पिबन्ति. ७ मकरन्दम्.

॥ ९७ ॥ वारस्त्रीव वनस्थली नवनवां शोभां बभारान्वहं पान्थान्पीडयति स्म तस्कर इव क्रूरैः शरैर्मन्मथः। शृङ्गारः सगुणः क्षमापतिरिव प्राप्तः प्रतिष्ठां परां रात्रिः स्वीकुरुते स्म मुग्धललनालज्जेव कार्श्यं क्रमात् ॥ ९८ ॥ पान्थानां प्रमदा इव प्रतिदिनं दैन्यं ह्रदिन्यो ययुर्दृश्यन्ते स्म दिगम्बरा इव वने पत्रोज्झिताः पादपाः। निःश्वासा इव दुःसहा विरहिणां वाता ववुः सर्वतः पायं पायमिव प्रियाधररसं पाथः पपुः प्राणिनः ॥ ९९ ॥ साम्यं संप्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकैर्बाह्लीकीदशनव्रणारुणतरैः पत्रैरशोकाश्रितः भङ्गालङ्घितकोटि किंशुकमिदं किंचिद्विवृत्तायते माञ्जिष्ठस्तबकैश्च पाटलितरोरन्यैव काची छविः ॥ १०० ॥ गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवा वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः। किं च त्रीणि जगन्ति जिष्णुदिवसैर्द्वित्रैर्मनोजन्मनो देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ॥ १०१ ॥ **मदनपूजा** ॥ कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम्। आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥१०२॥ **कुसुमावचयः** ॥ निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि। नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी ॥१०३॥ असंख्यपुष्पोऽपि मनोभवस्य पञ्चैव बाणार्थमयं ददाति। एवं कदर्यत्वमिवावधार्य सर्वस्वमग्राहि मधोर्वधूभिः ॥ १०४ ॥ अताडयत्पल्लवपाणिनैकं पुष्पोच्चये राजवधूरशोकम्। तच्छेदहेतोरलिपङ्क्तिभङ्ग्या विकुन्तिता बाललता स्मरेण ॥१०५॥ अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः। नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥ १०६ ॥ उच्चित्य प्रथममवस्थितं मृगाक्षी पुष्पौघं श्रितविटपं गृहीतुकामा। आरोढुं पदमदधादशोकयष्टावामूलं पुनरपि तेन पुष्पितोऽसौ ॥ १०७ ॥ मुखकमलकमुन्नमय्य यूना यदभिनवोढवधूर्बलादचुम्बि। तदपि न किल बालपल्लवाग्रग्रहपरया विविदे विदग्धसख्या ॥१०८॥ व्रततिविततिभिस्तिरोहितायां प्रतियुवतौ वदनं प्रियः प्रियायाः। यदधमदधरावलोपनृत्यत्करवलयस्वनितेन तद्विवव्रे ॥ १०९ ॥ विलसितमनुकुर्वती पुरस्ताद्धरणिरुहाधिरुहो वधूर्लतायाः। रमणमृजुतया पुरः सखीनामकलितचापलदोषमालिलिङ्ग ॥ ११० ॥ सललितमवलम्ब्य पाणिनांसे सहचरमुच्छ्रितगुच्छवाञ्छयान्या। सकलकलभकुम्भविभ्रमाभ्यामुरसि रसादवतस्तरे स्तनाभ्याम् ॥१११॥ मृदुचरणतलाग्रदुःस्थितत्वादसहतरा कुचकुम्भयोर्भरस्य। उपरि निरवलम्बनं प्रियस्य न्यपतदथोच्चतरोच्चिचीषयान्या॥११२॥ उपरिजतरुजानि याचमानां कुशलतया परिरम्भलोलुपोऽन्यः। प्रथितपृथुपयोधरां गृहाण स्वयमिति मुग्धवधूमुदास दोर्भ्याम् ॥ ११३ ॥ इदमिदमिति भूरुहां प्रसूनैर्मुहुरतिलोभयता पुरः पुरोऽन्या। अनुरहसमनायि नायकेन त्वरयति रन्तुमहो जनं मनोभूः ॥ ११४ ॥ विजनमिति बलादमुं गृहीत्वा क्षणमथ वीक्ष्य विपक्षमन्तिकेऽन्या। अभिपति-

१ मदनाख्यातरुकुसुमम्. २ रचना.

तुमना लघुत्वभीतेरभवदमुञ्चति वल्लभेऽतिगुर्वा ॥ ११५ ॥ पूर्वं द्विरेफपरिभूतिभयाद्भवत्या यत्केशपुष्पभरणं हरिणाक्षि मुक्तम् । व्यर्थं तदद्य पुनरप्यलकेषु भृङ्गाः पुञ्जीभवन्निजकुलभ्रमतः पतन्ति ॥ ११६ ॥ सन्तु द्रुमाः किसलयोत्तरपुष्पभाराः प्राप्ते वसन्तसमये कथमित्थमेव । न्यासैर्नवद्युतिमतोः पदयोस्तवेयं भूः पुष्पिता सुतनु पल्लवितेव भाति ॥११७॥ अनुभवत युवत्यो भाग्यवत्यो नितान्तं कुसुमवलयवेलासङ्गखेलासुखानि । मम तु मधुकराणां वाटपाटच्चराणां सपदि पतति धाटी पुष्पवाटी निवेशे ॥ ११८ ॥ पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोर्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे । लीयन्ते कवरीभरे निजकुलव्यामोहजातस्पृहा दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥ ११९ ॥ वसन्तवायवः ॥ यथायथं ताः सहिता नभश्चरैः प्रभाभिरुद्भासितशैलवीरुधः । वनं विशन्त्यो वनजायतेक्षणाः क्षणद्युतीनां दधुरेकरूपताम् ॥ १२० ॥ विनयति सुदृशो दृशः परागं प्रणयिनि कौसुममाननानिलेन । तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपि रोषरजोभिरापुपूरे ॥ १२१ ॥ स्फुरमिदमभिचारयन्त्र एव प्रतियुवतेरभिधानमङ्गनानाम् । वरतनुरमुनोपहूय पत्या मृदुकुसुमेन यदाहताप्यमूर्च्छत् ॥ १२२ ॥ विपुलकमपि यौवनोद्धतानां घनपुलकोदयकोमलं चकाशे । परिमिलितमपि प्रियैः प्रकामं कुचयुगमुज्ज्वलमेव कामिनीनाम् ॥ १२३ ॥ हिमलवसदृशः श्रमोदबिन्दूनपनयता किल नूतनोढवध्वाः । कुचकलशकिशोरकौ कथंचित्तरलतया तरुणेन पस्पृशाते ॥ १२४ ॥ समदनमवतंसितेऽधिकर्णं प्रणयवता कुसुमे सुमध्यमायाः । व्रजदपि लघुतां बभूव भारः सपदि हिरण्मयमण्डनं सपत्न्याः ॥ १२५ ॥ अतिमन्दचन्दनमहीधरवातं स्तबकाभिरामलतिकातरुजातम् । अपि तापसानुपवनं मदनार्तान्मदमञ्जुगुञ्जदलिपुञ्जमकार्षीत् ॥ १२६ ॥ सुललितमलकान्ता वल्लरीर्नर्तयन्त्यो मधुसुरभिमुखाब्जोच्छ्वासगन्धानुबन्धाः । नवतररतभाजां योषितां स्वेदबिन्दून्सतृष इव पिबन्तो वान्ति मन्दं समीराः ॥ १२७ ॥ उपवनतरुनृत्याध्यापने लब्धवर्णो विरचितजलकेलिः पद्मिनीकामिनीभिः । प्रियसुहृदसमेषोरायर्यौ योगियोगस्थितिविदलनदक्षो दक्षिणो गन्धवाहः ॥ १२८ ॥ आलिङ्गन्ते मलयजतरूनास्वजन्ते वनान्तानापृच्छन्ते चिरपरिचितान्मीलयन्निर्झरौघान् । अद्य स्थित्वा द्रविडमहिलाभ्यन्तरे श्वः प्रभाते प्रस्थातारो मलयमरुतः कुर्वते संनिधानम् ॥ १२९ ॥ लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् । मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्रजोवृन्दं विन्दन्किरति मकरन्दं दिशि दिशि ॥ १३० ॥ मलयशिखरादाकैलासं मनोभवशासनाद्भुवनवलयं जेतुं वाञ्छन्वसन्तसमीरणः । विहितवसतिं कैलासाग्रे भुजङ्गधरं हरं मनसि विमृशन्भीतः शङ्के प्रयाति शनैः शनैः ॥ १३१ ॥ पथि पथि लतालोलाक्षीभिः स्रवन्मधुसीकरं कुसुमनिकरं वर्षन्तीभिः सहर्षमिवार्चितः । मधुकरवधूगीतासक्तं कुरङ्गक-

मास्थितः प्रसरति वने मन्दं मन्दं वसन्तसमीरणः ॥ १३२ ॥ उदञ्चत्कावेरीलहरिषु परिष्वङ्गरङ्गे रटन्तः कुहूकण्ठी कण्ठीरवरवलवत्रासितप्रोषितेभाः। अमी चैत्रे मैत्रावरुणि तरुणीकेलिकङ्केलिमल्लीवल्लीवल्लीहल्लीलकसुरभयश्चण्डिमं चण्डवाताः ॥ १३३ ॥ हेमाम्भोरुहपत्तने परिमलस्तेयी वसन्तानिलस्तत्रत्यैरिव यामिकैर्यमधुरैरारब्धकोलाहलः। निर्यातस्त्वरया व्रजन्निपतितः श्रीखण्डपङ्कद्रवैर्लिप्ते केरलकामिनीकुचतटे खञ्जः शनैर्गच्छति ॥ १३४ ॥ प्राप्तः प्राज्यमिव श्रमं जलजिनीसौरभ्यभारं वहन्नुद्दामस्तबकानमन्नवलताल‌क्ष्मीमिवालोकयन्। स्वीकुर्वन्मदमन्थरानिव गतेर्वामभ्रुवां विभ्रमान्मन्दं मन्दमुपाजगाम पवनः पाटीरवाटीतटात् ॥ १३५ ॥ पानीयं नारिकेलीफलकुहरकुहूत्कारि कल्लोलयन्तः कावेरीतीरतालद्रुमभरितसुराभाण्डमाकारचण्डाः। एतत्तन्वन्ति वेलावनललितलताताण्डवं द्राविडस्त्रीकर्पूरापाण्डुगण्डस्थललुठितवया वायवो दाक्षिणात्याः ॥ १३६ ॥ कावेरीतीरभूमीरुहभुजगवधूभुक्तमुक्तावशिष्टः कर्णाटीचीनपीनस्तनवसनदशान्दोलनस्यन्दमन्दः। हेलालाटीललाटालकलुलितलतालास्यलीलाविलोलः कष्टं भो दाक्षिणात्यः प्रसरति पवनः पान्थकान्ताकृतान्तः ॥ १३७ ॥ ये दोलाकेलिकाराः किमपि मृगदृशां मानतन्तुच्छिदो ये सद्यः शृङ्गारदीक्षाव्यतिकरगुरवो ये च लोकत्रयेऽपि। ते कण्ठे लोठयन्तः परभृतवयसां पञ्चमं रागराजं वान्ति स्वैरं समीराः स्मरविजयमहासाक्षिणो दाक्षिणात्याः ॥ १३८ ॥ **वसन्तपथिकाः** ॥ चक्रेण शिरसि निहितेन नित्यरुधिरारुणेन दुर्वारः। मत्तद्विप इव पथिकः किंशुककुसुमाङ्कुशेन भृतः ॥ १३९ ॥ समवलोक्य विलासवनस्थलीं न पथिकैः पथिकैः पतितं भुवि। मलयजद्रुमसौरभमेदुरोदरसमीरसमीरितवल्लरीम् ॥ १४० ॥ वसन्तप्रारम्भे चिरविरहखिन्ना सहचरी यदि प्राणान्मुञ्चेत्तदिह वधभागी भवति कः। वयो वा स्नेहो वा कुसुमविशिखो वेति विमृशंस्तुहीति प्रव्यक्तं पिकनिकरझाङ्कारमशृणोत् ॥ १४१ ॥ रे पान्थाः स्वगृहाणि गच्छत सुखं सेवाक्षणो मुच्यतां मानं मानिनि मुञ्च वल्लभजने कोपानुबन्धेन किम्। आयातः कुसुमाकरः क्षपयति प्राणान्वियोगातुरेष्वित्येवं परपुष्टनादपटहो वक्तीव कामाज्ञया ॥ १४२ ॥ सा तन्वीति घनस्तनीति विकसन्नीलाब्जनेत्रेति च स्वैरः संचरतीति वक्ति मधुरां वाचं विचित्रामपि। इत्थं विद्रुमपाटलाधरपुटां सीमन्तिनीं ध्यायतो रोमाञ्चोऽनुदितं स्मितं प्रलपितं पान्थस्य संजायते ॥ १४३ ॥ अध्वन्यस्य वधूर्वियोगविधुरा भर्तुः स्मरन्ती यदि प्राणानुज्झति तस्य तत्खलु महत्संजायते पातकम्। यावन्नो कृतमध्वगेन हृदये तावत्तरोर्मूर्धनि प्रोद्घुष्टं परपुष्टया तव तवेत्युच्चैर्वचोऽनेकशः ॥ १४४ ॥ उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकलकलैरुत्कीर्णकर्णज्वराः। नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षणप्राप्तप्राणसमा समागमरसोल्लासैरमी वासराः ॥ १४५ ॥ अध्वन्यैर्मकरन्दशीकर-

सुरामत्तक्वणत्कोकिले मार्गे मार्गनिरोधिनी परिहृता शङ्के शुभाशङ्कया । पान्थस्त्रीवधपातकाद्दुपनतं चण्डालचिह्नं मधोरेषा खिङ्खिणिकेव षट्पदमयी झाङ्कारिणी संहतिः ॥ १४६ ॥ सव्याधेः कृशता क्षतस्य रुधिरं दष्टस्य लालास्रुतिः किंचिन्नैतदिहास्ति तत्कथमसौ पान्थस्तपस्वी मृतः । आ ज्ञातं मधुलम्पटैर्मधुकरैरारब्धकोलाहले नूनं साहसिकेन चूतमुकुले दृष्टिः समारोपिता ॥ १४७ ॥ एतस्मिन्दक्षिणाशानिलचलितलतानीलमत्तालिमालापक्षक्षोभावधूतच्युतबहलरजोह्लादिहृद्ये वसन्ते । प्रेमस्वेदार्द्रबाहुश्लथवलयलसत्प्रोढसीमन्तिनीनां मन्दः कण्ठग्रहोऽपि ग्लपयति हृदयं किं पुनर्विप्रयोगः ॥ १४८ ॥

---

## ग्रीष्मवर्णनम् ।

रेजे पुष्पैर्ग्रीष्ममासाद्य मल्ली मल्लीं सद्यः संश्रयन्ते स्म भृङ्गाः । भङ्गैस्तत्रारम्भि हर्षेण गानं गाने लौल्यं लेभिरे योगिनोऽपि ॥ १ ॥ अत्युल्लसद्धसिरहस्ययुजा भुजेन वक्त्रेण शारदसुधांशुसरोरुहेण । पीयूषपोषसुभगेन च भाषितेन त्वं चेत्प्रसीदसि मृगाक्षि कुतो निदाघः ॥ २ ॥ **ग्रीष्मसमयस्वभावाख्यानम्** ॥ प्रतिगतमर्थिजनानां विच्छिन्नाशासमूहमवलोक्य । स्फुटितमपयशस्तापादिव हृदयदलं तडागस्य ॥ ३ ॥ सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः । प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ ४ ॥ देशे देशे जडिमकुरङ्गास्तेजोभल्लैर्दिनकरभिल्ले । धावं धावं प्रहरति राज्ञां धारागेहं शरणमवापुः ॥ ५ ॥ संजातपत्रप्रकरान्वितानि समुद्वहन्ति स्फुटपाटलत्वम् । विकस्वराण्यर्ककराभिमर्शाद्दिनानि पद्मानि च वृद्धिमीयुः ॥ ६ ॥ प्रचण्डभानुः स्पृहणीयचन्द्रमाः सदावगाहक्षतवारिसंचयः । दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालः समुपागतः प्रिये ॥ ७ ॥ दुःप्रेक्ष्यमुच्चैर्गगनं निदाघे कोपाकुलस्येव मुखं नृपस्य । हरेः शयानस्य मृणालबुद्ध्या कर्षन्ति पुच्छं करिणः करेण ॥ ८ ॥ प्रायश्चरित्वा वसुधामशेषां छायासु विश्रम्य ततस्तरूणाम् । प्रौढिं गते संप्रति तिग्मभानौ शैत्यं शनैरन्तरपामयासीत् ॥ ९ ॥ रवितुरङ्गतनूरुहतुल्यतां दधति यत्र शिरीषरजो रुचः । उपययौ विदधन्नवमल्लिकाः शुचिरसौ चिरसौरभसंपदः ॥ १० ॥ दलितकोमलपाटलकुड्मले निजवधूश्वसितानुविधायिनि । मरुति वाति विलासिभिरुन्मदभ्रमदलौ मदलौल्यमुपाददे ॥ ११ ॥ निदधिरे दयितोरसि तत्क्षणस्नपनवारितुषारभृतास्तनाः । सरसचन्दनरेणुरनुक्षणं विचकरे च करेण वरोरुभिः ॥ १२ ॥ कथमिव तव संमतिर्भवित्री सममृतुभिर्मुनिनावधीरितस्य । इति विरचितमल्लिकाविकाशः स्मयत इव स्म मधुं निदाघकालः ॥ १३ ॥ बलवदपि बलं मिथोविरोधि

---

१ हिमान्येव कुरङ्गा मृगा. २ धावित्वा धावित्वा. ३ समूहाः. ४ वृक्षविशेषा; (पक्षे) पाटलवर्णानि. ५ भासुराणि, (पक्षे) विकासशालीनि. ६ आपुः. ७ हेमन्ते इत्यर्थः. ८ वसन्ते इत्यर्थः. ९ ग्रीष्मे. १० जलानाम्.

प्रभवति नैव विपक्षनिर्जयाय । भुवनपरिभवी न यत्तदानीं तमृतुगणः क्षणमुन्मनीचकार ॥ १४ ॥ अपि शिशिरतरोपचारयोग्यं द्वितयमिदं युगपन्न सह्यमेव । जरठितरविदीधितिश्च कालो दयितजनेन समं च विप्रयोगः ॥ १५ ॥ तप्ता मही विरहिणामिव चित्तवृत्तिस्तृष्णाध्वगेषु कृपणेष्विव वृद्धिमेति । सूर्यः करैर्दहति दुर्वचनैः खलो नु छाया सतीव न विमुञ्चति पादमूलम् ॥ १६ ॥ छाया वियोगिवनितेव गता कृशत्वं तप्तं पयः पिशुनमानसवद्बभूव । केनाधुना बत मनागवलोकनीयः क्रुद्धोत्तमर्णमुखमण्डलवत्पतङ्गः ॥ १७ ॥ रिक्तेषु वारिकथया विपिनोदरेषु मध्याह्नजृम्भितमहातपतापतप्ताः । स्कन्धान्तरोत्थितदवाग्निशिखाच्छलेन जिह्वां प्रसार्य तरवो जलमर्थयन्ते ॥ १८ ॥ मुखकृतिबिसखण्डश्चण्डमार्तण्डतापात्स्थितजलदतलस्थो राजते राजहंसः । रजतघट इवायं विद्रुमाबद्धधाराविवरविगलदम्बुः कम्बुकण्ठि प्रतीहि ॥ १९ ॥ मलयपवनचञ्चच्चन्दनस्यन्दशीतं जलनिधितनयायाः कण्ठमालिङ्ग्य दोर्भ्याम् । दिनकरकरजालज्वालया दूनदेहो जलधिपयसि देवो वासुदेवो निदद्रौ ॥ २० ॥ रजनिचरमयामेष्वादिशन्ती रतेच्छां किमपि कठिनयन्ती नालिकेरीफलाम्भः । अयि परिणमयित्री राजरम्भाफलानां दिनपरिणतिभोग्या वर्तते ग्रीष्मलक्ष्मीः ॥ २१ ॥ निजां कायच्छायां श्रयति महिषः कर्दमधिया च्युतं गुञ्जापुञ्जं रुधिरमिति काकः कलयति । समुत्सर्पन्सर्पः सुषिरविवरं तापविवशः सचीत्कारं धूतं प्रविशति करं कुञ्जरपतेः ॥ २२ ॥ तदाम्भःस्नातानां दरदलितमल्लीमुकुलिताः स्रजो बिभ्राणानां मलयजरसार्द्रार्द्रवपुषाम् । निदाघाग्निप्लोषग्लपितमभिसार्यं मृगदृशां परिष्वङ्गेऽनङ्गः पुनरपि शनैरङ्कुरयति ॥ २३ ॥ जलार्द्राः शष्पाणां बिसकिसलयैः केलिवलयाः शिरीषैरुत्तंसा विचकिलमयी हाररचना । शुचावेणाक्षीणां मलयजरसार्द्राश्च तनवो विना तन्त्रं मन्त्रं रतिरमणमृत्युंजयविधिः ॥ २४ ॥ हरन्ति हृदयानि यच्छ्रवणशीतला वेणवो यदर्दति करम्बिता शिशिरवायुना वारुणी । भवन्ति च हिमोपमाः स्तनभुवो यदेणीदृशो रुचेरुपरि संस्थितो रतिपतेः प्रसादो गुरुः ॥ २५ ॥ मूलं बालकवीरुधां सुरभयो जातीतरूणां त्वचः सारश्चन्दनशाखिनां किसलयान्यार्द्राण्यशोकस्य च । शैरीषी कुसुमोन्नतिः परिणमन्मोचश्च सोऽयं गणो ग्रीष्मेणोष्महरः पुरा किल ददे दग्धाय पञ्चेषवे ॥ २६ ॥ अङ्गारैः खचितेव भूर्वियदपि ज्वालाकरालंकरैस्तिग्मांशोः किरतीव तीव्रमभितो वायुः कुकूलातलम् । अप्यम्भांसि नखंपचानि सरितामाशा ज्वलन्तीव च ग्रीष्मेऽस्मिन्नववह्निदीपितमिवाशेषं जगद्वर्तते ॥ २७ ॥ पाश्चात्यैर्मरुमारुतैस्त्रिजगतामुन्मूलयन्नार्द्रतां दावाग्निर्ज्वलितैरपारगहनान्यप्यानयद्भस्मताम् । वात्याभिस्तृणपत्रधूलिनिकरान्धुन्वन्विहायस्थले ग्रीष्मः शुष्यदतुच्छपल्वललुठन्मत्स्यः समभ्यागतः ॥ २८ ॥ अत्यच्छं सितमंशुकं शुचि मधु स्वामोदमच्छं रजः कर्पूरं विधृतार्द्रचन्दनकुचद्वन्द्वाः कुरंगीदृशः । धारावेश्म सपाटलं वि-

चकिलः स्रग्दामचन्द्रत्विषो धातः सृष्टिरियं वृथैव तव न ग्रीष्मोऽभविष्यद्यदि ॥ २९ ॥ माकन्दद्रुममञ्जरीषु वसतिस्तत्पल्लवैर्वर्तनं सा नो गुञ्जलतावचःसु मधुना सर्वं सह प्रस्थितम् । एतत्तिष्ठतु दुःश्रवं मृदुहृदां निःस्वामिनस्तत्सखे प्रोन्मीलत्करुणो द्विजोऽयमिति हि त्वं ग्रीष्ममुष्णाहि नः ॥ ३० ॥ कानि स्थानानि दग्धान्यतिशयगहनाः सन्ति के वा प्रदेशाः किं वा शेषं जनस्य स्थितमिति पवनाः सङ्गविस्पष्टतेजाः । चण्डज्वालावलीढस्फुटिततनुलताग्रन्थिमुक्ताट्टहासो दावाग्निः शुष्कवृक्षे शिखरिणि गहनेऽधिष्ठितः पश्यतीव ॥ ३१ ॥ बाले बालेयमुच्चैर्न भवति गगनव्यापिनी नीरदानां किं त्वां पक्षान्तवातैर्मलिनयसि सुधावक्त्रमश्रुप्रवाहैः । एषा प्रोद्वृत्तमत्तद्विपकटकषणक्षुण्णविन्ध्योपलानां दावाग्नेः संप्रवृद्धा मलिनयति दिशां मण्डलं धूमलेखा ॥ ३२ ॥ स्फीतं शीतं गतं क क शिशिरकिरणाः क्वास्ति हेमन्तमासः क्वैते पानीयपूर्णा मलिनजलधराः क्वाद्य विद्युत्प्रमोदः । इत्युच्चैर्जल्पमानैरिव मुखरमुखैर्भिल्लिदूतैरुपेतो वातौघश्चागतोऽसौ प्रकटितविजयस्तम्भचिह्नैर्निदाघः ॥ ३३ ॥ मध्याह्नः ॥ एष सूर्यांशुसंतप्तो मृगः कुतनुमाश्रितः । साधुर्भाग्यपरिक्षीणो नीचं प्राप्येव सीदति ॥ ३४ ॥ मध्याह्ने नूनमापोऽपि तिग्मतापोपशान्तये । दधुः कमलिनीपत्रमातपत्रमिवोपरि ॥ ३५ ॥ दुःसहसंतापभयात्संप्रति मध्यस्थिते दिवसनाथे । छायामिव वाञ्छन्ती छायापि गता तरुतलानि ॥ ३६ ॥ रवेर्मयूखैरपि तापितो भृशं विदह्यमानः पथि तप्तपांसुभिः । अवाक्फणो जिह्मगतिः श्वसन्मुहुः फणी मयूरस्य तले निषीदति ॥ ३७ ॥ अस्मद्रिपूणामनिलाशनानां दत्तो निवासः खलु चन्दनेन । इतीव रोषाद्व्यजनस्य वायुर्व्यशोषयच्चन्दनमङ्गसंस्थम् ॥ ३८ ॥ स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया । अतनुमानपरिग्रहया स्थितं रुचिरया चिरयापि दिनश्रिया ॥ ३९ ॥ तरुणतरणितेजः पुञ्जसंतप्तदेहः पतति जठरखड्गः पल्वले पङ्कलेहः । हरिरपि सलिलार्थी शङ्कया तस्य नीरं न पिबति न च याति क्लिश्यति प्राप्य तीरम् ॥ ४० ॥ किरति मिहिरे विष्वङ्नीचैः करानतिवामनीस्थलकमठवद्देहच्छाया जनस्य विचेष्टते । गजपतिमुखोद्गीर्णैराप्यैरथ त्रसरेणुभिः शिशिरमधुरामेणः कच्छस्थलीमाधिशेरते ॥ ४१ ॥ भानोः पादैर्दहनपरुषैर्दह्यमानान्तराणामुत्क्रामन्तः किल विटपिनीप्राणपीडा इवामी । गाढोदन्याकुलितमनसो भिन्नचञ्चूपुटान्ताः कोकूयन्ते विहगशिशवः कोटराणां मुखेषु ॥ ४२ ॥ वहद्वहलमारुतप्रसरदग्निखण्डैरिव स्फुरद्द्युमणिमण्डलद्युतिवितानकैस्तापिताः । विसारि वपुरात्मनः सपदि वासरश्रीरियं चलन्मरुमरीचिकासिचयपल्लवेनावृणोति ॥ ४३ ॥ विशन्तीनां स्नातुं जघनपरिवेषैर्मृगदृशां यदम्भः संप्राप्तं प्रमदवनवाप्यास्तटभुवम् । गभीरो यन्नाभीकुहरपरिणाहाध्वनि रसत्कुहुंकारस्फारं रचयति निनादं नयति च ॥ ४४ ॥ धत्ते पद्मलतादलेऽप्सुरुपरि स्वं कर्णतालं द्विपः शष्पस्तम्बरसान्नियच्छति शिखी मध्येशिखण्डं शिरः ।

मिथ्या लेढि मृणालकोटिरभसा दंष्ट्राङ्कुरं शूकरो मध्याह्ने महिषश्च वाञ्छति निजच्छायामहाकर्दमम् ॥ ४५ ॥ सर्पत्सारिणि वारिशीतिलतले विन्यस्तपुष्पोत्करे नीरन्ध्रे कदलीवनेऽगुरुदलच्छायाहतार्कत्विषि । कर्पूरागरुपङ्कपिच्छलघनोत्तुङ्गस्तनालिङ्गिभिः कान्ताकेलिरतैरहो सुकृतिभिर्मध्यंदिनं नीयते ॥ ४६ ॥ उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपलज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः । भौमोष्मप्लवमानसूर्यकिरणाः क्रूरप्रकाशा दशामायुः कर्म समापयन्ति धिगमूर्मध्याह्नशून्या दिशः ॥ ४७ ॥ मध्याह्ने हरितो हुताशनमुचः कामोऽपि वामभ्रुवां पाटीरद्रवचर्चितां स्तनतटीमासाद्य निद्रायते । एणाः केसरिणोऽपि केसरसटोपान्तश्रियाः शेरते छायामङ्गगतां न मुञ्चति तरुर्वोढा नवोढामिव ॥ ४८ ॥ मध्याह्ने तलतालवृन्तमनिलः सर्वात्मना सेवते वारि स्वेदमिषेण शीतलवधूवक्षोजमालम्बते । निद्रा नेत्रमुपैति पक्ष्मयुगलच्छायाश्रिता दैविकी पान्थानामथ पादयोर्निपतति छायापि या यान्त्विति ॥ ४९ ॥ काश्मर्याः कृतमालमुद्गतदलं कोयष्टिकष्टीकते तीराश्मन्तकशिम्बिचुम्बितमुखा धावन्त्यपः पूर्णिकाः । दात्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थितं वीरुन्नीडकपोतकूजितमनुक्रन्दन्त्यधः कुक्कुटाः ॥ ५० ॥ स्वे स्वे कर्मणि संनियोज्य सुहृदो भूमीसुरान्[1]मन्त्रिणश्चक्रं निर्भयमारचय्य भगवान्संप्राप्तरागोदयः । स्वालोकक्षणकौन्दिशीकमधुनोत्खातुं[2] विचिन्वन्निव ध्वान्तं क्वापि निलीनमम्बरमणि[3]र्व्योमाग्रमारोहति ॥ ५१ ॥ छाया संश्रयते तलं विटपिनां श्रान्तेव पान्थैः समं मूलं याति सरो जलस्य जडता ग्लानेव मीनैः सह । आचामत्यहिमांशु[4]दीधितिरपस्तप्तेव लोकैः समं निद्रा गर्भगृहं सह प्रविशति क्लान्तेव कान्ताजनैः ॥ ५२ ॥ उष्णालुः[5] शिशिरे निषीदति तरोर्मूलालवाले शिखी[6] निर्भिद्योपरिकर्णिकारकुसुमान्याशेरते षट्पदाः[7] । तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते क्रीडावेश्मनिवेशिपञ्जरशुकः क्लान्तो जलं याचते ॥ ५३ ॥ स्कन्धासिन्धुरयूथ[8]गण्डकषणव्यासक्तदानोदकान्[9]सेवन्ते मधुपा[10] महीरुहशिरः पुष्पाणि हित्वा भृशम् । लीयन्ते वलभीकुलायकुहरे[11] निष्पन्दमेते[12] खगा जिह्वालीढवधूमुखो मृगगणश्छायासु विश्राम्यति ॥ ५४ ॥ उत्तप्तोऽयमुरंगमः शिखितलच्छायां समालम्बते वैरं साहजिकं विहाय च शिखी मूलं तरोर्गच्छति । याचन्ते च जलं निकुञ्जभवने तृष्णातुराः सारिकास्तप्ते वारिणि पङ्कजानि मधुपास्त्यक्त्वा श्रयन्ते लताः ॥ ५५ ॥ अङ्गं चन्दनपाण्डुपल्लवमृदुस्ताम्बूलताम्राधरो धारायन्त्रजलाभिषेककलुषे धौताञ्जने लोचने । अन्तः पुष्पसुगन्धिरार्द्रकबरी सर्वाङ्गलग्नाम्बरं रामाणां रमणीयतां विदधति ग्रीष्मापराह्णागमे ॥ ५६ ॥ अस्वाध्यायः पिकानां मदनमखसमारम्भणस्याधिमासो निद्राया जन्मलग्नं कि-

१ द्विजान्. २ भयद्रुतम्. ३ गुप्तम्. ४ सूर्यः. ५ पिबति. ६ उष्णक्लान्त. ७ मयूरः. ८ भ्रमराः. ९ गजसमूहस्य. १० लिप्तमदोदकान्. ११ भृङ्गाः. १२ नीडरन्ध्रे. १३ निश्चलम्.

मपि मधुलिहां कोऽपि दुर्भिक्षकालः । विष्टिर्यात्रोत्सुकानां मलयजमरुतां पान्थकान्ताकृतान्तः प्रालेयोन्मूलमूलं समजनि समयः कश्चिदौत्पातिकोऽयम् ॥ ५७ ॥ पत्रच्छायासु हंसा मुकुलितनयना दीर्घिका पद्मिनीनां सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि । बिन्दूत्क्षेपात्पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं सर्वैरुस्रैः समग्रस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः ॥ ५८ ॥ जलकेलिः ॥ निजप्रियमुखभ्रान्त्या हर्षेणाचुम्बदम्बुजम् । दष्टाधरा तु भृङ्गेण सीत्कारमकरोन्मृदु ॥ ५९ ॥ ललितमुरसा तरन्ती तरलतरङ्गौघचालितनितम्बा । विपरीतरतासक्ता किमदृश्यत सरसि या सख्या ॥ ६० ॥ एता गुरुश्रोणिपयोधरत्वादात्मानमुद्वोढुमशक्नुवत्यः । गाढाङ्गदैर्बाहुभिरप्सु बालाः क्लेशोत्तरं रागवशात्प्लवन्ते ॥ ६१ ॥ अमी शिरीषप्रसवावतंसाः प्रभ्रंशिनो वारिविहारिणीनाम् । पारिप्लवाः स्रोतसि निम्नगायाः शैवाललोलांश्छलयन्ति मीनान् ॥ ६२ ॥ आसां जलास्फालनतत्पराणां मुक्ताफलस्पर्धिषु शीकरेषु । पयोधरोत्सर्पिषु शीर्यमाणः संलक्ष्यते न च्छिदुरोऽपि हारः ॥ ६३ ॥ आवर्तशोभा नतनाभिकान्तेर्भङ्ग्यो भ्रुवां द्वन्द्वचराः स्तनानाम् । जातानि रूपावयवोपमानान्यदूरवर्तीनि विलासिनीनाम् ॥ ६४ ॥ तीरस्थलीबर्हिभिरुत्कलापैः प्रस्निग्धकेकैरभिनन्द्यमानम् । श्रोत्रेषु संमूर्छति रक्तमासां गीतानुगं वारिमृदङ्गवाद्यम् ॥ ६५ ॥ संदष्टवस्त्रेष्वबलानितम्बेष्विन्दुप्रकाशान्तरितोडुतुल्याः । अमी जलापूरितसूत्रमार्गा मौनं भजन्ते रशनाकलापाः ॥ ६६ ॥ एताः करोत्पीडितवारिधारा दर्पात्सखीभिर्वदनेषु सिक्ताः । वक्रेतराग्रैरलकैस्तरुण्यश्चूर्णारुणान्वारिलवान्वमन्ति ॥ ६७ ॥ उद्बन्धकेशश्च्युतपत्रलेखो विश्लेषिमुक्ताफलपत्रवेष्टः । मनोज्ञ एव प्रमदामुखानामम्भोविहाराकुलितोऽपि वेषः ॥ ६८ ॥ उन्मृष्टपत्राः कलितालकान्ताः कण्ठेषु लग्ना जघनं स्पृशन्तः । स्तनस्थलेष्वाहतिमादधाना गता वधूनां प्रियतां जलौघाः ॥ ६९ ॥ हृतोऽङ्गरागस्तिलकं विमृष्टं लब्धान्तरैरेभिरतीव मत्वा । सुसंहितेनेति तदा जनानामादायि मध्येन कुचद्वयेन ॥ ७० ॥ निरीक्ष्य वेणीप्रतिबिम्बमेणीदृशो भुजंगभ्रममावहन्त्यः । पतद्दुकूलं धुतबाहुमूलं झम्पाप्रकम्पाकुलिताः प्रचेलुः ॥ ७१ ॥ अथ स्फुरन्मीनविधूतपङ्कजा विपङ्कतीरस्खलितोर्मिसंहतिः । पयोऽवगाढुं कलहंसनादिनी समाजुहावेव वधूः सुरापगा ॥ ७२ ॥ प्रशान्तघर्माभिभवः शनैर्विवान्विलासिनीभ्यः परिमृष्टपङ्कजः । ददौ भुजालम्बमिवात्तशीकरस्तरङ्गमालान्तरगोचरोऽनिलः ॥ ७३ ॥ गतैः सहावैः कलहंसविक्रमं कलत्रभारैः पुलिनं नितम्बिभिः । मुखैः सरोजानि च दीर्घलोचनैः सुरस्त्रियः साम्यगुणान्निरासिरे ॥ ७४ ॥ विभिन्नपर्यन्तगमीनपङ्क्तयः पुरो विगाढा सखिभिर्मरुत्वतः । कथंचिदापः सुरसुन्दरीजनैः सभीतिभिस्तत्प्रथमं प्रपेदिरे ॥ ७५ ॥ विगाढमात्रे रमणीभिरम्भसि प्रयत्नसंवाहितपीवरोरुभिः । विभिद्यमाना विससार सारसा-

१ वापी. २ किरणैः. ३ सूर्यः.

नुदस्य तीरेषु तरङ्गसंहतिः ॥ ७६ ॥ शिलाघनैर्नाकसदामुरःस्थलैर्बृहन्निवेशैश्च वधूपयोधरैः । तटाभिनीतेन विभिन्नवीचिना रुषेव भेजे कलुषत्वमम्भसा ॥ ७७ ॥ विधूतकेशाः परिलोलितस्रजः सुराङ्गनानां प्रविलुप्तचन्दनाः । अतिप्रसङ्गाद्विहितागसो मुहुः प्रकम्पमीयुः सभया इवोर्मयः ॥ ७८ ॥ विपक्षचित्तोन्मथना नखव्रणास्तिरोहिता विभ्रममण्डनेन ये । हृतस्य शेषानिव कुङ्कुमस्य तान्विकत्थनीयान्दधुरन्यथा स्त्रियः ॥ ७९ ॥ प्रियेण संग्रथ्य विपक्षसंनिधावुपाहितां वक्षसि पीवरस्तने । स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥ ८० ॥ असंशयं न्यस्तमुपान्तरक्ततां यदेव रोद्धुं रमणीभिरञ्जनम् । हृतेऽपि तस्मिन्सलिलेन शुक्लतां निरास रागो नयनेषु न श्रियम् ॥ ८१ ॥ द्युतिं वहन्तो वनितावतंसका हृताः प्रलोभादिव वेगिभिर्जलैः । उपप्लुतास्तत्क्षणशोचनीयतां च्युताधिकाराः सचिवा इवाययुः ॥ ८२ ॥ विपन्नलेखा निरलक्तकाधरा निरञ्जनाक्षीरपि बिभ्रतीः श्रियम् । निरीक्ष्य रामा बुबुधे नभश्चरैरलंकृतं तद्वपुषैव मण्डनम् ॥ ८३ ॥ तथा न पूर्वं कृतभूषणादरः प्रियानुरागेण विलासिनीजनः । यथा जलार्द्रो नखमण्डनश्रिया ददाह दृष्टीश्च विपक्षयोषिताम् ॥ ८४ ॥ शुभाननाः साम्बुरुहेषु भीरवो विलोलहाराश्चलफेनपङ्क्तिषु । नितान्तगौर्यो हृतकुङ्कुमेष्वलं न लेभिरे ताः परभागमूर्मिषु ॥ ८५ ॥ ह्रदाम्भसि व्यस्तवधूकराहते रवं मृदङ्गध्वनिधीरमुज्झति । मुहुस्तनैस्तालसमं समाददे मनोरमं नृत्यमिव प्रवेपितम् ॥ ८६ ॥ श्रिया हसद्भिः कमलानि सस्मितैरलंकृताम्बुः प्रतिमागतैर्मुखैः । कृतानुकूल्या सुरराजयोषितां प्रसादसाफल्यमवाप जाह्नवी ॥ ८७ ॥ परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः । उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥ ८८ ॥ भयादिवाश्लिष्य झषाहतेऽम्भसि प्रियं मुदानन्दयति स्म मानिनी । अकृत्रिमप्रेमरसाहितैर्मनो हरन्ति रामाः कृतकैरपीहितैः ॥ ८९ ॥ तिरोहितान्तानि नितान्तमाकुलैरपां विगाहादलकैः प्रसारिभिः । ययुर्वधूनां वदनानि तुल्यतां द्विरेफवृन्दान्तरितैः सरोरुहैः ॥ ९० ॥ करौ धुनाना नवपल्लवाकृती पयस्यगाधे किल जातसंभ्रमा । सखीषु निर्वाच्यमधार्ष्ट्यदूषितं प्रियाङ्गसंश्लेषमवाप मानिनी ॥ ९१ ॥ प्रियैः सलीलं करवारिवारितः प्रवृद्धनिःश्वासविकम्पितस्तनः । सविभ्रमाधूतकराग्रपल्लवो यथार्थतामाप विलासिनीजनः ॥ ९२ ॥ उदस्य धैर्यं दयितेन सादरं प्रसादितायाः करवारिवारितम् । मुखं निमीलन्नयनं, नतभ्रुवः श्रियं सपत्नीवदनादिवाददे ॥ ९३ ॥ विहस्य पाणौ विधृते धृताम्भसि प्रियेण वध्वा मदनार्द्रचेतसः । सखीव काञ्ची पयसा घनीकृता बभार वीतोच्चयबन्धमंशुकम् ॥ ९४ ॥ निरञ्जने साचिविलोकितं दृशावयावकं वेपथुरोष्ठपल्लवम् । नतभ्रुवो मण्डयति स्म विग्रहे बलिक्रिया चातिलकं तदास्पदम् ॥ ९५ ॥ निमीलदाकेकरलोलचक्षुषां प्रियोपकण्ठं कृतगात्रवेपथुः । निमज्जतीनां श्वसितोद्धतस्तनः

श्रमो नु तासां मदनो न पप्रथे ॥ ९६ ॥ प्रियेण सिक्ता चरमं विपक्षतश्चुकोप काचिन्न तुतोष सान्त्वनैः । जनस्य रूढप्रणयस्य चेतसः किमप्यहर्षोऽनुनये भृशागसे ॥ ९७॥ आत्तमात्रमधिकान्तमीक्षितुं कातरा शफरशङ्किनी जहौ । अञ्जलौ जलमधीरलोचना लोचनप्रति शरीरलाञ्छितम् ॥ ९८ ॥ निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः । तद्भवैः कुहुरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम् ॥ ९९॥ संक्षोभं पयसि पुनर्महेभकुम्भश्रीभाजा कुचयुगलेन नीयमाने । विश्लेषं युगमगमद्रथाङ्गनाम्नोरुद्वृत्तः क इव सुखावहः परेषाम् ॥ १०० ॥ किं तावत्सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते तरुण्याः । संशय्य क्षणमिति निश्चिकाय कश्चिद्विब्बोकैर्बकसहवासिनां परोक्षैः ॥ १०१ ॥ योग्यस्य त्रिनयनलोचनानलार्चिर्निर्दग्धस्मरपृतनाधिराजलक्ष्म्याः । कान्तायाः करकलशोद्यतैः पयोभिः वक्त्रेन्दोरकृत महाभिषेकमेकः ॥ १०२ ॥ पर्यच्छे सरसि हृतेंऽशुके पयोभिर्लोलाक्षे सुरतगुरावपत्रपिष्णोः । सुश्रोण्या दलवसनेन वीचिहस्तन्यस्तेन द्रुतमकृताङ्गिनी सखीत्वम् ॥ १०३ ॥ नारीभिर्गुरुजघनस्थलाहतानामास्यश्रीविजितविकाशिवारिजानाम् । लोलत्वादपहरतां तदङ्गरागं संजज्ञे स कलुष आशयो जलानाम् ॥ १०४ ॥ सौगन्ध्यं दधदपि काममङ्गनानां दूरत्वाद्गतगृहमाननोपमानम् । नेदीयोजितमिति लज्जयेव तासामालोले पयसि महोत्पल ममज्ज ॥ १०५ ॥ प्रभ्रष्टैः सरभसमम्भसोऽवगाहक्रीडाभिर्विदलितयूथिकापिशङ्गैः । आकल्पैः सरसि हिरण्मयैर्वधूनामौर्वाग्निद्युतिशकलैरिव व्यराजि ॥ १०६ ॥ आस्माकी युवतिदृशामसौ तनोति च्छायेव श्रियमनपायिनीं किमेभिः । मत्वैवं स्वगुणपिधानसाभ्यसूयैः पानीयैरिति विदधाविरेऽञ्जनानि ॥ १०७ ॥ निर्धौते सति हरिचन्दने जलौघैरापाण्डोर्गतपरभागयाङ्गनायाः । अह्नाय स्तनकलशद्वयादुपेये विच्छेदः सहृदयमेव हारयष्ट्या ॥ १०८ ॥ अन्यूनं गुणममृतस्य धारयन्ती संफुल्लस्फुरितसरोरुहावतंसा । प्रेयोभिः सह सरसी निषेव्यमाणा रक्तत्वं व्यधित वधूदृशां सुरेव ॥ १०९ ॥ स्नान्तीना वृहदमलोदविन्दुचित्रौ रेजाते रुचिरदृशामुरोजकुम्भौ । हाराणां मणिभिरुपाश्रितौ समन्तादुत्सूत्रैर्गुणवदुपघ्नकाम्ययेव ॥ ११० ॥ आरूढः पतित इति स्वसंभवोऽपि स्वच्छानां परिहरणीयतामुपैति । कर्णेभ्यश्च्युतमसितोत्पलं वधूनां वीचीभिस्तटमनु यन्निरासुरापः ॥ १११ ॥ दन्तानामधरमयावकं पदानि प्रत्यग्रास्तनुमविलेपना नखाङ्काः । आनिन्युः श्रियमवितीयमङ्गनानां शोभायै विपदि सदाश्रिता भवन्ति ॥ ११२ ॥ कस्याश्चिन्मुखमनु धौतपत्त्रलेखं व्यातेने सलिलभरावलम्बिनीभिः । किञ्जल्कव्यतिकरपिञ्जरान्तराभिश्चित्रश्रीरलमलकाग्रवल्लरीभिः ॥ ११३ ॥ अविरलमिदमम्भः स्वेच्छयोच्छ्वासयन्त्या विकचकमलशोकोत्तानहस्तद्वयेन । परिकलित इवार्धः कामबाणातिथिभ्यः सलिलमिव वितीर्णं बाललीलासुखाय ॥ ११४ ॥ जलविलुलितवस्त्रव्यग्रनिम्नोन्नताभिः परिगततटभू-

मिस्नानमात्रोत्थिताभिः । कनकरुचिरकुम्भश्रीमदाभोगतुङ्गस्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः ॥ ११५ ॥ एतस्याः करिकुम्भसंनिभकुचप्राग्भारपृष्ठे लुठद्धुञ्जागर्भगजेन्द्रमौक्तिकसरश्रेणीमनोहारिणि । दूरादेत्य तरङ्ग एष पतितो वेगाद्विलीनः कथं को वान्योऽपि विलीयते न सरसः सीमन्तिनीसंगमे ॥ ११६ ॥ **प्रपापालिका** ॥ यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरहाङ्गुलिः । तथा प्रपापालिकापि धारां वितनुते तनुम् ॥ ११७॥ अङ्गुल्यग्रनिरोधतस्तनुतरां धारामियं कुर्वती कर्कर्या नितरां पयोनिपुणिका दातुं प्रपापालिका। विश्लिष्टाङ्गुलिना करेण दशनापीडं शनैः पान्थ हे निस्पन्दोऽर्ध्वविलोचनस्त्वमपि हा जानासि पातुं पयः ॥ ११८ ॥ दूरादेव कृतोऽञ्जलिर्न तु पुनः पानीयपानोचितो रूपालोकनकौतुकात्प्रचलितो मूर्धा न शान्त्या तृषः । रोमाञ्चोऽपि निरन्तरं प्रकटितः प्रीत्या न शैत्यादयमक्षुण्णो विधिरध्वगेन विहितो वीक्ष्य प्रपापालिकाम् ॥ ११९ ॥ गन्तुं सत्वरमीहसे यदि पुनर्व्यालोलवेणीलतां द्रष्टुं वा स्वकुटुम्बिनीमनुदिनं कान्तां समुत्कण्ठसे । तत्तृष्यन्नपि मुञ्च मन्थरवलन्नेत्राम्बुरुद्धाध्वगामेतां दूरतरावहे परिरट भ्रातः प्रपापालिकाम् ॥ १२० ॥ मध्याह्नेऽतिखरे निदाघसमये तापोऽध्वनो वर्तते शीते कुञ्जतटे विचित्रविटपे भो पान्थ विश्राम्यताम् । एकाकी च भवानहं च तरुणी शून्या प्रपा वर्तते लज्जेऽहं ब्रुवती स्वयं च चतुरो जानासि कालोचितम् ॥ १२१ ॥ कस्येयं तरुणि प्रेपा पथिक नः किं पीयतेऽस्यां पैयो धेनूनामथ माहिषं पथिक रे वारः कथं मङ्गलः । सोमो वाथ शनैश्चरोऽमृतमिदं तत्तेऽधरे दृश्यते भो भोः पान्थ विलाससुन्दर सखे यद्रोचते तत्पिब ॥१२२॥ मध्याह्नं गमय त्यज श्रमजलं स्थित्वा पयः पीयतां मा शून्येति विमुञ्च पान्थ विवशः शीतः प्रपामण्डपः । तामेव स्मर घस्मरस्मरशरत्रस्तां निजप्रेयसीं त्वच्चित्तं तु न रञ्जयन्ति पथिक प्रायः प्रपापालिकाः ॥ १२३ ॥ **ग्रीष्मवायवः** ॥ आध्मातोद्धतदाववह्निसुहृदः कीर्णोष्णरेणूत्कराः संतप्ताध्वगमुक्तखेदविषमश्वासोष्णसंवादिनः । तृष्णार्ताजगराय वास्य कुहरे क्षिप्रप्रवेशोत्कटा भ्रूभङ्गैरिव तर्जयन्ति पवना दग्धस्थलीकज्जलैः ॥ १२४ ॥ कारञ्जीं कुञ्जयन्तो निजजठररवव्यञ्जिता वीरकोशीरुत्पाताकृष्णलानां पृथुसुषिरगता शिम्बिकान्पाटयन्तः । झिल्लीकाझल्लरीणां बधिरितककुभं रक्तता खे क्षिपन्तः सिञ्जानाश्वत्थपत्रप्रकरझणझणाराविणो वान्ति वाताः ॥ १२५ ॥ व्योमव्यालोलमुक्ताफलधवलगलद्विन्दुसंदोहगर्भानम्भोदान्भर्त्सयित्वा दिशि दिशि भुवने भीतिमुद्भावयन्तः । एते रक्षोमृगाक्षीगतललितमदक्षोभसंरम्भरूक्षा वाताः पातालकुक्षिस्थितमपि सलिलं तत्क्षणाद्भक्षयन्ति ॥ १२६ ॥ **ग्रीष्मपथिकाः** ॥ सर्वाशारुधि दग्धवीरुधि सदासारङ्गबद्धक्रुधि क्षामक्ष्मारुहि

१ सूक्ष्माम्. २ पानीयशालिका. ३ जलम्, (पक्षे) क्षीरम्. ४ जलानि; (पक्षे) सोमादिवासराः. ५ उदकम्; (पक्षे) पीयूषम्.

मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि । शुष्यच्छ्रोतसि तप्तभूमिरजसि ज्वालोपमाणार्णसि ग्रीष्मे मासि ततार्कतेजसि कथं पान्थ व्रजञ्जीवसि ॥ १२७ ॥ वाताकीर्णविशीर्णवारिणि तृणश्रेणीझणत्कारिणि ग्रीष्मे सोष्मणि चण्डसूर्यकिरणप्रक्काथ्यमानाम्भसि । चित्तारोपितकामिनीमुखशशिज्योत्स्नाहतक्लान्तयो मध्याह्नेऽपि सुखं प्रयान्ति पथिकाः स्वं देशमुत्कण्ठिताः ॥ १२८ ॥ ग्रीष्मोष्णांस्तेजशुष्यत्पयसि ककुभयोः क्लान्तपाठीनभाजि प्रायः पङ्कैकमात्रं गतवति सरसि स्वल्पतोये लुठित्वा । कृत्वा कृत्वा जलार्द्रीकृतमुरसिजरत्कर्पटार्धप्रपायां तोयं जग्ध्वापि पान्थः पथि वहति हहाहेति कुर्वन्पिपासः ॥ १२९ ॥ भ्राम्यच्चीत्कारचक्रभ्रमपरिततघटीयन्त्रचक्रप्रयुक्तश्रोतः पूर्णः प्रणाली पथि शरणिशरासारिसात्कारि वारि । कोऽयं पान्थः प्रकामं रितमणिमुसलाकारविस्फारधार विक्षुण्णक्षुण्णमुक्ताकणनिकररिभासारपातं पिबन्ति ॥ १३० ॥

---

## वर्षावर्णनम् ।

चलद्बलाका दशनाभिरामः परिस्रवद्वारिमदाम्बुधारः । आहन्यमानस्तडिदङ्कुशेन स्मरस्य दध्वान वनद्विपेन्द्रः ॥ १ ॥ या कामिनी सा यदि मानिनी स्यात्स्मरस्य राज्ञो ह्यपराधिनी स्यात् । इतीव दण्डैः किमु ताड्यतेऽसौ कादम्बिनी कामनृपस्य ढक्का ॥ २ ॥ चन्द्रबिम्बरविबिम्बतारकामण्डलानि घनमेघडम्बरैः । भक्षितानि जलदोदरेषु तद्रोदनध्वनिरिवैष गर्जितम् ॥३॥ निद्रितस्य बत शम्बरद्विषो जागराय किमवारिवाहकः । ऊर्जितं दधदतीव गर्जितं संभ्रमन्नभसि संभ्रमाद्ययौ ॥ ४ ॥ वर्षासमयस्वभावाख्यानम् ॥ शीतलादिव संत्रस्तं प्रावृषेण्यान्नभस्वनः । नभो बभार नीरन्ध्रं जीमूतकुलकम्बलम् ॥५॥ स्फुरन्तः पिङ्गलाभासो धरण्यामिन्द्रगोपकाः । सरक्तवासःपान्थस्त्री जीवा इव चकाशिरे ॥ ६ ॥ अपीतक्षीबकादम्बमसंसृष्टामलाम्बरम् । अप्रसादितसूक्ष्माम्बु जगदासीन्मनोरमम् ॥ ७ ॥ पतत्यविरतं वारि नृत्यन्ति च कलापिनः । अथ कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥ ८ ॥ उत्कण्ठयति मेघानां माला वर्गं कलापिनाम् । यूनां चोत्कण्ठयत्यद्य मानसं मकरध्वजः ॥ ९ ॥ अस्थिरमनेकरागं गुणरहितं नित्यदुःप्रापम् । प्रावृषि सुरेन्द्रचापं विभाव्यते युवतिचित्तमिव ॥ १० ॥ नन्दयति कस्य न मनः सबलैर्घनधूलिधूसरच्छायैः । आक्रम्य पुत्रकैरिव मलिनीकृतमम्बरं जलदैः ॥ ११ ॥ आयाता सखि वर्षा वर्षादपि दीर्घतरा दिवसाः । दिशि दिशि नीरतरङ्गो नीरतरङ्गो ममापि हृदयेशः ॥ १२ ॥ गर्जति वारिदपटले वर्षति नयनारविन्दमबलायाः । भुजवल्लिमूलसेके विरहलतापल्लवं सूते ॥१३॥ अतिशयितकदम्बा मोदकदम्बानिलो वहति । वियदम्बुद मे दुरितं मेदुरितं पश्य नागतो

---

१ मत्त. २ ऊर्ध्वं कण्ठो यस्य तादृशं करोति. ३ मयूराणाम्.

दयितः ॥ १४ ॥ शमयति जलधरधारा चातकयूनां तृषं चिरोपनताम् । क्षपयति च वधूलोचनजलधारा कामिनां प्रवासरुचिम् ॥ १५ ॥ वर्षासु जाता नवयौवनश्रीराशावधूप्रौढपयोधराभूत् । पुष्पोद्गमोऽजायत मालतीनां बभूवुरस्पृश्यतमास्तटिन्यः ॥ १६ ॥ वसन्तविश्लेषमपारयन्त्या भुवो निदाघस्मरतापशान्त्यै । आशावयस्याभिरुदाह्रियन्ते पयोदनीलोत्पलपल्लवानि ॥ १७ ॥ घनोद्यमे गाढतमेऽन्धकारे न कोऽपि निर्णेतुमहः शशाक । स्पृशन्मुहुः किंतु करेण नाभीसरोजमाभीरकुलाधिनाथः ॥ १८ ॥ कामेन कामं प्रहिता जवेन प्रावृट् चचाल त्रिजगद्विजेतुम् । किं चन्द्रबिम्बमधिभक्षयन्ती संधारयन्ती हरितः शुभाय ॥ १९ ॥ अथोपगूढे शरदा शशाङ्के प्रावृड्ययौ शान्ततडित्कटाक्षा । कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम् ॥ २० ॥ निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः । धारानिपातैः सह किं नु वान्तश्चन्द्रोऽयमित्यार्ततरं ररास[1] ॥ २१ ॥ सजलजलधरं नभो विरेजे विवृतिमियाय रुचिस्तडिल्लतानाम् । व्यवहितरतिविग्रहैर्वितेने जलगुरुभिः स्तनितैर्दिगन्तरेषु ॥ २२ ॥ परिसुरपतिसूनुधाम सद्यः समुपदधन्मुकुलानि मालतीनाम् । विरलमपजहार बद्धबिन्दुः सरजसतामवनेरपां निपातः ॥२३॥ प्रतिदिशमभिगच्छताभिमृष्टः ककुभविकाससुगन्धिनानिलेन । नव इव विबभौ सचित्तजन्मा गतधृतिमाकुलितश्च जीवलोकः ॥ २४ ॥ व्यथितमपि भृशं मनो हरन्ती परिणतजम्बुफलोपभोगहृष्टा । परभृतयुवतिः स्वनं वितेने नवनवयोजितकण्ठरागरम्यम् ॥ २५ ॥ अभिभवति मनः कदम्बवायौ मदमधुरे च शिखण्डिनां निनादे । जन इव न धृतेश्चचाल जिष्णुर्न हि महतां सुकरः समाधिभङ्गः ॥ २६ ॥ धृतबिसवलयावलिर्वलन्ती कुमुदवनैकदुकूलमात्तबाणा । शरदमलतले सरोजपाणौ घनसमयेन वधूरिवाललम्बे ॥ २७ ॥ समदशिखिरुतानि हंसनादैः कुमुदवनानि कदम्बपुष्पवृष्ट्या । श्रियमतिशयिनीं समेत्य जग्मुर्गुणमहतां महते गुणाय योगः ॥ २८ ॥ सरजसमपहाय केतकीनां प्रसवमुपान्तिकनीपरेणुकीर्णम् । प्रियमधुरसनानि षट्पदाली मलिनयति स्म विनीलबन्धनानि ॥ २९ ॥ मुकुलितमतिशय्य बन्धुजीवं धृतजलबिन्दुषु शाद्वलस्थलीषु । अविरलवपुषः सुरेन्द्रगोपा विकचपलाशचयश्रियं समीयुः ॥ ३० ॥ रटतु जलधरः पतन्तु धाराः स्फुरतु तडिन्मरुतोऽपि वान्तु वाताः । इयमुरसि महौषधीव कान्ता निखिलभयप्रतिपातिनी स्थिता मे ॥३१॥ स्फुरदधीरतडिन्नयना मुहुः प्रियमिवागलितोरुपयोधरा । जलधरावलिरप्रतिपालितस्वसमयासमयाज्जगतीधरम् ॥ ३२ ॥ गजकदम्बकमेचकमुच्चकैर्नभसि वीक्ष्य नवाम्बुदमम्बरे । अभिससार न वल्लभमङ्गना न चकमे च कमेकरसं रहः ॥ ३३ ॥ अनुययौ विविधोपलकुण्डलद्युतिवितानकसंवलितांशुकम् । धृतधनुर्वलयस्य पयोमुचः शबलिता बलिमानमुषो

---

१ आक्रन्दन कृतवान्.

वपुः ॥ ३४ ॥ द्रुतसमीरचलैः क्षणलक्षितव्यवहितां विटपैरिव मञ्जरी । नवतमालनिभस्य नभस्तरोरचिररोचिररोचत वारिदैः ॥ ३५ ॥ पटलमम्बुमुचां पथिकाङ्गना सपदि जीवितसंशयमेष्यती । सनयनाम्बुसखीजनसभ्रमाद्विधुरवन्धुरवन्धुरमैक्षत ॥ ३६ ॥ प्रवसतः सुतरामुदकम्पयद्विदलकन्दलकम्पनलालितः । नमयति स्म वनानि मनस्विनीजनमनो नमनो घनमारुतः ॥ ३७ ॥ जलदपङ्क्तिरनर्तयदुन्मदं कलविलापि कलापिकदम्बकम् । कृतसमार्जनमर्दलमण्डलध्वनिजया निजया स्वनसंपदा ॥ ३८ ॥ नवकदम्बरजोरुणिताम्बरैरधिपुरंध्रिशिलीन्ध्रसुगन्धिभिः । मनसि रागवतामनुरागिता नवनवा वनवायुभिरादधे ॥ ३९ ॥ शमिततापकपोढमहीरजः प्रथमबिन्दुभिरम्बुमुचोऽम्भसाम् । प्रविरलैरचलाङ्गनमङ्गनाजनसुगं न सुगन्धि न चक्रिरे ॥ ४० ॥ द्विरददन्तवलक्षमलक्ष्यत स्फुरितभृङ्गमृगच्छवि केतकम् । घनघनौघविघट्टनया दिवः कृशशिखं शशिखण्डमिव च्युतम् ॥ ४१ ॥ दलितमौक्तिकचूर्णविपाण्डवः स्फुरितनिर्झरशीकरचारवः । कुटजपुष्पपरागकणाः स्फुटं विदधिरे दधिरेणुविडम्बनाम् ॥ ४२ ॥ नवपयःकणकोमलमालतीकुसुमसंततिसंततसङ्गिभिः । प्रचलितोडुनिभैः परिपाण्डिमा शुभरजोभरजोऽलिभिराददे ॥ ४३ ॥ निजरजः पटवासमिवाकिरद्धृतपटोपमवारिमुचां दिशाम् । प्रियवियुक्तवधूजनचेतसामनवनी नवनीपवनावलिः ॥४४॥ प्रणयकोपभृतोऽपि पराङ्मुखाः सपदि वारिधरारवभीरवः । प्रणयिनः परिरब्धमभाङ्गना ववलिरे वलिरेचितमध्यमाः ॥ ४५ ॥ विगतरागगुणोऽपि जनो न कश्चलति वाति पयोदनभस्वति । अभिहितेऽलिभिरेवमिवोच्चकैरननृते ननृते नवपल्लवैः ॥ ४६ ॥ प्रौढमौक्तिकरुचः पयोमुचा बिन्दवः कुटजपुष्पबन्धवः । विद्युतां नभसि नाट्यमण्डले कुर्वते स्म कुसुमाञ्जलिश्रियम् ॥ ४७ ॥ महीमण्डलीमण्डपीभूतपाथोधरारब्धहर्षासु वर्षासु सद्यः । कदम्बे प्रसूनं प्रसूने मरन्दो मरन्दे मिलिन्दो मिलिन्दे मदोऽभूत् ॥ ४८ ॥ उन्निद्रकन्दलदलान्तरलभ्यमानगुञ्जन्मदान्धमधुपे घनमेघकाले । स्वप्नेऽपि यः प्रवसति प्रविहाय कान्तां तस्मै विषाणरहिताय नमो वृषाय ॥ ४९ ॥ घनसमयमहीभृत्पत्तनस्याम्बरस्य त्रिभुवनपतिचापं गोपुरत्वं प्रपेदे । अपि विरसवचोभिः प्राप्तपङ्काभिषेकाः कुकवय इव भेकाः खेदयन्ति स्म लोकान् ॥ ५० ॥ घनतरघनवृन्दच्छादिते व्योम्नि लोके सवितुरथ हिमांशोः संकथैव व्यरंसीत् । रजनिदिवसभेदं मन्दवाताः शशंसुः कुमुदकमलगन्धानाहरन्तः क्रमेण ॥ ५१ ॥ घनतरघनवृन्दच्छादिते व्योम्नि लोके सवितुरथ हिमांशोः संकथैव व्यरंसीत् । विरहमनुभवन्ती संगमं चापि भर्त्रा रजनिदिवसभेदं चक्रवाकी शशंस ॥५२॥ अथ नभसि निरीक्ष्य व्याप्तदिक्चक्रवालं सजलजलदजालं प्राप्तहर्षप्रकर्षः । विहितविपुलबर्हाडम्बरो नीलकण्ठो मदमृडकलकण्ठो नाट्यमङ्गीचकार ॥ ५३ ॥ अभिनवयवसश्रीशालिनि क्ष्मातलेऽस्मिन्नतिशयपरभागं भेजिरे जिष्णुगोपाः । कुवलयशयनीये मुग्धमु-

ग्धेक्षणाया प्रणय इव विमुक्ताः कामकेलिप्रसङ्गात् ॥ ५४ ॥ मलिनहुतभुग्धूमश्यामैर्दिशो मलिना घनैरविरलतृणश्यामा भूमिर्नवोद्गतकन्दलैः । सुरतसुभगो नूनं कालः स एष समागतो मरणशरणा यस्मिन्नेते भवन्ति वियोगिनः ॥ ५५ ॥ क्षपां क्षामीकृत्य प्रसभमपहृत्याम्बु सरितं प्रताप्योर्वी कृत्स्नां तरुगहनमुच्छोष्य सकलम् । क्व संप्रत्युष्णांशुर्गत इति तदन्वेषणपरां-स्तडिद्दीपा लोका दिशि दिशि चलन्तीव जलदाः ॥ ५६ ॥ विशां हाराकाराः शमितशमसारा अपि मुनेरसूचीसंचारैः कृतमदविकाराश्च शिखिनाम् । स्थिताध्वव्यापारास्तुहिनकणसारा वि-रहिणां मनःकर्णागारा किरति जलधारा जलधरः ॥ ५७ ॥ मेघाटोपैस्तनितसुभगं वीक्ष्य खं हन्ति दन्तैः कृत्वा भीतीनुपरिसदनं चामरैश्छादयित्वा । कर्पूरैस्ता मृगमदरसैर्भूमिमाल्येऽप्यशेते सैहे चर्मण्युरसि दयिताबाहुरूढः पुलिन्दः ॥ ५८ ॥ उपैति घनमण्डली नदति नीलकण्ठा-वली तडिल्लसति सर्वतो वहति केतकी मारुतः । इतोऽपि यदि नागतः प्रियतमो नु मन्येऽधुना दधाति मकरध्वजस्त्रुटितशिञ्जिनीकं धनुः ॥ ५९ ॥ दिशाधारा हाराः शमित-शमभाराः शमवतामसूचीसंचाराः कृतमदविकाराश्च शिखिनाम् । धृताध्वव्यापारास्तुहिन-कणसारा विरहिणीमनःकीर्णाङ्गाराः किरति जलधारा जलधरः ॥ ६० ॥ आकर्ण्य स्मरयौवनाद्यपटहं जीमूतधीरध्वनिं नृत्यत्केकिकुटुम्बकस्य दधतं मन्दां मृदङ्गक्रियाम् । उन्मीलन्नवनीलकन्दलदलव्याजेन रोमाञ्चितां हर्षेणेव समुत्थिता वसुमती दध्रे शिलीन्ध्र-ध्वजाम् ॥ ६१ ॥ वज्रेण त्रिजगत्पतेर्बलरिपोरच्छिन्नपक्षाः पुरा ये भीता निममज्जुरब्धि-जठरे ते लूनपक्षान्गिरीन् । आश्वास्य व्रणदुःखजां शमयितुं तेषामुदग्रव्यथामुत्तस्थुर्जलद-च्छलेन जलधेरूधोऽम्भसः पर्वताः ॥ ६२ ॥ मन्दं मुद्रितपांशवः परिपतज्झंकारिझञ्झा-मरुद्वेगध्वस्तकुटीरकाग्रनिपतच्छिद्रेषु लब्धाम्बराः । कर्मव्यग्रकुटुम्बिनीकुचतटस्वेदच्छिदः प्रावृषः प्रारम्भे निपतन्ति कन्दलदलोल्लासाः पयोबिन्दवः ॥ ६३ ॥ किंचिन्मुद्रितपांशवः शिखिकुलैरुत्कण्ठमालोकिता जीर्णावासनुदद्दरिद्रगृहिणीश्वासानिलैर्जर्जराः । एते ते निपतन्ति नूतनघनप्रावृड्भवाराम्भिणो विच्छायीकृतविप्रयुक्तवनितावक्त्रेन्दवो बिन्दवः ॥ ६४ ॥ काले नीलबलाहकेन तडिति प्रीतिप्रदे बर्हिणामाश्चर्यं कथयामि वः शृणुत भो यद्वृत्तमस्मद्गृहे । सौभाग्यव्ययशङ्कयैव शयने कान्ताप्रियाभ्यामहो माणिक्यां बत रात्रिमेव सकलं चीर्णं प्रवासिव्रतम् ॥ ६५ ॥ उत्फुल्लार्जुनसर्जवासितवहत्पौलस्त्यझञ्झानिलप्रेङ्खो-लत्स्खलितेन्द्रनीलशकलस्निग्धाम्बुदश्रेणयः । धारासिक्तवसुंधरासुरभयः प्राप्तास्त एवाधुना धर्माम्भोविगमागमव्यतिकरश्रीवाहिनो वासराः ॥ ६६ ॥ आच्छिन्ने क्षितितेजसी मनसिज-व्यापारमेयं मनः स्वात्मा च द्वयमेतदस्ति दशमं द्रव्यं परेषां तमः । कालाकाशदिशां निरस्तमधुना नामापि वर्षागमे द्रव्यं वारिगुणश्च वारिदरवः कर्मापि वारिक्रिया ॥ ६७ ॥ आसारेण न हर्म्यतः प्रियतमैर्यातुं बहिः शक्यते शीतोत्कम्पिनिमित्तमायतदृशां गाढं

समालिङ्गते । जालैः शीकरशीतलैश्च मरुतोरत्यन्तखेदाच्छिदो धन्यानां बत दुर्दिनं सुदिनतां याति प्रियासंगमे ॥ ६८ ॥ उद्योगः क्षयमेति हन्त सहसा जाड्यं समुज्जृम्भते मित्रस्यापि च दर्शनं भवति नो किवान्यदाचक्ष्महे । यल्लोकस्पृहणीयतां गतमभूत्तज्जीवनं व्यर्थतां प्राप्तं येन दुनोति तन्मम मनो दुर्दैववद्दुर्दिनम् ॥ ६९ ॥ सर्वत्रोद्गतकन्दला वसुमती वृद्धिर्जलानां परा जातं निष्कमलं जगत्सुमलिनैर्लब्धा घनैरुन्नतिः । सर्पन्ति प्रतिमन्दिरं द्विरसनाः संत्यक्तमार्गो जनो वर्षाणां च कलेश्च संप्रति जयत्येकैव राज्यस्थितिः ॥ ७० ॥ नैतद्वारिदगर्जितं रतिपतिप्रस्थानढक्कारवो नैते वारिधराः स्रवन्मदजलास्तत्सिन्धुराः प्रोद्धुराः । नैषा विद्युदियं विभाति रुचिरा तच्चन्द्रहासप्रभा मन्ये मानिनिमानदुर्गमधुना जेतुं किमायात्यसौ ॥ ७१ ॥ दृष्ट्वाडम्बरमम्बरे घनकृत सौदामिनीनर्तकीनृत्यारम्भमृदङ्गमङ्गलरवं श्रुत्वा च तद्गर्जितम् । पुष्प्यत्पुष्पभरानताङ्गणतरुस्कन्धावसद्वायसक्काणाकर्णनसोत्सवप्रियतमं पान्था ययुर्मन्दिरम् ॥ ७२ ॥ सद्मन्येव निरन्तरं निवसतिर्मित्राद्यनालोकनं पन्थाः पङ्कसमाकुलः कलुषता वारां सदा दुर्दिनम् । एवं यद्यपि दूषणानि तदपि स्वर्भूजनोल्लासकृत्सस्योत्पत्तिनिमित्ततैकगुणतः प्रावृट् प्रपेदे यशः ॥ ७३ ॥ **दोलाकेलिः** ॥ सौकर्यमिन्दीवरलोचनानां दोलासु दोलासु यदुल्ललास । यदि प्रमादाल्लभते कवित्वं जानामि तद्वर्णयितुं मनोभूः ॥ ७४ ॥ प्रसार्य पादौ विहितस्थितीनां दोलासु लोलांशुकपल्लवानाम् । मनोरथानामपि यन्न गम्यं तद्द्रष्टुमापुः सुदृशां युवानः ॥ ७५ ॥ उन्नम्य दूरं मुहुरानमन्त्यः कान्ताः श्लथीभूतनितम्बबिम्बाः । दोलाविलासेन जितश्रमत्वात्प्रकर्षमापुः पुरुषायितेषु ॥ ७६ ॥ दृशा विदधिरे दृशः कमलराजिनीराजिताः कृताहसितरोचिषा हरति चन्द्रकावृष्टयः । अकारि हरिणीदृशः प्रबलदण्डकप्रस्फुरद्वपुर्विपुलरोचिषा वियति विद्युतां विभ्रमः ॥ ७७ ॥ प्रत्यासन्नमुखी कराम्बुजयुगप्रेङ्खोलितां प्रेङ्खिकामारुह्येयमुदस्तहारलतिकां व्याविद्धतुङ्गस्तनी । दृष्टादृष्टमुखा गतागतवशादालोलमानांशुका तन्वङ्गी गगने करोति पुरतः शारदूदं विभ्रमम् ॥ ७८ ॥ **वर्षावायवः** ॥ एते ते दुरतिक्रमक्रममिलद्धर्मोर्मिमर्मच्छिदः कादम्बेन रजोभरेण ककुभो रुन्धन्ति झञ्झानिलाः । गाढारम्भनिगूढनीरदघटासंघट्टनीलीभवद्व्योमक्रोडकटाहया तु कपयो वेणीकणग्राहिणः ॥ ७९ ॥ धाराधौत धुनानाः शशधरधवलं केशरं केतकीनां कैलासे किंनरीणां चलदलकलतालास्यलीलां दधानाः । आमूलं मानिनीना मनसि विनिहितं मानमुन्मूलयन्तो वान्त्येते वारिवाहव्यतिकरशिशिराः प्रावृषेण्याः समीराः ॥ ८० ॥ गोकर्णं गाहमानाः पृथुतरपृषतग्राहिणः शंवरौघानाकर्षन्तो दिगन्तादपि च विदधतः कन्दलीषु प्रचारान् । एते धावन्ति वार्धश्रवसमुरुधनुर्धारयन्तः समन्तादाशृण्वन्तोऽभ्रवीथी वनमिव शवरभ्रान्तिभाजोऽम्बुवाहाः ॥ ८१ ॥ **वर्षापथिकः** ॥ गर्ज वा वर्ष वा मेघ मुञ्च वा सरितो भरान् । गणयन्ति न शीतोष्णं

वल्लभाविमुखा जनाः ॥ ८२ ॥ उपरि पयोधरमाला दूरे दयिता किमेतदापतितम् । हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसि ॥ ८३ ॥ उपरि घनं घनपटलं तिर्यग्ग्रीवो विनर्तति मयूरः । क्षितिरपि कन्दलधवला दृष्टिं पथिकः क्व पातयतु ॥ ८४ ॥ किं गतेन यदि सा न जीवति प्राणिति प्रियतमा तथापि किम् । इत्युदीक्ष्य नवमेघमालिकां न प्रयाति पथिकः स्वमन्दिरम् ॥ ८५ ॥ शिखिनि कूजति गर्जति तोयदे स्फुटति जातिलताकुसुमाकरे । अहह पान्थ न जीवति ते प्रिया नभसि मासि न यासि गृहं यदि ॥ ८६ ॥ रसति तरुणीकेशश्यामे पयोभृति निर्भरं स्फुटति चपले वारंवारं क्षणद्युति तेजसि । उपगुरुजनं मन्ये दैन्यात्पराङ्मुखसुप्तया निभृतनिभृतं मन्दोच्छ्वासं तया बत रुद्यते ॥ ८७ ॥ निशीथे लीनानां झटिति तडितां वीक्ष्य विषयं घनानामाभोगं रसिकपथिकेनोन्मुखदृशा । न गीतं सोत्कण्ठं न च रुदितमुत्कण्ठतरलं न मुक्ता निःश्वासाः स्फुरदनुमतं किं तु हृदयम् ॥ ८८ ॥ यथा रन्ध्रव्योम्नश्चलजलदधूमः स्थगयति स्फुलिङ्गानां रूपं दधति च यथा कीरमणयः । यथा विद्युज्ज्वालोल्लसितपरिपिङ्गाश्च ककुभस्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः ॥ ८९ ॥ बर्ही रौति बका रटन्ति तडितो भ्राम्यन्त्यतिव्याकुला विक्रोशन्ति घना घना च विलपत्युच्चैर्बलाकावलिः । आत्मानं मरुतः क्षिपन्ति सलिलासारः पतत्यग्रतो मुक्त्वा प्रावृषि साहसैकरसिको याति प्रियामध्वगः ॥ ९० ॥ नृत्यच्चन्द्रकिणिक्वणन्मधलिहि श्यामायमानक्षितौ धीरध्वानपयोमुचि प्रविलसत्सौदामिनी दामिनी । धीराम्भःकणवाहि शीतमरुति प्राणात्पयोदागमे हाहा हास्यति मुग्धिका नववधूरित्यध्वगः क्रन्दति ॥ ९१ ॥ श्रुत्वा बालमृगी विलोलनयना शब्दं घनानां पुरा भीत्या वक्षसि संश्रितापि निबिडे भूयः समालिङ्गति । या वक्त्रादपहृत्य कोपितवती कण्ठे ममैवाननं सा द्रक्ष्यत्यधुना कथं नु विरहे बाला पयोदावलीम् ॥ ९२ ॥ रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा पान्थेनात्मवियोगदुःखपिशुनं गीतं समुत्कण्ठता । आस्तां जीवितहारिणः प्रवसनालापस्य संकीर्तनं मानस्यापि जलाञ्जलिः सरभसं लोकेन दत्तो यथा ॥ ९३ ॥ ग्रामेऽस्मिन्पथिकाय पान्थ वसतिर्नैवाधुना दीयते रात्रावत्र विवाहमण्डपतले पान्थः प्रसुप्तो युवा । तेनोद्गीय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं येनाद्यापि करङ्कदण्डपतनाशङ्का जनस्तिष्ठति ॥ ९४ ॥ भ्रातः पान्थ कुतो भवान्नगरतो वार्ता न वा वर्तते बाढं ब्रूहि युवा पयोदसमये त्यक्त्वा प्रियां जीवति । सत्यं जीवति जीवतीति कथिता वार्ता मयापि श्रुता विस्तीर्णा पृथिवी जनोऽपि विविधः किं किं न संभाव्यते ॥ ९५ ॥ धीरं वारिधरस्य वारि किरतः श्रुत्वा निशीथे ध्वनिं दीर्घोच्छ्वासमुदश्रुणा विरहिणीं बालां चिरं ध्यायता । अध्वन्येन विमुक्तकण्ठकरुणं रात्रौ तथा क्रन्दितं ग्रामीणैः पुनरध्वगस्य वसतिर्ग्रामे निषिद्धा यथा ॥ ९६ ॥ भ्रातः पान्थ

प्रसीद प्रतिविरम समुत्सृज्य वालामकाण्डे गन्तुं बाष्पाम्बुपूरप्लुतनयनमुखी प्रेयसी ते न युक्तम् । वृत्तं ग्रामेति कष्टं यदिह गृहपतेः प्रोषितस्य प्रियाया मुक्ताक्रन्दास्तदेतान्सलिलवितरणे निर्गतान्पश्य बन्धून् ॥ ९७ ॥ भद्रात्र ग्रामके त्वं वससि परिचयस्तेऽस्ति जानासि वार्तामस्मिन्नध्वन्यजायो जलधररसितोत्का न कश्चिद्विपन्नः । इत्थं पान्थ प्रवासावधि दिनविगमापायशङ्की प्रियायाः पृच्छान्वृत्तान्तमाणस्थितनिजभवनोऽप्याकुलो न प्रयाति ॥ ९८ ॥ वर्षापथिककामिनी ॥ अदृष्टपूर्वमस्माभिर्यदेतद्दृश्यतेऽधुना । विषं विषधरैः पीतं मूर्छिताः पथिकाङ्गनाः ॥ ९९ ॥ पश्य सखि हे रसमयं जलधरसमयं समुन्नद्धम् । विलसति कापि वलाका कापि वलाका मुदं धत्ते ॥ १०० ॥ शिशिरसीकरवाहिनि मारुते चरति शीतभयादिव सत्वरः । मनसि च प्रविवेश वियोगिनीहृदयमाहितशोकविनाशनः ॥ १०१ ॥ एष्यन्त्यवश्यमधुना हृदयाधिनाथा मुग्धा मुधा कुरुत मा विविधं विलापम् । इत्थं शशंसुरिव गर्जितकैतवेन पाथोधराः पथिकपङ्कजलोचनाभ्यः ॥ १०२ ॥ आकर्णितानि रसितानि यया प्रसर्पत्प्रद्युम्नराजरथनिस्वनसोदराणि । उच्चै रणन्वरणनूपुरया पुरन्ध्या क्षिप्रं प्रियं कुपितयापि तयाभिसस्ने ॥ १०३ ॥ प्रणतिभिरपि पत्युः प्रार्थनाभिश्च सख्याः क्षणमपि न मनस्तो मानिनी मानमौज्झत् । तमसमशरशस्त्रीभूतगानप्रकारः फणिनमिव शिखण्डी किं न खण्डीचकार ॥ १०४ ॥ नभसि जलदलक्ष्मीं संभृतां वीक्ष्य दिष्ट्या प्रसरति यदि कान्तेत्यर्धमुक्त्वा कथंचित् । मम पटमवलम्ब्य प्रोल्लिखन्ती धरित्रीं तदनुकृतवती सा यत्र वाचो निवृत्ताः ॥ १०५ ॥ विरमत घनाः किं वो वृष्ट्या मुधैव विसृष्टया व्रजत ककुभं कामप्यन्यां मनोरुचिरामतः । न तदिह वनं नासौ मार्गो न तच्च धरातलं विरहगलितैस्तन्व्या यन्नोत्प्लुतं नयनाम्बुभिः ॥ १०६ ॥ प्रसरदलकाकीर्णे कर्णे न केकिरुतं श्रुतं श्वसितविजितो वातो घ्रातो न वा कुटजोत्करः । न च परिचिता नो संपत्सु प्लुताश्रुणि लोचने तदपि किमपि प्रावृड्भामा धुनोति वियोगिनी ॥ १०७ ॥ भ्रमय जलदानम्भोगर्भान्प्रमोदय चातकान्कलय शिखिनः केकोत्कण्ठान्कठोरय केतकान् । विरहिणि जने मूर्छां लब्ध्वा विनोदयति व्यथामकरुण पुनः संज्ञाव्याधिं विधाय किमीहसे ॥ १०८ ॥ मेघैर्व्योम नवाम्बुभिर्वसुमती विद्युल्लताभिर्दिशो धाराभिर्गगनं वनानि कुटजैः पूरैर्वृता निम्नगाः । एकां घातयितुं वियोगविधुरां दीनां वराकीं स्त्रियं प्रावृट्काल हताश वर्णय कृतं मिथ्या किमाडम्बरम् ॥ १०९ ॥ वाता वान्तु कदम्बरेणुशवला नृत्यन्तु सर्पद्विषः सोत्साहा नववारिगर्भगुरवो मुञ्चन्तु नादं घनाः । मग्नां कान्तवियोगशोकजलधौ मां वीक्ष्य दीनाननां विद्युत्किं स्फुरसि त्वमप्यकरुणे स्त्रीत्वे समाने सति ॥ ११० ॥ अम्भोवाहमुरद्विषो निवसनं ध्वान्ताद्रिदिव्यौषधी कन्दर्पस्य विलासचम्पकधनुर्वर्षालतामञ्जरी । लेखा व्योमकपोपले विरचिता चामीकरस्य स्फुरद्धाम्नः पान्थविलासिनीजनमनःकम्पाय शम्पाभ-

वत् ॥ १११ ॥ श्रुत्वा तन्व्या निशीथे नवघनरसितं विश्लथाङ्गं पतित्वा शय्यायां भूमिपृष्ठे करतलधृतया दुःखितालीजनेन । सोत्कण्ठं मुक्तकण्ठं कठिनकुचतटाघातशीर्णाश्रुबिन्दु स्मृत्वा स्मृत्वा प्रियस्य स्खलितमृदुवचो रुद्यते पान्थवध्वा ॥ ११२ ॥ खद्योतः ॥ प्राचीमहीधरशिलाविनिवेशितस्य धाराधरस्फुरदयोघनताडितस्य । तप्तायसस्य तपनस्य कणा विकीर्णाः खद्योतपोतसुषमां स्फुटमावहन्ति ॥ ११३॥ हंसः ॥ तटमुपगतं पद्मे पद्मे निवेशितमाननं प्रतिपुटकिनीपत्रच्छायां मुहुर्मुहुरासितम् । मुहुरुपगतैरस्रैः कोष्णीकृता जलवीचयो जलदमलिनां हंसेनाशां विलोक्य पिपासता ॥ ११४ ॥

---

## शरद्वर्णनम् ।

अहो बाणस्य संधानं शरदीस्मरभूपतेः । अपि सोऽयं त्विषामीशः कन्याराशिमुपागतः ॥ १ ॥ समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् । शरदि हंसरवाः परुषीकृतस्वरमयूरमयू रमणीयताम् ॥ २ ॥ **शरत्समयस्वभावाख्यानम्** ॥ दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः । नवसंगमसव्रीडा जघनानीव योषितः ॥ ३ ॥ एकेन चुलकेनाब्धिर्निपीतः कुम्भजेन यत् । तस्योदयेऽन्तः कालुष्यं त्यजन्त्यापो भयादिव ॥४ ॥ पाथोदजालजटिलं तटिलं शरदङ्गना । अम्बरं धावयामास चन्द्रिकाचयवारिभिः ॥ ५ ॥ धन्याः शरदि सेवन्ते प्रोल्लसच्चित्रशालिकान् । प्रासादान्स्त्रीसखाः पौराः केदारांश्च कृषीवलाः ॥ ६ ॥ नमिताः फलभारेण न मिताः शालमञ्जरीः । केदारेषु हि पश्यन्तः के दारेषु विनिस्पृहाः ॥ ७ ॥ हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा । विमलाः कुमुदानीव तारकाः शरदागमे ॥ ८ ॥ राजीवमिव राजीवं जलं जलमिवाजनि । चन्द्रश्चन्द्र इवातन्त्रः शरत्समुदयोद्यमे ॥ ९ ॥ काशाः क्षीरनिकाशा दधितरवर्णानि सप्तपर्णानि । नवनीतनिभश्चन्द्रः शरदिव तक्रप्रभा ज्योत्स्ना ॥ १० ॥ द्वयमिदमत्यन्तसमं नीचे प्रभविष्णुता शरच्चेयम् । क्षेत्रेभ्यः प्राप्य फलं खलेषु निःक्षिप्यते यस्याम् ॥ ११ ॥ अथ प्रसन्नेन्दुमुखी सिताम्बरा समाययावुत्पलपत्रलोचना । सपङ्कजा श्रीरिव यां निषेवितुं सहंसबालव्यजनां शरद्वधूः ॥ १२ ॥ समुल्लसत्पङ्कजलोचनेन विनोदयन्ती तरुणानशेषान् । शुद्धाम्बरा गुप्तपयोधरश्रीः शरन्नवोढेव समाजगाम ॥ १३ ॥ पयोदकेशेषु विकृष्य रोषान्निःकाश्य सा कोकनदायताक्षी । वर्षावधूं स्वां श्रियमुन्नयन्ती प्रौढासपत्नीव शरच्चकाशे ॥ १४ ॥ चन्द्रायते शुक्लरुचापि हंसो हंसायते चारुगतेन कान्ता । कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥ १५ ॥ ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् । प्रमोदयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ॥ १६ ॥ उपैति सस्यं परिणामरम्यतां नदीरनौद्धत्यमपङ्कता महीम् । नवैर्गुणैः संप्रति संस्तवस्थिरं तिरोहितं प्रेम घनागम-

श्रियः ॥ १७ ॥ पतन्ति नास्मिन्विशदाः पतत्रिणो धृतेन्द्रचापा न पयोदपङ्क्तयः। तथापि पुष्णाति नभः श्रियं परा न रम्यमाहार्यमपेक्षते गुणम् ॥१८॥ विपाण्डुभिर्म्लानतया पयोधरैश्च्युताचिराभागुणहेमदामभिः। इयं कदम्बानिलभर्तुरत्यये न दिग्वधूनां कृशता न राजते॥१९॥ विहाय वाञ्छामुदिते मदात्ययादरक्तकण्ठस्य रुते शिखण्डिनः। श्रुतिः श्रयत्युन्मदहंसनिःस्वनं गुणाः प्रियत्वेऽधिकृता न संस्तवः ॥२०॥ अमी पृथुस्तम्बभृतः पिशङ्गतां गता विपाकेन फलस्य शालयः। विकासि वप्राम्भसि गन्धसूचितं नमन्ति निघ्रातुमिवासितोत्पलम् ॥२१॥ विहारभूमेरभिघोषमुत्सुकाः शरीरजेभ्यश्च्युतयूथपङ्क्तयः। असक्तमूधांसि पयः क्षरन्त्यमूरुपायनानीव नयन्ति धेनवः ॥२२॥ जगत्प्रसूतिर्जगदेकपावनी व्रजोपकण्ठं तनयैरुपेयुषी। द्युतिं समग्रां समितिर्गवामसावुपैति मन्त्रैरिव संहिताहुतिः ॥ २३ ॥ कृतावधानं जितबर्हिणध्वनौ सुरक्तगोपीजनगीतनिःस्वने। इदं जिघत्सामपहाय भूयसीं न सस्यमभ्येति मृगीकदम्बकम् ॥२४॥असावनास्थापरयावधीरितः सरोरुहिण्या शिरसा नमन्नपि। उपैति शुष्यन्कलमः सहाम्भसा मनोभुवा तप्त इवाभिपाण्डुताम् ॥२५॥ अमी समुद्धूतसरोजरेणुना हृताहृतासारकणेन वायुना। उपागमे दुश्चरिता इवापदां गतिं न निश्चेतुमलं शिलीमुखाः ॥ २६ ॥ मुखैरसौ विद्रुमभङ्गलोहितैः शिखाः पिशङ्गीः कलमस्य बिभ्रती। शुकावलिर्व्यक्तशिरीषकोमला धनुःश्रियं गोत्रभिदोऽनुगच्छति ॥२७॥ ददतमन्तरिता हिमदीधितिं खगकुलाय कुलायनिलायितम्। जलदकालमबोधकृतं दिशामपरथाप रथावयवायुधः ॥२८॥ स विकचोत्पलचक्षुषमैक्षत क्षितिभृतोऽङ्कगतां दयितामिव। शरदमच्छगलद्वसनोपमाक्षमघनामघनाशनकीर्तनः ॥ २९ ॥ जगति नैशमशीतकरः करैर्वियति वारिदवृन्दमयं तमः। जलजराजिषु नैद्रमदिद्रवन्न महतामहताः क्व च नारयः ॥ ३० ॥ समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम्। शरदि हंसरवाः परुषीकृतस्वरमयूरमयू रमणीयताम् ॥ ३१ ॥ तनुरुहाणि पुरोविहितध्वनेर्धवलपक्षविहङ्गमकूजितैः। जगलुरक्षमयेव शिखण्डिनः परिभवोऽरिभवो हि सुदुःसहः ॥३२॥ अनुवनं वनराजिवधूमुखे बहलरागजवाधरचारुणि। विकचबाणदलावलयोऽधिकं रुरुचिरे रुचिरेक्षणविभ्रमाः ॥ ३३ ॥ कनकभङ्गपिशङ्गदलैर्दधे सरजसारुणकेशरचारुभिः। प्रियविमानितमानवतीरुषां निरसनै रसनैरवृथार्थता ॥ ३४ ॥ मुखसरोजरुचं मदपाटलामनुचकार चकोरदृशां यतः। धृतनवातपमुत्सुकतामतो न कमलं कमलम्भयदम्भसि ॥ ३५ ॥ विगतशस्यजिघत्समघट्टयत्कलमगोपवधूर्न मृगव्रजम्। श्रुततदीरितकोमलगीतकध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥ ३६ ॥ कृतमदं निगदन्त इवाकुलीकृतजगत्त्रयमूर्जमतङ्गजम्। ववुरयुक्छदगुच्छसुगन्धयः सततगास्ततगानगिरोऽलिभिः ॥ ३७ ॥ तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः शृङ्गं रुरुस्त्यजति मित्र इवाकृतज्ञः। तोयं प्रसीदति मुनेरिव चित्तवृत्तिः कामं दरिद्र इव शोषमुपैति पङ्कः ॥ ३८ ॥ आसादितप्रकटनिर्मलचन्द्र-

हासः प्राप्तः शरत्समय एष विशुद्धकान्तः । उत्खाय गाढतमसं घनकालमुग्रं रामो दशास्यमिव संभृतबन्धुजीवः ॥३९॥ वृद्धाङ्गनेव विजहौ सरिदुद्धतत्वं वेदान्तिनामिव मतं शुचि नीरमासीत् । चन्द्रे प्रभा युवतिवक्त्र इवाद्भुताभूद्विद्वत्कवित्वमिव केकिरुतं न रेजे ॥ ४० ॥ मधुमधुरिमभङ्गीं भेजिरे हंसनादास्तुहिनपटललीलां लेभिरे वारिवाहाः । क्षितिरभवदपङ्का किं च रोलम्बबालावलिकलितनलिन्यः शैवलिन्यस्तदासन् ॥४१॥ स्फुटं स्फुटपलाशवत्सुभगभासिचञ्चूपुटे विपाककपिशीकृताः कमलमञ्जरीर्बिभ्रती । बभौ दिवि शुकावलिः कुवलयच्छविर्जङ्गमा स्वभावहृदयंगमा विबुधचापलक्ष्मीरिव ॥ ४२ ॥ अपाकृत्याशेषाण्यपि च घनजालानि परितस्तमोधूमस्तोमोद्भवमलिनिमानं च तदनु । शरच्चन्द्रः शिल्पी रतिपतिमुदेऽसौ निजकरैः सुधासंदोहार्द्रैर्भुवनभवनं पाण्डुरयति ॥ ४३ ॥ रम्यं हर्म्यतलं नवाः सुनयनो गुञ्जद्द्विरेफा लता प्रोन्मीलन्नवमालतीसुरभयो वाताः सचन्द्राः क्षपाः । यद्येतानि जयन्ति हन्त परितः शस्त्राण्यमोघानि मे तद्गोः कीदृगसौ विवेकविभवः कीदृक्प्रबोधोदयः ॥४४॥ अर्धं सुप्तो निशायाः सरभससुरतायाससन्नश्लथाङ्गः प्रोद्भूतारुह्य तृष्णां मधुमदविरतौ हर्म्यपृष्ठे प्रबुद्धः । संभोगक्लान्तकान्ताशिथिलभुजलतावर्जितं जर्जरीतो ज्योत्स्नाभिन्नाच्छवीनां न पिबति सलिलं शारदं मन्दपुण्यः ॥ ४५ ॥ चेतः कर्षन्ति सप्तच्छदकुसुमरसासारसौरभ्यलुभ्यद्भृङ्गीसंगीतगीतश्रुतिसुभगदिशो वासराः शारदीयाः । किं च व्याकोशपङ्केरुहमधुरमुखीं संचरच्चञ्चरीकश्रेणीवेणीसनाथां रमयति तरुणः पद्मिनीमंशुमाली ॥ ४६ ॥ **भ्रमरक्रीडा ॥**

अलक्षितकुचाभोगं भ्रमती नृत्यभूमिषु । स्मरेणापि सरोजाक्षी न लक्ष्यीक्रियते शरैः ॥ ४७ ॥ भ्रमात्प्रकीर्णे भ्रमरीषु किंचिच्चेलाञ्चले चञ्चललोचनायाः । कुचौ कदाचिज्जघनं युवानो विलोक्य साफल्यमवापुरक्ष्णोः ॥ ४८ ॥ परिभ्रमन्त्या भ्रमरीविनोदे नितम्बबिम्बाद्विगलद्दुकूलम् । विलोक्य कस्याश्चन कोमलाङ्ग्याः पुंभावमन्याः सुदृशो ववाञ्छुः ॥ ४९ ॥ यतो यतः षट्चरणोऽभिवर्तते ततस्ततः प्रेरितलोललोचना । विवर्तितभ्रूरियमद्य शिक्षते भयादकामापि हि दृष्टिविभ्रमम् ॥ ५० ॥ करौ धुनाना नवपल्लवाकृती वृथा कृथा मानिनि मा परिश्रमम् । उपेयुषी कल्पलताभिशङ्कया कथं न्वितस्त्रस्यति षट्पदावलिः ॥ ५१॥ चेलाञ्चलेन चलहारलताप्रकाण्डैर्वेणीगुणेन च चलद्वलयीकृतेन । हेलाहितभ्रमरकभ्रममण्डलीभिश्छन्नत्रपं रचयतीव चिरं नतभ्रूः ॥ ५२ ॥ चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः । करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं न्ध्रं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ ५३ ॥ मुक्ते काञ्चनकुण्डले निपतिते माणियते स्वःमणौ कीर्णे केलिसरोरुहे विगलिते मुक्ताकलापे सति । निःश्वस्याम्बुजलोचनाभ्रप्रमोदयन्तीत्यावसाने पुनः प्राणेशच्युतिशङ्कयेव हृदये हस्तारविन्दं ददौ ॥ ५४ ॥ स्यतां नदीरनो वान्ति रात्रौ रतिक्लान्तकामिनीसुहृदोऽनिलाः । ललनालोलधम्मिल्लमल्लिका-

मोदवासिताः ॥ ९५ ॥ वान्ति कह्लारसुभगाः सप्तच्छदसुगन्धयः । वाता नवरतग्लानवधूगमनमन्थराः ॥ ९६ ॥ शरत्पथिकः ॥ पन्थानुपङ्कं पथि विस्मरन्तः कथावशेषे च पयोदवृन्दम् । मार्गेषु चन्द्रातपपिच्छलेषु पदे पदे चस्खलुरध्वनीनाः ॥९७॥ इह निचुलनिकुञ्जे वंशसंभारभाजि स्वपासि यदि मुहूर्तं पश्यसि क्षेत्रमेतत् । इति पथिकमकस्मान्मार्ग एवोपविष्टं वदति तरुणकान्तं गोपिका साङ्गभङ्गम् ॥ ९८ ॥

---

## हेमन्तवर्णनम् ।

हेमन्तहिमनिस्यन्दमवलोक्य मनोभवम् । प्रहर्तुं सुभ्रुवां चेतो रविर्देवो धनुर्दधौ ॥ १ ॥ दुराशेव दरिद्रस्य तृष्णेव कृपणस्य च । अहो न विरमत्येषा हन्त हेमन्तयामिनी ॥ २ ॥ हेमन्ते वहुदोषाढ्ये द्वौ गुणौ सर्वसंमतौ । अयत्नशीतलं वारि सुरतं स्वेदवर्जितम् ॥ ३ ॥ **हेमन्तसमयस्वभावाख्यानम्** ॥ हे हेमन्त स्मरिष्यामि त्वय्यतीते गुणद्वयम् । अयत्नशीतलं वारि निशाश्चाध्ययनक्षमाः ॥ ४ ॥ हसन्तीं वा हसन्तीं वा हसन्तीं वामलोचनाम् । हेमन्ते ये न सेवन्ते ते नूनं दैववञ्चिताः ॥ ५ ॥ कामिनो हन्त हेमन्त निशि शीतज्वरातुराः । जीवन्ति हरिणाक्षीणां वक्षोजाश्लेषरक्षिताः ॥ ६ ॥ अद्य शीतं वरीवर्ति सरीसर्ति समीरणः । अपत्नीको मरीमर्ति नरीनर्ति कुचोष्मवान् ॥ ७ ॥ हिमधवलदन्तकेशा मन्दद्युतितारका बृहत्तिमिरा । द्विगुणीभूता रजनी तरुणीव शनैः शनैर्याति ॥ ८ ॥ अम्बरमेष रमण्यै यामिन्यै वासरः प्रेयान् । अधिकं ददौ निजाङ्गादथ संकुचितः स्वयं तस्थौ ॥ ९ ॥ विकसति सूर्ये विकसति मुकुलति चास्तं गते तस्मिन् । शिशिरे निःस्वकुटुम्बः पङ्कजलीलां समुद्वहति ॥ १० ॥ कन्याप्रसूतस्य[1] धनुःप्रसङ्गादङ्गाधिकासादितविक्रमस्य[2] । धनंजयाधीनपराक्रमस्य[3] हिमस्य कर्णस्य च को विशेषः ॥ ११ ॥ अलं हिमानीपरिदीर्णगात्रः समापितः फाल्गुनसंगमेन । अत्यन्तमाकाङ्क्षितकृष्णवर्त्मा भीष्मो महात्माजनि माघतुल्यः ॥ १२ ॥ अविरलफलिनीवनप्रसूनः कुसुमितकुन्दसुगन्धिगन्धवाहः । गुणमसमयजं चिराय लेभे विरलतुषारकणस्तुषारकालः ॥ १३ ॥ निचयिनि लवलीलताविकाशे जनयति लोध्रसमीरणे च हर्षम् । विकृतिमुपययौ न पाण्डुसूनुश्चलति नयान्न जिगीषतां हि चेतः ॥ १४ ॥ कतिपयसहकारपुष्परम्यस्तनुतुहिनोऽल्पविनिद्रसिन्दुवारः । सुरभिमुखहिमागमान्तशंसी समुपययौ शिशिरः स्मरैकबन्धुः ॥ १५ ॥ गजपतिद्वयसीरपि हैमनस्तुहिनयन्सरितः पृषता पतिः । सलिलसंततिमध्वगयोषितामतनुतातनुतापकृतं दृशाम् ॥ १६ ॥ इदमयुक्तमहो महदेव यद्वरतनोः स्मरयत्यनिलोऽन्यदा । स्मृत-

---

१ कन्याराशावुत्पन्नस्य, (पक्षे) कुमारिकाया प्रसूतस्य. २ धनुराशिसगमेनाङ्गेषु शरीरेष्वधिकमासादित. सपादितो विक्रमो रोमाञ्चोत्पादनादिरूप' पराक्रमो येन, (पक्षे) धनुर्विद्ययाङ्गदेशेषु संपादित. पराक्रमो येन. ३ धनंजयोऽग्निस्तदधीनः पराक्रमो बलं यस्य, (पक्षे) धनंजयोऽर्जुनस्तदधीनपराक्रमः.

सयौवनसोष्मपयोधरान्सतुहिनस्तु हिनस्तु वियोगिनः ॥ १७ ॥ प्रियतमेन यया सरुषा स्थितं न सहसा सहसा परिरभ्य तम् । श्लथयितुं क्षणमक्षमताङ्गना न सहसा सहसा कृतवेपथुः ॥ १८ ॥ भृशमदूयत याधरपल्लवक्षतिरनावरणा हिममारुतैः । दशनरश्मिपटेन च शीत्कृतैर्निवसितेव सितेन सुनिर्ववौ ॥ १९ ॥ व्रणभृता सुतनोः कलशीत्कृतस्फुरितदन्तमरीचिमयं दधे । स्फुटमिवावरणं हिममारुतैर्मृदुतया दुतयाधरलेखया ॥ २० ॥ धृततुषारकणस्य नभस्वतस्तरुलताङ्गुलितर्जनविभ्रमाः । पृथुनिरन्तरमिष्टभुजान्तरं वनितयानितया न विषेहिरे ॥ २१ ॥ हिमऋतावपि ताः स्म भृशास्विदो युवतयः सुतरामुपकारिणि । प्रकटयत्यनुरागमकृत्रिमं स्मरमयं रमयन्ति विलासिनः ॥ २२ ॥ प्रालेयशैलशिखरानलसंप्रयोगः प्रोत्फुल्लकुन्दमकरन्दहृतालिवृन्दः । कालोऽयमातपति कुङ्कुमपङ्कपिङ्गप्रोत्तुङ्गरङ्गरमणीकुचसङ्गयोग्यः ॥ २३ ॥ शुकहरितयवानां सीम्नि नीहारभासः सपदि विगतनिद्राः क्रौञ्चकान्ताः क्षपान्ते । विदधति कमनीयक्काणमुद्यत्ककारं सरलितगलनालं जर्जरस्फाररेफम् ॥२४॥ लघुनि तृणकुटीरे क्षेत्रकोणे यवानां नवकमलपलालस्रस्तरे सोपधाने । परिहरति सुषुप्तं हालिकद्वन्द्वमारात्कुचकलशमहोष्माबद्धरेखस्तुषारः ॥ २५ ॥ अपि दिनमणिरेष क्लेशितः शीतसंघैरथ निशि निजभार्यां गाढमालिङ्ग्य दोर्भ्याम् । स्वपिति पुनरुदेतुं सालसाङ्गस्तु तस्मात्किमु न भवतु दीर्घा हैमिनी यामिनीयम् ॥ २६ ॥ जरीजृम्भत्प्रौढद्युमणिकरसंदोहसदृशस्फुरद्दीप्तिव्रातप्रगुणतरतारुण्यसुभगाम् । हसन्तीं हेमन्ते परिजनयुतां वा सुवदनां हसन्तीं सेवन्ते परिणतमहाभाग्यनिचयाः ॥ २७ ॥ वेपन्ते कपयो भृशं कृतजडं गोजाधिकं म्लायति श्वा चुल्लीकुहरोदरं क्षणमपि प्राप्यापि नैवोज्झति । शीतार्तिव्यसनातुरः पुनरसौ दीनो जनः कूर्मवत्स्वान्यङ्गानि शरीर एव हि निजे निद्रोतुमाकाङ्क्षति ॥ २८ ॥ शीतांशोरिव नूतनस्य रुचयो विद्या इवामेधसा विप्रातिक्रमिणां विभूतय इव क्षीबस्य बोधा इव । भावैः संवलिता इव प्रियतमे दृग्भङ्गयः सुभ्रुवां प्रादुर्भूय तिरोभवन्ति सहसा हैमन्तिका वासराः ॥ २९ ॥ लज्जा प्रौढमृगीदृशामिव नवस्त्रीणां रतेच्छा इव स्वैरिण्या नियमा इव स्मितरुतः केल्यङ्गनानामिव । दंपत्योः कलहा इव प्रणयिता वाराङ्गनानामिव प्रादुर्भूय तिरोभवन्ति सहसा हैमन्तिका वासराः ॥ ३० ॥ हेमन्ते दधिदुग्धसर्पिरशनामाञ्जिष्ठवासोभृतः काश्मीरद्रवलिप्तचारुवपुषः खिन्ना विचित्रै रतैः । वृत्तोरुस्तनकामिनीजनकृताश्लेषा गृहाभ्यन्तरे ताम्बूलीदलपूगपूरितमुखा धन्याः सुखं शेरते ॥ ३१ ॥ चक्रे चण्डरुचा समं रणमसौ हेमन्तपृथ्वीपतिर्ये ये तत्र जिता दिवाकरकरास्ते तेऽमुना तत्क्षणात् । कान्तानां कुचभूधरे निदधिरे मन्येऽहमेवं तदा नो चेन्मन्दकरः कथं दिनकरस्तप्तश्च तन्वीस्तनः ॥ ३२ ॥ प्रोद्यत्प्रौढारविन्दद्युतिभृतिविदलत्कुन्दमाद्यद्विरेफे काले प्रालेयवातप्रबलविकसितोद्दाममन्दारदाम्नि । येषां नो

कण्ठलग्ना क्षणमपि तुहिनक्षोदरक्षा मृगाक्षी तेषामायामियामा यमसदनसमा यामिनी याति नूनम् ॥ ३३ ॥ **कन्दुकक्रीडा** ॥ पयोधराकारधरो हि कन्दुकः करेण रोषादिव ताड्यते मुहुः । इतीव नेत्राकृतिभीतिमुत्पलं तस्याः प्रसादाय पपात पादयोः ॥ ३४ ॥ वनिताकरतामरसाभिहतः पतितः पतितः पुनरुत्पतसि । विदितं खलु कन्दुक ते हृदयं वनिताधरसंगमलुब्धमिव ॥ ३५ ॥ सानन्दकन्दुकविहारविधौ वधूनां दोलायमानमणिकङ्कणनिक्कणेन । उच्चारितेषु युवचित्तविहंगमेषु श्येना इव स्मृतिभुवो विशिखा विलग्नाः ॥ ३६ ॥ स्मरशरधिनिकाशं कर्णपाशं कृशाङ्गीरपविगलिततालीपत्रताटङ्कमेकम् । वहति हृदयचोरं कुङ्कुमन्यासगौरं वलयितमिव नालं लोचनेन्दीवरस्य ॥ ३७ ॥ अमन्दमणिनूपुरक्कणनचारुचारिक्रमं झणज्झणितमेखलास्खलिततारहारच्छदम् । इदं तरलकङ्कणावलिविशेषवाचालितं मनो हरति सुभ्रुवः किमपि कन्दुकक्रीडनम् ॥ ३८ ॥ भ्रमच्चरणपङ्क्वक्कणदमन्दमञ्जीरकं परिस्खलदुरोरुहस्तबककम्पमानांशुकम् । रणत्कनकमेखलं करसरोरुहाभ्यां पुरः पतन्तमपरा ददे कुसुमकन्दुकं सुन्दरी ॥ ३९ ॥ वक्त्रश्रीजितलज्जितेन्दुमलिनं कृत्वा करे कन्दुकं व्रीडाकौतुकमिश्रभावमनया तिर्यग्वहन्त्याननम् । भृङ्गाग्रग्रहकृष्णकन्दलदलस्पर्धावलीना दृशां दीर्घापाङ्गतरङ्गणैकसुहृदां कोऽप्येष पात्रीकृतः ॥ ४० ॥ व्यावल्गत्कुचभारमाकुलकचं व्यालोलहारावलि प्रेङ्खत्कुण्डलशोभि गण्डयुगलं प्रस्वेदि वक्त्राम्बुजम् । शश्वद्दत्तकरप्रहारमधिकश्वासं रसादेतया यस्मात्कन्दुक सादरं सुभगया संसेव्यसे तत्कृती ॥ ४१ ॥ चञ्चच्चेलाञ्चलानि प्रतिसरणिचलव्यस्तवेणीनिवाहो विक्षेपाद्दक्षिणस्य प्रचलितवलयस्फारकोलाहलानि । श्वासत्रुट्यद्वचांसि द्रुममितरकरोत्क्षेपलोलालकानि स्रस्तस्रञ्जि प्रमोदं दधति मृगदृशां कन्दुकक्रीडितानि ॥ ४२ ॥ अस्याः स्वेदाम्बुबिम्बच्युततिलकतया व्यक्तवक्त्रेन्दुकान्तेर्वारंवारेण वेगग्रहणनगणनाकेलिवाचालितायाः । तत्पातोत्थानतालक्रमनमितदृशस्ताण्डवोत्तालतालीलालित्याच्छोभिताः स्मः प्रतिकलममुना कन्दुकक्रीडितेन ॥ ४३ ॥ **हेमन्तवायवः** ॥ दधत्यधरचुम्बनं नयनपङ्कजं मुद्रयत्यमन्दपुलक मनागमलमन्दमालिङ्गते । विचालयति चालकं चपललोचनीया हठात्तनोत्यविनयं मरुत्प्रिय इवैष हैमन्तिकः ॥ ४४ ॥ हूणी सीमन्तमुद्रां सपदि तरलयन्कीरकान्ताकुचान्तः स्वच्छन्दस्तस्तव स्त्री चलचपलतया लोलयन्हारवल्लीम् । प्रालेयावासपृथ्वीधरशिशिरचलच्चारुवारिप्रवाहः प्रक्षोभं प्रातिभश्रीः प्रसरति परितो हैमनो गन्धवाहः ॥ ४५ ॥ नीत्वोच्चैर्विक्षिपन्तः कृततुहिनकणासारसङ्गान्परागान्कौन्दानानन्दितालीनतितरसुरभीन्भूरिशो दिङ्मुखेषु । एते ते कुङ्कुमाक्तस्तनकलशभरास्फालनादुच्छलन्तः पीत्वा सीत्कारिवक्त्रं शिशुहरिणदृशा हैमना वान्ति वाताः ॥ ४६ ॥ **हेमन्तपथिकः** ॥ आहूतोऽपि सहायैरेहीत्युक्त्वा विमुक्तनिद्रोऽपि । गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति ॥४७॥ हेमन्ते पथिकजनाः

प्रियाविमुक्ता लोकानां गृहबहिरङ्गणे शयानाः। कन्दर्पाकुलमनसां निशासु तेषां शीतं किं लगति जगत्प्रकम्पकारि ॥ ४८ ॥ हेमन्ते हिमकरबिम्बचारुमुख्या रामाया मृदुभुजपञ्जरे शयानाः। ये कालं परमसुखं नयन्ति तेषां शीतं किं लगति जगत्प्रकम्पकारि ॥ ४९ ॥ हे पान्थ प्रियविप्रयोगहुतभुग्ज्वालानभिज्ञोऽसि किं किंवा नास्ति तव प्रिया गतघृणः किंवा विहीनो धिया। येनास्मिन्नवकुङ्कुमारुणरुचिन्यासङ्घर्मोचिते कुन्दानन्दितमत्तषट्पदकुले काले गृहान्निर्गतः ॥ ५० ॥ शीतार्तिप्रसरस्तथा कुलपदन्यासैः समुत्कम्पिभिः पान्थैर्निर्दयतुच्छगोधननदद्वापारवैः सूचिताः। प्राप्यन्ते हिमपीडितानि निभृतप्रोद्घाटधूमा घनस्तोका लक्षकुटीरकाः कथमपि प्राप्ता गिरिग्रामकाः ॥ ५१ ॥ अन्योन्याहतिदन्तनादमुखरं वक्त्रं मुखं कुर्वता नेत्रे साश्रुकणे निमील्य पुलकव्यासङ्गिकण्डूयता। हाहाहेति सुनिष्ठुरं विवदता बाहु प्रसार्य क्षणं पुण्याग्निः पथिकेन पीयत इव ज्वालाहतश्मश्रुणा ॥५२॥

---

## शिशिरवर्णनम्।

प्रावरणैरङ्गारैर्गर्भगृहे स्तनतटैश्च दयितानाम्। संतर्जितमाघ्यानां निपतति शीतं दरिद्रस्य ॥ १ ॥ **शिशिरसमयस्वभावाख्यानम्** ॥ कारणोत्पन्नकोपेऽपि सांप्रतं प्रमदाजनः। निशि शीतापदेशेन गाढमालिङ्गति प्रियम् ॥ २ ॥ एते समुल्लसद्धासो राजन्ते कुन्दमोरकाः। शीतभीता लताकुन्दमाश्रिता इव तारकाः ॥ ३ ॥ अंशुकमिव शीतभया संस्त्यानत्वच्छलेन हिमवलयम्। अम्भोभिरपि गृहीतं पश्यत शिशिरस्य माहात्म्यम् ॥ ४ ॥ आचुम्ब्य बिम्बाधरमङ्गवल्लीमालिङ्ग्य संस्पृश्य कपोलपालिम्। श्रीखण्डमादाय करेण कान्तः संत्रासयामास सरोरुहाक्षीम् ॥५ ॥ तपनस्तपति स्म मन्दमन्दं ज्वलनोऽपि ज्वलति स्म किंचिदेव। शरणं शिशिरेऽथ किं च यूनां युवतीनां स्तनयुग्ममात्रमासीत् ॥ ६ ॥ कुसुमयन्फलिनीरलिनीरवैर्मदविकाशिभिराहितहुंकृतिः। उपवनं निरभर्त्सयत प्रियान्वियुवतीर्युवतीः शिशिरानिलः ॥ ७ ॥ उपचितेषु परेष्वसमर्थतां व्रजति कालवशाद्बलवानपि। तपसि मन्दगभस्तिरभीषुमान्नहि महाहिमहानिकरोऽभवत् ॥ ८ ॥ अभिषिषेणयिषुं भुवनानि यः स्मरमिवाख्यत लोध्ररजश्चयः। क्षुभितसैन्यपरागविपाण्डुरद्युतिरयं तिरयन्नुदभूद्दिशः ॥ ९ ॥ शिशिरमासमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः। इति धियास्तरुषः परिरेभिरे घनमतो नमतोऽनुमतान्प्रियाः ॥ १० ॥ अधिलवङ्गममी रजसाधिकं मलिनिताः सुमनोदलतालिनः। स्फुटमिति प्रसवेन पुरो हसत्सपदि कुन्दलता दलतालिनः ॥ ११ ॥ द्वारं गृहस्य पिहितं शयनस्य पार्श्वे वह्निर्ज्वलत्युपरि तूलपटो गरीयान्। अङ्गानुकूलमनुरागवशं कलत्रमित्थं करोति किमसौ स्वपतस्तुषारः ॥१२॥ वह्नेः शक्तिर्जलमिव गता दर्शनादाहवृत्तेर्नित्योद्गन्धे नवमरुचके वर्तते पुष्पकार्यम्।

शीतत्रासं दधदिव रविर्याति सिन्धोः कृशानुः शीतैर्भीता इव च दिवसाः सांप्रतं संकुचन्ति ॥ १३ ॥ पीनोत्तुङ्गपयोधराः परिलसत्संपूर्णचन्द्राननाः कान्ता नैव गृहे गृहे न च दृढं जात्यं न काश्मीरजम् । ताम्बूलं न च तूलिका न च पटीतैलं न गन्धाविलं सद्यो गोघृतपाचिता न वटकाः शीतं कथं गम्यते ॥ १४ ॥ चूल्लीसीमानि गोत्रसान्द्रमशनं भुक्त्वा परीतोऽर्भकैरभ्यासे स्वकृषीक्षुयन्त्रनिनदं हर्षात्समाकर्णयन् । शेते संहति गोगणोष्मणि गृहे स्रस्ताम्बरां गेहिनीमालिङ्ग्यागणयन्निशासु गणमन्योड्डामरः पामरः ॥ १५ ॥ **दृङ्मीलनक्रीडा** ॥ न पाणिप्रच्छाद्यं नयनयुगमत्यायतमिदं नितम्बस्यौदार्यात्त्वरितगतियोगोऽप्यसुलभः । अतिस्वल्पौ पाणिस्तनभरानिरोधान्न मिलितौ निमीलक्रीडायां कलुषयसि मुग्धे किमिति नः ॥ १६ ॥ नैतस्याः प्रसृतिद्वयेन सरले शक्ये पिधातुं दृशौ सर्वत्रैव विलोक्यते मुखशशिज्योत्स्नावितानैरियम् । इत्थं बालतया सखीभिरसकृद्दृङ्मीलनाकेलिषु व्याकीर्णौ रजनीमुखे न नयने स्वे गर्हते कन्यका ॥ १७ ॥ **शिशिरवायवः** ॥ केशानाकलयन्दृशौ मुकुलयन्वासो बलादाक्षिपन्नातन्वन्पुलकोद्गमं प्रकटयन्नावेगकम्पं गतेः । बारंवारमुदारसीत्कृतिभरैर्दन्तच्छदं पीडयन्प्रायः शैशिर एष संप्रति मरुत्कान्तासु कान्तायते ॥१८॥चुम्बन्तो गण्डभित्तीरलकवति मुखे सीत्कृतान्यादधाना वक्षः सत्कञ्चुकेषु स्तनभरपुलकोद्भेदमापादयन्तः । ऊरूनाकम्पयन्तः पृथुजघनतटात्संश्रयन्तोंऽशुकानि व्यक्ताः कान्ताजनानां विटचरितभृतः शैशिरा वान्ति वाताः ॥ १९ ॥ **शिशिरपथिकः** ॥ पुण्याग्नौ पुण्यवाञ्छः प्रथममगणितप्रोषदोषः प्रदोषे पान्थः सुप्त्वा यथेच्छं तदनु च सतृणे धामनि ग्रामदेव्याः । उत्कम्पी कर्पटार्धे रजनिपरिवृढे छिद्रविच्छिद्रनिद्रे वाते वाति प्रकामं हिमकणनिकणत्कोणतः कोणमेति ॥ २० ॥ सविष्टो ग्रामदेव्याः कुचवटितघटीकुड्यकोणैकदेशे शीने संवाति वायौ हिमकणिनि रणद्दन्तपङ्क्तिद्वयाग्रः । पान्थः कन्थां निशीथे परिकुपितजरद्वृत्संतानगुर्वीग्रावापादाग्रजानुग्रहणचटचटत्कर्पटा प्रावृणोति ॥ २१ ॥ आरात्कारीपवह्नेर्विविधचिततृणप्रस्तरात्तन्निषण्णैः संशीर्णग्रन्थिकन्थाविवरवशविशच्छीतवाताभिभूतैः । नीता कृच्छ्रेण पान्थैः श्वभिरिव निविडं जानुसंकोचकुब्जैरन्तर्दुर्वारदुःखद्विगुणतरकृता यामयामास्त्रियामाः ॥ २२ ॥

---

## स्त्रीस्वभावनिन्दा ।

अनृतं साहसं माया मूर्खत्वमतिलोभता । अशौच निर्दयत्वं न स्त्रीणां दोषाः स्वभावजाः ॥ १ ॥ स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः । घ्नन्त्यल्पार्थेऽपि विश्रब्धं पतिं भ्रातरमप्युत ॥ २ ॥ स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः । पुरुषाणां तु

---

१ [illegible] २ [illegible] ३ [illegible] ४ [illegible]

पाण्डित्यं शास्त्रेणैवोपदिश्यते ॥ ३ ॥ विधायालीकविश्रम्भमज्ञेषु त्यक्तसौहृदाः । नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः ॥ ४ ॥ जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमम् । हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ ५ ॥ स्त्रीणां द्विगुण आहारो लज्जा चापि चतुर्गुणा । साहसं षड्गुणं चैव कामश्चाष्टगुणः स्मृतः ॥ ६ ॥ अन्तःक्रूराः सौम्यमुखा अगाधहृदयाः स्त्रियः । अन्तर्विषा बहिःसौम्या भक्ष्या विषकृता इव ॥ ७ ॥ कामनाम्ना किरातेन वितता मूढचेतसाम् । नार्यो नरविहंगानामङ्गबन्धनवागुराः ॥ ८ ॥ दर्शनाद्धरते चित्तं स्पर्शनाद्धरते धनम् । संगमाद्धरते सत्त्वं नारी प्रत्यक्षराक्षसी ॥ ९ ॥ चतुरः सृजतः पूर्वमुपायास्तेन वेधसा । न सृष्टः पञ्चमः कोऽपि गृह्यन्ते येन योषितः ॥ १० ॥ स्त्रियस्तु यः कामयते संनिकर्षं च गच्छति । ईषत्प्रकुरुते सेवां तं तमिच्छन्ति योषितः ॥ ११ ॥ स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः । तेन नारद नारीणां सतीत्वमुपजायते ॥ १२ ॥ यो मोहान्मन्यते मूढो रक्तेयं मम कामिनी । स तस्या वशगो नित्यं भवेत्क्रीडाशकुन्तवत् ॥ १३ ॥ तासां वाक्यानि कृत्यानि स्वल्पानि सुगुरूण्यपि । करोति यः कृतैर्लोके लघुत्वं याति सर्वतः ॥ १४ ॥ अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च । मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति सर्वदा ॥ १५ ॥ नासां कश्चिदगम्योऽस्ति नासां च वयसि स्थितिः । विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥ १६ ॥ रक्तोऽभिजायते भोग्यो नारीणां शाटको यथा । घृष्यते यो दशालम्बी नितम्बे विनिवेशितः ॥ १७ ॥ अलक्तको यथा रक्तो निष्पीड्य पुरुषस्तथा । अबलाभिर्बलाद्रक्तः पादमूले निपात्यते ॥ १८ ॥ शम्बरस्य च या माया या माया नमुचेरपि । बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः ॥ १९ ॥ हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्त्यपि । अप्रियं प्रियवाक्यैश्च गृह्णन्ति कालयोगतः ॥ २० ॥ उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः । स्त्रीबुद्ध्या न विशिष्येत तस्माद्रक्ष्याः कथं हि ताः ॥ २१ ॥ अनृतं सत्यमित्याहुः सत्यं चापि तथानृतम् । इति यास्ताः कथं धीरैः संरक्ष्याः पुरुषैरिह ॥ २२ ॥ अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः । गुञ्जाफलसमाकारा योषितः केन निर्मिताः ॥ २३ ॥ यदि स्यात्पावकः शीतः प्रोष्णो वा शशलाञ्छनः । स्त्रीणां तदा सतीत्वं स्याद्यदि स्याद्दुर्जनो हितः ॥ २४ ॥ या भार्या दुष्टचरिता सततं कलहप्रिया । भार्यारूपेण सा ज्ञेया विदग्धैर्दारुणा जरा ॥ २५ ॥ तस्मात्सर्वप्रयत्नेन नामापि परिवर्जयेत् । स्त्रीणामिह हि सर्वासां य इच्छेत्सुखमात्मनः ॥ २६ ॥ के नाम न विनश्यन्ति मिथ्याज्ञानान्वितम्बिनीम् । रम्यां बुद्ध्वोपसर्पन्ति ये ज्वालां शलभा इव ॥ २७ ॥ यदन्तरतन्न जिह्वायां यज्जिह्वायां न तद्बहिः । यद्बहिस्तन्न कुर्वन्ति विचित्र-

---

१ कपटविश्वासम्. २ जारिण्य. ३ स्वेच्छावृत्तयः. ४ सह. ५ भिल्लेन. ६ प्रसृताः. ७ नरा एव विहगा पक्षिणस्तेषाम्. ८ पाशा. ९ बलम्.

चरिताः स्त्रियः ॥ २८ ॥ ताडिता अपि दण्डेन शस्त्रैरपि विखण्डिताः । न वशं योषितो यान्ति न दानैर्न च संस्तवैः ॥२९॥ आस्तां तावत्किमन्येन दौरात्म्येनात्र योषिताम् । विधृतं स्वोदरेणापि घ्नन्ति पुत्रमपि स्वकम् ॥ ३० ॥ रूक्षायां स्नेहसमारं कठोरायां सुमार्दवम् । नीरसायां रसं बालो बालिकायां विकल्पयेत् ॥ ३१ ॥ भोजनाच्छादने दद्यादृतुकाले च सगमम् । भूषणाद्यं च नारीणां न ताभिर्मन्त्रयेत्सुधीः ॥ ३२ ॥ यत्र स्त्री यत्र कितवो बालो यत्र प्रशासिता । राजन्निर्मूलतां याति तद्गृह भार्गवोऽब्रवीत् ॥३३॥ तावत्स्यात्सुप्रसन्नास्यस्तावद्गुरुजने रतः । पुरुषो योषितां यावन्न शृणोति वचो रहः ॥ ३४ ॥ एताः स्वार्थपरा नार्यः केवलं स्वसुखे रताः । न तासां वल्लभः कोऽपि सुतोऽपि स्वसुखं विना ॥ ३५ ॥ यदि स्याच्छीतलो वह्निश्चन्द्रमा दहनात्मकः । सुस्वादः सागरः स्त्रीणां तत्सतीत्व प्रजायते ॥ ३६ ॥ संगतानि मृगाक्षीणा तडिद्विलसितान्यपि । क्षणद्वयं न तिष्ठन्ति धनारब्धान्यपि स्वयम् ॥ ३७ ॥ उत्तमानामपि स्त्रीणां विश्वासो नैव विद्यते । राजप्रियाः कैरविण्यो रमन्ते मधुपैः सह ॥ ३८ ॥ न लज्जा न विनीतत्वं न दाक्षिण्यं न भीरुता । प्रार्थनाभाव एवैकः सतीत्वकारणं स्त्रियाः ॥ ३९ ॥ न दानेन न मानेन नार्जवेन न सेवया । न शस्त्रेण न शास्त्रेण सर्वार्थाविषयाः स्त्रियः ॥ ४० ॥ सुरूपं पुरुषं दृष्ट्वा भ्रातर यदि वा सुतम् । योनिः क्लिद्यति नारीणामामपात्रमिवाम्भसा ॥ ४१ ॥ पालितेषु च वृद्धेषु पुंसः का नाम कामिता । भैषज्यमिव मन्यन्ते यदन्यमनसः स्त्रियः ॥ ४२ ॥ न स्त्रीणामप्रियः कश्चित्प्रियो वापि न विद्यते । गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥४३॥ कुलीना रूपवत्यश्च नाथवत्यश्च योषितः । मर्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ॥ ४४ ॥ समयज्ञानर्थवन्तः प्रतिरूपान्वशे स्थितान् । पतीनां तटमासाद्य नालं नार्यः प्रतीक्षितुम् ॥ ४५ ॥ न भयान्नाप्यनुक्रोशान्नार्थहेतोः कथंचन । न ज्ञातिकुलसंबन्धाः स्त्रियस्तिष्ठन्ति भर्तृषु ॥ ४६ ॥ माद्यति प्रमदा दृष्ट्वा सुरां पीत्वा न माद्यति । यस्माद्दृष्टिमदा नारी तस्मात्तां परिवर्जयेत् ॥ ४७ ॥ यौवने वर्तमानानां मृष्टाभरणवाससाम् । नारीणा स्वैरवन्तीना स्पृहयन्ति कुलस्त्रियः ॥ ४८ ॥ या हि शश्वद्बहुमता रक्षन्ति दयिताः स्त्रियः । अपि ताः संप्रसज्जन्ते कुब्जान्धजडवामनैः ॥ ४९ ॥ पङ्गुष्वपि च देवर्षे ये चान्ये कुत्सिता जनाः । स्त्रीणामगम्यो लोकेऽस्मिन्नास्ति कश्चिन्महामुने ॥ ५० ॥ यदि पुंसां गतिर्ब्रह्मन्कथंचिदुपपद्यते । अथान्योन्यं प्रवर्तन्ते न च तिष्ठन्ति भर्तृषु ॥ ५१ ॥ अलाभात्पुरुषाणां हि भयात्परिजनस्य च । वधबन्धभयाच्चैव तथा गुप्ता हि योषितः ॥ ५२ ॥ लोकानामपि दातारं कर्तारं मानसान्त्वयोः । रक्षितारं न मृष्यन्ति भर्तारं परमस्त्रियः ॥ ५३ ॥ न कामभोगान्बहुलान्नालंकारार्थसञ्चयान् । तथाहि बहु मन्यन्त यथा रत्याः परिग्रहः ॥ ५४ ॥ असद्धर्मस्त्वयं स्त्रीणामस्माकं भवति प्रभो । पापीयसो नरान्यद्वै

लज्जां त्यक्त्वा भजन्ति ताः ॥ ५५ ॥ अविद्वांसमलं लोके विद्वांसमपि वा पुनः । प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥ ५६ ॥ यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः । स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥ ५७ ॥ यस्य जिह्वासहस्रं स्याज्जीवेत्साग्रशतं च यः । अनन्यकर्मा स्त्रीदोषात्सोऽप्यनुक्त्वालयं व्रजेत् ॥ ५८ ॥ न विषेण न शस्त्रेण नाग्निना न च मृत्युना । अप्रतीकारपारुष्याः[1] स्त्रीभिरेव स्त्रियः कृताः ॥ ५९ ॥ नयनविकारैरन्यं वचनैरन्यं विचेष्टितैरन्यम् । रमयति सुरतेनान्यं स्त्रीबहुरूपाणि जायते कस्याः ॥ ६० ॥ स्त्रीषु न रागः कार्यो रक्तं पुरुषं स्त्रियः परिभवन्ति । रक्तैव हि रन्तव्या विरक्तभावा तु हातव्या ॥ ६१ ॥ हृदयं हरन्ति नार्यो मुनेरपि भ्रूकटाक्षविक्षेपैः । दोर्मूलनाभिदेशं प्रदर्शयन्त्यो महाचपलाः ॥ ६२ ॥ सुमुखेन वदन्ति वल्गुना प्रहरन्त्येव शितेन चेतसा । मधु तिष्ठति वाचि योषितां हृदये हालहलं महद्विषम् ॥ ६३ ॥ अतएव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते । पुरुषैः सुखलेशवञ्चितैर्मधुलुब्धैः कमलं यथालिभिः ॥ ६४ ॥ गुणाश्रयं कीर्तियुतं च कान्तं पतिं विधेयं सधनं रतिज्ञम् । विहाय शीघ्रं वनिता व्रजन्ति नरान्तरं शीलगुणादिहीनम् ॥ ६५ ॥ समुद्रवीचीव[2] चलस्वभावाः संध्याभ्रलेखेव[3] मुहूर्तरागाः । स्त्रियो हृतार्थाः पुरुषं निरर्थं निष्पीडितालक्तकवत्त्यजन्ति[4] ॥ ६६ ॥ स्त्रियो हि मूलं निधनस्य[5] पुंसः स्त्रियो हि मूलं व्यसनस्य[6] पुंसः । स्त्रियो हि मूलं नरकस्य पुंसः स्त्रियो हि मूलं कलहस्य पुंसः ॥ ६७ ॥ अपण्डितास्ते पुरुषो मता मे ये स्त्रीषु च श्रीषु च विश्वसन्ति । श्रियो हि कुर्वन्ति तथैव नार्यो भुजंगकन्यापरिसर्पणानि ॥ ६८ ॥ अन्यं मनुष्यं हृदयेन कृत्वा अन्यं ततो दृष्टिभिराह्वयन्ति । अन्यत्र मुञ्चन्ति मदप्रसेकमन्यं शरीरेण च कामयन्ते ॥ ६९ ॥ नातिप्रसङ्गः प्रमदासु कार्यो नेच्छेद्बलं स्त्रीषु विवर्धमानम् । अतिप्रसक्तैः पुरुषैर्यतस्ताः क्रीडन्ति काकैरिव लूनपक्षैः ॥ ७० ॥ कुर्वन्ति तावत्प्रथमं प्रियाणि यावन्न जानन्ति नरं प्रसक्तम् । ज्ञात्वाथ तं मन्मथपाशबद्धं ग्रस्तामिषं मीनमिवोद्धरन्ति ॥ ७१ ॥ संमोहयन्ति मदयन्ति विडम्बयन्ति निर्भर्त्सयन्ति रमयन्ति विषादयन्ति । एताः प्रविश्य सदयं हृदयं नराणां किं नाम वामनयना न समाचरन्ति ॥ ७२ ॥ स्त्रीणामशिक्षितपटुत्वममानुषीणां संदृश्यते किमुत याः परिबोधवत्यः । प्रागन्तरिक्षगमनात्स्वमपत्यजातमन्यद्द्विजैः परभृताः किल पोषयन्ति ॥ ७३ ॥ अनङ्कुरितकूर्चकः[7] स तु सितोत्पलाढ्य पयः[8] स एव धृतकूर्चकः सलवणाम्बुतक्रोपमः । स एव सितकूर्चकः क्वथितगुग्गुलोद्वेगकृद्भवन्ति हरिणीदृशां प्रियतमेषु भावास्त्रयः[9] ॥ ७४ ॥ शृणु हृदय रहस्यं यत्प्रशस्तं मुनीनां न खलु न खलु योषि-

१ प्रतीकाररहित पारुष्यं क्रौर्यं यासां ताः. २ तरङ्गः. ३ सायंतनाभ्रमिव क्षणमनुरागिण्यः. ४ निष्पीडितलाक्षारसरञ्जितकार्पासवत्. ५ मरणस्य. ६ दुःखस्य. ७ अनुद्गतश्मश्रूः. ८ खण्डशर्करायुक्तं दुग्धमिव सुखावहः. ९ सितकूर्चकस्तु स्त्रीणां क्वथितगुग्गुलवदुद्वेगजनकः. न कथमपि संतोषजनक इत्यर्थः.

त्संनिधिः संविधेयः। हरति हि हरिणाक्षी क्षिप्रमक्षिक्षुरप्रैः पिहितशयतनुत्रं चित्तमप्युत्तमानाम् ॥ ७५ ॥ शास्त्रज्ञोऽपि प्रकटविनयोऽप्यात्मबोधेऽपि गाढं संसारेऽस्मिन्भवति विरलो भाजनं सद्गतीनाम्। येनैतस्मिन्निरयनगरद्वारमुद्घाटयन्ती वामाक्षीणां भवति कुटिला भ्रूलताकुञ्चिकेव ॥ ७६ ॥ अपसरत रे दूरादस्मात्कटाक्षविषानलात्प्रकृतिविषयाद्योपित्सर्पाद्विलासफणाभृतः। इतरफणिना दष्टः शक्यश्चिकित्सितुमौषधैश्चटुलवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः ॥ ७७ ॥ स्वातन्त्र्य पितृमन्दिरे च वसतिर्यात्रोत्सवे संगतिर्गोष्ठीपूरुषसंनिधाननियमो वासो विदेशे तथा। संसर्गः सह पुंश्चलीभिरसकृद्वृत्तेर्निजायाः क्षतिः पत्युर्वार्धकमीर्षितं प्रवसनं नाशस्य हेतुः स्त्रियः ॥ ७८ ॥ अग्राह्यं हृदयं तथैव वदनं यद्दर्पणान्तर्गतं भावः पर्वतसूक्ष्ममार्गविषमः स्त्रीणा न विज्ञायते। चित्तं पुष्करपत्रतोयतरलं विद्वद्भिराशंसितं नारी नाम विषाङ्कुरैरिव लतादोषैः समं वर्धिता ॥ ७९ ॥

एकेन स्मितपाटलाधररुचो जल्पन्त्यनल्पाक्षरं वीक्षन्तेऽन्यमितः स्फुटत्कुमुदिनीफुल्लोल्लसल्लोचनाः। दूरोदारचरित्रचित्रविभवं ध्यायन्ति चान्यं धिया केनेत्थं परमार्थतोऽर्थवदिव प्रेमास्ति वामभ्रुवाम् ॥ ८० ॥ कार्कश्यं स्तनयोर्दृशोस्तरलतालीकं मुखे दृश्यते कौटिल्यं कचसंचये प्रवचने मान्द्य त्रिके स्थूलता। भीरुत्वं हृदये सदैव कथितं मायाप्रयोगः प्रिये यासां दोषगुणो गुणा मृगदृशां ताः किं नराणां प्रियाः ॥ ८१ ॥ भर्ता यद्यपि नीतिशास्त्रनिपुणो विद्वान्कुलीनो युवा दाता कर्णसमः प्रसिद्धविभवः शृङ्गारदीक्षागुरुः। स्वप्राणाधिककल्पिता स्ववनिता स्नेहेन संलालिता तं कान्तं प्रविहाय सैव युवती जारं पतिं वाञ्छति ॥ ८२ ॥ आलापैर्मधुरैश्च काश्चिदपरानालोकितैः सस्मितैरन्यान्विभ्रमकल्पनाभिरितरानङ्गैरनङ्गोज्ज्वलैः। आचारैश्चतुरैः परानभिनवैरन्यान्भ्रुवः कम्पनैरित्थं काश्चन रञ्जयन्ति सुदृशो मन्ये मनस्त्वन्यथा ॥ ८३ ॥ हासस्तत्कलिकाप्रदीपनपटुर्हस्ताङ्घ्रिनेत्राननं तन्वङ्ग्या विषजातमेव भुजगी वेणी च रोमावलिः। किं च श्रीफलमुन्नतस्तनभरः कामं मनस्तामिमा सर्वाकारविषोग्रमूर्तिमबला प्राप्यापि यज्जीवति ॥ ८४ ॥ मुक्ताहारलतारणन्मणिमया हैमास्तुलाकोटयो रागः कुङ्कुमसंभवः सुरभयः पौष्प्यो विचित्राः स्रजः। वासश्चित्रदुकूलमल्पमतिभिर्नार्यामहो कल्पितं बाह्यान्तः परिपश्यता तु निरयो नारीति नाम्ना कृतः ॥ ८५ ॥ आवर्तः संशयानामविनयभवनं पत्तनं साहसानां दोषाणां संनिधानं कपटशतमयं क्षेत्रमप्रत्ययानाम्। दुर्ग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरण्डं स्त्रीयन्त्रं केन लोके विषममृतमयं धर्मनाशाय सृष्टम् ॥ ८६ ॥

---

१ समागमः २ प्रवास. ३ चित्ताभिप्रायः ४ पर्वतस्थसूक्ष्ममार्गवदतिकठिण. ५ कमलपत्रगतजलबिन्दुवच्चञ्चलम्. ६ उपदेष्टा.

## सतीवर्णनम् ।

यस्य भार्या शुचिर्दक्षा भर्तारमनुगामिनी । नित्यं मधुरवक्त्री च सा रमा न रमा रमा ॥ १ ॥ नित्यं स्नाता सुगन्धा च नित्यं च प्रियवादिनी । अल्पभुक्ताल्पवक्त्री च देवता सा न मानुषी ॥ २ ॥ असारभूते संसारे सारभूता नितम्बिनी । इति संचिन्त्य वै शंभुरर्धाङ्गे पार्वतीं दधौ ॥ ३ ॥ सैव साध्वी सुभक्तश्च सुस्नेहः सरसोज्ज्वलः । पाकः संजायते यस्याः करादप्युदरादपि ॥ ४ ॥ रूपसंपन्नमग्राम्यं प्रेमप्रायं प्रियंवदम् । कुलीनमनुकूलं च कलत्रं कुत्र लभ्यते ॥ ५ ॥ न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । गृहं तु गृहिणीहीनं कान्तारादतिरिच्यते ॥ ६ ॥ वृक्षमूलेऽपि दयिता यत्र तिष्ठति तद्गृहम् । प्रासादोऽपि तया हीनो ह्यरण्यसदृशः स्मृतः ॥ ७ ॥ तावत्कुलस्त्रीमर्यादा यावल्लज्जावगुण्ठनम् । हृते तस्मिन्कुलस्त्रीभ्यो वरं वेश्याङ्गनाजनः ॥ ८ ॥ कार्ये दासी रतौ वेश्या भोजने जननीसमा । विपत्तौ बुद्धिदात्री च सा भार्या सर्वदुर्लभा ॥ ९ ॥ वश्यभावेन सुमनाः सुव्रता सुसमाहिता । अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ॥ १० ॥ या नारी प्रवृता दक्षा या नारी पुत्रिणी भवेत् । पतिव्रता पतिप्राणा सा नारी धर्मचारिणी ॥ ११ ॥ न कार्येषु न भोगेषु नैश्वर्ये न सुखे तथा । स्पृहा स्याच्च यथा भर्तुः सा नारी सुखभागिनी ॥ १२ ॥ कल्पोत्थानपरा नित्यं गुरुशुश्रूषणे रता । सुसंमृष्टगृहा चैव गोशकृत्कृतलेपना ॥ १३ ॥ श्वश्रूः श्वशुरयोः पादौ तोषयन्ती पतिव्रता । मातापितृपरा नित्यं या नारी सा पतिव्रता ॥ १४ ॥ पतिर्हि देवो नारीणां पतिर्बन्धुः पतिर्गतिः । पत्युर्गतिसमानास्ति दैवतं वा यथा पतिः ॥ १५ ॥ बालया वा युवत्या वा वृद्धया वापि योषिता । न स्वातन्त्र्येण कर्तव्यं किंचित्कार्यं गृहेष्वपि ॥ १६ ॥ नास्ति स्त्रीणां पतिर्यज्ञो न व्रतं नाप्युपोषणम् । पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ १७ ॥ पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा । पतिं लोकमभीप्सन्ती नाचरेत्किंचिदप्रियम् ॥ १८ ॥ सदा प्रहृष्टया भाव्यं गृहकार्ये च दक्षया । सुसंस्कृतोपस्करया व्यये चामुग्धहस्तया ॥ १९ ॥ जीवति जीवति नाथे मृते मृता या मुदा युता मुदिते । सहजस्नेहरसाला कुलवनिता केन तुल्या स्यात् ॥ २० ॥ प्रतिरजनि प्रतिदिवसं विरहबहिश्चण्डिडिण्डिमं दत्त्वा । कोणवधूदृग्वलितैर्विश्वं पुनराकुलीभवति ॥ २१ ॥ दीपदशा कुलयुवती वैदग्ध्येनैव मलिनतामेति । दोषा अपि भूषायै गणिकायाः शशिकलायाश्च ॥ २२ ॥ प्रतिपक्षेणापि पतिं सेवन्ते भर्तृवत्सलाः साध्व्यः । अन्यसरितां शतानि हि समुद्रगाः प्रापयन्त्यब्धिम् ॥ २३ ॥ तल्पे प्रभुरिव गुरुरिव मनसिजशास्त्रे श्रमे भुजिष्येव । गेहे श्रीरिव गुरुजनपुरतो मूर्तेव सा

१ पवित्रा. २ लक्ष्मी.. ३ पक्वान्नम्; (पक्षे) बालक. ४ सौन्दर्यपूर्णम्. ५ सद्व्यवहारचतुरम्. ६ प्रेमबहुलम् ७ मधुरभाषि. ८ कुटुम्बम्. ९ लज्जयावगुण्ठनं सवरणम्.

व्रीडा ॥ २४ ॥ ढक्कामाहत्य मदं वितन्वते करिण इव चिरं पुरुषाः । स्त्रीणां करिणीनामिव मदः पुनः स्वकुलनाशाय ॥ २५ ॥ अकरुण कातरमनसा दर्शितनीरा निरन्तरालेयम् । त्वामनुधावति विमुखं गङ्गेव भगीरथं दृष्टिः ॥ २६ ॥ परपतिनिर्दयकुलटा शोषितशठनेर्ष्यया न कोपेन । दग्धममतोपतप्ता रोदिमि तव तानवं वीक्ष्य ॥ २७ ॥ कार्येषु मन्त्री करणेषु दासी भोज्येषु माता शयनेषु रम्भा । धर्मानुकूला क्षमया धरित्री भार्या च षाड्गुण्यवतीह दुर्लभा ॥ २८ ॥ बहिर्न लोला दृगपाङ्गमूलादुपैति कूलादिव सागरोर्मि । न वा सतीनामभिलाषबन्धं व्यनक्ति गन्धं कलिकेव चेतः ॥ २९ ॥ लज्जावशाच्च नतमन्थरदृष्टिपातं यैश्चुम्बितं कुलवधूवदनारविन्दम् । तेषामनेकपुरुषव्रणिताधरेषु शक्तिः कथं भवति वेशवधूमुखेषु ॥३०॥ नातः परं कुलमतः परतो न शीलं नातः परं च करुणासदनं मृगाक्ष्याः । यद्बाष्पबिन्दुरपरा धवतोऽपि पत्युरुत्सङ्गितेन चरणेन तयापि निन्ये ॥ ३१ ॥ मानाग्निवर्धनमहौषधमेतदेव स्त्रीणां सपत्नवनिताह्वयकीर्तनं यत् । अव्याजनिर्भरभयप्रणतोत्तराणां मन्ये विशेषत इदं कुलकन्यकानाम् ॥ ३२ ॥ पदन्यासो गेहाद्बहिरहिफणारोपणसमो निजावासादन्यद्भवनमपरद्वीपतुलितम् । वचो लोकालभ्यं कृपणधनतुल्यं मृगदृशः पुमानन्यः कान्ताद्विधुरिव चतुर्थीसमुदितः ॥ ३३ ॥ चतुर्थेऽह्नि स्नातां त्रिदिनविरहात्पाण्डुवदना रजोमुक्तां तन्वी चपलनयनां कामकलिकाम् । हिमत्वङ्मार्जारी मलयभवगन्धप्रणयिनीमधन्यः को भुङ्क्ते च्युतकुसुमशेषामिव लताम् ॥ ३४ ॥ गतागतकुतूहलं नयनयोरपाङ्गावधि स्मितं कुलनतभ्रुवामधर एव विश्राम्यति । वचः प्रियतमश्रुते रतिभिरेव कोपक्रमः कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥ ३५ ॥ भक्तिः प्रेयसि संश्रितेषु करुणा श्वश्रूषु नम्रं शिरः प्रीतिर्यातृषु गौरवं गुरुजने क्षान्तिः कृतागस्यपि । अम्लाना कुलयोषितां व्रतविधिः सोऽयं विधेयः पुनर्मद्भर्तुर्दयिता इति प्रियसखीबुद्धिः सपत्नीष्वपि ॥ ३६ ॥ अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता तत्पादार्पितदृष्टिरासनविधिस्तस्योपचर्या स्वयम् । सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च शय्यामिति प्राच्यैः पुत्रि निवेदितः कुलवधूसिद्धान्तधर्मागमः ॥ ३७ ॥ शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः । भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ ३८ ॥ साध्वी शीलवती दयावसुमती दाक्षिण्यलज्जावती तन्वी व्याजपराङ्मुखी स्मितवती मुग्धा प्रियालापिनी । देवब्राह्मणबन्धुसज्जनरता यस्यास्ति भार्या गृहे तस्यार्थागमकाममोक्षफलदां कुर्वन्ति पुण्यप्रियाः ॥ ३९ ॥ निर्व्याजादपि तेन तादृषु नता श्वश्रूषु भक्ता भव स्निग्धा बन्धुषु वत्सला परिजने स्मेरा

---

१ सर्पः. २. स्वगृहात्. ३ कान्तात्प्रियादन्य. पुमान्वरदचतुर्थ्युदितश्चन्द्र इव दर्शनानर्ह इत्यर्थः. ४ भर्तरि ५ आश्रितेषु. ६ क्षमा. ७ अपराधिनि. ८ प्रफुल्लवदना ९ पूजा. १० त्यजेत्.

सपत्नीष्वपि । भर्तुर्मित्रजने सनम्रवचना खिन्ना च तद्वैरिपु प्रायः संवननं नतभ्रु तदिदं वीतौषधं भर्तृषु ॥ ४० ॥ स्नानाम्भो बहुसाधिता रसवती देवाग्निकार्योचितः संभारो रचितो विशुद्धवसने कालोचिते योजिते । स्नानं नाथ विधीयतामतिथयः सीदन्ति नान्या त्वरा धन्यं बोधयते शनैरिति पतिं मध्याह्नसुप्तं सती ॥ ४१ ॥ संचारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतं चेतः कान्तसमीहितावधि महामानोऽपि मौनावधि । हास्यं चाधरपल्लवावधि पदन्यासावधि प्रेक्षितं सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं केवलम् ॥ ४२ ॥ शुश्रूषामनुरुन्धती गुरुजने वाक्ये ननान्दुः स्थिता दाक्षिण्यैकपरायणा परिजने स्निग्धा सपत्नीष्वपि । सन्नद्धातिथिसत्कृतौ गृहभरे नैस्तन्द्र्यमाबिभ्रती वत्से किंबहुना भजस्व कुशलं भर्तुः प्रिये जाग्रती ॥ ४३ ॥

---

## असतीचरितम् ।

यस्य भार्या विरूपा च कश्मला[1] कलहप्रिया । अधिकाधिकभक्षा च सा जरा[2] न जरा जरा ॥ १ ॥ स्थानं नास्ति क्षणं नास्ति वक्तारमपि सुभ्रुवः । जहार हारकूटेन पयोधरमहीधरः ॥ २ ॥ एषैव योषितां धन्या शीलं च लभते सुखम् । दिवा पतिव्रता भूयो नक्तं च कुलटा यतः ॥ ३ ॥ पर्यङ्कः स्वास्तरणः पतिरनुकूलो मनोहरं सदनम् । तृणमिव लघु मन्यन्ते कामिन्यश्चौर्यरतिलुब्धाः ॥ ४ ॥ दुर्दिवसे[3] घनतिमिरे दुःसंचारासु नगरवीथीषु । पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥ ५ ॥ इह वटवृक्षे यक्षः प्रतिवसति दिवापि यत्र भयशङ्का । तस्मिन्नभिनववध्वा नीता वीतोदयाः क्षणदाः[4] ॥ ६ ॥ सुखशय्या ताम्बूलं विश्रब्धाश्लेषचुम्बनादीनि । तुलयन्ति न लक्षांशं त्वरितक्षणचौर्यसुरतस्य ॥ ७ ॥ दिवसे घटिकास्त्रिंशस्त्रिंशद्धटिकाः परं रजनौ । लक्षं नगरयुवानस्तात विधातः किमाचरितम् ॥ ८ ॥ आरोपिता[5] शिलायामश्मेव त्वं भवेति मन्त्रेण । मग्नापि परिणयापदि[6] जारमुखं वीक्ष्य हसितैव ॥ ९ ॥ कुलपतनं[7] जनगर्हां[8] बन्धनमपि जीवितस्य संदेहम् । अङ्गीकरोति सकलं वनिता परपुरुषसंसक्ता ॥ १० ॥ सखि सुखयत्यवकाशे[9] प्राप्तः प्रेयान्यथा तथा न गृहे । वातादवारितादपि भवति गवाक्षानिलः शीतः ॥ ११ ॥ अम्भोरुहाक्षि शंभोश्चरणावाराधितौ केन । यस्मै विवलितवदना मदनाकूतं विभावयसि ॥ १२ ॥ द्वारि स्तम्भविलग्ना प्रियसखि दृष्टिं पथि क्षिपसि । प्रहिणोषि भाग्यभाजि प्रेयसि दूतीमिव भ्रमरीम् ॥ १३ ॥ सुभगं वदति जनस्तं निजपतिरिति नैष रोचते मह्यम् । पीयूषेऽपि हि भेषजभावोपहिते भवत्यरुचिः ॥ १४ ॥ इह नगरे प्रतिरथ्यं[10] भुजंग[11]संबाध[12]रुचिरसंचारे । सुन्दरि मम मतमेतन्नकुल[13]प्रतिपा-

---

१ अमङ्गला २ वृद्धत्वम्. ३ दुर्दिने. ४ रात्रयः. ५ स्थापिता ६ परिणयरूपायामापदि संकटे. ७ भ्रष्टताम्. ८ निन्दाम्. ९ अवसरे. १० रथ्यायां रथ्यायाम्. ११ सर्पाः; (पक्षे) जाराः. १२ समर्द.. १३ नकुलस्य पालनम्; (पक्षे) न इति पदच्छेदः कुलप्रतिपालनं न श्रेय .

लनं श्रेयः ॥ १५ ॥ केलिः प्रदहति मज्जां शृङ्गारोऽस्थीनि चाटवः क्रकचः । बन्धक्याः परितोषो न स्यादनभीष्टदंपत्योः ॥ १६ ॥ सदिग्धे परलोके जनापवादे च जगति बहुचित्रे । स्वाधीने पररमणे धन्यास्तारुण्यफलभाजः ॥ १७ ॥ यदि भवति दैवयोगात्पुमान्विरूपोऽपि बन्धकी रहसि । न तु कृच्छ्रादपि भद्रं निजकान्तं सा भजत्येव ॥ १८ ॥ यदवधि विद्रुममात्रा विकसितकुसुमोत्करा शणश्रेणी । पीतांशुकप्रियेयं तदवधि पल्लीपतेः पुत्री ॥ १९ ॥ तिमिरेऽपि दूरदृश्या कठिनाश्लेषे च रहसि मुखरा च । दन्तमयवलयरागी गृहपतिशिरसा सह स्फुटतु ॥ २० ॥ एष्यति मा पुनरयमिति गमने यदमङ्गलं मयाकारि । अधुना तदेव कारणमवस्थितौ दग्धगेहपतेः ॥ २१ ॥ ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरी[१] सनाथकरम् । पश्यन्त्या भवति[२] मुहुर्नितरां मलिना मुखच्छाया ॥ २२ ॥ मया कुमार्यापि न सुप्तमेकया न जारमुत्सृज्य पुमान्विलोकितः । अनेन गोत्रस्थितिपालनेन मे प्रसन्नतामेतु भवोपकारिणी ॥ २३ ॥ विवादशीलां स्वयमर्थचोरिणीं परानुकूलां बहुपाकपाकिनीम् । आक्रोशिनी दुर्विषहप्रकोपिनीं त्यजन्ति भार्यां दशपुत्रमातरम् ॥ २४ ॥ पाणौ गृहीतापि पुरस्कृतापि स्नेहैः[३] नित्यं परिवर्धितापि । परोपकाराय भवेदवश्यं वृद्धस्य भार्या करदीपिकेव ॥ २५ ॥ प्रियो मयैवावचितैः प्रसूनैर्हृष्टो हरस्थां तनुते सपर्याम् । अतो नतानेकलतावृतानि यास्यामि सायं विपिनानि सख्यः ॥ २६ ॥ निभृतं निभृतं निभालयन्त्या वरुणाशाभरणायितं पतङ्गम् । गुरुयन्त्रितयापि गोपवध्वा नयनान्तेन निमन्त्रितो मुकुन्दः ॥ २७ ॥ शिरसि शिरसिजं दृशोर्निमेषं विटपिनि पल्लवमालये तृणं वा । गणयितुमपि पारयन्ति केचित्प्रियसखि के कथयन्तु जारसंख्याम् ॥ २८ ॥ पतिरतीव धनी सुभगो[४] युवा परविलासवतीषु पराङ्मुखः । शिशुरलंकुरुते भवनं सदा तदपि सा सुदती रुदती कुतः ॥ २९ ॥ नाम्बुजैर्न कुसुमैरुपमेयं[५] स्वैरिणीनयनपङ्कजयुग्मम् । नोदये दिनकरस्य नवेन्दोः केवलं तमसि यस्य विकासः ॥ ३० ॥ दृग्भङ्गभङ्गिमशतैरसतीरहस्यमन्वेषयन्कपटभिक्षुक लक्षितोऽसि । स्वस्य प्रभुर्न च भवांश्च ततः क्षमस्व भिक्षो पटौ कणमिषाद्यमञ्जलिस्ते ॥ ३१ ॥ ब्रह्मैव सत्यमखिलं नहि किंचिदस्ति तस्मान्न मे सखि परावरभेदबुद्धिः । जारे तथा निजवरे सदृशोऽनुरागो व्यर्थं किमर्थमसतीति कदर्थयन्ति ॥ ३२ ॥ जन्मैव मास्तु यदि वा न नितम्बिनीषु तत्रापि चेदहह नैव कुलाङ्गनासु । हा धिग्विधे कुलवधूरथ चेद्भवेयं नैवास्तु च क्वचन मे मनसोऽनुबन्धः ॥ ३३ ॥ गोष्ठेषु तिष्ठति पतिर्बधिरा ननान्दा नेत्रद्वयस्य च न पाटवमस्ति यातुः । इत्थं निशम्य तरुणी कुच-

---

१ अशोककलिका २ अशोकतरुतले कृतसंकेत तत्र गत्वा तदीयमञ्जरीमादाय प्रतिनिवृत्त दृष्ट्वा गृहव्यापारावेशात्स्वकृतसंकेतभङ्गात्स्वापराधभावनया तस्या मुखच्छाया लज्जाया मलिना भवतीत्यर्थः. ३ प्रीत्या; (पक्षे) तैलेन ४ सुन्दरः, (अथ च) सुष्ठु भ नक्षत्र तस्मिन्गच्छति. कुयोग त्यक्त्वा भार्या व्रजति इदमेव रोदनकारणम् ५ उपमातुं योग्यम्.

कुम्भसीम्नि रोमाञ्चकञ्चुकमुदञ्चितमाततान ॥ ३४ ॥ वयं बाल्ये[1] बालांस्तरुणिमनि[2] यूनः परिणतावपीच्छामो[3][4] वृद्धान्परिणयविधौ नः स्थितिरियम् । त्वयारब्धं जन्म क्षपयितुमनेनैकपतिना न मे गोत्रे पुत्रि क्वचिदपि सतीलाञ्छनमभूत् ॥ ३५ ॥ दृशा किंचित्किंचिच्चलितभुजलीलाविलसितैः कराघातैः किंचिन्नखविलिखनैः किंचिदधिकम् । स्पृशन्त्यः संबाधे[5] गुरुभिरनभिप्रेक्षितपथे यथेष्टं चेष्टन्ते[6] स्फुटकुचतटाः पश्य कुलटाः[7] ॥ ३६ ॥ अनार्यप्रज्ञानामिह जनवधूनां हि मनसो महाशल्यं कर्णे तव नवकजम्बूकिसलयः । भ्रमन्भिक्षाहेतोरधिनगरि बुद्धोऽसि न मया त्वयैतावद्देशः पथिक न विधेयः पुनरपि ॥ ३७ ॥ अयं रेवा[8]कुञ्जः[9] कुसुमशरसेवासमुचितः समीरोऽयं वेलानवविदलदेलापरिमलः । इयं प्रावृड् धन्या नवजलदविन्यासचतुरा पराधीनं चेतः सखि किमपि कर्तुं मृगयते ॥ ३८ ॥ गुरुत्रासादासादितभवदुपालम्भवचसां मुहुः स्मारं स्मारं कथमपि निशीथे समगमम् । इदानीं मुञ्च त्वं दयित पुनरेष्यामि समभूदुषःकालीनोऽयं चटुलचटकालीकलकलः ॥ ३९ ॥ स्थितिर्गेहोपान्ते परिजनपरीहासकलना मुहुर्यातायाते सकृदपि गृहे व्याजगमनम् । मुहुस्तद्योग्येऽपि क्षणपरिचयो वस्तुनि दृशः समुत्पन्नप्रेम्णः सकलमिदमापातसुखदम् ॥ ४० ॥ नितम्बिन्यो नित्यं विनयपथविन्यस्तमनसः पताकाः स्युः पुत्रि प्रतिनियतमेताः स्वकुलयोः । गुरोरित्यादेशं सदसि सुदृशामोंकृतवती गतातङ्कं राधा हरिमुखमृगाङ्कं मृगयते ॥ ४१ ॥ अये को जानीते निजपुरुषसङ्गो नहि तथा यथा स्त्रीणा चेतः परपुरुषसङ्गो रमयति । अपि स्वैरं भुक्ता दिवसमखिलं वासरकृता करस्पर्शादिन्दोर्मुकुलयति नेत्राणि नलिनी ॥ ४२ ॥ स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे विलेभे कः प्राणान्रणमखमुखे यं मृगयसे । सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥ ४३ ॥ ताम्बूलाक्तं दशनमसकृद्दर्शयन्तीह चेटी घोटीह्रेषाविकृतविरुतं हेतुहीनं हसन्ती । स्थानस्थानस्खलितपदविन्यासमाभासमाना यूनामग्रे वसति कुटिलं नर्तितोच्चैर्नितम्बम् ॥४४॥ ज्ञाता मैत्री सहजमधुरा यातिभिर्लोचितान्तैः कर्णाकर्णि प्रथितमयशो बन्धुवर्गैरभाणि । संप्रत्येवं तदपि न मनाङ्मुञ्चति प्राणनाथं को जानीते कुवलयदृशः कीदृशः प्रेमबन्धः ॥४५॥ भ्रूभेदैः कतिचिद्गिरा कुटिलया काश्चित्कियत्यः स्मितैः स्वैरिण्यः कथयन्ति मन्मथरसव्यापारवश्यं मनः । कासांचित्पुनरङ्गकेषु मसृणच्छायेषु मध्यस्थितो भावः काचपुटेषु पुष्करमिव प्रव्यक्तमालोक्यते ॥ ४६ ॥ यः कौमारहरः स एव हि वरस्ता[10] एव[11] चैत्रक्षपास्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः । सा चैवास्मि तथापि चौर्यसुरतव्यापारलीलाविधौ रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥ ४७ ॥ दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि प्रायेणास्य शिशोः पिता न विरसाः[12] कौपीरपः पास्यति । एकाकि-

१ बाल्यावस्थायाम्. २ तारुण्ये. ३ वार्धक्ये. ४ इच्छाविषयान्कुर्मः. ५ जनसमर्दे. ६ व्यापार कुर्वते ७ स्वैरिण्य.. ८ नर्मदा. ९ लतागृहम्. १० पतिः ११ श्रेष्ठ.. विलक्षणरतिक्षम इत्यर्थः. १२ कूपसंबन्धिनीः

न्यपि यामि तद्वनमितः स्रोतस्तमालाकुलं नीरन्ध्राः स्तनमालिखन्तु जठरच्छेदानलग्रन्थयः ॥ ४८ ॥ शुश्रूषस्व गुरून्निवर्तय सखीर्वन्दस्व बन्धुस्त्रियः कावेरीतटसंनिविष्टनयने मुग्धे किमुत्ताम्यसि । आस्ते पुत्रि समीप एव भवनादेलालतालिङ्गितन्यञ्चद्वालतमालदन्तुरदरी तत्रापि गोदावरी ॥ ४९ ॥ भद्रं तस्य तरोः स्वयं चिरकृतप्रस्थानक कथ्यतां दुर्वारस्तमरण्यवह्निरदहाद्धिग्दारुणं दुर्वचः । मा खिद्यस्व ततः प्रभृत्यनुदिनं तस्याः पतद्भिर्दृशोरम्भोभिः परिणद्धपल्लवघनच्छायस्तरुर्वर्धते ॥ ५० ॥ स्वामी निःश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीजनः श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः । तद्दूरादयमञ्जलिः किमधुना दृग्भङ्गिभावेन ते वैदग्धीमधुरप्रपञ्चचतुर व्यर्थोऽयमत्र श्रमः ॥ ५१ ॥ आयातासि विमुञ्च वेपथुभरं दृष्टासि केनासि नो नीलं चोलममु विमुञ्च हरतु स्वेदं निशीथानलः । इत्यन्तर्भयसन्नकण्ठमसकृद्यामीति तल्पं गता त्रस्यन्ती परिरभ्यते सुकृतिभिः स्वैरं नवस्वैरिणी॥५२॥ सव्रीडार्धनिरीक्षणा यदुभयोर्यद्दूतिसंप्रेरणमद्य श्वो भविता समागम इति प्रीतिप्रसादं वचः । प्राप्ते कालसमागमे सरभसं जम्बूवनालिङ्गनं तत्कामस्य फलं तदेव सुरतं शेषः पशूनां स्थितिः ॥ ५३ ॥ इन्दुर्यत्र न निन्द्यते न मधुरं दूतीवचः श्रूयते नोच्छ्वासा हृदयं दहन्त्यशिथिला नापैति कार्श्यं वपुः । साधूनामनुकूलिकां स्वगृहिणीमालिङ्ग्य यत्सुप्यते तत्कि प्रेम गृहाश्रमव्रतमिदं कष्टं समाचर्यते ॥ ५४ ॥ चेत्पौरादपि शङ्कसे हिमरुचोरप्यर्चिषो लज्जसे भोगीन्द्रादपि चेद्बिभेषि तिमिरस्तोमादपि त्रस्यसि । चेत्कुञ्जादपि दूयसे जलघटध्वानादपि क्षुभ्यसि प्रायः पुत्रि हतास्मि हन्त भविता त्वत्तः कलङ्कः कुले ॥ ५५ ॥ आः पाकं न करोषि पापिणि कथं पापी त्वदीयः पिता रण्डे जल्पसि किं तवैव जननी रण्डा त्वदीया [1]स्वसा । निर्गच्छ त्वरित गृहाद्बहिरितो नेदं त्वदीयं गृहं हा हा नाथ ममाद्य देहि मरण जारस्य भाग्योदयः ॥ ५६ ॥ कार्ये सत्यपि [2]जातु याति न बहिर्नाप्यन्यमालोकते साध्वीरप्य[3]नुकुर्वती गुरुजनं श्वश्रूं च शुश्रूषते । वि[4]स्रम्भं कुरुते च पत्युरधिकं प्राप्ते निशीथे पुनर्नि[5]द्राणे सकले जने शशिमुखी निर्याति र[6]न्तुं [7]विटैः ॥ ५७ ॥ आकारेण शशी गिरा च प[8]रभृत्पारावतश्चुम्बने हंसश्च[9]ङ्क्रमणे समं दयितया रत्यां प्रमत्तो गजः । इत्थ भर्तरि मे समस्तयुवतिश्लाघ्येऽपि नो रोचते मद्भाग्येन विवाहितः पतिरिति स्यान्नैकदोषो यदि ॥ ५८ ॥ ज्ञातं ज्ञातिजनैः प्रमृष्टमयशो दूरं गता धीरता त्यक्ता ह्रीः प्रतिपादितोऽप्यविनयः साध्वीपदं प्रोज्झितम् । लुप्ता चोभयलोकसाधुपदवी दत्तः कलङ्कः कुले भूयो दूति किमन्यदस्ति यदसावद्यापि नागच्छति ॥ ५९ ॥ देहे दुर्ललितस्य देवरशिशोः स्फोटव्रणो दारुणो यातस्तेन वनस्पतित्वचमुपाहर्तुं मया गम्यते । दृप्यन्तु श्वसितानि घर्मसलिलैः पत्राणि लुप्यन्तु वा

१ भगिनी २ कदाचित् ३ अनुकरण कुर्वाणा. ४ विश्वासम् ५ शयाने. ६ क्रीडितुम्. ७ जारैः. ८ कोकिलः. ९ गमने.

वक्षो वा विलिखन्तु हन्त नखरैः क्रुद्धाः कपिश्रेणयः ॥ ६० ॥ न्यस्तं पन्नगमूर्ध्नि पादयुगलं भक्तिर्विमुक्ता गुरोस्त्यक्ता प्रीतिरकारि किं न भवतो हेतोर्मया दुष्कृतम् । अज्ञानां शतयातना नयनयोः कोऽपि क्रमो रौरवः कुम्भीपाकपराभवश्च मनसा युक्तं त्वयि प्रस्थिते ॥ ६१ ॥ श्वश्रूः पद्मदलं ददाति तदपि भ्रूसंज्ञया गृह्यते सद्यो मर्मरशङ्कया न च तया संस्पृश्यते पाणिना । यातुर्वाचि सुहृद्गणस्य वचसा प्रत्युत्तरं दीयते श्वासः किं तु न मुच्यते हुतवहक्रूरः कुरंगीदृशा ॥ ६२ ॥ नारीणां खलु बन्धुरन्धुतमसः पाथोदरः सोदरः कुञ्जं नाभिगृहं निशा सहचरी सेव्यः स्मरः क्ष्मापतिः । इत्थं चारुचकोरचञ्चलदृशां यासां मतिर्जायते तासामेव यशः सुधांशुधवलं तासां च सौख्यं तदा ॥ ६३ ॥ कोकः स्तोकविमुक्तमौक्तिकभरो निःस्पन्दमिन्दीवरं चापं चामलवर्जितं हिमकरक्रोडे तमः क्रीडति । वातः कातरयत्यपाकृतरसं बन्धूकमेतावता वार्ता कापि कदापि पाणिपिहिता कस्यापि वा तिष्ठति ॥ ६४ ॥ हंसैः शैवलमञ्जरीति कबरी चञ्चूभिराकर्षिता वक्त्रे चन्द्रधिया चकोरवनिता चक्रे नखैरक्रमम् । भृङ्गैः पङ्कजकोरकप्रतिभया वक्षोरुहो वीक्षितस्तन्मातः करवै पुनर्न सरसीतोयावगाहोद्यमम् ॥ ६५ ॥ आस्तां विश्वसनं सखीषु विदिताभिप्रायसारे जने तत्राप्यर्पयितुं दृशं सुरुचिरां शक्नोमि न व्रीडया । लोकोऽप्येष परोपहासकुशलः सूक्ष्मेङ्गितज्ञोऽप्यलं मातः कं शरणं व्रजामि हृदये जीर्णोऽनुरागानलः ॥ ६६ ॥ कार्येणापि विडम्बनं परगृहे श्वश्रूर्न संमन्यते शङ्कामारचयन्ति यूनि भवनं प्राप्ते मिथो यातरः । वीथीनिर्गमनेऽपि तर्जयति च क्रुद्धा ननान्दा पुनः कष्टं हन्त मृगीदृशां पतिगृहं प्रायेण कारागृहम् ॥ ६७ ॥ एकान्ते च तनौ गृहं शशिमुखो यान्यादृशो दृश्यते क्षिप्रं साधय यातु पुत्रि सदने भुक्त्वान्यमावासकम् । श्वश्र्वा संभ्रमिता किलेति बहुशः संप्रेरयन्त्या वधूः पान्थं वीक्ष्य बभञ्ज सस्मितमुखी सैवार्धसिद्धोदनम् ॥ ६८ ॥ एते वारिकणान्किरन्ति पुरुषान्वर्षन्ति नाम्भोधराः शैलाः शाद्वलमुद्वमन्ति न सृजन्त्येते पुनर्नायकान् । त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्धातः कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥ ६९ ॥ संपत्कस्याद्य तारा भवति तरलिता यत्पुरो नेत्रतारा दृष्टा केनाद्य काञ्ची यदभिमुखगता वेपते रत्नकाञ्ची । उग्रः कस्याद्य तुष्टः सखि यदनुमते कश्चिदुग्रोऽनुतापः स्नातं केनाद्य वेणीपयसि विलुलिता यत्कृते कापि वेणी ॥ ७० ॥ पश्यन्ति स्निग्धमुग्धं प्रतिकलमधुरैर्मोहयन्त्यङ्गहारैः साकूतैर्मन्दहासैरपि परपुरुषाञ्शश्वदानन्दयन्ति । चेष्टन्ते चेत एते किमपि परिचयाद्धारयिष्यन्ति तेषां प्राणान्को वेद लोके परजलजदृशां चित्तमत्यन्तलोलम् ॥ ७१ ॥ पृथ्वी तावत्त्रिकोणा विपुलनदनदीग्रावरुद्धं तदर्धं तत्राप्यर्धं युवत्यः शिशुगतवयसो रोगिणो योगिनश्च । त्यज्यास्तत्रापि मान्याः श्वशुरपितृमुखाः सन्ति शेषाः कियन्तो मिथ्यावादो ममायं मुखरमुखरवः पुंश्चली पुंश्चलीति ॥ ७२ ॥

पान्थसंकेतः ॥ ग्रामेऽस्मिन्प्रस्तर[1]प्राये न किंचित्[2]पान्थ विद्यते । पयोधरोन्नतिं[3] दृष्ट्वा वस्तुमिच्छसि चेद्वस ॥ ७३ ॥ पान्थ मन्दमते किंवा संतापमनुविन्दसि । पयोधरं[4] समाशास्व[5] येन शान्तिरवाप्नुयात् ॥७४॥ वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः । अहमेकाकिनी बाला तवेह वसतिः कुतः ॥७५॥ त्वमिव पथिक प्रियो[6] मे विटपि[7]स्तोमेषु गमयति क्लेशान् । किमितोऽन्यत्कुशलं मे संप्रति यत्पान्थ जीवामि ॥ ७६ ॥ किमिति कृशासि कृशोदरि किं तव परकीयवृत्तान्तैः । कथय तथापि मुदे[8] मम कथयिष्यति पान्थ तव जाया ॥७७॥ यदि गन्तासि दिगन्तं पथिक पतिस्तत्र संबोध्यः । नयनश्रवणविहीना कथमुपचर्या मयैकया जननी ॥ ७८ ॥ निबिडतमतमालमल्लिवल्लीविचकिलराजिविराजितोपकण्ठे । पथिक समुचितस्तवाद्य तीव्रे सवितरि तत्र सरित्तटे निवासः ॥ ७९ ॥ भो[9] पान्थ पुस्तकधर क्षणमत्र तिष्ठ वैद्योऽसि किं गणितशास्त्रविशारदोऽसि । केनौषधेन मम पश्यति भर्तुरम्बा किं वागमिष्यति पतिः सुचिरप्रवासी ॥ ८० ॥ एकाकिनी यदबला तरुणी तथाहमस्मिन्गृहे गृहपतिश्च गतो विदेशे । शङ्कां विशेत्तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥ ८१ ॥ रथ्यारजोरुणितधूसरिताङ्गयष्टेः कच्चित्पितुः स्मरसि पुत्रक निर्घृणस्य । उक्त्वैवमङ्कगतयायतमायताक्ष्या पान्थस्त्रिया प्ररुदितं करुणं दिनान्ते ॥ ८२ ॥ भवनमिव मदीयं निर्जनः पान्थ पन्थाः कुसुमशर इवास्मिंस्तस्करा दुर्निवाराः । गृहप[10] इव पतङ्गो[11]ऽप्येष यातो दिगन्तान्मदनसुभग भूयो नैव गन्तुं समीहे ॥ ८३ ॥ अहमिव दिनलक्ष्मीः प्रोषितप्राणनाथा त्वमिव पथिक पन्था मुक्तपान्थानुबन्धः । अयमपि परदेशः सोऽपि यत्रासि गन्ता मदनमधुरमूर्ते किं वृथा सत्वरोऽसि ॥ ८४ ॥ यामिन्येषा[12] बहलजलदैर्बद्धभीमान्धकारा[13] निद्रां यातो मम पतिरसौ क्लेशितः कर्म[14]दुःखैः । बाला चाहं मनसिज[15]भयात्प्रासगाढप्रकम्पा ग्रामश्चोरैरयमुपहतः पान्थ निद्रां जहीहि ॥ ८५ ॥ कुत्रायासीः किमिदमकरोः साहस पान्थ बन्धो यद्येतस्मिन्निवससि पुरे सावधानस्तदा स्याः । अत्रोत्तालाः कतिचिदबलाः सन्ति यासां विलासैरुत्पद्यन्ते सपदि मदनव्याधयो दुर्निवाराः ॥ ८६ ॥ इयं सुरतरङ्गिणी[16] न पुनरत्र नौसंगमो भवेत्तरणिमज्जनं पथिक नैव पान्थागमः । निधाय हृदये सदा विपुलचारुकुम्भद्वयं सखे घनघनागमे घनैर[17]सस्य पारं व्रज ॥ ८७ ॥

---

१ पाषाणबहुले, ( पक्षे ) पाषाणतुल्ये. २ आस्तरणादिकम्, (पक्षे) समागमप्रतिबन्धकम्. ३ मेघानामुन्नतिं, (पक्षे) स्तनयोरुन्नतिः ३ मेघम्, (पक्षे) स्तनम्. ५ सम्यक्प्रार्थना कुरु. ६ कान्त. ७ वृक्षसमूहेषु ८ हर्षाय. ९ कक्षे पुस्तकधारिण पान्थं प्रति कस्याश्चित्कामिन्या. स्वाभिप्रायसूचिकोक्तिः. औषधप्रश्नेन श्वश्र्वा अन्धत्व सूचितम् प्रोषितस्य पत्यु. कदागमन भविष्यतीति प्रश्नेन सोऽपि गृहे नास्तीति सूचितम्. १० गृहस्वामीव ११ सूर्यं. १२ रात्रि १३ भयकरगाढान्धकारा १४ कर्मजन्यैर्दुःखै. श्रान्त इत्यर्थः. १५ उक्तैर्हेतुभिर्मनसि जात यद्भय तस्मात्, (पक्षे) कामभयात् १६ सुराणा तरंगिणी. नदी इत्यर्थः. १७ उदकस्य

वाणिज्येन[1] गतः स मे गृहपतिर्[2]वार्तापि न श्रूयते प्रातस्तज्जननी प्रसूततनया जामातृगेहं गता। बालाहं नवयौवना निशि कथं स्थातव्यमस्मिन्गृहे सायं संप्रति वर्तते पथिक हे स्थानान्तरं गम्यताम् ॥ ८८ ॥ रे रे पान्थ कुतो भवान्नगरतो वार्ता न चापि श्रुता बाढं[3] ब्रूहि युवा पयोदसमये[4] हित्वा प्रियां जीवति। सत्यं जीवति जीवतीति कथिता वार्ता मयापि श्रुता विस्तीर्णा पृथिवी जनोऽपि विविधः किं किं न संभाव्यते ॥ ८९ ॥ शून्यं वेश्म चिरायितो[5] गृहपतिर्जाताधुना शर्वरी स्थातुं नोचितमत्र गच्छ निभृतं लोकैर्[6]नालक्षितः। इत्थं लोलदृशा ह्यसाध्वभिहितो दासीमुखेनाध्वगः स्थित्वा किंचिदिव क्व यामि रजनी प्राप्तेत्युदीर्य[7] स्थितः ॥ ९० ॥ यामः सुन्दरि याहि पान्थ दयिते शोकं वृथा मा कृथाः शोकस्ते गमने कुतो मम ततो बाष्पं कथं मुञ्चसि। शीघ्रं न व्रजसीति मां गमयितुं कस्मादियं ते त्वरा भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे संभ्रमः ॥ ९१ ॥ स्मर्तव्या वयमिन्दुसुन्दरमुखि प्रस्तावतोऽपि[8] त्वया स्यादेवं यदि नाथ दास्यति विधिर्जातिस्मरत्वं मम। एकस्मिन्नपि जन्मनि प्रियतमे जातिस्मरत्वं कुतः प्राणाः पान्थ समं त्वयैव चलिताः क्वाद्यापि जन्मैकता ॥ ९२ ॥ प्रातः पान्थ पथि त्वया न पथिकः कश्चित्समासादितो बाले नैकशतानि कीदृश इति प्रख्यायतां वल्लभः। यं दृष्ट्वा प्रमदाजनस्य भवतः स्फारे मुदा लोचने स ज्ञेयो दयितो ममेति पथिकायावेद्य मोहं गता ॥ ९३ ॥ भो पान्थ त्वरितोऽसि तिष्ठ निमिषं किंचिद्वदामो वयं मार्गोऽयं पुरतो द्विधा खलु भवेद्वामेन[9] नो गम्यताम्। तत्रास्ते सहकारकोमलतरोर्मूले प्रपापालिका तस्या लोचनवागुरा[10]निपतितो न त्वं पुनर्यास्यसि ॥ ९४ ॥ नाथो मे विपणिं[11] गतो न गणयत्येषा सपत्नी च मां त्यक्त्वा मामिह पुष्पिणीति[12] गुरवः प्राप्ता गृहाभ्यन्तरम्। शय्यामात्रसहायिनीं परिजनः श्रान्तो न मां सेवते स्वामिन्नागम[13]लालनीयरजनी[14] लक्ष्मीपते रक्ष माम् ॥ ९५ ॥

---

## वेश्यागर्हणम्।

वेश्यासौ[15] मदनज्वाला रूपेन्धन[16]समेधिता। कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ १ ॥ अयं च सुरतज्वाला कामाग्निः प्रणयेन्धनः। नराणां यत्र हूयन्ते यौवनानि धनानि च ॥ २ ॥ इह सर्वस्वफलिनः कुलपुत्रमहाद्रुमाः। निष्फलत्वमलं यान्ति वेश्याविहगभक्षिताः ॥ ३ ॥ धनाशा कैतवस्नेहो[17] वितथैश्[18]चित्ततोषणम्। एकमप्यस्ति नास्मासु कथं वेश्यासमा वयम् ॥ ४ ॥ कष्टं जीवति गणिका गणकोऽपि च राजसेवको वैद्यः। दिवसे दिवसे

---

१ वाणिज्यार्थ परदेश गतः. २ भर्ता ३ सत्यम्. ४ वर्षाकाले. ५ चिरकाल दूर गता. ६ अदृष्टः. ७ उक्त्वा. ८ गोष्टीप्रसङ्गेन. ९ वामभागेन १० लोचनमेव वागुरा मृगवन्धिनी. जालमित्यर्थः. ११ पण्यवीथिका. १२ रजस्वला. १३ आगमेन वेदेन लालनीयः स्तुत्यः; (पक्षे) आगमनेन लालनीयः. १४ रजनी व्याप्येत्यर्थः. १५ वाराङ्गना. १६ रूपमेवेन्धनं काष्ठ तेन सम्यक्प्रदीप्ता. १७ कपटस्नेह.. १८ असत्यगोष्टीभिः.

मरणं परस्य यश्चित्तरञ्जनं वृत्तिः ॥ ५ ॥ न पर्वताग्रे नलिनी प्ररोहति न गर्दभा वाजिधुरं वहन्ति । यवाः प्रकीर्णा न भवन्ति शालयो न वेशजाताः शुचयस्तथाङ्गनाः ॥ ६ ॥ हारहीरकहिरण्यभूषणैस्तोषमेति गणिका धनैषिणी[1] । प्रेमकोमलकटाक्षवीक्षितैरेव जीवति कुलाङ्गनाजनः ॥ ७ ॥ एता हसन्ति च रुदन्ति च वित्तहेतोर्विश्वासयन्ति पुरुषं न च विश्वसन्ति । तस्मान्नरेण कुलशीलसमन्वितेन वेश्याः श्मशानघटिका[2] इव वर्जनीयाः ॥८॥ जात्यन्धाय[3] च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च ग्रामीणाय[4] च दुष्कुलाय च गलत्कुष्ठाभिभूताय च । यच्छन्तीषु[5] मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया[6] पण्यस्त्रीषु[7] विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ९ ॥ केशः कुन्दमिषादिवोपहसति द्रव्यैर्विहीनाञ्जनान्यूनां ग्रन्थिधनं विलोकितुमिवोद्ग्रीवस्तनस्तिष्ठति । प्रेमच्छेदकृपाणवल्लिसुषुमां रोमालिरालम्बते यस्याः सा कथमस्तु चेतसि चमत्काराय वाराङ्गना ॥ १० ॥ वाप्यां स्नाति विचक्षणो द्विजवरो मूर्खोऽपि वर्णाधमः फुल्लां नाम्यति वायसोऽपि हि लतां या नामिता बर्हिणा । ब्रह्मक्षत्रविशस्तरन्ति च यया नावा तयैवेतरे त्वं वापीव लतेव नौरिव जनं वेश्यासि सर्वं भज ॥ ११ ॥

---

## अष्टनायिकाः ।

**स्वाधीनपतिका** ॥ यदपि रतिमहोत्सवे नकारो यदपि करेण च नीविधारणानि । प्रियसखि पतिरेष पार्श्वदेशं तदपि न मुञ्चति तत्किमाचरामि ॥ १ ॥ मा गर्वमुद्वह कपोलतले चकास्ति कान्तस्वहस्तलिखिता मम मञ्जरीति । अन्यापि किं न सखि भाजनमीदृशानां वैरी न चेद्भवति वेपथुरन्तरागः ॥ २ ॥ अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः । किं त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः पतिर्नान्यतो दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःखितम् ॥ ३ ॥ श्वश्रूः पश्यति नैव पश्यति यदि भ्रूभङ्गवक्रेक्षणा मर्मच्छेदपटुप्रतिक्षणमसौ ब्रूते ननान्दा वचः । अन्यासामपि किं ब्रवीमि चरितं स्मृत्वा मनो वेपते कान्तः स्निग्धदृशा विलोकयति मामेतावदागः सखि ॥ ४ ॥ वक्रस्याधरपल्लवस्य वचसो हास्यस्य लास्यस्य वा धन्यानामरविन्दसुन्दरदृशां कान्तस्तनोति स्तुतिम् । स्वप्नेनापि न गच्छति श्रुतिपथं चेतःपथं दृक्पथं काप्यन्या दयितस्य मे सखि कथं तस्यास्तु भेदग्रहः ॥ ५ ॥ स्वीयाः सन्ति गृहे गृहे मृगदृशो यासां विलासकणत्काञ्चीकुण्डलहेमकङ्कणझणत्कारो न विश्राम्यति । को हेतुः सखि कानने पुरपथे सौधे सखीसंनिधौ भ्राम्यन्ती मम वल्लभस्य परितो दृष्टिर्न मां मुञ्चति ॥ ६ ॥ सन्त्येव प्रतिमन्दिरं युवतयो यासा सुधासागरस्रोतःस्यूतसरोजसुन्दरचम-

---

१ धनेच्छावती. २ श्मशानस्थिता घटिका. घट्यो घटा इति यावत्. एता यथा अस्पृश्यास्तथैव ता वर्जनीया इति भावः. ३ जनान्धाय. ४ माम्याय. ५ अर्पयन्तीषु. ६ लक्ष्मीलेशाशया ७ गणिकासु.

त्कारा दृशोर्विभ्रमाः । चित्रं किं तु विचित्रमन्मथकलावैशद्यहेतोः पुनर्वित्तं चित्तहरं प्रयच्छति युवा मय्येव किं कारणम् ॥ ७ ॥ एतत्किं प्रणयिन्यपि प्रणयिनी यन्मानिनी जायते मन्ये मानविधौ भविष्यति सुखं किंचिद्विशिष्टं रसात् । वाञ्छा तस्य सुखस्य मेऽपि हृदये जागर्ति नित्यं परं स्वप्नेऽप्येष्य न मेऽपराध्यति पतिः कुप्यामि तस्मै कथम् ॥ ८ ॥ मध्ये न कृशिमा स्तने न गरिमा देहे न वा कान्तिमा श्रोणौ न प्रथिमा गतौ न गरिमा नेत्रे न वा वक्रिमा । लास्ये न द्रढिमा न वाचि पटिमा हास्ये न वा स्फीतिमा प्राणेशस्य तथापि मज्जति मनो मय्येव किं कारणम् ॥ ९ ॥ खण्डिता ॥ वक्षः किमु कलशाङ्कितमिति किमपि प्रष्टुमिच्छन्त्याः । नयनं नवोढसुदृशः प्राणेशः पाणिना पिदधे ॥ १० ॥ सत्यमेव गदितं त्वया विभो जीव एक इति यत्पुरावयोः । अन्यदारनिहिता नखव्रणास्तावके वपुषि पीडयन्ति माम् ॥ ११ ॥ सव्यलीकमवधीरितखिन्नं प्रस्थितं सपदि कोपपदेन । योषितः सुहृदिव स्म रुणद्धि प्राणनाथमभिबाष्पनिपातः ॥ १२ ॥ शङ्कितायं कृतबाष्पनिपातामीर्ष्यया विमुखितां दयिताय । मानिनीमभिमुखाहितचित्तां शंसति स्म घनरोमविभेदः ॥ १३ ॥ वक्षोजचिह्नितभरो दयितस्य वीक्ष्य दीर्घं न निश्वसति जल्पति नैव किंचित् । प्रातर्जलेन वदनं परिमार्जयन्ती बाला विलोचनजलानि तिरोदधाति ॥ १४ ॥ कान्तं निरीक्ष्य वलयाङ्कितकण्ठदेशं मुक्तास्तया परभिया परुषा न वाचः । दूतीमुखे मृगदृशा स्खलदम्बुपूरा दूरात्परं निदधिरे नयनान्तपाताः ॥ १५ ॥ नवनखपदमङ्गं गोपयस्यंशुकेन स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् । प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥ १६ ॥ भवतु विदितं व्यर्थालापैरलं प्रिय गम्यतां तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः । तव यदि तथा रूढं प्रेम प्रपन्नमिमां दृशां प्रकृतितरले का नः पीडा गते हतजीविते ॥ १७ ॥ उरस्तव पयोधराङ्कितमिदं कुतो मे क्षमा ततो मयि विधीयतां वसु पुरा यदङ्गीकृतम् । इति प्रचलचेतसः प्रियतमस्य वारस्त्रिया क्वणत्कनककङ्कणं करतलात्समाकृष्यते ॥ १८ ॥ जातस्ते निशि जागरो मम पुनर्नेत्राम्बुजे शोणिमा निःपीतं भवता मधु प्रविततं व्याघूर्णितं मे मनः । आम्यद्भृङ्ग घने निकुञ्जभवने लब्धं त्वया श्रीफलं पञ्चेषुः पुनरेष मां बहुतरैः क्रूरैः शरैः कृन्तति ॥ १९ ॥ प्रातः प्रातरुपागतोऽसि जनिता निर्निद्रता चक्षुषोर्मन्दाया मम गौरवं व्यपहृतं प्रोत्पादितं लाघवम् । किं तद्यन्न कृतं त्वया रमण भीर्मुक्ता मया गम्यते दुःखं तिष्ठति यच्च पथ्यमधुना कर्तास्मि तच्छ्रोष्यसि ॥ २० ॥ लाक्षालक्ष्मललाटपट्टमभितः केयूरमुद्रा गले वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः । दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥ २१ ॥ कान्तं वीक्ष्य विपक्षपक्ष्मलदृशः पादाम्बुजालक्तकैरालिप्ताननमाननीकृतमुखी चित्रार्पितेवाभवत् । रूक्षं नोक्तवती न वा कृतवती निश्वासकोष्णे दृशौ प्रातर्मङ्गलमङ्गनाकरतलादादर्शमादर्श-

यत् ॥ २२ ॥ **अभिसारिका** ॥ यामि विधावभ्युदिते पुनरेष्यामीति यद्वुदितं भवता । जानात्युदन्तमेषा नेदं तत्त्वेन मुग्धवधूः ॥ २३ ॥ भीतासि नैव भुजगात्पथि मद्भुजस्य सङ्गे पुनः किमपि कम्पमुरीकरोषि । अम्भोधरध्वनिभिरक्षुभितासि तन्वि मद्वाचि साचिवदनासि किमाचरामि ॥ २४ ॥ इह जगति रतीशप्रक्रियाकौशलिन्यः कति कति न निशीथे सुभ्रुवः संचरन्ति । मम तु विधिहताया जायमानस्मितायाः सहचरिपरिपन्थी हन्त दन्तांशुरेव ॥ २५ ॥ चित्रोत्कीर्णादपि विषधराद्भीतिभाजो निशायां किं नु ब्रूमस्त्वदभिसरणे साहसं नाथ तस्याः । ध्वान्ते यान्त्या यदतिनिभृतं बालयात्मप्रकाशत्रासात्पाणिः पथि फणिफणारत्नरोधी व्यधायि ॥ २६ ॥ अम्भोजाक्ष्याः पुरनवलताधाम्नि संकेतभाजश्चेतोनाथे चिरयति भृशं मोहनिद्रां गतायाः । स्वच्छं नाभीहृदवलयितं कान्तरत्नांशुजालं तोयभ्रान्त्या पिबति हरिणी विस्मयं च प्रयाति ॥ २७ ॥ किमुत्तीर्णः पन्थाः कुपितभुजगीभोगविषमो विसोढा भूयस्यः किमिति कुलपालीकटुगिरः । इति स्मारं स्मारं दरदलितशीतद्युतिरुचौ सरोजाक्षी शोणं दिशि नयनकोणं विकिरति ॥ २८ ॥ जनो दुर्लक्ष्णोऽयं कुलममलिनं वर्त्म विषमं पतिश्छिद्रान्वेषी प्रणयिवचनं दुःपरिहरम् । अतः काचित्तन्वी रतिविहितसंकेतगतये गृहद्वारं वारं निरगमदथ प्राविशदथ ॥ २९ ॥ सितं वसनमर्पितं वपुषि नीलचोलभ्रमान्मया मृगमदाशया मलयजद्रवः सेवितः । करेण परिबोधितः स्वजनशङ्कया दुर्जनः परं परमपुण्यतः सखि न लङ्घिता देहली ॥ ३० ॥ प्रत्यावृत्त्य यदि व्रजामि भवनं वाचां भवेत्प्रच्यवो निर्गच्छामि निकुञ्जमेव यदि वा को वेद किं स्यादितः । तिष्ठामो यदि वा क्वचिद्वनतटे किं जातमेतावता मध्ये वर्त्म कलानिधेः समुदयो जातः किमातन्यताम् ॥ ३१ ॥ भ्रातः कङ्कण किं कदाप्यसि घनाश्लेषेषु विश्लेषितं दूरे किङ्किणि किं कृताप्यसि रतारम्भे रणत्कारिणि । किं मञ्जीर बहिः कृतोऽप्यसि रहस्तल्पाधिरोहे मया संकेताध्वनिबद्धवैरमिव यन्मौखर्यमालम्बसे ॥ ३२ ॥ उत्क्षिप्तं करकङ्कणद्वयमिदं बद्धा दृढं मेखला यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता । आरब्धे रभसान्मया प्रियसखि क्रीडाभिसारोत्सवे चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः ॥ ३३ ॥ एषा फुल्लकदम्बनीपसुरभौ काले घनोद्भासिते कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका । विद्युद्वारिदगर्जितैः सचकिता त्वद्दर्शनाकाङ्क्षिणी पादौ नूपुरलग्नकर्दमधरौ प्रक्षालयन्ती स्थिता ॥ ३४ ॥ मार्गे पङ्काचिते घनान्धतमसे निःशब्दसंचारया गन्तव्या च मया प्रियस्य वसतिर्मुग्धेति कृत्वा मतिम् । आजानूद्धृतनूपुराः करतलेनाच्छाद्य नेत्रे भृशं कृच्छ्रेणाप्तपदस्थितिः स्वभवने पन्थानमभ्यस्यति ॥ ३५ ॥ छिन्द्रान्वेषणतत्परः प्रियसखी प्रायेण लोकोऽधुना रात्रिश्चापि घनान्धकारबहला गन्तुं न ते युज्यते । मा मैवं सखि वल्लभः प्रियतमस्तस्योत्सुका दर्शने युक्तायुक्तविचारणा यदि भवेत्स्नेहाय दत्तं जलम् ॥ ३६ ॥ दूती

विद्युदुपागता सहचरी रात्रिः सहस्थायिनी दैवज्ञो दिशति स्वनेन जलदः प्रस्थानवेलां शुभाम् । वाचं माङ्गलिकीं तनोति तिमिरस्तोमोऽपि झिल्लीरवैर्जातोऽयं दयिताभिसारसमयो मुग्धे विमुञ्च त्रपाम् ॥ ३७ ॥ द्वित्रैः केलिसरोरुहं त्रिचतुरैर्धम्मिल्लमल्लीस्रजं कण्ठान्मौक्तिकमालिकां च तदनु त्यक्तापरैः पञ्चभिः । अन्तः कान्तावियोगकातरतया दूराभिसारातुरा तन्वङ्गी निरुपायमध्वनि परं श्रोणीभरं निन्दति ॥ ३८ ॥ भ्रातः प्राणगणप्रयाणसमये प्राणाधिनाथस्य मे कुर्याः स्थैर्यमपि क्षणं करुणया कण्ठस्थलेऽपि स्थितः । यावल्लोचननीरनिर्मितनदीवन्याभिरन्यादृशं पन्थानं परिकल्पयामि भविता येनावयोर्वाञ्छितम् ॥ ३९ ॥ कान्ते कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ सत्यं नाथ निमीलयामि नयने यावन्न शून्या दृशः । आयाता वयमागमिष्यसि सुहृद्वर्गस्य भाग्योदयैः संदेशं वद कस्तवाभिलषितस्तीर्थेषु तोयाञ्जलिः ॥ ४० ॥ उन्मादाम्बुदवर्धितान्धतमसि प्रभ्रष्टदिङ्मण्डले काले यामिकताप्रदुग्रसुभटव्याकीर्णकोलाहले । कर्णस्यासुहृदार्णवाम्बुवडवावह्नेर्यदन्तःपुरादायातासि यदम्बुजाक्षि कृतकं मन्ये भयं योषिताम् ॥ ४१ ॥ पल्लीनामधिपस्य पङ्कजदृशां पर्वोत्सवामन्त्रणे जाते सद्मजना मिथः कृतमहोत्साहं पुरः प्रस्थितः । सव्याजं स्थितयोर्विहस्य गतयोः शुद्धान्तमत्रान्तरे यूनोः स्विन्नकपोलयोर्विजयते कोऽप्येष कण्ठग्रहः ॥ ४२ ॥ लोलच्चोलचमत्कृतिप्रविलसत्काञ्चीलताझङ्कृतिन्यञ्चत्कञ्चुकबन्धबन्धुरचलद्वक्षोजकुम्भोन्नतिः । स्फूर्जद्दीधिति विस्फुरद्रति चलच्चामीकरालंकृति क्रीडाकुञ्जगृहं प्रयाति कृतिनः कस्यापि वाराङ्गना ॥४३॥ **कलहान्तरिता** ॥ द्वारि चक्षुरधिपाणि कपोलौ जीवितं त्वयि कुतः कलहोऽस्याः । कामिनामिति वचः पुनरुक्तं प्रीतये नवनवत्वमियाय ॥ ४४ ॥ चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारकान्ति । सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं विधत्ते ॥ ४५ ॥ विरमति कथनं विना न खेदः सति कथने समुपैति कापि लज्जा । इति कलहमधोमुखी सखिभ्यो लपितुमना लपितुं समाचकाङ्क्ष ॥ ४६ ॥ अनुनयति पतिं न लज्जमाना कथयति नापि सखीजनाय किंचित् । प्रसरति मलयानिले नवोढा वहति परंतु चिराय शून्यमन्तः ॥ ४७ ॥ प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता । न किंचिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ॥४८॥ न वरीभरीति कबरीभरे स्रजो न चरीकरीति मृगनाभिचित्रकम् । विजरीहरीति न पुरेव मत्पुरो विवरीवरीति न च विप्रियं प्रिया ॥ ४९ ॥ तत्तद्वदत्यपि यथावसरं हसन्त्यप्यालिङ्गनेऽपि न निषेधति चुम्बनेऽपि । कि तु प्रसादनभयादपि निह्नुतेन कोपेन कोऽपि विहितोऽद्य रसावतारः ॥५०॥ न तिर्यगवलोकित भवति चक्षुरालोहितं वचोऽपि परुषाक्षरं न च पदेषु संगच्छते । हिमार्त इव वेपते सकल एव बिम्बाधरः प्रकामविनते भ्रुवौ युगपदेव भेदं गते ॥ ५१ ॥ मय्यायाते सपदि शयनादुत्थितं चाटु वाक्यं बद्ध्वा पाणी

बहु निगदितं क्षालितं पादपद्मम् । दत्त्वा वीटीं सविनयमथोद्वीजितं तालवृन्तैर्ब्रूते कोपं कुवलयदृशो भूयसी भक्तिरेव ॥ ५२ ॥ चरणपतनप्रत्याख्यानात्प्रसादपराङ्मुखे निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते । व्रजति रमणे निःश्वस्योच्चैः स्तनस्थितहस्तया नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता ॥ ५३ ॥ स्फुटतु हृदयं कामः कामं करोतु तनुं तनुं न सखि चटुलप्रेम्णा कार्यं पुनर्दयितेन मे । इति सरभसं मानोद्रेकादुदीर्य वचस्तया रमणपदवी साराङ्गाक्ष्या ससंभ्रममीक्षिता ॥ ५४ ॥ पयःपीठं दत्ते त्वरितमभिधत्ते न च वचः समाज्ञामाधत्ते शिरसि न विधत्ते च मिलनम् । इति स्वान्ते गोपायितानिबिडकोपा प्रतिपदं कृशोदर्याश्चर्यात्प्रियमहह पर्याकुलयति ॥ ५५ ॥ पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः । स्फुटो रेखान्यासः कथमपि स तादृक्परिणतो गता येन व्यक्तिं पुनरवयवैः सैव तरुणी ॥ ५६ ॥ ततश्चाभिज्ञाय स्फुरदरुणगण्डस्थलरुचा मनस्विन्या रोषप्रणयरभसाद्गद्गदगिरा । अहो चित्रं चित्रं स्फुटमिति निगद्याश्रुकलुषं रुषा ब्रह्मास्त्रं मे शिरसि निहितो वामचरणः ॥ ५७ ॥ चलं चेतः पुंसां सहजसरलाः पङ्कजदृशो भवत्येव क्रोधः क्वचिदपि कदाचित्तरुणयोः । दहेदङ्गं भृङ्गी विधुरपि विदध्यात्परिभवं स्मरो मां मथ्नीयादिति किमपि नाज्ञासिषमहम् ॥ ५८ ॥ आनन्द क्वचिदञ्च मुञ्च हृदयं चातुर्यधैर्ये त्वया स्थेयं क्वेति विचार्यतां रसिकते निर्याहि पर्याकुला । रक्ताम्भोजपरीतषट्पद नदत्पक्षोपमानक्षम क्षुभ्यत्पक्ष्मचलाचलेक्षणयुगं पश्यामि तस्या मुखम् ॥ ५९ ॥ मानम्लानमना मनागपि नतं नालोकते वल्लभं निर्याते दयिते निरन्तरमियं बाला परं तप्यते । आनीते रमणे बलात्परिजनैर्मौनं समालम्बते धत्ते कण्ठगतानसून्प्रियतमे निर्गन्तुकामे पुनः ॥ ६० ॥ आयस्ता कलह पुरेव कुरुते न स्रंसते वाससो भग्नभ्रूगतिखण्ड्यमानमधरं धत्ते न केशग्रहे । अङ्गान्यर्पयति स्वयं भवति नो वामा हठालिङ्गने तन्व्या शिक्षित एष संप्रति कुतः कोपप्रकारोऽपरः ॥६१॥ एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरतस्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः । आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ ६२ ॥ आशङ्क्य प्रणति पटान्तपिहितौ पादौ करोत्यादराद्व्याजेनागतमावृणोति हसितं चास्पष्टमुद्वीक्ष्यते । मय्यालापवति प्रतीपवचनं सख्या सहाभाषते तन्व्यास्तिष्ठतु निर्भरा प्रणयिता मानोऽपि रम्योदयः ॥ ६३ ॥ वेगाद्दुत्सुकमागते विवलितं संभाषिणि स्फारितं संश्लिष्यत्यनुगुणं गृहीतवसने कोपाश्रित भ्रूलतम् । मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ ६४॥ तारुण्य सुखमेलने न च वचोवैदग्ध्यमन्यादृशं न भ्रूभङ्गपरिग्रहो न च रहःप्रश्नेऽपि मौन-

१ किंचित्सकोचितम्. २ समूहे.

स्थितिः। एवं संप्रति तर्क्यते तु सुदृशः कोपस्तु गद्गस्तुनि स्वाधीनेऽपि पुरेव पङ्कजदृशो यन्न प्रभुत्वग्रहः॥ ६५॥ शोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं ततः पादेन प्रहृतं तया सपदि तं धृत्वा सहासे मयि। किंचित्तत्र विधातुमक्षमतया बाष्पं त्यजन्त्याः सखे ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः॥ ६६॥ सा पत्युः प्रथमापराधसमये सख्योपदेशं विना नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्। स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः॥६७॥ एकस्मिञ्शयने विपक्षरमणीनामग्रहे मुग्धया सद्यः कोपपरिग्रहग्लपितया चाटूनि कुर्वन्नपि। आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः॥६८॥ तल्पोपान्तमुपेयुषि प्रियतमे वक्रीकृतग्रीवया काकुव्याकुलवाचि साचिहसितस्फूर्जत्कपोलश्रिया। हस्तन्यस्तकरे पुनर्मृगदृशा लाक्षारसक्षालितप्रोष्ठोपृष्ठमयूखमांसलरुचो विस्फारिता दृष्टयः॥ ६९॥ भ्रूभेदो रचितश्चिरं नयनयोरभ्यस्तमामीलनं रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगः कृतः। धैर्यं कर्तुमपि स्थिरीकृतमिदं चेतः कथंचिन्मया बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैवस्थिता॥७०॥ न ब्रूते परुषां गिरं वितनुते न भ्रूयुगं भङ्गुरं नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि। कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या बहिः सख्या वक्त्रमभिप्रयच्छति परं पर्यश्रुणी लोचने॥ ७१॥

**विप्रलब्धा**॥ उत्तिष्ठ दूति यामो यामो यातस्तथापि नायातः। यातःपरमपि जीवेज्जीवितनाथो भवेत्तस्याः॥७२॥ निःस्नेह निःकरुण निस्त्रप निर्निमित्त मद्वञ्चक त्वमसि संप्रति वञ्चितास्याः। इत्यक्षराणि लिखितानि समीक्ष्य कश्चित्संकेतकेतकदले नितरामताम्यत्॥७३॥ संकेतकेलिगृहमेत्य निरीक्ष्य शून्यमेणीदृशो निभृतनिःश्वसिताधरायाः। अर्धाक्षरं वचनमर्धविकाशि नेत्रं ताम्बूलमर्धकवलीकृतमेव तस्थौ॥ ७४॥ कपटवचनभाजा केनचिद्वारयोषा सकलरसिकगोष्ठीवञ्चिका वञ्चितासौ। इति विहसति रिङ्गद्भृङ्गविक्षिप्तचक्षुर्विकचकुसुमकान्तिच्छद्मना केलिकुञ्जः॥ ७५॥ नायातो यदि निर्दयः सखि शठस्त्वं दूति किं दूयसे स्वच्छन्दं बहुवल्लभः स रमते किं तत्र ते दूषणम्। पश्याद्य प्रियसंगमाय दयितस्याकृष्यमाणं गुणैरुत्कण्ठार्तिभरादिव स्फुटदिदं चेतः स्वयं यास्यति॥ ७६॥ शून्यं कुञ्जगृहं निरीक्ष्य कुटिलं विज्ञाय चेतोभुवं दूती नापि निवेदिता सहचरी दृष्टापि नो वानया। शंभो शंकर चन्द्रशेखर हर श्रीकण्ठ शूलिञ्शिव त्रायस्वेति परंतु पङ्कजदृशा भर्गस्य चक्रे स्तुतिः॥ ७७॥ तत्किं कामपि कामिनीमभिसृतः किंवा कलाकेलिभिर्बद्धो बन्धुभिरन्धकारिणि वनोपान्ते किमु भ्राम्यति। कान्तः क्लान्तमना मनागपि पथि प्रस्थातुमेवाक्षमः संकेतीकृतमञ्जुवञ्जुललताकुञ्जेऽपि यन्नागतः॥ ७८॥ सास्रे मा कुरु लोचने

१ सपत्नी.

विगलति न्यस्तं शलाकाञ्जनं तीव्रं निःश्वसितं निवर्तय नवास्ताम्यन्ति कण्ठस्रजः। तल्पे मा लुठ कोमलाङ्गि तनुतां हन्ताङ्गरागोऽश्नुते नातीतो दयितोपयानसमयो मास्मान्यथा मन्यथाः॥ ७९॥ अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक्सुहृद्यो मां नेच्छति नागतश्च हहहा कोऽयं विधेः प्रक्रमः। इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि॥ ८०॥ दत्त्वा धैर्यभुजंगमूर्ध्नि चरणावुल्लङ्घ्य लज्जानदीमङ्गीकृत्य घनान्धकारपटलं तन्व्या न दृष्टः प्रियः। संतापाकुलया तया च परितः पाथोदरे गर्जति क्रोधाक्रान्तकृतान्तमत्तमहिषभ्रान्त्या दृशौ योजिते॥८१॥ आलीभिः शपथैरनेककपटैः कुञ्जोदरं नीतया शून्यं तच्च निरीक्ष्य विक्षुभितया न प्रस्थितं न स्थितम्। न्यस्ताः किंतु नवोढनीरजदृशा कुञ्जोपकण्ठे रुषा तादृग्भृङ्गकदम्बडम्बरचमत्कारस्पृशो दृष्टयः॥ ८२॥ **प्रोषितभर्तृका**॥ अर्पयति प्रतिदिवसं प्रियस्य पथि लोचने बाला। निक्षिपति कमलमालाः कोमलमिव कर्तुमध्वानम्॥ ८३॥ आकस्मिकस्मितमुखीषु सखीषु विज्ञा विज्ञास्वपि प्रणयनिह्नवमाचरन्ती। तत्रैव रङ्कुनयना नयनारविन्दमस्पन्दमाहितवती दयिते गतेऽपि॥ ८४॥ विरहविदितमन्तः प्रेय विज्ञाय कान्तः पुनरपि वसु तस्मादेत्य मे दास्यतीति। मरिचनियममक्ष्णोर्न्यस्य बाष्पोदबिन्दून्विसृजति पुरयोपिद्वारदेशोपविष्टा॥ ८५॥ तां जानीथाः परिमितकथां जीवितं मे द्वितीयं दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्। गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां जातां मन्ये शिशिरमथिता पद्मिनीं वान्यरूपाम्॥ ८६॥ माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः काञ्ची याते प्रभवति हरौ सुभ्रुवः प्रस्थितैव। अन्यद्ब्रूमः किमपि धमनी वर्तते वा न वेति ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति॥ ८७॥ समर्प्य हृदि दारुणां मदनवेदना भूयसीमनेन तव वर्त्मना प्रचलितः स मे वल्लभः। न वा प्रदिशि शब्दितं किमिति बालयावायसत्वया सदनसारिके किमिति वा कृतं न क्षतुम्॥ ८८॥ आदृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया विश्रान्तेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति। दत्त्वैकं सशुचा गृहं प्रतिपदं पान्थस्त्रियास्मिन्क्षणे मा भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम्॥ ८९॥ श्वश्रूः पद्मदलं ददाति तदपि भ्रूसंज्ञया गृह्यते सद्यो मर्मरशङ्कया न च तया संस्पृश्यते पाणिना। यातुर्वाचि सुहृद्गणस्य वचसि प्रत्युत्तरं दीयते श्वासः किंतु न मुच्यते हुतवहक्रूरः कुरङ्गीदृशा॥ ९०॥ **वासकसज्जा**॥ निजपाणिपल्लवतटस्खलनादभिनासिकाविवरमुत्पतितैः। अपरा परीक्ष्य शनकैर्मुमुदे मुखवासनासकमलश्वसनैः॥ ९१॥ नेदं समीरितमकारि कला न चेयमित्याकुलाः कथमपि प्रथमार्धमह्नः। एवं विधेयमथ वाच्यमिदं मयेति शेषं प्रियाः सुकृतिनामतिवाहयन्ति॥ ९२॥ कृतं वपुषि भूषणं चिकुरधोरणी धूपिता कृता शयनसंनिधौ क्रमुकवीटिकासंभृतिः। अ-

कारि हरिणीदृशा भवनमेत्य देहत्विषा स्फुरत्कनककेतकीकुसुमकान्तिभिर्दुर्दिनम् ॥ ९३ ॥ विदूरे[1] केयूरे कुरु करयुगे रत्नवलयैरलं गुर्वी ग्रीवाभरणलतिकेयं किमनया। नवामेकामेकावलिमपि मयि त्वं विरचयेर्न पथ्यं नेपथ्ये बहुतरमनङ्गोत्सवविधौ ॥ ९४ ॥ श्वश्रूं स्वापयति च्छलेन च तिरो धत्ते प्रदीपाङ्कुरं धत्ते सौधकपोतपोतनिनदैः सांकेतिकं चेष्टितम्। शश्वत्पार्श्वविवर्तिताङ्गलतिकं लोलत्कपोलद्युति क्वापि क्वापि कराम्बुजं प्रियधिया तल्पान्तिके न्यस्यति ॥ ९५ ॥ चोलं नीलनिचोलकर्षणविधौ चूडामणिं चुम्बने याचिष्ये कुचयोः करार्पणविधौ काञ्चीं पुनः काञ्चनीम्। इत्थं चन्दनचर्चितैर्मृगमदैरङ्गानि संस्कुर्वती तत्किं यन्न मनोरथं वितनुते वारेषु वाराङ्गना ॥ ९६ ॥ दृष्ट्वा दर्पणमण्डले निजवपुर्भूपां मनोहारिणीं दीप्तार्चिः कपिशं च मोहनगृहं त्रस्यत्कुरङ्गीदृशा। एवं नौ सुरतं भविष्यति चिरादद्येति सानन्दया कामं कान्तदिदृक्षया च ललिता द्वारेऽर्पिता दृष्टयः ॥ ९७ ॥ हारं गुम्फति तारकान्तिरुचिरं ग्रथ्नाति काञ्चीलतां दीपं न्यस्यति किंतु तत्र बहुलं स्नेहं न धत्ते पुनः। आलीनामिति वासकस्य रजनौ कामानुरूपां क्रियां साचिस्मेरमुखी नवोढसुमुखी दूरात्समुद्वीक्षते ॥ ९८ ॥ शिल्पं दर्शयितुं करोति कुतुकात्कह्लारहारस्रजं चित्रप्रेक्षणकैतवेन किमपि द्वारं समुद्वीक्षते। गृह्णात्याभरणं नवं सहचरीभूषाजिगीषामिषादित्थं पद्मदृशः प्रतीत्य चरितं स्मेराननोऽभूत्स्मरः ॥ ९९ ॥ उत्का ॥ अम्भोरुहाक्षि शंभोश्चरणावाराधितौ केन। यस्मै विवलितवदना मदनाकूतं विभावयसि ॥१००॥ सखि स विजितो वीणावाद्यैः कयाप्यपरस्त्रिया पणितमभवत्ताभ्यां तत्र क्षपाललितं ध्रुवम्। कथमितरथा सेफालीषु स्खलत्कुसुमास्वपि प्रसरति नभोमध्येऽपीन्दौ प्रियेण विलम्ब्यते ॥१०१॥ भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्ष्यते रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते। कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने ॥१०२॥ किं रुद्धः प्रियया कयाचिदथवा सख्या ममोद्वेजितः किंवा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः। इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः ॥१०३॥ यन्नाद्यापि समागतः पतिरिति प्रायः प्रपेदे परामित्थं चेतसि चिन्तयत्यपि सखीं न व्रीडया पृच्छति। दीर्घं निश्वसितं दधाति चकितं न प्रेक्षते केवलं किंचित्पक्वपलाण्डुपाण्डुररुचि धत्ते कपोलस्थलीम् ॥ १०४ ॥ आनेतुं न गता किमु प्रियसखी भीतो भुजंगात्किमु क्रुद्धो वा प्रतिषेधवाचि किमसौ प्राणेश्वरो वर्तते। इत्थं कर्णसुवर्णकेतकरजःपातोपघातच्छलादक्ष्णोः कापि नवोढनीरजमुखी बाष्पोदकं मुञ्चति ॥ १०५ ॥ स्नानं वारिदवारिभिर्विरचितो वासो घने कानने शीतैश्चन्दनबिन्दुभिर्मनसिजो देवः समाराधितः। नीता

१ धारणम्.

जागरणव्रतने रजनी व्रीडा कृता दक्षिणा तप्तं किं न तपस्तथापि स कथं नायाति नेत्रातिथिः ॥ १०६ ॥

---

## वीररसनिर्देशः ।

भर्तुः पिण्डानृणकरोऽप्ययशक्रयणहायणः । सुराङ्गनास्वयंग्राहो रम्यः कालोऽयमागतः ॥ १ ॥ प्रायेण सुकरं दानं प्रायेण सुकरं तपः । प्राणानपेक्षी व्यापारः पुनर्वीरस्य दुःकरः ॥ २ ॥ क्षत्रियस्योरसि क्षत्रं ब्रह्म पृष्ठे व्यवस्थितम् । तेन पृष्ठं न दातव्यं पृष्ठदो ब्रह्महा भवेत् ॥ ३ ॥ मा भैष्ट नैते निस्त्रिंशा नीलोत्पलदलत्विषः । एते वीरावलोकिन्या लक्ष्म्या नयनविभ्रमाः ॥ ४ ॥ खड्गास्तिष्ठन्तु मत्तेभकूटकूटाट्टहासिनः । एकदोर्दण्डशेषेऽपि कः सहेत पराभवम् ॥ ५ ॥ हतेऽभिमन्यौ क्रुद्धेन तत्र पार्थेन संयुगे । अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः ॥६ ॥ लोहितायति चादित्ये त्वरमाणो धनंजयाः। पञ्चविंशतिसाहस्रान्निजघान महारथान् ॥७ ॥ रथेभ्यो गजवाजिभ्यः सङ्ग्रामे वीरसंकराः। पतिताः पात्यमानाश्च दृश्यन्तेऽर्जुनताडिताः ॥ ८ ॥ पूर्णे शतसहस्रे द्वे पदातीना नरोत्तमः । प्रजज्वाल रणे भीष्मो विधूम इव पावकः ॥ ९ ॥ आकर्णपलितः श्यामो वयसा सोऽतिपञ्चकः । रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ॥ १० ॥ लक्ष्मणो लघुसंधानो दूरपाती च राघवः । कर्णो दृढप्रहारी च पार्थस्यैते त्रयो गुणाः ॥ ११ ॥ न कालस्य न शक्रस्य न विष्णोर्वित्तदस्य च । श्रूयन्ते तानि कर्माणि यानि युद्धे हनूमतः ॥ १२ ॥ सप्तषष्टि हताः कोव्यो वानराणां तरस्विनाम् । पश्चिमेनाह्नशेषेण मेघनादेन सायकैः ॥ १३ ॥ धृतधनुषि शौर्यशालिनि शैला प्रणमन्ति यत्तदाश्चर्यम् । रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु ॥ १४ ॥ जीवन्नेव मृतोऽसौ यस्य जनो वीक्ष्य वदनमन्योन्यम् । कृतमुखभङ्गो दूरात्करोति निर्देशमङ्गुल्या ॥ १५ ॥ रविमणिरपि न त्विष्टः पादैस्तिग्मद्युतेर्मनाग्दृष्टः । ज्वलतितरामिति को वा मन्युं सोढुं क्षमो मानी ॥ १६ ॥ छिन्नेऽपि शस्त्रभिन्नेऽप्यापत्पतितेऽपि निर्विशेषेऽपि । हनुमति कृतप्रतिज्ञे दैवमदैवं यमोऽप्ययमः ॥ १७ ॥ लोकः शुभस्तिष्ठतु तावदन्यः पराङ्मुखानां समरेषु पुंसाम् । पत्न्योऽपि तेषां न ह्रिया मुखानि पुरः सखीनामपि दर्शयन्ति ॥ १८ ॥ हा तात तातेति सवेदनार्तः क्वणच्छकृन्मूत्रकफानुलिप्तः । वरं मृतः किं भवने किमाजौ संदष्टदन्तच्छदभीमवक्त्रः ॥ १९ ॥ संमूर्च्छितं संयुगसंप्रहारैः पश्यन्ति सुप्तप्रतिबुद्धतुल्यम् । आत्मानमङ्केषु सुराङ्गनानां मन्दाकिनीमारुतवीजिताङ्गम् ॥ २० ॥ कश्चिद्द्विषत्खड्गहृतोत्तमाङ्गः सद्योविमानप्रभुतामुपेत्य । वामाङ्गसंसक्तसुराङ्गनः खं नृत्यत्कबन्धं समरे ददर्श ॥ २१ ॥ ते क्षत्रियाः कुण्डलिनो युवानः परस्परं सायकवीक्षिताङ्गाः । कुम्भेषु लग्नाः सुषुवुर्गजानां कुचेषु लग्ना इव कामिनीनाम् ॥ २२ ॥ भूरेणुदिग्धा नवपारिजातमाला रजोवासितबाहुमध्याः । गाढं

शिवाभिः परिरभ्यमाणाः सुराङ्गनाश्लिष्टभुजान्तरालाः ॥ २३ ॥ सलीलपातानि न भर्तुरभ्रमोर्न चित्रमुच्चैःश्रवसः पदक्रमम्। अनुद्रुतः संप्रति येन केवलं बलस्य शत्रुः प्रशशंस शीघ्रताम् ॥ २४ ॥ कोऽप्येष खण्डितशिरा विकसन्मुखश्रीः प्रारब्धताण्डवविधिः सुरकामिनीभिः। आलोक्यते निजकराभिनयानुरूपा व्यापारितेक्षणनिवेदितसत्त्वसाराः ॥ २५ ॥ स्त्रीषु प्रवीरजननी जननी तवैव देवी स्वयं भगवती गिरिजापि यस्य। त्वद्दोर्वशीकृतनिशाखमुखावलोकक्रीडाविदीर्णहृदया स्पृहयांबभूव ॥ २६ ॥ शस्त्रीकृतस्तरुवरः कपिपुंगवेन लङ्केशवक्षसि मृणालमृदुः पपात। तत्रैः स्थितैश्च कुसुमैः कुसुमेषुरेनं सीतावियोगविधुरं दृढमाजघान ॥ २७ ॥ दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा धीरोद्धता नमयतीव गतिर्धरित्रीम्। कौमारकेऽपि गिरिवद्गुरुतां दधानो वीरो रसः किमयमेत्युत दर्प एषः ॥ २८ ॥ अप्राकृतस्य चरितातिशयैश्च दृष्टैरत्यद्भुतैरपहृतस्य तथापि नास्था। कोऽप्येष वारशिशुकाकृतिरप्रमेयमाहात्म्यसारसमुदायमयः पदार्थः ॥ २९ ॥ समरविहरदस्मद्रुक्छनिःपातभिन्नप्रतिनरपतिभिन्नाद्भास्वतो बिम्बमध्यात्। वयमहह धरायां पातयामः पताका वसनपवनलोलं वारि दिव्यापगायाः ॥ ३० ॥ वयस्याः क्रोष्टारः प्रतिशृणुत बद्धोऽञ्जलिरयं किमप्याकाङ्क्षामः क्षरति न तथा वीरचरितम्। मृतानामस्माकं भवति परवश्यं वपुरिदं भवद्भिः कर्तव्यं नहि नहि जनाधीनचरणम् ॥ ३१ ॥ कपोले जानक्याः करिकलभदन्तद्युतिमुषि स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम्। मुहुः पश्यञ्शृण्वन्नरजनि च सेनाकलकलं जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥ ३२ ॥ महोसेनोपस्य प्रमदयमदंष्ट्रासहचरैः शरैर्मुक्तो जीवन्द्विरिव शरजन्मा समभवत्। इमां च क्षत्राणां भुजवनमहादुर्गविषमामयं वीरो धीमानजयदुपविंशान्वसुमतीम् ॥ ३३ ॥ पुरोजन्मा नाद्य प्रभृति मम रामः स्वयमहं न पुत्रः पौत्रो वा रघुकुलभुवां च क्षितिभुजाम्। अधीरं धीरं वा कलयतु जनो मामयमयं मया बद्धो दुष्टद्विजदमनदीक्षापरिकरः ॥ ३४ ॥ चापाचार्यस्त्रिपुरविजयी कार्तवीर्यो विजेयः शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः। अस्त्वेवैतत्किमु कृतवतो रेणुकाकण्ठबाधा बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥ ३५ ॥ अस्त्रैः स्वैरपि संयताग्रचरणो मूर्च्छाभिरामः क्षणे स्वाधीनव्रणिताङ्गशस्त्रनिचिते रोमोद्गमं वर्णयन्। भग्नानुद्वलयन्निजान्परभटान्संतर्जयन्निष्ठुरं धन्यो धाम जयश्रियः पृथुरणस्तम्भे पताकायते ॥३६॥ जन्मेन्दोरमले कुले व्यपदिशस्यद्यापि धत्से गदा मां दुःशासनकोष्णशोणितसुरा क्षीवं रिपुं भाषसे। दर्पान्धो मधुकैटभद्विषि हरावत्युद्धतं चेष्टसे मत्त्रासान्नृपशो विहाय समरं पङ्केऽधुना लीयसे ॥ ३७ ॥ वीरोऽसौ किमु वर्ण्यते दशमुखश्छिन्नैः शिरोभिः स्वयं यः पूजास्रजमुत्सुको घटयितुं देवस्य खट्वाङ्गिनः। सूत्रार्थी हरकण्ठसूत्रभुजगव्याकर्षणायोद्यतः साटोपं प्रमथैः कृतभ्रुकुटिभिश्छित्वान्तरे वारितः ॥ ३८ ॥ संतुष्टे तिसृणां पुरा-

मपि रिपौ कण्डूलदोर्मण्डलीक्रीडाकृत्तपुनःप्ररूढशिरसो वीरस्य लिप्सोर्वरम् । याच्ञादैन्य-
पराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु त्वं वृणिवत्यभितो मुखानि स दशग्रीवः कथं
वर्ण्यते ॥ ३९ ॥ भूमात्रं कियदेतदर्णवमितं तत्साधितं हार्यते यद्वीरेण भवादृशेन वदति
त्रिःसप्तकृत्वो जयः । वीरोऽयं नवबाहुरीदृशमिदं घोरं च वीरव्रतं तत्क्रोधाद्विरम प्रसीद
भगवञ्ज्ञात्यैव पूज्योऽसि नः ॥ ४० ॥ तात त्वं निजकर्मणैव गमितः स्वर्गं यदि स्वस्ति ते
ब्रूमस्त्वेकमिदं वधूहृतिकथां तातान्तिकं मा कृथाः । रामोऽहं यदि तद्दिनैः कतिपयैर्व्रीडा-
नमत्कंधरः सार्धं बन्धुजनैः सुरेन्द्रविजयी वक्ता स्वयं रावणः ॥ ४१ ॥ त्वय्यर्धासनभाजि
किंनरगणोद्गीतैर्भवद्विक्रमैरन्तःसंभृतमत्सरोऽपि भगवानाकारगुप्तौ कृती । उन्मीलद्भवदी-
यदक्षिणभुजारोमाञ्चविद्वोच्चरद्बाष्पैरेव विलोचनैरभिनयत्यानन्दमाखण्डलः ॥ ४२ ॥ श-
स्त्राशस्त्रिकथैव काननमगाद्गीर्वाणवाणिधमाः पन्थानो दिवि संकुचन्ति वसुधावन्ध्या न
सूते भटान् । लक्ष्मीरप्यरविन्दसौधवलभीनिर्व्यूहपर्यङ्किकाविश्रान्तैरलिभिर्न कुञ्जरघटाग-
ण्डोत्करैर्मोदते ॥ ४३ ॥ अस्त्रौघप्रसरेण रावणिरसौ यं दुर्यशोभागिनं चक्रे गौतमशापय-
न्त्रितभुजस्थेमानमाखण्डलम् । कच्छागतकुलीरता गमयता वीर त्वया रावणं तत्संसृष्ट-
महो विशल्यकरिणी जागर्ति सत्पुत्रता ॥ ४४ ॥ चत्वारो वयमृत्विजः स भगवान्कर्मो-
पदेष्टा हरिः सङ्ग्रामाध्वरदीक्षितो नरपतिः[1] पत्नी[2] गृहीतव्रता । कौरव्याः पशवः प्रियापरि-
भवक्लेशोपशान्तिः फलं राजन्योपनिमन्त्रणाय रसति[3] स्फीतं यशोदुन्दुभिः ॥ ४५ ॥ अ-
द्यारभ्य कठोरकार्मुकलता विन्यस्तहस्ताम्बुजस्तावन्न प्रकटीकरोति नयने शोणे निमेषो-
दयात् । यावत्सायककोटिपाटितरिपुक्ष्मापालमौलिस्खलन्मल्लीमाल्यभिलत्परागपटलैरामो-
दिनी मेदिनी ॥ ४६ ॥ नो तावत्कलयामि केलिकृपणे वामभ्रुवो लोचने तावन्न प्रणया-
वलीढमनसः पश्यामि मातुर्मुखम् । यावत्तारकुठारपातनिपतत्प्रत्यर्थिपृथ्वीपतिभ्राम्यत्स्वर्ण-
किरीटवद्धशिरसो भ्राम्यन्ति नो फेरवः ॥ ४७ ॥ निःपीते कलशोद्भवेन जलधौ गौरी-
पतेर्गङ्गया होतुं हन्त वपुर्ललाटदहने यावत्कृतः प्रक्रमः । तावत्तत्र मया विपक्षनगरी
नारीदृगम्भोरुहद्वन्द्वप्रस्खलदस्रवारिपटलैः सृष्टाः पयोराशयः ॥ ४८ ॥ रक्तं नक्तंचरौघः
पिबति वमति च ग्रस्तकुन्तः शकुन्तः क्रव्यं नव्यं गृहीत्वा प्रणदिति मुदितो मत्तवेताल-
बालः । क्रीडत्यव्रीडमस्मिन्रुधिरमधुवशात्पूतना नूतनाङ्गी योगिन्यो मासमेदःप्रमुदितम-
नसः शूरशक्तिं स्तुवन्ति ॥ ४९ ॥ आजन्मब्रह्मचारी पृथुलभुजकलीस्तम्भविभ्राजमाणो
ज्याघातश्रेणिसंज्ञोत्तरितवसुमतीचक्रजैत्रप्रशस्तिः । वक्षःपीठे घनास्त्रव्रणकिणकठिणे सं-
क्षणवातः पृषत्कान्प्रासो राजन्यगोष्ठीगजवनमृगयाकौतुकी जामदग्न्यः ॥ ५० ॥ क्षुद्राः
संत्रासमेते विजहितहरयो भिन्नमत्तेभकुम्भा युष्मद्देहेषु लज्जां दधति परममी सायका

1 युधिष्ठिर.. 2 द्रौपदी. 3 शब्द करोति.

निःपतन्तः । सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः किंचित्संरम्भलीलानियमितजलधिं राममन्वेषयामि ॥ ५१ ॥ अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् । कर्णालं संभ्रमेण व्रज कृप समरं मुञ्च हार्दिक्यशङ्कां ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥ ५२ ॥ कृष्टा केशेषु भार्या तव सुततयशोस्तस्य राज्ञस्तयोर्वा प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी । तस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा बाह्वोर्वीर्यातिभारद्रविणगुरुपदं मामजित्वैष गर्वः ॥ ५३ ॥

---

## करुणारसनिर्देशः ।

अस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी । साधिशेते कथं देवी ज्वलन्तीमधुना चिताम् ॥ १ ॥ साक्षान्मघवतः पौत्रः पुत्रो गाण्डीवधन्विनः । स्वस्रीयो वासुदेवस्य तं गृध्राः पर्युपासते ॥ २ ॥ असहायः सहायार्थी मामनुध्यातवान्ध्रुवम् । पीड्यमानः शरैस्तीक्ष्णैर्द्रोणद्रौणिकृपादिभिः ॥ ३ ॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य हि दातारं भर्तारं का न शोचति ॥ ४ ॥ अथ बद्धजटे रामे सुमन्ते गृहमागते । त्यक्तो राजा सुतत्यागादविश्वस्तैरिवासुभिः ॥ ५ ॥ देशे देशे कलत्राणि देशे देशे च बान्धवाः । तं देशं नैव पश्यामि यत्र भ्राता सहोदरः ॥ ६ ॥ प्रियस्य सुहृदो यत्र मम तत्रैव संभवः । भूयादमुष्य भूयोऽपि भूयांसमनुसंचरः ॥ ७ ॥ विकृन्ततीव मर्माणि देहं शोषयतीव मे । दहतीवान्तरात्मानं क्रूरः शोकाग्निरुत्थितः ॥ ८ ॥ अविशीर्णकान्तपात्रे नव्यदशे सुमुखि संभृतस्नेहे । मद्देहदीपकलिके कथमुपयातासि निर्वाणम् ॥ ९ ॥ वत्स गच्छ मम वाचिकमेतद्रामचन्द्रचरणे कथयेथाः । आवयोरिव भवेदनुरागो नावयोरिव विधिः प्रतिकूलः ॥ १० ॥ शैशवात्प्रभृति योषितां प्रियैः सौहृदादपृथुगाशयां प्रियाम् । छद्मना परिददामि मृत्यवे शौनिको गृहशकुन्तिकामिव ॥ ११ ॥ शीलानि ते चन्दनशीतलानि श्रुतानि भूमीतलविश्रुतानि । तथापि जीर्णेऽपितरावतस्मिन्विहाय हा वत्स कथं प्रयासि ॥ १२ ॥ वनी मुनीनामटवी तरूणां दरी गिरीणां तु गवेषितैव । अतः परं लक्ष्मण पक्ष्मलाक्षी प्राणा बहिर्भूय गवेषयन्तु ॥ १३ ॥ अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः । जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा ॥ १४ ॥ गृहिणीसचिवः सखीमिथः प्रियसख्या ललिते कलाविधौ । करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ १५ ॥ अपहस्तितबान्धवे त्वया विहितं साहसमस्य तृष्णया । तदिहानपराधिनि प्रिये सखि कोऽयं करुणोज्झितक्रमः ॥ १६ ॥ विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः । अनयोर्घटनाविधेः स्फुटं ननु खड्गेन शिरीषकर्तनम् ॥ १७ ॥ मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी । गतिस्त-

योरेष जनस्तमर्दयन्नहो विधे त्वं करुणा रुणद्धि नः ॥ १८ ॥ मदर्थसंदेशमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते । विलोकयन्त्या रुदतोऽथ पक्षिणः प्रिये स कीदृग्भविता तव क्षणः ॥ १९ ॥ इयमियं मयदानवनन्दिनी त्रिदशनाथ जितः प्रसवं स्थली । किमपरं दशकंधरगेहिनी त्वयि करोति करद्वययोजनम् ॥ २० ॥ उत्पातदैवतमिवायतनं मुरारेरस्ताचलान्तरितसूर्यमिवान्तरिक्षम् । हम्मीरभूभुजि गते सुरवेश्म विश्वं पश्यामि हारमिव नायकरत्नशून्यम् ॥ २१ ॥ आदाय मांसमखिलं स्तनवर्जमङ्गान्यामुञ्च वागुरिक यामि कुरु प्रसादम् । सीदन्ति शष्पकवलग्रहणानभिज्ञा मन्मार्गवीक्षणपराः शिशवो मदीयाः ॥ २२ ॥ स्वप्नेऽपि देवि रमसे न मया विना त्व स्वापे त्वया विरहितो मृतवद्भवामि । दूरीकृतासि विधिदुर्ललितैस्तथापि द्रावत्यहो हि मन इत्यसवो दुरन्ताः ॥ २३ ॥ सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी गत्वा जवात्त्रिचतुराणि पदानि सीता । गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा रामाश्रुणः कृतवती प्रथमावतारम् ॥ २४ ॥ हत्वा पतिं नृपमवेक्ष्य भुजङ्गदष्टं देशान्तरे विधिवशाद्गणिकास्मि जाता । पुत्रं पतिं समधिगम्य चितां प्रविष्टा शोचामि गोपगृहिणी कथमद्य तक्रम् ॥ २५ ॥ अस्तंगते शशिनि सैव कुमुद्वती मे दृष्टिं न नन्दयति संस्मरणीयशोभा । इष्टप्रवासजनितान्यबलाजनस्य दुःखानि नूनमतिमात्रसुदुःसहानि ॥ २६ ॥ यस्य त्वया व्रणविरोपणमिङ्गुदीनां तैलं न्यषिच्यत मुखे कुशसूचिविद्धे । श्यामाकमुष्टिपरिवर्धितको जहाति सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ २७ ॥ दैवे पराग्वदनशालिनि हन्त जाते याते च संप्रति दिवं प्रति बन्धुरत्ने । कस्मै मनः कथयितासि निजामवस्थां कः शीतलैः शमयिता वचनैस्तवाधिम् ॥ २८ ॥ सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता विद्यापि खेदकलिता विमुखीबभूव । सा केवलं हरिणशावकलोचना मे नैवापयाति हृदयादधिदेवतेव ॥ २९ ॥ धृत्वा पदस्खलनभीतिवशात्करं मे यारूढवत्यसि शिलाशकलं विवाहे । सा मां विहाय कथमद्य विलासिनि द्यामारोहसीति हृदयं शतधा प्रयाति ॥ ३० ॥ भूमौ स्थिता रमणनाथ मनोहरेति संबोधनैर्यमधिरोपितवत्यसि द्याम् । स्वर्गं गता कथमिव क्षिपासि त्वमेणशावाक्षि तं धरणिधूलिषु यामिदानीम् ॥ ३१ ॥ कनकहरिणं हत्वा रामो ययौ निजमाश्रयं जनकतनया प्राणेभ्योऽपि प्रियामविलोकयन् । दृढमुपगतैर्बाष्पापूरैर्निमीलितलोचनो न विशति कुटीमाशातन्तुप्रणाशभयादसौ ॥३२॥ अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि । जनस्थाने शून्ये विकरुणकरुणैरार्यचरितैरपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ ३३ ॥ ध्रुवं ध्वंसो भावी जलनिधिमहीशैलसरितामतो

१ अयोध्यासमीपदेशे २ शिरीषकुसुमवत्कोमला ३ वारवारम् ४ पराङ्मुखे. ५ खेदे. ६ मनोव्यथाम्. ७ प्रमसपादिता ८ स्वर्गम्. ९ कपटम् १० आचरितम्. ११ दुष्टैः. १२ अत्यन्तकरुणैः. १३ पाषाणः. १४ शीर्यति. १५ नाशः.

मृत्योः शीर्यत्कणलघुषु का जन्तुषु कथा । तथाप्युच्चैर्बन्धुव्यसनजनितः कोऽपि विषयो विवेकप्रोन्माथी दहति हृदयं शोकदहनः ॥ ३४ ॥ अक्षत्रारिकृताभिमन्युदहनप्रोद्भूततीव्रक्रुधः पार्थस्याकृतशात्रवः प्रतिकृतैरन्तः शुचा मुह्यतः । कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजटाद्दृष्टयो हा वत्सेति गिरः स्फुरन्ति न पुनर्निर्यान्ति वक्त्राद्बहिः ॥ ३५ ॥ कोऽहं ब्रूहि सखे स्वयं स भगवानार्यः स को राघवः के यूयं बत नाथ नाथ किमिदं दासोऽस्मि ते लक्ष्मणः । कान्तारे किमिहास्महे बत सखे देव्या गतिर्मृग्यते का देवी जनकाधिराजतनया हा जानकि क्वासि हा ॥ ३६ ॥ मध्याह्ने दववह्निनोष्मसमये दंदह्यमानं शिरः कृच्छ्रान्निर्गतमुत्तृषं जनमथो वीक्ष्यैकरक्षाक्षमम् । प्रेम्णा जीवयितुं मिथः पिबपिबेत्युच्चार्य मिथ्या पिबन्निर्गन्नास्यमपीतवारिहरणद्वन्द्वे विपन्नं वने ॥ ३७ ॥ हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषो धिक्प्राणान्पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ । इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिरश्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥ ३८ ॥ यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया कण्ठस्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् । वैक्लव्यं मम तावदीदृशमपि स्नेहाद॑रण्यौकसः पीड्यन्ते गृ॑हिणः कथं न त॑नयाविश्लेषदुःखैर्नवैः ॥ ३९ ॥ पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् । आदौ वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ४० ॥ या केलिच्युतकेशलेशविषमां शय्यां न भेजे पुरा या जालान्तरनिर्गतार्ककिरणद्योतादपि म्लायते । सेयं निष्ठुरकाष्ठसंचितचितां देदीप्यमानानलं सस्मेरा भजते यदि प्रियसुखं स्नेहस्य किं दुष्करम् ॥ ४१ ॥ ध्वस्तः काव्योरुमेरुः कविविपणि महारत्नराशी विशीर्णः शुष्कः शब्दौघसिन्धुः प्रलयमुपगतो वाक्यमाणिक्यकोशः । दिव्योक्तीनां निधानं निधनमुपगतं हा हता दिव्यवाणी बाणे दूरप्रयाणे प्रणयिनि विधिना शायिते दीर्घनिद्राम् ॥ ४२ ॥

## अद्भुतरसनिर्देशः ।

तस्मिन्युद्धे क्षणेनैव त्वरितो वानरध्वजः । सरथं सध्वजं साश्वं भीष्ममन्तर्दधे शरैः ॥ १ ॥ रत्नभित्तिषु संक्रान्तैः प्रतिबिम्बशतैर्वृतः । ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः ॥ २ ॥ चतुर्ष्वपि समुद्रेषु संध्यामन्वास्य तत्क्षणात् । कक्षाक्षिप्तं निशान्ते स्वे वालिः पौलस्त्यमत्यजत् ॥ ३ ॥ न केनापि श्रुतं दृष्टं वारिणा वारि शुष्यति । अहो गोदावरीवारा भवसिन्धुर्विशुष्यति ॥ ४ ॥ एव वन्ध्यसुतो याति खपुष्पकृतशेखरः । मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ॥ ५ ॥ कस्मै किं कथनीयं कस्य मनः प्रत्ययो

१ विवेकोन्मूलनः. २ अरण्यवासिनः. ३ गृहस्थाश्रमिणः. ४ कन्यावियोगदुःखैः. ५ उदकेन. ६ खमाकाशं तस्य पुष्पेण कृतः शेखरः शिरोभूषणं येन. ७ मरुमरीचिकोदके कृतमज्जनः. ८ शशशृङ्गकृतधनुर्धारी. ९ विश्वासः.

भवति । रमयति गोपवधूटी[1] कुञ्जकुटीरे परं ब्रह्म ॥ ६ ॥ चित्रं कनकलतायां पल्लव एवामृतं सूते । कुसुमसमुद्गमसमये नो जाने किं परं भावि ॥ ७ ॥ अम्बुजमम्बुनि जातं न हि दृष्टं जातमम्बुदादम्बु । अधुना तद्विपरीतं चरणसरोजाद्विनिर्गता गङ्गा ॥ ८ ॥ जाता लता हि शैले जातु लतायां न जायते शैलः । अधुना तद्विपरीतं कनकलतायां[2] गिरिद्वयं[3] जातम् ॥ ९ ॥ कमलमनम्भसि कमले कुवलयमेतानि कनकलतिकायाम् । सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥ १० ॥ चित्रं कनकलतायां शरदिन्दुस्तत्र खञ्जनद्वितयम् । तत्र च मनोजधनुषी तदुपरि गाढान्धकाराणि ॥ ११ ॥ चित्रं महानेष बतावतारः क्व कान्तिरेषाभिनवैव भङ्गिः । लोकोत्तरं धैर्यमहो प्रभावः क्वाप्याकृतिर्नूतन एष सर्गः ॥ १२ ॥ स्थाणुः स्वयं मूलविहीन एव पुत्रो विशाखो रमणी त्वपर्णा । परोपनीतैः कुसुमैरजस्रं फलत्यभीष्टं किमिदं विचित्रम् ॥ १३ ॥ किं क्रमिष्यति किलैष वामनो यावदित्थमहसन्त दानवाः । तावदस्य न ममौ नभस्तले लङ्घितार्कशशिमण्डलक्रमः ॥ १४ ॥ युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां स विकासमासत । तनौ ययुस्तस्य न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥ १५ ॥ कथमुपरि कलापिनः कलापो विलसति तस्य तलेऽष्टमीन्दुखण्डम् । कुवलययुगलं ततो विलोलं तिलकुसुमं तदधः प्रवालमस्मात् ॥ १६ ॥ विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये । मदविभ्रमा[4] सकलया पपे पुनः स पुरस्त्रियैकतमयैकसुदृशा ॥ १७ ॥ पश्चात्यभागमिह सानुषु संनिषण्णाः पश्यन्ति सान्द्रमलसान्द्रतरांशुजालम् । संपूर्णलब्धललनालपनोपमानमुत्सङ्गसङ्गिहरिणस्य हिमांशुमूर्तेः ॥ १८ ॥ इदं तावच्चित्रं यदवनितले पार्वणशशी कलङ्कादुन्मुक्तः किमपि च तदन्तर्विलसति । प्रवालं माणिक्यं कुवलयदलं मन्मथधनुर्मनोवीणावादध्वनिरिति महच्चित्रमधरम् ॥ १९ ॥ मूकारब्धं कमपि बधिराः श्लोकमाकर्णयन्ति श्रद्धालुस्तं[5] विलिखति कुणिः श्लाघया वीक्षतेऽन्धः । अभ्यारोहत्यहह सहसा पङ्गुरप्यद्रिशृङ्गं[6] सान्द्रालस्याः शिशुभरणतो मन्दमायान्ति वन्ध्याः ॥ २० ॥ काकुत्स्थेन शिरांसि यानि शतशश्छिन्नानि मायानिधेः पौलस्त्यस्य विमानसीमनि तथा भ्रान्तानि नाकौकसाम् । तान्येवास्य धनुः श्रमप्रशमनं कुर्वन्ति सीतापतेः क्रीडाचामरडम्बराणि कृतिभिर्लीलायमानैः कचैः ॥ २१ ॥ किं ब्रूमो हरिमस्य विश्वमुदरे किंवा फणाभोगिनः शेते यत्र हरिः स्वयं जलनिधेः सोऽप्येकदेशे स्थितः । आश्चर्यं कलशोद्भवो मुनिरसौ[7] यस्यैकहस्तेऽम्बुधिर्गण्डूषीयति पङ्कजीयति फणी भृङ्गीयति श्रीपतिः ॥ २२ ॥ दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतष्टङ्कारध्वनिरार्य-

---

१ स्त्री २ सुवर्णवल्ल्या तत्तुल्यायामङ्गयष्ट्याम्. ३ पर्वततुल्य स्तनद्वयमिति भाव.. ४ श्रद्धावान्. ५ विकलपाणि. ६ शिखरम्. ७ अगस्त्य..

बालचरितप्रस्तावनाडिण्डिमः । द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदरभ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥ २३ ॥

## हास्यरसनिर्देशः ।

जिह्वायाश्छेदिता नास्ति न तालुपतनाद्भयम् । निर्विशेषेण वक्तव्यं निर्लज्जः को न पण्डितः ॥ १ ॥ परान्नं प्राप्य दुर्बुद्धे मा प्राणेषु दयां कुरु । दुर्लभानि परान्नानि प्राणा जन्मनि जन्मनि ॥ २ ॥ विना मद्यं विना मांसं परस्वहरणं विना । विना परापकारेण दिविरो दिवि रोदिति ॥ ३ ॥ पूर्वं चेटी ततो वेटी पश्चाद्भवति कुट्टिनी । सर्वोपायपरिभ्रष्टा वेश्या भवति तापसी ॥ ४ ॥ यदक्षिभ्रूलतापाङ्गैः स्त्रियः कुर्वन्ति कामिनाम् । जघनेष्वेव तत्सर्वं पतत्यनपराधिषु ॥ ५ ॥ केशलुञ्चनसाम्येऽपि हन्त पश्यैतदन्तरम् । उपस्थाः कीटमश्नन्ति घृतभक्तं दिगम्बराः ॥ ६ ॥ सामगायनपूतं मे नोच्छिष्टमधरं कुरु । उत्कण्ठितासि चेद्भद्रे वामं कर्णं दशस्व मे ॥ ७ ॥ भस्माङ्गुलिर्वको मायी बालशौची तथा हिही । धारावर्ती चक्रवर्ती षडेते पुरुषाधमाः ॥ ८ ॥ प्रेषिकः प्रैषिकः काण्डः किमेकस्तम्भलीनकः । योगी तत्कालरोगी च षडेते सेवकाधमाः ॥ ९ ॥ आदौ वेश्या पुनर्दासी पश्चाद्भवति कुट्टिनी । सर्वोपायपरिक्षीणा वृद्धा नारी पतिव्रता ॥ १० ॥ गताः केचित्प्रबोधाय स्वयं तं कुम्भकर्णकम् । तदधःपवनोत्सर्गादुड्डीय पतिताः क्वचित् ॥ ११ ॥ असारे खलु संसारे सारं श्वशुरमन्दिरम् । हरो हिमालये शेते हरिः शेते महोदधौ ॥ १२ ॥ कमले कमला शेते हरः शेते हिमालये । क्षीराब्धौ च हरिः शेते मन्ये मत्कुणशङ्कया ॥ १३ ॥ बिलाद्बहिर्बिलस्यान्तःस्थितमार्जारसर्पयोः । मध्ये चाखुरिवाभाति पत्नीद्वययुतो नरः ॥ १४ ॥ सदा वक्रः सदा क्रूरः सदा पूजामपेक्षते । कन्याराशिस्थितो नित्यं जामाता दशमो ग्रहः ॥ १५ ॥ स्वयं पञ्चमुखः पुत्रौ गजाननषडाननौ । दिगम्बरः कथं जीवेदन्नपूर्णा न चेद्गृहे ॥ १६ ॥ उदरद्वयभरणभयादर्धाङ्गाहितदारः । यदि नैवं तस्यैकसुतः कथमद्यापि कुमारः॥ १७॥ अङ्गुलिभङ्गविकल्पनविविधविवादप्रवृत्तपाण्डित्यः । जपचपलोष्ठः सजने ध्यानपरो नगररथ्यासु ॥ १८ ॥ मुण्डो जटिलो नग्नश्छत्री दण्डी कषायचीरी वा । भस्मस्मेरशरीरो दिशि दिशि भोगी विजृम्भते दम्भः ॥ १९ ॥ भृकुटीकुटिलललाटः कण्टकिताङ्गः कटाक्षविकटाक्षः । कवलयति पृथुलकवलैस्तण्डुलमचलं द्विजः क्रुद्धः ॥ २० ॥ क्रयविक्रयकूटतुलालाघवनिःक्षेपरक्षणव्याजैः । एते हि दिवसचौरा मुष्णन्ति महाजनं वणिजः ॥ २१ ॥ आख्यायिकानुरागी व्रजति सदा पुण्यपुस्तकं श्रोतुम् । दष्ट इव कृष्णसर्पैः पलायते दानधर्मेभ्यः ॥ २२ ॥ दत्त्वा दिशि दिशि दृष्टिं याचकचकितोऽवगुण्ठनं कृत्वा । चौर इव कुटिलचारी पलायते कुटिलरथ्याभिः ॥ २३ ॥

णयति गगने गणकश्चन्द्रेण समागमं विशाखायाः। विविधभुजंगक्रीडासक्तां गृहिणी न नाति ॥ २४ ॥ कलमाग्रनिर्गतमषीबिन्दुव्याजेन साञ्जनाश्रुकणैः। कायस्थलुब्ध्यमाना रोदिति खिन्नेव राज्यश्रीः ॥ २५ ॥ वाचयति नान्यलिखितं लिखितमनेनापि वाचयति नान्यः। अयमपरोऽस्य विशेषः स्वयमपि लिखितं स्वयं न वाचयति ॥ २६ ॥ अर्थो नाम जनानां जीवितमखिलक्रियाकलापश्च। तं संहरन्ति धूर्ता छगलगला गायना लोके ॥ २७ ॥ तमसि वराकश्चौरो हाहाकारेण याति संत्रस्तः। गायनचौरः कपटो हा-हा कृत्वा न याति लक्ष्यं च ॥ २८ ॥ आमन्त्रणजयशब्दैः प्रतिपदहुंकारघर्घरारावैः। स्वयमुक्तसाधुवादैरन्तरयति गायनो गीतम् ॥ २९ ॥ मेरुः स्थितोऽतिदूरे मनुष्यभूमिं परां परित्यज्य। भीतो भयेन चौर्याद्धोराणा हेमकाराणाम् ॥ ३० ॥ तस्मान्महीपतीनामसम्भवे दस्युचौराणाम्। एकः सुवर्णकारो निग्राह्यः सर्वथा नित्यम् ॥ ३१ ॥ उपभुक्तखदिरवीटकजनिताधररागभङ्गभयात्। पितरि मृतेऽपि हि वेश्या रोदिति हा तातताततेति ॥ ३२ ॥ वर्णनदयितः कश्चिद्धनदयितो दानकर्मदयितोऽन्यः। रक्षादयितश्चान्यो वेश्यानां नर्मदयितोऽन्यः ॥ ३३ ॥ शृणु सखि कौतुकमेकं ग्राम्येण च कामिना यदद्य कृतम्। सुरतसुखमीलिताक्षी मृतेति भीतेन मुक्तास्मि ॥ ३४ ॥ श्रमणः श्रावकवध्वाः सुरतविधौ नाधरं दशति। मदिराक्षिमांसभक्षणमस्मिन्समये निषिद्धमिति ॥ ३५ ॥ द्विजराजशेखरो यद्वृषभारूढः सदा सदारस्त्वम्। चक्रे हर तद्विधिना पुनरुपनयनं ललाटघटितं ते ॥३६॥ विनापि तातेन विना जनन्या गजाननः शंभुसुताभिधानः। विनैव शास्त्रेण विनैव वेदैर्माध्यंदिनानामिव पाठकोऽभूत् ॥ ३७ ॥ शिक्षितापि सखिभिर्ननु सीता रामचन्द्रचरणौ न ननाम। किं भविष्यति मुनीशवधूवद्बालरत्नमिह तद्व्रजसेति ॥ ३८ ॥ वैराग्यभङ्गिरचनावचनैः प्रतार्य रण्डां चिराय विकटस्तनमुन्नताङ्गीम्। ब्रह्मोपदेशमिषसंगतगण्डभित्तिर्निःशङ्कचुम्बनरसैः कितवा द्रवन्ति ॥ ३९ ॥ धान्याकनागरनिशार्द्रकदाडिमत्वक्कुस्तुम्बरीलवणतैलसुसंस्कृतान्नः। मत्स्यान्नशीतशितभक्ततले ददाति स ब्रह्मलोकमधिगच्छति पुण्यकर्मा ॥ ४० ॥ खट्वा नितान्तलघुका शिथिलप्रताना द्वेष्यः पतिः स च निरन्तरचाटुकारी। तत्रापि दैवहतिकाः खलु भोग्यरात्र्यो हा सह्यतां कथमयं व्यसनप्रपञ्चः ॥ ४१ ॥ आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे। तारस्वरं प्रहितथूत्कमदात्प्रहारं हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥ ४२ ॥ गौरी तनुर्नयनमायतमुन्नता च नासा कृशा कटीतटी च पटी विचित्रा। अङ्गानि रोमरहितानि सुखाय भर्तुः पुच्छं न तुच्छमिति कुत्र समस्तवस्तु ॥ ४३ ॥ आपाण्डुरा शिरसि यत्र वली कपोले दन्तावली विगलिता न च मे विषादः। एणीदृशो युवतयः पथि मां विलोक्य तातेति भाषणपराः शतकुन्तघातः

१ लाला.

॥ ४४ ॥ कटी मुष्टिग्राह्या द्विपुरुषभुजग्राह्यमुदरं स्तनौ घण्टालोलौ जघनमधिगन्तुं व्यवसितौ । स्मितं भेरीनादं मुखमपि च यत्तद्भयकरं तथाप्येषा रण्डा परिभवति संतापयति च ॥ ४५ ॥ एका भार्या प्रकृतिमुखरा चञ्चला च द्वितीया पुत्रस्त्वेको भुवनविजयी मन्मथो दुर्निवारः । शेषः शय्या शयनमुदधौ वाहनं पन्नगारिः स्मारं स्मारं स्वगृहचरितं दारुभूतो मुरारिः ॥ ४६ ॥ गत्वा द्वारवतीं नयामि दिवसानाराधयन्ती हरिं त्यक्त्वा वानशनेन जीवितमिदं मुञ्चामि भागीरथीम् । प्रातः प्रातरिति प्रवर्तितकथानिर्वेदमातन्वती रण्डा नक्तमनन्तजारसुरतप्रीता सुखायास्तु वः ॥ ४७ ॥ पाणौ ताम्रघटी कुशः करतले धौते सिते वाससी भाले मृत्तिलकः सचन्दनरसो न्यस्तैकपुष्पं शिरः । दूरात्क्षिप्तपदाकृतिर्दृढतरव्याश्लिष्टदन्ता गिरः सोऽयं वञ्चयितुं जगद्भगवतो दम्भस्य देहक्रमः ॥ ४८ ॥ यत्रोत्थापनमात्रनिःसहजरच्चर्याविशेषश्लथभ्रश्यच्छेफसिदुर्बलाङ्गचलनव्यर्थोद्यमालिङ्गने । लज्जाधायिनि खिद्यमानयुवतौ वृद्धस्य कृच्छ्रे रते यत्स्यात्तत्प्रतिभाव्य किं न हसितुं युक्तं किमारोदितुम् ॥ ४९ ॥ धत्ते वक्षसि कौस्तुभोपलमयं मत्वा श्रियः सोदरं तन्नाभीगृहमाकलय्य मकरावासं मनाङ्नोज्झति । तन्नामप्रणयान्न लुम्पति हरिः श्रीकाण्डङ्के स्थितं किं केन क्रियतां स एव यदभूदेतादृशः स्त्रीवशः ॥ ५० ॥ अत्तुं वाञ्छति[1] वाहनं गणपतेराखुं क्षुधार्तः फणी तं च क्रौञ्चपतेः[2] शिखी[3] च गिरिजासिंहोऽपि नागाननम्[4] । गौरी जह्नुसुतामसूयति कलानाथं कपालानलो निर्विण्णः स पपौ कुटुम्बकलहादीशोऽपि हालाहलम् ॥ ५१ ॥ रण्डा पीनपयोधरा कृतमया चण्डानुरागाद्भुजं दोर्दण्डद्वयपीवरस्तनभरं नो गाढमालिङ्गिता । बुद्धेभ्यः शतशः शमे यदि पुनः कुत्रापि कापालिनी पीनोत्तुङ्गकुचावपीडनभरः प्राप्तः प्रबोधोदयः ॥ ५२ ॥ पीठीप्रक्षालनेन क्षितिपतिकथया सज्जनानां प्रवादैर्नीत्वा यामार्धमेवं कुशकुसुमसमारम्भणव्यग्रहस्ता । पश्चादेते निमज्जत्पुरयुवतिकुचाभोगदत्तेक्षणार्धाः प्राणायामोपदेशादिह झटिति सदा वासराणि क्षिपन्ति ॥ ५३ ॥ रे रे लोकाः कुरुध्वं श्रवणपुटपिधानं द्रुतं हस्तयुग्मैः शैलाः सर्वेऽपि यूयं भवत गुरुतराः सावधाना धरित्र्याम् । शीघ्रं रे रावण त्वं विरचय वसनैर्नासिकानां पिधानं सुप्तोऽयं कुम्भकर्णः कटुरवविकटं श्वद्दते दीर्घमुच्चैः ॥ ५४ ॥

---

## भयानकरसनिर्देशः ।

इदं मघोनः कुलिशं धरासंनिहितानलम् । स्मरणं यस्य दैत्यस्त्रीगर्भपाताय केवलम् ॥ १ ॥ रुधिरविसरप्रसाधितकरालकरवालरुचिरभुजपरिघः । झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृपभीमः ॥ २ ॥ ततः परामर्शविवृद्धमन्योर्भ्रूभङ्गदुःप्रेक्ष्यमुखस्य तस्य । स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निःपपात ॥ ३ ॥ विनिर्गतं मानदमा-

१ मूषिकम्. २ कार्तिकेयस्य. ३ मयूरः. ४ गजवदनम्. ५ द्वेष्टि.

त्ममन्दिराद्दूषत्युपश्रुत्य यदृच्छयापि यम्। ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती ॥ ४ ॥ अशक्नुवन्सोढुमधीरलोचनः सहस्ररश्मेरिव यस्य दर्शनम्। प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः ॥ ५ ॥ महाप्रलयमारुतक्षुभितपुष्करावर्तकप्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः। रवः श्रवणभैरवस्थगितरोदसीकन्दरः कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥ ६ ॥ किंचित्कोपकलाकलापकलनाहुंकारविभ्रङ्गुवोर्विक्षेपादकरोदसौ रघुपतिर्लङ्कापतेः पत्तनम्। क्रन्दत्फेरुरटत्करीन्द्रविघटद्दारुस्फुटद्गुग्गुलुप्रोत्क्रीडत्कपिनिःश्वसत्फणिरणज्झिल्लिभ्रमं द्वीपि च ॥ ७ ॥ अत्राप्युन्मदयातुधानतरुणीचञ्चत्करास्फालनव्यावल्गन्नृकपालतालरणितैर्नृत्यत्पिशाचाङ्गनाः। उद्गायन्ति यशांसि यस्य विततैर्नादैः प्रचण्डानिलप्रक्षुभ्यत्करिकुम्भकूटकुहरव्यक्ता रणक्षोणयः ॥ ८ ॥ गीर्वाणाः प्रतियन्ति नैव पिदधे कर्णौ सुधर्माधिपः कर्णाः कर्णिकयन्ति हन्त निभृतं शंभुः स्वयंभूगणाः। दूरादेत्य कृतान्तदूतनिवहाः स्वाकारसंगोपनैरुद्ग्रीवं कलयन्ति कोणपचमूनाथे शयाने रणे ॥ ९ ॥ निःशङ्कं वहिरम्ब चण्डमनसो नामानुरूपा क्रिया स्वर्वेश्यापदघर्घरस्वनवती न क्वापि रङ्गस्थली। किंचान्यद्दशकंधराङ्घ्रियुगले कल्याणभाजि स्फुटं लङ्कायां प्रतिपक्षविक्रमयथाशङ्काकरी भ्राम्यति ॥ १० ॥ अत्राकल्पचलत्पयोधरभरव्याविद्धमेघच्छटासृक्कस्थामिषगृध्नुगृध्रगरुदास्फालोच्चलन्मूर्धजा। व्यादायाननमट्टहासविकटं दूरेण तारापथात्रस्यत्सिद्धपुरन्ध्रिचन्द्रभसोन्मुक्तादुपक्रामति ॥ ११ ॥ प्रौढिच्छेदानुरूपोच्छलनपलवशात्सैंहिकेयोपमेयं त्रासाकृष्टाश्वतिर्यग्ज्वलितरविरथेनारुणेनेक्षमाणम्। कुर्वन्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्दरारन्ध्रभाजा झाङ्कारैर्भीतमेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥ १२ ॥ माद्यन्मातङ्गकुम्भस्थलवसनवशावासनामिश्रगन्धव्यासक्तव्यक्तमुक्ताफलशकललसत्केसरालीकरालः। एणी वैधव्यवेधाः स्वभुजबलमदग्रस्ततेजस्विधामा गुञ्जत्कुञ्जे गिरीणां हरिरिह शबरीगर्भपातं विधत्ते ॥ १३ ॥ मन्थायस्तार्णवाम्भः प्रतिकुहरलघुर्घर्घराध्वानधीरः कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः। कृष्णक्रोधाग्रदूतः कुरुशतनिधनोत्पातनिर्घातवातः केनास्मत्सिंहनादः प्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥ १४ ॥ ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्। दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ १५ ॥ निर्मज्जच्चक्षुरन्तर्भ्रमदतिकपिलक्रूरतारानरास्थिग्रन्थि दन्तान्तरालग्रथितमविरतं जिह्वया घट्टयन्ती। ध्वान्तेऽपि व्यात्तवक्त्रज्वलदनलशिखाजर्जरे व्यक्तकर्मा निर्यान्ती गृध्ररौद्री दिवमुपरि परिक्रीडते ताडकेयम् ॥ १६ ॥

---

१ ओष्ठप्रान्तः. २ लालसाः. ३ पक्षाः. ४ स्त्री. ५ मृगहननाय धारितरथं दुष्यन्तं प्रति मृगावस्था दर्शयतः सारथेरुक्तिरियम्.

## बीभत्सरसनिर्देशः।

प्रस्वेदमलदिग्धेन वहता मूत्रशोणितम्। व्रणेन विकृतेनेदं सर्वमन्धीकृतं जगत् ॥ १ ॥ विकीर्णहरिचन्दनद्रविणपत्रलीलारसा निपेतुरतिचञ्चलाश्चतुरकामिनीदृष्टयः। तदेतदुपरिभ्रमन्निबिडगृध्रजालं जनैर्लुठत्कृमिकलेवरं पिहितनासिकैर्वीक्ष्यते ॥ २ ॥ अस्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पलव्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः। तत्तच्छोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिबत्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥ ३ ॥ उत्कृत्य ज्वलिताशवात्कथमपि प्रेतासनः पैशिनीं पेशीमग्निमयीं निगीर्य सहसा दन्दह्यमानोदरः। धावत्युत्प्लवते मुहुर्निपतति प्रोत्तिष्ठति प्रेक्षते विष्वक्क्रोशति संपिनष्टि जठरं मुष्ट्या चलन्मस्तकः ॥ ४ ॥ अत्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कणप्रायप्रेङ्खितभूरिभूषणरवैराभूषयत्यम्बरम्। पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥ ५ ॥ रक्तं नक्तंचरौघः पिबति वमति च ग्रस्तकुन्तः शकुन्तः क्रव्यं नव्यं गृहीत्वा प्रणदतिमुदितो मत्तवेतालबालः। क्रीडत्यव्रीडमास्मिन्रुधिरमदवशात्पूतना नूतनाङ्गी योगिन्यो मांसभेदप्रमुदितमनसः शूरशक्तिं स्तुवन्ति ॥ ६ ॥ [1]उत्कृत्योत्कृत्य कृ[2]त्तिं प्रथममथ पृथुक्षोभभूयांसि मांसान्यंसस्फि[3]क्पृष्ठपिण्डाद्यवयवसुलभान्यु[4]ग्रपूतीनि ज[5]ग्ध्वा। आर्तस्नाय्वन्त्रनेत्रात्प्रकटितदशनः प्रे[6]तरङ्कः क[7]रङ्कादङ्कस्थादस्थिसंस्थं स्थ[8]पुटगतमपि क्र[9]व्यमव्यग्रमत्ति ॥ ७ ॥

---

## रौद्ररसनिर्देशः।

सरोषदष्टाधरलोहिताक्षैर्व्यक्तोर्ध्वरेखा भृकुटीर्वहद्भिः। तस्तार गां भल्लनिकृत्तकण्ठैर्हुंकारगर्भैर्द्विषतां शिरोभिः ॥ १ ॥ पातालतः किमु सुधारसमानयामि निष्पीड्य चन्द्रममृतं किमु वाहयामि। उद्यन्तमद्य तपनं किमु वारयामि कीनाशपाशमथवा किमु चूर्णयामि ॥ २ ॥ चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य। स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः ॥ ३ ॥ [10]कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः। न[11]रकरिपुणा सार्धं तेषां सभीमकिरीटि[12]नामहमयमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ ४ ॥ यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता। तद्द्यूतारणिसंभृतं नृपसुताकेशाम्बराकर्षणैः क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥ ५ ॥ येन

---

१ श्मशाने शवं भुञ्जानं प्रेतं दृष्ट्वा माधवस्योक्तिरियम्. २ चर्म. ३ कटिदेशस्थमांसपिण्ड.. ४ अत्यन्तदुर्गन्धीनि. ५ भक्षयित्वा. ६ प्रेतदरिद्र. ७ मृतशरीरात्. ८ ग्रन्थिः. ९ मांसम्. १० स्वयमृतद्रोणशिरश्छेदकुद्धस्याश्वत्थाम्न उक्तिरियम्. ११ कृष्णेन. १२ अर्जुनः.

स्यां विनिहत्य मातरमपि क्षत्रास्त्रपूरासवास्वादोन्मत्तपरश्वधेन विदधे निःक्षत्रिया मेदिनी। यद्बाणव्रणवर्त्मनः शिखरिणः क्रौञ्चस्य हंसच्छलादद्याप्यस्थिकणाः पतन्ति स पुनः क्रुद्धो मुनिर्भार्गवः ॥ ६ ॥ देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः क्षत्रादेव तथाविधः परिभवः स्नातस्य केशग्रहः । तान्येवाहितशस्त्रघस्मरगुरुण्यस्त्राणि भास्वन्ति मे यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥ ७ ॥ यैः प्राणापहृतिः कृता मम पितुः क्रुद्धैर्युधि क्षत्रियै रामोऽहं रमणीर्विहाय बलवान्निःशेषमेषां हठात् । भास्वत्प्रौढकुठारकोटिघनकाकाण्डत्रुटत्कंधरास्रोतोऽन्तःस्तुतशोणशोणितभरैः कुर्यां क्रुधां निर्वृतिम् ॥ ८ ॥ राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः प्रत्यक्षं कुरु बान्धवस्य च तथा कर्णस्य शल्यस्य च। पीतं तस्य ममाद्य पाण्डववधूकेशाम्बराकर्षिणः कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः ॥ ९ ॥ स्पृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा येनास्याः परिधानमप्यपहृतं राज्ञां कुरूणां पुरः । यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥ १० ॥ रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहुर्मुक्त्वा कर्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः । आध्मातः कटुकोक्तिभिः स्वयमकृद्दोर्विक्रमं कीर्तयन्नंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः ॥ ११ ॥ त्रैलोक्यत्राणशौण्डः सरसिजवसतेः स प्रसूतो भुजाभ्यां सुक्षत्रं नाम वर्णः कुलिशकठिणयोर्यस्य दोर्ष्णोर्विलीनम् । ज्वालालिज्वालकालानलकवलभयभ्रान्तदेवासुराणि व्यातन्वानो जगन्ति ज्वलितर्मुनिरयं पार्वतीधर्मपुत्रः ॥ १२ ॥ अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के मग्नानास्पन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ । स्फीतासृक्पानगोष्ठीरसदशिवशिवा तूर्यनृत्यत्कबन्धे संग्रामैकार्णवान्तः प्रविचरितुमलं पण्डिताः पाण्डुपुत्राः ॥ १३ ॥ रे धृष्टा धार्तराष्ट्राः प्रबलभुजबृहत्ताण्डवाः पाण्डवा रे रे वार्ष्णेयाः सकृष्णाः शृणुत मम वचो यद्ब्रवीम्यूर्ध्वबाहुः । एतस्योत्खातबाहोर्द्रुपदनृपसुतातापिनः पापिनोऽहं पाता हृच्छोणितानां प्रभवति यदि वस्तत्किमेवं न पार्थः ॥ १४ ॥ नाहं रक्षो न भूतं रिपुरुधिरजलाह्लादिताङ्गः प्रकाशं विस्तीर्णोरुप्रतिज्ञा जलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि । भो भो राजन्यवीराः समरशिखिशिखाभुक्तशेषाः कृतं वस्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥ १५ ॥ यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यागतो वा । यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥ १६ ॥ युष्मद्दोर्दण्डमण्डल्यवनमितरणच्चण्डकोदण्डदण्डोन्मुक्तेषु छिन्नमूर्छत्प्रतिनृपतिभुजाखण्डमुण्डावकी-

---

१ रक्षणम्. २ नम्रगः. ३ वार्ताः. ४ भार्गवः.

र्णा । गायन्नृत्यत्प्रवालाद्रजनिचरवधूदत्ततालैः करालैरुन्नालैरट्टहासैः प्रकटितप्रदर्शैर्युद्धभूर्भाति भीमा ॥ १७ ॥

---

## शान्तरसनिर्देशः ।

**वैराग्यम्** ॥ को देशः कानि मित्राणि कः कालः कौ व्ययागमौ । कश्चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥ १ ॥ पुत्रमित्रकलत्रेषु सक्ताः सीदन्ति जन्तवः । सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ २ ॥ मन्ये मायेयमज्ञानं यत्सुखं स्वजनादपि । निदाघवारणायालं तिलच्छाया न कस्यचित् ॥ ३ ॥ विपत्प्रशान्त्यै सेव्यन्ते यदि कष्टेन भूभृतः । तत्करिष्यति कष्टापि विपत्किमधिकं ततः ॥ ४ ॥ मितमायुर्व्ययो नित्यं नैति पातं कदाचन । परामृशन्ति तदपि न भवं भोगलोलुपाः ॥ ५ ॥ निःस्नेहो याति निर्वाणं स्नेहोऽनर्थस्य कारणम् । निःस्नेहेन प्रदीपेन यदेतत्प्रकटीकृतम् ॥ ६ ॥ अशीमहि वयं भिक्षामाशावासो वशीमहि । शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ७ ॥ यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावतोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ८ ॥ प्रचण्डवासनावातैरुद्धूता नौर्मनोमयीः । वैराग्यकर्णधारेण विना रोद्धुं न शक्यते ॥ ९ ॥ रागिणापि विरागिण्यस्त्रियस्तासु रमेत कः । अहं च कलये मुक्तिं या विरागिणि रागिणी ॥ १० ॥ लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः । तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥ ११ ॥ पूरयित्वार्थिनामाशां प्रियं कृत्वा द्विषामपि । पारं गत्वा श्रुतौघस्य धन्या वनमुपासते ॥ १२ ॥ पुत्रदारादिसंसारः पुंसां संमूढचेतसाम् । विदुषां शास्त्रसंसारः सद्योगाभ्यासविघ्नकृत् ॥१३॥ गतः कामकथोन्मादो गलितो यौवनज्वरः । गतो मोहश्च्युता तृष्णा कृतं पुण्याश्रमे मनः ॥ १४ ॥ वनान्यमूनि न गृहाण्येता नद्यो न योषितः । गृहा इमे न दायादास्तन्मे नन्दति मानसम् ॥ १५ ॥ शान्तिकन्थालसत्कण्ठो मनस्थालीमिलत्करः । त्रिपुरारिपुरद्वारि कदाहं मोक्षभिक्षुकः ॥ १६ ॥ उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलः । यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः ॥ १७ ॥ निर्विवेकतया बाल्यं कोपोन्मादेन यौवनम् । वृद्धत्वं विकलत्वेन सदा सोपद्रवं नृणाम् ॥ १८ ॥ प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया । तृष्णाकामेन बाध्यन्ते प्राणिनो निशि निद्रया ॥ १९ ॥ गतसारेऽत्र संसारे सुखभ्रान्तिः शरीरिणाम् । लालापानमिवाङ्गुष्ठे बालानां स्तन्यविभ्रमः ॥ २० ॥ दिनमेकं शशी पूर्णः क्षीणस्तु बहुवासरान् । सुखाद्दुःखं सुराणामप्यधिकं का कथा नृणाम् ॥ २१ ॥ अयि बोधाम्बुधौ भावः स्वच्छोऽयं विश्वबुद्बुदः । विनीत उदितो वेत्ति विकल्पपटलं मनः ॥ २२ ॥ दासोऽहमिति या पूर्वं विहिता भावना मया । अनादि-

---

१ प्रव्रज्यायाम्. २ प्राणवायुः. ३ विचारशून्यत्वेन. ४ शैशवम्. ५ निःसारे.

त्वेन सेदानीं मम चेतोऽवलम्बते ॥ २३ ॥ न विषयभोगो भाग्यं योग्यं खलु यत्र जन्तुमात्रमपि। ब्रह्मेन्द्ररुद्रमृग्यं भाग्यं विषयेषु वैराग्यम् ॥ २४ ॥ पाषाणखण्डेष्वपि रत्नबुद्धिः कान्तेति धीः शोणितमांसपिण्डे। पञ्चात्मके वर्ष्मणि चात्मभावो जयत्यसौ काचन मोहलीला ॥ २५ ॥ अत्यन्तसिद्धाञ्जननिर्मलाक्षैस्तपोधनैरप्यनवेक्षितं यत्। अवेक्ष्यते धाम तदेव काश्यामात्यन्तिकेनाक्षिनिमीलनेन ॥ २६ ॥ कुटुम्बचिन्ताकुलितस्य पुंसः कुलं च शीलं च गुणाश्च सर्वे। अपक्वकुम्भे निहिता इवापः प्रियान्ति देहेन समं विनाशम् ॥ २७ ॥ सुरमन्दिरतरुमूलनिवासः शय्या भूतलमजिनं वासः। सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः ॥ २८ ॥ नि[१]खिलं जगदेव नश्वरं[२] पुनरस्मिन्नितरां कलेवरम्[३]। अथ तस्य कृते कियानयं क्रियते हन्त जनैः परिश्रमः ॥ २९ ॥ मलयानिलकालकूटयो रमणीकुन्तलभोगिभोगयोः। श्वपचा[४]त्मभुवोः किमन्तरं मम भूयात्परमात्मनि स्थितिः ॥ ३० ॥ नवनीलमेघरुचिरः परः पुमान्[५] वनीमवाप्य धृतगोपविग्रहः[६]। नवनीयकीर्तिरमरैरपि स्वयं नवनीतभिक्षुरधुना स चिन्त्यते ॥ ३१ ॥ सार्वभौमभवनं वनवासो निस्वभावभवभावनया ते। बालिशो हि विषयेन्द्रियचौरैर्मुष्यते स्वभवने च वने च ॥ ३२ ॥ इतो न किंचित्परतो न किंचिद्यतो यतो यामि ततो न किंचित्। विचार्य पश्यामि जगन्न किंचित्स्वात्मावबोधादधिकं न किंचित् ॥ ३३ ॥ व्याघ्रीव तिष्ठति जरा परितर्जयन्ती[८] रोगाश्च शत्रव इव प्रहरन्ति देहम्। आयुः परिस्रवति भिन्नघटादिवाम्भो लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ३४ ॥ दैन्यं क्वचित्क्वचन मन्मथजा विकाराः कुत्राप्यनेकविधबन्धुजनप्रपञ्चः। क्वापि प्रभुत्वधनकल्पितमीश्वरत्वमित्येकवैकृतमिदं जगदाविभाति ॥ ३५ ॥ आस्तामकण्टकमिदं वसुधाधिपत्यं त्रैलोक्यराज्यमपि नैव तृणाय मन्ये। निःशङ्कसुप्तहरिणीकुलसंकुलासु चेतः परं वलति शैलवनस्थलीषु ॥ ३६ ॥ ते तीक्ष्णदुर्जननिकारशरैर्न भिन्ना धीरास्त एव शमसौख्यभुजस्त एव। सीमन्तिनीभुजलतागहनं व्युदस्य येऽवस्थिताः शमफलेषु तपोवनेषु ॥ ३७ ॥ बुद्धेरगोचरतया न गिरा प्रचारो दूरे गुरुप्रथितवस्तुकथावतारः। तत्त्वं क्रमेण विदुषां करुणावदाने श्रद्धावतां हृदि पद स्वयमादधाति ॥ ३८ ॥ दधति तावदमी विषयाः सुखं स्फुरति यावदियं हृदि मूढता। मनसि तत्त्वविदां तु विवेचके क्व विषयाः क्व सुखं क्व परिग्रहाः ॥ ३९ ॥ क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः। जराजीर्णैरङ्गैर्नट इव मषीमण्डिततनुर्नटः संसारान्ते विशति यमधानीजवनिकाम् ॥ ४० ॥ क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्ब-

---

१ संपूर्णम्. २ नाशवत्. ३ शरीरम्. ४ चाण्डाल. ५ पुत्र, ब्रह्मा वा. ६ पृथ्वीम्. ७ देह. ८ कम्पयन्ती.

रधरः क्वचिद्भूमीशय्यः क्वचिदपि च पर्यङ्कशयनः । क्वचिद्भिक्षाद्वृत्तिः क्वचिदपि च मिष्टाशनरुचिर्महात्मा योगज्ञो न गणयति दुःखं न च सुखम् ॥ ४१ ॥ अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा । तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्यारण्ये शिवशिवशिवेति प्रलपतः ॥ ४२ ॥ गतास्तातभ्रातृप्रमुखसुखपीयूषमधुराः पुरा लक्ष्मीः क्लैव्यव्यसनरसास्तेऽपि दिवसाः । अदः श्रान्तं स्वान्तं सपदि यदि निर्वेदपदवी भजन्त्या भासोऽयं जनयति सुखं भावविमुखम् ॥ ४३ ॥ अवश्यं यातारश्चिरतरमुषित्वापि विषया वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् । व्रजन्त्यः स्वातन्त्र्यादतुलपरितापाय मनसः स्वयं त्यक्तास्त्वेते शमसुखमनन्तं विदधति ॥ ४४ ॥ न संसारोत्पन्नं चरितमनुपश्यामि कुशलं विपाकः पुण्यानां जनयति भयं मे विमृशतः । महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ४५ ॥ धनं तावल्लब्धं कथमपि तथाप्यस्य नियतं विनाशे नाशे वा तव सति वियोगोऽप्युभयथा । अनुत्पादः श्रेयान्किम कथय तस्याथ विलयो विनाशो लब्धस्य व्यथयतितरां न त्वनुदयः ॥ ४६ ॥ परेषां चेता[illegible] [illegible]समाराध्य बहुधा प्रसादं किं नेतुं विशसि हृदय क्लेशकलिलम् । प्रसन्ने त्वय्यन्तः स्वयमुदि[illegible]त [illegible]न्तामणिगुणे विविक्तः संकल्पः किमिव हि फलं पुष्पाति तरोः ॥ ४७ ॥ यदेतत्स्वच्छन्दं विहरणमकार्पण्यमशनं सहार्यैः संलापः श्रुतमुपशमैकव्रतफलम् । मनो मन्दस्पन्दं बहिरपि विरस्यापि विमृशन्न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ ४८ ॥ तडिन्मालालोलं प्रतिदिवसदत्तान्धतमसं भवे सौख्यं हित्वा शमसुखमुपादेयमनघम् । इति व्यक्तोद्गारं चटुलवचसः शून्यमनसो वयं वीतव्रीडाः शुक इव पठामः परममी ॥ ४९ ॥ यदासौ दुर्वारः प्रसरति मदश्चित्तकरिणस्तदा तस्योद्दामप्रसररसरूढैर्व्यवसितैः । क्व तद्धैर्यालानं क्व च निजकुलाचारनिगडः क्व सा लज्जारज्जुः क्व विनयकठोराङ्कुशमपि ॥ ५० ॥ कुरङ्गाः कल्याणं प्रतिविटपमारोग्यमटवीं श्रयन्ति क्षेमं ते पुलिनकुशलं भद्रमुपलाः । निशान्तादस्वन्तात्कथमपि विनिष्क्रान्तमधुना मनोऽस्माकं दीर्घामभिलषति युष्मत्परिचितिम् ॥ ५१ ॥ गतः कालो यत्र प्रणयिनि मयि प्रेमकुटिलः कटाक्षः कालिन्दीलघुलहरिवृत्तिः प्रभवति । इदानीमस्माकं जठरकमठीपृष्ठकठिना मनोवृत्तिस्तत्किं व्यसनिनि मुधैव ग्लपयसि ॥ ५२ ॥ गतः कालो यत्र द्विचरणपशूनां क्षितिभुजां पुरः स्वस्तीत्युक्त्वा विषयसुखमास्वादितमभूत् । इदानीमस्माकं तृणमिव समस्तं कलयतामपेक्षा भिक्षायामपि किमपि चेतस्त्रपयति ॥ ५३ ॥ अहंकार क्वापि व्रज वृजिन हे मा त्वमिह भूरभूमिर्दर्पाणामहमपसर त्वं पिशुन हे । अरे क्रोध स्थानान्तरमनुसरानन्यमनसां त्रिलोकीनाथो नो हृदि वसतु देवो हरिरसौ ॥ ५४ ॥ अतिक्रान्तः कालो ललितललनाभोगसुखदो भ्रमन्तः शान्ताः

स्मः सुचिरमिह संसारसरणौ। इदानीं स्वःसिन्धोस्तटभुवि समाक्रन्दनगिरः सुतारैः फूत्कारैः शिवशिवशिवेति प्रतनुमः॥ ९५॥ महाशय्या भूमिर्मसृणमुपधानं भुजलता वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः। स्फुरद्दीपश्चन्द्रः स्वधृतिवनितासङ्गमुदितः सुखं शान्तः शेते विगतभवभीतिर्नृप इव ॥ ९६॥ कदा वृन्दारण्ये नवघननिभं नन्दतनयं परीतं गोपीभिः क्षणरुचिमनोज्ञाभिरभितः। गमिष्यामस्तोषं नयनविपयीकृत्य कतिनो वयं प्रेमोद्रेकस्खलितगतयो वेपथुभृतः॥ ९७॥ कदा भिक्षाभक्तैः करकलितगङ्गाम्बुतरलैः शरीरं मे स्थास्यत्युपरतसमस्तेऽन्द्रियसुखम्। कदा ब्रह्माभ्यासस्थिरतनुतयारण्यविहगाः पतिष्यन्ति स्थाणुभ्रमहृतधियः स्कन्धशिरसि॥ ९८॥ कदा वृन्दारण्ये विमलयमुनातीरपुलिने चरन्तं गोविन्दं हलधरसुदामादिसहितम्। अये कृष्ण स्वामिन्मधुरमुरलीवादनविभो प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्॥ ९९॥ कदा वा साकेते विमलसरयूतीरपुलिने चरन्तं श्रीरामं जनकतनयालक्ष्मणयुतम्। अये राम स्वामिञ्जनकतनयावल्लभ विभो प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्॥ ६०॥ कदा वाराणस्याममरतटिनीरोधसि वसन्वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम्। अये गौरीनाथ त्रिपुरहर शंभो त्रिनयन प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान्॥ ६१॥ भूः पर्यङ्को निजभुजलताकन्दुकं खं वितानं दीपश्चन्द्रो विरतिवनितालब्धयोगप्रमोदः। दिक्कन्यानां व्यजनपवनैर्वीज्यमानोऽनुकूलैर्भिक्षुः शेते नृप इव सदा वीतरागो जितात्मा॥ ६२॥ आसंसारात्त्रिभुवनमिदं चिन्वतां तातभावं नो वास्माकं नयनपदवीं श्रोत्रवर्त्मागतो वा। योऽयं धत्ते विषयकरिणी गाढमूढाभिमानक्षीबस्यान्तःकरणकरिणः संयमानामलीनाम्॥ ६३॥ आयुर्वायुव्यथितनलिनीपत्रमित्रं किमन्यत्संपच्छम्पाद्युतिसहचरी स्वैरचारी कृतान्तः। कस्मादस्मिन्भ्रमसि तमसि त्वं प्रयाहि प्रयागं पौनःपुन्यं भुवि भगवती स्वर्धुनी ते धुनीते॥ ६४॥ पूर्वं तावत्कुवलयदृशां लोललोलैरपाङ्गैराकर्षद्भिः किमपि हृदयं पूजिता यौवनश्रीः। संप्रत्यन्तर्निहितसदसद्भावलब्धप्रबाधप्रत्याहारैर्विशदहृदये वर्तते कोऽपि भावः॥ ६५॥ मातर्माये भगिनि कुमते हे पितर्मोहजाल व्यावर्तध्वं भवतु भवतामेष दीर्घो वियोगः। सद्यो लक्ष्मीरमणचरणभ्रष्टगङ्गाप्रवाहव्यामिश्रायां दृषदि परमब्रह्मदृष्टिर्भवामि॥ ६६॥ गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य ब्रह्मज्ञानाभ्यसनविधिना योगनिद्रां गतस्य। किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः कण्डूयन्ते जरठहरिणाः शृङ्गमङ्गे मदीये॥ ६७॥ भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे मायामोहौ क्षयमुपगतौ नष्टसंदेहवृत्तेः। शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं निस्त्रैगुण्ये पथि विचरतः को

१ पद्धतौ. २ स्वर्णद्याः. ३ पर्यङ्क. ४ मृदु. ५ उल्लोच. ६ स्वधृतिः स्वीय धैर्यं तदेव वनिता स्त्री तस्या सङ्गेन मुदितो हृष्टः सन्. ७ अयोध्यायाम्. ८ भागीरथीतीरे.

विधिः को निषेधः ॥ ६८ ॥ यद्वात्मानं सकलवपुषामेकमन्तर्बहिस्थं दृष्ट्वा पूर्णं स्वमिव सततं सर्वभाण्डस्थमेकम् । नान्यत्कार्यं किमपि च ततः कारणाद्भिन्नरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ६९ ॥ हेम्नः कार्यं हुतवहगतं हेममेवेति यद्वत्क्षीरे क्षीरं समरसतया तोयमेवाम्बुमध्ये । एवं सर्वं समरसतया त्वंपदं तत्पदार्थे निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७० ॥ यस्मिन्विश्वं सकलभुवनं सामरस्यैकभूतं ऊर्वी ह्यापोऽनलमनिलखं जीवमेवं क्रमेण । यत्क्षाराब्धौ समरसतया सैन्धवैवत्वभूतं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७१ ॥ यद्वन्नद्योदधिसमरसौ सागरत्वं ह्यवाप्तौ तद्वज्जीवालयपरिगतौ सामरस्यैकभूतौ । भेदातीतं परिलयगतं सच्चिदानन्दरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥७२॥ दृष्ट्वा वेद्यं परमथ पदं स्वात्मबोधस्वरूपं बुद्ध्वात्मानं सकलवपुषामेकमन्तर्बहिस्थम् । भूत्वा नित्यं सदुदिततया स्वप्रकाशस्वरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७३ ॥ कार्याकार्ये किमपि सततं नैव कर्तृत्वमस्ति जीवन्मुक्तस्थितिरवगतो दग्धवस्त्रावभासः । एवं देहे प्रविलयगते तिष्ठमानो वियुक्तो निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७४ ॥ कस्मात्कोऽहं किमपि च भवान्कोऽयमत्र प्रपञ्चः स्वं स्वं वेद्यं गगनसदृशं पूर्णतत्त्वप्रकाशम् । आनन्दाख्यं समरसघने बाह्यमन्तर्विहीने निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७५ ॥ किं कन्दर्प वृथा कदर्थयसि रे कोदण्डटङ्कारितै रे रे कोकिल कोमलं कलरवं किं त्वं मुधा वल्गसि । मुग्धे स्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते ॥ ७६ ॥ मातर्मेदिनि तात मारुत सखे ज्योतिः सुबन्धो जल भ्रातर्व्योम निबद्ध एष भवतामन्त्यः प्रणामाञ्जलिः । युष्मत्सङ्गवशोपजातसुकृतोद्रेकः स्फुरन्निर्मलज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥ ७७ ॥ आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी । मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ ७८ ॥ येषां वल्लभया सह क्षणमपि क्षिप्रं क्षपा क्षीयते तेषां शीतकरः शशी विरहिणामुल्केव संतापकृत् । अस्माकं तु न वल्लभा न विरहस्तेनोभयभ्रंशिनामिन्दू राजति दर्पणाकृतिरसौ नोष्णो न वा शीतलः ॥ ७९ ॥ धावन्तः प्रतिवासरं दिशि दिशि प्रत्याशया संपदां दृष्ट्वा कालवशेन हन्त फलितं कस्यापि देवद्रुमम् । श्रावं श्रावमवज्ञयोपवसितं सर्वत्र भग्नोद्यमा जीवामः परमार्थशून्यहृदयास्तप्ता मनोमोदकैः ॥ ८० ॥ सन्त्येके धनलोभमात्रगहनव्यामोहसंमूर्च्छिताः केचिद्दैवतसुन्दरीस्तनपरीरम्भभ्रमव्याकुलाः । अन्तर्भूतसमस्ततत्त्वनिवहं चिन्मात्रशेषं शिवं दृष्ट्वा हृष्टतनूरुहाङ्कुरभराः कष्टा न शिष्टाः क्वचित् ॥ ८१ ॥ आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं व्यापारैर्बहुकार्यभारगुरुभिः कालोऽपि न ज्ञायते । दृष्ट्वा जन्मजराविपत्तिमरणं त्रा-

सश्च नोत्पद्यते पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ८२ ॥ यत्रैकं श्रुतमक्षरं पशुपतेर्हेतुः श्रुतीनां कृतौ सद्यो रोहति चाष्टधा तनुभृता यत्रैकमुद्यद्वपुः । यत्रैकाभ्रनदीकणेऽपि विधृते सर्वैव सा धार्यते साहश्याद्भुतवैभवा कविगिरां पारे हि वाराणसी ॥८३॥ स्मारस्मेरमदोन्नमत्कुचतटीकान्ताकरान्दोलितैः पुष्पाम्भोनिचितैरुशीररचितैः किं तालवृन्तैर्मम । अन्वानन्दवनं सुखं शिशयिषोरर्धप्रमीलद्दृशो यातायातपरिश्रमं शमयिता गङ्गातरङ्गानिलः ॥ ८४ ॥ एकद्वैः किमभारि सूरिभिरथ द्वित्राणि मित्राणि किं व्यापन्नानि गताश्च किं त्रिचतुरा घोरा महाव्याधयः । सम्प्राप्तैरलमिष्टमेतदपि नश्चेतः क्षणान्पञ्चषान्स्वात्मन्येव रमस्व तेजसि गले कालेऽथ वा सर्वतः ॥८५॥ नित्यानित्यविचारणप्रणयिनी वैराग्यमेकं सुहृन्मित्राण्येव यमादयः शमदमप्रायाः सखायो मताः । मैत्र्याद्याः परिचारिकाः सहचरी नित्यं मुमुक्षाबलादुच्छेद्या रिपवश्च मोहममतासंकल्पवैरादयः ॥८६॥ पुण्यैर्मूलफलैः प्रियप्रणयिनीं वृत्तिं कुरुष्वाधुना भूशय्यां नवपल्लवैः कुरु तृणैरुत्तिष्ठ यामो वने । क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा वित्तव्याध्यविवेकसंकुलगिरां नामापि न श्रूयते ॥ ८७ ॥ भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं हा सोपानपरम्परां गिरिसुताकान्तालयालंकृतिम् । अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखालोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥ ८८ ॥ कृत्वा दीननिपीडनां निजजने बद्ध्वा वचोविग्रहं नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः । द्रव्यौघाः परिसंचिताः खलु मया यस्याः कृते सांप्रतं नीवाराञ्जलिनापि केवलमहो सेयं कृतार्था तनुः ॥ ८९ ॥ रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवसाध्वगैः सत्रासं च सकौतुकं च सदयं दृष्टस्य तैर्नागरैः । निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे निःशङ्कं करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ॥ ९० ॥ सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुणज्योत्स्नाकृष्णचतुर्दशीसरलतायोगश्वपुच्छच्छटा । यैरेषापि दुराशया कलियुगे राजावली सेविता तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम् ॥ ९१ ॥ भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं माने दैन्यभयं बले रिपुभयं रूपे तरुण्या भयम् । शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ ९२ ॥ शय्या शाद्वलमासनं शुचि शिला सद्म द्रुमाणामधः शीतं निर्झरवारिपानमशनं कन्दाः सहाया मृगाः । इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने दुष्प्रापार्थिनि यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥ ९३ ॥ याच्ञाशून्यमयत्नलभ्यमशनं वायुः कृतो वेधसा व्यालानां पशवस्तृणाङ्कुरभुजः सुस्थाः स्थलीशायिनः । संसारार्णवलङ्घनक्षमधिया वृत्तिः कृता सा नृणां यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ ९४ ॥ बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं प्रायो

१ ज्ञानं.नन्द्

८०

बन्धुभिरध्वनीव पथिकैर्योगो वियोगावहः । हातव्योऽयमसार एष निरसः संसार इत्यादिकं सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ॥ ९५ ॥ पुत्रः स्यादिति दुःखितः सति सुते तस्यामये दुःखितस्तद्दुःखादिकमार्जने तदनये तन्मूर्खतादुःखितः । जातश्चेत्सगुणोऽथ तन्मृतिभयं तस्मिन्मृते दुःखितः पुत्रव्याजमुपागतो रिपुरयं मा कस्यचिज्जायताम् ॥ ९६ ॥ आहारः फलमूलमात्मरचितं शय्या मही वल्कलं संवीताय परिच्छदः कुशसमित्पुष्पाणि पुत्रा मृगाः । वस्त्रान्नाश्रयदानभोगविभवा निर्यन्त्रणाः शाखिनो मित्राणीत्यधिकं गृहेषु गृहिणां किं-नाम दुःखाद्दते ॥ ९७ ॥ सूक्तिं कर्णसुधां व्यनक्तु सुजनस्तास्मिन्न मोदामहे ब्रूतां वाचमसूयको विषमुचं तास्मिन्न खिद्यामहे । या यस्य प्रकृतिः सतां वितनुतां किं नरतया जायते कुर्मरतत्खलु कर्म जन्मनिगडच्छेदाय यज्जायते ॥ ९८ ॥ यत्क्षान्तिः समये श्रुतिः शिवशिवेत्युक्तौ मनोनिर्वृतिर्भैक्षे चाभिरुचिर्धनेषु विरतिः शश्वत्समाधौ रतिः । एकान्ते वसतिर्गुरौ प्रतिनतिः सद्भिः समं संगतिः सत्त्वे प्रीतिरनङ्गनिर्जितिरसौ सन्मुक्तिमार्गे स्थितिः ॥ ९९ ॥ संभोगाद्विषयामिषस्य परितः सौमित्यमस्ताखिलज्ञानोन्मेषतया कथं तव भवेदत्यास्पदं देहिनः । साध्यं तद्धि तदेव साधनमितो व्यावृत्तिरेवामिषात्तस्यां ज्योतिरुपैत्यनिन्धनमिदं दोषत्रयं धक्ष्यति ॥ १०० ॥ सत्यं वक्तुमशेपमस्ति सुलभा वाणी मनोहारिणी दातुं दानवरं शरण्यमभयं स्वच्छं पितृभ्यो जलम् । पूजार्थं परमेश्वरस्य विमलः स्वाध्याययज्ञः परं क्षुद्व्याधेः फलमूलमस्ति शमनं क्लेशात्मकैः किं धनैः ॥ १०१ ॥ जिह्वे लोचन नासिके श्रवण हे त्वक् चापि नो वार्यसे सर्वेभ्योऽस्तु नमः कृताञ्जलिरहं सप्रश्रयं प्रार्थये । युष्माकं यदि संमतं तदधुना नात्मानमिच्छाम्यहं होतुं भूमिभुजां निकारदहनज्वालाकराले गृहे ॥ १०२ ॥ भिक्षाहारमदैन्यमप्रतिहतं भीतिच्छिदं सर्वदा दुर्मात्सर्यमदाभिमानमथनं दुःखौघविध्वंसनम् । सर्वत्रान्वहमप्रयत्नसुलभं साधु प्रियं पावनं शंभोः सत्रमवार्यमक्षयनिधिं शंसन्ति योगीश्वराः ॥१०३॥ मातर्लक्ष्मि भजस्व कंचिदपरं मत्काङ्क्षिणी मा स्म भूर्भोगेभ्यः स्पृहयालवो नहि वयं का निःस्पृहाणामसि । सद्यश्रूतपलाशपत्रपुटके पात्रे पवित्रीकृते भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं[२] समीहामहे ॥ १०४ ॥ धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी[३] सत्यं सूनुरयं[४] दया च भगिनी भ्राता मनःसंयमः[५] । शय्या भूमितलं दिशोऽपि वसनं[६] ज्ञानामृतं भोजनमेते यस्य कुटुम्बिनो वद सखे कस्माद्भयं योगिनः ॥ १०५ ॥ संध्यावन्दन भद्रमस्तु भवते भो स्नान तुभ्यं नमो भो देवाः पितरश्च तर्पणविधौ नाहं क्षमः क्षम्यताम् । यत्र क्वापि निषद्य यादवकुलोत्तंसस्य कंसद्विषः स्मारं स्मारमघं हरामि तदलं मन्ये किमन्येन मे ॥ १०६ ॥ एणाक्षीस्पृहयालुता न कथमप्यास्ते विवेकोदयान्नित्यं प्रच्युतिशङ्कया

१ उपजीवनम्. २ वाञ्छामहे. ३ गृहस्था पत्नी. ४ पुत्रः. ५ मनोनिग्रहः. ६ वस्त्रम्.

क्षणमपि स्वर्गे न मोदामहे । अप्यन्येषु विनाशिवस्तुविषयाभोगेषु तृष्णा न मे स्वर्णद्याः पुलिने परं हरिपदध्यानं मनो वाञ्छति ॥ १०७ ॥ जातोऽहं जनको ममैष जननी क्षेत्रं कलत्रं कुलं पुत्रा मित्रमरातयो वसु बलं विद्या सुहृद्बान्धवाः । चित्तस्यादितकल्पनामनुभवं विद्वानविद्यामरीं निद्रामेत्य विघूर्णितो बहुविधान्स्वप्नानिमान्पश्यति ॥ १०८ ॥ लाटीनेत्रपुटी पयोधरघटी क्रीडाकुटीदोस्तटीपाटीरद्रववर्णनेन कविभिर्मूढैर्दिनं नीयते । गोविन्देति जनार्दनेति जगतां नाथेति कृष्णेति च व्याहारैः समयः सदेकमनसां पुंसां परिक्रामति ॥ १०९ ॥ वेदस्याध्ययनं कृतं परिचितं शास्त्रं पुराणं स्मृतं सर्वं व्यर्थमिदं पदं न कमलाकान्तस्य चेत्कीर्तितम् । उत्खातं सदृशीकृतं विरचितः सेकोऽम्भसा भूयसा सर्वं निष्फलमालवालवलये क्षिप्तं न बीजं यदि ॥ ११० ॥ हेयं हर्म्यमिदं निकुञ्जभवनं श्रेयं प्रदेयं धनं पेयं तीर्थपयो हरेर्भगवतो गेयं पदाम्भोरुहम् । नेयं जन्म चिराय दर्भशयने धर्मे निधेयं मनः स्थेयं तत्र सितासितस्य सविधे ध्येयं पुराणं महः ॥ १११ ॥ गङ्गोत्तुङ्गतरङ्गरिङ्गणलघूत्सर्पन्मरुच्छीलितान्गुञ्जन्षट्पदमञ्जुवञ्जुललसत्कुञ्जोपकण्ठे पठन् । अध्यास्य प्रणिधाय मानसमहो शंभोः पदाम्भोरुहे धन्याः प्राप्य परं पदं प्रतिदिनं नन्दन्ति योगं विना ॥ ११२ ॥ कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी निश्चिन्तं सुखसाध्यभैक्ष्यमशने शय्या श्मशाने वने । मित्रामित्रसमानता पशुपतेश्चिन्ताथ शून्यालये स्वात्मानन्दमदप्रमोदमुदितो योगी सुखं तिष्ठति ॥ ११३ ॥ धिग्धिक्तान्कृमिनिर्विशेषवपुषः स्फूर्जन्महासिद्धयो निष्पन्दीकृतशान्तयोऽपि च तमःकारा गृहेष्वासते । तं विद्वांसमिह स्तुमः करपुटीभिक्षान्नशाकोऽपि वा बालावक्त्रसरोजिनीमधुनि वा यस्या विशेषो रसः ॥ ११४ ॥ पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं वस्त्रं विस्तीर्णमाशादशकममलिनं तल्पमस्वल्पमुर्वी । येषां निःसङ्गताङ्गीकरणपरिचितिः स्वान्तसंतोषिणस्ते धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति ॥ ११५ ॥ आशा निष्ठा प्रतिष्ठा मम किल महिलास्तासु सौख्यं कदा स्याद्याप्रान्त्या सा विदध्यादिह किमपि तथा मध्यमा सा परत्र । आद्या सा नोभयत्राप्यहह तदपि किं सक्तता यामि तस्यां या प्रौढ्यादप्रगल्भे प्रतिदिवसमुभे ते कदर्थीकरोति ॥ ११६ ॥ **विषयोपहासः** ॥ नित्यमाचरतः शौचं कुर्वतः पितृतर्पणम् । यस्य नोद्विजते चेतः शास्त्रं तस्य करोति किम् ॥ ११७ ॥ यावन्तः कुरुते जन्तुः स्वसुखार्थपरिग्रहान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ११८ ॥ कृमयो भस्म विष्ठा वा निष्ठा यस्येयमीदृशी । स कामः परतापाय युज्यतामिति को नयः ॥ ११९ ॥ रक्तमांसमयः कायः स्त्रीणा स्पर्शसुखाय नः । तमेवाश्नन्ति सिंहाद्या रम्यं नास्तीह वस्तुतः ॥ १२० ॥ अङ्गमङ्गेन संपीड्य मांसं मांसेन तु स्त्रियः । पुराहमभवं भीतो यत्तन्मोहविजृम्भितम् ॥ १२१ ॥ उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे । क्लेदिनि

स्त्रीव्रणे सक्तिरक्रमेः कस्य जायते ॥ १२२ ॥ दृष्ट्वैव विकृतं कायं वायुस्पर्शविवर्जितम् । ये तु निर्व्याजमासक्तास्तेभ्योऽपि बिभिमो वयम् ॥ १२३ ॥ अन्यत्र भीष्माद्गाङ्गेयादन्यत्र च हनूमतः । हरिणीखुरमात्रेण चर्मणा मोहितं जगत् ॥ १२४ ॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ । विण्मूत्रपूये रमतां क्रमीणां कियदन्तरम् ॥ १२५ ॥ चर्मखण्डं द्विधाभिन्नमपानोद्गारधूपितम् । ये रमन्ति नरास्तत्र कृमितुल्याः कथं न ते ॥ १२६ ॥ सर्वाशुचिनिधानस्य कृतघ्नस्य[1] विनाशिनः । शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ १२७ ॥ लालां वक्त्रासवं वेत्ति मांसपिण्डौ[2] पयोधरौ । मांसास्थिकूटं जघनं जनः कामग्रहातुरः ॥ १२८ ॥ दाराः परिभवकारा बन्धुजनो बन्धनं विषयाः । कोपं जनस्य मोहो ये रिपवस्ते तु सुहृदाप्ताः ॥ १२९ ॥ आलोचनं च वचनं च निगूहनं च यासां स्मरन्नमृतवत्सरसं कृशत्वम् । तासां किमङ्ग पिशितास्रपुरीषपात्रं गात्रं स्मरन्मृगदृशां न निराकुलोऽसि ॥ १३० ॥ प्रादुर्भवन्ति वपुषः कति नाम कीटा यान्यत्नतः खलु तनोरपसारयन्ति । मोहः क एष जगतो यदपत्यसंज्ञां तेषां विधाय परिशोषयति स्वदेहम् ॥ १३१ ॥ स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् । स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्धि जघनं परं निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम् ॥ १३२ ॥ तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि क्षुधार्तः सञ्शालीन्कवलयति मांसाज्यकलितान् । प्रदीप्ते कामाग्नौ सुदृढतरमाश्लिष्यति वधूं प्रतीकारं व्याधेः सुखमिति विपर्यस्यति जनः ॥ १३३ ॥ कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो व्रणी पूयक्लिन्नः कृमिकुलशतैराचिततनुः । क्षुधाक्षामो जीर्णः पिठरककपालावृतगलः शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥ १३४ ॥ श्रियो दोलालोला विषयजरसाः प्रान्तविरसा विपद्गेहं देहं महदपि धनं भूरि निधनम् । बृहच्छोको लोकः सततमबला दुःखबहलास्तथाप्यस्मिन्घोरे पथि बत रता हन्त कुधियः ॥ १३५ ॥ समाश्लिष्यत्युच्चैर्घनपिशितपिण्डं स्तनधिया मुखं लालाक्लिन्नं पिबति चषकं[3] सासवमिव[4] । अमेध्यक्लेदार्द्रे पथि च रमते स्पर्शरसिको महामोहान्धानां किमिव रमणीयं न भवति ॥ १३६ ॥ बाला मामियमिच्छतीन्दुवदना सानन्दमुद्वीक्षते नीलेन्दीवरलोचना पृथुकुचोत्पीडं परीरप्सते । का त्वामिच्छति का च पश्यति पशो मांसास्थिभिर्निर्मिता नारी वेद न किंचिदत्र स पुनः पश्यत्यमूर्तः पुमान् ॥ १३७ ॥ आस्यं यस्याः सुधांशुं कलयति नयनाभ्यां जितः पुंसमोहो कान्त्या विद्युत्कचाभ्यां तरुणजलरुहे निर्जितेऽस्याः सुधांशुम् । कुष्टं दुर्गन्धियुक्तं लघुकृमिविकृतं पूयमज्जास्रवाहिव्याप्तं तन्मक्षिकाभिर्गतिरिरिति वपुषः कुत्सिता नास्ति लोके ॥ १३८ ॥ क्वैतद्वक्त्रारविन्दं क्व तदधरमधु क्वायतास्ते कटाक्षाः क्वालापाः कोमलास्ते क्व

---

१ उत्तमान्नपानादिकृतोपकारनाशकस्य. २ मांसपिण्डम्. ३ पानपात्रम्. ४ मद्ययुक्तम्.

च मदनधनुर्भङ्गुरो भ्रूविलासः। इत्थं खट्वाङ्गकोटौ प्रकटितदशनं मञ्जुगुञ्जत्समीरं रागान्धानामिवोच्चैरुपहसति महामोहजालं कपालम् ॥ १३९ ॥ गर्भवासप्रयुक्तं दुःखम् ॥ कृमिभिः क्षतसर्वाङ्गः सौकुमार्यात्प्रतिक्षणम्। मूर्च्छामाप्नोत्युरुक्लेशो गर्भस्थैः क्षुधितैर्भृशम् ॥ १४० ॥ कटुतीक्ष्णोष्णलवणक्षाराम्लादिभिरुल्बणैः। मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः ॥ १४१ ॥ उल्वेन संवृतस्तस्मिन्नान्त्रैश्च बहिरावृतः। आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ १४२ ॥ अकल्पः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे। अनुच्छ्वसन्स्मरन्पूर्वं गर्भे किं नाम विन्दते ॥ १४३ ॥ निःसृतोऽहं करिष्यामि सुकृतानीति चिन्तयन्। मेदोसृग्दिग्धसर्वाङ्गो जरायुपुटसंवृतः ॥ १४४ ॥ निष्क्रामन्भृशदुःखार्तो रुदन्नुच्चैरधोमुखः। यन्त्रादिव विनिर्मुक्तः पतत्युत्तानशाय्यथ ॥ १४५ ॥ अनित्यतानिरूपणम् ॥ एतयोः प्रेक्ष्यते लक्ष्मीश्छत्रचामरचञ्चला। स्वप्न एव महाबुद्धे दिनानि त्रीणि पञ्च वा ॥ १४६ ॥ एकेऽद्य प्रातरपरे पश्चादन्ये पुनः परे। सर्वे निःसीम्नि संसारे यान्ति कः केन शोचते ॥ १४७ ॥ येषां निमेषोन्मेषाभ्यां जगतां प्रलयोदयौ। तादृशाः पुरुषा याता मादृशां गणनैव का ॥ १४८ ॥ गलितानीन्द्रलक्षाणि बुद्बुदानीव वारिणि। मां जीवितनिबद्धाशं विहसिष्यन्ति साधवः ॥ १४९ ॥ संसाररात्रिदुःस्वप्ने शून्ये देहमये भ्रमे। आस्थां चेदनुबध्नाति तन्मूर्खो नास्ति तत्परः ॥ १५० ॥ येषु येषु दृढं बद्धा भावना सृष्टवस्तुषु। तानि तानि विनष्टानि दृष्टानि किमिहोत्तमम् ॥ १५१ ॥ यन्मध्ये यश्च पर्यन्ते यदायाते मनोरमम्। सर्वमेवापवित्रं तद्विनाशामेध्यदूषितम् ॥ १५२ ॥ नीलोत्पलाभनयनाः परमप्रेमभूषणम्। हासायैव विलासिन्यः क्षणभङ्गितया स्थिता ॥ १५३ ॥ गन्धर्वनगराकारः संसारः क्षणभङ्गुरः। मनसो वासनैवेयमुभयोर्भेदसाधनम् ॥ १५४ ॥ गतेनापि न संबन्धो न सुखेन भविष्यति। वर्तमाने क्षणातीतं संगतिः कस्य केन वा ॥ १५५ ॥ पृथिवी दह्यते यत्र मेरुश्चापि विशीर्यते। सुशोषेत्सागरजलं शरीरे तत्र का कथा ॥ १५६ ॥ इदं युगसहस्रस्य भविष्यदभवद्दिनम्। तदप्यद्यत्वमापन्नं का कथा मरणावधेः ॥ १५७ ॥ लब्धास्त्यक्ताश्च संसारे यावन्तो बान्धवास्त्वया। न सन्ति खलु तावन्त्यो गङ्गायामपि वालुकाः ॥ १५८ ॥ आसन्नतामेति मृत्युरायुर्याति दिने दिने। आघातं नीयमानस्य वध्यस्येव पदे पदे ॥ १५९ ॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत। अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ १६० ॥ एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम्। यद्येकस्त्वरितं

१ कीटकैः २ महाकष्टयुक्त. ३ उत्कटै. ४ जरायुणा ५ व्याप्त ६ असमर्थः. ७ चलनादिव्यापारे ८ पक्षीव. ९ उच्छ्वास त्यक्तुमशक्तः १० प्राचीन कर्म. ११ गर्भाशयाच्च्युतः. १२ मेदोरक्तलिप्तसर्वाङ्गः. १३ जरायुकोशव्याप्तः. १४ बहिर्निःसरन्. १५ निःसरणकालेऽत्यन्तदुःखयुक्तः. १६ उच्चस्वरेण रोदनं कुर्वन्. १७ उत्तान शेतेऽसौ.

यातस्तत्र का परिदेवना ॥ १६१ ॥ सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः । किंतु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥ १६२ ॥ मातापितृसहस्राणि पुत्रदारशतानि च । तवानन्तानि यातानि कस्य स्युः कस्य वा भवान् ॥१६३॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ १६४ ॥ बिडालभक्षिते दुःखं यादृशं गृहकुक्कुटे । न तादृङ्ममताशून्ये कलविङ्केऽथ मूषके ॥ १६५ ॥ शरदम्बुधरच्छाया गत्वर्यो यौवनश्रियः । आपातरम्या विषयाः पर्यन्तपरितापिनः ॥ १६६ ॥ अन्तकः पर्यवस्थाता जन्मिनः संततापदः । इति त्याज्ये भवे भव्यो मुक्तावुत्तिष्ठते मनः ॥ १६७ ॥ न्यस्तं यथा मूर्ध्नि मुदा निमेषो यवाक्षताद्यञ्जलिकल्पितः सन् । मृत्युं समीपस्थितमप्यजानन्भुनक्ति मर्त्यो विषयांस्तथैव ॥ १६८ ॥ नन्दन्ति मन्दाः श्रियमाप्य नित्यं परं विषीदन्ति विपद्गृहीताः । विवेकदृष्ट्या चरतां नराणां श्रियो न किंचिद्विपदो न किंचित् ॥ १६९ ॥ इतो न किंचित्परतो न किंचिद्यतो यतो याति ततो न किंचित् । स्वात्मावबोधादपरं न किंचिद्विचार्यमाणेऽपि जगन्न किंचित् ॥ १७० ॥ हरिष्यमाणो बहुधा परस्वं करिष्यमाणः सुतसंपदादि । धरिष्यमाणोऽरिशिरः सुपादं न स्वं मरिष्यन्तमवैति कोऽपि ॥ १७१ ॥ उत्तुङ्गवातायनगोपुराणि गृहाणि वित्तानि दुरर्जितानि । क्षणादधःपातकराणि हन्त चितातिथेरस्य निरर्थकानि ॥ १७२ ॥ मरणं प्रकृतिः शरीरिणां विकृतिर्जीवनमुच्यते बुधैः । क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ ॥ १७३ ॥ क्षिपसि शुकं वृषदंशकरदने मृगमर्पयसि मृगादनवदने । वितरसि तुरगं महिषविषाणे विदधच्चेतो भोगवितानें ॥१७४॥ नलिनीदलगतजलमतितरलं तद्वज्जीवितमतिशयचपलम् । विद्धि व्याधिव्यालग्रस्तं लोकं शोकहतं च समस्तम् ॥१७५॥ अष्टकुलाचलसप्तसमुद्रा ब्रह्मपुरंदरदिनकररुद्राः । न त्वं नाहं नायं लोकस्तदपि किमर्थं क्रियते शोकः ॥ १७६ ॥ चेतोहरा युवतयः स्वजनोऽनुकूलः सद्बान्धवाः प्रणतिगर्भगिरश्च भृत्याः । गर्जन्ति दन्तिनिवहास्तरलास्तुरङ्गाः संमीलने नयनयोर्नहि किंचिदस्ति ॥ १७७ ॥ मित्रं कलत्रमितरः परिवारलोको भोगैकसाधनमिमाः किल संपदो नः । एकः क्षणः स तु भविष्यति यत्र भूयो नायं न यूयमितरे न वयं न चैते ॥ १७८ ॥ अहमिह कृतविद्यो वेदिता सत्कलानां धनपतिरहमेको रूपलावण्ययुक्तः । इति कृतगुणगर्वः खिद्यते किं जनोऽयं कतिपयदिनमध्ये सर्वमेतन्न किंचित् ॥ १७९ ॥ वयं येभ्यो जाताश्चिरतरगता एव खलु ते समं यैः संवृद्धाः स्मरणपदवीं तेऽपि गमिताः । इदानीमेते स्मः प्रतिदिवसमासन्नपतना गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ १८० ॥ यदस्माभिर्दृष्टं क्षणिकमभवत्स्वप्नमिव तत्कियन्तो भावाः स्युः स्मरणविषयादप्यवगताः । अहो पश्यन्पश्यन्स्वजनमखिलं यान्तमनिशं हतव्रीडं चेतस्तदपि न भवेत्सङ्गरहितम् ॥ १८१ ॥ अमीषां जन्तूनां कतिपयानि-

मेषस्थितिजुषां वियोगे धीराणां क इह परितापस्य विषयः । क्षणादुत्पद्यन्ते विलयमपि यान्ति क्षणममी न केऽपि स्थातारः सुरगिरिपयोधिप्रभृतयः ॥ १८२ ॥ आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः । शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते जीवे वारितरङ्गबुद्बुदसमे सौख्यं कुतः प्राणिनाम् ॥ १८३ ॥ रम्यं हर्म्यतलं न किं वसतये श्रव्यं न गेयादिकं किंवा प्राणसमासमागमसुखं नैवाधिकं प्रीतये । किं तूद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुरच्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥ १८४ ॥ भूत्वा कल्पशतायुषोऽण्डजभुवः सेन्द्राश्च देवासुरा मन्वाद्या मुनयो महीजलधयो नष्टाः पराः कोटयः । मोहः कोऽयमहो महानुदयते लोकस्य शोकावहो बन्धोः फेनसमे गते वपुषि यत्पञ्चात्मके पञ्चताम् ॥ १८५ ॥ आक्रान्तं मरणेन जन्म जरया यात्युल्बणं[1] यौवनं संतोषो धनलिप्सया शमसुखं[2] प्रौढाङ्गनाविभ्रमैः[3] । लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनैरस्थैर्येण विपत्तयोऽप्युपहता ग्रस्तं न किं केन वा ॥ १८६ ॥ आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव आपदः[4] । जातं जातमवश्यमाशु विवशं[5] मृत्युः[6] करोत्यात्मसात्[7] तत्किं केन निरङ्कुशेन[8] विधिना यन्निर्मितं सुस्थिरम् ॥ १८७ ॥ भोगास्तुङ्गतरङ्गभङ्गचपलाः[9] प्राणाः क्षणध्वंसिनः स्तोकान्येव[10] दिनानि यौवनसुखं स्फूर्तिः क्रियासु स्थिता । तत्संसारमसारमेव निखिलं बुद्ध्वा बुधा बोधका लोकानुग्रहपेशलेन[11] मनसा यत्नः समाधीयताम् ॥ १८८ ॥ भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला आयुर्वायुविघट्टिताभ्रपटलीलीलाम्बुवद्भङ्गुरम् । लोला यौवनलालसास्तनुभृतामित्याकलय्य द्रुतं योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ॥ १८९ ॥ साक्षात्प्रेमावतारः कमलदलदृशो दिक्षु लक्ष्मीरनन्ताः सत्पुत्राः सन्ति मित्राः समविषयविपत्संविभागी कुटुम्बः । एतत्सर्वं हि तावत्सुकृतविलसितं दृश्यमानं मनोज्ञं यच्चैतत्क्षिप्रनाशप्रणयि बत मनाग्म्लायते तेन चेतः ॥ १९० ॥ आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्रीरर्थाः संकल्पकल्पा[12] घनसमयतडिद्विभ्रमा[13] भोगपूराः । कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः[14] प्रणीतं ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम् ॥१९१॥ कालचरितम् ॥ मातुलो यस्य गोविन्दः पिता यस्य धनंजयः । सोऽपि कालवशं प्राप्तः कालो हि दुरतिक्रमः ॥ १९२ ॥ पुरंदरसहस्राणि चक्रवर्तिशतानि च । निर्वापितानि कालेन प्रदीपा इव वायुना ॥ १९३ ॥ अद्यैव हसितं गीतं पठितं यैः शरीरिभिः । अद्यैव ते न दृश्यन्ते कष्टं कालस्य चेष्टितम् ॥ १९४ ॥

---

१ उच्छ्रितम्. २ शान्तिसुखम्. ३ विलासैः. ४ प्रकृष्टा आपदो विपत्तय ५ पराधीनम्. ६ काल. ७ आत्माधीनम्. ८ स्वतन्त्रेण. ९ तुङ्गा उच्चा ये तरङ्गा ऊर्मयस्तेषां भङ्गस्तद्वच्चपलाः. १० अल्पानि. ११ मृदुलेन. १२ संकल्पतुल्याः. १३ वर्षाकालविद्युद्विलासाः. अतिचञ्चला इत्यर्थः. १४ कान्ताभि.

म्रियमाणं मृतं बन्धुं शोचन्ते परिदेविनः। आत्मानं नानुशोचन्ति कालेन कवलीकृतम् ॥ १९५ ॥ ब्रह्मा विष्णुदिने याति विष्णू रुद्रस्य वासरे। ईश्वरस्य तथा सोऽपि कः कालं लङ्घितुं क्षमः ॥ १९६ ॥ अप्सु [1]प्लवन्ते पाषाणा मानुषा घ्नन्ति राक्षसान्। कपयः कर्म कुर्वन्ति कालस्य कुटिला गतिः ॥ १९७ ॥ अशनं[2] मे वसनं[3] मे जाया मे बन्धुवर्गो मे। इति मेमेकुर्वाणं कालवृको[4] हन्ति पुरुषाजम्[5] ॥ १९८ ॥ प्राप्ता जरा यौवनमप्यतीतं बुधा यतध्वं परमार्थसिद्ध्यै। आयुर्गतप्रायमिदं यतोऽसौ विश्राम्य विश्राम्य न याति कालः॥१९९॥ भगीरथाद्याः सगरः ककुत्स्थो दशाननो राघवलक्ष्मणौ च। युधिष्ठिराद्याश्च बभूवुरेते सत्यं क याता बत ते नरेन्द्राः ॥२००॥ आराध्य भूपतिमवाप्य ततो धनानि भुञ्जामहे वयमिह प्रसभं सुखानि। इत्याशया बत विमोहितमानसानां कालो जगाम मरणावधिरेव पुंसाम् ॥२०१॥ यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते। इत्थं चेमौ रजनिदिवसौ दोलयन्द्वावि वाक्षौ[6] कालः काल्या भुवनफलके[7] क्रीडति प्राणिसारैः[8]॥२०२॥ भ्रातः कष्टमहो महान्स नृपतिः सामन्तचक्रं[9] च तत्पार्श्वे सा च विदग्धराजपरिषत्[10] ताश्चन्द्रबिम्बाननाः। उद्वृत्तः स च दानपुत्रनिवहस्ते बन्दिनस्ताः[11] कथाः सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः ॥ २०३ ॥ कांश्चित्कल्पशतं कृतस्थितिचयात्कांश्चिद्युगानां शतं कांश्चिद्वर्षशतं तथा कतिपयाञ्जन्तून्दिनानां शतम्। तांस्तान्कर्मभिरात्मनः प्रतिदिनं संक्षीयमानायुषः कालोऽयं कवलीकरोति सकलान्भ्रातः कुतः कौशलम् ॥ २०४ ॥ कालेन क्षितिचारिवह्निपवनव्योमादियुक्तं जगद्ब्रह्माद्याश्च सुराः प्रयान्ति विलयं विद्मो विचारादिति। पश्यामोऽपि विनश्यतोऽनवरतं लोकाननेकान्मुधा माया मोहमयीं भवप्रणयिनीं नास्थां गृहीमो वयम् ॥२०५॥ स्पर्धन्तां मुखमेव कुञ्जरतया दिक्कुञ्जरैः कुञ्जरा ग्राम्या वा वनवासिनो मदजलप्राक्क्लिन्नगण्डस्थलाः। आः कालस्य कुतूहलं शृणु सखे प्राचीनपालीमहास्निग्धस्वादुकपोलकान्तिरहितः कालोऽपि संस्पर्धते॥२०६॥ [12]व्योमैकान्तविहारिणोऽपि विहंगाः[13] संप्राप्नुवन्त्यापदं[14] बध्यन्ते [15]निपुणैरगाधसलिलान्मत्स्याः समुद्रादपि। दुर्नीतं किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ २०७ ॥ मान्धाता स महीपतिः क्षितितलेऽलंकारभूतो गतः सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः। अन्ये चापि युधिष्ठिरप्रभृतयो यावन्त एवाभवन्नैकेनापि समं गता वसुमती मुञ्ज त्वया यास्यति ॥ २०८ ॥ **पश्चात्तापः** ॥ जन्मैव

---

१ तरन्ति. २ भोजनम. ३ वस्त्रम्. ४ काल एव वृकः. ५ पुरुष एवाजः. ६ पाशौ. ७ भुवनमेव फलकः सारीपटस्तस्मिन् ८ प्राणिन एव सारास्तैः. ९ माण्डलिकमण्डलम्. १० चतुरसभा. ११ स्तुतिपाठकाः. १२ केवलमाकाशसंचारिणः. १३ पक्षिणः. १४ विपत्तिम्. १५ कुशलैः.

व्यर्थतां नीतं भवभोगप्रलोभिना। काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥ २०९ ॥ तरत्तरलतृष्णेन किमिवास्मिन्धरातले। मया तत्कृतमज्ञेन पश्चात्तापाभिवृद्धये ॥२१०॥ यातं यौवनमधुना वनमधुना शरणमेकमस्माकम्। स्फुरदुरुहारमणीनां हा रमणीनां गतः कालः ॥२११॥ धनवानिति हि मदो मे किं गतविभवो विषादमुपयामि। करनिहतकन्दुकसमाः पातोत्पाता मनुष्याणाम् ॥२१२॥ भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः। कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ॥२१३॥ पुनः प्रभातं पुनरेव शर्वरी पुनः शशाङ्कः पुनरुद्यते रविः। कालस्य किं गच्छति याति यौवनं तथापि लोकः कथितं न बुध्यते ॥ २१४ ॥ न चाराधि राधाधवो माधवो वा न वापूजि पुष्पादिभिश्चन्द्रचूडः। परेषां धने धन्धने नीतकालो दयालोपमालोकने कः प्रकारः ॥ २१५ ॥ न काकारिकामारिकंसारिसेवा न वा स्वेष्टमाचेष्टितं हन्त किंचित्। मनः प्रेयसीरूपपङ्के निमग्नं किमन्ते कृतान्ते मयावेदनीयम् ॥ २१६ ॥ अजानन्दाहार्तिं पतति शलभस्तीव्रदहने न मीनोऽपि ज्ञात्वा कृतबडिशमश्नाति पिशितम्। विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्न मुञ्चामः कामानहह गहनो मोहमहिमा ॥२१७॥ चिरं ध्याता रामा क्षणमपि न रामप्रतिकृतिः परं पीतं रामाधरमधु न रामाङ्घ्रिसलिलम्। नता रुष्टा रामा यदरचि न रामाय विनतिर्गतं मे जन्माग्र्यं न दशरथजन्मा परिगतः ॥ २१८ ॥ वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान्। न मन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिभाङ्महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥ २१९ ॥ कुचौ तु परिचर्चितौ परिचितं चिरं चन्दनं कृताः परमुरोजयोः परिसरेऽरविन्दश्रियः। स्तुतिर्नतिरपि स्मृतिर्बृंरतनोः कृतैवादरादिदं तु निखिलं मया विरचितं पुनर्नेश्वरे ॥ २२० ॥ नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः। कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये तारुण्यं गतमेव निःफलमहो शून्यालये दीपवत् ॥ २२१ ॥ न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः। नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ २२२ ॥ क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः सोढा दुःसहशीतवाततपनक्लेशान्न तप्तं तपः। ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शंभोः पदं तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चिताः ॥ २२३ ॥ धन्यानां गिरिकन्दरे निवसतां ज्योतिः परं ध्यायतामानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्केशयाः। अस्माकं तु मनोरथाः परिचितप्राचीनवापीतटक्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते

१ निष्फलत्वम्. २ हन्तेति खेदे. ३ रत्नविशेष. ४ स्त्री. ५ राममूर्तिः. ६ रामपादोदकम्. ७ नमस्कारः. ८ दशरथाज्जन्म यस्य स रामः. ९ स्वर्गम्. १० छेदनाय. ११ परश्वधाः.

॥ २२४ ॥ मन्त्रोद्भावितदैवतैर्न विधिवद्दासीकृताः सिद्धयो योगाभ्याससमाहितैरनुदिनं तीर्णो न मोहार्णवः। क्षुभ्यत्क्षुद्रनरेन्द्रदत्तविगलत्संपल्लवोल्लासितैर्धिङ्मूढैरिव पण्डितैरपि बलात्कालः कथं नीयते॥ २२५॥ धावित्वा सुसमाहितेन मनसा दूराच्छिरो नामितं भूपानां प्रतिशब्दकैरिव चिरं प्रोद्धुष्टमिष्टं वचः। द्वाराध्यक्षनिमन्त्रणापरिभवप्रम्लानवक्त्रैः स्थितं भ्रातः किं करवाम मुञ्चति मनो नाद्याप्यविद्यागृहम् ॥ २२६॥ गात्रं संकुचितं गतिर्विगलिता दन्ता विनाशं गता दृष्टिर्भ्राम्यति रूपमेव ह्रसते वक्त्रं च लालायते। वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते हा कष्टं जरयाभिभूतपुरुषः पुत्रैरवज्ञायते ॥ २२७ ॥ नो धर्माय ततो न तत्र निरतानार्थाय येनेदृशाः कामोऽप्यर्थवतां तदर्थमपि नो मोक्षः क्वचित्कस्यचित्। तत्के नाम वयं वृथैव घटिता ज्ञातं पुनः कारणं जीवन्तोऽपि मृता इति प्रवदतां शब्दार्थसंसिद्धये ॥ २२८ ॥ सौजन्याम्बु मरुस्थली सुजलतालेख्यद्युभिर्निर्गुणज्योत्स्नाकृष्णचतुर्दशीसरलतायोगश्च पुच्छच्छटा। यैरेषापि दुराशया कलियुगे राजावली सेविता तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम् ॥२२९॥ ब्रह्मज्ञानविवेकिनो[1]ऽमलधियः कुर्वन्त्यहो दुष्करं[2] यन्मुञ्चन्त्युपभोगवन्त्यपि धनान्येकान्ततो[3] निःस्पृहाः[4]। न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्यये वाञ्छामात्रपरिगृहाण्यपि परित्यक्तुं न शक्ता वयम् ॥ २३० ॥ विद्या नाधिगता कलङ्करहिता वित्तं च नोपार्जितं शुश्रूषापि स[5]माहितेन[6] मनसा पित्रो[7]र्न संपादिता। आलोलायतलोचना युवतयः स्वप्नेऽपि नालिङ्गिताः कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेषितः ॥ २३१ ॥ दन्तैः प्रस्थितमग्रतस्तदनु च शौक्ल्यं धृतं मूर्धजैः कर्णाभ्यामपि वाग्विलासरचनामाकर्णमाकर्ण्यते। नेत्राभ्यामपि चापलं युवतिषु त्यक्तं गतं यौवनं स्वार्थेऽस्मिन्कवलिते कथं पुनरहं यातास्मि तच्चिन्तयेत् ॥ २३२ ॥ रात्रिः सैव पुनः स एव दिवसो मत्वा बुधा जन्तवो धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः। व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना संसारेण कदर्थिताः कथमहो मोहान्न लज्जामहे ॥ २३३ ॥ कृत्वा शस्त्रविभीषिकां कतिपयग्रामेषु दीनाः प्रजा मथ्नन्तो विटजल्पितैरुपहताः क्षोणीभुजस्ते किल। विद्वांसोऽपि वयं किल त्रिजगतीसर्गस्थितिव्यापदामीशस्तत्परिचर्यया न गणितो यैरेष नारायणः॥ २३४ ॥ क्षोणीपर्यटनं श्रमाय विदुषां वादाय विद्यार्जिता मानध्वंसनहेतवे परिचितास्ते ते धराधीश्वराः। विश्लेषाय सरोजसुन्दरदृशामास्ये कृता दृष्टयः कुज्ञानेन मया प्रयागनगरे नाराधि नारायणः ॥ २३५ ॥ तृष्णा शान्तिं न याति क्षणमपि हृदयं स्थैर्यमालम्बते नो कायः कान्तारसविरहतः शोषमायाति नित्यम्। गेहं नेह क्षणमपि समात्यज्यते रामनाम स्मर्तुं नेच्छा

१ ब्रह्मज्ञानविचारेण शुद्धान्तःकरणाः. २ दुःखेन कर्तुमशक्यम्. ३ स्वभावतः, नैरन्तर्येणेति वा. ४ निरिच्छाः. ५ सपादिता. ६ स्वस्थेन. ७ माता च पिता च पितरौ तयो..

भवति कथमहो सागरं तं तरिष्ये ॥ २३६ ॥ देशे देशे दुराशा कवलितहृदयो निष्कृपाणां नृपाणां धावंधावं पुरस्तादतिकुमतिरहं जन्म संपादयामि। आधायाधाय राधाधव तव चरणाम्भोजमन्तः समाधावन्त्येऽरण्येऽतिपुण्ये पुलकितवपुषो वासरान्वाहयन्ति ॥ २३७॥ विचारः ॥ मृत्योर्बिभेषि किं मूढ भीतं मुञ्चति किं यमः। अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥ २३८ ॥ अधीत्य चतुरो वेदान्व्याकृत्याष्टादश स्मृतीः। अहो श्रमस्य वैफल्यमात्मापि कलितो न चेत् ॥ २३९ ॥ आदरेण यथा स्तौति धनवन्तं धनेच्छया। तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ २४० ॥ स्वमस्तकसमारूढं मृत्युं पश्येज्जनो यदि। आहारोऽपि न रोचेत किमुतान्या विभूतयः ॥ २४१ ॥ विवेक एव व्यसनं पुंसां क्षमयितुं क्षमः। अपहर्तुं समर्थोऽसौ रविरेव निशातमः ॥ २४२ ॥ यस्मिन्वस्तुनि ममता मम तापस्तत्र तत्रैव। यत्रैवाहमुदासे तत्र मुदासे स्वभावसंतुष्टः॥२४३ ॥ मुण्डी जटी वल्कलवांस्त्रिदण्डी कषायवासा व्रतकर्शिताङ्गः। त्यक्तैहिको वा यदि नात्मतत्त्वस्तदा तु तस्योभयमेव नष्टम् ॥ २४४ ॥ जडास्तपोभिः शमयन्ति देहं बुधा मनश्चापविकारहेतुम्। श्वा मुक्तमस्त्रं दशतीति कोपाद्धोक्तारमुद्दिश्य हिनस्ति सिंहः ॥ २४५ ॥ किं ते धनैर्बन्धुभिरेव वा किं दारैश्च किं ब्राह्मण यो मरिष्यति। आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताः पिता च ॥ २४६ ॥ धर्मं प्रसङ्गादपि नाचरन्ति पापं प्रयत्नेन समाचरन्ति। आश्चर्यमेतद्धि मनुष्यलोकेऽमृतं परित्यज्य विषं पिबन्ति ॥२४७॥ दधति तावदमी विषयाः सुखं स्फुरति तावदियं हृदि मूढता। मनसि तत्त्वविदां च विवेचके क्व विषयाः क्व सुखं क्व परिग्रहः ॥ २४८ ॥ बालिकारचितवस्त्रपुत्रिकाक्रीडनेन सदृशं सुरार्चनम्। यत्र शाम्यति मनो विनिश्चलं स्फीतवज्जलधिमज्जनामलम् ॥ २४९ ॥ केचिद्वदन्ति धनहीनजनो जघन्यः केचिद्वदन्ति गुणहीनजनो जघन्यः। व्यासो वदत्यखिलवेदविशेषविज्ञो नारायणस्मरणहीनजनो जघन्यः ॥ २५० ॥ भिक्षाशनं भवनमायतनैकदेशः शय्या भुवः परिजनो निजदेहभारः। वासश्च जीर्णपरखण्डनिबद्धकन्था हा हा तथापि विषयान्न जहाति चेतः ॥ २५१ ॥ केनाप्यनर्थरुचिना कपटं प्रयुक्तमेतत्सुहृत्तनयबन्धुमयं विचित्रम्। कस्यात्र कः परिजनः स्वजनो जनो वा स्वप्नेन्द्रजालसदृशः खलु जीवलोकः ॥ २५२ ॥ अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम्। यद्यस्त्येवं कुरु तव रसास्वादने लम्पटत्वं नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ २५३ ॥ यदासीदज्ञानं[1] स्मरतिमिरसंस्कारजनितं तदा दृष्टं नारीमयमखिलमेतज्जगदिति। इदानीमस्माकं पटुतरविवेकाञ्जनजुषां समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ २५४ ॥ परिच्छेदातीतः सकलवचनानामविषयः पुनर्जन्मन्यस्मि-

१ अज्ञानम्.

न्ननुभवपथं यो न गतवान् । विवेकप्रध्वंसादुपचितमहामोहगहनो विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ २९५ ॥ विशीर्णः प्रारम्भो वपुरपि जराव्याधिविधुरं गतं दूरे विप्रस्वजनभरणं वाञ्छितमपि । इदानीं व्यामोहादहह विपरीते हतविधौ विधेयं यत्तत्त्वं स्फुरति मम नाद्यापि हृदये ॥ २९६ ॥ शुचां पात्रं धात्री परिणतिरमेध्यप्रचयभूरयं भूतावासो विमृश कियतीं याति न दशाम् । तदस्मिन्धीराणां क्षणमपि किमास्थातुमुचितं खलीकारः कोऽयं यदहमहमेवेति रभसः ॥ २९७ ॥ यदा पूर्वं नासीदुपरि च तथा नैव भविता तदा मध्यावस्था क्षणपरिचयो भूतनिचयः । अतः संयोगेऽस्मिन्परिणतिवियोगे च सहजे किमाधारः प्रेमा किमधिकरणाः सन्तु च शुचः ॥ २९८ ॥ स्थिरापायः कामः प्रणयिषु सुखं स्थैर्यविमुखं महाभोगा रोगाः कुवलयदृशः सर्पसदृशाः । महावेशः क्लेशः प्रकृतिचपला श्रीरपि खला यमः स्वैरी वैरी तदपि न हितं कर्म विहितम् ॥२९९ ॥ विवेकः किं सोऽपि स्वरसजनिता यत्र न कृपा स किं योगो यस्मिन्न भवति परानुग्रहरसः । स किं धर्मो यत्र स्फुरति न परद्रोहविरतिः श्रुतं किं तद्वा स्यादुपशमफलं यन्न भवति ॥२६०॥ दिवसरजनीकूलच्छेदैः पतद्भिरनारतं वहति निकटे कालः स्रोतः समस्तभयावहम् । इह हि पततां नास्त्यालम्बो न चापि निवर्तनं तदिह महतां कोऽयं मोहो यदेष मदाविलः ॥ २६१ ॥ माने म्लायिनि खण्डिते च वसुनि व्यर्थे प्रयातेऽर्थिनि क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने । युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयःपूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥ २६२ ॥ अद्वैतोक्तिपटून्बटूनपि वयं बालान्नमस्कुर्महे ये तु द्वन्द्ववदास्तदीयशिरसि न्यस्याम वामं पदम् । सिंहः स्वीयशिशून्निवेश्य हृदये सान्द्रादरादामृशन्नावेशेन भिनत्ति संभ्रमपदं मत्तेभकुम्भस्थलम् ॥ २६३ ॥ क्लेशत्यागकृतेऽर्पितेन करणव्यूहेन देहेन च स्वानर्थं बत जन्तुरार्जयति चेन्मन्तुर्नियन्तुः कुतः । शस्त्रे शत्रुजयाय नैजगुरुणा दत्तेऽथ तेनैव चेत्पुत्रो हन्ति निजं वपुः कथय रे तत्रापराधी तु कः ॥ २६४ ॥ बीभत्साः प्रतिभान्ति किं न विषयाः किं तु स्पृहायुष्मती देहस्यापचयो मृतौ निविशते गाढो गृहेषु ग्रहः । ब्रह्मोपास्यमिति स्फुरत्यपि हृदि व्यावर्तिका वासना का नामेयमतर्क्यहेतुगहना दैवी सतां यातना ॥ २६५ ॥ नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति । यं कंचित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥ २६६ ॥ रेतःशोणितयोरियं परिणतिर्यद्वर्ष्म तत्राभवन्मृत्योरास्पदमाश्रयो गुरुशुचां रोगस्य वि ॥ जानन्नप्यवशी विवेकविरहान्मज्जन्न विद्याम्बुधौ शृङ्गारीयति पुत्रकाम्यति बत क्षेत्रीयति स्त्रीयति ॥ २६७ ॥ इन्द्रस्याशुचिशूकरस्य च सुखे दुःखे च नास्त्यन्तरं ॰ कल्पनया तयोः खलु सुधा विष्ठा च काम्याशनम् । रम्भा चाशुचिशूकरी च परमप्रेमास्प ; मृत्युतः

संत्रासोऽपि समः स्वकर्मगतिभिश्चान्योन्यभावः समः ॥ २६८ ॥ अर्थप्राणविनाशसंशयकरीं प्राप्यापदं दुस्तरां प्रत्यासन्नभयं न वेत्ति विभवं स्वं जीवितं काङ्क्षति। उत्तीर्णस्तु ततो धनार्थमपरां भूयो विशत्यापदं प्राणानां च धनस्य चाधमधियामन्योन्यभावः पणः ॥ २६९ ॥ अग्रे कस्यचिदस्ति कंचिदभितः केनापि दृष्टे कुतः संसारः शिशुभावयौवनजराभारावतारादयम्। बालस्तं बहु मन्यतामसुलभं प्राप्तं युवा सेवतां वृद्धस्त्वं विषयाद्बहिष्कृत इव व्यावृत्य किं पश्यसि ॥ २७० ॥ येषां श्रीमद्यशोदासुतपदकमले नास्ति भक्तिर्नराणां येषामाभीरकन्याप्रियगुणकथने नानुरक्ता रसज्ञा। येषां श्रीकृष्णलीलाललितगुणरसे सादरौ नैव कर्णौ धिक्तान्धिक्तान्धिगेतान्कथयति सततं कीर्तनस्थो मृदङ्गः ॥ २७१ ॥

इति श्रीसुभाषितरत्नभाण्डागारे षष्ठं प्रकरणं समाप्तम्।



## ग्रन्थसमाप्तिः ।

इति विरचितबन्धा पद्धतिर्या मयेयं सकलगुणिगणानां प्रीतये सास्तु नित्यम् ।
विपुलविमलदीप्यत्सत्कलानां निधानं तरुणतरणिरुग्वा विद्विपत्कौशिकानाम् ॥ शार्ङ्गधरस्य ॥

अस्याभ्यासाद्ग्रन्थवर्यस्य शिष्यः सर्वज्ञः स्याद्विस्फुरच्चारुबुद्धिः ।
अर्थं कामं वेत्ति धर्मं च मोक्षं निःसंदेहं शीलितुं पण्डितोऽपि ॥ शार्ङ्गधरस्य ॥

आनन्दाय सतां भूयात्सुभाषितमिदं मम ।
पृथक्पद्धतिसंमिश्रपरिच्छेदैर्मनोहरम् ॥ शार्ङ्गधरस्य ॥

# श्लोकानुक्रमणिका ।




अ पृ० श्लो०

अशुक्र हृतवता तनु ५३६ । ३
अशुकमिव शीतभया ५९२ । ४
अंशुपाणिभिरतीव ४९५ । २३
असाकृष्टदुकूलया ५३९ । १५
असालम्बितवाम ३८ । १६६
अकरुण कातरमनसा ५९९ । २६
अकरुणत्वमकारण ८७ । १४९
अकरोः किमु नेत्र ५२२ । ३
अकलङ्कचन्द्रकलया ५११ । १२७
अकलितशब्दालकृति ४३ । १३
अकल्प. स्वाङ्गचेष्टा ६३७ । १४३
अकस्मादेकस्मिन्पथि ४८२ । ६
अकस्मादेव कुप्यन्ति ८१ । ३२
अकस्माद्वेष्टि यो २३५ । १८०
अकाण्डधृतमानस १६४ । १८२
अकाण्डपातजाताना २५६ । २४५
अकारणाविष्कृतवैर ८७ । १५१
अकिंचनस्य दान्तस्य १०९ । १०
अकिंचिदपि कुर्वाण २७१ । ६६१
अकुबेरपुरीविलोकनं ३१३ । ७२
अकुलीनोऽपि मूर्खो २३९ । २८७
अकुले पतितो राजा २५६ । २५५
अकूपाराद्वारि प्रचुर ३५३ । ५७
अकूर्चारम्भोऽपि प्रति ३४५ । ३७
अकृतज्ञमकार्य च २४८ । ४९
अकृतोपद्रव. कश्चि २५१ । १३१
अकृत्य मन्यते कृत्य २६८ । ५५८
अकृत्वङ्गमतस्तक्र २९८ । १५
अकृत्वा निजदेशस्य २४२ । ३५६
अकृत्वा परसताप १०९ । २
अकृत्वा पौरुष या २५६ । २४८
अकृत्वा हेलया पाद ११४ । ७
अकृश कुचयो कृश ४१९ । २८

अकृशं नितम्बभागे ४५२ । ११
अक्रोधवैराग्य २८३ । ९३१
अक्षत्रारिकृताभि ६२० । ३५
अक्षमालापवृत्तिज्ञा ८२ । ५४
अक्षरद्वयमभ्यस्त २५२ । १३६
अक्षरमैत्रीभाजः ३०७ । १२
अक्षराणि परीक्ष्यन्ज्ञा २५६ । २५२
अखण्डमण्डल· श्री १५८ । ६४
अखण्डिता शक्तिरथो १६० । १०३
अखर्वपर्वगर्तेषु ३६० । ४३
अखिलेषु विहगेषु ३७८ । १८१
अगजाननपद्मार्के २ । ५
अगणितगुणेन सुन्दर ४८४ । १७
अगस्तितुल्याश्च १४५ । २
अगस्त्यस्य मुने. शापा ३२३ । ६
अगस्त्येन पयोराशे ३२८ । ८
अगाधजलसचारी ३९३ । २
अगाधहृदया भूपा. २३५ । १७७
अगारेऽस्मिन्कान्ते ४६२ । ३३
अगुणस्य हत रूप २५७ । २६८
अगुरुरिति वदतु ३९७ । ६४
अग्निदाहे न मे दु ख ४११ । २०
अग्निहोत्र गृह क्षेत्र २५९ । ३२९
अग्निहोत्रफला २६८ । ५५९
अग्नौ दग्ध जले मग्न २५४ । २०३
अग्रसानुषु नितान्त ४९५ । २६
अग्राह्य हृदय तथैव ५९७ । ७९
अग्रे कस्यचिदस्ति ६४५ । २७०
अग्रे कुग्रामवर्ग. ३९० । १२६
अग्रे गीत सरस ६४३ । २५३
अग्रे यान्ति रथस्य रेणु २२४ । ६
अग्रे लघिमा पश्चा १०५ । २५
अग्रे व्याध. करधृत ३८९ । ११३
अग्र्यो मुक्तिमर्ता १४५ । ३

अघटितघटित १३६ । ३९
अङ्केऽपि शशङ्किरे ५१४ । १६७
अङ्कनिलीनगजानन १६ । ९
अङ्काधिरोपित ११४ । ८
अङ्गं गलितं पलितं ११० । २१
अङ्ग चन्दनपाण्डु ५७४ । ५६
अङ्गण तदिदमुन्मद ३३९ । ६
अङ्गनवेदी वसुधा ११२ । ७
अङ्ग भूषणनिकरो ४५२ । १६
अङ्गमङ्गेन सपीड्य ६३५ । १२१
अङ्ग येन रथीकृत ८ । ५६
अङ्गानामतितानव ५१५ । ३
अङ्गानि खेटयसि ५१६ । १३
अङ्गानि मे दहतु ४८५ । ४२
अङ्गारै· खचितेव ५७२ । २७
अङ्गासङ्गिमृणाल ४६४ । ५८
अङ्गासजातभङ्गा १९१ । १९४
अङ्गुलिभङ्गविकल्पन ६२२ । १८
अङ्गुलीकिसलयाग्र ५२४ । १
अङ्गुलीभिरिव केश ५०५ । २८
अङ्गुलीषु कुरङ्गाक्ष्या. ४४२ । २५३
अङ्गुल्यग्रनखेन बाष्प ५२२ । २२
अङ्गुल्यग्रनिरोधत ५७८ । ११८
अङ्गुल्या क कपाट ३९ । १६९
अङ्गेन केनापि विजेतु ४४९ । ३९३
अङ्गेऽनङ्गज्वरहुतवह ४८५ । ४९
अङ्गेष्वाभरण करोति ४८९ । ९२
अङ्घ्रिदण्डो हरेरूर्ध्व ३० । ५०
अचकमत सपल्लवा ४८५ । ३८
अचतुर्वदनो ब्रह्मा ५२ । ११
अचल चलदिव चक्षुः ४२६ । १३
अचला कमला कस्य २६९ । ५९१
अचिन्तितानि दु.खा १३५ । १८
अचिन्त्या. पन्थानः ७७ । १९२

अचिराधिष्ठित २४३ । ३८२
अचिरेण परस्य २४४ । ४०७
अचोद्यमानानि १३५ । १४
अच्छप्रकाशवति ५१३ । १५८
अच्छिन्न नयनाम्बु ४८७ । ७२
अच्छिन्नामृतबिन्दु ४५९ । २६
अच्युतशक्तिवशादिह ३१२ । ५९
अजनि प्रतिदिनमेषा ४७६ । ७
अजन्मा पुरुषस्ताव २४० । ३१७
अजरामरवत्प्राज्ञो २६३ । ४४५
अजस्र लसत्पद्मिनी ३४६ । ६
अजस्रमभ्यासमुपे १६१ । १३५
अजातमृतमूर्खाणा १३४ । ६
अजातमृतमूर्खेभ्यो १३४ । ७
अजानन्दाहार्ति पत ६४१ । २१७
अजामिव प्रजां ह २३३ । १२४
अजायुद्धमृषिश्राद्ध २४७ । २७
अजीयतावर्तशुभ ४४१ । २३६
अज्ञ· सुखमाराध्यः ५९ । १९
अज्ञतया प्रेम्णा वा ३६२ । ७३
अज्ञातपाण्डित्यरहस्य ६० । २८
अज्ञातशास्त्रसद्भावा ६६ । ५
अज्ञातेन्दुपराभव ४४० । २१२
अज्ञानामविराम १५० । २०
अज्ञानिकर्मकर्तृत्व २७० । ६१५
अज्ञानेन पराङ्मुखी ५२४ । १३
अज्ञो वा यदि वा २४६ । ४३५
अञ्चति रजनिरुदञ्चति ५२० । ७
अञ्जनस्य क्षय दृष्ट्वा २४८ । ४३
अञ्जलिरकारि लोकै १४८ । ८
अञ्जलिस्थानि पुष्पाणि ६७ । ३
अटत्कटकघोटक १९१ । १८९
अटवी कीदृशी प्रायो ३२८ । ६
अट्टशूलाः जनपदा ३०८ । १५
अणुमपि वितरण १०० । १८
अणुरप्यसतां सङ्गो १२९ । ५
अतएव निपीयतेऽधरो ५९६ । ६४
अतनुज्वरपीडितासि ३१२ । ७१
अतन्द्रचन्द्राभरणा ४२२ । ५
अतसीकुसुमोपमेय ३३ । १०७
अतसीपुष्पसकाशं २९८ । १९
अताडयत्पल्लवपाणि ५६८ । १०५
अतिकुपिता अपि ७१ । ९८
अतिक्रान्तः कालो ६३० । ५५
अतिगम्भीरे भूपे २४३ । ३८७
अतितेजस्व्यपि २४३ । ३८१
अतिथिर्बालकश्चैव २५५ । २१३
अतिदर्पे हृता लङ्का २६२ । ४०१
अतिदाक्षिण्ययुक्ता २६१ । ३७१
अतिदानाद्बलिर्बद्धो २४७ । २१
अतिदीर्घजीविदोषा ५२ । १६
अतिदूरपथःश्रान्ता २५८ । ३०७
अतिपरिचयादवज्ञा २७६ । ७७४
अतिपरिचयादवज्ञा २७६ । ७७५
अतिपरिचयादवज्ञा २७६ । ७७६
अतिपूजिततारेय ४३३ । ७७
अतिपेलवमतिपरिमित ८४ । ९८
अतिप्रचण्डा बहुदुःख २८६ । ९९०
अतिबहुतरलज्जा ४४८ । ३६६
अतिमन्दचन्दनमही ५६९ । १२६
अतिमलिने कर्तव्ये ८४ । ९०
अतिमात्रभास्वरत्व १२६ । ८
अतिरमणीये काव्ये ५६ । १६
अतिविततगगनसरणि ४१ । ३
अतिविपुल कुचयुगुलं २२ । ३
अतिव्ययोऽनवेक्षा च २३४ । १४६
अतिशयितकदम्बा ५७९ । १४
अतिसाहसमतिदुष्कर १०४ । ३३
अतुहिनरुचिनासौ ५५६ । १७
अत्तु वाञ्छति वाह ६२४ । ५१
अत्यच्छं सितमंशुक ५७२ । २९
अत्यच्छेनाविरुद्धेन ४११ । २२
अत्यन्तमन्थन २८८ । १०२८
अत्यन्तविमुखे दैवे ९६ । १०
अत्यपूर्वस्य रागस्य ४५० । ४१३
अत्यादराद्ध्ययन १६० । ११०
अत्यायतैर्नियम १६२ । १५४
अत्यार्यमतिदातारमति ९० । ५
अत्यासन्ना विनाशाय २५१ । १२६
अत्युक्तौ यदि न प्रकु २१२ । १५
अत्युच्चाः परितः १७० । २५१
अत्युच्छ्रिते मन्त्रिणि २४३ । ३९६
अत्युन्नतस्तनमुरो ४२६ । २२
अत्युल्लसद्विसरहस्य ५७१ । २
अत्युष्णात्सघृतादन्ना २७२ । ६६२
अत्र मन्मथमिवाति १९० । १७५
अत्रस्थः सखि लक्ष ३८० । २२५
अत्रान्तरे च कुलटा ५१३ । १५७
अत्राप्युन्मदयातुधान ६२५ । ८
अत्राशित शयितमत्र ४६० । २
अत्रिलोचनसंभूत ३११ । ५२
अथ कोकिल कुरु ३७४ । १३०
अथ नभसि निरीक्ष्य ५८१ । ५३
अथ पथिकवधूदहनः ५०५ । १०
अथ प्रसन्नेन्दुमुखी ५८६ । १२
अथ बद्धजटे रामे ६१८ । ५
अथ मन्मथवाहिनी ५०५ । १७
अथ लक्ष्मणानुगत ५०७ । ५९
अथ वाभिनिविष्ट ६० । ३३
अथ सान्द्रसांध्य ४९९ । ४
अथ स्फुरन्मीनविधूत ५७५ । ७२
अथ स्वस्थाय देवाय १ । १
अथेद रथोभिः ६१९ । ३३
अथोच्चकैर्जरठ २०० । १
अथोपगूढे शरदा ५८० । २०
अद. समित्समुख २१४ । १५
अदम्भा हि रम्भा ४२३ । १७
अदातार दातृप्रवर १६३ । १६९
अदाता वशदोषेण २६२ । ४००
अदातुर्मानस क्वापि १०३ । २१
अदुर्गो विषयः कस्य २३० । ६५
अदृष्टपूर्वमस्माभि. ५८५ । ९९
अदृष्टमुखभङ्गस्य १०५ । ८
अदृष्टव्यापार गतवति ३८१ । २४२

अदृष्टे दर्शनोत्कण्ठा ४५० । २
अद्भुतस्तर्कपाथोधि ६३ । १
अद्य द्यूतजिताधरग्रह ५३६ । ४
अद्य धारा सदाधारा १८२ । ८०
अद्य शीत वरीवर्ति ५८९ । ७
अद्यापि तत्प्रचल ४६७ । ४१
अद्यापि तां कनक ४६७ । ४३
अद्यापि तिष्ठति दृशो ४६८ । ५५
अद्यापि दुर्निवार ७२ । ११०
अद्यापि नून हरकोप ४७३ । १२९
अद्यापि नोज्झति ७५ । १६६
अद्यापि सा मनसि ४६७ । ४४
अद्यापि सुन्दरि तवा ४९१ । १२
अद्यापि स्तनशैलदुर्गे ५०९ । ९९
अद्यारभ्य कठोर ६१७ । ४६
अद्यारभ्य यदि प्रिये ५२२ । १०
अद्यैव हसितं गीत ६३९ । १९४
अद्योत्सङ्गवमङ्गजग ५५४ । ३१
अद्विसवीक्षण चक्षु ४८२ । १
अद्वैत सुखदु खयो ७९ । २२०
अद्वैतोक्तिपटून्बटू ६४४ । २६३
अध. करोषि रत्नानि ३५८ । ४
अधना धनमिच्छन्ति २५८।२९७
अधम बाधते भूयो २७५ । ७४६
अधरः किसलयराग ४२५ । ८
अधर खलु बिम्बनाम ४३७।१५१
अधरममृतकः सदेहो ४३७।१५९
अधरस्य मधुरिमाण २८०।८५६
अधरे नववीटिका ४१९ । २९
अधरे मधुरा सरस्वती ४५३ । २४
अधरोऽयमधीराक्ष्या ४३७।१४७
अधरोऽसौ कुरङ्गा ४३७।१५०
अधाक्षीन्नो लङ्कामय १७६ । १४
अधारि पद्मेषु तदङ्घ्रि ४२१ । १
अधिकतरलतल्प ४८० । १२
अधिगमनमनेका ३४६ । ११
अधिगतपरमार्था ५८ । २८
अधिदेहलि दन्त ४६१ । १७
अधिपञ्चवटीकुटीर ३१ । ६६
अधिभिल्लपल्लिगल्ल ५६ । ९
अधियामिनि गज ५०३ । ६
अधिरजनि जगाम ५२४ । २
अधिलवङ्गममी ५९२ । ११
अधिश्रीरुद्याने ४०१ । १२१
अधीतव्यवहारज्ञ २२८ । २६
अधीतिबोधाचरण १६१ । १२५
अधीत्य चतुरो वेदा ६४३।२३९
अधुना मधुकरपतिना ३११ । ५७
अधृतपरिपतन्निचोल ४६६ । ३२
अधोऽध· पश्यतः २६५ । ४८५
अधोविधानात्कमल १६१।१३६
अध्याक्रान्ता वसति १६५।१८८
अध्यायोधनवेदिमार्गेण २१३।२७
अध्याहार स्मरहर २१६ । ३७
अध्वनि पदग्रहपर ४५ । १२
अध्वन्यध्वनि तरव. ३९४ । ११
अध्वन्यध्वनि भूरुह ४०२।१४६
अध्वन्यस्य वधूवियोग ५७०।१४४
अध्वन्यैर्मकरन्द ५७० । १४६
अध्वानं नैकचक्र ४५८ । ६९
अनङ्कुरितकूर्चक ५९६ । ७४
अनङ्गमङ्गलभुवस्तद ४३३ । ७४
अनङ्गरङ्गपीठोस्या ४४९ । ३९०
अनङ्गेनाबलासङ्गा ४१७ । १
अनङ्गोऽयमनङ्गत्व ५२८ । ११
अनधिगतमनोरथस्य ५३० । ४५
अननुरणन्मणिमेखल ४५० । ४१७
अनन्तपदविन्यास ४८ । १३
अनन्तपार किल २८४ । ९४०
अनन्यक्षुण्णश्री ५५४ । २५
अनन्यसाधारण ४४७ । ३४२
अनभालित एव ३६१ । ५५
अनभिज्ञा परस्वेषु २४८ । ३८
अनभिज्ञो गुणाना २३९ । २७९
अनभ्रवृष्टि श्रवणा ४६ । २७
अनयनपथे प्रिये न ४८३ । ७
अनयोरनवद्याङ्गि ५२८ । १६
अनर्घ्यमपि माणिक्य २५९।३३२
अनर्थित्वान्मनुष्याणां ५९४।१५
अनलस्तम्भनविद्यां ४७६ । ६
अनल्पदग्धारिपु १६१ । १३०
अनवरतधनुर्ज्या २२६ । ३
अनवरतपरोपकरण ७१ । ९३
अनवसरे गुणवानपि ११९ । ३२
अनवसरे च यदुक्त २७७।८०८
अनवसरे याचितमपि २७८।८१६
अनसि सिदिति सैकत ३९१।१४५
अनस्तमितसारस्य ३६१ । ४९
अनाकाशे चन्द्र· ४३९ । २०४
अनाकूतैरेव प्रिय ४२७ । २७
अनागतविधातार ९० । ६
अनाघ्रात पुष्प किस ४२६ । २५
अनादायी व्यय २७३ । ६९१
अनादिष्टोऽपि भूप २३२ । ९३
अनादृतचमूपतिप्रहि २३ । २२
अनायके न वस्तव्य २४८ । ३६
अनायासकृत मध्य ४२५ । ४
अनारतपरिस्खल २०९ । १८
अनार्यप्रज्ञानामिह ६०२ । ३७
अनालोच्य प्रेम्ण ५२१ । १४
अनाहूतैवैत्य प्रगुण ३९८ । ७२
अनाहूतो विशेद्यस्तु २६५।४९५
अनिराकृततापस ८६ । १३६
अनिर्दयोपभोगस्य ५१६ । १
अनिर्लोडितकार्यस्य २५६।२४६
अनिल निखिलविश्व ३५६ । ९
अनिश मतङ्गजाना ३८२ । १५
अनिशमपि मकर ४६६ । २१
अनिष्टादिष्टलाभेऽपि २६४।४५१
अनुकुरुतः खल ७२ । ९९
अनुकूलविधायि ३३२ । ६३
अनुकूलां विमलाङ्गीं २७७।८०५
अनुकूले विधौ देय १०० । १
अनुकूले सति १३६ । ४४

अनुक्षणमनुक्षणं २१५ । २६
अनुगन्तुं सता वर्त्म २४६ । १
अनुचितकर्मारम्भः २७६ । ७८१
अनुचितमेवाचरितं १३६ । ४५
अनुच्छिष्टो देवैरप ४४० । २०७
अनुदिनमधिक ते ४८० । १०
अनुदिनमनुकूल २८८ । १०१६
अनुदेहमागतवतः ५२६ । ६
अनुनयति पतिं न ६१० । ४७
अनुनयमगृहीत्वा ५४८ । ३
अनुनेनु मानिन्या ३०५ । २९
अनुपालयतामुदे २४४ । ४०८
अनुभवत ददत वित्त ९१ । १५
अनुभवत युवत्यो ५६९ । ११८
अनुभवन्नवदोल ५६५ । ५४
अनुममार न मार ४७३ । १३२
अनुययौ विविधोप ५८० । ३४
अनुयातानेकजनः २४३ । ३९२
अनुरागवती सध्या १३६ । ३८
अनुरागवन्तमपि ४९६ । ३८
अनुरागवर्तिना ४८४ । १६
अनुलेपनानि कुसु ५०१ । २०
अनुवन वनराजि ५८७ । ३३
अनुसरति करिकपोलं १०५।१३
अनूनवेगादयमद्वितीय १९४ । ३
अनृतं सत्यमित्याहु ५९४ । २२
अनृत साहस माया ५९३ । १
अनेकविद्वज्जन रत्न १५४ । ७
अनेकशास्त्र बहु २८४ । ९३९
अनेकसशयोच्छेदि ४४ । २
अनेकसुषिर वाद्य ३०४ । ५
अनेन पर्यासयता १६१ । १२४
अनेके फणिन. सन्ति३९३।१६८
अनेन मर्त्यदेहेन २४८ । ४१
अनेन रम्भोरु ४३९ । १८७
अनेन सर्वार्थिकृता १६० । ११८
अन्त.कटुरपि लघु ७२ । १०९
अन्त.करणतत्त्वस्य १३३ । ५
अन्तःकुटिलतां बिभ्रत् ३६२।७४
अन्तःकूजदुदारकण्ठ ५३२ । ७८
अन्तःक्रूराः सौम्यमुखा ५९४ । ७
अन्तःक्रोधोज्जिहान २९ । ४८
अन्तःपुरचरैः सार्धं २३८।२६९
अन्तःपुरधनाध्यक्षै २४१ । ३३७
अन्तःपुराणां विहित २२३ । ३
अन्तःपुरीयसि १६२ । १५६
अन्तःप्रतप्तमरुसै २८९ । १०४६
अन्तः संतापबाष्पैः २२१ । ९२
अन्त सारैरकुटिलै २२९ । २७
अन्त सारविहीनस्य ५९ । ७
अन्तक पर्यवस्थाता ६३८।१६७
अन्तरङ्गमनङ्गस्य ४२५ । २
अन्तरायतिमिरोपशान्त २ । १५
अन्तर्गता मदनवह्नि ४७७।२०
अन्तर्गतैर्गुणैः किं ११९ । ३८
अन्तर्गूढानर्थानव्यञ्ज ४६ । २४
अन्तर्नाडीनियमित १३ । ११८
अन्तर्वेलान्यहममुष्य ३८३ । २७
अन्तर्भूतो निवसति ६० । २३
अन्तर्मलिनदेहेन ८३ । ६३
अन्तर्मलिनससर्गा १२९ । ३
अन्तर्मोहनमौलि ३८ । १६३
अन्तर्वसति मार्जारी ३८५ । ५९
अन्तर्वाणिं मन्यमानः ८७ । १४३
अन्तर्विषमया ह्येता ५९४ । २३
अन्तर्विष्णोस्त्रिलोकी १८६।१२५
अन्तर्हिते शशिनि ५४८ । ११
अन्तश्छिद्राणि ४०७ । २१३
अन्तस्तार तरल ४६३ । ४२
अन्तिकान्तिकगतेन्दु ५०६।४०
अन्धकारगरलं यतो ५०५ । २२
अन्धत्वमन्धसमये २७९ । ८५३
अन्त्रप्रोतबृहत्कपाल ६२६ । ५
अन्त्राकल्पचलत्पयो ६२५ । ११
अन्त्रैः कल्पितमङ्गल ६२६ । ३
अन्त्रैः स्वैरपि ६१६ । ३६
अन्नदानात्परं २५५ । २२४
अन्नवस्त्रसुवर्णानि ३२० । १९
अन्यकालपरिहार्य ५४० । १५
अन्यतो यदि निजो १०६ । ३१
अन्यत्र भीष्माद्गाङ्गे ६३६ । १२४
अन्यत्र यूय कुसुमा ५६८।१०६
अन्यत्र वाञ्छित ५४९ । १६
अन्यत्र व्रजतीति का ६१३।८०
अन्ययैवं हि सौहार्दं १३० । ४
अन्यदा भूषण पुंसा २५३।१८५
अन्यप्रतापमासाद्य २६६ । ५२३
अन्यं मनुष्य हृदयेन ५९६ । ६९
अन्यमाश्रयते २६० । ३५०
अन्यमुखे दुर्वादो २७६ । ७८२
अन्ययान्यवनिता ५३४ । ३१
अन्यवर्णपरावृत्त्या ५५ । ३
अन्यस्त्रीस्पृहयालवो ३२७ । ४०
अन्यस्य लगति ८५ । ११८
अन्या जगद्धितमयी ५८ । २७
अन्यानि शास्त्राणि ६५ । ३
अन्यायवित्तेन कृतो २८१।८९०
अन्यायोपार्जितं २७० । ६२७
अन्यार्थमङ्गीकृत १६० । ११२
अन्या सा सरसी ३६८ । २९
अन्यासु तावदुपमर्द ३७१ । ७९
अन्यास्ता गुणरत्न १७२ । २६९
अन्यून गुणमभृतस्य ५७७।१०९
अन्यूनोन्नतयोऽति २०१ । २२
अन्ये ते जलदायिनो३७६।१६३
अन्ये ते विहगाः ३७७ । १६७
अन्येऽपि सन्ति कति४११।३०
अन्येऽपि सन्ति बत ३७६।१६०
अन्येय रूपसंपत्ति ४२५ । ३
अन्योन्यमुत्पीडय ४४३ । २८१
अन्योन्यास्फालभि ६२७ । १३
अन्योन्याहतिदन्त ५९२ । ५२
अन्योन्येषा पुष्कैर २०४ । ७१
अन्योऽपि चन्दनतरो ३५२ । ३९

अन्वयागतविद्याना २५१।१२९
अप. पिबन्प्रपापाली३०९ । २३
अपकुर्वन्नपि प्राय. ६८ । ९
अपक्रान्ते बाल्ये ४२७ । ३१
अपण्डितास्ते पुरुषा ५९६ । ६८
अपतुषारतया ५६५ । ४७
अपत्यदर्शनस्यार्थे २५४ । १९८
अपदो दूरगामी च ३०३ । १
अपनीतपरिमलान्तर ३७० । ५५
अपमान पुरस्कृत्य २५८ । ३०८
अपराधी नूनमह ५१६ । ८
अपराधेऽपि नि शङ्को२३६।२१०
अपराधो न मेऽस्ती २६४।४६५
अपराह्णशीतलतरेण ४९६ । ३३
अपरीक्षितलक्षण ६३ । २
अपरीक्ष्य न कर्तव्य २४७ । १९
अपर्णेय भूभृद्वन २०९ । २२
अपर्णेव लता सेव्या १६ । ३
अपर्याप्तभुजायाम. ४४९ । ३८०
अपवादादभीतस्य ८२ । ५७
अपसरणमेव शरण ३६७ । ८
अपसरत रे दूरादस्मा ५९७ । ७७
अपसरति न चक्षुषो ४६६ । २९
अपसर मधुकर दूर ३६९ । ५०
अपसारय घनसार ४६१ । ८
अपहरति महत्त्व १४६ । ७
अपहस्तितबान्धवे ६१८ । १६
अपहाय शनैः पटी ५५३ । ८
अपाकृत्याशेषाण्यपि ५८८ । ४३
अपाङ्गतरले दृशौ ४२३ । २८
अपाङ्गसर्गि तर ५१५ । ३
अपांनिधिं वारिभि ७४ । १४९
अपायसंदर्शनजा २८१ । ८९५
अपायि मुनिना पुरा २१५ । २९
अपारः पाथोधि ३७८ । १९५
अपारैर्व्यापारैरहरिह १५० । १५
अपि कापुरुषो भीरु २३९।२८८
अपि तद्वपुषि प्रसर्पे ४४४ । ४९४
अपि त्वया कैरविणि४०७।२२६
अपि दलन्मुकुले ३७१ । ७४
अपि दिनमणिरेष ५९० । २६
अपि दोर्भ्यां परिवद्धा ९१ । २०
अपि मरणमुपैति सा ४६१ । १९
अपि मुदमुपयान्तो ४९ । ३३
अपि मृगाक्षि तवाधर४३७।१५२
अपि मेरुपम प्राज्ञ ११० । १०
अपि विधि. कुसुमा ४७३ । १३६
अपि वेत्ति षडक्षरा ८६ । १३७
अपि शिशिरतरोष ५७२ । १५
अपि सपूर्णतायुक्तै २६७ । ५४५
अपि समानसयुक्ता २३९।२९२
अपि स्थाणुवदासीनः२३८।२६४
अपि स्वल्पमसत्य २३९ । २८६
अपीतक्षीबकादम्ब ५७९ । ७
अपुत्रस्य गृह शून्य २६४।४७२
अपूजितैवास्तु गिरीन्द्र ४८३ । १
अपूर्व. कोऽपि कोपा ८० । ७
अपूर्व कोऽपि कोशो ४४ । १
अपूर्व चौर्यमभ्यस्तं ५२८ । ४
अपूर्वरसना व्याला. ८२ । ४८
अपूर्वेय धनुर्विद्या १५५ । १५
अपूर्वो दृश्यते वह्नि ४६५ । ११
अपूर्वो भाति भारत्या ४८ । ८
अपूर्वोऽय मया दृष्ट ३०५ । २६
अपृष्टस्तु नर. किंचि२४०।३१६
अपेक्षन्ते न च स्नेह ६९ । ४३
अप्याकरसमुत्पन्ना ३६१ । ४८
अप्यापत्समय साधो. ७० । ६३
अप्युन्नतपदारूढ. २४९ । ७७
अप्येकवशजनुषो २७९ । ८५२
अप्यौत्सुक्ये महति ५३९ । १३
अप्सु प्लवन्ते पाषाणा६४०।१९७
अप्रकटीकृतशक्ति २७८ । ८३२
अप्रगल्भस्य या २६० । ३६८
अप्रगल्भा. पदन्यासे ५५ । १
अप्रतिवुद्धे श्रोतरि २७७ । ७९४
अप्रभूततमनीयसि ५४५ । १०
अप्रसन्नमपराद्धरि ५३२ । १७
अप्राकृतस्य चरिता ६१६ । २९
अप्राज्ञेन च कातरेण २२३ । १०
अप्राप्तकालवचन २३४ । १४१
अप्रार्थितानि दुःखानि १०९ । ५
अप्रियवचनदरिद्रै ७० । ७८
अप्रियस्यापि वश्यस्य २६६।५०७
अप्रियाण्यपि कु २६६ । ५०६
अफलानि दुरन्तानि २६१।३७४
अबलात्वविग्रहश्री २० । २
अबला यत्र प्रबला २७७ । ७९९
अबले सलिले तप ४३८ । १८२
अबुद्धिमाश्रिताना च२३५।१७३
अबुधा अजंगमा अपि२७६।७८८
अबुधैरर्थलाभाय १०३ । ७
अब्ज त्वब्जमथाब्ज ४१० । १७
अब्दैर्वारिजिघृक्षया २१२ । १७
अब्धेरम्भ. स्थगित ४१५ । ९८
अब्धौ विधौ विधु ७५ । १६२
अभितापसपद ४९५ । ३०
अभितिग्मरश्मि ४९६ । ३९
अभिद्रोहेण भूताना २६१ । ३८२
अभिनयान्परिचेतु ५६४ । ३७
अभिनवनलिनीक्लि ४८४ । १३
अभिनवनलिनीवि ३७० । ७२
अभिनवनवनीतप्री ३४ । ११३
अभिनवनवनीतस्नि ३४ । ११४
अभिनवपुलकाली ५४१ । ३३
अभिनववयवसश्री ५८१ । ५४
अभिभवति मन ५८० । २६
अभिभूतोऽप्यवज्ञातो २४१।३३६
अभिभूय सतामव ४९६ । ४४
अभिमतफलदाता १६४ । १८१
अभिमतमहामानग्र १४६ । ९
अभिमानधनस्य ११६ । २९
अभिमानवतो २४४ । ४११
अभिमुखनिहतस्य २४३ । ३८४

अभिमुखपतयालु ५४३ । ११
अभिलषन्ति तवाधर४३७।१५३
अभिलषसि यदि ४७४ । १५१
अभिवीक्ष्य सामि १९९ । ४१
अभिषिषेणयिपु ५९२ । ९
अभुक्तायां यस्यां ११६ । ३२
अभूत्प्राची पिङ्गा ५५० । ३५
अभृदम्भोराशे. ८८ । १७०
अभेदेनोपास्ते ७७ । १९४
अभ्यासः कर्मणां ४२२ । १
अभ्युत्थानमुपागते ५९९ । ३७
अभ्युद्धृता वसुमती १६१।१४१
अभ्युन्नतस्तनयुगा ५१४ । ४
अभ्युन्नताङ्गुष्ठ ४५० । ४१९
अभ्युन्नतेऽपि जलदे ३६६ । ४
अभ्रच्छाया खल २५२ । १५५
अभ्रच्छाया तृणाग्नि २५९।३३६
अभ्रध्वानैर्मुखरित ४८६ । ५६
अमदयन्मधुगन्ध ५६५ । ५०
अमन्त्रमक्षरं नास्ति २५३।१६२
अमन्दमणिनूपुर ५९१ । ३८
अमरतरुकुसुमसौरभ ३७० । ५३
अमरैर्गत मधुकरै ३६४ । ५
अमलमृणालकाण्ड ४२४ । ३७
अमलात्मसु प्रति ५०७ । ६५
अमितगुणोऽपि ११९ । ३६
अमित· समित १५६ । ३६
अमी तटसमीप ५५४ । २३
अमी तिलास्तैलिक ४१२ । ४४
अमी पृथुस्तम्बभृत· ५८७ । २१
अमी शिरीषप्रसवा ५७५ । ६२
अमीषां जन्तूना कति६३८।१८२
अमीषा प्राणाना १११ । ३०
अमी समुद्भूतसरोज ५८७ । २६
अमु कालक्षेप त्यज ३५३ । ५६
अमुना मरुकूपेन ३६५ । ३
अमुष्मिन्नारामे ३७८ । १९३
अमुष्मिन्नुद्यानद्रुम ५०१ । २९
अमुष्मिन्नुद्याने ३७८ । १९१
अमुष्मिँल्लावण्यामृत ४४८।३६८
अमुष्य दोर्भ्यामरि ४२२ । ३
अमुष्य मुषिता लक्ष्मी ४३३।६८
अमुष्य विद्या १६१ । १२६
अमुष्या लावण्य ४२४ । ३१
अमुष्योर्वीभर्तुः १६४ । १७६
अमूल्यस्य मम स्वर्ण ४५०।४१०
अमृत शिशिरे वह्नि २६६।५२९
अमृतस्यैव कुण्डानि ४१८ । ५
अमृतजलधे पाय ४६ । ३४
अमृतद्रवमाधुरी ४४१ । २२५
अमृत किरति हिमांशु ७२।१०४
अमृतं तदधरबिम्बे ४२२ । ११
अमृतद्रवैर्विदधद ५०७ । ६४
अमृत दुर्लभ नृणां २५१ । १२७
अमृतममृत क. सदेहो ४२१।५०
अमृतममृत चन्द्र ४५८ । १९
अमृतवचनलीला ३७८ । १९०
अमृतोत्प्रेक्षणे रागं ४८ । ११
अम्बर विनयता ५३७ । २३
अम्बरमम्बुनि पत्र ३१३ । ६९
अम्बरमेष रमण्यै ५८९ । ९
अम्बरविपिनमिदानीं ५०० । ५
अम्ब श्राम्यसि तिष्ठ ३७ । १४९
अम्बा कुप्यति तात ३०२ । ६२
अम्बा तुष्यति न मया ९७ । २०
अम्बुजमम्बुनि जातं ६२१ । ८
अम्बुजमम्बुनि मग्न ४३८ । १७७
अम्भः कर्दमतामुपैति १८० । ५३
अम्भसा भिद्यते सेतु २६६।५२२
अम्भसि लीनान्दीना३८१।२२७
अम्भासि जलजन्तू २६५।४८३
अम्भोजप्रकरोऽथ ३७५ । १४६
अम्भोजाक्ष्याः पुर ६०९ । २७
अम्भोजिनीवन ३६७ । १५
अम्भोधि. स्थलतां १४२।१२७
अम्भोमुचा सलिल ३४३ । ६
अम्भोरुहमये स्नात्वा ३२१ । ३१
अम्भोरुहाक्षि शंभो ६१४।१००
अम्भोवाहमुरद्विषो ५८५ । १११
अम्लानपङ्कजा माला ३२० । ११
अयःपिण्ड इवोत्तप्ते ८१ । १८
अय खलु मृणालिनी ५५६ । २१
अयं च सुरतज्वाला ६०६ । २
अय त्रयाणां ग्रामाणां ४४०।२२१
अय दरिद्रो भवितेति १६१।१३३
अयं निजः परो वेति १०२ । ९
अय नेत्राद्रत्रेरजनि ५०८ । ८४
अय पटो मे पितुरङ्ग ९७ । ३१
अय पुर. पार्वण ५१३ । १५१
अय मृगः समायाति २९८ । ७
अय मृदुमृणालिनी ५५० । ४२
अय मे वाग्गुम्फो ४९ । ३५
अयं मार्तण्ड. किं १६४ । १७३
अयं रत्नाकरोऽम्भोधि ३५८ । ६
अयं रेवाकुञ्जः ६०२ । ३८
अय वारामेको ३५९ । २३
अय विपाको वद कस्य ४८० । ७
अयं स्वभावः स्वत ७४ । १४७
अयश्चणकचर्वण १०४ । ४३
अयमङ्कुरभाव एव ४२६ । १४
अयमतिजरठाः प्रकाम २२४ । १
अयमपि खरयोपि ४९७ । ५५
अयमपि पुरुहूत ४९७ । ५८
अयमभिनवमेघ २२४ । २
अयममृतनिधान १३९ । ९१
अयमवसर सरस्ते ३६४ । २
अयमविचारितचारु १३१ । ५
अयमसौ गगनाङ्गण ४९६ । ४३
अयमुदयमहीभृन्मूर्ध्नि ५५०।३०
अयमुदयति चन्द्रश्च ५०८।८०
अयमुदयति चन्द्रो ५०८ । ७९
अयमुदयति मुद्रा ५५६ । १२
अयमुदितो हिमरश्मिः ३३४।११
अयशः प्राप्यते येन २६७ । ५५४

